॥ श्रीः ॥

तर्कशास्त्रसाम्राज्यधुरन्धरमहामहोपाध्यायविद्वद्वर-

श्रीमद्गदाधरभट्टाचार्यप्रणीतः

प्रत्ययार्थनिरूपणपरः

# व्युत्पत्तिवादः

( शब्दखण्डग्रन्थः )



पञ्चनदीयपण्डितसुदर्शनाचार्यशास्त्रिप्रणीतया

## आदर्शाख्यव्याख्यया

संवलितः

स चैष

खेमराजश्रीकृष्णदासश्रेष्ठिना

बंबईनगरे

( खेतवाडी सांतवींगली खंबाटा लाइन )

स्वकीयश्रीवेङ्कटेश्वरमुद्रणवेश्मनि मुद्रयित्वा

प्रकाशितः

विक्रमाङ्कसंवत् १९७०

पुनर्मुद्रणे श्रीवेङ्कटेश्वरयन्त्रालयाधिपतेरेवाधिकारः

॥ श्रीः ॥

# भूमिका



अये गीर्वाणवाग्वल्लिललितालवालकल्पा अनल्पादरकीर्त्यादिकमनीयगुणगणार्णवा विद्याबिन्दवः !

सर्वं हि वक्तव्यं च श्रोतव्यं च शब्दाधीनमेव धर्मावगमोऽपि शब्दायत्त एव किंबहुना लौकिको वा पारमार्थिको वा कोऽपि व्यवहारः शब्दं विना न निर्वहति, उक्तं चाभियुक्तैः—

" न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते ॥ " इति ।

स च शब्दः किं च कथं च बोधयतीति शब्दखण्डेन निरूप्यते । शब्देऽपि प्रकृतिप्रत्ययभेदेन द्वौ भागौ तत्र प्रकृत्यर्थस्य श्रीयुतगदाधरभट्टाचार्येण शक्तिवादे निरूपणं कृतं प्रत्ययार्थानां चात्र व्युत्पत्तिवादे । इदं च सन्दर्भद्वयमपि खण्डितमेवोपलभ्यते इति हृदयखेदः ।

अस्य च व्युत्पत्तिवादस्य ये खलु मया मूलार्था विद्यागुरुभ्यो महामहोपाध्याय सी. आई. ई. श्री ७ श्रीमद्गङ्गाधरशास्त्रिचरणेभ्योऽणुमात्रमवगतास्तान् स्वकीयज्ञानरक्षार्थं संकलय्याऽऽसमाप्ति मूलार्थोपपादकव्याख्यान्तरानुपलब्ध्या ह्याऽऽदर्शसमाख्येयं व्याख्या केवलं मूलार्थजिज्ञासूनां छात्राणामुपयोगार्थं प्रकाशितास्ति । अत्र च प्रथमाकारके क्वचित्क्वचित्कृष्णभट्टकृतटीकापि निक्षिप्तास्तीति तत्र तत्र स्पष्टमेव । मूलपाठोऽप्यासमाप्ति यथामति प्राक्तनलिखितानेकपुस्तकसाहाय्येन संशोधित इति प्रायः प्रीतिकरः कोविदानां भविष्यति ।

लोके ह्यस्य सन्दर्भस्य प्रायः प्रथमाकारकपर्यन्त एवावलोकनव्यवहारोऽस्ति यद्यपि च तावन्मात्रोऽप्ययं प्रज्ञावतां व्युत्पत्तिप्राप्त्यर्थमलमेव तथाप्यग्रेतनोऽपि भागो द्रष्टव्य एवास्ति, मन्येऽनयैवोपेक्षया शक्तिवादव्युत्पत्तिवादयोरन्त्यभागौ विनष्टौ, उपलभ्यमानावपि क्लेशेनैव संशोध्यौ विज्ञेयार्थौ च जातावित्यलमधिकेनात्र प्रेक्षावत्सु सविस्तरनिवेदनेनेति विरमन्

" न चात्रातीव कर्तव्यं दोषदृष्टिपरं मनः ।
दोषो ह्यविद्यमानोऽपि तच्चित्तानां प्रकाशते ॥ "
इत्यादीन्यत्र वाक्यानि चिन्तनीयानि कोविदैः ।
शुद्धं यदत्र तद् ग्राह्यं दुष्टं चास्तु ममैव मे ॥

इति विज्ञापयति—

श्रीमतीयः पञ्चनदीयः
**सुदर्शनाचार्यः**
काशी

# विशेषव्युत्पत्तीनां संग्रहः



# विषयानुक्रमणिका

इति



॥ श्रीः ॥
“म ग्र
र्त्यै न्थे
र स्ति
स दो
र्व ष
वि वि
द्व र
र हः
विं सु
हि चि
ते र
क त
ना ने
म पि?”
॥ श्रीः ॥

॥ श्रीः ॥

अथ

सटीकः

# व्युत्पत्तिवादः

॥ श्रीमते हयग्रीवाय नमः ॥

**शाब्दबोधे चैकपदार्थेऽपरपदार्थस्य संसर्गः संसर्गमर्यादया भासते ।**

---

अथ

## ॥ व्युत्पत्तिवादादर्शः ॥

॥ भगवते श्रीहयग्रीवाय नमः ॥

आद्यं विद्यानिदानं विधिविबुधवरैर्वन्द्यमानाङ्घ्रिपद्मं
धाम्नां धामैन्दवानां दनुजभुजरुजां जन्मनां छद्म जिह्मम् ।
प्रज्ञाऽऽलोकार्कमर्तिप्रतिकृतिममतिध्वान्तदन्त्येणशाक्रं
वक्रं भक्ताघचक्रे हरिमिह तुरगग्रीवमुग्रं प्रपद्ये ॥

नत्वा श्रीमद्धयग्रीवं विद्याविघ्नविनाशनम् ।
स्मृत्वा स्मृत्वा पदाम्भोजं श्रीगङ्गाधरशास्त्रिणाम् ॥
करोति बालबोधार्थं मूलार्थप्रतिपादिकाम् ।
व्याख्यां व्युत्पत्तिवादस्य ह्याऽऽदर्शाख्यां सुदर्शनः ॥

ननु न्यायमते प्रत्यक्षानुमानोपमानशब्दभेदात् प्रमाणचतुष्टयं तत्र घटप्रत्यक्षे जाते घटे यो घटत्वादीनां नीलरूपादीनां च संबन्धः स तु संयुक्तविशेषणतासंसर्गेण भासते—चक्षुस्संयुक्तघटे तस्य विशेषणत्वादिति तादृशसंबन्धनिष्ठा विषयता संयुक्तविशेषणतासंनिकर्षप्रयोज्यास्ति घटस्तु चक्षुस्संनिकृष्ट एव, वैशेषिकमते च समवायस्याप्रत्यक्षत्वाद्विशिष्टबुद्ध्या समवायानुमानं भवति तदुक्तं तैः—" इहात्मनि ज्ञानमिहाकाशे शब्द इतीहबुद्धिरुत्पद्यमाना न विना संबन्धमुत्पत्तुमर्हति तेनानुमीयते—अस्ति कश्चित्संबन्धः । " इति । अनुमितौ च पर्वतधूमौ चक्षुस्संनिकृष्टौ वह्निनिष्ठा च विषयता व्याप्तिज्ञानप्रयोज्यास्ति पर्वतीयवह्निसंयोगनिष्ठा च विषयता पक्षधर्मताज्ञानप्रयोज्यास्ति. अर्थात्—धूमपर्वतयोः प्रत्यक्षेण ज्ञातत्वाद् वह्नेश्च व्याप्तिज्ञानेन ज्ञातत्वात् पक्षधर्मताज्ञानेन 'वह्निव्याप्यधूमवान् पर्वतः' इत्यनेन वह्निसंयोग एव ज्ञायतेऽत एव पक्षधर्मताज्ञानानन्तरं तत्कार्यभूतं 'वह्निमान् पर्वतः' इत्याकारकं ज्ञानं जायते. अत्र वह्नेर्व्याप्तिज्ञानेन ज्ञानत्वात् पारि-

शेष्याद्वह्निसंयोग एव विषय इति । उपमितौ च गवयनिष्ठा विषयता चक्षुस्संनिकर्षप्रयोज्यास्ति गवयगवयपदयोर्वाच्यवाचकभावसंबन्धनिष्ठा च विषयता सादृश्यज्ञानप्रयोज्यास्ति तत्र वाच्यवाचकभावसंबन्धस्य सादृश्यज्ञानेन ज्ञायमानत्वात् प्रथमम् ' गोसदृशो गवयः ' इत्यतिदेशवाक्यश्रवणात् तस्य गवयदर्शनकाले स्मरणात्, इत्येवं प्रत्यक्षानुमानोपमानेतिप्रमाणत्रयस्थले तु येन प्रकारेण संबन्धज्ञानं जायते संबन्धनिष्ठा च विषयता यत्प्रयोज्या भवति तत्सर्वं विज्ञातम्, संप्रति ' राजपुरुषः ' ' नीलघटमानय ' इत्यादिवाक्यजन्यशाब्दबो... स्वत्वाऽभेदादिसंबन्धान प्रतीतिः कथं भवति तादृशसंबन्धनिष्ठा विषयता च किं प्रयोज्या भवतीति न ज्ञातमिति तद्व... व्यमित्याशङ्क्य श्रीमद्गदाधरभट्टाचार्यो व्युत्पत्तिवादाख्यं ग्रन्थमारभते—शाब्दबोधे चेति ' कुम्भकारः ' इतिवत् ' व्युत्पत्तीर्वदतीति व्युत्पत्तिवादः ' इति ग्रन्थनामार्थः ।

शाब्दबोध इति—अत्र चस्त्वऽर्थे, " शाब्दबोधे " इतिसप्तम्यर्थो निरू... दार्थे " इति सप्तम्यर्थोऽनुयोगित्वम्, " अपरपदार्थस्य " इति ... संसर्गः=अभेदादिसंबन्धः, संसर्गमर्यादया=आकाङ्क्षया, तृतीयार्थश्च ... विषयता, आत्मनेपदप्रत्ययार्थ आश्रयता, तथा च ' एकपदार्थानुयोगिको... ...गिको ऽभेदादिसंबन्धः शाब्दबोधनिरूपिताऽऽकाङ्क्षाप्रयोज्यविषयताश्रयः ' इति वाक्यार्थः पदार्थद्वयस्य यः संसर्गः स शाब्दबोधे आकाङ्क्षाबलेन भासते इति यावद् यथा— ' नीलघटमानय ' इत्यत्र नीलप्रतियोगिको घटानुयोगिकश्च यो नीलघटयोरभेदसंबधः स केनापि पदेनानुपस्थितत्वादाकाङ्क्षाबलेन भासते, यथा च ' राजपुरुषः ' इत्यत्र राजप्रतियोगिकः पुरुषानुयोगिकश्च यः स्वत्वसंबन्धः स आकाङ्क्षाबलेन भासते ' राजपुरुषः ' इत्यादिविशिष्टबुद्धेः संबन्धभानं विनोत्पत्तेरसंभवात्. संबन्धभासकपदस्य चाभावात् तादृशस्वत्वादिसंबन्धस्याकाङ्क्षया भानं स्वीक्रियते, आकाङ्क्षा च "यत्पदेन विना यस्याऽननुभावकता भवेत् । आकाङ्क्षा ।" इति विज्ञेया । ' नीलघटम् ' इत्यादौ पदनिष्ठा विषयता श्रावणप्रत्यक्षप्रयोज्या नीलघटादीनां च विषयता नीलादिपदघटादिपदप्रयोज्या नीलघटाद्योर्योऽभेदादिसंबन्धस्तन्निष्ठा विषयताऽऽकाङ्क्षाज्ञानप्रयोज्या भवतीति यावत् । एवम् ' राजपुरुषः ' इत्यादौ स्वत्वादिसंबन्धनिष्ठा विषयताऽऽकाङ्क्षाज्ञानप्रयोज्या विज्ञेया । अत एव शक्तिवादेऽन्विताभिधानवादखण्डनस्थले ह्यऽभेदादिसंबन्धे शक्तिं दूषयित्वा संबन्धस्याकाङ्क्षाभास्यत्वं प्रतिपादितम् । ' नीलो घटः ' इत्यादिव्यासस्थले विशेषणविभक्तेरभेदार्थकत्वमते त्वऽभेदादेर्विभक्त्युपस्थापितत्वात् प्रकारत्वमेव भवति न तु संसर्गत्वम् ' नीलाभेदवान् घटः ' इति च तत्र शाब्दबोधः, तस्माद् यत्र यस्य संसर्गत्वं तत्र तस्याकाङ्क्षाभास्यत्वमेव विज्ञेयम्, व्यासस्थलेपि विशेषणविभक्तेर्निरर्थकत्वमते ह्यभेदादेः संसर्गत्वमेव भवतीत्याकाङ्क्षाभास्यत्वमेव, तत्र विशेषणविभक्तिः साधुत्वार्था विज्ञेया ' अभेदसंबन्धेन नीलविशिष्टो घटः ' 'स्वत्वसंबन्धेन राजविशिष्टः पुरुषः' इत्यादिश्च शाब्दबोधाकारो विज्ञेय इत्यलम् ।

स च क्वचिदभेदः क्वचित्तदतिरिक्त एवाधाराधेयप्रतियोग्यनुयोगिविषयविषयिभावादिः ।

अभेदश्च प्रातिपदिकार्थे स्वसमानविभक्तिकेन स्वाव्यवहितपूर्ववर्तिना च पदेनोपस्थापितस्यैव संसर्गमर्यादया भासते यथा– 'नीलो घटः' 'नीलघटमानय' इत्यादौ घटादौ नीलादेः, न तु विरुद्धविभक्तिमत्पदार्थस्य– 'नीलस्य घटः' इत्यादौ नील[illegible]भेदान्वयबोधस्य सर्वानुभवविरुद्धत्वात् ।

---

संबन्धो द्विविधः– अभेदलक्षणो भेदलक्षणश्च तत्राभेदलक्षणस्यैकत्वाद् भेदलक्षणस्य चाऽनेकरूपत्वात् प्रथममभेदसंबन्धमाह– स चेति । सः=संसर्गः । कतिपयभेदसंबन्धानाह– क्वचिचेति । तदतिरिक्तः अभेदातिरिक्तः । 'भूतले घटः' 'घटवद् भूतलम्' इत्यादावाऽऽधाराधेयभावः संबन्धः । '[illegible]ले घटो नास्ति' इत्यादौ प्रतियोग्यनुयोगिभावः संबन्धः । 'घटे ज्ञानम्' [illegible]दौ घटादिविषयकज्ञानस्य मोक्षादिविषयकेच्छायाश्च प्रतीयमानत्वाद् विष[illegible]– घटादीनां विषयत्वाज्ज्ञानादीनां विषयित्वादित्यर्थः । एतच्च प्राचीनमतेन, नवीनम[illegible] [illegible]गवृत्तिधर्मस्यैव संबन्धत्वस्वीकारात् क्वचिदाधारतासंबन्धो यथा घटस्य भूतले क्वचिदाधे[illegible]तासंबन्धो यथा भूतलस्य घटे एवं क्वचित् प्रतियोगिता क्वचिदनुयोगिता क्वचिद्विषयता क्वचिद्विषयिता संबन्ध इति विवेकः ।

उक्तमभेदसंबन्धं व्युत्पादयति– अभेदश्चेति । "प्रातिपदिकार्थे" इतिसप्तम्यर्थोऽनुयोगित्वम्, "उपस्थापितस्य" इतिषष्ठ्यर्थः प्रतियोगित्वम्, पदार्थस्येतिशेषः, यथा–'नीलो घटः' इत्यत्र प्रातिपदिकार्थे=घटे स्वसमानविभक्तिकेन= घटादिलक्षणानुयोगिवाचकघटपदादिसमानविभक्तिकेन नीलपदेनोपस्थापितस्य नीलपदार्थस्याऽभेदः संसर्गमर्यादया=आकाङ्क्षया भासते नीलपदोत्तरविभक्तेः साधुत्वमात्रार्थकत्वात् । 'नीलघटमानय' इत्यत्र च स्वसमानविभक्तिकत्वाभावेऽप्यभेदस्य भासमानत्वेनोक्तम्– स्वाव्यवहितेति, तथा चात्र स्वं घटपदं तदव्यवहितपूर्ववर्तिना नीलपदेनोपस्थापितस्य नीलपदार्थस्य प्रातिपदिकार्थे घटेऽभेदसंबन्धः संसर्गमर्यादया भासते– तादृशसंबन्धोपस्थापकपदाभावात् । एवकारो भिन्नक्रम इति "स्वसमानविभक्तिकेनैव स्वाव्यवहितपूर्ववर्तिनैव च" इत्यन्वयः, एवकारव्यवच्छेद्यमाह– न त्विति, 'नीलस्य घटः' इत्यत्र नीलपदस्य घटपदसमानविभक्तिकत्वमपि नास्ति षष्ठ्या व्यवधानेन च घटपदाव्यवहितपूर्ववर्तित्वमपि नास्तीति न नीलघटयोरभेदो भासते । नीलपदोत्तरषष्ठ्यां च घटपदाव्यवहितपूर्ववर्तित्वेऽप्यऽयोग्यत्वान्न षष्ठ्यर्थसंबन्धस्याभेदेन घटेऽन्वयः संभवति । स्वसमानेत्यादिनियमाभावे च 'नीलस्य घटः' इत्यत्रापि नीलघटयोरभेदान्वयबोधः प्रसज्येत स तु सर्वविज्ञानुभवविरुद्ध एवेति न विरुद्धविभक्तिमत्पदार्थस्याभेदो भासते इति मूलार्थः ।

स्वसमानविभक्तिकत्वं च स्वप्रकृतिकविभक्तिसजातीयविभक्तिकत्वम् । साजात्यं च विभक्तिविभाजकप्रथमात्वादिना न तु समानानुपूर्वीकत्वं साजात्यम्- 'वेदाः प्रमाणम्' 'शतं ब्राह्मणाः' इत्यादावन्वयबोधानुपपत्तेः ।

ननु "विंशत्याद्याः सदैकत्वे" इत्यनुशासनात् 'शतं ब्राह्मणाः' इत्यादेः साधुत्वेपि 'वेदाः प्रमाणम्' इत्यादयः कथं प्रयोगाः ?- विशेष्यविशेषणवाचकपदयोरसति विशेषानुशासने समानवचनकत्वनियमात्, अन्यथा 'घटा नीलः' इत्यादेरपि साधुताप्रसङ्गात् ।

---

ननु 'वेदाः प्रमाणम्' इत्यादौ वेदादिपदप्रमाणादिपदयोः समानविभक्तिकत्वाभावेपि वेदप्रमाणादिपदार्थयोरभेदो भासते एवेत्याशङ्क्य समानविभक्तिकत्वं निर्वक्ति- स्वसमानेति, स्वम्=अनुयोगिवाचकपदम् । स्वप्रकृतिकेति- यथा 'वेदाः प्रमाणम्' इत्यत्र स्वपदेनाऽनुयोगिवाचकं वेदपदं ग्राह्यं तत्प्रकृतिका विभक्तिर्जस्विभक्तिस्तत्सजातीयविभक्तिकत्वं प्रमाणपदेप्यस्त्येव तस्य प्रथमान्तत्वादिति नात्राऽभेदान्वयबोधानुपपत्तिरित्यर्थः । ननु वेदपदोत्तरं जस्विभक्तिः प्रमाणपदोत्तरं च सुविभक्तिस्तयोः कथं च किं च साजात्यमित्याशङ्क्य विवक्षितसाजात्यस्य स्वरूपमाह- साजात्यमिति, अत्रानुपूर्वीलक्षणं साजात्यं न ग्राह्यं किं तु प्रथमात्वादिधर्मेण तथा च सुजसोरुभयोरपि प्रथमात्वेन साजात्यमस्त्येवेति वेदपदप्रमाणपदयोः समानविभक्तिकत्वं प्राप्तं तेन चाभेदान्वयः प्राप्त इत्यर्थः । समानानुपूर्वीकत्वरूपसाजात्यस्वीकारे बाधकमाह- न त्विति, यदि समानानुपूर्वीकत्वं साजात्यं स्यात्तदा सुजसोः समानानुपूर्वीकत्वाभावात्साजात्यं न स्यात्तथा च वेदपदप्रमाणपदयोः शतपदब्राह्मणपदयोश्च सजातीयविभक्तिप्रकृतित्वाभावात् 'वेदाः प्रमाणम्' 'शतं ब्राह्मणाः' इत्यादौ वेदादेः प्रमाणादेश्चान्वयबोधः=अभेदान्वयबोधो नोपपद्येतेत्यर्थः ।

ननु "विंशत्याद्याः सदैकत्वे" इत्यनुशासनाद्=विंशत्याद्याः संख्यावाचकाः शब्दा यदा संख्येयपरा भवन्ति तदा नियमेनैकवचनान्ता एव भवन्तीति नियमात् 'शतं ब्राह्मणाः' इत्यत्र ब्राह्मणशब्दस्य बहुवचनान्तत्वेपि शतशब्दस्यैकवचनान्तत्वमुपपद्यते, 'वेदाः प्रमाणम्' इत्यत्र वेदपदस्य बहुवचनान्तत्वेपि यत् प्रमाणपदस्यैकवचनान्तत्वेन विशेष्यविशेषणवाचकपदयोर्विभिन्नवचनकत्वं तत् कथमुपपद्येतेत्याशङ्कते- नन्विति । स्वाभिप्रायं शाब्दबोधव्युत्पत्त्या प्रकटयति- विशेष्येति, यथा 'नीलो घटः' इत्यादौ विशेष्यविशेषणवाचकयोर्घटपदनीलपदयोः समानवचनकत्वमस्ति तथा 'वेदाः प्रमाणम्' इत्यत्रापि विशेष्यविशेषणवाचकयोर्वेदपदप्रमाणपदयोः समानवचनकत्वेन भवितव्यं तद्बाधकस्य विशेषानुशासनस्याभावादित्यर्थः । विशेष्यविशेषणवाचकपदयोः समानवचनकत्वनियमानङ्गीकारे बाधकमाह- अन्यथेति, 'घटा नीलः' इत्यादिप्रयोगाणां यदऽसाधुत्वं तत् समानवचनकत्वाभावादेवास्तीति 'वेदाः प्रमाणम्'इत्यादिप्रयोगाणां समानवचनकत्वाभावे कथं साधुत्वं स्यादित्याऽऽक्षेपः ।

समानलिङ्गकस्थले तथानियमोपगमेन 'वेदाः प्रमाणम्' इत्यादेः साधुत्वोपपादनेपि "इति हेतुस्तदुद्भवे" इतिकारिकायाः "इति त्रयः समुदिता हेतुः" इतिकाव्यप्रकाशव्याख्याया असङ्गतिर्दुर्वारैव । एवमऽसमानलिङ्गकस्थले विशेष्यवाचकपदाऽसमानवचनस्यापि विशेषणपदस्य साधुत्वे तादृशस्थले औत्सर्गिकमेकवचनमेव सर्वत्र विशेषणपदानन्तरं प्रयोक्तुमुचितमिति "प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि" "पितरो देवताः" इत्यादेरनुपपत्तिः ।

मैवम्– यत्र विशेष्यवाचकपदोत्तरविभक्तितात्पर्यविषयसंख्याविरुद्धसंख्याया अविवक्षितत्वं तत्र विशेष्यविशेषणपदयोः समानवचनकत्वनियमः, अत एव

---

ननु विशेष्यविशेषणवाचकपदयोर्यत्र समानलिङ्गकत्वं भवति तत्रैव समानवचनकत्वस्य नियमोस्ति यथा–'नीलो घटः' इत्यादौ, 'वेदाः प्रमाणम्' इत्यत्र तु वेदपदप्रमाणपदयोः समानलिङ्गकत्वाभावेन समानवचनकत्वाभावेपि न साधुत्वानुपपत्तिरित्याशङ्क्याह–समानलिङ्गकेति । तथानियमोपगमेन=समानवचनकत्वनियमोपगमेन । एवमपि "इतिहेतुस्तदुद्भवे" इत्याकारककाव्यप्रकाशकारिकाया या "इति त्रयः समुदिता हेतुः" इत्याकारकटीकास्ति तत्र तु त्रिपदहेतुपदयोर्द्वयोरपि पुँल्लिङ्गत्वेन समानलिङ्गकत्वात् समानवचनकत्वेन भवितव्यमिति कथं त्रिपदहेतुपदयोर्विभिन्नवचनकत्वे साधुत्वं स्यादित्युक्तसमानवचनकत्वनियमस्याऽव्याप्तिं प्रदर्शयन्नाक्षिपति–इतिहेतुरिति । उक्तरीत्या "इति त्रयः समुदिता हेतुः" इत्यत्र समानलिङ्गकस्थलेपि समानवचनत्वं नास्तीत्यव्याप्तिं प्रदर्श्याऽसमानलिङ्गकस्थले समानवचनत्वस्यातिव्याप्तिं प्रदर्शयति–एवमिति, उक्तार्थानां प्रयोगो न भवतीति विशेष्यवाचकपदोत्तरवार्तिन्या विभक्त्या संख्याया उक्तत्वाद् विशेषणवाचकपदोत्तरं द्विवचनबहुवचनयोरपेक्षैव नास्तीति साधुत्वार्थमौत्सर्गिकमेकवचनमेव प्राप्नोतीति 'वेदाः प्रमाणम्' इत्यत्र प्रमाणपदोत्तरमेकवचनमेवौत्सर्गिकं यदि युक्तम्–समानवचनकत्वनियमस्य समानलिङ्गकस्थले एव स्वीकारात् तदा विशेष्यविशेषणवाचकपदयोस्तादृशस्थले=असमानलिङ्गकस्थले सर्वत्रौत्सर्गिकमेकवचनमेव विशेषणवाचकपदोत्तरं प्रयोक्तव्यमिति "प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि" इत्यत्र प्रमाणपदोत्तरम् "पितरो देवताः" इत्यत्र च देवतापदोत्तरमेकवचनमेव प्रयोक्तव्यमासीन्न तु बहुवचनम्–विशेष्यविशेषणवाचकपदयोः समानवचनकत्वनियामकस्य समानलिङ्गकत्वस्याभावादित्यर्थः, तथा च समानलिङ्गकस्थले एव समानवचनकत्वं भवतीति नियमस्याऽसंभवाद् यथा "प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि" इत्यत्र समानलिङ्गकत्वाभावेपि समानवचनकत्वं तथा 'वेदाः प्रमाणम्' इत्यत्रापि समानलिङ्गकत्वाभावेपि समानवचनकत्वं युक्तं तच्च नास्तीति कथं साधुत्वमित्याक्षेपः ।

उक्तरीत्याक्षिप्य परिहरति– मैवमिति । यत्रेति– यथा 'नीला घटाः' इत्यत्र विशेष्यवाचकपदं घटपदं तदुत्तरवर्तिविभक्तिर्जस्विभक्तिस्तत्तात्पर्यविषयीभूता संख्या बहुत्वसंख्या तद्विरुद्ध-

" पुरूरवआद्रवसौ विश्वेदेवाः " इत्यादौ द्वित्वविशिष्टयोः पुरूरवआद्रवःप्रभृत्योर्विशेषणतया विवक्षितत्वात् तद्वाचकस्य पदस्य द्विवचनान्तता ।

'वेदाः प्रमाणम्' इत्यत्र च विशेषणपदोत्तरविभक्त्या बहुत्वविरुद्धमेकत्वं विवक्षितं तच्च प्रकृत्यर्थतावच्छेदके प्रमितिकरणत्वेऽन्वेति । शाब्दप्रमाकरणत्वं च शब्दत्वावच्छिन्नं यावच्छब्दनिष्ठमेकमेवेति नाऽयोग्यता ।

---

संख्याया अविवक्षितत्वान्नीलपदोत्तरमपि जसेव युक्तमिति समानवचनकत्वम्, एवम्- " प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि " " पितरो देवताः " इत्यादावपि विशेष्यवाचकं यत् पदं पितृपदं शब्दपदं च तदुत्तरवर्तिजस्विभक्तितात्पर्यविषयीभूतबहुत्वसंख्यातो विरुद्धसंख्याया अविवक्षितत्वाद् विशेष्यविशेषणवाचकपदयोः समानवचनकत्वमित्यर्थः । " पुरूरवआद्रवसौ विश्वेदेवाः " इत्यत्र द्वित्वविशिष्टयोरेव पुरूरवआद्रवसोर्विश्वेदेवविशेषणत्वं विवक्षितमिति विशेष्यवाचकविश्वेदेवपदोत्तरवर्तिजस्विभक्तितात्पर्यविषयीभूतबहुत्वसंख्यातो विरुद्धाया द्वित्वसंख्याया विवक्षितत्वेनाऽविवक्षितत्वं नास्तीति न समानवचनकत्वं प्राप्तं किं तु द्वित्वसंख्याया विवक्षितत्वेन विशेषणवाचकपुरूरवआद्रवःपदोत्तरं द्वित्वबोधकं द्विवचनमेव प्रयुक्तमित्याह- अत एवेति । अत एव=यत्रेत्याद्युक्तनियमादेव । तद्वाचकस्य=विशेषणीभूतपुरूरवआद्रवोवाचकस्य पुरूरवआद्रवःपदस्य । वस्तुतस्तु पुरूरवपदमाद्रवपदं चाऽकारान्तमेवेति श्रीगुरुचरणाः ।

एवम् 'वेदाः प्रमाणम्' इत्यत्रापि विशेष्यवाचकवेदपदोत्तरवर्तिजस्विभक्तितात्पर्यविषयीभूतबहुत्वसंख्यातो विरुद्धाया एकत्वसंख्याया विवक्षितत्वेन समानवचनत्वनियामकमुक्ताऽविवक्षितत्वं नास्तीति न समानवचनत्वं तत्प्राप्तिश्च किं त्वेकत्वसंख्याया विवक्षितत्वेन तद्बोधकमेकवचनमेव प्रमाणपदोत्तरं प्रयुक्तं तदेव युक्तं चेत्याह- 'वेदाः प्रमाणम्' इत्यत्रेति । ननु चत्वारो वेदास्तेषु कथमेकत्वान्वयः स्यादित्याशङ्क्याह- तच्चेति, तत्-एकत्वम् । प्रकृतिपदेन च प्रमाणपदं ग्राह्यम्, प्रमितिकरणं च प्रमाणमिति प्रकृत्यर्थतावच्छेदकं प्रमितिकरणत्वं तच्च चतुर्ष्वपि वेदेष्वेकमेव विवक्षितमिति तादृशप्रमितिकरणत्वे एकत्वस्यात्रान्वयो भवति न तु प्रमितिकरणभूतेषु वेदेष्वित्यर्थः । ननु नानाभूतेषु प्रमितिकरणेषु वेदेषु कथमेकमेव प्रमितिकरणत्वं स्यादित्याशङ्क्याह- शाब्देति, यथाऽनेकेषु घटेष्वेकमेव घटत्वं तथाऽनेकेष्वपि प्रमितिकरणेषु वेदेष्वेकमेव प्रमितिकरणत्वं युक्तमिति तत्रैकत्वान्वयस्य नाऽयोग्यता, यावच्छब्दपदेन प्रमाणभूतशब्द एव ग्राह्यः- अनाप्तवाक्येषु प्रमाणत्वास्वीकारात् । " इति त्रयः समुदिता हेतुः " इत्यत्र च शक्तिनिपुणताभ्याससमुदाये एकमेव हेतुत्वं विवक्षितमिति तादृशसमुदायनिष्ठहेतुत्वे एकत्वान्वय एकत्वस्य विवक्षितत्वाच्च न समानवचनत्वं तत्प्राप्तिश्चेत्यर्थः ।

न च "पदार्थः पदार्थेनान्वेति" इति व्युत्पत्तिविरोधः, 'संपन्नो व्रीहिः' इत्यनेकव्रीहितात्पर्यकेप्येकवचनदर्शनेन तादृशव्युत्पत्तिसंकोचस्यावश्यकत्वात् । यदि स्वाश्रयप्रकृत्यर्थतावच्छेदकवत्त्वसंबन्धेन प्रकृत्यर्थे एवैकत्वान्वयः, व्रीहित्वजातेः स्वरूपत एव व्रीह्यादिपदशक्यतावच्छेदकतयाऽन्वयितावच्छेदकरूपेणाऽनुपस्थितेस्तत्र पदार्थान्तरस्याऽन्वयानुपपत्तेरिति मन्यते ? तदा प्रकृतेऽपीदृश्येव गतिः ।

---

ननु 'पदार्थान्तरनिष्ठप्रकारतानिरूपितविशेष्यतासंबन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रत्यऽन्वयितावच्छेदकरूपेणोपस्थितिः कारणम्' इतिनियमेन पदार्थस्य नीलादेः पदार्थेन घटादिनैवान्वयो भवति घटादेरन्वयितावच्छेदकरूपेण घटत्वेन रूपेणोपस्थितेर्न तु घटत्वादिना घटत्वादेर्घटत्वत्वादिरूपेणोपस्थितेरभावात् स्वरूपत एवोपस्थितिस्वीकारात्, उक्तनियमानङ्गीकारे तु लोमलाङ्गूलादीनामपि दीर्घत्वाभिप्रायेण 'दीर्घः पशुः' इतिप्रयोगः स्यात् पश्वेकदेशेन लोमादिना दीर्घत्वान्वये बाधकाभावप्रसङ्गात् न च लोमादिनात्र दीर्घत्वान्वय इष्ट इति पदार्थः पदार्थेनैवान्वेति न तु पदार्थैकदेशेनेतिव्युत्पत्तिः स्वीकार्या तथा च 'वेदाः प्रमाणम्' इत्यत्रापि एकत्वपदार्थस्य वेदरूपपदार्थेनैवान्वयो युक्तो न तु वेदैकदेशेन प्रमितिकरणत्वेनेति कथमेकत्वस्य प्रमितिकरणत्वेऽन्वय उक्त इत्याशङ्क्याह– न चेति । 'संपन्नो व्रीहिः' इति वाक्यस्य नह्येकव्रीहिकणसंपन्नत्वे तात्पर्यं किं त्वनेकव्रीहिसंपन्नत्वेऽस्ति तथाप्यत्रैकवचनदर्शनेनैकत्वस्य चानेकव्रीहिषु बाधेन व्रीहित्वजातावेवान्वयोऽस्तीत्यसति बाधके पदार्थः पदार्थेनैवान्वेति सति बाधके तु पदार्थैकदेशेनाप्यन्वेतीति व्युत्पत्तिसंकोचे कृते 'संपन्नो व्रीहिः' इत्यत्रेव 'वेदाः प्रमाणम्' इत्यत्राप्येकत्वपदार्थस्य पदार्थैकदेशेन प्रमितिकरणत्वेनान्वये न कोपि दोषः । वस्तुतस्त्वयं नियमः संख्यातिरिक्तस्थलार्थमस्ति संख्यायास्तु पदार्थैकदेशेनाप्यन्वयो भवति 'संपन्नो व्रीहिः' इत्यादिप्रयोगदर्शनात् तथा च 'वेदाः प्रमाणम्' इत्यत्राप्येकत्वस्य पदार्थैकदेशे प्रमितिकरणत्वेऽन्वये न दोषः ।

ननु गत्यभावे एव नियमसंकोच उचितो न तु सत्यां गतावपीति न व्रीहित्वजातावेकत्वान्वयो युक्तः–व्रीहित्वं हि स्वरूपत एव व्रीहिपदस्य शक्यतावच्छेदकमस्तीति व्रीहिपदेन व्रीहित्वस्य स्वरूपत एवोपस्थितिर्भवति न त्वन्वयितावच्छेदकेन व्रीहित्वत्वेन रूपेण पदार्थान्तरान्वयं प्रति चान्वयितावच्छेदकरूपेणोपस्थितिः कारणमस्तीति न व्रीहित्वजातावत्रैकत्वान्वय उपपद्यते किं तु स्वाश्रयप्रकृत्यर्थतावच्छेदकवत्त्वसंबन्धेन प्रकृत्यर्थे=व्रीहिष्वेवैकत्वान्वयः संभवतीति नोक्तनियमसंकोचस्यावश्यकतेत्याह– यदीति, स्वं एकत्वं तदाश्रयीभूतं यत् प्रकृत्यर्थतावच्छेदकं व्रीहित्वं तद्वत्त्वसंबन्धेन, व्रीहित्ववत्त्वं संबन्धरूपं व्रीहिष्वस्त्येवेत्यर्थः । उत्तरमाह– तदेति, यथा 'संपन्नो व्रीहिः' इत्यत्रैकत्वस्य व्रीहिष्वेवान्वयस्त्वयोपपादितस्तथा प्रकृतेपि=' वेदाः प्रमाणम्' इत्यत्रापि स्वाश्रयप्रकृत्यर्थतावच्छेदकवत्त्वसंबन्धेनैकत्वस्य वेदेष्वेवान्वयो ज्ञेयः । स्वं एकत्वं तदाश्रयीभूतं यत् प्रकृत्यर्थतावच्छेदकं प्रमितिकरणत्वं तद्वत्त्वसंबन्धेन वेदेष्वेवैकत्वस्यान्वयः । प्रमितिकरणत्ववत्त्वं चास्त्येव वेदेष्वित्यर्थः ।

यत्तु 'संपन्नो व्रीहिः' इत्यादावेकवचनोपस्थितानि नानैकत्वानि प्रत्येकं नानाव्रीहिष्वन्वीयन्ते इत्युक्त्यैव सामञ्जस्ये जातावेकत्वभानोपगमो निरर्थक इति, तदसत्, यतः- स्वसजातीयनिष्ठभेदप्रतियोगिताऽनवच्छेदकैकत्वरूपसजातीयद्वितीयरहितत्वमेकवचनार्थो न त्वेकत्वमात्रं तस्य वस्तुमात्रसाधारण्येनार्थत एव लाभात्, अनुपयोगाच्च, अत एव "पशुना यजेत" इत्यादौ पशुनिष्ठतादृशैकत्वस्य विवक्षितत्वादऽनेकपशुकरणकयागान्नादृष्टसिद्धिः ।

---

ननु 'संपन्नो व्रीहिः' इत्यत्रैकत्वस्य जातावन्वयो न भवति येन "पदार्थः पदार्थेन" इतिनियमस्य संकोचावश्यकता स्यात्, न चापि विभक्त्या एकमेवैकत्वमुपतिष्ठति येनैकस्यैकत्वस्यानेकव्रीहिष्वन्वयबाधः स्यात्, किं त्वेकवचनविभक्त्या नाना=अनेकान्येवैकत्वान्युपतिष्ठन्ति अनेकेषां चैकत्वानामनेकेषु व्रीहिष्वन्वये न कोपि बाध इत्याशङ्कते- यत्त्विति । परिहरति- तदसदिति, 'संपन्नो व्रीहिः' इत्यत्रैकवचनस्यैकत्वमात्रम्=संख्यारूपमेकत्वं नार्थः- तस्य=संख्यारूपैकत्वस्य वस्तुमात्रसाधारण्येन= केवलान्वयित्वेनार्थत एव लाभात्=प्रतीतिसंभवात् । अनुपयोगाच्चेति- अत्रैकवचनस्य संख्यारूपैकत्वार्थकत्वस्वीकारे उपयोगाभावात्=व्रीहिसजातीयोत्पान्नान्तरसंपन्नत्वव्यावृत्तिर्या वक्तुरभीष्टा सा न प्राप्नुयात्, एकत्वसंख्यान्वयिव्रीहीणां संपन्नत्वेपि व्रीहिभिन्नान्नसंपन्नत्वे बाधकाभावात्, सजातीयद्वितीयराहित्यरूपैकत्वस्वीकारे तु तादृशैकत्वान्वयिव्रीहीणां संपन्नत्वे व्रीहिसजातीयोत्पान्नान्तरसंपन्नत्वव्यावृत्तिरुपलभ्यते तस्मादत्र नैकत्वमात्रमेकवचनार्थः किं तु स्वसजातीयनिष्ठभेदप्रतियोगितानवच्छेदकैकत्वरूपं यत्सजातीयद्वितीयरहितत्वं तदेकवचनार्थः । स्वसजातीयेति- यत्रानेके घटा वर्तन्ते तत्र स्वं पीतघटस्तत्सजातीयो द्वितीयो नीलघटः नीलघटे पीतघटभेदोप्यस्त्येव तस्य भेदस्य प्रतियोगी पीतघटस्तत्र यदेकत्वं तद् भेदप्रतियोगितावच्छेदकमेवेति न तदेकत्वं सजातीयद्वितीयरहितत्वरूपम् । यदा त्वेक एव घटस्तदा सजातीयद्वितीयघटस्याभावाद् वर्तमानघटनिष्ठमेकत्वं स्वसजातीयनिष्ठभेदप्रतियोगिताऽनवच्छेदकमेव एतादृशाऽनवच्छेदकैकत्वरूपमेव सजातीयद्वितीयरहितत्वमेकवचनार्थः । "संपन्नो व्रीहिः" इत्यत्र यद्यऽन्नान्तरं सपन्नं स्यात्तदा संपन्नत्वेन व्रीहिसजातीयान्नान्तरस्य सत्त्वात् तत्र वर्तमानो यो व्रीहिभेदस्तत्प्रतियोगितावच्छेदकं व्रीहिगतैकत्वं स्यादपि यदा च नान्नान्तरं संपन्नं तदा संपन्नत्वेन रूपेणव्रीहिसजातीयस्यैवाभावात् स्वसजातीयनिष्ठभेदप्रतियोगितानवच्छेदकमेव जातं व्रीहिगतैकत्वं तदेव सजातीयद्वितीयरहितत्वम् । प्रकृतोपष्टम्भकमाह-अत एवेति, अत एव=एकवचनार्थैकत्वस्य सजातीयद्वितीयरहितत्वरूपस्वीकारादेव "पशुना यजेत" इत्यादौ पशुनिष्ठस्य तादृशैकत्वस्य=सजातीयद्वितीयरहितत्वरूपस्यैव विवक्षितत्वादेकपशुकरणकयागादेवादृष्टसिद्धिर्भवति नत्वनेकपशुकरणकयागादपि । एकत्वस्य सजातीयद्वितीयराहित्यस्वरूपत्वानङ्गीकारे पश्वन्तरस्य व्यावृत्त्यऽलाभेनाऽनेकपशुकरणकयागादप्यऽदृष्टसिद्धिरापतेद् न चैवं सिद्धान्तः । अत्र च स्वं पशुः तत्सजातीयो यदि

साजात्यं च स्वसमभिव्याहृतपदार्थसंसर्गित्वविशिष्टप्रकृत्यर्थतावच्छेदकवत्त्वरूपेण, अतः 'अत्र घटोस्ति' इत्यादौ घटनिष्ठभेदप्रतियोगितानवच्छेदकैकत्वाऽप्रसिद्धावपि न क्षतिः— एतद्देशविद्यमानघटनिष्ठभेदप्रतियोगितानवच्छेदकैकत्वस्यैव तत्र बोधादिति, तस्य च प्रसिद्धत्वात् । एतद्देशे बहुघटसत्त्वदशायां तादृशवाक्यप्रयोगस्तु जात्येकत्वादेव समर्थनीयः ।

---

द्वितीयः पशुर्यागे स्यात्तदा द्वितीयपशुनिष्ठस्यैतत्पशुभेदस्यैतत्पशुनिष्ठमेकत्वं भेदप्रतियोगितावच्छेदकं स्यादपि, यागे पश्वन्तरस्याभावे चैतत्पशुनिष्ठमेकत्वं सजातीयपश्वन्तरनिष्ठभेदस्य प्रतियोगितानवच्छेदकमेव जातं तदेव सजातीयद्वितीयराहित्यम् ।

ननु यज्ञभूमौ कार्यान्तरार्थबद्धपशुसत्त्वे तन्निष्ठो य एतत्पशुभेदस्तादृशभेदप्रतियोगितावच्छेदकमेवैतत्पशुनिष्ठमेकत्वं स्यात् तस्यापि पशोरेतत्पशुसजातीयत्वात्, तथा यागसंबद्धघृतादिष्वप्येतत्पशुभेदोस्ति तादृशभेदप्रतियोगितावच्छेदकमप्येतत्पशुनिष्ठमेकत्वं स्यात् घृतादीनामपि यागसंबन्धित्वेनैतत्पशुसजातीयत्वादेवेत्येतत्पशुनिष्ठैकत्वस्य कथं स्वसजातीयनिष्ठभेदप्रतियोगितानवच्छेदकत्वं स्यादित्याशङ्क्य साजात्यं परिष्करोति—साजात्यं चेति, स्वेति—स्वं यजेतेत्यत्र वर्तमानतिङ्विभक्तिस्तत्समभिव्याहृतः पदार्थो यागपदार्थस्तत्संसर्गित्वविशिष्टम्=यागसंबन्धित्वसमानाधिकरणं यत्प्रकृत्यर्थतावच्छेदकं पशुत्वं तद्वत्त्वरूपेण साजात्यं ग्राह्यं तथा च कार्यान्तरार्थोक्तयागभूमिबद्धपशौ पशुत्वसत्त्वेपि यागसंसर्गित्वं नास्तीति न स पशुरेतद्यागीयपशुसजातीयः, घृतादौ यागसंसर्गित्वसत्त्वेऽपि प्रकृत्यर्थतावच्छेदकस्य पशुत्वस्याभावान्न घृतादीनामपि यागीयपशुसजातीयत्वं तस्मान्नोक्तदोषः । अतः=उक्तरूपेण साजात्यस्य परिष्कारात् 'अत्र घटोस्ति' इत्यादौ घटानामनेकत्वेन परस्परं भेदाच्च नीलादिघटेषु पीतादिघटनिष्ठैकत्वस्याभावाद् अयं घटस्तद्घटनिष्ठैकत्ववान्नेति प्रतीत्या चैकत्ववद्घटनिष्ठा या भेदप्रतियोगिता तदवच्छेदकमेवैकत्ववद्घटनिष्ठमेकत्वं जातं नाऽनवच्छेदकमित्येवंरीत्या भेदप्रतियोगितानवच्छेदकस्यैकत्वस्याऽप्रसिद्धावपि क्षतिर्नास्ति, यतः—'अत्र घटोस्ति' इत्यत्राऽत्रपदेनैतद्देश उपस्थाप्यते तथा चैतद्देशविद्यमानघटसजातीयो घट एतद्देशविद्यमान एव घटो भविष्यति न तु घटमात्रम् एतद्देशे च घटान्तरस्याभावाद् देशान्तरवर्तिघटे घटत्वसत्त्वेप्येतद्देशवृत्तित्वाभावेन साजात्याभावादेतद्देशविद्यमानघटे यदेकत्वं तद् एतद्देशविद्यमानघटनिष्ठाया भेदप्रतियोगिताया अनवच्छेदकमेव जातम् एतद्देशविद्यमानघटे सजातीयनिष्ठभेदप्रतियोगिताया एवाभावात् । एतद्देशविद्यमानत्वसमानाधिकरणघटत्ववत्त्वेन सजातीयस्याभावात् । तत्र='अत्र घटोस्ति' इत्यत्र चैतद्देशविद्यमानघटनिष्ठप्रतियोगितानवच्छेदकस्यैवैकत्वस्य बोधात् तस्य=एतद्रूपैकत्वस्य चैतद्देशविद्यमानघटे प्रसिद्धत्वात् । ननु बहुघटसत्त्वदशायामपि 'अत्र घटोस्ति' इत्येकवचनान्तः प्रयोगो भवति तस्य का गतिरित्याशङ्क्याह—बहुघटेति, बहुघटसत्त्वदशायाम् 'अत्र घटोस्ति' इत्येतादृशवाक्यप्रयोगस्तु जात्येकत्वादेव समर्थनीयः । अर्थात् 'संपन्नो व्रीहिः' इत्यत्रेव

यत्तु- एकत्वाविवक्षायामपि भावाख्यातस्थले एकवचनस्य साधुत्वदर्शनात् संख्याया अविवक्षणेपि 'संपन्नो व्रीहिः' इत्यादावेकवचनोपपत्तेरलं जात्येकत्वपरतया तत्र समर्थनेनेति, तदप्यकिंचित्करम्- भावाख्यातस्थले गत्यन्तरविरहेण विभक्तेर्निरर्थकत्वोपगमात्, अत्र च सार्थकत्वोपगमसंभवे तत्परित्यागस्याऽनुचितत्वात्, सति तात्पर्ये तद्बोधस्याऽऽनुभविकत्वाच्चेति ।

एवम् "त्रयः समुदिता हेतुः" इत्यत्र हेतुपदं कार्योत्पादप्रयोजकतावच्छेदकसमुदायत्वावच्छिन्नपरं तादृशसमुदायत्वान्वितमेकत्वमेकवचनार्थः; अत एव शक्त्या-

---

घटत्वजातावेकत्वान्वयः कर्तव्यः किं वा स्वाश्रयप्रकृत्यर्थतावच्छेदकवत्त्वसंबन्धेन घटेष्वेवान्वयः कर्तव्यः स्वमेकत्वं तदाश्रयीभूतं यत् प्रकृत्यर्थतावच्छेदकं घटत्वं तद्वत्त्वं सकलघटेष्वस्त्येव तेन संबन्धेनानेकघटेष्वप्येकत्वान्वये न कोपि दोष इत्यर्थः ।

ननु 'आख्यातार्थसंख्यानिष्ठप्रकारतानिरूपितविशेष्यतासंबन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति प्रथमान्तपदजन्योपस्थितिः कारणम्' इति नियमेन 'देवदत्तः पचति' 'तण्डुलः पच्यते' इत्यादौ देवदत्ततण्डुलादिप्रथमान्तपदसत्त्वेन तत्र देवदत्ततण्डुलादावाख्यातार्थसंख्याया अन्वयेन सार्थक्येपि 'त्वया गम्यते' 'अन्यैर्गम्यते' इत्यादौ भावाख्यातस्थले प्रथमान्तपदाभावेनाख्यातार्थसंख्याया क्वचिदप्यन्वयाभावात् सार्थक्यं न भवति तत्कस्य हेतोः संख्याया अविवक्षणात्, तथा च यथा भावाख्यातस्थले संख्याया अविवक्षायामप्येकवचनस्य साधुत्वं भवति तथा 'संपन्नो व्रीहिः' इत्यादावपि संख्याया अविवक्षायामप्येकवचनस्य साधुत्वं संभवतीति किमर्थं व्रीहित्वजातावेकत्वान्वयेन गौरवमाश्रीयते इत्याशङ्कते-यत्त्विति । परिहरति-तदपीति, भावाख्यातस्थले प्रथमान्तपदाभावेनाख्यातार्थसंख्यायाः क्वचिदप्यन्वयासंभवाद् गत्यन्तरविरहेण निरर्थकत्वस्वीकारेपि सर्वत्र निरर्थकत्वाश्रयणं तु न युक्तं भवति तस्मादत्र='संपन्नो व्रीहिः' इत्यादौ च संख्याया जातावन्वयेन सार्थकत्वसंभवे तत्परित्यागस्य=विभक्त्यर्थसंख्यासार्थकत्वपरित्यागस्यानुचितत्वात् । प्रत्युत 'संपन्नो व्रीहिः' इत्यादावत्यावश्यकं संख्यासार्थकत्वमित्याह- सतीति । तद्बोधस्य=संख्याबोधस्यानुभविकत्वाद् वक्तुः संख्यायां तात्पर्ये सति संख्याबोधोपि भवत्येवेतिप्रसिद्धमेव तथा च कथं सर्वत्र संख्याया निरर्थकत्वं स्यादित्याक्षेपः ।

"त्रयः समुदिता हेतुः" इत्येकवचनस्य गतिमाह-एवमिति । कार्यं काव्यम्, उत्पादः=उत्पत्तिः, काव्योत्पत्तिप्रयोजकता च शक्तिनिपुणताभ्यासानां त्रयाणां समुदायेस्तीति प्रयोजकतावच्छेदकं समुदायत्वं तादृशसमुदायत्वावच्छिन्नसमुदायपरं चात्र हेतुपदमिति तादृशसमुदायत्वे एकत्वान्वयः । तादृशसमुदायत्व=कार्योत्पादप्रयोजकतावच्छेदकसमुदायत्व । एकत्वविशिष्टं यत्कार्योत्पादप्रयोजकतावच्छेदकसमुदायत्वं तद्धर्मवन्तस्त्रय इति वाक्यार्थः । अत एव=समुदायत्वे एकत्वान्वयस्वीकारादेव यथा तृणारणिमणीनां वह्निं प्रति पृथक् पृथगेव हेतुत्वमस्ति केवलतृणसत्त्वेपि वह्न्युत्पत्तिदर्शनात्, न तथा शक्त्यादीनां काव्यं प्रति पृथक् पृथग् हेतुत्वमस्ति शक्त्यादिष्वेकैकस-

दीनां त्रयाणां तृणारणिमणिन्यायेन हेतुत्वशङ्कानिरासः, तथा सत्येषामेकैकसमवधानदशायामपि कार्योत्पत्तेरावश्यकतया तत्त्रितयपर्याप्तसमुदायत्वस्य कार्योत्पत्तिप्रयोजकतानवच्छेदकतया तेषां त्रयाणां तथाविधैकसमुदायत्वाश्रयत्वाऽनुपपत्तेः ।

एवम् "जात्याकृतिव्यक्तयः पदार्थः" इत्यत्र त्रितयनिष्ठस्य पदशक्तिरूपपदार्थत्वस्यैकत्वं विवक्षितमिति तत्र विशेष्यपदस्य बहुवचनान्तत्वेपि विशेषणपदस्यैकवचनान्ततोपपत्तिः ।

प्रत्यक्षानुमानेत्यादिसूत्रे प्रमाकरणत्वरूपप्रकृत्यर्थतावच्छेदकस्य प्रत्यक्षानुमानादिनिष्ठस्यैकताया बाधितत्वेनाऽविवक्षितत्वात् प्रमाणपदस्य बहुवचनान्ततेति ।

एवम् "पितरो देवताः" इत्यत्रापि पितृपितामहादीनां सहितानामेकरूपेण देवतात्वविरहेण पितृत्वपितामहत्वादिना पृथगेव त्यागोद्देश्यत्वरूपदेवतात्वम् ।

---

त्वेप्यपरद्वयाभावे काव्योत्पत्त्यऽदर्शनादिति तृणारणिमणिन्यायेन हेतुत्वशङ्कानिरासः । विपक्षे बाधकमाह– तथासतीति, काव्यं प्रति शक्त्यादीनां तृणारणिमणिन्यायेन हेतुत्वे सति शक्त्यादिष्वेकैकमात्रसत्त्वदशायामपि काव्यलक्षणकार्योत्पत्तेरावश्यकतया शक्त्यादित्रितयपर्याप्तं यत्समुदायत्वं तस्य काव्यलक्षणकार्योत्पत्तिं प्रति प्रयोजकतावच्छेदकत्वं न स्यादिति प्रयोजकतानवच्छेदकत्वापत्तौ तेषाम्=शक्त्यादीनां त्रयाणां तथाविधम्=कार्योत्पादप्रयोजकतावच्छेदकं यदेकं समुदायत्वं तदाश्रयत्वं न स्यादेव तथा चैकैकसमवधानदशायामपि काव्योत्पत्त्याऽऽपत्तौ तृणारणिमणिन्यायेनैव हेतुत्वं स्यात् तथा च "हेतुः" इत्येकवचनमनुपपन्नं स्यात्तस्माच्छक्त्यादीनां त्रयाणामपि काव्योत्पत्तिप्रयोजकतावच्छेदकसमुदायत्वाश्रयत्वं स्वीकार्यं ततश्च तादृशसमुदायत्वे एके एकवचनार्थैकत्वस्यान्वयस्तथा च न कोपि दोष इत्यर्थः ।

"जात्याकृतिव्यक्तयः पदार्थः" इत्यत्रत्यविभिन्नवचनकत्वस्य व्यवस्थां व्याकरोति–एवमिति । त्रितयनिष्ठस्य=जात्याकृतिव्यक्तिनिष्ठस्य पदार्थत्वस्यैकत्वं विवक्षितमस्ति यतः पदवाच्यत्वं तर्कमते जात्याकृतिव्यक्तित्रितयपर्याप्तमस्तीति विशेष्यपदस्य=जात्याकृतिव्यक्तिपदस्य बहुवचनान्तत्वेपि विशेषणपदस्य=पदार्थपदस्यैकवचनान्तत्वं युक्तमेव । पदार्थत्वं पदार्थे भवति पदशक्तिरपि निरूपकत्वसंबन्धेन पदार्थे भवतीति पदार्थत्वस्य पदशक्तिरूपत्वमुक्तमित्यवधेयम् ।

प्रत्यक्षेति–"प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि" इत्यत्र प्रमाणानीतिबहुवचनान्तस्य प्रकृत्यर्थतावच्छेदकं यत् प्रमाकरणत्वं तस्यैकस्य प्रत्यक्षादिप्रमाणचतुष्टयेऽसंभवेन बाधितत्वात् प्रमाकरणत्वनिष्ठैकत्वस्याऽविवक्षितत्वेन प्रमाणपदस्यात्र बहुवचनान्तत्वम् । प्रत्यक्षादीनामिन्द्रियसंयोगादिलक्षणसामग्रीभेदेन तन्निष्ठप्रमाकरणत्वस्यापि भेदादित्यर्थः ।

"पितरो देवताः"इत्यत्रत्यसमानवचनत्वमुपपादयति–एवमिति । पितृपितामहादिष्वेकं देवतात्वं नास्तीति पितृपितामहादिषु यद् देवतात्वं तत्रैकत्वं नास्तीत्येकत्वस्याऽविवक्षितत्वाद् बहुत्वस्य च

उद्देश्यतावच्छेदकभेदेनैवोद्देश्यताभेदात्, तत्रैकत्वस्याविवक्षया देवतापदस्य बहुवचनान्ततेति दिक् ।

स्वप्रकृतिकत्वं च=स्वाव्यवहितोत्तरत्वेन प्रतिसन्धीयमानत्वम्, तेन 'दधि सुन्दरम्' इत्यादौ विशेष्यपदानन्तरं विभक्तेरसत्त्वेपि न क्षतिः— तत्र विभक्तेरनुसंधानं विना शाब्दबोधानुपगमात् । एवं तादृशविभक्तिसजातीयविभक्तिकत्वमपि तथाविधविभक्त्यऽव्यवहितपूर्ववर्तितया प्रतिसंधीयमानत्वम्, तेन 'इदं दधि' इत्यादौ विशेषणपदानन्तरं विभक्तेरसत्त्वेपि न क्षतिः ।

---

विवक्षितत्वाद् विशेषणवाचकं देवतापदमपि बहुवचनान्तमेव । पितृपितामहादिनिष्ठदेवतात्वस्यैकत्वाभावमुपपादयति—उद्देश्यतेति, त्यागोद्देश्यत्वमेव हि देवतात्वं त्यागोद्देश्यता च पित्रादौ वर्तते उद्देश्यतावच्छेदकं च पितृत्वपितामहत्वादिकं न च पितृत्वपितामहत्वादिकमेकमस्तीत्युद्देश्यतावच्छेदकस्य पितृत्वादेर्भेदेनोद्देश्यताया अवश्यं भेदात्. उद्देश्यताया भेदे उद्देश्यतारूपदेवतात्वस्याऽप्यर्थाद् भेदात् तत्र=देवतात्वे एकत्वस्य बाधितत्वेनाविवक्षया देवतापदस्य बहुवचनान्तता ।

यदुक्तम्— "स्वप्रकृतिकविभक्तिसजातीयविभक्तिकत्वम् ( पृ० ४ )" इति तत्र वैयाकरणैः स्वप्रकृतिकत्वस्य "स्वनिष्ठोद्देश्यतानिरूपितविधेयतावत्त्वं स्वप्रकृतिकत्वम्" इति लक्षणमुक्तम्. अत्र स्वं घटादिपदं तदुद्दिश्य विभक्तेर्विधानाद् विभक्तौ घटादिपदनिष्ठोद्देश्यतानिरूपितविधेयतावत्त्वमस्त्येव यद्यपि तथापि विभक्तिनिष्ठतादृशस्वप्रकृतिकत्वस्याऽवैयाकरणानां ज्ञानाऽसंभवात् स्वप्रकृतिकत्वस्य स्वविवक्षितस्वरूपमाह— स्वप्रकृतिकेति, स्वं घटादिपदं तत्प्रकृतिकत्वं विभक्तौ स्वं घटादिपदं तदऽव्यवहितोत्तरत्वेन प्रतिसन्धीयमानत्वम्=स्मृतिविषयत्वमेव तथा च 'दधि सुन्दरम्' इत्यत्र दधिपदोत्तरं विभक्तेरभावेपि व्यासस्थले लुप्तविभक्तेः स्मरणस्वीकाराद् विभक्तौ दधिपदाव्यवहितोत्तरत्वेन प्रतिसन्धीयमानत्वमस्त्येवेत्याह— तेनेत्यादिना । तत्र= 'दधि सुन्दरम्' इत्यादौ । उत्तरत्वेनेतिप्रकारत्वं तृतीयार्थस्तथा चाव्यवहितोत्तरत्वप्रकारकस्मृतिविषयत्वं किं वा उत्तरत्वनिष्ठप्रकारतानिरूपितविशेष्यताश्रयीभूतस्मृतिविषयत्वं स्वप्रकृतिकत्वमिति वाक्यार्थः। स्वप्रकृतिकेत्युक्तवाक्यस्योत्तरभागं व्याकरोति— एवमिति । तादृश=स्वप्रकृतिक । तथाविध= स्वप्रकृतिक । विशेषणवाचकपदे यत्स्वप्रकृतिकविभक्तिसजातीयविभक्तिकत्वमस्ति तत् तथाविधविभक्त्यव्यवहितपूर्ववर्तितया प्रतिसन्धीयमानत्वमेव यथा 'नीलो घटः' इत्यत्र घटपदोत्तरवर्तमानप्रथमाविभक्त्यव्यवहितपूर्ववर्तितया ज्ञानविषयत्वं नीलपदेस्त्येव, तथा च 'इदं दधि' इत्यत्र दधिपदोत्तरं विभक्तेरभावेपि तस्याः प्रतिसन्धीयमानत्वात् तत्पूर्ववर्तितया प्रतिसन्धीयमानत्वरूपं ज्ञानविषयत्वं दधिपदेऽस्त्येवेति न कोपि दोष इत्यर्थः ।

ननु सत्यां सामग्र्यां कार्योत्पत्तिर्भवत्येव शाब्दबोधं प्रति चोपस्थित्यादिकमेव कारणं तत्र 'नीलस्य घटः' इत्यत्र नीलपदेन नीलत्वावच्छिन्नविषया घटपदेन च घटत्वावच्छिन्नविषयोपस्थितिरप्यस्त्येव नीलघटयोरभेदस्य योग्यताज्ञानमस्त्येवेत्यऽभेदसंबन्धावच्छिन्ननीलत्वावच्छिन्न-

अथ 'नीलस्य घटः' इत्यादावपि पदार्थोपस्थित्यादिकारणसमवधानसंभवात् कथं न नीलघटयोरभेदान्वयबोधः— सामग्र्या कार्यजनने उक्तनियमभङ्गप्रसङ्गरूपबाधकस्याकिंचित्करत्वादितिचेत् ? तथाविधान्वयबोधौपयिकाऽऽकाङ्क्षाविरहात् । तथा हि— तादृशान्वयबोधे प्रथमाविभक्त्यन्तघटादिपदसमभिव्याहृतप्रथमान्तनीलादिपदत्वमेवाऽसमस्तनीलघटपदाद्याकाङ्क्षा समासस्थले च घटादिपदाव्यवहितपूर्ववर्तिनीलादिपदत्वं नीलादिपदाव्यवहितोत्तरवर्तिघटादिपदत्वं वाऽऽकाङ्क्षा । उक्तस्थले च तादृश्या एकस्या अप्याकाङ्क्षाया विरहान्नापत्तिः । कार्यतावच्छेदककोटावव्यवहितोत्तरत्वनिवेशान्नोक्ताऽऽकाङ्क्षाज्ञानयोः परस्परबोधे व्यभिचारः ।

---

प्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताकज्ञानं कथं न जायते ? यद्युच्येत समानविभक्तिकत्वस्थले एवाऽभेदसंबन्धो भासते इति 'नीलस्य घटः' इत्यत्राप्यभेदभाने समानविभक्तिकत्वनियमस्य भङ्गो भविष्यतीति, तदा सत्यां सामग्र्यां कार्योत्पत्तौ नियमविशेषभङ्गस्याकिंचित्करत्वेन प्रतिबन्धकत्वं न संभवतीत्याशङ्कते— अथेति । उत्तरमाह— तथाविधेति । तथाविधः= अभेदसंबन्धप्रकारको योऽन्वयबोधः=शाब्दबोधस्तत्कारणीभूताया आकाङ्क्षाया अभावादेव 'नीलस्य घटः' इत्यत्र नीलघटयोरभेदो न भासते आकाङ्क्षां विना शाब्दबोधास्वीकारात् । उक्तमुपपादयति— तथाहीति । तादृशान्वयबोधे=अभेदसंबन्धावच्छिन्ननीलत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताकशाब्दबुद्धित्वावच्छिन्नं प्रति प्रथमान्तघटपदसमभिव्याहृतप्रथमान्तनीलपदत्वं व्यासस्थले आकाङ्क्षा, समासस्थले च घटपदाव्यवहितपूर्ववर्तिनीलपदत्वं ( नीलघटः ) नीलपदाव्यवहितोत्तरवर्तिघटपदत्वं वाऽऽकाङ्क्षा, एतादृशाकाङ्क्षायाश्च कारणत्वाद् उक्तस्थले=' नीलस्य घटः ' इत्यत्र चोक्तरूपा एकाप्याकाङ्क्षा नास्तीत्यभेदान्वयबोधकारणीभूताया आकाङ्क्षाया अभावेनाऽभेदसंबन्धप्रकारकशाब्दबोधरूपकार्यस्य सामग्र्येव नास्तीति कथमभेदसंबन्धप्रकारकः शाब्दबोधः स्यादित्यर्थः । आपत्तिः=शाब्दबोधापत्तिः ।

नन्वऽनेकविधा खल्वाकाङ्क्षा त्वयोक्ता एकस्मिन् स्थले चैकरूपैवाकाङ्क्षा संभवतीत्याऽऽकाङ्क्षाणामऽपरापराकाङ्क्षाजन्यशाब्दबोधे व्यभिचारात्कथं कारणत्वं स्याद् अव्यभिचारिण एव कारणत्वस्वीकारादित्याशङ्क्याह— कार्यतेति, यथा वह्निं प्रत्यनेकेषां तृणारण्यादीनां कारणत्वेपि तृणोत्तरजायमानवह्नित्वावच्छिन्नं प्रति तृणं कारणम् अरण्युत्तरत्वविशिष्टवह्निं प्रत्यरणिः कारणमित्येवं कार्यतावच्छेदककोटावऽव्यवहितोत्तरत्वनिवेशेन न तृणादीनां व्यभिचारशङ्का तथात्रापि समासस्थले घटादिपदाव्यवहितपूर्ववर्तिनीलादिपदज्ञानानन्तरत्वविशिष्टशाब्दबोधं प्रति घटादिपदाव्यवहितपूर्ववर्तिनीलादिपदत्वमाकाङ्क्षा. नीलादिपदाव्यवहितोत्तरवर्तिघटादिपदज्ञानानन्तरत्वविशिष्टशाब्दबोधं प्रति नीलादिपदाव्यवहितोत्तरवर्तिघटादिपदत्वमाकाङ्क्षा. इत्येवं कार्यतावच्छेदककोटावऽव्यवहितोत्तरत्वनिवेशेनोक्तसमासस्थलीयाकाङ्क्षाज्ञानयोर्नाऽपराऽपरजन्यशाब्दबोधे व्यभिचारः—अपरजन्यशाब्दबोधं प्रत्यऽपरस्य कारणत्वाभावादित्यर्थः ।

यत्तु- समासव्याससाधारण विशेषणपदस्य विशेष्यवाचकपदाऽप्रकृतिकविभक्त्यप्रकृतित्वरूपं विरुद्धविभक्तिराहित्यमेव तादृशान्वयबोधौपयिकाऽऽकाङ्क्षा, विशेष्यवाचकपदनिष्ठविशेषणवाचकपदाऽप्रकृतिकविभक्त्यप्रकृतित्वं च न तथा 'नीलघटमानय' इत्यादावसंभवादिति, तदसत्- विशेष्यवाचकपदाऽप्रकृतिकत्वस्य तादृशपदानुत्तरत्वरूपस्य तदुत्तरत्वेनाऽप्रतिसन्धीयमानत्वरूपस्य वा 'नीलो

---

समासव्यासयोराकाङ्क्षाया उक्तरीत्या पृथक् पृथक् स्वरूपस्वीकारापेक्षया लाघवाद् यत्केनापि समासव्यासोभयसाधारणमेकमेवाकाङ्क्षास्वरूपं प्रदर्शितं परिहाराय तदुपस्थापयति- यत्त्विति। विशेषणेति- यथा 'नीलो घटः' इत्यत्र विशेष्यवाचकघटपदप्रकृतिका विभक्तिः सुविभक्तिः, विशेष्यवाचकघटपदाऽप्रकृतिकविभक्तिरम्विभक्तिः तादृशाऽम्विभक्त्यप्रकृतित्वरूपमेव विरुद्धविभक्तिराहित्यं तदेव तादृशान्वय=अभेदसंबन्धावच्छिन्ननीलत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नशाब्दबोधं प्रत्याकाङ्क्षास्तीति एतादृशविरुद्धविभक्तिराहित्यस्य 'नीलो घटः' इत्यत्र नीलपदे सत्त्वादभेदो भासते, विशेष्यवाचकपदोत्तरं या विभक्तिर्नास्ति सा विशेषणवाचकपदोत्तरं न स्यादित्यर्थः। 'नीलस्य घटः' इत्यत्र चोक्तविरुद्धविभक्तिराहित्यस्याकाङ्क्षारूपस्याभावाद् नीलपदे विरुद्धविभक्तेरेव सत्त्वादभेदो न भासते। ननु विशेष्यवाचकपदनिष्ठं यद् विशेषणवाचकपदाऽप्रकृतिकविभक्त्यऽप्रकृतित्वं तदेव विरुद्धविभक्तिराहित्यं किं न स्यात्? यथा- 'नीलो घटः' इत्यत्र विशेषणवाचकनीलपदप्रकृतिका विभक्तिः सुविभक्तिः नीलपदाऽप्रकृतिकविभक्तिरम्विभक्तिस्तादृशाऽम्विभक्त्यप्रकृतित्वं विशेष्यवाचकघटपदेऽस्त्येवेति लक्षणसमन्वय इत्याशङ्कते- विशेष्येति। परिहरति- न तथेति, 'नीलघटमानय' इत्यत्राभेदसंबन्धोदाहरणे समन्वयाऽसंभवादित्यर्थः, तथाहि- अत्र विशेषणवाचकनीलपदोत्तरं विभक्तिरेव नास्ति समासस्थले लुप्तविभक्तिस्मरणस्य चाऽस्वीकारात् विशेषणवाचकनीलपदाऽप्रकृतिका याऽम्विभक्तिस्तत्प्रकृतित्वमेव विशेष्यवाचकघटपदेऽस्ति न तु तदऽप्रकृतित्वरूपं विरुद्धविभक्तिराहित्यमित्यव्याप्तिर्दोषः। पूर्वोक्तमदुक्तलक्षणेन तु 'नीलघटमानय' इत्यत्रापि विशेष्यवाचकघटपदाप्रकृतिका याऽम्भिन्नस्वादिविभक्तिस्तदऽप्रकृतित्वं नीलपदेऽस्त्येव नीलपदोत्तरं कस्यापि विभक्तेरभावादिति न कोपि दोष इत्यर्थः।

इत्येवमाशङ्क्य परिहरति- तदसदिति। विशेष्यवाचकेत्यादिलक्षणस्य हि 'विशेषणवाचकपदोत्तरविभक्तौ विशेष्यवाचकपदाऽप्रकृतिकत्वं न स्यात्' इत्ययमेवार्थस्तथा च 'नीलो घटः' इत्यत्र नीलपदोत्तरविभक्तौ घटपदाप्रकृतिकत्वं नास्ति- उभयत्र सुविभक्तेरेव सत्त्वेन घटपदप्रकृतिकत्वस्यैव सत्त्वात् 'नीलघटम्' इत्यत्र तु नीलपदोत्तरं विभक्तिरेव नास्तीति घटपदाऽप्रकृतिकत्वं सुतरां नास्त्येवेति वक्तव्यम्। विशेष्यवाचकपदाऽप्रकृतिकत्वं च निषिध्यमानं तादृशपदानुत्तरत्वम्=विशेष्यवाचकपदानुत्तरत्वं वा तदुत्तरत्वेन=विशेष्यवाचकपदोत्तरत्वेनाऽप्रतिसन्धीयमानत्वं वा वक्तव्यम्, तत्र हि "प्रत्युच्चारणं शब्दो भिद्यते" इतिन्यायेन 'नीलो घटः' इत्यादौ नीलपदोत्तरं

घटः' इत्यादौ नीलादिपदसमभिव्याहृतविभक्तौ घटपदसमभिव्याहृतविभक्तिभिन्नतया सत्त्वात्।

अथ विशेष्यवाचकपदोत्तराऽवृत्तिविभक्तिविभाजकधर्मवद्विभक्तिराहित्यस्य विवक्षणान्न दोष इतिचेत्? तर्हि विभक्तित्वादिकमजानतः पुरुषस्य तादृशधर्मज्ञानासंभवाच्छाब्दबोधानुपपत्तिः। 'नीलो घटः' इत्यादावपि सुपदस्याऽसुपदत्वादिभ्रमदशायां तादृशबोधस्यानुदयात् 'नीलस्य घटः' इत्यादावपि षष्ठ्यादेः

---

सुविभक्तिर्भिन्नास्ति घटपदोत्तरं च भिन्नास्तीति नीलपदोत्तरं समभिव्याहृतविभक्तौ=उच्चारितसुविभक्तौ घटपदोत्तरसमभिव्याहृतसुविभक्त्यऽपेक्षया भेदस्य सत्त्वाद् निषिध्यमानं विशेष्यवाचकपदाऽप्रकृतिकत्वमेवायातमिति कथमभेदसंबन्धभानं स्यात्? विशेष्यवाचकपदप्रकृतिकविभक्तेर्विशेष्यवाचकपदोत्तरमेव संभवादिति समासव्याससाधारणं विरुद्धविभक्तिराहित्यं यदुक्तं तन्न युक्तमित्यर्थः।

ननु विरुद्धविभक्तिराहित्येन हि विशेष्यवाचकपदोत्तरावृत्तिविभक्तिविभाजकधर्मवद्विभक्तिराहित्यं विवक्षितमस्ति यथा– 'नीलो घटः' इत्यत्र विशेष्यवाचकघटपदोत्तरावृत्तिविभक्तिरमादिविभक्तिस्तद्विभाजको यो धर्मो द्वितीयात्वादिस्तद्वद्विभक्तिरमादिविभक्तिस्तद्राहित्यमपेक्षितं तच्च विशेषणवाचकनीलपदेऽस्त्येव. एवम् 'नीलघटम्' इत्यत्र विशेष्यवाचकपदोत्तरावृत्तिविभक्तिविभाजको धर्मस्तृतीयात्वादिस्तद्वद्विभक्तिराहित्यं नीलपदेऽस्त्येव नीलपदोत्तरं कस्याअपि विभक्तेरसत्त्वादिति नोक्तदोष इत्याशङ्कते– अथेति। परिहरति–तर्हीति, विभक्तिविभाजकत्वादिधर्माणां वैयाकरणस्यैव ज्ञानं संभवति नान्यस्येत्यऽवैयाकरणानाम् 'नीलो घटः' इत्यादावभेदसंबन्धप्रकारकः शाब्दबोधो न स्याद् न चैतदिष्टम्। अयं भावः– उक्तविभक्तिराहित्यमेवाकाङ्क्षा. आकाङ्क्षा च न स्वरूपसती शाब्दबोधं प्रति कारणं किं तु ज्ञाता सत्येव उक्तराहित्यरूपाया विशिष्टाया आकाङ्क्षाया ज्ञानं च तद्विशेषणीभूतविभक्तिविभाजकधर्मादीनां ज्ञानं विना न संभवतीति विभक्तित्वादिकमजानतः पुरुषस्य तादृश=विभक्तिविभाजकधर्मज्ञानासंभवेन शाब्दबोधानुपपत्तिरितिदोषः।

ननु यदि शाब्दबोधं प्रत्याकाङ्क्षा ज्ञाता सत्येव कारणं स्यात्तदोक्तदोषः स्यादपि नैवमस्ति किं तु स्वरूपसत्येवाकाङ्क्षा शाब्दबोधं प्रति कारणमस्ति तथा चाकाङ्क्षाज्ञानापेक्षाऽभावादाऽऽकाङ्क्षारूपस्य विशेष्यवाचकपदोत्तरावृत्तिविभक्तिविभाजकधर्मवद्विभक्तिराहित्यस्य कुक्षिप्रविष्टविभक्तित्वादीनामपि ज्ञानापेक्षाभावाद्विभक्तित्वादिकमजानतः पुरुषस्य न शाब्दबोधानुपपत्तिरित्याशङ्क्याह–नीलो घट इति, यद्याकाङ्क्षा स्वरूपसत्येव कारणं स्यात्तदा 'नीलो घटः' इत्यत्रोक्तविभक्तिराहित्यरूपाकाङ्क्षायाः सत्त्वात् सुपदस्याऽसुपदत्वादिभ्रमदशायामप्यऽभेदप्रकारकः शाब्दबोधः स्यादेव न च भवति तस्मादाकाङ्क्षाज्ञानस्यैव कारणत्वं वक्तव्यं तथा चात्रासुपदत्वादिभ्रमदशायामुक्तविभक्तिराहित्यरूपाकाङ्क्षाज्ञानाभावान्न शाब्दबोध इत्युपपद्यते। तथा 'नीलस्य घटः' इत्यादावपि यदा षष्ठ्यादौ सुपदत्वादिभ्रमो भवति तदोक्तविभक्तिराहित्यरूपा-

सुपदत्वादिभ्रमदशायां शाब्दबोधोत्पत्त्या स्वरूपतो विरुद्धविभक्तिराहित्यस्याऽप्रयोजकत्वात् ।

अथ 'नीलो घटः' 'नीलघटः' इत्यादिद्विविधबोधसाधारणं स्वोत्तरसुप्पदभिन्नपदानुत्तरत्वविशिष्टस्वोत्तरत्वादिरूपस्वाव्यवहितोत्तरत्वसंबन्धेन नीलादिपदवत्सुबन्तघटादिपदत्वमेव तथास्तु इतिचेत् ? न- 'नीलघटरूपम्' इत्यादिवाक्यसाधारण्यानुरोधेनाऽन्यादृश्या अपि आकाङ्क्षायाः समासस्थले उपगन्तव्यतयोपदर्शितसमासव्याससाधारणानुगताकाङ्क्षानुसरणस्याप्रयोजकत्वादिति ।

काङ्क्षायाः ज्ञानसत्त्वाच्छाब्दबोध उपपद्यते जायते च, यद्याकाङ्क्षा स्वरूपसत्येव कारणं स्यात्तदा वस्तुतः 'नीलस्य घटः' इत्यत्रोक्ताकाङ्क्षाया असत्त्वात् षष्ठ्यादौ सुपदत्वभ्रमदशायामपि शाब्दबोधो न स्याद् भवति तु तस्मादाकाङ्क्षाज्ञानस्यैव कारणत्वं प्राप्तं तथा चोक्तो विभक्तित्वादिकमजानतः पुरुषस्य शाब्दबोधानुपपत्तिरूपो दोषस्तदवस्थ एवेत्यर्थः ।

ननु निखिलबोधसाधारणाकाङ्क्षानिर्वचनस्याशक्यत्वेपि 'नीलो घटः' 'नीलघटः' 'नीलं घटम्' 'नीलघटम्' इत्यादिद्विविधबोधसाधारणं त्वाकाङ्क्षास्वरूपं निर्वक्तुं शक्यते तच्च स्वोत्तरसुप्पदेत्यादि ज्ञेयम्, तथा हि स्वं विशेषणवाचकनीलपदं तदुत्तरवर्ति यत् सुप्पदं विभक्तिपदं तद्भिन्नं यत् पटादिपदं तदनुत्तरत्वविशिष्टं स्वं विशेषणवाचकपदं तदुत्तरत्वादिरूपं यत् स्वाव्यवहितोत्तरत्वं तेन संबन्धेन नीलादिपदवत् यत्सुबन्तघटादिपदं तत्त्वमेवाकाङ्क्षा तथा चात्र घटपदे नीलपदोत्तरवर्तमानविभक्तिपदोत्तरत्वसत्त्वेपि तद्भिन्नपटादिपदानुत्तरत्वमप्यस्त्येव तथा नीलपदोत्तरत्वमप्यस्त्येवेत्यनेन संबन्धेन घटपदे नीलपदवत्त्वमुभयत्रास्त्येव तदेवाकाङ्क्षास्त्वित्याशङ्कते- अथेति । तथा नामाऽऽकाङ्क्षा । 'नीलस्य घटः' इत्यादिप्रयोगवारणाय सुप्पदभिन्नपदेनात्र विशेष्यवाचकघटादिपदोत्तरवर्तमानविभक्तिपदभिन्नपदं ग्राह्यं तथा च 'नीलस्य घटः' इत्यत्र विशेष्यवाचकघटपदोत्तरवर्तमानं यत् प्रथमाविभक्तिपदं तद्भिन्नं यत् षष्ठीविभक्तिपदं तदुत्तरत्वमेव घटपदेस्ति तदनुत्तरत्वं नास्तीति नात्रोक्ताकाङ्क्षा । तथा चात्र 'विशेष्यवाचकघटादिपदोत्तरविभक्तिवृत्तिविभक्तिविभाजकप्रथमात्वादिधर्मावच्छिन्नपदभिन्नपदानुत्तरत्वविशिष्टस्वोत्तरत्वादिरूपस्वाव्यहितोत्तरत्वसंबन्धेन नीलादिपदवत्सुबन्तघटादिपदत्वमाकाङ्क्षा' इत्येवमाकाङ्क्षास्वरूपं वक्तव्यम् । परिहरति- नेति, 'नीलघटरूपम्' इत्यत्रापि शाब्दबोध इष्टः किं तु त्वदुक्तोक्ताकाङ्क्षास्वरूपं न घटते यतो नीलं च तद् घटरूपमिति कर्मधारयेण विशेष्यवाचकरूपपदे विशेषणवाचकनीलपदाव्यवहितोत्तरत्वं नास्ति मध्ये घटपदेन व्यवधानात्, न च घटरूपमित्येकपदं तर्कमते "शक्तं पदम्" इति नियमेन घटपदस्य भिन्नत्वाद् रूपपदस्य च भिन्नत्वात्, तस्मात् 'नीलघटरूपम्' इत्यत्र जायमानशाब्दबोधनिर्वाहार्थमऽन्यादृशमाकाङ्क्षास्वरूपं वक्तव्यं तच- 'स्वोत्तरसुप्पदभिन्ननिराकाङ्क्षपदानुत्तरत्वविशिष्टस्वोत्तरत्वादिरूपस्वाव्यवहितोत्तरत्वसंबन्धेन नीलादिपदवत्सुबन्तघटादिपदत्वम्' इति, लक्षणसमन्वयः पूर्ववदेव 'नीलो घटः' 'नीलघटः' इत्यादौ

अथ 'नीलं घटमानय' इत्यादौ नीलादेर्घटादावन्वयोपगमे नीलादिपदोत्तरविभक्त्यर्थकर्मत्वादेः कुत्रान्वय इति चेत् ?, न कुत्रापि, विभक्तिपदं साधुत्वार्थमेव प्रयुज्यते । अभेद एव वा विशेषणविभक्तेरर्थः, अभेदस्य संसर्गमर्यादया भानं तु समासस्थले एव तत्र लुप्तविभक्तेरनुसंधानं विनापि शाब्दबुद्धेरानुभविकत्वादित्यपि वदन्ति ।

अथैतन्मते—अभेदो यदि भेदत्वावच्छिन्नाभावस्तदाऽप्रसिद्धिः, यदि च भेदप्रतियोगिकोऽभावस्तदा 'नीलं जलम्' इत्यादिवाक्यस्यापि प्रामाण्यापत्तिः—जले

विशेष्यवाचकघटपदे निराकाङ्क्षपदानुत्तरत्वमस्त्येव तथा 'नीलघटरूपम्' इत्यत्र यद्यपि नीलरूपपदयोर्मध्ये घटपदव्यवधानेन रूपपदे स्वोत्तरसुप्पदभिन्नपदानुत्तरत्वं नास्ति तथापि स्वोत्तरसुप्पदभिन्ननिराकाङ्क्षपदानुत्तरत्वं त्वस्त्येव घटपदस्य रूपदसाकाङ्क्षत्वेन निराकाङ्क्षत्वाभावादित्येतादृश्या आकाङ्क्षाया अवश्यमभ्युपगन्तव्यत्वे त्वदुक्ताकाङ्क्षाऽभ्युपगमस्य निरर्थकत्वादित्यर्थः ।

ननु 'नीलं घटमानय' इत्यत्र नीलस्य तु घटेऽन्वयो भवतीति प्रसिद्धं किं तु नीलपदोत्तरद्वितीयाविभक्त्यर्थस्य कर्मत्वस्य कुत्रान्वयो भवतीतिजिज्ञासार्थं शङ्कते— अथेति । उत्तरगर्भं प्रतिषेधमाह— न कुत्रापीति । "संभवत्यर्थसाधुत्वे पदसाधुत्वम् ( विभक्तेः पदसाधुत्वार्थकत्वोपपादनम् ) अन्याय्यम्" इत्यभिप्रायेण पक्षान्तरमाह— अभेदेति, 'नीलो घटः' 'नीलं घटम्' 'नीलस्य घटस्य' इत्यादौ सर्वत्र विशेषणविभक्तेरभेद एवार्थः— नीलाभिन्नो घट इतिबोधादित्यर्थः । ननु ग्रन्थारम्भे एवाभेदस्य संसर्गमर्यादया भासमानत्वमुक्तं संसर्गमर्यादया भानं च पदानुपस्थितस्यैव भवति यदि विशेषणविभक्तेरेवाभेदोर्थस्तदाऽभेदस्य विभक्तिलक्षणपदेनोपस्थितौ संसर्गमर्यादया भासमानत्वं न स्यादित्याशङ्क्याह— अभेदस्येति, अभेदस्य संसर्गमर्यादया भानं समासस्थले एव भवति तत्र=समासस्थले विशेषणविभक्तेर्लोपेन लुप्तविभक्तेश्च समासेऽनुसंधानाऽस्वीकारेण पदान्तरस्याभेदानुपस्थापकत्वादगत्याऽभेदस्य संसर्गमर्यादया भानं स्वीक्रियते, 'नीलं घटम्' इत्यादौ त्वभेदोपस्थापिकाया विशेषणविभक्तेः सत्त्वेनाभेदस्य न संसर्गमर्यादया भानं किं तु प्रकारतयेत्यर्थः ।

उक्तविभक्त्यर्थरूपाऽभेदस्वरूपं पृच्छन्नाशङ्कते— अथेति । अप्रसिद्धिरिति— घटादौ पटादीनां भेदस्य सत्त्वादेव भेदत्वावच्छिन्नस्याभावोऽप्रसिद्ध एव सर्वत्र पदार्थेषु तद्भिन्नपदार्थभेदस्य सर्वप्रमाणसिद्धत्वादित्यर्थः । ननु न भेदत्वावच्छिन्नाभावोऽभेदो येनाऽप्रसिद्धिः स्यात् किं तु भेदप्रतियोगिको नाम किंचिद्भेदव्यक्तिप्रतियोगिकोऽभावोऽभेद इत्युच्यते तथा च नीलघटे नीलभेदो नास्तीति नीलभेदप्रतियोगिकाभावरूपोऽभेदः सर्वप्रसिद्ध एवेत्याशङ्क्याह— यदि चेति । अत्र दोषमाह— तदेति, भेदप्रतियोगिकाभावस्याऽभेदत्वे 'नीलं जलम्' इत्यादिवाक्यस्यापि प्रामाण्यमापद्येत तथा हि— जलं नीलं न भवतीति तर्कसिद्धान्तेन जले नीलभेद एव वर्तते इति 'नीलं जलम्' इति प्रयोगो न भवति भेदप्रतियोगिकाभावस्याऽभेदत्वे तु जले नीलभेदाभा-

द्वित्वादिना नीलभेदाद्यऽभावस्य सत्त्वात् । नीलभेदत्वावच्छिन्नाभावस्य विभक्त्यर्थत्वे नीलादिपदार्थानन्वयप्रसङ्गः ।

न च—भेदप्रतियोगिकाभाव एव विभक्त्यर्थः— नीलपदसमभिव्याहारान्नीलभेदत्वावच्छिन्नाभावः प्रतीयते इति वाच्यम्, पदार्थद्वयसंसर्गभानस्यैवाकाङ्क्षानियम्यत्वान्नीलभेदत्वावच्छिन्नप्रतियोगिताकत्वान्तर्भावेण वृत्तिं विना भेदरूपपदार्थतावच्छेदकस्याभावे तादृशसंबन्धेन भानाऽसंभवात् ।

---

स्याऽसत्त्वेपि द्वित्वादिना नाम द्वित्वावच्छिन्नप्रतियोगिताकस्य अर्थाद् घटत्वनीलभेदैतदुभयप्रतियोगिकाभावस्य सत्त्वात् 'नीलं जलम्' इत्यादिवाक्यस्यापि प्रामाण्यमापद्येतेत्र न चैतदिष्टमित्यर्थः । ननु द्वित्वावच्छिन्नप्रतियोगिताकाभावस्य ग्रहणेनोक्तदोषः प्रदर्शितो न च द्वित्वावच्छिन्नप्रतियोगिताकाभावं ग्रहीष्यामस्तथा च जले नीलभेदरूपप्रतियोगिन एव सत्त्वेन तदभावस्यासत्त्वान्न 'नीलं जलम्' इत्यादिवाक्यस्य प्रामाण्यापत्तिरित्याशङ्क्य दोषान्तरमाह— नीलभेदत्वेति, 'नीलो घटः' इत्यत्र नीलभेदत्वावच्छिन्नस्याऽभावो यदि विभक्त्यर्थस्तदाऽभावविशेषणीभूतो नीलपदार्थोपि विभक्त्यर्थ एवेति प्राप्तं तथा च नीलपदेनोपस्थितस्य नीलपदार्थस्याऽनन्वयप्रसङ्गो यतो विभक्त्यर्थभूतनीलविशिष्टे घटे पुनर्नीलपदोपस्थितनीलपदार्थस्यान्वयो नैव संभवतीति ।

ननु न नीलभेदत्वावच्छिन्नाभावोऽभेदो येनोक्तदोषः स्यात् किं तु 'नीलो घटः' इत्यादौ भेदप्रतियोगिकाभाव एव विभक्त्यर्थः नीलभेदत्वावच्छिन्नाभावस्तु नीलपदसमभिव्याहारादेव प्रतीयते तथा च नीलपदोपस्थितनीलपदार्थस्य घटे नाऽनन्वयप्रसङ्ग इत्याशङ्क्याह— न चेति । परिहारहेतुमाह— पदार्थेति, 'नीलो घटः' इत्यत्र यो हि नीलभेदत्वावच्छिन्नाभावः प्रतीयते तत्र नीलभेदस्य तदभावस्य च यो नीलभेदत्वावच्छिन्नप्रतियोगिताकत्वरूपः संबन्धस्तस्य कथं भानं स्यात् ?, न चाऽऽकाङ्क्षया संभवति— पदार्थद्वयसंसर्गस्यैवाकाङ्क्षाभास्यत्वात् । न चोक्तसंबन्धे विभक्तेः शक्तिग्रहोस्ति येनोक्तसंबन्धस्य शक्त्योपस्थितिः स्यादित्याक्षेपाभिप्रायः, तथा हि— 'नीलघटः' इत्यत्र नीलपदार्थस्य यो घटपदार्थेऽभेदसंबन्धो भासते स नीलपदसमभिव्याहाररूपाकाङ्क्षया भासते तदुपस्थापकपदान्तरस्याभावात्, 'नीलो घटः' इत्यत्र तु भेदाभावरूपोऽभेदो नीलपदोत्तरवर्तमानप्रथमाविभक्तेरेवार्थस्तत्राभेदे भेदः पदार्थतावच्छेदकः अभेदश्च पदार्थः प्रथमाविभक्तिलक्षणपदजन्यप्रतीतिविशेष्यत्वात् तत्राभेदरूपभेदाभावे पदार्थतावच्छेदकरूपभेदस्य यो नीलभेदत्वावच्छिन्नप्रतियोगिताकत्वरूपः संबन्धः स पदान्तरसमभिव्याहाररूपाकाङ्क्षालभ्यो न भवति पदार्थद्वयसंसर्गस्यैवाकाङ्क्षालभ्यत्वादत्र च न भेदाभेदौ द्वावेव पदार्थौ— अभेदस्य पदार्थत्वेपि भेदस्य पदार्थतावच्छेदकत्वेन पदार्थत्वाभावात् किं तु यथा 'घटः' इत्यत्र घटघटत्वसमवायेषु त्रिषु घटपदशक्तिस्वीकारात् घटे घटत्वसमवायः शक्त्यैव भासते न तु पदान्तरसमभिव्याहाररूपाकाङ्क्षया तथा प्रकृतेपि प्रथमाविभक्त्यर्थे भेदाभावरूपाभेदे शक्त्योपस्थिते

**मैवम्- भेदोऽभावश्च विशेषणविभक्तेरर्थौ विशिष्टलाभस्त्वाकाङ्क्षादिवशात् । एतेन भेदे नीलादिपदार्थान्वये एकदेशान्वयप्रसङ्ग इति निरस्तम् ।**

**न च विशेषणविभक्तेरभेदार्थकत्वे 'नीलं घटः' इत्यादावप्यऽभेदान्वयबोधापत्तिः-'धान्येन धनवान्' इत्यादौ तृतीययाऽभेदबोधनात्. अभेदप्रकारकबोधे**

पदार्थतावच्छेदकीभूतभेदस्य नीलभेदत्वावच्छिन्नप्रतियोगिताकत्वरूपः संबन्धः शक्त्यैव भासते इति वक्तव्यं न चैवमपि संभवति यतो विभक्तिशक्तिर्हि भेदप्रतियोगिकाभावरूपाभेदे एवास्ति न तु नीलभेदत्वावच्छिन्नप्रतियोगिताकत्वसंबन्धेन भेदविशिष्टे भेदप्रतियोगिकाभावे, अतो न शक्या भेदरूपपदार्थतावच्छेदकस्याभावे= विभक्त्यर्थाभावपदार्थे तादृशसंबन्धेन=नीलभेदत्वावच्छिन्नप्रतियोगिताकत्वरूपसंबन्धेन भानं संभवति, अतो नीलभेदत्वावच्छिन्नप्रतियोगिताकत्वसंबन्धेन भेदविशिष्टे एवाभावे अर्थात् नीलभेदत्वावच्छिन्नप्रतियोगिताकाभावे एव प्रथमाविभक्तेः शक्तिर्वक्तव्या तथा सत्युक्तरीत्या स एव नीलस्यापि विभक्त्यर्थत्वेन विभक्त्युपस्थितनीलविशिष्टे घटे नीलपदोपस्थितनीलपदार्थस्यानन्वयप्रसङ्ग इत्यवधेयम् ।

परिहरन्ति- मैवमित्यादिना । उक्ता दोषाः स्युर्यदि विशेषणविभक्तेर्विशिष्टे भेदत्वावच्छिन्नाभावे वा भेदप्रतियोगिकाभावे वा एका शक्तिः स्वीक्रियेत नैवमस्ति किं तु भेदे अभावे च खण्डशः शक्तिः स्वीक्रियते, तत्र भेदोपि प्रसिद्ध एवाभावोपि प्रसिद्ध एव पदार्थ इति नोक्ताऽप्रसिद्धयादिदोषप्रसक्तिः । भेदस्याभावस्य च विशेषणविभक्त्या मुख्यत्वेन पृथक् पृथगुपस्थितिर्भवति विशिष्टस्य भेदाभावस्य च नीलादिपदसमभिव्याहाररूपाकाङ्क्षाबलात् प्रतीतिर्भवतीति न कोपि दोषः । 'नीलं जलम्' इत्यत्र च जले नीलभेदस्यैव सत्त्वेन नीलभेदाभावस्याऽसत्त्वान्न प्रामाण्यापत्तिः । 'नीलो घटः' इत्यत्र नीलपदार्थस्य स्वनिष्ठप्रतियोगितानिरूपकत्वसंबन्धेन नीलपदोत्तरविभक्त्यर्थभेदेऽन्वयो भवति तस्य भेदस्य च स्वनिष्ठप्रतियोगितानिरूपकत्वसंबन्धेन नीलपदोत्तरविभक्त्यर्थाभावेऽन्वयो भवति तस्याभावस्य च विशेष्यतासंबन्धेन घटेऽन्वयो भवतीति सिद्धान्तः । अत्र विशेषणविभक्तेर्यदि विशिष्टे भेदाभावे एकैव शक्तिः स्यात्तदा भेदस्य पदार्थैकदेशत्वेन तत्रोक्तरीत्या नीलपदार्थस्यान्वयो न स्यात् "पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेन" इति नियमादिति यः केनापि दोषः प्रदर्शित इदानीं सोपि नास्ति- विशेषणविभक्तेर्भेदे अभावे च पृथगेव खण्डशः शक्तिस्वीकारेण भेदस्यापि विभक्त्या मुख्यत्वेनोपस्थित्या पदार्थत्वेन तत्र नीलपदार्थस्यान्वये विरोधाभावादित्याह- एतेनेति । एतेन=भेदे अभावे च खण्डशः शक्तिस्वीकारेण ।

ननु खण्डशः शक्तिस्वीकारेपि विशेषणविभक्तेरभेदार्थकत्वमस्त्येव तथा च यथा 'नीलो घटः' इत्यत्राऽभेदान्वयबोधो भवति तथा 'नीलं घटः' इत्यत्रापि नीलपदस्य विशेषणवाचकत्वेन तदुत्तरविभक्तेरप्यभेदार्थकत्वप्राप्तावऽभेदान्वयबोधः स्यादेव नीलस्य भेदे भेदस्याऽभावे अभावस्य च घटे उक्तरीत्याऽन्वयसंभवात् । यद्युच्येताऽभेदान्वयबोधे विरुद्धविभक्तिराहित्यं कारणं तदत्र नास्तीति नाऽभेदान्वयबोधापत्तिरिति, तदपि न युक्तम्- 'धान्येन धनवान्' इत्यत्र

विरुद्धविभक्तिराहित्यस्याऽनपेक्षणादितिवाच्यम्, द्वितीयादिनाऽभेदबोधने द्वितीयाद्यन्तविशेष्यवाचकपदसमभिव्याहारस्य प्रयोजकत्वमित्युपगमात् ।

अथ 'प्रमेयो घटः' इत्यादौ प्रमेयत्वावच्छिन्नभेदाऽप्रसिद्ध्या लघुधर्मसमानियतगुरुधर्मस्याऽभावप्रतियोगितानवच्छेदकत्वेन 'कम्बुग्रीवादिमान् घटः' इत्यादावपि कम्बुग्रीवादिमत्त्वावच्छिन्नप्रतियोगिताकभेदाऽप्रसिद्ध्या विशेषणविभक्तेरभेदार्थकत्वाऽसंभवः । एवं नीलपटादिपरनीलादिपदघटितस्य 'नीलो घटः' इत्यादिवाक्यस्यापि प्रामाण्यापत्तिः– नीलत्वादिना पटादेर्भेदाभावस्य नीलघटादौ सत्त्वात् ।

---

विरुद्धविभक्तिराहित्याभावेपि धान्याभिन्नधनवानित्येवमभेदान्वयबोधो भवत्येवेत्यऽभेदान्वयबोधं प्रति किं वा अभेदस्य संसर्गतया बोधे विरुद्धविभक्तिराहित्यस्य कारणत्वेप्यऽभेदस्य प्रकारतया बोधं प्रति तु विरुद्धविभक्तिराहित्यस्य कारणत्वं नास्त्येव येन 'नीलं घटः' इत्यत्राऽभेदान्वयबोधो न स्यादित्याशङ्क्याह– न चेति । परिहरति– द्वितीयादिनेति, 'धान्येन धनवान्' इत्याद्युपपदविभक्तिस्थले तु विरुद्धविभक्तिराहित्याभावेप्यऽभेदान्वयबोधस्वीकारेप्यऽन्यत्र त्वभेदान्वयबोधं प्रति विरुद्धविभक्तिराहित्यस्य कारणत्वमस्त्येवेति न 'नीलं घटः' इत्यत्राभेदान्वयबोधप्रसङ्गो विरुद्धविभक्तिराहित्यस्याभावादित्यर्थः ।

दोषान्तरमाह– अथेति, यदि भेदाभाव एव विशेषणविभक्तेरर्थस्तदा सर्वस्यैव पदार्थजातस्य प्रमेयत्वेन प्रमेयत्वावच्छिन्नभेदस्यैवाऽप्रसिद्ध्या 'प्रमेयो घटः' इत्यत्राऽभेदान्वयबोधो न स्यादेवेत्येको दोषः, तथा घटे घटत्वमप्यस्ति कम्बुग्रीवादिमत्त्वमप्यस्तीति तत्र लघुधर्मस्य घटत्वस्याभावीयप्रतियोगितावच्छेदकत्वसंभवे घटत्वसमनियतस्य= घटत्वसमानाधिकरणस्य गुरुधर्मस्य कम्बुग्रीवादिमत्त्वस्याभावीयप्रतियोगितावच्छेदकत्वं न भवतीति 'कम्बुग्रीवादिमान् घटः' इत्यत्राप्यभेदान्वयबोधो न स्यादेव यतो विशेषणविभक्तेर्भेदाभाव एवार्थः अत्रापि कम्बुग्रीवादिमत्त्वावच्छिन्नप्रतियोगिताकभेदाभाव एव विशेषणविभक्तेरर्थो वक्तव्यस्तन्न संभवति– अत्र भेदप्रतियोगितावच्छेदकत्वं कम्बुग्रीवादिमत्त्वस्य प्राप्तं तच्च न युक्तं घटत्वापेक्षया कम्बुग्रीवादिमत्त्वस्य गुरुधर्मत्वादिति द्वितीयो दोष इति विशेषणविभक्तेरभेदार्थकत्वं नैव संभवतीत्यर्थः । दोषान्तरमाह– एवमिति, अयं भावः– यत्र घटे नीलत्वप्रतिपादनाय 'नीलो घटः' इत्युच्यते तत्र तु नीलाभेदप्रकारको बोध इष्ट एव यत्र च 'नीलः' इति पटतात्पर्येणोच्यते 'घटः' इत्यप्युच्यते तत्र नीलाभेदप्रकारकघटविशेष्यकबोधो नेष्टः, विशेषणविभक्तेरभेदार्थकत्वे च नीलयोर्घटपटयोर्घटत्वपटत्वरूपाभ्यां भेदेपि नीलत्वेन रूपेण तु भेदो नास्त्येवेति नीलत्वेन पटभेदाभावस्य नीलपदोत्तरविभक्त्यर्थस्य घटे सत्त्वादेव पटतात्पर्येण प्रयुक्तनीलपदघटितात् 'नीलो घटः' इतिवाक्यादपि नीलाभेदप्रकारकघटविशेष्यको बोधः स्यादेवेति नीलपटादिपरनीलादिपदघटितस्य 'नीलो घटः' इत्यादिवाक्यस्यापि प्रामाण्यापत्तिः ।

एतेन— विशेषणतावच्छेदकीभूतनीलत्वप्रमेयत्वादिकमेव विशेषणविभक्त्यर्थः, नीलत्वादेर्नीलत्वावच्छिन्नभेदाभावरूपतयाऽभेदार्थकत्वप्रवादोपपत्तिरित्यपि निरस्तम् । नीलत्वादौ नीलत्वादिमतः स्ववृत्तित्वसंबन्धेनान्वये आकाङ्क्षाविरहाच्च । यथा हि तद्विशिष्टेऽधिकरणे तदधिकरणतया तदन्वयोऽनुभवविरुद्धस्तथा तद्धर्मे आधेयतया तद्धर्मवदन्वयोपि, अत एव 'कर्म गच्छति' इतिवाक्यस्य निराकाङ्क्षता ।

---

केनापि— न भेदाभावो विशेषणविभक्तेरर्थो येनोक्तदोषाणां प्रसक्तिः स्यात् किं तु विशेषणतावच्छेदकीभूतं यद् नीलत्वप्रमेयत्वादिकं तदेव विशेषणविभक्तेरर्थस्तस्य चाश्रयतासंबन्धेन विशेष्ये घटादावन्वयो भवतीति 'नीलो घटः' इत्यत्र नीलत्वाश्रयो घटः 'प्रमेयो घटः' इत्यत्र प्रमेयत्वाश्रयः (प्रमेयत्ववान्) घट इतिबोधे न काप्यनुपपत्तिः, जले नीलत्वाऽभावाच्च 'नीलं जलम्' इति प्रयोगापत्तिरपि नास्ति, विशेषणविभक्तेरभेदार्थकत्वं यदुच्यते तदपि नीलत्वादेरतद्व्यावृत्तिरीत्या नीलत्वावच्छिन्नभेदाभावरूपत्वेनैवेत्यऽभेदार्थकत्वप्रवादस्याप्यनुपपत्तिर्नास्तीति यदुक्तं तत् पराचष्टे—एतेनेति, एतेन नाम नीलपटादिपरनीलादिपदघटितस्य 'नीलो घटः' इत्यादिवाक्यस्यापि प्रामाण्यप्रसङ्गेन । अयं भावः— विशेषणविभक्तेर्यदि विशेषणतावच्छेदकीभूतनीलत्वादिकमेवार्थस्तदा नीलत्वं त्वेकमेव सर्वत्र घटपटादिष्वस्तीति पटवृत्तिनीलत्वस्य घटेपि सत्त्वात् पूर्ववद् नीलपटादिपरनीलपदघटितात् 'नीलो घटः' इत्यादिवाक्यादपि नीलाभेदप्रकारकघटविशेष्यको बोधः स्यादेव न च भवतीति विशेषणविभक्तेर्विशेषणतावच्छेदकीभूतनीलत्वाद्यर्थकत्वमपि नोपपद्यते । विशेषणविभक्तेर्विशेषणतावच्छेदकीभूतनीलत्वाद्यर्थकत्वे दोषान्तरमाह— नीलत्वादाविति, "प्रकृतिप्रत्ययार्थौ सहार्थं ब्रूतस्तयोः प्रत्ययार्थस्य प्राधान्यम्" इतिन्यायेन 'नीलो घटः' इत्यत्रत्ये 'नीलः' इतिपदार्थेपि विभक्त्यर्थस्य नीलत्वस्यैव प्राधान्येन तत्र प्रकृत्यर्थस्य नीलत्ववतो नीलस्यान्वयः स्व-( नील ) वृत्तित्वसंबन्धेन कर्तव्यः स च न संभवत्याकाङ्क्षाविरहात् । स्वम्=नीलत्ववान् नीलस्तत्र वृत्तित्वं नीलत्वेस्त्येव । अत्र कृष्णभट्टो यथा— "आकाङ्क्षाविरहमेवोपपादयति— यथा हीत्यादिना । तद्विशिष्टे भूतले अधिकरणतया तदन्वयः=घटान्वयो विरुद्धो घटवान् घटवान् इतिबोधाभावात्, तथा तद्धर्मे घटे आधेयतया तद्धर्मवतो घटवतोऽन्वयोपि न— घटवति घट इतिबोधाभावादित्यर्थः । तथा तत्प्रत्ययार्थनीलत्वे आधेयतासंबन्धेन प्रकृत्यर्थस्य नीलत्वादिमतोप्यन्वयो न संभवत्याकाङ्क्षाविरहादिति भावः । अत एव=तद्धर्मे तद्धर्मवत आधेयतयान्वयविरहादेव, कर्मत्वे द्वितीयार्थे कर्मत्ववतः प्रकृत्यर्थस्य कर्मण आधेयतयाऽन्वये निराकाङ्क्षतेत्यर्थः" इति । यथा घटत्ववति स्वाधिकरणत्वसंबन्धेन घटत्वान्वयो न भवत्यनुभवविरोधाद् एकघटस्य घटत्वद्वयवत्त्वप्रसङ्गाच्च तथा घटत्वेपि स्वाधेयत्वसंबन्धेन घटत्ववदन्वयो न भवत्यनुभवविरोधात् तथैव प्रकृतेपि विभक्त्यर्थे नीलत्वे नीलत्ववतो नीलस्यान्वयोऽनुभवविरुद्ध एवेत्यर्थः । तद्धर्मवदन्वयोपीत्यत्र "अनुभवविरुद्धः" इत्यनुवर्तनीयम् । कर्मेति— 'कर्म गच्छति' इत्यत्रापि द्वितीया-

न चैवं संसर्गतामतेप्यनिस्तारः— 'नीलो घटः' इत्यादौ स्ववृत्तिनीलत्वादेः संसर्गतास्वीकारे उक्तस्थले प्रामाण्यापत्तेर्दुर्वारत्वादितिवाच्यम्, स्ववृत्तिनीलत्वादेः स्वस्मिन्नेव संबन्धतोपगमेन पटादिवृत्तिनीलत्वादेर्घटादौ पटादिसंबन्धताविरहेण तादृशातिप्रसङ्गाभावात् ।

वस्तुतस्तु— तत्तद्व्यक्तित्वावच्छिन्नभेदाभाव एव नीलत्वादिप्रकारेण भासमा-

न्तार्थे कर्मपदार्थे द्वितीयार्थस्य कर्मत्वस्य प्राधान्येन तत्र स्ववृत्तित्वसंबन्धेन स्वाधेयत्वसंबन्धेन वा प्रकृत्यर्थस्य कर्मपदार्थस्यान्वयो वक्तव्यः सोपि न संभवत्यनुभवविरोधात् । तस्मात् विशेषणविभक्तेर्विशेषणतावच्छेदकीभूतनीलत्वादावपि शक्तिर्न संभवतीत्यर्थः । न च 'ग्रामं गच्छति' इत्यत्र ग्रामवृत्तिसंयोगे आधेयतासंबन्धेन ग्रामान्वयस्य वक्ष्यमाणत्वाद्विरोध इतिवाच्यम्, तत्रापि संयोगे ग्रामस्य ग्रामत्वेनैवान्वयस्वीकारात् संयोगवत्त्वेनान्वयास्वीकाराच्च. अन्यथा संयोगवान् संयोगवान् इतिशाब्दबोधः स्यात् स च नेष्ट इत्यवधेयम् ।

ननु यथाऽभेदस्य प्रकारतास्वीकारे त्वया दोषाः प्रदर्शितास्तथा त एव दोषा अभेदस्य संसर्गतास्वीकारेपि प्रसङ्क्ष्यन्ति— अभेदस्य भेदाभावस्वरूपत्वादेवेत्याशङ्कते— न चैवमिति, अभेदस्य संसर्गतामतेप्युक्तस्थले=नीलपटादिपरनीलादिपदघटिते 'नीलो घटः' इतिवाक्ये प्रामाण्यं स्यादेव । अयं भावः— अभेदस्य संसर्गत्वस्वीकारेपि नीलत्वेन पटभेदाभावस्य नीलपदोत्तरविभक्त्यर्थस्य नीलघटे सत्त्वादेव पटतात्पर्येण प्रयुक्तनीलपदघटितात् 'नीलो घटः' इति वाक्यादपि नीलाभेदसंसर्गकघटविशेष्यको बोधः स्यादेवेत्यस्य वाक्यस्य प्रामाण्यापत्तिरनिष्टा दुर्वारैव । स्ववृत्तीति— विभक्त्यर्थभूतं नीलवृत्ति यन्नीलत्वं तस्य प्रकारत्वं वा संसर्गत्वं वा स्वीकार्यं तत्र संसर्गत्वस्वीकारे इत्यर्थः । परिहरति— स्ववृत्तीति, उक्तस्थले नीलत्वस्यैकत्वादेव दोषः प्राप्तस्तत्र समवायस्यैकत्वेपि यथा वायौ स्पर्शसमवायसत्त्वेपि रूपसमवायो नास्तीति व्यवहारस्तत्कस्य हेतोः ? वायौ रूपाभावाद् रूपसमवायप्रतियोगिकत्ववाय्वनुयोगिकत्वयोरवच्छेद्यावच्छेदकभावाभावादित्युच्यते तथा नीलत्वस्यैकत्वेपि पटवृत्तिनीलत्वस्य पटे एव संबन्धता न तु घटादाविति पटादिवृत्तिनीलत्वादेर्या पटादिसंबन्धता तस्या घटादौ विरहेण तादृशातिप्रसङ्गस्य=नीलपटादिपरनीलादिपदघटितस्य 'नीलो घटः' इत्यादिवाक्यस्य प्रामाण्यप्रसङ्गस्याभावात् । स्ववृत्ति=नीलपटवृत्ति । स्वस्मिन्नेव=पटे एव संबन्धता न घटे । विशेषणविभक्तेरर्थोऽभेदः स एव संबन्धः स चाऽभेदो नीलत्वरूप एवेति नीलत्वस्य संबन्धतोक्तेत्यवधेयम् । तदुक्तं कृष्णभट्टेन— "नीलपटपरनीलपदघटितात् 'नीलो घटः' इतिवाक्याद् घटे नीलत्वविशिष्टबुद्ध्यनुदयेन स्ववृत्ति ( पटवृत्ति ) नीलत्वादेर्घटे पटसंबन्धता न स्वीक्रियते किं तु पटे एव स्वीक्रियते 'नीलपटः' इतिविशिष्टबुद्ध्युदयात्" इति ।

वास्तविकपरिहारमाह— वस्तुतस्त्विति, विशेषणविभक्तेर्भेदाभाव एवार्थः स च भेदाभावस्तत्तद्व्यक्तित्वावच्छिन्नभेदाभाव एव ज्ञेयस्तथा च 'नीलो घटः' इत्यत्र नीलघटव्यक्तिगततन्नीलव्यक्तित्वावच्छिन्नभेदस्याभावो नीलत्वादिप्रकारेण भासमानानां तत्तद्व्यक्तीनाम्=नीलरूपाश्रयीभूतघटा-

नानां तत्तद्व्यक्तीनां स्वस्मिन् संबन्धतया भासते इति न काप्यनुपपत्तिः । संबन्धता च तस्य भेदप्रतियोगिताकाभावत्वेन तत्तद्व्यक्तिभेदप्रतियोगिताकाभावत्वेन वेत्यन्यदेतत् ।

न चैवं विशेषणविभक्तेरभेदार्थकत्वमतेपि तत्तद्व्यक्तित्वावच्छिन्नाऽभेद एव विभक्त्यर्थो वक्तव्य इतिवाच्यम्, तथासत्यऽपूर्वव्यक्तिनिष्ठतत्तद्व्यक्तित्वस्य कथंचिदपि भानासंभवेन तदवच्छिन्नभेदाभावे शक्तिग्रहासंभवेनाऽपूर्वव्यक्तीनामभेदा-

---

दिव्यक्तीनां स्वस्मिन्=तद्घटादिव्यक्तावेव संबन्धतया भासते नान्यपटादिव्यक्तिसंबन्धतयेति 'नीलो घटः' इत्यत्र नीलत्वावच्छिन्नभेदाभावसंसर्गकघटविशेष्यकबोध उपपद्यते, नीलपटादिपरनीलादिपदघटितात् 'नीलो घटः' इतिवाक्यात् नीलत्वावच्छिन्नभेदाभावसंसर्गकघटविशेष्यकबोधस्य चापत्तिर्नास्त्येव नीलपटपरनीलपदबोध्यतन्नील ( पटगतनील ) व्यक्तित्वावच्छिन्नभेदाभावस्य घटेऽभावान्न नीलपटादिपरनीलादिपदघटितस्य 'नीलो घटः' इतिवाक्यस्य प्रामाण्यापत्तिरित्यर्थः । यथा घट इत्यत्र घटत्वप्रकारेण घटस्य भासमानत्वं तथात्रापि नीलत्वप्रकारेण नीलघटादिव्यक्तेरेव भासमानत्वं ज्ञेयम् । ननूक्तभेदाभावस्य संबन्धता केन रूपेण ज्ञेयेत्यत्राह— संबन्धतेति । तस्य=विशेषणविभक्त्यर्थभेदाभावस्य । यथा पर्वतो वह्निमानित्यत्र पर्वते यो वह्निप्रतियोगिकः संयोगस्तस्य संयोगत्वेन वा वह्निप्रतियोगिकसंयोगत्वेन वोभयथापि संबन्धत्वं संभवति विशिष्टबुद्धिनियामकत्वाक्षतेस्तथात्रापि भेदाभावस्य भेदप्रतियोगिताकाभावत्वेन वा तद्व्यक्तित्वावच्छिन्नभेदप्रतियोगिताकाभावत्वेन वोभयथापि संबन्धत्वं घटते 'नीलो घटः' इत्याकारकविशिष्टबुद्धिनियामकत्वाक्षतेरित्याशयेनाह— इत्यन्यदेतदिति ।

ननु यथा त्वयाऽभेदस्य संसर्गत्वमाश्रित्याऽभेदस्य तत्तद्व्यक्तित्वावच्छिन्नभेदाभावत्वेन तादृशनीलादितद्व्यक्त्यभेदस्य तत्तद्घटपटव्यक्तिष्वेव सत्त्वेनान्यत्र चासत्त्वेन नीलपटादिपरनीलादिपदघटितस्य 'नीलो घटः' इतिवाक्यस्य प्रामाण्यप्रसङ्गो निवारितस्तथा मयाप्यभेदस्य प्रकारत्वमप्याश्रित्य प्रकारीभूतोप्यभेदस्तत्तद्व्यक्तित्वावच्छिन्नभेदाभाव एवेति तस्य पटादिगतस्य घटादिष्वभावेन उक्तस्य 'नीलो घटः' इतिवाक्यस्य प्रामाण्यप्रसङ्गो निवारितो भविष्यतीत्याशङ्कयाह— न चेति । अत्र चाभेदस्य विशेषणविभक्त्यर्थत्वकथनेन प्रकारत्वमेव विज्ञेयं प्रकारस्य किंचित्पदार्थत्वनियमात् शक्त्योपस्थितिनियमाच्च, संसर्गस्तु न कस्यचित्पदस्यार्थो भवति न वा शक्त्योपस्थितो भवतीति नियमः— आकाङ्क्षाबलेन तद्भानस्योक्तत्वादित्यवधेयम् । परिहारमाह— तथा सतीति, तथासति=अभेदस्य प्रकारतामतेऽभेदस्य तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदाभावरूपत्वाश्रयणे सति । प्रकारीभूतपदार्थस्यान्वयं प्रति तच्छक्तिज्ञानाधीनोपस्थितिः कारणमस्ति तथा च 'नीलो घटो भविष्यति' इत्यत्र भाविनस्तद्व्यक्तित्वस्योपस्थित्यसंभवेन तदवच्छिन्नभेदाभावे च विभक्तिशक्तिग्रहासंभवाद् विभक्त्या प्रकारीभूताभेदस्योपस्थित्यसंभवादपूर्वव्यक्तीनां घटादीनामभेदान्वयबोधो न स्यादेवेति दोषः । तदुक्तं कृष्णंभट्टेन— "नीलो घटो

न्वयबोधानुपपत्तेः । संसर्गज्ञानस्य विशिष्टबुद्धावऽहेतुत्वेनाऽनुपस्थितस्यापि संसर्गतया भानसंभवेन संसर्गतामतेऽनुपपत्त्यभावात् ।

न च विभक्त्यर्थेऽपि भेदे तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकत्वसंबन्धेन नीलत्वादिना तत्तद्व्यक्तीनामन्वयः, तादृशभेदानामपि तत्तद्व्यक्तिभेदत्वावच्छिन्नप्रतियोगिताकत्वसंबन्धेनाऽभावेऽन्वय उपेयते, तावतैव तत्तद्व्यक्तित्वावच्छिन्ना-

---

भविष्यतीत्यत्र तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताको यो भेदस्तादृशभेदत्वावच्छिन्नप्रतियोगिताकोऽभावो नीलपदोत्तरप्रथमार्थस्तदेकदेशे तद्व्यक्तित्वे प्रकृत्यर्थस्य नीलरूपवतोऽन्वयः ( कर्तव्यः ) तथा चाऽपूर्वा भविष्यति या नीलरूपाश्रयव्यक्तिस्तन्निष्ठं यद् तद्व्यक्तित्वं तस्य कथंचिदपि भानासंभवेन सामान्यलक्षणारूपभासकविरहाद्भानासंभवेन ( घटादौ तु घटत्वं सकलवृत्ति तस्य सामान्यलक्षणारूपत्वं भवति तद्व्यक्तित्वं तु तद्व्यक्तिमात्रपर्याप्तमिति न तस्य सामान्यलक्षणारूपत्वम् ) तदवच्छिन्नभेदाभावे=अपूर्वव्यक्तित्वावच्छिन्नप्रतियोगिताकभेदस्याभावे शक्तिग्रहासंभवेनाऽपूर्वव्यक्तीनामभेदान्वयानुपपत्तेः । अभावज्ञाने हि प्रतियोगिज्ञानं कारणमिति प्रतियोगि ( अपूर्वव्यक्ति ) ज्ञानाभावाच्छक्तिग्रहासंभवादपूर्वव्यक्तीनामभेदान्वयबोधानुपपत्तिरित्यर्थः'' इति ।

नन्वऽभेदस्य संसर्गतास्वीकारेऽपि 'नीलो घटो भविष्यति' इत्यत्रोक्तदिशाऽपूर्वव्यक्तीनामभेदान्वयबोधानुपपत्तिः किं न स्यादित्याशङ्क्य समाधत्ते—संसर्गज्ञानस्येति, विशिष्टबुद्धौ संसर्गस्यैवकारणत्वमस्ति न तु संसर्गज्ञानस्येत्यऽनुपस्थितस्याप्यभेदस्य संसर्गतया भानसंभवेनापूर्वव्यक्तीनामभेदान्वयबोधेऽनुपपत्त्यभावात्, उपस्थित्यर्थमेव शक्तिज्ञानस्यापेक्षणात् न चाभेदोपस्थित्यपेक्षा संसर्गतामते अत एव न संसर्गज्ञानस्य विशिष्टबुद्धिहेतुत्वमित्यर्थः ।

ननु यदि तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदाभावो विशिष्टो विशेषणविभक्तेरर्थः स्यात्तदा एतादृशविशिष्टाभेदकुक्षिप्रविष्टतद्व्यक्तित्वस्याऽपूर्वस्य कथंचिदपि भानासंभवेन तत्र विभक्तिशक्तिग्रहासंभवाच्छक्तिग्रहाभावे चाऽपूर्वतद्व्यक्तित्वस्योपस्थित्यसंभवेन 'नीलो घटो भविष्यति' इत्यत्राऽपूर्वतन्नीलव्यक्तीनामभेदान्वयबोधानुपपत्तिः स्यादपि न चोक्तविशिष्टाभावस्य विशेषणविभक्त्यर्थत्वं वदामः किं तु खण्डशो विभक्तिशक्तिस्वीकारेण विशेषणविभक्तेर्भेदोऽभावश्चार्थः, तत्र विभक्त्यर्थे भेदे तत्तन्नीलव्यक्तीनां नीलत्वादिना तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकत्वसंबन्धेनान्वयस्तादृशभेदानामपि तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकत्वसंबन्धेनाऽभावेऽन्वय इति 'नीलो घटो भविष्यति' इत्यत्र नाऽपूर्वतत्तन्नीलव्यक्तीनामभेदान्वयबोधानुपपत्तिः— तद्व्यक्तित्वस्यात्र संबन्धकुक्षौ प्रवेशेन विभक्त्यर्थे प्रवेशाभावेन च तत्र विभक्तिशक्तिग्रहस्यापेक्षैव नास्ति, उक्तसंबन्धस्य तद्व्यक्तित्वविशिष्टस्याकाङ्क्षाबलेन भानसंभवेन संबन्धकुक्षिप्रविष्टतद्व्यक्तित्वस्याप्याकाङ्क्षाबलेन भानसंभवादित्यर्थः । तावतैव=तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकत्वसंबन्धेन तत्तन्नीलव्यक्तीनां भेदे तादृशभेदानां चाभावेऽन्वयाङ्गीकारेणैव । संबन्धप्रणालिकया हि तद्व्यक्ति-

**ऽभेदलाभ इति न किंचिदनुपपन्नमिति वाच्यम्, विशेषणतावच्छेदकावच्छिन्नाया एव प्रतियोगिताया अभावे प्रतियोगिनः संबन्धतया भानात्, अन्यथा—विशिष्टवैशिष्ट्यबुद्धित्वानुपपत्तेः । "प्रतियोगिविशेषिताभावज्ञानं च विशिष्टवैशिष्ट्यबोधमर्यादां नातिशेते" इतिदर्शनात् केवलं विशेष्ये विशेषणमितिरीत्या न कश्चिदभ्युपैतीति चेत् ?,**

---

त्वस्य भेदेन संबद्धत्वात् तत्तद्व्यक्तित्वावच्छिन्नाभेदस्य=तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदाभावरूपस्याभेदस्य लाभः=भानं संभवत्येवेति न 'नीलो घटो भविष्यति' इत्यत्रापूर्वतत्तन्नीलव्यक्तीनामभेदान्वयबोधानुपपत्तिः, न वा नीलपटादिपरनीलादिपदघटितस्य 'नीलो घटः' इतिवाक्यस्य प्रामाण्यापत्तिः— तद्व्यक्तित्वस्य निवेशात् पटगततन्नीलव्यक्तेर्घटादिष्वसत्त्वादित्यर्थस्तदाह— न किंचिदनुपपन्नमिति । इत्याशङ्क्याह—न चेति ।

परिहरति— विशेषणतेति, त्वया तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकत्वसंबन्धेन भेदे तत्तन्नीलव्यक्तीनामन्वय उपपादितः प्रतियोगिता चात्र संबन्धे प्रविष्टास्ति तस्याः प्रतियोगितायाश्चाभावे प्रतियोगिविशेषणतावच्छेदकावच्छिन्नाया एव संबन्धत्वेन भानं भवति विशेषणतावच्छेदकं चात्र नीलत्वमेव न तु तन्नीलव्यक्तित्वं तथा च नीलत्वावच्छिन्नप्रतियोगितायाः संबन्धत्वे नीलत्वस्य सर्वत्र घटपटादिष्वेकत्वेन पुनर्नीलपटादिपरनीलादिपदघटितस्य 'नीलो घटः' इतिवाक्यस्य प्रामाण्यापत्तिदोषः प्राप्तः । विपक्षे बाधकमाह— अन्यथेति, यदि प्रतियोगिताया विशेषणतावच्छेदकावच्छिन्नायाः संबन्धत्वं न स्यात्तदाऽभावज्ञानस्य विशिष्टवैशिष्ट्यबुद्धित्वं न स्याद् नाम— अभावज्ञानेन विशिष्टवैशिष्ट्यस्यावगाहनं न स्यात् 'घटो नास्ति' इत्यत्र हि विशिष्टस्य=घटत्वविशिष्टस्यैव घटस्य स्वप्रतियोगिताकत्वसंबन्धेनाभावे वैशिष्ट्यं भासते ( स्वं घटः ) अर्थात्— यथा घटस्य स्वप्रतियोगिताकत्वसंबन्धेनाभावेऽन्वयो भवति तथा घटत्वस्यापि स्वावच्छिन्नप्रतियोगिताकत्वसंबन्धेनाभावेऽन्वयो भवत्येव भासते च ( स्वं घटत्वम् ) तन्न स्याद् यदि विशेषणतावच्छेदकावच्छिन्ना प्रतियोगिता संबन्धो न स्यात्, अर्थात् यदि प्रतियोगितावच्छेदकं घटत्वं विशेषणं न स्यात् किं तूपलक्षणं स्यात्तदोपलक्षणीभूतघटत्वस्याभावे स्वावच्छिन्नप्रतियोगिताकत्वसंबन्धेनाऽन्वयोपि न स्यात्तदा 'विशेषणतावच्छेदकावच्छिन्नाया एव प्रतियोगितायाः संबन्धत्वेनाभावे भानं भवति' इतिनियमोपि न स्यात्तदोक्तस्थलेपि नीलत्वस्य प्रतियोगितावच्छेदकत्वाभावेन प्रामाण्यापत्तिर्न स्यादपि न चैवमस्ति विशेषणतावच्छेदकावच्छिन्नाया एव प्रतियोगितायाः संबन्धत्वस्वीकारादित्यर्थः ।

अभावे विशेषणतावच्छेदकावच्छिन्नाया एव प्रतियोगितायाः संबन्धत्वं भवतीत्यत्र विनिगमनामाह— प्रतियोगिविशेषितेति, प्रतियोगिना विशेषितं प्रतियोगिविशेषितमभावज्ञानं यथा 'घटो नास्ति' इत्यत्र घटप्रवेशात्. एतादृशमभावज्ञानं विशिष्टवैशिष्ट्यस्य मर्यादाम्= त्ववगाहनं नातिशेते, अर्थात् 'घटो नास्ति' इत्यभावज्ञानेऽभावे घटत्वविशिष्टस्यैव घटस्य स्वप्रतियोगिताकत्व-

**सत्यम्-अभेदस्तादात्म्यम्, तच्च स्ववृत्त्यऽसाधारणो धर्मः । असाधारण्यं च एकमात्रवृत्तित्वम्, तच्च स्वसामानाधिकरण्यस्वप्रतियोगिवृत्तित्वोभयसंबन्धेन भेद-**

संबन्धेन वैशिष्ट्यम्=अन्वयो भासते तस्माद् घटविशेषणीभूतस्य घटत्वस्याप्यभावे स्वावच्छिन्न-प्रतियोगिताकत्वसंबन्धेनान्वयो भवत्येव भासते च सः, तस्मात्संबन्धकोटिप्रविष्टा प्रतियोगिता विशेषणतावच्छेदकीभूतघटत्वाद्यवच्छिन्ना भवत्येव । अभावज्ञाने चाभावस्यैव विशेष्यत्वेन तत्र प्रतियोगिनो घटादेर्विशेषणत्वाद् घटत्वादीनां विशेषणतावच्छेदकत्वं प्राप्तमिति ।

ननु 'घटो नास्ति' इत्यभावज्ञाने घटत्वस्य केवलं घटविशेषणत्वमेव भविष्यति नाभाव-विशेषणत्वम्. अर्थात् घटत्वस्य स्वावच्छिन्नप्रतियोगिताकत्वसंबन्धेनाभावेऽन्वयं नाङ्गीकरिष्याम इति नोक्तदोषापत्तिरित्याशङ्क्याह- केवलमिति, 'घटो नास्ति' इत्यादौ प्रतियोगिविशेषिता-भावज्ञाने त्वदुक्तां विशेष्ये विशेषणमितिरीतिं न कश्चित्स्वीकरोति किं तु घटत्वस्य स्वावच्छि-न्नप्रतियोगिताकत्वसंबन्धेनाभावेऽन्वयो भवत्येव भासते चेत्येव सर्वो जनः स्वीकरोतीत्यर्थः । यद्यभावज्ञाने उपलक्षणत्वेन घटत्वभानं स्यात्तदोपलक्षणत्वाविशेषाद् द्रव्यत्वादीनामपि भानं स्यान्न-चैवमस्ति तस्माद् द्रव्यत्वाद्यपेक्षया घटत्वे विशेषणत्वमेव विशेष इतिप्राप्तम् । यदि च प्रति-योगिता विशेषणतावच्छेदकेन घटत्वेनावच्छिन्ना न स्यात्तदा 'घटो नास्ति' इत्यत्र घटत्वावच्छिन्नप्रतियोगिताकाभावस्याऽसिद्ध्या किंचिद्घटव्यक्तिसत्त्वदशायामपि किंचिद्घट-व्यक्त्यभावतात्पर्येण 'घटो नास्ति' इतिप्रयोगस्य प्रामाण्यं स्यात्. न च किंचिद्घटव्य-क्तिसत्त्वे 'घटो नास्ति' इतिप्रयोगो भवति, तस्मात् प्रतियोगिता विशेषणतावच्छेदकघटत्वादि-नाऽवच्छिन्ना भवति तथा सति च किंचिद्घटसत्त्वे घटत्वावच्छिन्नप्रतियोगिताकाभावस्य बाधात् 'घटो नास्ति' इति प्रयोगो न भवति । प्रकृते च 'नीलो घटः' इत्यत्र विभक्त्यर्थाभावसंबन्ध-भूतायाः प्रतियोगिताया विशेषणतावच्छेदकनीलत्वेनावच्छिन्नत्वात् नीलत्वस्य च सर्वत्र नील-घटपटेष्वेकत्वेनाभावाभावाद् नीलपटादिपरनीलादिपदघटितस्यापि 'नीलो घटः' इति वाक्यस्य प्रामाण्यं स्यादितिदोषः ।

इत्येवं प्रकारतावादे प्राप्तं दोषं स्वीकुर्वन् प्रकारतावाद्याह- सत्यमिति । विशेषणविभक्त्यर्थभू-तामेदं निर्वक्ति- अभेद इति । तादात्म्यमेवाभेदस्तथा च 'नीलो घटः' इत्यत्र घटे नीलता-दात्म्यं भासते नीलतादात्म्यवान् घट इति नीलपदोत्तरविभक्तेस्तदेवार्थः । तादात्म्यस्वरूपमाह- स्ववृत्तीति । तत्= तादात्म्यम् । स्वं घटः । घटवृत्ति यन्नीलतादात्म्यं तद् घटस्यासाधारणो धर्मस्तस्य नीलतादात्म्यस्य तद्घटव्यक्तिमात्रवृत्तित्वात् । असाधारण्यस्वरूपमाह- असाधारण्य-मिति, एकव्यक्तिमात्रवृत्तिधर्मोऽसाधारणो धर्म इति फलितम् । एकमात्रवृत्तित्वस्वरूपमप्याह- स्वसामानेति । तत्=एकमात्रवृत्तित्वम् । अत्र कृष्णंभट्टो यथा-. स्वं नीलघटव्यक्तिभेदस्तत्सामा-नाधिकरण्यं द्रव्यत्वे अथ च स्वं नीलघटव्यक्तिभेदस्तत्प्रतियोगिनी नीलघटव्यक्तिस्तद्वृत्तित्वमपि द्रव्यत्वे इत्युभयसंबन्धेन भेदविशिष्टं द्रव्यत्वमेव तदन्यत्वं तद्व्यक्तित्वे ( तन्नीलघटव्यक्तिवृत्तितद्-

विशिष्टं यत् तदन्यत्वमित्येकमात्रवृत्तिधर्म एव विशेषणविभक्तेरर्थः । वृत्तिश्च तत्र प्रकृत्यर्थस्य संसर्गमर्यादया भासते, तादृशधर्मस्तत्तद्व्यक्तित्वादिरूप एव । अपूर्वव्यक्तिनिष्ठतादृशधर्मस्य विशिष्य ज्ञातुमशक्यत्वेप्येकमात्रवृत्तिधर्मत्वादिना सामान्यप्रत्यासत्तितः सुग्रहत्वमेव ।

अभेदस्य संसर्गतामतेप्येतादृशाऽनुगताऽभेदस्यैव तथात्वमुचितम् । तत्तद्व्यक्तित्वावच्छिन्नभेदाभावकूटस्य विशिष्य तथात्वे 'घटो न नीलः' इत्यादिवाक्य-

---

व्यक्तित्वे ) इत्यर्थः । स्वप्रतियोगिवृत्तित्वस्यैव संबन्धत्वे— स्वं नीलव्यक्तिभेदस्तत्प्रतियोगिनी नीलघटव्यक्तिस्तद्वृत्तित्वं तद्व्यक्तित्वे इत्यनेन संबन्धेन भेदविशिष्टमेव तत्तद्व्यक्तित्वमतो द्वितीयसंबन्धनिवेशः, तथा च स्वं नीलव्यक्तिभेदस्तत्सामानाधिकरण्यं तत्तद्व्यक्तित्वे नास्ति नीलघटव्यक्तिभेदवति पटे तत्तद्व्यक्तित्वस्याभावात् । स्वसामानाधिकरण्यस्यैव संबन्धत्वे च स्वपदेन पटादिभेदस्तत्सामानाधिकरण्यं तत्तद्व्यक्तित्वे इति भेदविशिष्टमेव भवतीति स्वप्रतियोगिवृत्तित्वनिवेशः, तथा च स्वंपटादिभेदस्तत्प्रतियोगी पटादिस्तद्वृत्तित्वं तद्व्यक्तित्वे नास्तीत्यर्थः । " इति । एवं चैतदुभयसंबन्धेन तद्व्यक्तित्वं विना भेदविशिष्टं सर्वं घटत्वादिकं धर्मजातं भविष्यति तदन्यत्वं तद्व्यक्तित्वे प्राप्तम् । " प्रकृतिप्रत्ययौ सहार्थं ब्रूतः " इतिन्यायेन विभक्त्यर्थस्योक्तैकमात्रवृत्तिधर्मस्य प्राधान्येन तत्र प्रकृत्यर्थस्य नीलस्यान्वयः केन संबन्धेन कर्तव्य इत्यत्राह— वृत्तिश्चेति । तत्र=विभक्त्यर्थे तादात्म्ये, प्रकृत्यर्थस्य=नीलस्य, वृत्तिः=अन्वयः संसर्गमर्यादया भासते । स्ववृत्तित्वसंबन्धेन नीलस्य तादात्म्येऽन्वयः । तादात्म्यस्य च नीलविशिष्टस्य घटे आश्रयत्वसंबन्धेन विशेषः स चापि संबन्धः संसर्गमर्यादया भासते नीलघटयोर्यस्तादात्म्यलक्षणः संबन्धस्तस्य प्रकारत्वस्वीकारेण विभक्त्यर्थत्वाद् विशेषणविभक्त्यैवोपस्थितिस्वीकाराच्च। तादृशधर्मः= एकमात्रवृत्तिधर्मः । 'नीलो घटो भविष्यति' इत्यत्राऽभेदान्वयबोधानुपपत्तिपरिहारमाह— अपूर्वेति । तादृशधर्मस्य=तद्व्यक्तित्वरूपधर्मस्य, विशिष्य=तद्व्यक्तित्वत्वेन रूपेण ज्ञातुमशक्यत्वं हि तस्य भावित्वेन वर्तमानत्वाभावात् । तद्व्यक्तित्वस्य तद्व्यक्तित्वत्वेन रूपेण ज्ञातुमशक्यत्वेप्येकमात्रवृत्तिधर्मत्वेन रूपेण सामान्यप्रत्यासत्त्या ज्ञातुं शक्यत्वात्=एकमात्रवृत्तित्वधर्मस्य वर्तमाननीलादिव्यक्तिस्थस्य ज्ञानसंभवेन तद्रूपेण भाविव्यक्तिस्थस्यापि ज्ञानसंभवादित्यर्थः ।

अभेदस्येति—अभेदसंसर्गतावादेप्येतादृशानुगताऽभेदस्यैव=एकमात्रवृत्तिधर्मत्वेन रूपेणानुगतस्य=सकलतद्व्यक्तित्वरूपधर्मेष्वनुगतस्यैव तादात्म्यलक्षणस्याभेदस्य तथात्वम्=संसर्गत्वमुचितम् । अननुगताभेदस्य संसर्गत्वे बाधकमाह— तत्तद्व्यक्तित्वेति, तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदाभावसमूहस्य विशिष्य=तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदाभावत्वेन रूपेण तथात्वे= संसर्गत्वे 'घटो न नीलः' इतिवाक्यजन्यबोधे तादृशः=तत्तद्व्यक्तित्वादिरूपो योऽननुगतः संबन्धस्तदवच्छिन्नप्रतियोगिताका अननुगता एव नीलाभावा भासेरन्, अर्थात् संबन्धभूतस्य

जन्यबोधे "प्रतियोग्यऽभावान्वयौ तुल्ययोगक्षेमौ" इतिन्यायेन तादृशाननुगत-संबन्धावच्छिन्नप्रतियोगिताकाऽननुगताऽभावा एव भासेरन् न तु नीलवृत्तिरेको-ऽभावः, तथा सति यत् किंचित्तादृशाभावतात्पर्येण प्रयुक्तस्य नीलेपि 'न नीलः' इत्यादिवाक्यस्य प्रामाण्यं स्यात् ।

---

तद्व्यक्तित्वस्यैकमात्रनीलव्यक्तिस्थत्वेन प्रतियोगितायास्तदवच्छिन्नत्वेहि सकलनीलव्यक्तीनामेको ऽभावो घटे न प्रत्येतुं शक्यते किं तु प्रतियोगितावच्छेदकस्य तद्व्यक्तित्वस्यानेकत्वेनानेके नीलाभावा घटेऽत्र प्राप्तास्ते पृथक् पृथगेव भासेरन् । अत्र प्रमाणमाह— प्रतियोगीति, प्रतियोग्यन्वयस्तदभावान्वयश्च तुल्ययोगक्षेमौ=संबन्धादिषु तुल्यसापेक्षौ भवतः, अन्वयः शाब्दबोधः अर्थात् नञऽसत्त्वे येन संबन्धेन यत्र यस्य येन रूपेण सत्त्वं प्रतीयते नञ्सत्त्वेपि तेनैव संबन्धेन तत्रैव तस्यैव तेनैव रूपेणासत्त्वं प्रतीयते तथा च नञऽसमभिव्याहारस्थले यत्संबन्धावच्छिन्नयद्धर्मावच्छिन्नप्रकारताकयद्विशेष्यकः शाब्दबोधो भवति नञ्समभिव्याहारस्थलेपि तत्संबन्धावच्छिन्नतद्धर्मावच्छिन्नप्रतियोगिताकतदऽभावविशेष्यकः शाब्दबोधो भवति यथा— 'भूतले घटोस्ति' इत्यत्र संयोगसंबन्धावच्छिन्नघटत्वावच्छिन्नविशेष्यताकः शाब्दबोधो भवतीति घटो नास्तीत्यत्रापि संयोगसंबन्धावच्छिन्नघटत्वावच्छिन्नप्रतियोगिताकघटाभावविशेष्यकः शाब्दबोधो भवति तथा च 'घटो नीलः' इत्यत्र घटे नीलसत्त्वं अननुगततद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदाभावरूपाभेदसंबन्धेन प्रतीयते इति 'घटो न नीलः' इत्यत्रापि घटे नीलासत्त्वं तेनैवाननुगततद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदाभावरूपाऽभेदसंबन्धेन प्रतीयेतेति प्राप्तं तत्र संबन्धभूतस्याननुगतस्य तद्व्यक्तित्वस्य तत्तन्नीलव्यक्तीनामानन्त्येनानन्त्यात् तदवच्छिन्नप्रतियोगिताकानां नीलाभावानामनन्तानां संग्राहकरूपाभावेनानन्त्यादऽनन्ता एव नीलाऽभावा भासेरन् न तु नीलवृत्तिः=नीलघटवृत्तिरेको नीलाभावः प्रत्येतुं शक्यते इत्यर्थ । उपसंहरति— तथा सतीति, यदि 'घटो नीलः' इत्यत्र तन्नीलव्यक्तित्वावच्छिन्नप्रतियोगिताकभेदत्वावच्छिन्नप्रतियोगिताकाभावरूपैकसंबन्धावच्छिन्नप्रतियोगिताक एक एव नीलाभावः प्रतीयेत तदा नीले घटे किंचिन्नीलरूपव्यक्तिसत्त्वेपि किंचिन्नीलरूपव्यक्तेरसत्त्वेन तदऽभावाभिप्रायेण नीलेपि घटे 'घटो न नीलः' इति प्रयोगः स्यात्तस्य च प्रामाण्यमपि स्यात्, न चैवं भवति तस्मात् 'घटो न नीलः' इत्यत्रोक्तदिशा नीलाभावा अनन्ता एव भासन्ते इति वक्तव्यम्, अनन्ताभावानां च ज्ञानासंभव इति संसर्गतामते-ऽप्येकमात्रवृत्तिधर्मत्वेन रूपेणानुगतस्यैव तद्व्यक्तित्वस्योक्ततादात्म्यरूपस्य संसर्गत्वं वक्तव्यमिति प्राप्तमित्यर्थः । एवं च प्रतियोगिताया एकमात्रवृत्तिधर्मत्वेन रूपेण तद्व्यक्तित्वेनावच्छिन्नत्वेन पटगततन्नीलव्यक्तेश्च घटादौ बाधादुक्तदिशा नीलपटादिपरनीलादिपदघटितस्य 'नीलो घटः' इतिवाक्यस्यापि प्रामाण्यापत्तिर्नास्त्येव ।

इदं तु बोध्यम्– विशेषणविभक्तेरभेदार्थकत्वे 'घटो न नीलः' इत्यादौ नञा नीलाद्यऽभेदाभाव एव प्रत्याययिष्यते न तु नीलादिभेदः, यादृशसमभिव्याहार-स्थले येन संबन्धेन यत्र धर्मिणि येन रूपेण यद्वत्त्वं नञऽसत्त्वे प्रतीयते तादृश-स्थले नञा तद्धर्मिणि तादृशसंबन्धावच्छिन्नतादृशधर्मावच्छिन्नप्रतियोगिताकत-दऽभावबोधस्य व्युत्पत्तिसिद्धत्वात् । "प्रतियोग्यभावान्वयौ च" इत्यादेरप्ययमे-वार्थः । एवं च नञो भेदबोधकत्वं न कुत्रापि संभवति– 'अनीलं घटमानय' इत्यादौ घटपदसामानाधिकरण्यानुरोधेनाऽनीलपदस्य नीलभिन्नपरतया नञो भेदवत्येव लक्षणाया उपगन्तव्यत्वात् ।

इदं त्वत्रावधेयम्– अभेदस्य प्रकारतामतेपि 'घटो न नीलः' इत्यादिवा-क्यस्य नीलाभेदाभावबोधकत्वेपि तृतीयाऽभावस्य प्रतियोगिस्वरूपतया नञो भेदबोधकत्वं नानुपपन्नं परं तु भेदत्वप्रकारेण भेदबोधो भवति न वेत्यन्यदेतत् ।

इदं तु तत्त्वम्– 'नीलो घटः' इत्याद्यसमासस्थलेऽभेदस्य संसर्गतोपगमेपि गौरवविरहात् तत्र विशेषणविभक्तेर्वृत्तिकल्पनमनुचितम् ।

---

नञऽसत्त्वे यस्य प्रतीतिर्भवति नञ्सत्त्वे तदभावस्य प्रतीतिर्भवतीति नियमोऽस्ति प्रकृते च यदि 'नीलो घटः' इत्यत्र विशेषणविभक्तेरभेद एवार्थस्तदा 'घटो न नीलः' इत्यत्र नञा नीलाऽभेदाऽभावस्यैव प्रतीतिर्भविष्यति न तु नीलभेदस्येत्याह– इदमित्यादिना । व्याख्यातप्रायोयं ग्रन्थः । उपसंहरति– एवं चेति । ननु 'अनीलं घटम्' इत्यत्र तु नञो भेदबोधकत्वं भविष्यतीत्याशङ्क्याह– अनीलमिति, अत्रापि नञो भेदवति लक्षणैव न तु शक्त्या भेदबोधकत्वमित्यर्थः ।

इदं त्वत्रेति– यद्यप्यऽभेदस्य प्रकारतामते उक्तरीत्या 'घटो न नीलः' इत्यत्र नञो नीलाभे-दाभावबोधकत्वमेव तथापि तृतीयाभावस्य प्रतियोगिस्वरूपत्वाद् यथा घटाभावाभावो घटस्वरू-पमेव तथात्राप्यभेदो नाम भेदाभाव इति नीलाभेदाभाव इत्यनेन नीलभेदाभावाभाव इति प्राप्तं तत्र नीलभेदाभावाभावो हि नीलभेदस्वरूपमेवेति नञो नीलाभेदाभावबोधकत्वे प्राप्ते नीलभेद-बोधकत्वं प्राप्तमेवेति भेदबोधकत्वं नानुपपन्नं किं त्वेवं नञो भेदत्वप्रकारेण=भेदत्वेन रूपेण भेदबोध-कत्वं न संभवति किं त्वऽभेदाभावत्वेनैव रूपेण भेदबोधकत्वं संभवति यथा क्वचिद् घटादिपदानां द्रव्यत्वादिना घटादिबोधकत्वं भवति तथेत्यर्थः ।

इदं तु तत्त्वमिति– 'नीलघटम्' इत्यादिसमासस्थले त्वऽभेदोपस्थापिकाया नीलादिविशेष-णपदोत्तरं विभक्तेरभावेन तदनुसंधानस्याप्यनङ्गीकाराच्च विभक्त्याऽभेदस्योपस्थित्यसंभवेन प्रका-रत्वं नैव संभवति केनचित्पदेन वृत्त्योपस्थितस्यैव प्रकारत्वनियमादित्युक्तसमस्तस्थले त्वभेदस्य संसर्गतयैव भानं भवतीति निर्विवादम् । 'नीलो घटः' इत्यत्र त्वभेदोपस्थापकविशेषणविभक्तेः सत्त्वेन तया वृत्त्याऽभेदस्योपस्थितिः संभवतीत्यभेदस्यात्र यद्यपि प्रकारत्वमपि संभवति तथापि संसर्गतामतेपि=अभेदस्य संसर्गत्वस्वीकारेपि किमपि गौरवं नास्तीति तत्र=अभेदे विशेषणविभक्तेः वृत्तिकल्प-नम्=शक्तिकल्पनमनुचितमेव । प्रत्युत प्रकारतामते एवाभेदे विशेषणविभक्तेः शक्तिकल्पनरूपं गौरवमस्तीत्यर्थः ।

न चाऽभेदे यत्र विशेषणविभक्तेः शक्तिभ्रमः स्वारसिकलक्षणाग्रहो वा तत्र सर्वमते एवाऽभेदप्रकारकबोधस्य 'नीलो घटः' इत्यादिवाक्यादुत्पत्त्या तादृशसमभिव्याहारज्ञानस्य द्विविधबोधे हेतुताद्वयं कल्पनीयमभेदस्य संसर्गतावादिनेति गौरवम् । एवं तादृशसमभिव्याहारज्ञानघटितसामग्र्या भिन्नयोग्यताज्ञानघटितत्वेन द्वैविध्यमिति भिन्नविषयकप्रत्यक्षादिकं प्रति तादृशशाब्दसामग्रीप्रतिबन्धकताया अप्याधिक्यमिति वाच्यम्, संसर्गतावादिनोक्तस्थलेपि तत्संसर्गकबोधस्यैवोपगमादिति दिक् ।

---

ननु यदि कस्यचित् पुरुषस्याभेदे एकत्वादिसंख्यावाचिकाया विशेषणविभक्तेः शक्तिभ्रमः जातः किं वा विशेषणविभक्तेरेकत्वे शक्तिरस्तीत्यभेदे स्वारसिकलक्षणाग्रहः स्यात्तदा तु 'नीलो घटः' इतिवाक्येनाभेदप्रकारक एव बोधो भवतीति सर्वसंमतम्, तथा च– तादृशसमभिव्याहारज्ञानस्य=' नीलो घटः ' इत्यादिप्रथमान्तनीलपदप्रथमान्तघटपदसमभिव्याहारज्ञानस्य द्विविधबोधे=अभेदप्रकारकबोधे अभेदसंसर्गकबोधे च हेतुताद्वयं संसर्गतावादिना कल्पनीयमिति गौरवम्। तथा हि ' नीलो घटः ' इति वाक्यस्य स्वसिद्धान्तेनाभेदसंसर्गकबोधे एका हेतुता. विशेषणविभक्तेरभेदे शक्तिभ्रमे लक्षणाग्रहे चोक्तरीत्या वृत्त्योपस्थिताभेदस्य प्रकारत्वसंभवेनाभेदप्रकारकबोधे द्वितीया हेतुतेत्यर्थः। प्रकारतामते तु शक्तिभ्रमे लक्षणाग्रहे तथा सिद्धान्ते चाऽभेदप्रकारक एव बोधो भवतीति नोक्तवाक्यस्य हेतुताद्वयं कल्प[illegible]मिति न गौरवम् । एवम्– यत्र प्रत्यक्षसामग्री शाब्दसामग्री च समानविषया भवति तत्र प्रत्यक्षसामग्र्याः प्राबल्येन शाब्दबोधं प्रति प्रत्यक्षसामग्री प्रतिबन्धिका भवति यत्र भिन्नविषया भवति तत्र तु शाब्दसामग्र्या एव प्राबल्यं भवतीति तादृशसमभिव्याहारज्ञानघटितसामग्र्याः= 'नीलो घटः' इत्यादिप्रथमान्तनीलपदप्रथमान्तघटपदसमभिव्याहारज्ञानघटितसामग्र्या भिन्नयोग्यताज्ञानघटितत्वेन सिद्धान्ते संसर्गविषयकयोग्यताज्ञानघटितत्वेन तथाऽभेदे शक्तिभ्रमे लक्षणाग्रहे वाऽभेदप्रकारताविषयकयोग्यताज्ञानघटितत्वेन द्वैविध्यं जातमिति भिन्नविषयकप्रत्यक्षं प्रति तादृशद्विविधशाब्दबोधसामग्र्याः प्रतिबन्ध[illegible]कल्पनीयमित्यपि संसर्गतामते गौरवम् । प्रकारतामते तु सर्वत्राभेदप्रकारक एव बोधो भवतीति एकविधयोग्यताज्ञानघटितत्वेनोक्तशाब्दसामग्र्या द्वैविध्यमेव नास्ति येन द्विविधं प्रतिबन्धकत्वं स्यादिति न गौरवमित्याशङ्क्य परिहरति– न चेति । परिहारहेतुमाह– संसर्गतेति, उक्तस्थले=शक्तिभ्रमस्थले लक्षणाग्रहस्थलेपि चोपस्थितस्याभेदस्य संसर्गतयैव भानं भवतीति स्वीकाराद् हेतुताद्वयस्य प्रतिबन्धकताद्वयस्य च न कल्पनापत्तिरिति न गौरवम् । अयं भावः यथाऽननुभूतस्य स्मरणं न भवतीति नियमसत्त्वेप्यनुभूतस्य स्मरणं भवत्येवेति नियमो नास्ति तथा केनचित्पदेन वृत्त्याऽनुपस्थितस्य प्रकारत्वं न भवतीति नियमसत्त्वेप्युपस्थितस्य प्रकारत्वं भवत्येवेति नियमो नास्ति तथा च शक्तिभ्रमे लक्षणाग्रहे च विशेषणविभक्त्या वृत्त्योपस्थितस्याप्यऽभेदस्य संसर्गत्वमेव स्वीक्रियते न प्रकारत्वं येन गौरवं स्यात् ।

'स्तोकं पचति' 'मृदु पचति' इत्यादौ विरुद्धविभक्त्यऽवरुद्धपदोपस्थापितस्यापि स्तोकमृद्वादेर्धात्वर्थपाकादावऽभेदान्वयो व्युत्पत्तिसिद्धः तदनुरोधेन च द्वितीयान्तपदधातुपदयोः समभिव्याहारस्याप्यभेदान्वयबोधौपयिकाऽऽकाङ्क्षात्वमुपगम्यते. क्रियाविशेषणस्थले च न द्वितीयातिरिक्तविभक्तिरुत्पद्यते "क्रियाविशेषणानां क्लीबत्वं कर्मत्वं च" इत्यनुशासनेन तत्र कर्मत्वातिदेशात् ।

न चैवम्– 'स्तोकः पाकः' इत्यादावपि द्वितीयाप्रसङ्गः– तत्रापि स्तोकादेः क्रियायामेव विशेषणत्वात्. भावकृतां प्रयोगसाधुत्वमात्रार्थकतया

---

'नीलो घटः' इत्यादावऽभेदान्वयबोधौपयिकाकाङ्क्षास्वरूपमुक्त्वा संप्रति 'स्तोकं पचति' इत्यादावभेदान्वयबोधौपयिकाकाङ्क्षां निर्वक्ति– स्तोकमित्यादिना । यद्यपि 'नीलो घटः' इत्यादौ सुबन्तप्रयोगे तु विशेष्यविशेषणवाचकपदयोर्विरुद्धविभक्त्यन्तत्वे ह्यऽभेदान्वयबोधो न भवति तथापि 'स्तोकं पचति' इत्यादौ तिङन्तप्रयोगे तु विशेष्यविशेषणवाचकपदयोर्विरुद्धविभक्त्यन्तत्वेऽप्यभेदान्वयबोधो भवतीति पचतीतितिङ्विभक्त्यपेक्षया विरुद्धविभक्त्या द्वितीययाऽवरुद्धेन स्तोकमितिपदेनोपस्थापितस्यापि स्तोकपदार्थस्य धात्वर्थीभूतपाकादावऽभेदेनान्वयो भवति– स्तोकाभिन्नः पाक इति, अभेदसंबन्धावच्छिन्नस्तोकत्वावच्छिन्नप्रकारतानिरूपितपाकत्वावच्छिन्नविशेष्यताकः शाब्दबोधः । तथा च यथा 'नीलो घटः' इत्यत्राभेदान्वये प्रथमान्तघटपदप्रथमान्तनीलपदयोः समभिव्याहारस्याकाङ्क्षात्वं, तथा 'स्तोकं पचति' इत्यत्र द्वितीयान्तविशेषणवाचकस्तोकादिपदधातुपदयोः समभिव्याहारस्याकाङ्क्षात्वं ज्ञेयम् । ननु क्रियाजन्यफलाश्रयत्वमेव कर्मत्वम्, एतादृशकर्मवाचकपदादेव द्वितीया भवति. अत्र च स्तोकपदार्थस्य पाकक्रियाजन्यफलाश्रयत्वमेव नास्ति धात्वर्थपाकेऽभेदेनान्वयस्वीकारादिति स्तोकपदाद् द्वितीया कथमत्रेत्याशङ्क्याह– क्रियाविशेषणेति तत्र='स्तोकं पचति' इत्यादिवाक्यघटकस्तोकपदस्यार्थे कर्मत्वातिदेशात्=कर्मत्वोपचारात्, औपचारिकं यत् कर्मत्वं तदाश्रित्य द्वितीया जायते इत्यर्थः ।

नन्वेवम् 'स्तोकः पाकः' इत्यत्रापि स्तोकपदात् द्वितीया स्यात् स्तोकपदार्थस्यात्रापि पाकेन धात्वर्थेनान्वयस्वीकारात् । ननु प्रत्ययार्थस्यात्र प्राधान्येन तत्रैव स्तोकपदार्थान्वयो भविष्यति न धात्वर्थे. क्रियाविशेषणवाचकपदाद् द्वितीया तु तत्र भवति यत्र क्रियाविशेषणस्य धात्वर्थेऽभेदान्वयः स्यादित्याशङ्क्याह– भावेति, भाववाचककृदन्तप्रत्ययानां साधुत्वमात्रार्थकत्वेन तत्र='स्तोकः पाकः' इत्यादावपि धातुनैव पाकाद्यर्थः प्रतिपाद्यते न तु प्रत्ययेन येन प्रत्ययार्थपाकादौ विशेषणस्यान्वयः स्यात् । अयं भावः– 'पाकः' इत्यत्र धातुनापि पाकक्रियैव प्रतिपाद्यते भावार्थकघञापि पाकक्रियैव प्रतिपादनीया "उक्तार्थानामप्रयोगः" इतिन्यायेनैकस्यैव पाकस्य द्विरभिधानं तु न संभवतीति धातुनैव पाकः प्रतिपाद्यते प्रत्ययस्य साधुत्वार्थकत्वमेव स्वीक्रियते, न च विनिगमनाविरहात् प्रत्ययेनैव पाकः प्रतिपाद्यते न धातुनेति वाच्यम्, अनेकभावार्थकप्रत्ययानां प्रकृतिभूतधात्वर्थक्रियायां शक्तिकल्पने गौरवात्. धातोस्त्वगत्या क्रियायां शक्तिः स्वीकार्यैवेति भावार्थप्रत्ययस्थलेऽपि

धातुनैव तत्र पाकादिप्रतिपादनादितिवाच्यम्, क्रियापदस्य तत्र सार्थकप्रत्ययान्तधातूपस्थाप्यार्थपरत्वात्। 'स्तोकं स्थीयते' इत्यादावाऽऽख्यातस्यापि वर्तमानत्वार्थकतया सार्थकत्वात् । न च वर्तमानत्वाद्यविवक्षायां द्वितीयानुपपत्तिरितिवाच्यम्, वर्तमानत्वादिविवक्षास्थल इवाऽर्थबोधप्रयोजकाकाङ्क्षाशालित्वेनैव तदऽविवक्षास्थलेपि भावाख्यातस्यार्थवत्त्वात् ।

केचित्तु- धातोरिव घञन्तस्यापि पाकादौ शक्तिरुपेयते, अन्यथा सुब्विभक्त्यर्थसंख्याकर्मत्वादीनां तत्र पाकादावन्वयानुपपत्तेः- "प्रकृत्यर्थान्वितस्वार्थ-

---

धातोरेव पाकादिक्रियाबोधकत्वं युक्तं न प्रत्ययस्येति 'स्तोकः पाकः' इत्यत्रापि स्तोकपदार्थस्य धात्वर्थे एवाभेदान्वयात् स्तोकपदाद् द्वितीया स्यादेवेत्याशङ्क्याह- न चैवमिति । परिहारहेतुमाह- क्रियापदस्येति । तत्र=" क्रियाविशेषणानां क्लीबत्वं कर्मत्वं च " इत्यनुशासने क्रियापदस्य सार्थकप्रत्ययान्तधातूपस्थाप्यक्रियापरत्वादत्र च घञः साधुत्वमात्रार्थकत्वेन सार्थकत्वाभावात् तदन्तधातूपस्थाप्यपाकक्रियायां स्तोकपदार्थस्य विशेषणत्वेपि न स्तोकपदाद् द्वितीया भवति 'स्तोकं पचति' इत्यादौ तु तिप्प्रत्ययस्य सार्थकत्वेन तदन्तधातूपस्थाप्यपाकक्रियायां स्तोकपदार्थस्य विशेषणत्वेन स्तोकपदाद् द्वितीया भवतीत्यर्थः । ननु यदि भावार्थकप्रत्ययानां न सार्थत्वं तदा 'स्तोकं स्थीयते' इत्यत्राऽऽख्यातप्रत्ययस्यापि भावार्थकत्वेन सार्थत्वं न स्यादिति स्तोकपदात् कथं द्वितीया प्राप्तेत्याशङ्क्याह- स्तोकमिति, 'स्तोकं स्थीयते' इत्यादावप्याख्यातप्रत्ययस्य वर्तमानकालबोधकत्वेन सार्थकत्वमस्त्येवेति न द्वितीयाऽनुपपत्तिरित्यर्थः । ननु यत्र कालविवक्षा न भवति तत्रापि भावाख्यातप्रत्ययो भवतीति वर्तमानकालाविवक्षायाम् 'स्तोकं स्थीयते' इत्यादौ भावाख्यातस्य सार्थकत्वं न संभवतीति द्वितीयापि न स्यादित्याशङ्क्याह- न चेति । परिहारहेतुमाह- वर्तमानत्वादीति, तिङ्भावाख्यातप्रत्यये वर्तमानत्वबोधनस्य स्वरूपयोग्यतात्वस्त्येव- विवक्षायां सत्यां वर्तमानत्वविषयकबोधोदयादिति तादृशस्वरूपयोग्यतामादायैव सार्थकत्वोपपत्तेरित्यर्थः । तत्=वर्तमानत्वादि । एवं च 'अर्थबोधानुकूलाकाङ्क्षापर्याप्त्यधिकरणीभूतप्रत्ययप्रकृतिभूतधातुवाच्यक्रियानिष्ठविशेष्यतानिरूपिताऽभेदसंबन्धावच्छिन्नकर्मत्वप्रयोजकपदाद् द्वितीया भवति' इति नियमः प्राप्तस्तथा च 'स्तोकं पचति' 'स्तोकं स्थीयते' इत्यादौ तिप्प्रत्ययस्य सार्थकत्वेनार्थबोधानुकूलाकाङ्क्षापर्याप्त्यधिकरणत्वात् तत्प्रकृतिभूतधातुवाच्यपाकक्रियानिष्ठविशेष्यतानिरूपिताभेदसंबन्धावच्छिन्नकर्मत्वस्य प्रयोजकं स्तोकपदमिति स्तोकपदादत्र द्वितीया प्राप्ता ।'स्तोकः पाकः' इत्यत्र च घञ्प्रत्ययस्य सार्थकत्वाभावान्न स्तोकपदाद् द्वितीया संभवति ।

भावार्थकप्रत्ययानां यत्प्रयोगसाधुत्वमात्रार्थकत्वमुपगम्यानर्थकत्वमुक्तं तत्र कस्यचिन्मुखेन प्रत्यवतिष्ठते- केचिदित्यादिना, ( ३८ ) वदन्तीतिपर्यन्तम् । यथा धातोः पाकादौ शक्तिस्तथा 'पाकः' इत्यत्र घञन्तस्यापि पाके शक्तिः स्वीकार्यैव । विपक्षे बाधकमाह- अन्यथेति, यदि घञन्तपाकपदस्य पाके शक्तिर्न स्यात्तदा तत्र='पाकः' इति घञन्तप्रयोगे पाकादौ सुब्विभ-

बोधकत्वं प्रत्ययानाम् " इति व्युत्पत्तेः, धातूनां च सुब्विभक्त्यऽप्रकृतित्वात् । प्रकृत्येकदेशार्थेऽपि प्रत्ययार्थान्वयोपगमे ? ' पचन्तं पश्यति ' इत्यादितः 'पचमानं पश्यति' इत्यादितश्च पाकादौ द्वितीयाद्यर्थकर्मत्वाद्यन्वयबोधप्रसङ्गात् ।

एकविशेषणत्वेनोपस्थितस्यान्यत्रविशेषणत्वेनान्वयस्याव्युत्पन्नतया तत्र प्रत्ययार्थविशेषणपाकादेर्न कर्मत्वे विशेषणतयाऽन्वय इति चेत् ?, तथापि पाकादिविशेषणतया सुबर्थसंख्याया अन्वयसंभवात् यत्र पाककर्त्रादेर्द्वित्वादिकं बाधितं पाका-

---

त्यर्थभूतसंख्याकर्मत्वादीनामन्वयो न स्यात् । अत्र हेतुमाह— प्रकृत्यर्थेति— प्रत्ययानां स्वप्रकृत्यर्थविशिष्टस्वार्थबोधकत्वमस्ति " प्रकृतिप्रत्ययौ सहार्थं ब्रूतः " इतियावद् यथा ' घटं कुरु ' इत्यत्र द्वितीयायाः स्वप्रकृत्यर्थघटविशिष्टकर्मत्वबोधकत्वमस्ति न तु घटाऽनन्वितकर्मत्वबोधकत्वमित्यर्थः, तथा च यदि घञन्तपाकपदस्य पाके शक्तिर्न स्यात् किं तु घञः साधुत्वमात्रार्थकत्वं स्यात् केवलस्य धातोरेव पाके शक्तिः स्यात्तदा सुब्विभक्त्यर्थसंख्याकर्मत्वादीनां पाकेनान्वयो न स्याद् यतः प्रत्ययानां स्वप्रकृत्यर्थान्वितस्वार्थबोधकत्वनियमोऽस्तीति सुप्प्रत्ययेनापि स्वप्रकृत्यर्थान्वितानामेव स्वार्थभूतसंख्याकर्मत्वादीनां बोधनं कर्तव्यं प्रकृतित्वं चाव्यवधानेन पूर्ववर्तित्वं न च पचादिधातूनां सुब्विभक्तिप्रकृतित्वमस्ति घञादिना व्यवधानात् यस्य च घञः सुब्विभक्तिप्रकृतित्वं तस्यानर्थकत्वाश्रयणादित्यर्थः । ननु प्रत्यायानामनुभवबलात् प्रकृतितदेकदेशार्थान्यतरान्वितस्वार्थबोधकत्वं कल्पयामस्तथा च ' पाकः ' इत्यत्र सुब्विभक्तिप्रकृत्येकदेशार्थभूतेऽपि धात्वर्थे पाके संख्याकर्मत्वादीनामन्वयो भविष्यतीत्याशङ्कयाह— प्रकृत्येकदेशार्थेऽपीति, एवं हि ' पचन्तं पश्यति ' इत्यत्रापि विवक्षासत्त्वे प्रकृत्येकदेशार्थे पाके द्वितीयार्थकर्मत्वस्यान्वयः स्यान्न तु प्रत्ययार्थे पाककर्तरीति पाककर्मकमेव दर्शनं स्यान्न तु पाककर्तृकर्मकम्. न चैतदिष्टमिति न प्रकृत्येकदेशार्थे प्रत्ययार्थान्वयो भवति तथा च पाक इत्यत्रापि धात्वर्थपाके कर्मत्वाद्यन्वयोऽनुपपन्न इति तदन्वयार्थं घञन्तस्य विशिष्टस्य पाके शक्तिः स्वीकार्या तथा च 'पाकः' इत्यत्र घञन्तपाकपदस्य सुब्विभक्तिप्रकृतित्वेन तदर्थीभूतपाके सुब्विभक्त्यर्थसंख्याकर्मत्वादीनामन्वये न कोऽपि विरोधः ।

ननु 'पचन्तं पश्यति' इत्यादौ शतृप्रत्ययार्थे कर्तरि पाकस्य विशेषणत्वेनान्वयो जातोऽस्ति एकत्र विशेषणत्वेनोपस्थितस्य चान्यत्र विशेषणत्वेनान्वयो नैव भवतीति पाकस्य कथं सुब्विभक्त्यर्थकर्मत्वेऽन्वयः स्यादित्याशङ्कते—एकेति । तत्र='पचन्तं पश्यति' इत्यादिसार्थप्रत्ययान्तप्रयोगे । कर्मत्वस्य प्रत्ययार्थत्वेन प्राधान्यात् तत्र प्रकृत्यर्थपाकादीनामन्वयस्य योग्यत्वात् तत्परिहारः कृत इतिभावः । उक्तरीत्या पाकादौ कर्मत्वान्वयवारणे कृतेऽपि संख्याद्यन्वयापत्तिं प्रतिपादयति— तथापीति, प्रकृत्येकदेशार्थे प्रत्ययार्थान्वयोपगमे एकदेशार्थे पाकादौ सुबर्थसंख्याया अन्वयो भविष्यत्येव तथा च यत्रैक एव पाककर्ता पाकद्वयं करोति तत्र द्वित्वसंख्यायाः प्रकृत्ये-

देश्च तदऽबाधितं तत्र 'पचन्तौ पश्यति' 'पचमानौ पश्यति' इत्यादिप्रयोगप्रस-ङ्गस्य दुर्वारत्वात् । धातूपस्थाप्यार्थे सुबर्थान्वयबोधं प्रति तत्तद्धातूत्तरप्रत्ययधर्मिक-किंचिदर्थपरत्वज्ञानस्य प्रतिबन्धकतामुपगम्यैतादृशातिप्रसङ्गवारणे च गौरवात् ।

एवम्– 'शोभनं पचनम्' इत्यादौ धातुमात्रेण पाकाद्युपस्थितौ च तत्र शोभ-नाद्यभेदान्वयबोधानुपपत्तिः– विशेषणविभक्तिसजातीयविभक्तिप्रकृत्यनुपस्था-प्यत्वात् ।

---

कदेशार्थे पाकेऽन्वयसंभवात् 'पचन्तौ पश्यति' इत्यादिप्रयोगः स्यादेव । न चैवं भवति किं तु यत्र द्वौ पाककर्तारौ भवतस्तत्रैव 'पचन्तौ पश्यति' इति प्रयोगो भवति तस्मात् प्रकृत्येकदेशार्थे प्रत्ययार्थान्वयो न भवतीति घञन्तस्य विशिष्टस्य पाकादौ शक्तिरुपेया तथा च घञन्तस्य विभक्तिप्रकृतित्वेन विशिष्टार्थभूते पाके सुब्विभक्त्यर्थसंख्याकर्मत्वादीनामन्वयः संभवत्येव । ननु प्रत्ययार्थनिष्ठप्रकारतानिरूपितधात्वर्थनिष्ठविशेष्यतासंबन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति तत्तद्धातू-त्तरप्रत्ययधर्मिककिंचिदर्थपरत्वज्ञानं प्रतिबन्धकमित्येवं प्रतिबध्यप्रतिबन्धकभावं कल्पयिष्या-मस्तथा च 'पचन्तं पश्यति' 'पचन्तौ पश्यति' इत्यादौ पच्धातूत्तरवर्तमानस्य शतृप्रत्ययस्य कर्तरि शक्तत्वेन तदर्थकतया शतृप्रत्ययस्य कर्तृत्वरूपार्थपरत्वज्ञानमेव प्रत्ययार्थसंख्यादीनां धात्व-र्थपाकादौ विशेषणतयान्वयबोधे प्रतिबन्धकं भविष्यतीति नात्र प्रकृत्येकदेशार्थपाकादौ प्रत्यया-र्थसंख्यादीनामन्वयापत्तिर्दोषः 'पाकः' इत्यादि भावार्थकृत्प्रत्ययस्थले तु भावार्थकृत्प्रत्ययानां साधुत्वमात्रार्थकत्वेन निरर्थकत्वाश्रयणात् किंचिदर्थपरत्वज्ञानमेव न जायते इति प्रतिबन्धकाभावात् प्रत्ययार्थसंख्याकर्मत्वादीनां धात्वर्थपाकादौ विशेषणतयाऽन्वयबोधे न काचिदनुपपत्तिरिति कृतं घञन्तस्य पाकादौ शक्तिस्वीकारेणेत्याशङ्क्याह– धातूपस्थाप्येति, एवं नवीनप्रतिबध्यप्रतिबन्ध-कभावकल्पनरूपमेव गौरवं भविष्यति तस्माद् घञन्तस्य पाकादौ शक्तिः स्वीकार्या । प्रत्ययार्थानां प्रकृत्येकदेशार्थान्वयश्च न स्वीकार्य इत्यर्थः ।

यथा 'पाकः' इत्यत्र घञन्तस्य पाके शक्तिः स्वीकार्या तथा 'पचनम्' इत्यत्रापि ल्युडन्तस्यैव पाके शक्तिः स्वीकार्या न तु धातुमात्रस्येत्याह– एवमिति, यदि ल्युडन्तस्य पाके शक्तिर्न स्वीक्रियेत किं तु धातुमात्रेण पाकोपस्थितिः स्यात्तदा यथा 'पाकः' इत्यत्र धातुमात्रेणोपस्थि-तपाके संख्याकर्मत्वाद्यन्वयस्यानुपपत्तिरस्ति तथात्रापि धातुमात्रोपस्थितपाके अभेदसंबन्धेन शो-भनपदार्थान्वयो न स्यादेवेत्यर्थः । उक्ते हेतुमाह– विशेषणेति, विशेष्यविशेषणयोरभेदसंबन्धेन शाब्दबोधं प्रति सजातीयविभक्तिप्रकृत्युपस्थाप्यत्वं हेतुरस्ति तथा च विशेष्यस्य विशेषणविभक्तिस-जातीयविभक्तिप्रकृत्युपस्थाप्यत्वमपेक्ष्यते अत्र च पाकपदार्थस्य न विभक्तिप्रकृत्युपस्थाप्यत्वम् 'पचनम्' इत्यत्र पचनेतिल्युडन्तस्यैव विभक्तिप्रकृतित्वेन पाकोपस्थापकस्य धातुमात्रस्य विभ-क्त्यऽप्रकृतित्वात् ल्युटा व्यवधानात् विभक्त्यप्रकृतिभूतपच्धातुना पाकस्योपस्थापितत्वादित्यर्थः ।

प्रकृत्येकदेशसाधारणतादृशविभक्तिप्रकृतित्वस्य प्रयोजकत्वे ? तत्र ल्युडादेरधिकरणपरत्वेपि तथाविधान्वयबोधापत्तेः । कस्यचित् प्रतिबन्धकतां कल्पयित्वा तद्वारणे च गौरवात् ।

न चैवम्—उपकुम्भार्धपिप्पल्यादिरूपपूर्वपदार्थप्रधानसमासपदात् कुम्भसमीपपिप्पल्यर्धादौ विभक्त्यर्थान्वयस्य प्रातिपदिकान्तरार्थाऽभेदान्वयस्य चानुपपत्तिः—पूर्वपदस्य समासोत्तरविभक्त्यऽप्रकृतित्वादिति वाच्यम्, तदनुरोधेनैव तत्र कुम्भ-

---

ननु प्रत्ययविधावुद्देश्यत्वं हि प्रकृतित्वं तच्च पचनमित्यत्र प्रत्ययभागे इव धातुभागेप्यस्त्येवेति प्रकृतितदेकदेशसाधारणं यत् तादृश=विशेषणविभक्तिसजातीयविभक्तिप्रकृतित्वं तदेव विशेष्यविशेषणयोरभेदान्वयप्रयोजकं तथा चात्र धातुभागेप्युक्तप्रकृतित्वस्य सत्त्वेन प्रकृतिभूतधातूपस्थाप्यपाके शोभनपदार्थाभेदान्वये न काचिदनुपपत्तिरित्याशङ्क्याह— प्रकृत्येकेति । अत्र दोषमाह— तत्रेति । तत्र='शोभनं पचनम्' इत्यत्र यद्यऽधिकरणार्थकं ल्युट् स्यात्तदापि तथाविधान्वयः=पाकेन शोभनपदार्थाभेदान्वयः स्यात् न त्वधिकरणेनेत्यर्थः, इष्टं च तदाधिकरणेनैव शोभनपदार्थान्वय इति ल्युडन्तस्यैव पाके शक्तिः स्वीकार्या तथा चाधिकरणार्थकल्युट्स्थले ल्युडन्तस्याधिकरणे एव शक्तिस्वीकारादऽधिकरणेनैव शोभनपदार्थान्वयो भविष्यति न पाकादौ । नन्वत्रापि पूर्ववत् 'पदान्तरार्थनिष्ठप्रकारतानिरूपितधात्वर्थनिष्ठविशेष्यतासंबन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रतितत्तद्धातूत्तरप्रत्ययधर्मिककिंचिदर्थपरत्वज्ञानस्य प्रतिबन्धकत्वं कल्पयिष्यामस्तथा चाधिकरणल्युट्स्थले ल्युटोऽधिकरणार्थपरत्वज्ञानं शोभनपदार्थस्य धात्वर्थपाकादावभेदान्वये प्रतिबन्धकं भविष्यति, भावार्थल्युट्स्थले तु भावकर्तां निरर्थकत्वाश्रयणेन धातूत्तरवर्तिल्युटोऽर्थपरत्वज्ञानस्य प्रतिबन्धकस्याभावात् शोभनपदार्थस्य धात्वर्थपाकेनाभेदान्वये न काचिदनुपपत्तिरित्याशङ्क्याह— कस्यचिदिति । एवं हि नवीनप्रतिबध्यप्रतिबन्धकभावकल्पनरूपमेव गौरवं प्राप्तमित्यर्थः । तथा च पचनमितिल्युडन्तस्यैव पाके शक्तिः स्वीकार्या ।

ननु एवम्=प्रत्ययानां स्वप्रकृत्यर्थविशिष्टस्वार्थबोधकत्वनियमे तथा स्वाव्यवहितपूर्ववर्तित्वमेव प्रकृतित्वमिति स्वीकारे च 'उपकुम्भम्' 'अर्धपिप्पली' इत्यादिपूर्वपदार्थप्रधानसमासप्रयोगे पूर्वपदार्थेन समीपार्धादिना विभक्त्यर्थकर्मत्वादीनां तथा 'सुन्दरमुपकुम्भम्' इत्यादौ पूर्वपदार्थेन प्रातिपदिकान्तरार्थस्य सुन्दरादेरभेदसंबन्धेनान्वयो न स्यात्, अत्र हेतुमाह—पूर्वपदस्येति, पूर्वपदस्य=उपपदस्याऽर्धपदस्य च समासोत्तरविभक्तिप्रकृतित्वं नास्ति कुम्भादिपदेन व्यवधानात्, प्रकृतित्वं चाव्यवहितपूर्ववर्तिन एव, प्रत्ययेन च स्वार्थकर्मत्वादीनां स्वप्रकृत्यर्थेनैव वैशिष्ट्यं बोधनीयमिति पूर्वपदार्थे प्रत्ययार्थान्वयानुपपत्तिः, "पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेन" इतिनियमेन च सुन्दरपदार्थस्य पूर्वपदार्थेप्यऽन्वयो न संभवति— तस्य पदार्थैकदेशत्वादिति' उपकुम्भम्' इत्यादौ तु विशिष्टस्यैव समासस्य कुम्भसमीपादौ शक्तिः स्वीकार्या तथा च कुम्भसमीपस्य पदार्थत्वेन तत्राभेदेन पदार्थान्तरस्य सुन्दरपदार्थस्यान्वये नानुपपत्तिः, तथा

पिप्पल्यादिपदानामेव कुम्भसमीपपिप्पल्यर्धादौ लक्षणायाः पूर्वपदस्य तात्पर्यग्रहमात्रोपयोगितायाश्च स्वीकारात् ।

वस्तुतस्तु— तत्रोत्तरपदार्थविशेषितपूर्वपदार्थसमीपाद्यर्धादौ प्रत्ययार्थान्वयबोधे तादृशसमस्तपदप्रत्ययपदयोरऽव्यवहितपूर्वापरीभावोप्याकाङ्क्षा । एवं तत्र प्रातिपदिकान्तरार्थाऽभेदान्वयबोधे समानविभक्तिकयोस्तादृशसमस्तपदपदान्तरयोश्च समभिव्याहारोप्याकाङ्क्षा तथा सत्यातिप्रसङ्गविरहात् ।

---

प्रत्ययार्थान्वयेपि नानुपपत्तिः— उपकुम्भपदस्य विशिष्टस्य विभक्तिप्रकृतित्वाद् विशिष्टस्यैव कुम्भसमीपार्थोपस्थापकत्वादित्याशङ्क्याह— न चैवमिति । परिहारहेतुमाह— तदनुरोधेनेति, उक्तदोषप्राप्त्यनुरोधेनैव तत्र=' उपकुम्भम् ' इत्यादौ कुम्भपदस्य कुम्भसमीपे लक्षणा उपेतिपूर्वपदं तात्पर्यग्राहकमिति स्वीक्रियते, तथा चात्र कुम्भपदस्य विभक्तिप्रकृतित्वमस्त्येवाव्यवधानेन पूर्ववर्तित्वात् कुम्भसमीपोपि तदर्थ एवेति तत्र प्रत्ययार्थान्वये न काप्यनुपपत्तिरिति कृतं समासे=समस्तस्य विशिष्टस्य शक्तिस्वीकारेणेत्यर्थः । एवम् ' अर्धपिप्पली ' इत्यत्रापि । इदानीं कुम्भसमीपार्थस्य पदार्थत्वमेव न तु पदार्थैकदेशत्वमिति तत्र सुन्दरादिपदार्थान्तरान्वयेप्यनुपपत्तिर्नास्तीत्यर्थः ।

शाब्दबोधौपयिकाकाङ्क्षासत्त्वे शाब्दबोधानुपपत्तिर्न भवतीति 'उपकुम्भम्' इत्यादौ प्रत्ययार्थस्य पदार्थान्तरस्य चान्वयबोधौपयिकाकाङ्क्षास्वरूपमाह— वस्तुत इत्यादिना । उत्तरपदार्थेन कुम्भादिना विशिष्टो यः पूर्वपदार्थः समीपादिस्तत्र प्रत्ययार्थान्वयबोधे तादृश=' उपकुम्भम् ' इत्यादिसमस्तपदप्रत्ययपदयोश्च यः पूर्वापरीभावः स एवाकाङ्क्षा, तस्य चात्र सत्त्वेन पूर्वपदार्थे प्रत्ययार्थान्वये न काप्यनुपपत्तिः, तथा चात्र ' प्रत्ययार्थनिष्ठप्रकारतानिरूपितपूर्वपदार्थनिष्ठविशेष्यतासंबन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति विभक्त्यव्यवहितपूर्ववर्तिकुम्भपदाव्यवहितपूर्ववर्त्युपपदज्ञानं कारणम् ( आकाङ्क्षा ) ' इति वक्तव्यम् । पदार्थान्तरान्वयप्रकारमाह— एवमिति । तत्र=पूर्वपदार्थे । अत्र च ' अभेदसंबन्धावच्छिन्नसुन्दरत्वाद्यवच्छिन्नप्रकारतानिरूपितसमस्तोपकुम्भादिपदार्थनिष्ठविशेष्यतासंबन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति समानविभक्तिकयोः सुन्दरादिपदोपकुम्भादिपदयोः समभिव्याहार आकाङ्क्षा ' इत्येवमाकाङ्क्षास्वरूपं वक्तव्यम् । समानविभक्तिकयोस्तादृशसमस्तपदपदान्तरयोः=' सुन्दरमुपकुम्भम् ' इत्यनयोः । तथासति=उक्तस्वरूपाकाङ्क्षयोर्नियामकत्वस्वीकारे सति, अतिप्रसङ्गस्य=पूर्वपदार्थे प्रत्ययार्थान्वयस्य पदान्तरार्थान्वयस्यानुपपत्तेरभावात् । किं चाऽतिप्रसङ्गस्य नाम विशिष्टे समासे शक्तिस्वीकाररूपातिप्रसङ्गस्याभावादित्यर्थः ।

ननु यथा त्वया ' उपकुम्भम् ' इत्यादौ विशिष्टे समासे शक्तिमस्वीकृत्योक्ताकाङ्क्षास्वरूपं च परिकल्प्य तेन पूर्वपदार्थे प्रत्ययार्थस्य पदान्तरार्थस्य चान्वय उपपादितस्तथा ' पाकः ' इत्यादा-

धात्वर्थपाकादौ प्रत्ययार्थान्वयबोधे प्रातिपदिकान्तरार्थाऽभेदान्वयबोधे च ल्युड्घञाद्यन्तसमुदायप्रत्यययोरानुपूर्वीरूपाऽव्यवहितपूर्वापरीभावस्य समानविभक्तिकयोस्तादृशसमुदायपदपदान्तरयोः समभिव्याहारस्य चाकाङ्क्षत्वोपगमे ? दर्शिताधिकरणार्थकल्युट्प्रत्ययस्थलीयातिप्रसङ्गस्य दुरुद्धरतया न तत्संभवः ।

अथ घञन्तसमुदायस्य पाकाद्यर्थकत्वे घञन्तसमुदायस्य संयोगविभागत्वादिविशिष्टाऽवाचकत्वं व्युत्पाद्य संयोगविभागादिपदानां नैमित्तिकसंज्ञात्वनिराक-

---

बपि भावार्थकृदन्तस्थले विशिष्टे घञन्ते शक्तिर्न स्वीकार्या किं तु घञो निरर्थकत्वमाश्रित्य धातोरेव पाकादौ शक्तिः स्वीकार्या तत्र च धात्वर्थपाकादौ प्रत्ययार्थान्वयबोधे ल्युड्घञाद्यन्तसमुदायस्य 'पाकः पचनम्' इत्यस्य प्रत्ययस्य च=विभक्तेर्यः पूर्वापरीभावः स एवाकाङ्क्षा, पदार्थान्तरान्वयबोधे च समानविभक्तिकयोस्तादृशसमुदायपदपदान्तरयोः='शोभनः पाकः' 'शोभनं पचनम्' इत्याद्योः समभिव्याहार एवाकाङ्क्षा, उक्तप्रयोगेषु चैतादृशाकाङ्क्षयोः सत्त्वेन धात्वर्थपाकादौ प्रत्ययार्थान्वयस्य पदार्थान्तरान्वयस्य च न काप्यनुपपत्तिरिति कृतं घञाद्यन्तस्य पाकादौ शक्तिस्वीकारेण तथा च– 'प्रत्ययार्थनिष्ठप्रकारतानिरूपितधात्वर्थपाकादिनिष्ठविशेष्यतासंबन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति ल्युड्घञाद्यन्तसमुदायस्य विभक्त्यव्यवहितपूर्ववर्तित्वज्ञानमाकाङ्क्षारूपं कारणम्' 'अभेदसंबन्धावच्छिन्नपदार्थान्तरत्वा( सुन्दरत्वा )वच्छिन्नप्रकारतानिरूपितधात्वर्थपाकादिनिष्ठविशेष्यतासंबन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति ल्युड्घञाद्यन्तसमुदायस्य पाक इत्यादेर्विशेषणवाचकसुन्दरादिपदस्य च समानविभक्तिकत्वज्ञानमाकाङ्क्षास्वरूपं कारणम्' इतिवक्तव्यमित्याशङ्क्याह– धात्वर्थेति । उक्ते दोषमाह– दर्शितेति, उक्तस्य पूर्वापरीभावस्य समभिव्याहारस्य च धात्वर्थपाकादौ प्रत्ययार्थान्वयबोधे पदार्थान्तरान्वयबोधे चाकाङ्क्षात्वोपगमे हि यत्राधिकरणार्थको ल्युट् भवेत्तत्राप्युक्ताकाङ्क्षास्वरूपसत्त्वेन प्रत्ययार्थस्य पदार्थान्तरस्य च धात्वर्थपाकादावेवान्वयापत्तिः स्यान्न तु प्रत्ययार्थे पाकाधिकरणे. इष्टश्च तत्र पाकाधिकरणे एवान्वय इति न तत्संभवः='पाकः' इत्यादौ उक्तस्य पूर्वापरीभावस्य समभिव्याहारस्य चाऽऽकाङ्क्षात्वसंभवः । तथा च 'पाकः' इत्यादौ तु घञाद्यन्तस्यैव पाकादौ शक्तिस्वीकारेणाऽधिकरणार्थकल्युट्स्थले पाकाधिकरणे प्रत्ययार्थादीनामन्वये न काप्यनुपपत्तिः । 'उपकुम्भम्' इत्यत्र च कुम्भपदस्यैव कुम्भसमीपे लक्षणास्वीकारेण तत्र प्रत्ययार्थादीनामन्वये न काप्यनुपपत्तिरित्यर्थः ।

'पाकः' इत्यादौ घञन्तस्यैव पाकादौ शक्तिस्वीकारे दीधितिग्रन्थविरोधं प्रदर्शयति– अथेति, दीधितिकारेण हि घञन्तस्य संयोगपदस्य विभागपदस्य च संयोगत्वविभागत्वविशिष्टवाचकत्वं नास्तीति व्युत्पाद्य संयोगविभागादिपदानां नैमित्तिकसंज्ञात्वं निराकृतम्, डित्थकपित्थाद्या संज्ञा यदृच्छासंज्ञा, घटपटाद्या संज्ञा नैमित्तिकसंज्ञास्ति घटत्वपटत्वादिकं प्रवृत्तिनिमित्तं कृत्वा प्रवृत्तत्वात्, एवं यदि घञन्तसंयोगविभागादिपदानामपि संयोगत्वविभागत्वाद्यवच्छिन्ने शक्तिः स्यात्तदा संयोगत्वविभागत्वादिकं प्रवृत्तिनिमित्तं कृत्वा प्रवृत्तत्वाद्

रणं दीधितिकृतां विरुद्धमितिचेत् ?, का क्षतिः— न हि कस्यचिद् ग्रन्थकृतो विपरीतलेखनं युक्तिबलाद्वस्तुसिद्धौ बाधकम् ।

एवं च यत्र धातुमात्रस्यैव पाकादौ तात्पर्यं तत्र तद्विशेषणवाचकपदाद् द्वितीयैव । यत्र तु कृदन्तसमुदायस्य पाकादौ तात्पर्यं तत्र तादृशपदं तथाविधकृदन्तसमुदायसमानविभक्तिकमेव । तदुक्तं कातन्त्रपरिशिष्टकृता— " कथं स्तोकः पाकः ? कृदन्तविशेषणत्वात् ", धात्वर्थैकाधिकरण्ये तु ' स्तोकमोदनस्य पाकः ' इति स्यादेवेति वदन्ति ।

---

नैमित्तिकसंज्ञात्वं स्यात् न च संयोगविभागादिपदानां संयोगविभागत्वाद्यवच्छिन्ने शक्तिरस्ति, अन्यथा— ' संयुनक्ति संयुज्यते विभजते ' इत्यादौ : संयोगविभागपदयोरभावेन संयोगविभागरूपार्थयोरुपस्थितिर्न स्यात् भवति चात्रापि संयोगविभागरूपार्थोपस्थितिरिति ' संयुनक्ति संयोगः विभजते विभागः ' इत्यादौ सर्वत्रानुगतस्य धातोरेव :लाघवात् : संयोगविभागादौ शक्तिः स्वीकार्या न घञन्तसंयोगविभागपदयोरिति घञः साधुत्वमात्रार्थकत्वेन निरर्थकत्वमेवेति दीधितिकारस्यैतद्ग्रन्थस्य चाभिप्रायस्तथा च घञन्तस्य पाकादौ शक्तिस्वीकारे उक्ताभिप्रायकदीधितिग्रन्थस्य विरोधः स्यात् संयोगादिपदानां पाकादिपदतुल्यत्वादित्यर्थः । उक्तविरोधे स्वक्षत्यभावमाह— केति । हेतुमाह— न हीति । युक्तिबलादितिपदस्य वस्तुसिद्धौ इतिपदेनान्वयः, मया हि युक्तिबलेन घञन्तसमुदायस्यैव पाकादौ शक्तिः स्वीकार्येति साधितमिति तत्र दीधितिकारस्य संयोगादिपदानां नैमित्तिकसंज्ञात्वनिराकरणं बाधकं भवितुं नार्हतीत्यर्थः । एवं संयोगादिपदेष्वपि घञन्तस्यैव संयोगाद्यर्थे शक्तिः स्वीकार्या । धातोरेव पाकादौ शक्तिर्न घञाद्यन्तस्येति स्वीकारे ह्यऽविकरणल्युट्स्थले विशेषणीभूतशोभनादिपदार्थस्य पाके एवान्वयः स्यान्नाधिकरणे इति दोषः पूर्वमुक्तः स्मरणीयः ।

ननु यदि घञन्तसमुदायस्यैव पाकादौ शक्तिस्तदा विशेषणवाचकस्तोकादिपदात् विशेष्यवाचकपदोत्तरविभक्तिसजातीयविभक्तिप्राप्तिप्रसङ्गेन द्वितीयानुपपत्त्या ' स्तोकं पाकः ' इति नैव स्याद् भवति चेत्याशङ्क्य क द्वितीया भवति क च न भवतीति निर्वक्ति— एवं चेति । ' स्तोकं पाकः ' इत्यत्र धातोरेव पाके तात्पर्यम्=पाकोपस्थापकत्वमिति तद्विशेषणवाचकपदात्=धात्वर्थविशेषणवाचकस्तोकपदाद् द्वितीया प्राप्तेत्यर्थः । यत्र च कृदन्तसमुदायस्य पाक इत्यादिपदस्य पाकोपस्थापकत्वं तत्र तादृशपदम्=विशेषणवाचकस्तोकादिपदं तथाविध=पाकाद्यर्थोपस्थापको यः कृदन्तसमुदायः ' पाकः ' इति तत्समानविभक्तिकं भवति यथा— ' स्तोकः पाकः ' इति तदाह— यत्र त्विति । अत्र प्रमाणमाह— तदुक्तमिति, स्तोकपदस्य कृदन्तपाकपदविशेषणत्वात् ' स्तोकः ' इतिप्रथमान्तप्रयोगो जात इत्यर्थः । धात्वर्थैकाधिकरण्ये=धात्वर्थसामानाधिकरण्ये=धात्वर्थीभूतपाकादिविशेषणत्वे तु ( धातुमात्रेण पाकोपस्थितौ तु ) द्वितीयापत्त्या ' स्तोकं पाकः ' इत्यपि भवत्येवेत्याह— धात्वर्थैकेति ।

तदर्थकपदोत्तरविभक्त्या संख्याबोधनेऽभेदसंसर्गावच्छिन्नप्रकारताभिन्नतदर्थ-विषयताशालिशाब्दबोधसामग्री अपेक्षिता, तादृशश्च बोधस्तदर्थविशेष्यकः तदर्थ-निरूपितभेदान्वयविषयकश्च । 'नीलौ घटौ' इत्यादौ च विशेष्यवाचकपदोत्तर-विभक्त्यैव द्वित्वादिकं प्रत्याय्यते एवं च- क्रियाविशेषणवाचकपदोत्तरविभक्त्या-ऽबाधितयोरपि द्वित्वबहुत्वयोः प्रत्यायनाऽसंभवात् तादृशपदोत्तरमौत्सर्गिकमेक-वचनमेव भावाख्यातस्थलवदित्यवधेयम् ।

"केचित्तु" इत्यारभ्य "इतिवदन्ति" इतिपर्यन्तं परमतं प्रदर्श्य यत् (पृ. १७) विशे-षणविभक्तेः साधुत्वमात्रार्थकत्वोक्त्या विशेषणवाचकपदोत्तरविभक्त्यर्थसंख्यायाः शाब्दबोधे भानं न भवतीति व्यञ्जितं तस्य वचनमात्रेण सिद्ध्यसंभवात् कार्यकारणभावमाह- तदर्थकेत्यादिना । यथा-'घटोऽस्ति' इत्यत्र तदर्थकं घटार्थकं पदम् 'घटः' इतिपदं तज्जन्यशाब्दबोधे घटे या विष-यता भासते सा अभेदसंबन्धावच्छिन्नप्रकारताभिन्नैव भासते नीलादिवद् घटस्य कचिदप्यभेद-संबन्धेन प्रकारत्वाभावादिति घटपदोत्तरविभक्त्यर्थसंख्यायाः शाब्दबोधे भानं भवति 'एको घटः' 'द्वौ घटौ' इत्यादि । 'नीलो घटः' इत्यत्र च नीले प्रकारता वर्तते साप्यभेदसंबन्धाव-च्छिन्नैव नीलस्याभेदसंबन्धेन घटे प्रकारत्वादिति 'नीलो घटः' इति वाक्यजन्यशाब्दबोधे भासमाना नीलविषयता ह्यऽभेदसंबन्धावच्छिन्नप्रकारताभिन्ना नास्तीति नीलपदोत्तरविभक्त्यर्थ-संख्यायाः शाब्दबोधे भानं न भवतीत्यर्थः । तथा च- 'किंचिदर्थनिष्ठविशेष्यतानिरूपिताभेद-संबन्धावच्छिन्नप्रकारताश्रयत्वज्ञानं तद्वाचकपदोत्तरविभक्त्यर्थसंख्याबोधे प्रतिबन्धकम्' इतिवक्त-व्यम् । बोधस्वरूपमाह- तादृशश्चेति । तादृशः=विभक्त्यर्थसंख्यावगाहनशीलः । तदर्थविशे-ष्यकः=संख्याबोधकविभक्तिप्रकृत्यर्थविशेष्यको भवति यथा- 'घटः' इत्यत्र, 'नीलो घटः' इत्यत्र च घटपदजन्यो घटविशेष्यकः । द्वितीयं बोधस्वरूपमाह- तदर्थनिरूपितेति, संख्या-बोधकविभक्तिप्रकृत्यर्थनिरूपितो यो भेदस्तदन्वयविषयक इत्यर्थः । यथा- 'राज्ञः पुरुषः' इत्यत्र यद्यपि पुरुषनिष्ठविशेष्यतानिरूपिता प्रकारतैव राज्ञि वर्तते तथापि राजनिष्ठा सा प्रकारताऽभेद-संबन्धावच्छिन्ना नास्ति भेदसंबन्धेनैव राज्ञः पुरुषविशेषणत्वादिति राजपदोत्तरङस्विभक्त्यर्थैकत्व-संख्यायाः शाब्दबोधे भानं भवत्येव यथा- 'एकराजनिरूपितस्वत्ववान् पुरुषः' इति । तथा च 'राज्ञः पुरुषः' इतिवाक्यजन्यबोधो भेदसंबन्धविषयक एव- राजपुरुषयोरभेदभानाभावात् । प्रत्युदाहरणमाह- 'नीलौ घटौ' इति, अत्र नीलनिष्ठप्रकारताया अभेदसंबन्धावच्छिन्नत्वान्नी-लपदोत्तरविभक्त्या द्वित्वं न प्रत्याय्यते किं तु घटपदोत्तरविभक्त्यैव । एवं चेति-संख्याबोधने ह्यभेदसंबन्धावच्छिन्नप्रकारताभिन्नविषयताज्ञानस्य कारणत्वस्वीकारे क्रियाविशेषणानां च स्तोका-दीनां क्रियायामभेदसंबन्धेनैव प्रकारत्वोपगमेन तन्निष्ठप्रकारताया अभेदसंबन्धावच्छिन्नत्वात् क्रिया-विशेषणवाचकस्तोकादिपदोत्तरविभक्त्यर्थसंख्यायाः शाब्दबोधे भानं नैव भवतीति तादृशपदो-त्तरम्= क्रियाविशेषणवाचकस्तोकादिपदोत्तरं साधुत्वार्थमौत्सर्गिकमेकवचनमेव 'स्तोकं स्थीयते'

अभेदान्वयबोधश्च विरूपोपस्थितयोरेवेतिव्युत्पत्तिः—'घटो घटः' 'दण्डवान् दण्डवान्' 'पाकं पचति' इत्यादौ घटत्वदण्डवत्त्वपाकत्वाद्यवच्छिन्ने तत्तद्रूपावच्छिन्नस्य तथाविधान्वयबोधानुदयात् ।

अथ तत्प्रयोजकसमानविभक्तिकत्वादेः सत्त्वात् कथं न तादृशबोधः ? । अत्राहुः—यादृशं फलं कचित् प्रसिद्ध्यति तादृशस्यैवापत्तिः संभवति कॢप्तसामग्रीबलात् । यादृशं च सर्वथैवाप्रसिद्धं तादृशस्य चाऽऽपादकाऽप्रसिद्धेरापत्तिरशक्यैवेति घटत्वाद्यवच्छिन्नविशेष्यताकाऽभेदसंसर्गकघटत्वाद्यवच्छिन्नप्रकारताकशाब्दबोधस्य कचिदप्यनुदयात् कथं तदापत्तिः ।

---

इतिभावाख्यातस्थलवत् 'स्तोकं पाकः' 'स्तोकं पचति' इत्येवं प्रयोक्तव्यमित्यर्थः । अबाधितयोरिति— यत्रैक एव कर्ता पाकद्वयं पाकत्रयं वा करोति तत्र पाके यद्यपि द्वित्वबहुत्वयोर्बाधो न भवति तथापि पाकादिक्रियाविशेषणवाचकस्तोकादिपदोत्तरद्विवचनादिविभक्त्या केनापि प्रकारेण पाकादिक्रियागतद्वित्वबहुत्वयोः प्रत्यायनं न संभवत्यनुभवविरोधादिति क्रियाविशेषणवाचकपदोत्तरमेकवचनमेव साधुत्वार्थं प्रयुज्यते ।

ननु यद्यभेदसंबन्धेनान्वये समानविभक्तिकत्वमेव प्रयोजकं तदा यथा 'नीलो घटः' इतिप्रयोगो भवति नीलघटयोश्चाभेदसंबन्धेनान्वयो भवति तथा 'घटो घटः' इत्यपि प्रयोगः स्याद् घटस्य स्वात्मन्यभेदसंबन्धेनान्वयोपि स्यात्तत्र घटस्य स्वात्मना भेदाभावाद् योग्यताप्यस्त्येवेत्याशङ्क्याह— अभेदान्वयेति । विरूपोपस्थितयोः=विरुद्धधर्माभ्यामुपस्थितयोरेवाऽभेदान्वयो भवति यथा—'नीलो घटः' इत्यत्र नीलत्वघटत्वाभ्यां विरुद्धधर्माभ्यामुपस्थितयोर्नीलघटयोः । तत्तद्रूपावच्छिन्नस्य=घटत्वाद्यवच्छिन्नस्य । तथाविधान्वयः=अभेदान्वयः । तथा च— घटत्वावच्छिन्ने घटत्वावच्छिन्नस्याभेदसंबन्धेन शाब्दबोधो न भवतीति लब्धम् । एवं दण्डवत्त्वावच्छिन्ने दण्डवत्त्वावच्छिन्नस्य पाकत्वावच्छिन्ने पाकत्वावच्छिन्नस्य चाभेदान्वयबोधाभावो विज्ञेयः । 'पाकं पचति' इत्यत्रपाकपदेनापि पाकस्य पाकत्वेनैव रूपेणोपस्थितिर्भवति पचतिपदेनापि कर्तृविशेषणतया पाकस्य योपस्थितिर्भवति सा पाकत्वेनैव रूपेण भवति पाकत्वेनोपस्थिते च पाकत्वेनोपस्थितस्याभेदान्वयबोधासंभवात् 'पाकं पचति' इति प्रयोगोपि न भवति ।

नन्वऽभेदान्वयप्रयोजकस्य समानविभक्तिकत्वादेः सत्त्वात् कथं नाऽभेदान्वयबोधः कारणसामग्रीसत्त्वे कार्यावश्यंभावादित्याशङ्कते— अथेति । तत्प्रयोजक=अभेदान्वयप्रयोजक । तादृशबोधः=अभेदान्वयबोधः । उत्तरमाह—यादृशमिति । यथा तन्तुभ्यः पटस्योत्पत्तिरूपफलं संभवतीति तन्त्वादिपटोत्पादकसामग्रीबलात् पटरूपं फलं संभवति यादृशं च शशविषाणादिकं कचिदपि न प्रसिद्धं तदापादकस्याप्यप्रसिद्धेः तस्य शशविषाणादेरापत्तिरशक्यैव तथा चाऽभेदसंबन्धावच्छिन्नघटत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताकः शाब्दबोधः कदापि कचिदपि न दृष्ट इति तदापत्तिरपि कथं स्यादित्यर्थः । अत्रापत्तिर्नाम तदभावप्रयोजकीभूताभावप्रतियोगिवि-

अथ 'घटो नीलघटः' 'दण्डवान् रक्तदण्डवान्' इत्यादौ तादृशशाब्दबोधस्य प्रसिद्धिः— विधेयकोटावधिकावगाहिनः शाब्दबोधस्य नवीनैः स्वीकारादिति-चेत् ?, तर्हि घटाद्यंशे विशेषणतावच्छेदकविधया नीलादिभाननियामकनीलाद्युपस्थितितात्पर्यज्ञानविशेषादिघटितैव सामग्री घटत्वावच्छिन्नविशेष्यकनीलघटत्वाद्यवच्छिन्नाभेदान्वयबोधप्रयोजिका, तदभावादेव 'घटो घटः' इत्यादिषु न तादृशशाब्दबोधापत्तिरिति केचित् ।

---

यया जिज्ञासा यथा दण्डाभावे घटाभावो भवतीति घटाभावप्रयोजकीभूतो यो दण्डाभावस्तत्प्रतियोगिनो दण्डस्य जिज्ञासाऽऽपत्तिः । एवमत्र घटत्वावच्छिन्नप्रकारताकघटत्वावच्छिन्नविशेष्यताकशाब्दबोधस्यासंभवाद् योऽभाव उक्तस्तत्प्रयोजकीभूताभावस्य यः प्रतियोगी तद्विषया या जिज्ञासा सैवापत्तिपदार्थः । किमभावप्रयुक्तः उक्तशाब्दबोधाभाव इति पूर्वपक्षिजिज्ञासा, सा च जिज्ञासा न संभवत्युक्तशाब्दबोधस्य सर्वथाऽप्रसिद्धत्वेन तत्कारणस्याप्यप्रसिद्धत्वात् सद्विषयाया एव जिज्ञासायाः संभवादित्यर्थः ।

ननु 'घटो नीलघटः' 'दण्डवान् रक्तदण्डवान्' इत्यादौ घटे नीलघटाभेदान्वयावगाहनेन दण्डवति रक्तदण्डवदभेदान्वयावगाहनेन नवीनैर्विधेयकोटौ=विशेषणकोटावऽधिकावगाहिनः शाब्दबोधस्य स्वीकाराद् यथा— 'घटो नीलघटः' इत्यत्राऽभेदसंबन्धावच्छिन्ननीलत्वावच्छिन्नघटत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताकः शाब्दबोधो भवति तत्र प्रकारतावच्छेदकं विशेष्यतावच्छेदकं चैकं घटत्वमेव तथा 'घटो घटः' इत्यत्रापि घटत्वमेव प्रकारतावच्छेदकं विशेष्यतावच्छेदकं चेति 'घटो घटः' इत्यनेनाप्यभेदसंबन्धावच्छिन्न घटत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताकः शाब्दबोधः कथं न भवति, यथा च— 'दण्डवान् रक्तदण्डवान्' इत्यत्राऽभेदसंबन्धावच्छिन्नरक्तत्वावच्छिन्नदण्डवत्त्वावच्छिन्नप्रकारतानिरूपितदण्डवत्त्वावच्छिन्नविशेष्यताकः शाब्दबोधो भवति प्रकारतावच्छेदकं विशेष्यतावच्छेदकं चैकं दण्डवत्त्वमेवेत्यादौ तादृशशाब्दबोधस्य=एकधर्मप्रकारताकविशेष्यताकशाब्दबोधस्य ( एकधर्मेणोपस्थितयोरप्यभेदान्वयबोधस्य ) प्रसिद्धिरस्त्येव तथा 'दण्डवान् दण्डवान्' इत्यत्रापि दण्डवत्त्वमेव प्रकारतावच्छेदकं विशेष्यतावच्छेदकं चेति 'दण्डवान् दण्डवान्' इत्यनेनाऽभेदसंबन्धावच्छिन्नदण्डवत्त्वावच्छिन्नप्रकारतानिरूपितदण्डवत्त्वावच्छिन्नविशेष्यताकः शाब्दबोधः कथं न भवतीत्याशङ्कते— अथेति । उत्तरमाह— तर्हीति, 'घटो नीलघटः' इत्यत्र न घटे शुद्धघटस्याभेदान्वयः किं तु नीलघटस्यैव तथा च घटे विशेषणीभूतो यो घटस्तत्र विशेषणीभूतो नीलपदार्थ इति विशेषणतावच्छेदकत्वेन नीलभानं भवति नीलपदार्थभानस्य नियामकं च नीलपदजन्यनीलोपस्थितिर्नीलविषयकतात्पर्यज्ञानं च एतादृशनीलभाननियामकसामग्री सत्त्वे एव घटत्वावच्छिन्ने नीलघटत्वावच्छिन्नस्याभेदसंबन्धेनान्वयो भवति तस्य मूलं च नीलपदसमभिव्याहार एव, 'घटो घटः' इत्यत्र च नीलपदाभावेन नीलभाननियामकसामग्र्यभावात् तादृश=अभेदान्वयबोधो न भवति । एवमेव 'दण्डवान् दण्डवान्' इत्यत्रापि रक्तपदाभावेन रक्तभाननियामकसामग्र्यभावादभेदान्वयबोधो न भवतीत्यर्थः ।

अथ द्रव्यत्वादौ धर्मितावच्छेदकतासंसर्गेण प्रसिद्धस्य शुद्धघटत्वाद्यवच्छिन्न-प्रकारकाऽभेदान्वयबोधस्य घटत्वादावाऽऽपत्तिसंभवात् ।

---

ननु यदि नीलपदसत्त्वे एवाभेदान्वयबोधो भवति तदा 'घटो रक्तघटः' 'घटः पीतघटः' इत्यादावप्यभेदान्वयबोधो न स्यात्— नीलपदाभावादिति चेत्, तर्हि—घटत्वेतरधर्मोपस्थापकसामग्रीसत्त्वेऽभेदान्वयो भवति घटत्वेतरधर्मोपस्थापकसामग्र्यभावे चाभेदान्वयबोधो न भवति तथा च 'घटो नीलघटः' 'घटो रक्तघटः' 'घटः पीतघटः' इत्यादौ घटत्वेतरस्य नीलत्वरक्तत्व-पीतत्वादिधर्मस्योपस्थापकसामग्री ( नीलादिपद ) सत्त्वादभेदान्वयबोधो भवति । 'घटो घटः' इत्यत्र च घटेतरनीलादिपदाभावेन घटत्वेतरधर्मोपस्थापकसामग्र्यभावादभेदान्वयबोधो न भवतीत्यवधेयम् ।

उक्तरीत्या 'घटो घटः' इत्यत्राभेदान्वयशाब्दबोधापत्तिवारणे कृतेपि पूर्वपक्षी 'द्रव्यं घटः' इत्यस्य दृष्टान्तेन 'घटो घटः' इत्यत्राभेदान्वयबोधापत्तिं प्रदर्शयति—अथेति । कार्यतावच्छेदककोटौ धर्मितावच्छेदकाऽनिवेशप्रयुक्तलाघवेन विषयनिष्ठप्रत्यासत्त्या शाब्दबोधतत्कारणयोः कार्यकारणभावमाह— धर्मितेति, अयं भावः— शाब्दबोधतत्कारणयोर्द्विधा कार्यकारणभावोस्ति— आत्मनिष्ठप्रत्यासत्त्या विषयनिष्ठप्रत्यासत्त्या च. तत्रात्मनिष्ठप्रत्यासत्त्या नाम शाब्दबोधस्य तत्कारणीभूतोपस्थितियोग्यताज्ञानतात्पर्यज्ञानानां च ज्ञानरूपत्वेन समवायसंबन्धेनात्मनि स्थितिर्भवतीति शाब्दबोधादिप्रतियोगिकेनात्मनिष्ठेन समवायेन कार्यकारणभावः । प्रत्यासत्तिः= संबन्धस्तथा च समवायसंबन्धेन शाब्दबोधकारणान्यात्मनि भवंतीति समवायसंबन्धेन शाब्दबोधरूपकार्यमप्यात्मन्येवोत्पद्यते तथा च— समवायसंबन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति समवायसंबन्धेनोपस्थित्यादिकं कारणमिति वक्तव्यम् । अत्र च समवायेन पटविषयकोपस्थितिसत्त्वेपि समवायेनात्मनि घटत्वावच्छिन्नविषयकशाब्दबोधापत्तिः स्यात् तद्वारणाय विषयप्रवेशः कर्तव्यः— समवायसंबन्धेन घटत्वावच्छिन्नविषयकशाब्दबुद्धित्वावच्छिन्नं प्रति समवायसंबन्धेन घटत्वावच्छिन्नविषयकोपस्थितिः कारणमिति. अत्रानन्तधर्मितावच्छेदकानां वाऽनन्तविषयाणां वा प्रवेशाद् गौरवम् ।

यथा समवायसंबन्धेन ज्ञानमात्मनि तिष्ठति तथा विषयतासंबन्धेन ज्ञानं विषयेपि तिष्ठतीति ज्ञानस्वरूपाणां शाब्दबोधतत्कारणानां विषयतासंबन्धेन विषयेपि संभवाद् विषयनिष्ठप्रत्यासत्त्या= विषयनिष्ठा या विषयता तल्लक्षणप्रत्यासत्त्या=संबन्धेन शाब्दबोधतत्कारणयोः कार्यकारणभावः । एषा च विषयता विविधस्वरूपा भवति यथा 'नीलो घटः' इत्यत्र घटनिष्ठा विषयता विशेष्यतारूपा धर्मितारूपा वा, घटत्वनिष्ठा च धर्मितावच्छेदकतारूपा, घटघटत्वयोः समवायनिष्ठा धर्मितावच्छेदकतावच्छेदकसंबन्धरूपा, नीलनिष्ठा प्रकारतारूपा, नीलत्वनिष्ठा प्रकारतावच्छेदकतारूपा, नीलनीलत्वयोः समवायनिष्ठा प्रकारतावच्छेदकतावच्छेदकसंबन्धरूपा किं वा प्रकारतावच्छेदकतावच्छेदकतारूपा— समवायसंबन्धस्यैवात्र प्रकारतावच्छेदकतावच्छेदकत्वात्, नीलघटोभयनिष्ठा

चाभेदसंसर्गरूपा, इति । तत्र 'नीलो घटः' इति शाब्दबोधो धर्मितारूपविषयतासंबन्धेन घटे जायते, धर्मितावच्छेदकतारूपविषयतासंबन्धेन घटत्वे जायते, धर्मितावच्छेदकतावच्छेदकतारूपविषयतासंबन्धेन घटघटत्वयोः समवाये जायते, प्रकारताख्यविषयतासंबन्धेन नीले जायते, प्रकारतावच्छेदकतारूपविषयतासंबन्धेन नीलत्वे जायते, प्रकारतावच्छेदकतावच्छेदकतारूपविषयतया नीलनीलत्वयोः समवाये जायते, अभेदसंसर्गाख्यविषयतासंबन्धेन च नीलस्य घटस्य चाभेदसंसर्गे जायते, घटघटत्वतत्समवायनीलनीलत्वतत्समवायघटनीलाभेदसंसर्गाणामेषां सर्वेषामेव 'नीलो घटः' इतिशाब्दबोधविषयत्वादित्यवधेयम् । एवमन्यत्रापि कार्यकारणभावो विज्ञेयः । तथा च विषयतासंबन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति विषयतासंबन्धेनोपस्थित्यादिकं कारणमिति वक्तव्यम् । अत्र च समवायेन देवदत्तात्मन्युपस्थित्यादिसत्त्वे यज्ञदत्तस्यापि शाब्दबोधः स्यादिति तद्वारणाय तत्पुरुषीयत्वनिवेशः कर्तव्यः— यज्ञदत्तीयघटत्वावच्छिन्नविषयकशाब्दबुद्धित्वावच्छिन्नं प्रति यज्ञदत्तीयघटत्वावच्छिन्नविषयकोपस्थित्यादिकं कारणमिति ।

आत्मनिष्ठप्रत्यासत्त्या कार्यकारणभावे हि तत्पुरुषीयत्वप्रवेशस्यापेक्षा नास्ति कार्यकारणयोः सामानाधिकरण्यनियमस्य सर्वप्रसिद्धत्वात्समवायेनात्मन्येवोपस्थित्यादिकं संभवतीत्यात्मन्येव शाब्दबोधस्य संभवादात्मनां च नानात्वेन यदात्मन्युपस्थित्यादिकं कारणं तदात्मन्येव शाब्दबोधरूपकार्यस्यापि संभवादिति विषयनिष्ठप्रत्यासत्त्यपेक्षया लाघवम् । किं तु समवायेन यज्ञदत्तात्मनि घटत्वावच्छिन्नविषयकोपस्थितिसत्त्वेपि पटत्वावच्छिन्नविषयकशाब्दबोधापत्तिरस्तीति तद्वारणाय विषयनिवेशः कर्तव्यः— पटत्वावच्छिन्नविषयकशाब्दबुद्धित्वावच्छिन्नं प्रति पटत्वावच्छिन्नविषयकोपस्थितिः कारणमिति विषयनिष्ठप्रत्यासत्त्यपेक्षया गौरवम् ।

विषयनिष्ठप्रत्यासत्त्या कार्यकारणभावे हि विषयप्रवेशस्यापेक्षा नास्ति विषयतासंबन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति विषयतासंबन्धेनोपस्थित्यादिकं कारणमित्युक्ते विषयस्य घटादेर्विषयताख्यसंबन्धान्तःप्रवेशेन पृथक् निवेशापेक्षाऽभावात्, कार्यकारणयोः सामानाधिकरण्यनियमेन च यदा कारणीभूतमुपस्थित्यादिकं विषयतासंबन्धेन घटे तदा तत्कार्यस्य शाब्दबोधस्यापि विषयतासंबन्धेन घटे एव संभवात्. विषयभेदेन विषयनिष्ठविषयतानामपि भिन्नत्वाद् यस्मिन्नेव घटे विषयतासंबन्धेनोपस्थित्यादिकं तस्मिन्नेव घटे तत्कार्यस्य शाब्दबोधस्यापि संभवात् पटादौ चासंभवादिति विषयनिवेक्षापेशाभाव इत्यात्मनिष्ठप्रत्यासत्त्यपेक्षया लाघवम् । किं तु विषयस्य घटादेरेकत्वेन देवदत्तयज्ञदत्तादिसकलपुरुषसाधारणत्वात् संबन्धभूताया विषयताया अप्येकत्वेन सर्वसाधारणत्वाद् य एव घटो देवदत्तज्ञानविषयः स एव यज्ञदत्तज्ञानविषयोपि भवितुमर्हत्येवेति विषयतासंबन्धेन यज्ञदत्तस्योपस्थित्यादिसत्त्वे देवदत्तस्यापि शाब्दबोधः स्यात् कार्यकारणयोरुपस्थितिशाब्दबोधयोर्विषयतासंबन्धेन घटे एव सत्त्वेन सामानाधिकरण्यस्याऽक्षुण्णत्वाद् उपस्थितिशाब्दबोधसमवायिनोर्यज्ञदत्तदेवदत्तयोर्भेदस्याऽकिंचित्करत्वाद् विषयतासंबन्धेन तयोरुपस्थितिशाब्दबोधानधिकरणत्वाद् संप्रति विषयनिष्ठप्रत्यासत्त्या कार्यकारणभावपक्षस्वीकारेण विषयतासंबन्धेन घटादे-

विषयस्यैवोपस्थितिशाब्दबोधाधिकरणत्वात् तथा च यज्ञदत्तस्य पटत्वावच्छिन्नविषयकोपस्थित्यादिसत्त्वे देवदत्तस्यापि पटत्वावच्छिन्नविषयकशाब्दबोधः स्यादेवेति तद्वारणाय तत्पुरुषीयत्वनिवेशः कर्तव्यः— विषयतासंबन्धेन देवदत्तीयपटत्वावच्छिन्नविषयकशाब्दबुद्धित्वावच्छिन्नं प्रति विषयतासंबन्धेन देवदत्तीयपटत्वावच्छिन्नविषयकोपस्थित्यादिकं कारणमिति तत्तत्पुरुषाणां नानात्वेन तेषां निवेशादात्मनिष्ठप्रत्यासत्त्यपेक्षया गौरवं तत्र तत्पुरुषीयत्वनिवेशापेक्षाभावात् ।

तथा च यत्र विशेषणविशेष्ययोः समानसंख्याकत्वं भवति यथा— 'नीलो घटः' इत्यत्रैकमेव विशेषणमेकमेव च विशेष्यमिति तत्रात्मनिष्ठप्रत्यासत्त्या वा विषयनिष्ठप्रत्यासत्त्या वा शाब्दबोधो भवतु विशेषो नास्ति यतोत्रात्मनिष्ठप्रत्यासत्त्या शाब्दबोधपक्षे तत्पुरुषीयत्वप्रवेशाभावप्रयुक्तलाघवसत्त्वेपि विषयप्रवेशेन गौरवमस्त्येव, विषयनिष्ठप्रत्यासत्त्या शाब्दबोधपक्षे च विषयप्रवेशाभावप्रयुक्तलाघवसत्त्वेपि तत्पुरुषीयत्वप्रवेशेन गौरवमस्त्येवेत्युभयप्रत्यासत्त्योस्तुल्यत्वमेव । किं यत्र विशेषणविशेष्ययोः समसंख्याकत्वं न भवति तत्रात्मनिष्ठप्रत्यासत्त्या शाब्दबोधापेक्षया विषयनिष्ठप्रत्यासत्त्या शाब्दबोधे लाघवं भवति, तथा हि— यथा— 'नीलो घटः पीतो घटः सुन्दरो घटः' इत्यत्र विशेषणानि बहूनि विशेष्यं चैकमेव, अत्रात्मनिष्ठप्रत्यासत्त्या शाब्दबोधस्वीकारे समवायेन अभेदसंबन्धावच्छिन्ननीलत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताकशाब्दबुद्धित्वावच्छिन्नं प्रति समवायेन अभेदसंबन्धावच्छिन्ननीलत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताकोपस्थित्यादिकं कारणम्, एवं अभेदसंबन्धावच्छिन्नपीतत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताकशाब्दबुद्धित्वावच्छिन्नं प्रति अभेदसंबन्धावच्छिन्नपीतत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताकोपस्थित्यादिकं कारणमित्येवं पृथक् पृथक् कार्यकारणभावस्य वक्तव्यत्वेन महद् गौरवं भवति, विषयनिष्ठप्रत्यासत्त्या शाब्दबोधपक्षे च घटत्वावच्छिन्नविशेष्यतानिरूपिताऽभेदसंबन्धावच्छिन्नप्रकारतावच्छेदकतासंबन्धेन तत्पुरुषीयशाब्दबुद्धित्वावच्छिन्नं प्रति घटत्वावच्छिन्नविशेष्यतानिरूपिताऽभेदसंबन्धावच्छिन्नप्रकारतावच्छेदकतासंबन्धेन तत्पुरुषीयोपस्थित्यादिकं कारणमित्येवमेकेनैव वाक्येन 'नीलो घटः' 'पीतो घटः' इत्यादीनामेकघटविशेष्यकवाक्यानां सर्वेषामपि शाब्दबोधतत्कारणयोः कार्यकारणभावस्यानुगमः संभवति यतो यत्र यत्र नीलत्वपीतत्वसुन्दरत्वादौ प्रकारतावच्छेदकतासंबन्धेन शाब्दबोधकारणमुपस्थित्यादिकं भविष्यति तत्र तत्रैव प्रकारतावच्छेदकतासंबन्धेन शाब्दबोधोपि भविष्यतीति बहूनां विशेषणीभूतानां नीलपीतादीनां नामग्रहणापेक्षा नास्ति विशेष्यस्यैकत्वात् तस्यैव नामग्रहणं कृतं घटत्वावच्छिन्नेति इत्यात्मनिष्ठप्रत्यासत्त्यपेक्षया लाघवम्, तत्र समवायसंबन्धेन कार्यकारणभावनियमाद् विषयतासंबन्धेन च कार्यकारणभावाऽसंभवेनैवंप्रकारेण लाघवासंभवात् ।

एवम्— 'पटो नीलः' 'घटो नीलः' 'मठो नीलः' इत्यत्र विशेष्याणि बहूनि विशेषणं चैकमेव, अत्राप्यात्मनिष्ठप्रत्यासत्त्या शाब्दबोधपक्षे समवायेनाभेदसंबन्धावच्छिन्ननीलत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताकशाब्दबुद्धित्वावच्छिन्नं प्रति समवायेनाभेदसंबन्धा-

च्छिन्ननीलत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताकोपस्थित्यादिकं कारणमित्येवं र्ववत् पृथक् पृथगेवोक्तवाक्यानां शाब्दबोधतत्कारणयोः कार्यकारणभावो वक्तव्य इति महद् गौरवम् । विषयनिष्ठप्रत्यासत्त्या शाब्दबोधपक्षे च अभेदसंबन्धावच्छिन्ननीलत्वावच्छिन्नप्रकारता-निरूपितविशेष्यतावच्छेदकतासंबन्धेन तत्पुरुषीयशाब्दबुद्धित्वावच्छिन्नं प्रति अभेदसंबन्धावच्छिन्न-नीलत्वावच्छिन्नप्रकारतानिरूपितविषयता ( धर्मितावच्छेदकता ) संबन्धेन तत्पुरुषीयोपस्थित्यादिकं कारणमित्येवमेकेनैव वाक्येन 'पटो नीलः' 'घटो नीलः' 'मठो नीलः' इत्यादीनामेकनीलविशेष-णकानां सर्वेषामपि वाक्यानां शाब्दबोधतत्कारणयोः कार्यकारणभावस्यानुगमः संभवति यतो यत्र यत्र पटत्वघटत्वमठत्वादौ धर्मितावच्छेदकतासंबन्धेन शाब्दबोधकारणीभूतमुपस्थित्यादिकं भविष्यति तत्र तत्रैव धर्मितावच्छेदकतासंबन्धेन शाब्दबोधोपि भविष्यतीति बहूनां विशेष्यभूतानां घटपटमठादीनां नामग्रहणापेक्षा नास्ति विशेषणस्यैकत्वात्तस्यैव नामग्रहणं कृतम्— नीलत्वावच्छि-न्नेति इत्यात्मनिष्ठप्रत्यासत्त्यपेक्षया लाघवम्, तत्र समवायसंबन्धेन कार्यकारणभावनियमाद् विषय-तासंबन्धेन च कार्यकारणभावासंभवेनैवंप्रकारेण लाघवाऽसंभवात् ।

एवमन्यत्रापि विशेषणविशेष्ययोर्विषमसंख्याकत्वे ज्ञेयम्— यत्र विशेषणानि बहूनि तत्र प्रकार-तावच्छेदकतासंबन्धेन कार्यकारणभावो वक्तव्यो बहूनां विशेषणानां नामग्रहणं न कर्तव्यम् । यत्र च विशेष्याणि बहूनि तत्र धर्मितावच्छेदकतासंबन्धेन कार्यकारणभावो वक्तव्यो बहूनां विशेष्याण नामग्रहणं न कर्तव्यमिति लाघवं स्यादेवेतियावत् ।

आत्मनिष्ठप्रत्यासत्त्या कार्यकारणभावे विषयप्रवेशोप्यस्त्येव 'कृष्णोहं गौरोहम्' इत्यादा-वात्मनो विषयत्वेनात्मप्रवेशापेक्षाप्यस्त्येवेत्युभयप्रवेशेन गौरवं विषयनिष्ठप्रत्यासत्तौ तूभयप्रवेशापे-क्षा नास्ति केवलमात्ममात्रप्रवेशस्यावश्यकत्वादिति लाघवमित्यपि केचित् ।

प्रकृते च यद्यात्मनिष्ठप्रत्यासत्त्या शाब्दबोध उच्येत तदा विषयप्रवेशस्याऽवश्यंभावात् 'द्रव्यं घटः' इत्यत्र द्रव्यपदेन द्रव्यत्वेन घटपदेन च घटत्वेनोपस्थितिरस्ति. एवम्— 'घटो घटः' इत्यत्र तु नास्ति किं तूभाभ्यामेव घटपदाभ्यां घटत्वेनैवोपस्थितिरिति दृष्टान्तदार्ष्टान्तिकयोर्वैष-म्यात् 'द्रव्यं घटः' इतिदृष्टान्तेन 'घटो घटः' इत्यत्राऽभेदान्वयबोधापत्तिर्न संभवतीत्याऽऽत्म-निष्ठप्रत्यासत्तिं त्यक्त्वा विषयनिष्ठप्रत्यासत्त्या शाब्दबोधमाह— धर्मितेति । अत्र च दृष्टान्तदार्ष्टा-न्तिकयोर्वैषम्यसत्त्वेपि कार्यकारणभावे विषयप्रवेशाभावेन तन्न प्रतीयते तथा च यथा 'द्रव्यं घटः' इत्यत्र धर्मितावच्छेदकतासंबन्धेन द्रव्यत्वेऽभेदसंबन्धेन घटप्रकारको बोधो भवति तथा 'घटो घटः' इत्यत्रापि धर्मितावच्छेदकतासंबन्धेन घटत्वे घटप्रकारकाभेदान्वयबोधस्यैव मदिष्ट-त्वात् स कथं न स्यात्, 'द्रव्यं घटः' इत्यत्र या घटप्रकारकबोधसामग्री तस्याः 'घटो घटः' इत्यत्रापि सत्त्वात्, घटस्य स्वात्मनाऽभेदस्यापि सत्त्वेन योग्यताज्ञानसत्त्वात् 'घटो घटः' इत्यत्र घटत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताकशाब्दबोधस्यापत्तिरस्त्येवेति पूर्व-पक्षाभिप्रायः ।

**न च तत्रापादकाभावः- तात्पर्यज्ञानविशेषादिघटिताया धर्मितावच्छेदकतया द्रव्यत्वादौ तदुत्पादनियामकसामग्र्या एवापादकत्वात् ।**

**न च धर्मितावच्छेदकतासंबन्धेन द्रव्यत्वादौ तादृशान्वयबोधोत्पत्तिप्रयोजिका द्रव्यपदजन्यद्रव्यत्वाद्यवच्छिन्नविशेष्यकोपस्थितितदवच्छिन्नविशेष्यकयो-**

'द्रव्यं घटः' इत्यत्र द्रव्यं धर्मी द्रव्यत्वं धर्मितावच्छेदकं द्रव्यत्वनिष्ठा च विषयता धर्मितावच्छेदकतारूपा सैव संबन्धस्तेन संबन्धेन शाब्दबोधो द्रव्यत्वे वर्तते तथा च 'द्रव्यं घटः' इत्यत्र धर्मितावच्छेदकतासंबन्धेन द्रव्यत्वे प्रसिद्धो यथा शुद्धघटत्वावच्छिन्नप्रकारकाभेदान्वयबोधस्तथा 'घटो घटः' इत्यत्रापि घटत्वे धर्मितावच्छेदकतासंबन्धेन शुद्धघटत्वावच्छिन्नप्रकारकाभेदान्वयबोधस्यापत्तिः संभवतीत्याह- द्रव्यत्वादाविति ।

ननु 'द्रव्यं घटः' इत्यत्राभेदान्वयविषयकतात्पर्यज्ञानादिघटितसामाग्र्याः सत्त्वात् तत्कार्यभूतो घटत्वावच्छिन्नप्रकारकाभेदान्वयबोधो भवति 'घटो घटः' इत्यत्र वस्तुगत्याऽभेदस्य सत्त्वेपि तद्बोधानुकूलसामग्र्यभावात् कथमभेदान्वयबोधः स्यादित्याशङ्कयाह- न चेति । तत्र= 'घटो घटः' इत्यत्र । आपादकाभावः=कारणीभूतसामग्र्यभावः । परिहारहेतुमाह- तात्पर्यज्ञानेति, धर्मितावच्छेदकतया=धर्मितावच्छेदकतासंबन्धेन द्रव्यत्वे तदुत्पादनियामकसामग्र्याः=अभेदान्वयबोधोत्पत्तेर्नियामिकायास्तात्पर्यज्ञानविशेषादिघटितायाः सामग्र्या एव 'घटो घटः' इत्यत्रापि घटत्वावच्छिन्नप्रकारकाभेदान्वयबोधापादकत्वात् । यया तात्पर्यज्ञानादिघटितसामग्र्या 'द्रव्यं घटः' इत्यत्र घटत्वावच्छिन्नप्रकारकाभेदान्वयबोधस्तयैव 'घटो घटः' इत्यत्रापि घटत्वावच्छिन्नप्रकारकाभेदान्वयबोधो भविष्यतीत्यर्थः । तात्पर्यज्ञानं चात्र- 'घटपदं द्रव्यपदार्थान्वितस्वार्थं बोधयतु' इति । योग्यताज्ञानं च 'द्रव्यपदार्थो घटत्वावच्छिन्नाभेदसंसर्गवान्' इति, द्रव्यत्वे योग्यताज्ञानं तु धर्मितावच्छेदकतासंबन्धेन वर्तते । तात्पर्यज्ञानं च- 'द्रव्यं घट इत्येतद्वाक्यजन्यकिंचिद्धर्मावच्छिन्नप्रकारककिंचिद्धर्मावच्छिन्नविशेष्यताशालिशाब्दबोधविषयकेच्छावानयम्' इति एतादृशज्ञानीया या इच्छानिष्ठाविषयता तन्निरूपिता या बोधनिष्ठा विषयता तन्निरूपिता या विशेष्यतानिष्ठा विषयता तन्निरूपिता या अवच्छिन्नत्वनिष्ठा विषयता तन्निरूपितविषयतासंबन्धेन ( एषा विषयता विशेष्यतावच्छेदके द्रव्यत्वादौ वर्त्तते ) द्रव्यत्वे वर्तते ।

ननु 'द्रव्यं घटः' इत्यत्र द्रव्यत्वे तादृशान्वयबोधोत्पत्तिप्रयोजिका=अभेदान्वयबोधोत्पत्तिप्रयोजिका तु धर्मितावच्छेदकतासंबन्धेन द्रव्यपदजन्यद्रव्यत्वावच्छिन्नविशेष्यकोपस्थितिघटिता तथा तदवच्छिन्न=द्रव्यत्वावच्छिन्नविशेष्यकयोग्यताज्ञानादिघटितैव सामग्री भवतीति वक्तुमारभते- न चेत्यादिना । ननु त्वयाऽऽत्मनिष्ठप्रत्यासत्तेरेव कार्यतावच्छेदकसंबन्धत्वमाश्रित्य 'घटो घटः' इत्यत्राभेदान्वयबोधः परिह्रियते इति कथमत्रेदानीं वा धर्मितावच्छेदकतासंबन्धेन द्रव्यत्वेऽभेदान्वयबोधप्रयोजकत्वं सामग्र्या उक्तमिति पूर्वपक्ष्याशङ्कामालोच्य सिद्धान्त्याह- धर्मितावच्छेदकतयेति, धर्मितावच्छेदकतायास्तत्कार्यतावच्छेदकसंबन्धताविरहेपि=उक्तसामग्रीजन्यं यच्छाब्दबोधरू-

ग्यताज्ञानादिघटितसामग्र्येव– धर्मितावच्छेदकतायास्तत्कार्यतावच्छेदकसंबन्धताविरहेपि द्रव्यत्वादिनिष्ठायास्तस्यास्तत्कार्यतावच्छेदकधर्मघटकत्वात्. तादृशसा-

कार्ये तादृशकार्यतावच्छेदकसंबन्धताविरहेपि ( आत्मनिष्ठप्रत्यासत्तेः=समवायस्यैव तादृशकार्यतावच्छेदकसंबन्धत्वात् ) द्रव्यत्वादिनिष्ठायास्तस्याः=धर्मितावच्छेदकतायास्तत्कार्यतावच्छेदकधर्मघटकत्वात्=उक्तसामग्रीकार्यतावच्छेदकधर्मघटकत्वाद्धेतोः द्रव्यत्वादौ धर्मितावच्छेदकतासंबन्धेन तादृशान्वयबोधोत्पत्तिप्रयोजिका द्रव्यपदजन्यद्रव्यत्वावच्छिन्नविशेष्यकोपस्थितितदवच्छिन्नविशेष्यकयोग्यताज्ञानादिघटिता सामग्र्येवेत्यन्वयः ।

अयं भावः– यथा वह्न्यवयवेषु वह्निप्रतियोगिकसंयोगविशिष्टवह्नौ जननीये यादृशीन्धनादिसामग्री प्रयोजिका भवति तादृश्येव सामग्री महानसादौ संयोगेन वह्नौ जननीये प्रयोजिका भवति । किं चात्र वह्न्यवयवेषु वह्न्युत्पत्तौ समवाय एव कार्यतावच्छेदकसंबन्धो भवति न तु संयोग इति संयोगस्य कार्यतावच्छेदकसंबन्धत्वाभावेपि कार्यतावच्छेदकधर्मघटकत्वं त्वस्त्येव– वह्निप्रतियोगिकसंयोगविशिष्टे उत्पाद्यमानवह्नौ वह्नित्वस्येव वह्निप्रतियोगिकसंयोगवैशिष्ट्यस्यापि सत्त्वाद् वह्निप्रतियोगिकसंयोगिविशिष्टवह्नित्वस्य कार्यतावच्छेदकत्वात् संयोगस्यापि तद्घटकत्वाद् यदि चात्र संयोगः कार्यतावच्छेदकधर्मघटको न स्यात्तदा समवायेन वह्न्युत्पत्तिं प्रति यादृशी सामग्री प्रयोजिका भवति तादृशी सामग्री संयोगेन वह्न्युत्पत्तिं प्रति प्रयोजिका न स्यात् कारणाभावात्. यदा च संयोगः कार्यतावच्छेदकधर्मघटको भवति तदा तु यादृशी सामग्री संयोगविशिष्टवह्निप्रयोजिका भवति तादृश्येव संयोगेन वह्निप्रयोजिका भवति संयोगस्यापि वह्निना सह कार्यत्वात् । किं चात्र समवायेन वह्न्युत्पत्तौ संयोगस्य कार्यतावच्छेदकसंबन्धत्वाभावेप्यऽन्यत्र पर्वतादौ वह्न्युत्पत्तौ तु पर्वतानुयोगिकवह्निप्रतियोगिककार्यतावच्छेदकसंबन्धत्वं भवत्येव ।

तथा प्रकृतेप्यात्मनिष्ठप्रत्यासत्त्या ‘ द्रव्यं घटः ’ इत्यत्राऽभेदान्वयबोधे जननीये समवायस्यैव कार्यतावच्छेदकसंबन्धत्वेन धर्मितावच्छेदकतायाः कार्यतावच्छेदकसंबन्धत्वाभावेपि द्रव्यत्वनिष्ठाया धर्मितावच्छेदकतायाः कार्यतावच्छेदकधर्मघटकत्वं त्वस्त्येव– द्रव्यत्वनिष्ठाप्येषा विषयतारूपा धर्मितावच्छेदकता स्वनिरूपितविषयितासंबन्धेन शाब्दबोधे वर्तते इति शाब्दबोधत्वस्येवोक्तधर्मितावच्छेदकतावैशिष्ट्यस्यापि शाब्दबोधे सत्त्वाद् अभेदसंबन्धावच्छिन्नघटत्वावच्छिन्नप्रकारतानिरूपितद्रव्यत्वावच्छिन्नविशेष्यताकशाब्दबोधत्वस्य कार्यतावच्छेदकत्वाद् उक्तधर्मितावच्छेदकताया अपि तद्घटकत्वात् स्वनिरूपितविषयितासंबन्धेन तत्र वर्तमानत्वात् । तादृशधर्मितावच्छेदकताविशिष्टशाब्दबोधे समवायेनात्मनि जननीये यादृशी द्रव्यपदजन्यद्रव्यत्वावच्छिन्नविशेष्यकोपस्थितितदवच्छिन्नविशेष्यकयोग्यताज्ञानादिघटितसामग्री प्रयोजिका भवति तादृश्येव सामग्री धर्मितावच्छेदकतासंबन्धेन द्रव्यत्वादौ तादृशशाब्दबोधप्रयोजिका भवति । यदि चात्र धर्मितावच्छेदकता कार्यतावच्छेदकधर्मघटिका न स्यात्तदात्मनिष्ठप्रत्यासत्त्या=समवायेनात्मन्युक्तशाब्दबोधे जननीये यादृश्युक्तसामग्री प्रयोजिका भवति तादृशी सामग्री धर्मितावच्छेदकतासंबन्धेन द्रव्यत्वे उक्तशाब्द-

मग्र्याश्चात्मनिष्ठप्रत्यासत्त्या द्रव्यत्वाद्यवच्छिन्नविशेष्यकघटत्वाद्यवच्छिन्नाद्यऽभेद-बुद्धित्वरूपस्वीयकार्यतावच्छेदकावच्छिन्नोत्पत्तेरेव व्याप्यतया घटत्वादौ धर्मितावच्छेदकतासंबन्धेन घटत्वावच्छिन्नाभेदबोधापादकत्वं न संभवतीति वाच्यम्, योग्यताज्ञानस्य धर्मितावच्छेदकं निवेश्य तद्भेदेनाऽनन्तकारणताकल्पनमपेक्ष्य

बोधे जननीये प्रयोजिका न स्यात् कारणाभावात्—समवायेनात्मन्युक्तशाब्दबोधे जननीये धर्मितावच्छेदकतायाः कार्यतावच्छेदकधर्मघटकत्वाभावात् । अस्ति चात्र धर्मितावच्छेदकतायाः कार्यतावच्छेदकधर्मघटकत्वमिति यादृश्युक्तसामग्री आत्मनिष्ठप्रत्यासत्त्या धर्मितावच्छेदकताविशिष्ट शाब्दबोधप्रयोजिका तादृश्येवोक्तसामग्री धर्मितावच्छेदकतासंबन्धेन द्रव्यत्वे शाब्दबोधप्रयोजिका भवति—धर्मितावच्छेदकताविशिष्टस्य शाब्दबोधस्य कार्यत्वे तेन सह धर्मितावच्छेदकताया अपि कार्यत्वापत्त्या तया सामग्र्या विना धर्मितावच्छेदकतासंबन्धेन शाब्दबोधोत्पत्त्यनुपपत्तेः । द्रव्यत्वनिष्ठाया धर्मितावच्छेदकताया आत्मनिष्ठप्रत्यासत्त्याऽऽत्मनि शाब्दबोधोत्पत्तौ कार्यतावच्छेदकसंबन्धत्वाभावेपि उक्तसंयोगस्यैव द्रव्यत्वे उक्तशाब्दबोधे जननीये तु कार्यतावच्छेदकसंबन्धत्वं भवत्येव ( नानुपपन्नम् ) कार्यभूतशाब्दबोधाधिकरणद्रव्यत्वनिष्ठत्वादिति धर्मितावच्छेदकतासंबन्धेन द्रव्यत्वे तादृशान्वयबोधोत्पत्तिप्रयोजिका द्रव्यपदजन्येत्याद्युक्तसामग्र्येव, तादृशसामग्र्याश्चात्मनिष्ठप्रत्यासत्त्या ( समवायेन ) द्रव्यत्वाद्यवच्छिन्नविशेष्यकघटत्वाद्यवच्छिन्नाद्यऽभेदबुद्धित्वरूपस्वीयकार्यतावच्छेदकावच्छिन्नोत्पत्तेरेव=अभेदसंबन्धावच्छिन्नघटत्वावच्छिन्नप्रकारतानिरूपितद्रव्यत्वावच्छिन्नविशेष्यकशाब्दबोधत्वावच्छिन्नो ( शाब्दबोधो ) त्पत्तेरेव ( द्रव्यं घट इतिस्थले ) व्याप्यतया=प्रयोजकतया घटत्वादौ धर्मितावच्छेदकतासंबन्धेन घटत्वावच्छिन्नाभेदबोधापादकत्वं न संभवति किं वोक्तसामग्र्या घटत्वे घटत्वावच्छिन्नाभेदबोधापादकत्वं धर्मितावच्छेदकतासंबन्धेनापि संभवति किमुतात्मनिष्ठप्रत्यासत्त्या आत्मनिष्ठप्रत्यासत्त्या हि बोधापादकत्वं सामग्र्या आत्मन्येव संभवति नान्यत्र संबन्धभूतस्य बोधसमवायस्यात्ममात्रनिष्ठत्वात्. धर्मितावच्छेदकतापि यात्र संबन्धरूपास्ति तस्या द्रव्यत्वमात्रनिष्ठत्वात् तादृशधर्मितावच्छेदकतासंबन्धेन च सामग्र्या द्रव्यत्वे एव शाब्दबोधापादकत्वं संभवति न घटत्वादावित्यर्थः । किं च द्रव्यत्वावच्छिन्नविशेष्यकशाब्दबोधं प्रति द्रव्यत्वावच्छिन्नविशेष्यकयोग्यताज्ञानस्यैव कारणत्वात् तादृशयोग्यताज्ञानस्य च द्रव्यत्वनिष्ठधर्मितावच्छेदकतासंबन्धेन द्रव्यत्वे एव संभवात् घटत्वे चासंभवात् न केवलं घटत्वे शाब्दबोधापत्त्यऽसंभव एव किं तु तादृशशाब्दबोधकारणीभूतयोग्यताज्ञानस्याप्यऽसंभव एव योग्यताज्ञानस्वरूपेऽपि द्रव्यत्वविशेष्यकत्वप्रवेशात् कारणाभावे कार्यासंभवाच्चेत्यलम् ।

पूर्वपक्षी उक्तं परिहरन् अभेदसंबन्धावच्छिन्नघटत्वावच्छिन्नप्रकारताकशाब्दबोधकारणीभूतयोग्यताज्ञानमात्रं घटत्वे आपादयति— योग्यताज्ञानस्येति, धर्मितावच्छेदकं द्रव्यत्वं निवेश्य=द्रव्यत्वावच्छिन्नविशेष्यकयोग्यताज्ञानस्वीकारे हि तद्भेदेन=धर्मितावच्छेदकभेदेन यथा—'घटः प्रमेयः' इत्यत्र प्रमेयत्वं धर्मितावच्छेदकम् 'घटो द्रव्यम्' इत्यत्र द्रव्यत्वं धर्मितावच्छेदकमिति तत्तत्स्थलीय

लाघवाद् धर्मितावच्छेदकतासंबन्धेन शाब्दबुद्धौ तादृशसंबन्धेन तस्य धर्मितावच्छेदकमनिवेश्य हेतुताकल्पनस्यैव युक्तत्वात्, घटत्वादिधर्मितावच्छेदककघटत्वाद्यवच्छिन्नप्रकारकयोग्यताज्ञानबलादेव घटत्वादौ धर्मितावच्छेदकतासंबन्धेन तदापत्तेः ।

न च योग्यताज्ञानस्य धर्मितावच्छेदकनिष्ठप्रत्यासत्त्या हेतुत्वोपगमे द्रव्यत्वाद्यवच्छिन्नस्य पदादनुपस्थितत्वेपि द्रव्यत्वादौ तादृशप्रत्यासत्त्या प्रत्यासन्नयो-

---

धर्मितावच्छेदकभेदेन तद्घटितयोग्यताज्ञानस्यापि भेदप्राप्त्या तत्तत्स्थलीयभिन्नभिन्नधर्मितावच्छेदकघटितभिन्नभिन्नयोग्यताज्ञानानां कारणताकल्पनेनाऽनन्तकारणताकल्पनं स्यादिति तदपेक्षया लाघवाद् धर्मितावच्छेदकं द्रव्यत्वमनिवेश्य धर्मितावच्छेदकतासंबन्धेन शाब्दबोधं प्रति तादृशसंबन्धेन= धर्मितावच्छेदकतासंबन्धेन तस्य= योग्यताज्ञानस्य ( अभेदसंबन्धावच्छिन्नघटत्वावच्छिन्नप्रकारताकयोग्यताज्ञानस्य द्रव्यत्वावच्छिन्नविशेष्यकत्वनिवेशरहितस्य च ) हेतुताकल्पनं युक्तम्, तथा च घटत्वादिधर्मितावच्छेदककघटत्वाद्यवच्छिन्नप्रकारकयोग्यताज्ञानबलादेव= घटत्वं धर्मितावच्छेदकं यस्य तद् घटत्वधर्मितावच्छेदककं घटत्वावच्छिन्नप्रकारकं च यद् योग्यताज्ञानं तस्य धर्मितावच्छेदकतासंबन्धेन घटत्वे संभवाद् घटत्वे धर्मितावच्छेदकतासंबन्धेन तदापत्तेः=अभेदसंबन्धावच्छिन्नघटत्वावच्छिन्नप्रकारताकशाब्दबोधापत्तेः संभवात् तथा च 'द्रव्यं घटः' इत्यत्रेव 'घटो घटः' इत्यत्राप्यभेदान्वयबोधानुपपत्तिर्नास्त्येवेत्यर्थः । अत्र च ''धर्मितावच्छेदकमनिवेश्य'' इत्यनेन योग्यताज्ञाने धर्मितावच्छेदकनिवेशो न कर्तव्य इति यदुक्तं तस्य धर्मितावच्छेदकविशेष्यकत्वस्योच्चारणमात्रं न कर्तव्यमित्येवार्थो वस्तुतो योग्यताज्ञाने धर्मितावच्छेदकविशेष्यकत्वस्य सत्त्वादेव तदेव केवलं प्रदर्शितम्— घटत्वादिधर्मितावच्छेदककेति, उच्चारणं तु— अभेदसंबन्धावच्छिन्नघटत्वावच्छिन्नप्रकारकयोग्यताज्ञानस्य घटत्वेपि सत्त्वादित्येव कर्तव्यमित्यवधेयम् । तथेदानीं संबन्धत्वमपि शुद्धाया एव धर्मितावच्छेदकताया ज्ञेयं न तु द्रव्यत्वनिष्ठायाः. द्रव्यत्वनिष्ठाया धर्मितावच्छेदकताया द्रव्यत्वमात्रे एव संभवाद् घटत्वे चासंभवात्. द्रव्यत्वनिष्ठत्वनिवेशरहितायास्तु शुद्धाया धर्मितावच्छेदकतायाः संबन्धभूताया घटत्वेप्यनुपपत्त्यभावादित्यवधेयम् ।

ननु यद्येवं योग्यताज्ञानबलादेव शाब्दबोधः स्यात्तदा ''धर्मितावच्छेदकतासंबन्धेन द्रव्यत्वादौ तादृशान्वयबोधोत्पत्तिप्रयोजिका द्रव्यपदजन्यद्रव्यत्वाद्यवच्छिन्नविशेष्यकोपस्थितितदवच्छिन्नविशेष्यकयोग्यताज्ञानादिघटितसामग्र्येव (पृ. ४६)'' इत्यनेन यदुपस्थितेः शाब्दबोधकारणत्वमुक्तं तन्न युक्तं योग्यताज्ञानबलादेव शाब्दबोधसंभवात्, उपस्थितेर्व्यभिचारित्वाच्चेत्यभिप्रायेण शङ्कते योग्यताज्ञानकारणतावादी— न चेति, योग्यताज्ञानस्य धर्मितावच्छेदकनिष्ठप्रत्यासत्त्या=धर्मितावच्छेदकतासंबन्धेन शाब्दबोधं प्रति हेतुत्वस्वीकारे द्रव्यत्वाद्यवच्छिन्नस्य पदादनुपस्थितत्वेपि=द्रव्यपदजन्यद्रव्यत्वावच्छिन्नविषयकोपस्थितेरभावेपि द्रव्यत्वादौ तादृशप्रत्यासत्त्या=धर्मितावच्छेदकतासंबन्धेन प्रत्यासन्नात्=संबद्धात् ( वर्तमानात् ) योग्यताज्ञानात् तत्र=द्रव्यत्वे तादृशप्रत्यासत्त्या-

ग्यताज्ञानात् तत्र तादृशप्रत्यासत्त्या शाब्दबोधापत्तिः, आत्मनिष्ठप्रत्यासत्त्या हेतुभूतां द्रव्यत्वाद्यवच्छिन्नोपस्थितिमन्तरेणापि तादृशप्रमेयत्वाद्यवच्छिन्नोपस्थित्यादिदशायां प्रमेयत्वादौ धर्मितावच्छेदकतासंबन्धेन ज्ञानस्य फलजनकत्वात् तादृशद्रव्यत्वाद्यवच्छिन्नोपस्थितिविरहस्याऽकिंचित्करत्वादिति वाच्यम्, समान प्रकारताप्रत्यासत्त्या पदार्थोपस्थितेः शाब्दबोधे हेतुत्वोपगमात् ।

धर्मितावच्छेदकतासंबन्धेन शाब्दबोधापत्तिः संभवतीत्युपस्थित्यऽभावेपि शाब्दबोधसंभवे का सुपस्थितेः कारणत्वं स्यात् ? कार्यकारणभावस्यान्वयव्यतिरेकाभ्यामेवावधार्यत्वात्, किं च उपस्थितिर्हि प्रकारविशेष्यभूतपदार्थयोः स्वरूपमात्रविषया भवति न तु कमपि पदार्थं धर्मित ( विशेष्यता ) वच्छेदकत्वेनावगाहते, यथा—'द्रव्यं घटः' इत्यत्र घटपदेन घटघटत्वयोरुपस्थितिर्भवति द्रव्यपदेन च द्रव्यद्रव्यत्वयोरुपस्थितिर्भवति स्वरूपेणैव न हि द्रव्यत्वादौ धर्मितावच्छेदकत्वं भासते तथा चोपस्थितौ धर्मितावच्छेदकत्वेन कस्यापि पदार्थस्याऽभानात् कथमुपस्थि कचिदपि द्रव्यत्वादौ धर्मितावच्छेदकतासंबन्धेन वर्तेत ? तस्माद् धर्मितावच्छेदकतासंबन्धेन तू स्थितेः कारणत्वमेव नास्त्यसंभवात्, अद्धा—आत्मनिष्ठप्रत्यासत्त्योपस्थितिरात्मन्युत्पद्यते इत्य त्मनिष्ठप्रत्यासत्त्या उपस्थितेः कारणत्वे संभवत्यपि सति द्रव्यपदजन्यद्रव्यत्वावच्छिन्नविषयको स्थितेस्त्वात्मनिष्ठप्रत्यासत्त्याप्यत्र कारणत्वं न संभवति— उक्तव्यभिचारादित्याह— आत्मनिष्ठे आत्मनिष्ठप्रत्यासत्त्या=समवायेन हेतुभूताम्=हेतुत्वेन संभाव्यमानां द्रव्यत्वावच्छिन्नोपस्थितिं नापि तादृश=आत्मनिष्ठप्रत्यासत्त्या हेतुभूतप्रमेयत्वावच्छिन्नोपस्थितिदशायाम् ( सत्त्वे ) प्रमेय धर्मितावच्छेदकतासंबन्धेन ज्ञानस्य=योग्यत ज्ञानस्य फलजनकत्वात्=शाब्दबोधजनकत्वात् ( यो ग्यताज्ञानेन शाब्दबोधे संभवति ) तादृश=आत्मनिष्ठप्रत्यासत्त्या हेतुभूतद्रव्यत्वावच्छिन्नोपस्थि तेरभावस्याऽकिंचित्करत्वात्=शाब्दबोधाऽप्रतिबन्धकत्वान्न द्रव्यत्वावच्छिन्नोपस्थितेः कारणत्व एवम्—द्रव्यपदजन्यद्रव्यत्वावच्छिन्नविषयकोपस्थितिदशायां प्रमेयत्वे शाब्दबोधो जायत एवं प्रमेयत्वावच्छिन्नविषयकोपस्थितेरपि न कारणत्वं व्यभिचारात्, चालनीन्यायेनोपस्थितिमात्र व्यभिचारित्वादित्यर्थः । योग्यताज्ञाने तु द्रव्यत्वादीनां धर्मितावच्छेदकविधया भानाद् योग्यत ज्ञानं तादृशद्रव्यत्वादिनिष्ठधर्मितावच्छेदकताख्यसंबन्धेन द्रव्यत्वादौ संभवत्येवेति योग्यताज्ञानस्य धर्मितावच्छेदकतासंबन्धेन शाब्दबोधं प्रति कारणत्वं वक्तव्यम्, यदा चोपस्थितेर्व्यभिचारित्वात्का रणत्वमेव नास्ति तदा तादृश=आत्मनिष्ठप्रत्यासत्त्या हेतुभूताया द्रव्यत्वावच्छिन्नोपस्थितेरभा स्याकिंचित्करत्वम्=शाब्दबोधप्रतिबन्धकत्वं न संभवतीति उक्तयोग्यताज्ञानबलादेव शाब्दबो जायते स्वीकर्तव्यश्चेत्यभिप्रायः । अत्र 'घटो घटः' इत्यत्र शाब्दबोधापत्तिरस्ति नास्तीति न विचार्यते किं तूपस्थितेः धर्मितावच्छेदकतासंबन्धेन तथात्मनिष्ठप्रत्यासत्त्या कारणत्वं न संभ वतीति पूर्वपक्षतात्पर्यम् । अत एवोत्तरपक्षे प्रकारतासंबन्धेनोपस्थितेः कारणत्वं व्यवस्था इत्यवधेयम् ।

**येन संबन्धेन यद्धर्मावच्छिन्नकार्यं प्रति येन संबन्धेन यद्धर्मावच्छिन्नकार्यस्य व्यापकता तेन संबन्धेन तद्धर्मावच्छिन्नकार्योत्पादकसामग्र्या अपि तेन संबन्धेन तद्धर्मावच्छिन्नकार्योत्पत्तावऽपेक्षिततया प्रकारतासंबन्धेन द्रव्यत्वादौ द्रव्यपदजन्यपदार्थोपस्थित्यऽसत्त्वे तत्र धर्मितावच्छेदकतासंबन्धेन शाब्दबोधापत्तेरयोगात्।**

---

परिहारहेतुमाह– समानेति, योग्यताज्ञाने द्रव्यत्वं धर्मितावच्छेदकविधया भासते इति योग्यताज्ञानं शाब्दबोधं प्रति धर्मितावच्छेदकतासंबन्धेनैव कारणमिति समानधर्मितावच्छेदकतासंबन्धेन शाब्दबोधयोग्यताज्ञानयोः कार्यकारणभावः। उपस्थितौ च कस्यचिदपि द्रव्यत्वादेर्धर्मितावच्छेदकतया भानाभावादुपस्थितेर्धर्मितावच्छेदकतासंबन्धेन कारणत्वासंभवेपि समानप्रकारताप्रत्यासत्त्या=समानप्रकारतासंबन्धेन कारणत्वं संभवत्येव, अयं भावः– 'द्रव्यं घटः' इतिवाक्यजन्योपस्थितौ घटत्वं घटे प्रकारो घटश्च द्रव्ये प्रकारो द्रव्यत्वं च द्रव्ये प्रकारो द्रव्यमेकं विशेष्यम्, यद्यप्यत्रोपस्थितौ प्रकारताया विशेष्यतायाश्च निरवच्छिन्नत्वात् प्रकारतावच्छेदकतया विशेष्यतावच्छेदकतया च कस्यचिदपि भानं न भवति तथापि द्रव्यत्वस्य प्रकारतया भानं तु भवत्येव द्रव्यप्रकारतयोपस्थितत्वात् तच्च द्रव्यत्वं शाब्दबोधेपि द्रव्यप्रकारतया 'द्रव्यं घटः' इत्यत्र भासत एवेति द्रव्यत्वनिष्ठा प्रकारता समानप्रकारता प्राप्ता तादृशसमानप्रकारतासंबन्धेनोपस्थितेः कारणत्वमस्ति– द्रव्यत्वे प्रकारतासंबन्धेनोपस्थितिशाब्दबोधयोरुभयोरपि सत्त्वादेवेति नोपस्थितेरकारणत्वमुपस्थितिविरहस्याऽकिंचित्करत्वं चेति।

ननु धर्मितावच्छेदकतासंबन्धेन शाब्दबोधे जननीये प्रकारतासंबन्धेनोपस्थितेर्द्रव्यत्वादौ संभवेपि कथमुपयोगः स्यादित्याशङ्क्य प्रकारतासंबन्धेनोपस्थितेर्धर्मितावच्छेदकतासंबन्धावच्छिन्नशाब्दबोधं प्रति कारणत्वमुपपादयति– येनेति, यथा– येन संबन्धेन=समवायसंबन्धेन यद्धर्मावच्छिन्नकार्यं प्रति=घटत्वावच्छिन्नकार्यं प्रति येन संबन्धेन=तादात्म्यसंबन्धेन यद्धर्मावच्छिन्नकार्यस्य=द्रव्यत्वावच्छिन्नकार्यस्य व्यापकतास्तीति तेन संबन्धेन=तादात्म्यसंबन्धेन तद्धर्मावच्छिन्नकार्योत्पादकसामग्र्याः=द्रव्यत्वावच्छिन्नकार्योत्पादकसमवायिकारणादिसमवधानादिरूपसामग्र्या अपि तेन संबन्धेन=समवायसंबन्धेन तद्धर्मावच्छिन्नकार्योत्पत्तौ=घटत्वावच्छिन्नकार्योत्पत्तौ अपेक्षितत्वं भवति– व्याप्यधर्मावच्छिन्नकार्योत्पत्तेः व्यापकधर्मावच्छिन्नकार्योत्पादकसामग्रीसापेक्षत्वेन समवायिकारणनिमित्तकारणादिसमवधानादिरूपां द्रव्योत्पादकसामग्रीं विना द्रव्यव्याप्यस्य घटस्योत्पत्तेरसंभवात् ( समवायसंबन्धेन कार्यत्वावच्छिन्नं प्रति तादात्म्यसंबन्धेन द्रव्यत्वेन द्रव्यं समवायिकारणमिति व्यापककार्यकारणभावः। समवायसंबन्धेन घटत्वावच्छिन्नकार्यं प्रति तादात्म्यसंबन्धेन कपालत्वेन कपालः समवायिकारणमिति व्याप्यकार्यकारणभावः ), तथा– प्रकृतेपि येन संबन्धेन=धर्मितावच्छेदकतासंबन्धेन यद्धर्मावच्छिन्नकार्यं प्रति=घटत्वाच्छिन्नप्रकारकाऽभेदसंसर्गकशाब्दबोधत्वावच्छिन्नकार्यं प्रति येन संबन्धेन= प्रकारतासंबन्धेन यद्धर्मावच्छिन्नकार्यस्य शाब्दबोधत्वरूपसामान्यधर्मावच्छिन्नकार्यस्य व्यापकता=अधिकदेशवृत्तित्वं तेन संबन्धेन प्रकारतासंबन्धेन तद्धर्मा-

**न च यत्र प्रमेयत्वाद्यवच्छिन्नविशेष्यकवृत्तिज्ञानजन्यप्रमेयत्वाद्यवच्छिन्नविशेष्यकोपस्थितावेव उद्बोधकान्तराद् द्रव्यत्वाद्यवच्छिन्नस्य भानं तत्र द्रव्यत्वाद्यवच्छिन्नविषयकशाब्दापत्तिवारणाय तद्धर्मावच्छिन्नविशेष्यकशाब्दबोधं प्रति**

वच्छिन्नकार्योत्पादकसामग्र्याः=शाब्दबोधत्वरूपसामान्यधर्मावच्छिन्नकार्योत्पादकसामग्र्या अ तेन संबन्धेन=धर्मितावच्छेदकतासंबन्धेन तद्धर्मावच्छिन्नकार्योत्पत्तौ=घटत्वावच्छिन्नप्रकारताक भेदसंसर्गकशाब्दबोधत्वावच्छिन्नकार्योत्पत्तौ अपेक्षितत्वं भवतीति प्रकारतासंबन्धेन द्रव्यत्वा द्रव्यपदजन्यपदार्थोपस्थित्यभावे तत्र=द्रव्यत्वादौ धर्मितावच्छेदकतासंबन्धेनापि शाब्दबोधापत्ते शाब्दबोधोत्पत्तेरसंभवादित्यन्वयः।

अयं भावः— अधिकदेशवृत्तित्वं हि व्यापकत्वम् 'द्रव्यं घटः' इत्यत्र च विशेष्यता केवलं द्रव्ये एव वर्तते प्रकारता च घटघटत्वद्रव्यत्वेषु त्रिषु वर्तते इति प्रकारताया विशदत्वा प्रकारतासंबन्धेन शाब्दबोधस्य घटघटत्वद्रव्यत्वेषु संभवादधिकदेशवृत्तित्वमस्तीति व्यापकत्वम् धर्मितावच्छेदकतासंबन्धेन तु शाब्दबोधो द्रव्यत्वमात्रे एव वर्तते इति तस्य व्याप्यत्वम्। त शाब्दबोधत्वरूपसामान्यधर्मावच्छिन्नस्य व्यापकत्वम्, घटत्वावच्छिन्नप्रकारकाऽभेदसंसर्गकशा बोधत्वावच्छिन्नस्य व्याप्यत्वम्। व्याप्यधर्मावच्छिन्ने च कार्ये जननीये व्यापकधर्मावच्छिन्नका त्पादकसामग्री अपेक्ष्यते यथा— करीषजन्यत्वविशिष्टवह्नित्वरूपव्याप्यधर्मावच्छिन्नवह्नौ जनन शुद्धवह्नित्वरूपव्यापकधर्मावच्छिन्नवह्न्युत्पादकसामग्री इन्धनादिरूपाऽपेक्षिता भवति तद वह्न्युत्पत्त्यसंभवात्, यथा च घटत्वरूपव्याप्यधर्मावच्छिन्ने घटे जननीये द्रव्यत्वरूपव्यापकध वच्छिन्नकार्योत्पादिका समवायिकारणादिसमवधानादिरूपा सामग्र्यऽपेक्षिता भवति, तथा— प्र तेपि घटत्वावच्छिन्नप्रकारकाऽभेदसंसर्गकशाब्दबोधत्वरूपव्याप्यधर्मावच्छिन्ने शाब्दबोधे जनन शुद्धशाब्दबोधत्वरूपव्यापकधर्मावच्छिन्नशाब्दबोधोत्पादिका या प्रकारतासंबन्धेनोपस्थितिस्तस्य अवश्यमपेक्षा भवत्येवेति प्रकारतासंबन्धेन द्रव्यत्वे द्रव्यपदजन्योपस्थित्यऽसत्त्वे द्रव्यत्वे धर्मित वच्छेदकतासंबन्धेनापि शाब्दबोधोत्पत्तिर्न संभवतीति प्रकारतासंबन्धेनोपस्थितेः शाब्दबोधक रणत्वमवश्यमभ्युपगन्तव्यम्।

न चेति— यदि समानप्रकारताप्रत्यासत्त्योपस्थितेः शाब्दबोधं प्रति कारणत्वं स्वीक्रियते त यत्र प्रमेयपदेन प्रमेयत्वावच्छिन्नविषयकोपस्थितिः स्याद् उद्बोधकान्तराच्च द्रव्यत्वावच्छिन्नविषयक पस्थितिः स्यात्तत्र तादृशसमूहालम्बनात्मकप्रमेयद्रव्ययोरुपस्थितौ प्रमेयपदजन्यत्वेन पदजन्यत्व स्यैव तत्र प्रमेयस्यैव विशेष्यत्वेन द्रव्यस्य प्रकारत्वाच्च उद्बोधकान्तरादुपस्थितद्रव्ये प्रकारतासं न्धेनोपस्थितेः सत्त्वाद् द्रव्ये शाब्दबोधोपि स्यादेव कारणसत्त्वे कार्यावश्यंभावात्, न चैवमुद् धकान्तरादुपस्थितपदार्थे उद्बोधकान्तरजन्योपस्थितिसत्त्वेपि शाब्दबोध इष्ट इत्युक्तस्थले तद्वा णाय=शाब्दबोधापत्तिवारणाय तद्धर्मावच्छिन्नविशेष्यकशाब्दबुद्धित्वावच्छिन्नं प्रति तद्धर्मावच्छि विशेष्यकं यद् 'द्रव्यं द्रव्यपदशक्यम्' इत्याकारकं वृत्तिज्ञानं तादृशवृत्तिज्ञानजन्यतद्धर्मप्रकार

तद्धर्मावच्छिन्नविशेष्यकवृत्तिज्ञानजन्यतद्धर्मप्रकारकपदार्थोपस्थितेर्हेतुता वाच्या तथा च प्रकारविशेष्यनिवेशस्यावश्यकत्वे विषयनिष्ठप्रत्यासत्त्या हेतुताकल्पनमयुक्तम्, तथा सति पुरुषभेदेन कार्यकारणभावबाहुल्यप्रसङ्ग इतिवाच्यम्, स्वजन-

---

पदार्थोपस्थितेर्हेतुत्वं वक्तव्यं तथा चोक्तस्थले द्रव्यस्य योपस्थितिर्जाता सोद्बोधकान्तरादेव जाता न तु द्रव्यपदवृत्तिज्ञानजन्यास्तीति तादृशोद्बोधकान्तरजन्योपस्थितेः शाब्दबोधं प्रति कारणत्वमेव नास्ति येनोद्बोधकान्तरादुपस्थितद्रव्ये शाब्दबोधापत्तिः स्यादित्यर्थः । तथा चेति– तथा च 'तद्धर्मावच्छिन्नविशेष्यकशाब्दबोधं प्रति तद्धर्मावच्छिन्नविशेष्यकवृत्तिज्ञानजन्यतद्धर्मप्रकारकपदार्थोपस्थितेर्हेतुत्वम्' इत्येवं कार्यकारणभावे स्वीकृते कार्यकारणभावे प्रकारविशेष्ययोर्निवेशस्यावश्यकत्वे प्राप्ते विषयनिष्ठप्रत्यासत्त्या हेतुताकल्पनमयुक्तमेवेत्यर्थः । अयं भावः– शाब्दबोधतत्कारणयोश्च कार्यकारणभाव आत्मनिष्ठप्रत्यासत्त्यापि भवति विषयनिष्ठप्रत्यासत्त्यापि च भवति तत्रात्मनिष्ठप्रत्यासत्त्या यदात्मन्युपस्थित्यादिकं कारणं भवति तदात्मन्येव शाब्दबोधोऽप्यर्थादेव जायते नान्यत्र प्रसङ्ग इति तत्पुरुषीयत्वप्रवेशापेक्षा न भवति किं तु पटाद्युपस्थित्यादिसत्त्वे घटादिविषयकोऽपि शाब्दबोधः स्यादिति तद्वारणाय विषयनिवेशापेक्षा भवत्येव यथा– घटत्वावच्छिन्नविषयकशाब्दबोधं प्रति घटत्वावच्छिन्नविषयकोपस्थितेः कारणत्वमिति, विषयनिष्ठप्रत्यासत्त्या च यस्मिन् विषये उपस्थित्यादिकं भवति तत्रैव शाब्दबोधोऽपि संभवति नाऽन्यत्रेति विषयनिवेशापेक्षा नास्ति किं तु तत्पुरुषीयत्वनिवेशापेक्षा भवत्येव यथा– यज्ञदत्तीयशाब्दबोधं प्रति यज्ञदत्तीयोपस्थित्यादिकं कारणमिति. अन्यथा देवदत्तस्योपस्थित्यादिसत्त्वे यज्ञदत्तस्यापि शाब्दबोधः स्यादित्येवं स्थिते उक्तोद्बोधकान्तरजन्योपस्थितेर्द्रव्यादौ प्रकारतासंबन्धेन सत्त्वे तत्र द्रव्ये शाब्दबोधोऽपि स्यादेवेति तद्वारणाय यदि विषयनिष्ठप्रत्यासत्त्या कार्यकारणभावस्वीकारेऽपि प्रकारविशेष्ययोर्निवेशस्योक्तस्यापेक्षा प्राप्ता तदा विषयनिष्ठप्रत्यासत्त्या ( प्रकारतासंबन्धेनापि ) उपस्थितेः कारणत्वाश्रयणमयुक्तमेव यतो विषयनिष्ठप्रत्यासत्त्या कारणत्वं हि विषयप्रवेशप्रयुक्तगौरवपरिहारार्थमेवाश्रीयते विषयप्रवेशापेक्षा तूक्तरीत्या प्राप्तैव पुरुषान्तरस्य शाब्दबोधवारणाय तत्पुरुषीयत्वनिवेशोऽपि कर्तव्य एवेति विषयनिष्ठप्रत्यासत्त्या हेतुताकल्पनमयुक्तमेव तथा चात्मनिष्ठप्रत्यासत्त्यैवोपस्थितेर्हेतुत्वं स्वीकार्यम्. आत्मनिष्ठप्रत्यासत्त्या हेतुत्वोपगमे विषयप्रवेशापेक्षासत्त्वेऽपि तत्पुरुषीयत्वप्रवेशापेक्षाभावेन लाघवात्, एतदेवाह– तथा सतीति । तथा सति=विषयनिष्ठप्रत्यासत्त्या हेतुत्वोपगमे सति तत्पुरुषीयत्वप्रवेशापेक्षया देवदत्तादिपुरुषभेदेनाऽनन्तकार्यकारणभावकल्पनाप्रसङ्गः, उक्तोद्बोधकान्तरजन्योपस्थित्या शाब्दबोधवारणाय विषयप्रवेशापेक्षाप्यस्त्येवेति महद् गौरवम् । आत्मनिष्ठसमवायप्रत्यासत्त्या च द्रव्यत्वावच्छिन्नधर्मिकघटत्वावच्छिन्नप्रकारकाभेदसंसर्गकशाब्दबोधं प्रति क्लृप्ता या द्रव्यत्वावच्छिन्नधर्मिकयोग्यताज्ञानरूपा सामग्री तदऽभावान्न 'घटो घटः' इत्यत्र शाब्दबोधापत्तिः– अत्र द्रव्यत्वस्य धर्मितावच्छेदकत्वाभावादितिभावः ।

कज्ज्ञानीयवृत्तिनिष्ठप्रकारतानिरूपितविशेष्यतावच्छेदकताविशिष्टप्रकारतासंबन्धेनोपस्थितेर्हेतुतां स्वीकृत्य तादृशापत्तेर्वारणात् ।

परिहारमाह— स्वजनकज्ज्ञानीयेति, यद्युद्बोधकान्तरजन्योपस्थित्या शाब्दबोधवारणाय विषयनिष्ठप्रत्यासत्त्या कार्यकारणभावस्वीकारेपि 'तद्धर्मावच्छिन्नविशेष्यकशाब्दबोधं प्रति तद्धर्मावच्छिन्नविशेष्यकवृत्तिज्ञानजन्यतद्धर्मप्रकारकोपस्थितेर्हेतुत्वम्' इत्येवं कार्यकारणभावे विषयप्रवेशापेक्षा स्याद् विषयप्रवेशेन गौरवापत्त्या विषयनिष्ठप्रत्यासत्त्या कार्यकारणभावस्त्यक्तः स्यादात्मनिष्ठप्रत्यासत्त्या च स्वीकृतः स्यात् तदात्मनिष्ठप्रत्यासत्त्या कार्यकारणभावे विषयप्रवेशावश्यंभावेन 'द्रव्यं घटः' इत्यत्र शाब्दबोधकारणं या द्रव्यत्वावच्छिन्नधर्मिकयोग्यताज्ञानादिरूपा सामग्री तस्याः 'घटो घटः' इत्यत्र द्रव्यत्वस्य धर्मितावच्छेदकत्वाभावेनाऽभावात् शाब्दबोधापत्तिर्न स्यात् न चैवमस्ति यतः— स्वजनकज्ज्ञानीयवृत्तिनिष्ठप्रकारतानिरूपितविशेष्यतावच्छेदकताविशिष्टप्रकारतासंबन्धेनोपस्थितेः कारणत्वं स्वीक्रियते ( स्वं उपस्थितिः )। प्रकारतासंबन्धश्च विषयनिष्ठप्रत्यासत्तिरेव, तथा च 'द्रव्यं घटः' इत्यत्र स्वं द्रव्यपदजन्योपस्थितिस्तज्जनकं यत् 'द्रव्यं द्रव्यपदशक्तिमत्' इतिशक्तिरूपवृत्तिज्ञानं तादृशज्ञाननिरूपिता या शक्तिरूपवृत्तिनिष्ठा प्रकारता ( उक्तशक्तिज्ञाने शक्तेरेव प्रकारत्वात् ) तन्निरूपिता विशेष्यता द्रव्ये वर्तते ( उक्तशक्तिज्ञाने द्रव्यस्य विशेष्यत्वात् ) विशेष्यतावच्छेदकता च द्रव्यत्वे वर्तते अथ च तत्र द्रव्यत्वे द्रव्यपदजन्यद्रव्यपदार्थोपस्थितिनिरूपिता प्रकारतापि वर्तते ( उपस्थितौ द्रव्यस्य विशेष्यत्वेन तत्र द्रव्यत्वस्य प्रकारत्वेन भानाद् उपस्थितिनिरूपिता द्रव्यत्वे प्रकारतास्ति ) इति द्रव्यत्वे स्वजनकज्ज्ञानीयवृत्तिनिष्ठप्रकारतानिरूपितविशेष्यतावच्छेदकताप्यस्ति उपस्थितीयप्रकारताप्यस्तीत्येषा प्रकारता सामानाधिकरण्यसंबन्धेन स्वजनकज्ज्ञानीयवृत्तिनिष्ठप्रकारतानिरूपितविशेष्यतावच्छेदकताविशिष्टा जाता स्वजनकज्ज्ञानीयवृत्तिनिष्ठप्रकारतानिरूपितविशेष्यतावच्छेदकताविशिष्टप्रकारतासंबन्धेनोपस्थितेः शाब्दबोधं प्रति कारणत्वं स्वीक्रियते, एतादृशप्रकारतासंबन्धेन च 'द्रव्यं घटः' इत्यत्र द्रव्योपस्थितेः सत्त्वेन तत्र द्रव्यत्वे शाब्दबोधोपि जायते, उद्बोधकान्तरेण द्रव्योपस्थितिकाले च नैतादृशप्रकारतासंबन्धेनोपस्थितिर्जायते— तस्या उपस्थितेः वृत्तिज्ञानजन्यत्वाभावाद् उद्बोधकान्तरजन्योपस्थितिनिरूपितद्रव्यनिष्ठप्रकारतायाश्च स्व ( उपस्थिति ) जनकज्ज्ञानीयवृत्तिनिष्ठप्रकारतानिरूपितविशेष्यतावच्छेदकताविशिष्टत्वाभावादिति कारणीभूताया उक्तप्रकारतासंबन्धेनोपस्थितेरभावादेव शाब्दबोधो न संभवतीत्येवंरीत्या तादृशापत्तेः= उक्तोद्बोधकान्तरजन्योपस्थित्या शाब्दबोधापत्तेर्वारणात्, तथा चोक्तोद्बोधकान्तरजन्योपस्थित्या शाब्दबोधापत्तिवारणार्थं विषयप्रवेशापेक्षा नास्तीति विषयनिष्ठप्रत्यासत्त्या कार्यकारणभावे उक्तदोषस्याभावात् 'द्रव्यं घटः' इत्यत्र विषयनिष्ठप्रत्यासत्त्या घटत्वावच्छिन्नप्रकारकाभेदसंसर्गकयोग्यताज्ञानस्य यस्य शाब्दबोधकारणत्वमस्ति तादृशयोग्यताज्ञानस्य 'घटो घटः' इत्यत्रापि सत्त्वाच्छाब्दबोधापत्तिरस्त्येव विषयनिष्ठप्रत्यासत्त्या कारणत्वस्वीकारेण द्रव्यत्वावच्छिन्नधर्मिकत्वस्य प्रवेशापेक्षाभावादित्यर्थः ।

**न च पदार्थेऽपि प्रकारतासंबन्धेन शाब्दबोधोत्पत्त्या तत्र तादृशप्रकारतासंबन्धेन पदार्थोपस्थितेरभावात् प्रकारनिष्ठप्रत्यासत्त्या पदार्थोपस्थितेर्हेतुता व्यभिचारेण कल्पयितुमशक्येतिवाच्यम्, परामर्शकारणताविचारदर्शितदिशा व्यभिचारस्य**

ननु कार्यकारणभावस्यान्वयव्यतिरेकाभ्यामवधार्यत्वादुक्तप्रकारतासंबन्धेनोपस्थितेः कारणत्वमेव न संभवति व्यभिचारादित्याशङ्कते– न चेति 'द्रव्यं घटः' इत्यत्र द्रव्यं विशेष्यं घटश्च प्रकार इति यथा द्रव्ये विशेष्यतासंबन्धेन द्रव्यत्वे च विशेष्यतावच्छेदकतासंबन्धेन शाब्दबोधो जायते तथा पदार्थेऽपि= घटेऽपि प्रकारतासंबन्धेन शाब्दबोधो जायते एव तत्र=घटे च तादृशप्रकारतासंबन्धेन=उक्तप्रकारतासंबन्धेन पदार्थोपस्थितिः= घटोपस्थितिस्तु नास्त्येव यतः– घटपदजन्यघटोपस्थितौ घटो विशेष्यतयैव भासते न तु प्रकारतयेति घटे घटपदजन्योपस्थितीयप्रकारतैव नास्तीति कथं प्रकारतासंबन्धेन घटे उपस्थितिः स्यादिति घटे प्रकारतासंबन्धेनोपस्थित्यभावेऽपि 'द्रव्यं घटः' इतिवाक्यजन्यशाब्दबोधस्तु प्रकारतासंबन्धेन घटे उत्पद्यते एवेत्युपस्थितेस्तादृशप्रकारतासंबन्धेन व्यभिचारित्वात्कारणत्वं न संभवति । तथा चात्मनिष्ठप्रत्यासत्त्या योग्यताज्ञानस्य कारणत्वं वक्तव्यं आत्मनिष्ठप्रत्यासत्त्या योग्यताज्ञानं च द्रव्यत्वावच्छिन्नधर्मिकमेव 'द्रव्यं घटः' इत्यत्रोक्तरीत्या कारणं तस्य च 'घटो घटः' इत्यत्राऽसंभवान्न शाब्दबोधापत्तिरित्यर्थः । घटपदजन्योपस्थितौ घटस्य विशेष्यत्वेन पदार्थत्वादुक्तं– पदार्थेपीति । घटेपि 'द्रव्यं घटः' इतिवाक्यजन्यशाब्दबोधीया प्रकारतास्त्येव घटस्य द्रव्ये विशेषणत्वादिति घटे प्रकारतासंबन्धेन शाब्दबोधसंभवः । उपस्थितिश्चोपस्थितीयप्रकारतासंबन्धेनैव घटादौ शाब्दबोधाधिकरणेऽपेक्ष्यते न त्वन्यदीयप्रकारतासंबन्धेन. घटे उपस्थितीयप्रकारता तु नास्त्येव– उपस्थितौ घटस्य विशेष्यत्वेनोपस्थितीयविशेष्यताया एव घटे वर्तमानत्वादित्युक्तं तादृशप्रकारतेति । द्रव्यत्वं तु द्रव्यप्रकारतयैव द्रव्यपदजन्योपस्थितौ भासते इति द्रव्यत्वे प्रकारतासंबन्धेन द्रव्यपदजन्योपस्थितिरस्त्येवेति द्रव्यत्वे शाब्दबोधोत्पत्तौ न कोपि दोष इत्यवधेयम् । प्रकारनिष्ठप्रत्यासत्त्या=प्रकारनिष्ठा या प्रकारता तल्लक्षणप्रत्यासत्त्या ।

परिहारमाह– परामर्शेति, यथा वह्न्यनुमितिं प्रति धूमपरामर्शस्यापि कारणत्वमस्त्यालोकपरामर्शस्यापि कारणत्वमस्ति तयोश्च परामर्शयोः परस्परजन्यानुमितौ व्यभिचारे प्राप्ते धूमपरामर्शाव्यवहितोत्तरत्वविशिष्टानुमितिं प्रत्येव धूमपरामर्शस्य कारणत्वमालोकपरामर्शाव्यवहितोत्तरत्वविशिष्टानुमितिं प्रत्येवालोकपरामर्शस्य कारणत्वमित्येवं कार्यतावच्छेदककोटौ कारणाव्यवहितोत्तरत्वनिवेशेन व्यभिचारो निवारितस्तथात्रापि कार्यतावच्छेदककोटौ कारणाव्यवहितोत्तरत्वनिवेशेन व्यभिचारो निवारणीयस्तथा च स्वजनकज्ञानीयवृत्तिनिष्ठप्रकारतानिरूपितविशेष्यतावच्छेदकताविशिष्टप्रकारतासंबन्धेनोपस्थित्यव्यवहितोत्तरत्वविशिष्टशाब्दबोधं प्रति स्वजनकज्ञानीयवृत्तिनिष्ठप्रकारतानिरूपितविशेष्यतावच्छेदकताविशिष्टप्रकारतासंबन्धेनोपस्थितेः कारणत्वं यथा 'द्रव्यं घटः' इतिवाक्यजन्यं द्रव्यत्वे जायमानशाब्दबोधं प्रति । घटे जायमानशाब्दबोधं प्रति तूक्तप्रकारतासंबन्धेनो-

वारणीयत्वादिति चेत् ?, तर्हि तद्धर्मावच्छिन्नाऽभेदसंसर्गावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकतासंबन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति तद्धर्मभेदस्यापि हेतुतायाः स्वीकरणीयतया न 'घटो घटः' इत्यादिस्थले शाब्दबोधापत्तिः ।

'स घटः' इत्यादिवाक्याज्जातित्वादिना घटत्वादिधर्मितावच्छेदककस्य स्वरूपतो घटत्वादिप्रकारतावच्छेदककस्य, 'घटः सः' इत्यादिवाक्यात् स्वरूपतो घटत्वा-

---

पस्थितेः कारणत्वमेव नास्ति येन घटेऽसत्त्वाद् व्यभिचारित्वं स्यात् किं तु घटे यादृशप्रकारतासंबन्धेनोपस्थित्यनन्तरं शाब्दबोधो जायते तादृशप्रकारतासंबन्धेनैवोपस्थितेः कारणत्वमिति न व्यभिचारः । तथा च विषयनिष्ठप्रत्यासत्त्या कार्यकारणभावे दोषाभावाद् योग्यताज्ञाने द्रव्यत्वावच्छिन्नधर्मिकत्वस्य प्रवेशापेक्षाभावेन 'द्रव्यं घटः' इत्यत्र यद् घटत्वावच्छिन्नप्रकारकाभेदसंसर्गकयोग्यताज्ञानं शाब्दबोधजनकं तस्य 'घटो घटः' इत्यत्रापि सत्त्वाद् घटत्वावच्छिन्नप्रकारकाभेदसंसर्गकशाब्दबोधः स्यादेव कारणसत्त्वे कार्यावश्यंभावादित्यर्थः ।

अथेत्यादिनाशङ्कितं सिद्धान्ती परिहरति—तर्हीति । तद्धर्मपदेन प्रकारतावच्छेदकधर्मो घटत्वादिर्ग्राह्यः । तद्धर्मावच्छिन्नाभेदसंसर्गावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकतासंबन्धेन शाब्दबोधोत्पत्तिं प्रति तद्धर्मभेदस्य=प्रकारतावच्छेदकधर्मभेदस्य हेतुत्वम् । यत्र विशेष्यतावच्छेदकप्रकारतावच्छेदकधर्मयोर्भेदो भवति तत्रैवाऽभेदान्वयबोधो भवति यथा 'द्रव्यं घटः' इत्यत्र विशेष्यतावच्छेदकं द्रव्यत्वं प्रकारतावच्छेदकं च तद्भिन्नं घटत्वमिति । 'घटो घटः' इत्यत्र तु घटत्वमेव विशेष्यतावच्छेदकं प्रकारतावच्छेदकं चेति विशेष्यतावच्छेदकप्रकारतावच्छेदकयोर्भेदाभावान्नाऽभेदान्वयबोधो भवतीत्यर्थः । अत्र— "तद्धर्मावच्छिन्नाऽभेदसंसर्गावच्छिन्ना च या घटनिष्ठा प्रकारता तन्निरूपिता विशेष्यता द्रव्ये तदवच्छेदकता ( विशेष्यतावच्छेदकता ) संबन्धेन 'द्रव्यं घटः' इति शाब्दत्वावच्छिन्नं द्रव्यत्वे जायते तत्र द्रव्यत्वे तद्धर्मभेदो घटत्वभेदो हेतुरस्ति, 'घटो घटः' इत्यत्र तु न शाब्दबोधापत्तिः— घटत्वे घटत्वभेदाभावादित्यर्थः" इति कृष्णंभट्टाः ।

किं च 'द्रव्यं घटः' इत्यत्र घटमुद्दिश्य द्रव्यत्वविधानाद् द्रव्यमुद्दिश्य घटत्वविधानासंभवाच्च घटविशेष्यक एव शाब्दबोधो युक्तो न तु घटप्रकारको येन 'द्रव्यं घटः' इतिदृष्टान्तेन 'घटो घटः' इत्यत्र घटप्रकारकशाब्दबोधापत्तिः स्यादित्यपि विज्ञेयम् ।

ननु यद्युक्तरीत्याऽभेदसंसर्गकशाब्दबोधं प्रति तद्धर्मभेदस्य नाम विशेष्यतावच्छेदकप्रकारतावच्छेदकधर्मयोर्भेदस्य हेतुत्वं स्वीक्रियते तदा 'स घटः' 'घटः सः' इत्यादौ योऽभेदसंसर्गकशाब्दबोध इष्टः स नोपपद्येत— विशेष्यतावच्छेदकप्रकारतावच्छेदकधर्मयोर्भेदाभावात्. यतः— 'यः खल्वत्र जातिमानस्ति स घट आनेतव्यः' इतिवाक्यघटके 'स घटः' इति वाक्ये तत्पदेन जातिमान् बोध्यते इति जात्यवच्छिन्नेऽत्र तत्पदस्य शक्तिः तत्पदवाच्यो जातिमानेव विशेष्य उद्देश्यत्वात् घटश्च प्रकारो घटे प्रकारतावच्छेदकधर्मो घटत्वं तत्पदवाच्ये जातिमति विशेष्ये च विशेष्यतावच्छेदकधर्मो जातिरेव जातौ च घटत्वभेदो नास्त्येव जातेर्घटत्वादिरूपत्वात्. अत्रापि वस्तुतो विशेष्य-

**दिधर्मितावच्छेदककस्य जातित्वादिविशिष्टघटत्वावच्छिन्नप्रकारताकस्य शाब्दबोधस्योपपत्तये विशेष्यत्वप्रकारत्वयोरवच्छेदकत्वे निरवच्छिन्नत्वेन विशेषणीये ।**

तावच्छेदकधर्मो घटत्वमेव तत्पदस्य घटबोधकत्वादेव किंतु तस्य घटत्वस्य घटत्वत्वेन रूपेण प्रतीतिर्न भवति किं तु जातित्वेन प्रतीतिर्भवति तत्पदस्यात्र जातिमति शक्तत्वात्, जातिमद्रूपेणैव घटबोधकत्वात् तयोश्च विशेष्यतावच्छेदकप्रकारतावच्छेदकधर्मयोर्जातिघटत्वयोर्भेदाभावादत्राभेदसंसर्गकशाब्दबोधो न स्यादेव, तथा 'घटः सः' इत्यत्रापि तत्पदस्योक्तरीत्या जातिमति शक्तत्वात् विशेष्यतावच्छेदकप्रकारतावच्छेदकधर्मयोर्घटत्वजात्योर्भेदाभावादिष्टोऽभेदसंसर्गकशाब्दबोधो न स्यादेवेत्याशङ्क्याह— स घट इत्यादीति ।

'स घटः' 'घटः सः' इत्यादावभेदसंसर्गकविवक्षितशाब्दबोधस्योपपत्तये विशेष्यत्वप्रकारत्वयोरवच्छेदकत्वे निरवच्छिन्नत्वेन विशेषणीये अर्थात्—यत्र विशेष्यतावच्छेदकता प्रकारतावच्छेदकता च निरवच्छिन्ना भासते तादृशशाब्दबोधं प्रत्येव तद्धर्मभेदस्य हेतुत्वमस्ति तथा च— निरवच्छिन्नावच्छेदकताकविशेष्यताकम् ( निरवच्छिन्नविशे ष्यतावच्छेदकताकम् ) निरवच्छिन्नावच्छेदकताकप्रकारताकम् ( निरवच्छिन्नप्रकारतावच्छेदकताकम्, च शाब्दबोधं प्रति तद्धर्मभेदस्य हेतुत्वम्, 'द्रव्यं घटः' इत्यत्र द्रव्यत्वनिष्ठा या विशेष्यतावच्छेदकतास्ति सा निरवच्छिन्नास्ति द्रव्यत्वस्य स्वरूपेणैव भासमानत्वात् तथा घटत्वनिष्ठा प्रकारतावच्छेदकतापि निरवच्छिन्नास्ति घटत्वस्यापि स्वरूपेणैव भासमानत्वादिति तादृशशाब्दबोधं प्रति तद्धर्मभेदस्योक्तरीत्या हेतुत्वमस्ति. अस्ति च तत्र द्रव्यत्वघटत्वयोर्भेदः । अत्र तु 'स घटः' इत्यस्य 'जातिमान् घटः' इत्यर्थः जातिमानेव च विशेष्यः विशेष्यतावच्छेदकता जातौ वर्तते जातेश्च जातित्वेन रूपेण भासमानत्वात् जातिनिष्ठा विशेष्यतावच्छेदकता जातित्वावच्छिन्नास्ति तथा चात्र शाब्दबोधः सावच्छिन्नविशेष्यतावच्छेदकताको जायते न तु निरवच्छिन्नविशेष्यतावच्छेदकताकः, सावच्छिन्नविशेष्यतावच्छेदकताकशाब्दबोधं प्रति तु तद्धर्मभेदस्य हेतुत्वमेव नास्तीत्यऽत्र विशेष्यतावच्छेदकप्रकारतावच्छेदकधर्मयोर्जातिघटत्वयोर्भेदाभावेपि नाभेदसंसर्गकशाब्दबोधस्यानुपपत्तिः । एवम्—'घटः सः' इत्यस्य 'घटो जातिमान्' इत्यर्थः जातिमानेव च प्रकारः प्रकारतावच्छेदकतात्र जातौ वर्तते जातेश्च जातित्वेन रूपेण भासमानत्वात् जातिनिष्ठा प्रकारतावच्छेदकता ( प्रकारता जातिमतीति जातिमद्विशेषणीभूतजातौ प्रकारतावच्छेदकता ) जातित्वावच्छिन्नास्ति. तथा चात्र शाब्दबोधः सावच्छिन्नप्रकारतावच्छेदकताको जायते न तु निरवच्छिन्नप्रकारतावच्छेदकताकः सावच्छिन्नप्रकारतावच्छेदकताकशाब्दबोधं प्रति च तद्धर्मभेदस्य हेतुत्वमेव नास्तीत्यत्र विशेष्यतावच्छेदकप्रकारतावच्छेदकधर्मयोर्घटत्वजात्योर्भेदाभावेपि नाऽभेदसंसर्गकशाब्दबोधस्यानुपपत्तिः ।

'स घटः' इत्यस्य शाब्दबोधस्वरूपमाह— जातित्वादिनेति । अत्र धर्मितावच्छेदकतया घटत्वमेव जातित्वेन रूपेण भासते इत्युक्तं जातित्वादिनेति, जातित्वेन भासमानं घटत्वं धर्मिता

'घटो नीलघटः' इत्याद्यन्वयबोधस्य प्रामाणिकत्वेऽन्यत्र दर्शितरीत्या सोऽप्युपपादनीयः ।

---

वच्छेदकं यस्य तस्य तथा स्वरूपतः=स्वरूपेण भासमानं च घटत्वं प्रकारतावच्छेदकं यस्य तस्य ( घटे प्रकारतास्ति ) एवंभूतस्य शाब्दबोधस्योपपत्तये । 'घटः सः' इत्यत्र च स्वरूपतः=स्वरूपेण भासमानं घटत्वं धर्मितावच्छेदकं यस्य तस्य तथा जातित्वविशिष्टं जातित्वेन भासमानं च यद् घटत्वं तदवच्छिन्ना प्रकारता यस्य ( जातित्वावच्छिन्ना घटत्वनिष्ठा प्रकारतावच्छेदकता यस्य ) तस्यैवंभूतस्य शाब्दबोधस्योपपत्तये इत्यन्वयस्तथा च 'स घटः' इत्यत्र 'जातित्वावच्छिन्नघटत्वनिष्ठावच्छेदकतानिरूपिता या विशेष्यता तन्निरूपिता याऽभेदसंबन्धावच्छिन्ना घटत्वावच्छिन्ना प्रकारता तादृशप्रकारताशालिशाब्दबोधः । 'घटः सः' इत्यत्र घटत्वनिष्ठनिरवच्छिन्नावच्छेदकतानिरूपिता या विशेष्यता तादृशविशेष्यतानिरूपिता या जातित्वावच्छिन्नघटत्वनिष्ठावच्छेदकतानिरूपिता घटनिष्ठा प्रकारता तादृशप्रकारताशालिशाब्दबोधः । 'स घटः' इत्यत्र विशेष्यतावच्छेदकता जातिनिष्ठा सावच्छिन्ना जातित्वावच्छिन्नत्वात्, 'घटः सः' इत्यत्र च तथैव प्रकारतावच्छेदकता जातिनिष्ठा सावच्छिन्नास्तीति व्यतिरेकः ।

'घटो नीलघटः' इति— 'घटो नीलघटः' इत्यत्र कस्यचिन्मते घटत्वापेक्षया नीलघटत्वस्य भिन्नत्वेन विशेष्यतावच्छेदकप्रकारतावच्छेदकयोर्घटत्वनीलघटत्वयोर्भेदादऽभेदसंसर्गकशाब्दबोधस्य नानुपपत्तिः 'द्रव्यं घटः' इत्यनेन तुल्यत्वात् । नवीनमते चात्र विधेयांशेऽधिकावगाहिशाब्दबोधस्वीकाराद् उद्देश्य ( विशेष्य ) कोटौ केवलं घटस्यैव प्रवेशाद् विधेय ( विशेषण ) कोटौ घटापेक्षयाधिकस्य नीलस्यापि प्रवेशाद् भानाच्च नाऽभेदान्वयबोधे काचिदनुपपत्तिः न चैवम् 'घटो घटः' इत्यत्राप्यभेदान्वयापत्तिरिति वाच्यम्, 'घटो घटः' इत्यत्र उद्देश्यकोटौ विधेयकोटौ च केवलं घटस्यैव प्रवेशाद् घटातिरिक्तनीलादेरप्रवेशेनाधिकावगाहित्वाभावात् । किं वा यत्र विशेष्यतावच्छेदकताप्रकारतावच्छेदकता चैकधर्मपर्याप्ता स्यात्तत्राऽभेदान्वयबोधं प्रति तद्धर्मभेदस्य हेतुत्वमस्ति नान्यत्र यथा— 'द्रव्यं घटः' इत्यत्र विशेष्यतावच्छेदकता केवलं द्रव्यत्वे पर्याप्तास्ति प्रकारतावच्छेदकता च केवलं घटत्वे पर्याप्तास्तीति तत्राभेदान्वयबोधं प्रति तद्धर्मभेदस्य हेतुत्वमस्ति. अस्ति च तत्र द्रव्यत्वघटत्वयोः परस्परं भेद इति नाऽभेदान्वयबोधानुपपत्तिः । 'घटो नीलघटः' इत्यत्र तु प्रकारतावच्छेदकता नैकधर्मपर्याप्तास्ति किं तु नीलत्वघटत्वैतदुभयधर्मपर्याप्तास्तीत्यत्राऽभेदान्वयबोधं प्रति तद्धर्मभेदस्य हेतुत्वाभावाद् विशेष्यतावच्छेदकीभूतस्य घटत्[illegible]रतावच्छेदकीभूतस्य च नीलघटत्वस्य भेदाभावेप्यऽभेदान्वयबोधे न काप्यनुपपत्ति[illegible]न्यत्र दर्शितरीत्यैति । किं वा—तद्धर्मवृत्तिर्याऽभेदसंबन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपितविशेष्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसंबन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति तद्धर्मभेदः कारणम्, तद्धर्मवृत्तित्वं च प्रकारतायां स्वनिरूपितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसंबन्धेन,

'स सः' इत्यादिवाक्याज्जातित्वाद्यवच्छिन्नधर्मितावच्छेदकताकतद्धर्मावच्छिन्नप्रकारतावच्छेदकताकाऽभेदान्वयबोधस्य वारणाय तद्धर्मावच्छिन्नावच्छेदकता-

---

त्वं अभेदसंबन्धावच्छिन्ना प्रकारता, 'घटो घटः' इत्यत्र तद्धर्मः=घटत्वगतैकत्वं तद्वृत्तिर्या स्वरूपसंबन्धेन घटनिष्ठा अभेदसंबन्धावच्छिन्ना प्रकारता ( घटे या स्वरूपसंबन्धेनाभेदसंबन्धावच्छिन्ना प्रकारता वर्तते सोक्तसंबन्धेन तद्धर्मे घटत्वगतैकत्वेपि वर्तते ) तादृशप्रकारतानिरूपिता या घटनिष्ठा विशेष्यता ( घटो घट इत्यत्र प्रकारत्वं विशेष्यत्वं च घटस्यैव– घटप्रकारकघटविशेष्यकबोधस्यैवापाद्यमानत्वात् ) तादृशविशेष्यतावच्छेदकता घटत्वे, विवक्षितपर्याप्तिसंबन्धस्य प्रतियोगिता तादृशविशेष्यतावच्छेदकतायां वर्तते तत्र विशेष्यतावच्छेदकतात्वमपि वर्तते इति सा प्रतियोगिता विशेष्यतावच्छेदकतात्वावच्छिन्ना जाता तथा चोक्तविशेष्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्तेरनुयोगितावच्छेदकं घटत्वगतैकत्वम् ( विशेष्यतावच्छेदकतायाः पर्याप्तिर्घटत्वे विवक्षिता घटत्वमनुयोगी अनुयोगितावच्छेदकं घटत्वगतैकत्वं ग्राह्यम् ) इति तन्निष्ठानुयोगितावच्छेदकत्वसंबन्धेन ( तद्= घटत्वगतैकत्वम् ) शाब्दबुद्धित्वावच्छिन्नं प्रति तद्धर्मभेदस्य कारणत्वमस्ति तच्च 'घटो घटः' इत्यत्र नास्त्येव– विशेष्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकमपि घटत्वगतैकत्वमेव प्रकारतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकमपि घटत्वगतैकत्वमेवेति न 'घटो घटः' इत्यत्राभेदान्वयबोधापत्तिः– घटत्वगतैकत्वयोः पर्याप्त्यनुयोगितावच्छेदकयोः परस्परं भेदाभावात्, एकत्वाश्रयीभूतघटत्वस्य भेदाभावात् । 'घटो नीलघटः' इत्यत्र तु विशेष्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं घटत्वगतैकत्वम्, प्रकारतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं च नीलत्वघटत्वैतदुभयगतं द्वित्वमिति एकत्वद्वित्वयोश्च परस्परं भेदात् तद्धर्मभेदस्य सत्त्वादभेदान्वयबोध उपपद्यते इत्याशयेनाह– अन्यत्रदर्शितरीत्येति ।

ननु यदि 'स घटः' इत्यादावऽभेदान्वयबोधोपपत्तये 'यत्र विशेष्यतावच्छेदकता प्रकारतावच्छेदकता च निरवच्छिन्ना स्यात्तत्रैवाऽभेदान्वयबोधं प्रति तद्धर्मभेदस्य कारणत्वम्' इति स्वीक्रियते यथा 'द्रव्यं घटः' इत्यादौ, तदा 'स सः' इत्यत्र तत्पदयोर्जातिमति शक्तत्वाद् विशेष्यतावच्छेदिका प्रकारतावच्छेदिका च जातिरेव जातिनिष्ठा हि विशेष्यतावच्छेदकता प्रकारतावच्छेदकता च जातित्वावच्छिन्नास्ति न तु निरवच्छिन्नेत्यत्राभेदान्वयबोधं प्रति तद्धर्मभेदस्य=विशेष्यतावच्छेदकप्रकारतावच्छेदकधर्मयोः किं वा विशेष्यतावच्छेदकतावच्छेदकप्रकारतावच्छेदकतावच्छेदकधर्मयोर्भेदस्य हेतुत्वाभावाद् विशेष्यतावच्छेदकीभूतायाः प्रकारतावच्छेदकीभूतायाश्च जातेः किं वा विशेष्यतावछेदकतावच्छेदकस्य प्रकारतावच्छेदकतावच्छेदकस्य जातित्वस्य भेदाभावेप्यऽभेदान्वयबोधः स्यादेवेत्याशङ्क्याह– स स इति । स स इति वाक्यान्निवार्यमाणशाब्दबोधस्य स्वरूपमाह– जातित्वादीति । 'स सः' इत्यस्य 'जातिमान् जाति-

कप्रकारतानिरूपितधर्मितावच्छेदकतावच्छेदकत्वप्रत्यासत्त्या शाब्दबोधं प्रति तद्धर्मभेदस्यापि पृथक्कारणत्वं कल्पनीयम् ।

---

मान् ' इत्यर्थः, तत्र जातिमान् धर्मी धर्मितावच्छेदिका जातिः सा च जातित्वावच्छिन्ना जातित्वावच्छिन्ना धर्मितावच्छेदकता यस्य स जातित्वाद्यवच्छिन्नधर्मितावच्छेदकताकः तथा तद्धर्मावच्छिन्ना=जातित्वधर्मावच्छिन्ना प्रकारतावच्छेदकता यस्य तस्य जातित्वाद्यवच्छिन्नधर्मितावच्छेदकताकतद्धर्मावच्छिन्नप्रकारतावच्छेदकताकस्याभेदान्वयबोधस्य 'स सः' इतिवाक्यात्संभाव्यमानस्य वारणाय. तद्धर्मावच्छिन्नावच्छेदकताकप्रकारतानिरूपितधर्मितावच्छेदकतावच्छेदकत्वप्रत्यासत्त्या शाब्दबोधं प्रत्यपि तद्धर्मभेदस्य कारणत्वं पृथक् कल्पनीयम्, तद्धर्मावच्छिन्नावच्छेदकतेति-तद्धर्मः=जातित्वं जातित्वावच्छिन्नावच्छेदकता जातौ तादृशावच्छेदकताका=तादृशावच्छेदकतानिरूपिता प्रकारता द्वितीयतत्पदबोध्ये घटे तादृशप्रकारतानिरूपितधर्मिता प्रथमतत्पदबोध्ये घटे धर्मितावच्छेदकत्वं घटत्वरूपजातौ धर्मितावच्छेदकतावच्छेदकत्वं च जातित्वे, तथा च जातित्वे जातित्वनिष्ठं यत् तद्धर्मावच्छिन्नावच्छेदकताकप्रकारतानिरूपितधर्मितावच्छेदकतावच्छेदकत्वं तेन संबन्धेन शाब्दबोधे जननीये तद्धर्मभेदः=प्रकारतावच्छेदकतावच्छेदकभेदः कारणमस्ति तच्च ' स सः ' इत्यत्र नास्ति, अत्र विशेष्यतावच्छेदकतावच्छेदकं तथा प्रकारतावच्छेदकतावच्छेदकं एकं जातित्वमेव तथा विशेष्यतावच्छेदिका प्रकारतावच्छेदिका चैका जातिरिति तद्धर्मभेदस्य कारणीभूतस्याभावादेव ' स सः ' इत्यत्र नाऽभेदान्वयबोधापत्तिरित्यर्थः । अपि भिन्नक्रम इति प्रत्यासत्त्यापीत्यन्वयः ।

अस्य कार्यकारणभावस्योदाहरणं तु ' जातिमान् प्रमेयवान् ' इति, अत्र विशेष्यतावच्छेदिका जातिः प्रकारतावच्छेदकं प्रमेयम् ( प्रमेयवतः प्रकारत्वात् ) तयोः परस्परं भेदादभेदान्वयबोधो जायत एव, किं वा विशेष्यतावच्छेदकतावच्छेदकं जातित्वं प्रकारतावच्छेदकतावच्छेदकं च प्रमेयत्वं तयोः परस्परं भेदादभेदान्वयबोधो जायते इति । वस्तुतस्तु यत्र प्रकारतावच्छेदकताविशेष्यतावच्छेदकते उभे अपि निरवच्छिन्ने वा स्यातां सावच्छिन्ने वा स्यातां तत्राभेदान्वयबोधं प्रति तद्धर्मभेदस्य कारणत्वं तथा च ' द्रव्यं घटः ' इत्यत्र विशेष्यतावच्छेदकप्रकारतावच्छेदकयोर्द्रव्यत्वघटत्वयोरुभयोरपि निरवच्छिन्नत्वात् तद्धर्मभेदस्य कारणत्वमस्ति. अस्ति च तद्धर्मभेदो द्रव्यत्वघटत्वयोर्भिन्नत्वादित्यऽभेदान्वयबोधे न काप्यनुपपत्तिः, 'जातिमान् प्रमेयवान्' इत्यत्र च विशेष्यतावच्छेदकप्रकारतावच्छेदकयोरुभयोरपि जातिप्रमेययोर्जातित्वप्रमेयत्वाभ्यां सावच्छिन्नत्वात् अभेदान्वयबोधं प्रति तद्धर्मभेदस्य कारणत्वमस्ति. अस्ति चोक्तरीत्या तद्धर्मभेद इति नाऽभेदान्वयबोधानुपपत्तिः । ' स सः ' इत्यत्र च विशेष्यतावच्छेदकताप्रकारतावच्छेदकते जातिनिष्ठे उभे अपि जातित्वेन सावच्छिन्ने स्तः न चात्र विशेष्यतावच्छेदकप्रकारतावच्छेदकयोर्भेदोस्ति जातेरेवैकाया विशेष्यतावच्छेदकत्वात् प्रकारतावच्छेदकत्वाचेति कारणीभूतस्य तद्धर्मभेदस्याभावान्नाऽभेदान्वयबोधापत्तिः । 'स घटः' इत्यत्र चोक्तरीत्या केवलं विशेष्यतावच्छेदकतैव सावच्छिन्नास्ति

एवम्— ' दण्डवान् दण्डवान् ' इत्यादिवाक्याद् दण्डसंयोगत्वाद्यवच्छिन्नवति तदवच्छिन्नवदऽभेदान्वयबोधस्य वारणाय दण्डसंयोगत्वाद्यवच्छिन्नावच्छेदकताकप्रकारतानिरूपितविशेष्यतानिरूपितसंयोगत्वाद्यवच्छिन्नावच्छेदकतानिरूपितावच्छेदकतावच्छेदकत्वसंबन्धेन शाब्दबोधे दण्डत्वादिभेदस्यापि पृथक्

' घटः सः ' इत्यत्र चोक्तरीत्या केवलं प्रकारतावच्छेदकतैव सावच्छिन्नास्ति, न तु विशेष्यतावच्छेदकताप्रकारतावच्छेदकते उभे सावच्छिन्ने स्तः इति ' स घटः ' घटः सः ' इत्यादौ तद्धर्मभेदाभावेऽप्यऽभेदान्वयबोधे न काचिदनुपपत्तिः । ' घटो घटः ' इत्यत्र विशेष्यतावच्छेदकताप्रकारतावच्छेदकते घटत्वनिष्ठे उभे अपि निरवच्छिन्ने स्तः अतोऽत्राभेदान्वयबोधं प्रति तद्धर्मभेदस्य कारणत्वमस्ति, नास्ति चात्र तद्धर्मभेदो घटत्वस्यैकत्वादिति नात्राभेदान्वयबोधापत्तिरित्यवधेयम् ।

यथा ' स सः ' इत्यत्राभेदान्वयबोधो नेष्टस्तथा ' दण्डवान् दण्डवान् ' इत्यत्राप्यऽभेदान्वयबोधो नेष्ट इति तद्वारणोपायमाह— एवमिति । पूर्वोक्तापेक्षयात्रैकावच्छेदकताया अधिकायाः प्रवेशाद् बुद्धिवैशद्यार्थं च पृथक् प्रतिपादनम् । ' दण्डवान् दण्डवान् ' इत्यस्य मतुपः संबन्धिनि शक्तेः ' दण्डसंयोगवान् दण्डसंयोगवान् ' इत्यर्थः, तत्र प्रथमे ' दण्डसंयोगवान् ' तथा ' दण्डवान् ' इति पदे दण्डसंयोगवान् पुरुषो विशेष्यस्तत्र दण्डसंयोगः प्रकारः ( विशेषणम् ) दण्डसंयोगे दण्डः प्रकारो दण्डे दण्डत्वं प्रकारः । द्वितीये ' दण्डसंयोगवान् ' तथा ' दण्डवान् ' इतिपदे दण्डसंयोगवान् पुरुषः प्रकारस्तत्र दण्डसंयोगः प्रकारस्तत्र दण्डः प्रकारस्तत्र दण्डत्वं प्रकारः तथा च दण्डत्वावच्छिन्ना या दण्डनिष्ठाऽवच्छेदकता ( प्रकारतावच्छेदकता ) तन्निरूपिता या संयोगत्वावच्छिन्ना संयोगनिष्ठाऽवच्छेद्यता तन्निरूपिता याऽभेदसंबन्धावच्छिन्ना पुरुषनिष्ठा प्रकारता तन्निरूपिता या पुरुषनिष्ठा विशेष्यता तन्निरूपिता या सयोगनिष्ठाऽवच्छेदकता ( विशेष्यतावच्छेदकता) तन्निरूपिता या दण्डनिष्ठाऽवच्छेदकता तन्निरूपिता या दण्डत्वनिष्ठाऽवच्छेदकता तादृशावच्छेदकतासंबन्धेन दण्डत्वे शाब्दबोधे जननीये तद्धर्मस्य=प्रकारतावच्छेदकतावच्छेदकतावच्छेदकस्य ( प्रकारता पुरुषे पुरुषनिष्ठप्रकारतावच्छेदकता दण्डसंयोगे तदवच्छेदकता दण्डे तदवच्छेदकं दण्डत्वमिति ) दण्डत्वादेर्धर्मस्य भेदः पृथक्=पूर्वापेक्षया पृथक् कारणमस्ति तच्चात्र नास्त्येव— विशेष्यतावच्छेदकतावच्छेदकतावच्छेदकमपि दण्डत्वमेव तथा प्रकारतावच्छेदकतावच्छेदकतावच्छेदकमपि दण्डत्वमेव दण्डत्वस्यैक्येन परस्परं भेदाभावात् ' दण्डवान् दण्डवान् ' इत्यत्र दण्डसंयोगत्वाद्यवच्छिन्नवति=दण्डसंयोगत्वावच्छिन्नो दण्डसंयोगस्तद्वति पुरुषे तदवच्छिन्नवत्=दण्डसंयोगत्वावच्छिन्नो यो दण्डसंयोगस्तद्वतः पुरुषस्याऽभेदान्वयबोधस्यापत्तिर्नास्ति तद्धर्मभेदरूपकारणाभावादित्यर्थः । दण्डसंयोगत्वाद्यवच्छिन्नावच्छेदकताकेति— दण्डसयोगत्वावच्छिन्नो दण्डसंयोगस्तन्निष्ठा याऽवच्छेदकता तादृशावच्छेदकताका=दण्डसंयोगनिष्ठावच्छेदकतानिरूपिता या प्रकारता पुरुषनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता विशेष्यता पुरुषनिष्ठा विशेष्यता तादृशविशेष्यतानिरूपिता या संयोगत्वाद्यव-

**कारणत्वं कल्पनीयम् । अवच्छेदकतायां निरवच्छिन्नत्वनिवेशोपि पूर्ववद् बोध्यः। वस्तुतस्तु तद्धर्मान्यवृत्तिविषयतासंबन्धेन ज्ञानं प्रति तद्धर्मभेदत्वेन हेतुता लाघवात्,**

---

च्छिन्नावच्छेदकता=दण्डसंयोगनिष्ठाऽवच्छेदकता तादृशावच्छेदकतानिरूपिता याऽवच्छेदकता दण्डनिष्ठाऽवच्छेदकता तदवच्छेदकत्वं दण्डत्वे तेन संबन्धेनेत्यन्वयः ।

'जातिमद्वान् दण्डवान्', 'दण्डवान् जातिमद्वान्' इत्यादावऽभेदान्वयबोधस्येष्टत्वादाह— अवच्छेदकतायामिति । अवच्छेदकतायाम्=विशेष्यतावच्छेदकतावच्छेदकतावच्छेदकतायां तथा प्रकारतावच्छेदकतावच्छेदकतावच्छेदकतायां निरवच्छिन्नत्वनिवेशः कर्तव्यस्तथा च 'दण्डवान् दण्डवान्' इत्यत्र दण्डत्वे या विशेष्यतावच्छेदकतावच्छेदकतावच्छेदकतास्ति तथा या प्रकारतावच्छेदकतावच्छेदकतावच्छेदकतास्ति सा निरवच्छिन्नास्ति दण्डत्वस्य स्वरूपेणैव भासमानत्वादिति तत्र विशेष्यतावच्छेदकतावच्छेदकतावच्छेदकप्रकारतावच्छेदकतावच्छेदकतावच्छेदकधर्मयोर्भेदस्याभेदान्वयबोधं प्रति कारणत्वमस्ति न चास्ति तादृशधर्मयोर्भेदो विशेष्यतावच्छेदकतावच्छेदकतावच्छेदकस्य प्रकारतावच्छेदकतावच्छेदकतावच्छेदकस्य दण्डत्वस्याऽभिन्नत्वादिति न तत्राभेदान्वयबोधापत्तिः । 'जातिमद्वान् दण्डवान्' इत्यत्र जातिमद्वान्=दण्डसंयोगवान् पुरुषो विशेष्यस्तत्र दण्डसंयोगस्तत्र दण्डस्तत्र जातिः प्रकारः जातिश्च जातित्वेन रूपेण भासते इति जातित्वावच्छिन्नास्ति तथा चात्र जातिनिष्ठा विशेष्यतावच्छेदकतावच्छेदकतावच्छेदकता सावच्छिन्नास्तीति नात्र तद्धर्मभेदस्य कारणत्वमिति जातेर्दण्डत्वरूपत्वेन प्रकारतावच्छेदकतावच्छेदकतावच्छेदकस्य दण्डत्वस्य विशेष्यतावच्छेदकतावच्छेदकतावच्छेदिकाया जातेश्च परस्परभेदाऽभावेपि नाऽभेदान्वयबोधानुपपत्तिः, तथा 'दण्डवान् जातिमद्वान्' इत्यत्र च जातिनिष्ठप्रकारतावच्छेदकतावच्छेदकतावच्छेदकता जातित्वावच्छिन्नास्तीति विशेष्यतावच्छेदकतावच्छेदकतावच्छेदकस्य दण्डत्वस्य प्रकारतावच्छेदकतावच्छेदकतावच्छेदिकाया जातेश्च परस्परं भेदाभावेपि नाऽभेदान्वयबोधानुपपत्तिरित्यर्थः । जातिमद्वानित्यत्र जातिः दण्डत्वं तद्वान् दण्डस्तद्वान् पुरुषः, मतुपश्च संबन्धिनि शक्तेर्दण्डवत्पुरुषे दण्डसंयोगः प्रकारस्तत्र दण्डस्तत्र दण्डे दण्डत्वरूपजातिर्जातौ च जातित्वं प्रकार इति ।

पृथक् पृथक् कार्यकारणभावानुक्त्वा संप्रति सर्वानुगतं कार्यकारणभावमाह— वस्तुतस्त्विति व्याप्यधर्मावच्छिन्ने कार्ये जननीये व्यापकधर्मावच्छिन्नकार्यस्य सामग्री अपेक्षिता भवतीत्याशयेन यत्र यत्र शाब्दबोधस्तत्र तत्र ज्ञानं भवत्येवेति ज्ञानस्य शाब्दबोधव्यापकत्वात् ज्ञानस्यैव कार्यकारणभावमाह— तद्धर्मेति, तद्धर्मपदेन विशेषणकोटिप्रविष्टपदार्थगतधर्मो ग्राह्यो यथा— प्रकारतावच्छेदकः प्रकारतावच्छेदकतावच्छेदकः प्रकारतावच्छेदकतावच्छेदकतावच्छेदक इत्यादि, तदन्यपदेन विशेष्यकोटिप्रविष्टपदार्थगतधर्मो ग्राह्यो यथा— विशेष्यतावच्छेदको विशेष्यतावच्छेदकतावच्छेदको विशेष्यतावच्छेदकतावच्छेदकतावच्छेदक इत्यादि । वस्तुतस्तु यस्मिन् धर्मे द्रव्यत्वादौ तद्गतविषयताविशेषसंबन्धेन शाब्दबोध उत्पादनीयस्तदन्यधर्मो घटत्वादिस्तद्धर्मपदेन ग्राह्यः तदन्यच्च शाब्दबोधाधिकरणं द्रव्यत्वादिकमऽन्यपदेन ग्राह्यम्, एवं च प्रकाराख्यविषयतासंबन्धे-

एवं च घटत्वाद्यवच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकतासंबन्धेन शाब्दबोधं प्रति घटत्वाद्यन्यवृत्तिविषयतासंबन्धेन ज्ञानत्वाद्यवच्छिन्नस्य व्यापकतया घटत्वादौ तादृशविषयतासंबन्धेन ज्ञानत्वावच्छिन्नोत्पादकसामग्रीविरहेण न तत्र तादृशविशेष्यतावच्छेदकतासंबन्धेन शाब्दबोधापत्तिः ।

---

द्रव्यं घटः ' इत्यत्र घटत्वे शाब्दबोधे जननीये तद्धर्मपदेन घटत्वान्यद् द्रव्यत्वं ग्राह्यमऽन्यपदेन द्रव्यत्वान्यद् घटत्वं ग्राह्यम् । विषयतापदेन च शाब्दबोधाधिकरणीभूतपदार्थे यादृशी विषयता यात् सा ग्राह्या यथा– विशेष्यतारूपा विशेष्यतावच्छेदकतारूपा विशेष्यतावच्छेदकतावच्छेदकतारूपा इत्यादि तथा प्रकारतारूपा प्रकारतावच्छेदकतारूपा प्रकारतावच्छेदकतावच्छेदकतारूपा इत्यादि । तथा च 'द्रव्यं घटः' इत्यत्र घटत्वान्यद् यद् द्रव्यत्वं तस्मिन् तन्निष्ठविशेष्यतावच्छेदकताख्यविषयतासंबन्धेन शाब्दबोधे जननीये तद्धर्मभेदस्य घटत्वभेदस्य हेतुत्वं प्राप्तमऽस्ति चात्र घटत्वद्रव्यत्वयोर्भेद इत्यभेदान्वयबोधे न काप्यनुपपत्तिः । तथा प्रकारतावच्छेदकताख्यविषयतासंबन्धेन घटत्वेप्यभेदान्वयबोधेऽनुपपत्तिर्नास्ति– द्रव्यत्वेघटत्वयोर्भेदात् । 'घटो नीलघटः' इत्यत्रापि घटत्वनीलघटत्वयोर्भेदस्वीकारे त्वभेदान्वयबोधोऽनेन नियमेनापि संभवति. भेदास्वीकारे पूर्वं शाब्दबोधप्रकार उपपादित एव । 'घटो घटः' इत्यत्र घटत्वेऽभेदान्वयबोधस्तु न संभवति तद्धर्मभेदाभावात्–घटत्वस्यैव प्रकारतावच्छेदकत्वाद् विशेष्यतावच्छेदकत्वाच्चेति सर्वं सुस्थम् ।

स्वरूपमपि 'घटो घटः' इत्यत्रोक्तनियमेनाभेदान्वयबोधापत्त्यभावमाह– एवं चेति । एवं च= "तद्धर्मान्यवृत्तिविषयतासंबन्धेन" इति नियमे कृते । 'घटो घटः' इत्यत्र घटस्यैव प्रकारत्वाद् विशेष्यत्वाच्च घटत्वावच्छिन्ना या घटनिष्ठा प्रकारता तन्निरूपिता या घटनिष्ठा विशेष्यता तदवच्छेदकत्वं घटत्वे इति घटत्वनिष्ठविशेष्यतावच्छेदकतासंबन्धेन शाब्दबोधे जननीये शाब्दबोधव्यापकस्य ज्ञानत्वावच्छिन्नज्ञानस्य सामग्री अपेक्षिता भवति सा च सामग्री तद्धर्मभेद एव, 'घटो घटः' इत्यत्र च तद्धर्मभेदरूपा सामग्री नास्तीति नाऽभेदान्वयबोधापत्तिरित्यर्थः । यत्र घटत्वे विशेष्यतावच्छेदकतासंबन्धेन शाब्दबोध आपादनीयस्तत्र घटत्वे घटत्वान्यत्वमेव नास्ति येन तद्धर्मान्यवृत्तिविषयतायाः संबन्धत्वं तादृशसंबन्धेन शाब्दबोधश्च स्यादिति भावः । तादृशविषयतासंबन्धेन=घटत्वान्यवृत्तिविषयतासंबन्धेन । ज्ञानत्वावच्छिन्नोत्पादकसामग्री=तद्धर्मभेदः, ज्ञानाधिकरणीभूतपदार्थे तदन्यत्वं चेति । तत्र='घटो घटः' इत्यत्र । तादृशविशेष्यतावच्छेदकतासंबन्धेन=घटत्वनिष्ठविशेष्यतावच्छेदकतासंबन्धेन ।

'तद्धर्मान्यवृत्तिविषयतासंबन्धेन शाब्दबोधं प्रति तद्धर्मभेदस्य कारणत्वम्' इत्युक्ते 'घटो घटः' इत्यत्र तद्धर्मान्यवृत्तिविषयतासंबन्धेन शाब्दबोधस्येष्टत्वाभावात् तद्धर्मभेदाभावेपि पुनरप्यऽभेदान्वयबोधापत्तिः स्यादेवेति शाब्दबोधव्यापकीभूतज्ञानं प्रति तद्धर्मभेदस्य हेतुत्वमुक्तं तथा च व्याप्यकार्यं प्रति व्यापककार्यसामग्र्या अपेक्षानियमात् 'घटो घटः' इत्यत्राभेदान्वयबोधे जननीये तद्धर्मान्यवृत्तिविषयतासंबन्धेन व्यापकीभूतज्ञानस्य सामग्र्या अपेक्षा प्राप्ता सा च सामग्र्यत्र ना-

एवं च 'घटवान् घटवान्' इत्यादिशाब्दबोधवारणानुरोधेन धर्मितावच्छेदकता वच्छेदकादिनिष्ठप्रत्यासत्त्या कारणत्वान्तरमपि न कल्प्यते ।

एवमुद्देश्यतावच्छेदकविधेययोरैक्येन 'एकः' 'द्वौ' इत्यादिवाक्यादेकत्वद्वि त्वाद्यवच्छिन्ने एकत्वद्वित्वादीनां भेदान्वयबोधानुदयाद् एकत्वत्वद्वित्वत्वाद्यव

इत्येवेति नाऽभेदान्वयबोधापत्तिः । तद्धर्मान्यवृत्तिविषयतासंबन्धेन ज्ञानसामग्री च न केवलं तद्ध मेद एव किं तु संबन्धभूतविषयतायास्तद्धर्मान्यवृत्तित्वमपीति ज्ञेयम् । अयं भावः— तद्धर्मान्य त्तिविषयतासंबन्धेन ज्ञानं प्रति केवलतद्धर्मभेदस्य सामग्रीत्वस्वीकारे यत्र तद्धर्मान्यवृत्तिविषयता बन्धेन ज्ञानमापादनीयं भविष्यति तत्रैव तद्धर्मभेदस्य हेतुत्वं भविष्यति यथा— 'द्रव्यं घटः' इत्याद 'घटो घटः' इत्यत्र तु तद्धर्मान्यवृत्तिविषयतासंबन्धेन ज्ञानमापादनीयमेव नास्ति येनाऽ दान्वयबोधानुपपत्तिः स्यात्. किं तु तद्धर्मवृत्तिविषयतासंबन्धेनैव ज्ञानमापादनीयमस्तीति 'घ घटः' इत्यत्राऽभेदान्वयबोधं प्रति तद्धर्मभेदस्यापेक्षाभावात् तद्धर्मभेदाभावेऽप्यभेदान्वयबोधः स्यादे तदापत्तिपरिहाराय ज्ञानसंबन्धभूताया विषयतायास्तद्धर्मान्यवृत्तित्वमपि सामग्रीकुक्षौ निवेशन तथा च 'घटो घटः' इत्यत्र घटत्वे एव ज्ञानमापादनीयं घटत्वनिष्ठायाश्च विशेष्यतावच्छेदकतार विषयताया ज्ञानसंबन्धभूतायास्तद्धर्मान्यवृत्तित्वं हेतुभूतं नास्त्येव— प्रकारतावच्छेदकघटत्ववृत्ति तदन्यवृत्तित्वाभावादिति नात्र ज्ञानस्य तद्व्याप्याऽभेदान्वयबोधस्य चापत्तिः ।

उक्तनियमेन लाघवान्तरमाह—एवं चेति । एवं च=तद्धर्मान्यवृत्तिविषयतासंबन्धेन ज्ञानं तद्धर्मभेदत्वेन हेतुत्वाङ्गीकारे च 'घटवान् घटवान्' इत्यत्राभेदान्वयबोधवारणायाभेदान्वयबोधं तद्धर्मभेदस्य पृथग् हेतुत्वकल्पनापेक्षा नास्ति,— अत्र हि घटवानेव विशेष्यः प्रकारश्च, तत्र घट धर्मी धर्मितावच्छेदको घटः धर्मितावच्छेदकतावच्छेदकं घटत्वमिति धर्मितावच्छेदकतावच्छे यद् घटत्वं तन्निष्ठा या धर्मितावच्छेदकतावच्छेदकतारूपा प्रत्यासत्तिः=संबन्धस्तेन घटत्वे शा बोधे जननीये तद्धर्मभेदस्य हेतुत्वमस्ति नास्ति चात्र तद्धर्मभेद एकस्य घटत्वस्यैव विशे (धर्मिता) वच्छेदकतावच्छेदकत्वात् प्रकारतावच्छेदकतावच्छेदकत्वाच्चेत्यर्थः । एवम् 'दण्ड दण्डवान्' इत्यत्रापि दण्डत्वे विशेष्यतावच्छेदकतावच्छेदकतावच्छेदकत्वप्रत्यासत्त्या शाब्द जननीये तद्धर्मभेदस्य हेतुत्वमस्ति नास्ति चात्र तद्धर्मभेदः— एकस्य दण्डत्वस्यैव विशेष्यतावच कतावच्छेदकतावच्छेदकत्वात् प्रकारतावच्छेदकतावच्छेदकतावच्छेदकत्वाच्चेत्यर्थः ।

एवमिति— 'एकः' इत्यत्रैकपदवाच्या एकत्वेन घटादिव्यक्तिरेव एकपदोत्तरवर्तमानविभक्ते कत्वमर्थ इति विभक्तेः सार्थकत्वे 'एकः' इत्यस्य 'एकत्ववान् एकत्ववान्' इत्यर्थः स्यात् ( एकत्ववानिति प्रकृतेरर्थो द्वितीय एकत्ववान् इति विभक्तेरर्थः ) तत्रैकत्ववती घटव्यक्तिमुद्दि कत्वविधानाद् उद्देश्या एकव्यक्तिरुद्देश्यतावच्छेदकमेकत्वं विधेयमप्येकत्वमेव स्यात् तथा च देश्यतावच्छेदकस्य विधेयस्य चैक्यं प्राप्तं उद्देश्यभूतव्यक्तावेकत्वादिसंख्याया अन्वयश्च समवा बन्धेन भवति समवायश्च भेदसंबन्ध एव. एवं च 'एकः' इतिवाक्यात् प्रकृतिभूतैकपदवाच्ये

च्छिन्नसमवायादिसंसर्गावच्छिन्नप्रकारतानिरूपितविशेष्यतानिरूपितसमवायादिसंसर्गावच्छिन्नावच्छेदकतावच्छेदकत्वादिसंबन्धेन शाब्दबुद्धौ एकत्वत्वद्वित्वत्वादिभेदस्य,

एवम् 'कर्म गच्छति' इत्यादौ च कर्मत्वत्वाद्यवच्छिन्ने आधेयतासंबन्धेन

ावच्छिन्ने एकव्यक्तिभूतघटादौ एकपदोत्तरप्रथमार्थैकत्वरूपसंख्याया भेदान्वयः स्यादित्यत्रोद्देश्यवच्छेदकविधेययोरैक्येन एकत्वावच्छिन्ने एकत्वस्य यो भेदान्वयबोधः प्राप्तस्तस्यानुदयात्=तादृभेदान्वयबोधोत्पत्तेरनिष्टत्वात् तद्वारणायेदानीं एकत्वत्वनिष्ठेन एकत्वत्वावच्छिन्नसमवायसंबन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतानिरूपितसमवायसंबन्धावच्छिन्नावच्छेदकतावच्छेदकत्वलक्षणसंबन्धेन शाब्दबोधं प्रति एकत्वत्वभेदस्य पृथग् हेतुत्वकल्पनापेक्षा नास्ति— उक्तनियमेनैवोक्तशाब्दबोधवारणसंभवात्, एकत्वत्वस्य परस्परं भेदाभावात् । वस्तुतस्तु शाब्दबोधसंबन्धस्यैव एकत्वान्यवृत्तित्वं नास्ति—एकत्वत्ववृत्तित्वादेवेति नात्र एकत्वावच्छिन्नव्यक्तौ प्रथमार्थैकत्वस्य समवायेनान्वयबोधापत्तिः, भवति च 'एकः' इतिप्रयोग इति संख्यावाचकैकादिपदोत्तरवर्तमानविभक्तेर्निरर्थकत्वमेव(इदं चाग्रे संख्यान्वयविचारस्थले द्रष्टव्यम्)तथा च प्रकृतिभूतैकपदेनैवैकत्वेन रूपेण घटादिव्यक्तेरुपस्थितिर्भवतीति विज्ञेयम् । एवम् 'द्वौ' इत्यत्रापि उद्देश्यतावच्छेदकं द्वित्वं विधेयमपि द्वित्वं विभक्त्यर्थः 'द्वित्ववान् द्वित्ववान्' इत्यर्थस्तत्रोद्देश्यतावच्छेदकविधेययोरैक्येन द्वित्वावच्छिन्ने व्यक्तिद्वये द्विवचनार्थद्वित्वसंख्याया यो भेदान्वयबोधः प्राप्तस्तस्यानुदयात्=तादृशभेदान्वयबोधोत्पत्तेरनिष्टत्वात् तद्वारणाय द्वित्वत्वनिष्ठेन द्वित्वत्वावच्छिन्नसमवायसंबन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतानिरूपितसमवायसंबन्धावच्छिन्नावच्छेदकतावच्छेदकत्वलक्षणसंबन्धेन शाब्दबोधं प्रति द्वित्वत्वभेदस्य पृथग् हेतुत्वकल्पनापेक्षा नास्ति— उक्तनियमेनैवोक्तशाब्दबोधवारणसंभवात्, द्वित्वत्वस्य परस्परं भेदाभावादेकत्वादिति नात्र द्वित्वावच्छिन्नव्यक्तौ द्विवचनार्थद्वित्वस्य समवायेनान्वयबोधापत्तिः, भवति च 'द्वौ' इति प्रयोग इति द्विवचनं निरर्थकमेव तथा च प्रकृतिभूतद्विपदेनैव द्वित्वेन रूपेण द्वित्वविशिष्टरूपेण वा घटादिव्यक्तेरुपस्थितिर्भवति । एकत्वेति— एकत्वत्वावच्छिन्ना तथा समवायसंबन्धावच्छिन्ना या विभक्त्यर्थैकत्वनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या एकपदवाच्यव्यक्तिनिष्ठा विशेष्यता तादृशविशेष्यतानिरूपिता तथा समवायसंबन्धावच्छिन्ना या एकत्वनिष्ठा अवच्छेदकता ( उक्तविशेष्यतावच्छेदकता ) तदवच्छेदकत्वं एकत्वत्वे इत्येकत्वत्वनिष्ठं यद्विशेष्यतावच्छेदकतावच्छेदकत्वं तेन संबन्धेनेत्यन्वयः । एवम् 'द्वौ' इत्यत्र एकपदस्थाने द्विपदं निवेश्यान्वयो विज्ञेयः । "एकत्वत्वद्वित्वत्वादिभेदस्य" इत्यस्य "हेतुत्वान्तरकल्पनमनादेयमेव" इत्यग्रिमवाक्येन सहान्वयः ।

'ग्रामं गच्छति' इत्यत्र शाब्दबोध इष्टस्तत्र ग्राम आधेयतासंबन्धेन द्वितीयार्थकर्मतायां प्रकारः, प्रकारतावच्छेदकं ग्रामत्वम्, कर्मता विशेष्यं विशेष्यतावच्छेदकं कर्मतात्वम् । ग्रामस्य कर्मपदार्थत्वेन कर्मपदवाच्यत्वेपि 'कर्म गच्छति' इति प्रयोगस्तु नेष्ट इत्याशयेनाह— एवमिति,

तद्वतोऽन्वयबोधवारणाय कर्मत्वत्वाद्यवच्छिन्नावच्छेदकताकाऽऽधेयतासंबन्धा
च्छिन्नप्रकारतानिरूपितधर्मितावच्छेदकतासंबन्धेन शाब्दबोधे कर्मत्वत्वादिभेद
'घटो न घटः' इत्याद्यनुमितेः शाब्दबोधस्य च वारणाय घटत्वावच्छिन्न
दप्रकारतानिरूपितधर्मितावच्छेदकतासंबन्धेनानुमितौ शाब्दबोधे च घटत्वादि
दस्य हेतुत्वान्तरकल्पनमनादेयमेव—तद्धर्मभेदस्यैककारणतयैव सकलातिप्रसङ्ग
वारणसंभवादिति कृतं पल्लवितेन ॥ इत्यभेदव्युत्पत्तिवादः ॥

---

'कर्म गच्छति' इत्यत्र प्रकृतिभूतकर्मपदस्य कर्मत्वावच्छिन्ने शक्तिः कर्मपदोत्तरलुप्तद्वितीयायाः
त्वत्वावच्छिन्ने कर्मत्वे शक्तिस्तथा च प्रत्ययार्थस्य प्राधान्यात् कर्मत्वत्वावच्छिन्ने द्वितीयार्थ
आधेयतासंबन्धेन ( कर्मत्वे आधेयत्वमस्ति ) तद्वतः=कर्मत्ववतः=कर्मत्वावच्छिन्नकर्मपदवाच्य
पदार्थस्य भेदान्वयबोधवारणाय कर्मत्वत्वावच्छिन्नावच्छेदकताकाधेयतासंबन्धावच्छिन्नप्रकारत
रूपितधर्मितावच्छेदकतालक्षणसंबन्धेन कर्मत्वत्वनिष्ठेन शाब्दबोधं प्रति कर्मत्वत्वभेदस्य
हेतुत्वकल्पनापेक्षा नास्ति— उक्तनियमेनैवोक्तशाब्दबोधवारणसंभवात्, शाब्दबोधाश्रयत्वेनाभि
धर्मितावच्छेदकस्य कर्मत्वत्वस्य प्रकारतावच्छेदकतावच्छेदकस्य च कर्मत्वत्वस्यैक्येन भेदाभाव
यथा 'एकः' इत्यत्रोद्देश्यतावच्छेदकस्य विधेयस्य चैकत्वस्यैक्यान्नोक्तशाब्दबोध इष्टस्त
विशेष्यतावच्छेदकस्य प्रकारतावच्छेदकतावच्छेदकस्य कर्मत्वत्वस्यैक्येन भेदाभावादुक्तशाब्दबो
पत्तिवारणं कृतम्। कर्मत्वत्वेति— कर्मत्वत्वावच्छिन्ना या कर्मत्वनिष्ठाऽवच्छेदकता तादृशाव
केनावच्छिन्ना याऽऽधेयत्वसंबन्धावच्छिन्ना कर्मनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता
कर्मतानिष्ठा धर्मिता तादृशधर्मितानिरूपिता या कर्मतात्वनिष्ठा अवच्छेदकता तादृशावच्छेदक
बन्धेन ( कर्मतात्वे शाब्दबोधे जननीये ) इत्यन्वयः। "कर्मत्वत्वादिभेदस्य" इत्यस्य
"हेतुत्वान्तरकल्पनमनादेयम्" इत्यग्रिमवाक्येन सहान्वयः।

'घटो न घटः' इत्यत्र धर्मी घटस्तत्र प्रकारो घटभेदः प्रकारतावच्छेदको घटः प्रकार
च्छेदकतावच्छेदकं घटत्वं धर्मितावच्छेदकमपि घटत्वमेव। घटे समवायेन घटत्वं प्रकारः. घ
घटत्वावच्छिन्नप्रतियोगिताकत्वसंबन्धेन घटः प्रकारः स च भेदः स्वरूपसंबन्धेन घटे वि
प्रकार इतिपदार्थनिर्देशः। घटे च घटभेदो न भवतीत्यत्र शाब्दबोधस्यानुमितेश्च ( घटे घ
दानुमितेः ) वारणाय घटत्वनिष्ठेन घटत्वावच्छिन्नभेदनिष्ठप्रकारतानिरूपितधर्मितावच्छेदकताल
संबन्धेन शाब्दबोधं प्रति घटत्वभेदस्य पृथग् हेतुत्वकल्पनापेक्षा नास्ति—उक्तनियमेनैव वार
भवाद् धर्मितावच्छेदकं प्रकारतावच्छेदकतावच्छेदकं चैकं घटत्वमेव घटत्वे च घटत्वभेदाभा
तद्धर्मान्यवृत्तिविषयतासंबन्धेन ज्ञानसामान्यं प्रति तद्धर्मभेदस्य हेतुत्वादनुमितेरपि वारणं जात
त्यर्थः। घटत्वावच्छिन्नेति— घटत्वावच्छिन्नभेदः=घटत्वावच्छिन्नप्रतियोगिताकभेदस्तन्निष्ठा या प्र
रता तादृशप्रकारतानिरूपिता या घटनिष्ठा धर्मिता तादृशधर्मितावच्छेदकं घटत्वं घटत्व
यैषा धर्मितावच्छेदकता तादृशसंबन्धेनेत्यन्वयः। हेतुत्वान्तरकल्पनमनादेयम्=पृथक् हेतुत्वक

भेदान्वयबोधश्च प्रातिपदिकार्थधात्वर्थयोः प्रत्ययार्थेन क्वचिन्निपातार्थेन च

---

नापेक्षा नास्ति । अत्र हेतुमाह— तद्धर्मभेदस्येति, तद्धर्मभेदनिष्ठया एककारणतयैव="तद्धर्मान्यवृत्तिविषयतासंबन्धेन ज्ञानं प्रति तद्धर्मभेदस्य हेतुत्वात्" इत्युक्तेनैकेनैव कार्यकारणभावेन सकलातिप्रसङ्गानाम्='घटो घटः' 'दण्डवान् दण्डवान्' इत्यादौ शाब्दबोधापत्तीनां वारणसंभवादित्यर्थः ।

॥ इत्यऽभेदान्वयव्युत्पत्तिवादादर्शः समाप्तः ॥

अभेदान्वयबोधप्रकारं निरूप्य संप्रति भेदान्वयबोधप्रकारं वक्तुमुपक्रमते— भेदान्वयेत्यादिना । भेदसंसर्गावच्छिन्ननामार्थनिष्ठप्रकारतानिरूपितविशेष्यतासंबन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति विभक्तिनिपातान्यतरजन्योपस्थितिः कारणं तथा च 'राज्ञः पुरुषः' इत्यत्र राजपुरुषयोर्भेदलक्षणः स्वस्वामिभावः संबन्धः किं वा राज्ञः पुरुषे भेदलक्षणः स्वत्वसंबन्ध इति भेदसंबन्धावच्छिन्नराजत्वावच्छिन्नप्रकारतानिरूपितपुरुषत्वावच्छिन्नविशेष्यताकशाब्दबोधं प्रति ङस्विभक्तिजन्यतदर्थोपस्थितिः कारणमस्ति. अत एव 'राजा पुरुषः' इत्यत्र ङसऽभावेन तदर्थोपस्थित्यभावान्न तादृशो भेदसंसर्गकः शाब्दबोधः । एवम् 'घटो न पटः' इत्यत्र घटपटयोः प्रतियोग्यनुयोगिभावलक्षणो भेदसंबन्धोऽस्ति. किं वा घटे पटस्य स्वप्रतियोगिकभेदविशिष्टत्वं संबन्धोऽस्ति पटप्रतियोगिकभेदवान् घट इति चार्थस्तथा चात्र भेदसंबन्धावच्छिन्नपटत्वावच्छिन्नप्रतियोगिताकभेदत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताकशाब्दबोधं प्रति नञ्पदजन्यतदर्थोपस्थितिः कारणमस्तीति कार्यकारणभावमभिप्रेत्याह— प्रातिपदिकेत्यादिना ।

प्रातिपदिकार्थस्य प्रत्ययार्थेन क्वचिन्निपातार्थेनैव च सह भेदान्वयो जायते यथा— तण्डुलं पचति, इत्यत्र प्रातिपदिकार्थतण्डुलस्याऽम्प्रत्ययार्थकर्मत्वे आधेयतालक्षणेन भेदसंबन्धेनान्वय 'आधेयतासंबन्धेन तण्डुलवती कर्मता' इति बोधात् । 'चन्द्र इव मुखम्' इत्यत्र च निरूपितत्वलक्षणेन भेदसंबन्धेन प्रातिपदिकार्थस्य चन्द्रस्य इवनिपातार्थसादृश्येन सहान्वयः, सादृश्यस्य चाधारतासंबन्धेन मुखेन सहान्वयः— चन्द्रनिरूपितसादृश्यवन्मुखमितिबोधात् । एवं धात्वर्थस्यापि प्रत्ययार्थेन क्वचिन्निपातार्थेनैव च सह भेदान्वयो जायते यथा— 'तण्डुलं पचति' इत्यत्र धात्वर्थपाकस्यानुकूलतासंबन्धेनाख्यातार्थ ( प्रत्ययार्थ ) कृत्या सहान्वयः पाकानुकूला कृतिरितिबोधात्, तादृशप्रत्ययार्थकृतेश्चाधारतासंबन्धेन कर्त्रा सहान्वयः— पाकानुकूलकृतिमान् देवदत्त इति । 'न कलञ्जं भक्षयेत्' इत्यत्र च धात्वर्थभक्षणे विध्यर्थभूतं यद्बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वं तदभावस्य निपातनञर्थस्यानुयोगितासंबन्धेनान्वयः— बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वाभाववत्कलञ्जभक्षणमिति बोधात् । गुरुमते तु— कलञ्जभक्षणाभाववत् पण्डापूर्वमुत्पादयेदिति बोधः । नत्वऽन्येन=प्रत्ययनिपातार्थातिरिक्तेन प्रातिपदिकार्थेन धात्वर्थेन चेत्यर्थः । विभक्त्यर्थमन्तराकरणं विना प्रातिपदिकार्थयोः साक्षाद् भेदान्वयो न भवति किं

सममेव जायते न त्वऽन्येन । सत्यपि पदार्थोपस्थितियोग्यताज्ञानादिरूपकार कलापे 'राजा पुरुषः' 'भूतलं घटः' इत्यादौ पुरुषघटाद्यंशे राजभूतला स्वत्वाधेयतासंबन्धेन, 'तण्डुलः पचति' 'चैत्रः पच्यते' इत्यादौ कर्मत्वक त्वादिसंबन्धेन तण्डुलचैत्रादौ पाकादेः, स्वकर्मकत्वस्वकर्तृकत्वादिसंबन्धेन पाक द्यंशे वा तण्डुलचैत्रादेरन्वयाऽबोधान्निपातातिरिक्तप्रातिपदिकार्थयोः क्रियाताद्दश प्रातिपदिकार्थयोश्च भेदेन साक्षादन्वयबोधस्याऽव्युत्पन्नत्वात् ।

---

त्वभेदान्वय एव यथा— 'नीलो घटः' इत्यत्र । विभक्त्यर्थमन्तराकृत्य तु भेदान्वयोपि भ यथा— 'राज्ञः पुरुषः' इत्यत्र ङसर्थस्वत्वमन्तराकृत्य राजपुरुषयोः । एवं विभक्त्यर्थमन्तर रणं विना प्रातिपदिकधात्वर्थयोरपि साक्षाद् भेदान्वयो न भवति किं त्वभेदान्वय एव यथ 'स्तोकं पचति' इत्यत्र स्तोकपाकयोरभेदान्वयः— स्तोकाभिन्नः पाक इति । विभक्त्यर्थमन्त कृत्य तु भेदान्वयोपि भवति यथा—'तण्डुलं पचति' इत्यत्र विभक्त्यर्थकर्मत्वद्वारा कर्मणस्त लस्य पाके स्वकर्मकत्वसंबन्धेनान्वयः ।

विपक्षे बाधकमाह— सत्यपीति । 'राजा पुरुषः' इत्यत्र राजपदजन्यराजोपस्थितिपुरुष जन्यपुरुषोपस्थितियोग्यताज्ञानादिसत्त्वेपि ङस्प्रत्ययाभावेन तदर्थोपस्थित्यभावात् पुरुषवि कराजनिरूपितस्वत्वसंबन्धान्वयबोधो न भवति । 'भूतलं घटः' इत्यत्र भूतलपदजन्यभूतलोप तिघटपदजन्यघटोपस्थितियोग्यताज्ञानादिसत्त्वेपि ङिप्रत्ययाभावेन तदर्थोपस्थित्यभावाद् विषयकभूतलनिरूपिताधेयतासंबन्धान्वयबोधः ( आधेयतासंबन्धेन भूतलवान् घट इतिबोधः भवति । 'तण्डुलः पचति' इत्यत्र तण्डुलपदजन्यतण्डुलोपस्थितिधातुपदजन्यपाकोपस्थिति ग्यताज्ञानादिसत्त्वेपि कर्मत्वबोधकाऽम्प्रत्ययाभावेन तदर्थोपस्थित्यभावात् कर्मत्वसंबन्धेन त पाकान्वयो न भवति, अम्प्रत्ययसत्त्वे तु तदर्थोपस्थितिसंभवाद् भवत्येव यथा— 'त पचति' इत्यत्र । 'चैत्रः पच्यते' इत्यत्र चैत्रपदजन्यचैत्रोपस्थितिधातुपदजन्यपाकोपस्थि योग्यताज्ञानादिसत्त्वेपि कर्तृत्वबोधकतृतीयाविभक्त्यभावेन तदर्थोपस्थित्यभावात् कर्तृत्वसंब चैत्रे पाकान्वयो न भवति, तृतीयासत्त्वे तु भवत्येव यथा— 'चैत्रेण पच्यते' इत्यत्र । स्व र्मकत्वेति— 'तण्डुलः पचति' इत्यत्रोक्तोपस्थितियोग्यताज्ञानादिसत्त्वेपि द्वितीयाविभक्तिज तदर्थोपस्थित्यभावात् स्वकर्मकत्वसंबन्धेन पाके तण्डुलान्वयोपि न भवति, द्वितीयासत्त्वे भवत्येव यथा—'तण्डुलं पचति' इत्यत्र । 'चैत्रः पच्यते' इत्यत्राप्युक्तोपस्थितियोग्यताज्ञाना सत्त्वेपि तृतीयाविभक्तिजन्यतदर्थोपस्थित्यभावात् स्वकर्तृकत्वसंबन्धेन पाके चैत्रान्वयोपि भवति, तृतीयासत्त्वे तु भवत्येव यथा— 'चैत्रेण पच्यते' इत्यत्र चैत्रकर्तृकत्वसंबन्धेन चैत्रव पाक इत्यन्वयः ।

एवम् 'राजा पुरुषः' इत्यादौ भेदलक्षणेन स्वत्वादिसंबन्धेनान्वयबोधानुत्पत्तेर्भेदान्वय बाभावनियामकस्वरूपमाह— निपातातिरिक्तेति, निपातातिरिक्तेतिव्युत्पत्तिः 'राजा पुरुषः

विभक्त्यर्थमन्तराकृत्य तयोरप्यन्वयबोधात् साक्षादिति ।

निपातातिरिक्तत्वादिविशेषणात्– 'भूतले न घटः' 'घटो न पटः' इत्यादौ घटादेर्नञर्थाभावेन, 'मुखं चन्द्र इव' इत्यादौ मुखचन्द्रादीनामिवार्थसादृश्यादिना, 'न कलञ्जं भक्षयेत्' इत्यादौ नैयायिकमते नञुपस्थाप्येन बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वादिरूपविध्यर्थाऽभावेन धात्वर्थभक्षणादेरनुयोगितया. गुरुमते तु विध्यर्थाऽपूर्वांशे विशेषणतयान्वितेन नञुपस्थाप्याभावेन धात्वर्थभक्षणादेः प्रतियोगितयान्वयेपि न क्षतिः ।

---

इत्यादौ स्वत्वादिसंबन्धेन शाब्दबोधवारणाय, क्रियेत्यादिव्युत्पत्तिश्च 'तण्डुलः पचति' इत्यादौ कर्मत्वादिसंबन्धेन शाब्दबोधवारणाय, तथा च निपातातिरिक्तप्रातिपदिकार्थयोर्द्वयोः परस्परं साक्षाद् भेदेनान्वयो न भवति यथा– 'राजा पुरुषः' इत्यत्र राजपुरुषयोः स्वत्वसंबन्धेन साक्षादन्वयो न भवति । क्रिया=धात्वर्थः । तादृशः=निपातातिरिक्तः । धात्वर्थनिपातातिरिक्तप्रातिपदिकार्थयोरपि परस्परं साक्षाद् भेदसंबन्धेनान्वयो न भवति यथा– 'तण्डुलः पचति' इत्यत्र तण्डुलपाकयोः कर्मत्वसंबन्धेनान्वयो न भवतीत्यर्थः ।

स्वत्वादिसंबन्धबोधकङसादिप्रत्ययसत्त्वे तूपस्थिततदर्थद्वारा भेदसंबन्धेनान्वयो भवत्येवेति साक्षादित्युक्तं तदेवाह– विभक्त्यर्थेति । तथा च 'राज्ञः पुरुषः' इत्यत्र ङसर्थं स्वत्वमन्तराकृत्य तद्द्वारा राजपुरुषयोर्भेदसंबन्धेनान्वयो भवत्येव राज्ञो निरूपितत्वसंबन्धेन स्वत्वे स्वत्वस्याधारतासंबन्धेन पुरुषेऽन्वयः– राजनिरूपितस्वत्ववान् पुरुष इति । एवम् 'भूतले घटः' इत्यत्र । 'तण्डुलं पचति' 'चैत्रेण पच्यते' इत्यादावपि विभक्त्यर्थद्वारा धात्वर्थप्रातिपदिकार्थयोर्भेदसंबन्धेनान्वयो भवत्येव ।

निपातातिरिक्तेतिविशेषणसार्थक्यमाह– निपातातिरिक्तत्वेति, निपातातिरिक्तप्रातिपदिकार्थयोर्निपातातिरिक्तप्रातिपदिकार्थधात्वर्थयोश्च भेदेन साक्षादन्वयबोधस्याऽव्युत्पन्नत्वेपि निपातार्थप्रातिपदिकार्थयोर्धात्वर्थनिपातार्थयोश्च तु भेदसंबन्धेन साक्षादन्वयो भवत्येवेत्यर्थः । तथाहि– 'भूतले न घटः' इत्यत्र नञर्थाभावेन घटस्य स्वप्रतियोगिकत्वसंबन्धेनान्वयः– नञोनिपातत्वात्, घटप्रतियोगिकाभावो भूतलवृत्तिरित्यर्थः । 'घटो न पटः' इत्यस्य पटप्रतियोगिकभेदवान् घट इत्यर्थः,अत्र च स्वानुयोगिकत्वसंबन्धेन घटस्य स्वप्रतियोगिकत्वसंबन्धेन च पटस्याभावे साक्षादेवान्वयः । इवपदस्यापि निपातत्वात् 'मुखं चन्द्र इव' इत्यत्रेवार्थसादृश्येन मुखचन्द्रयोः साक्षादेवान्वयो भवति तत्र चन्द्रस्य स्वप्रतियोगिकत्वसंबन्धेन मुखस्यस्वानुयोगिकत्वसंबन्धेन चान्वयः, चन्द्रप्रतियोगिकसादृश्यानुयोगि मुखमितिबोधः । एवं निपातार्थप्रातिपदिकार्थयोर्भेदसंबन्धेन साक्षादन्वयमुक्त्वा धात्वर्थनिपातार्थयोर्भेदसंबन्धेन साक्षादन्वयमुदाहरति– न कलञ्जेति, 'न कलञ्जं भक्षयेत्' इत्यत्र नैयायिकमते बलवदनिष्टाऽननुबन्धित्वविशिष्टेष्टसाधनत्वरूपविध्यर्थाऽभावेन नञुपस्थाप्येन सह धात्वर्थभक्षणस्यानुयोगित्वेन रूपेण साक्षादेवान्वयः– 'कलञ्जकर्मक

' राजपुरुषः ' इत्यादि समासस्थले तु पुरुषादिपदार्थेन समं राजादिपदार्थस्य न भेदान्वयबोधः किं तु तेन समं विभक्त्यन्तार्थविशिष्टलाक्षणिकराजादिपदो-पस्थाप्यराजसंबन्ध्यादेरभेदान्वयबोध एवेति न दोषः । एवम्— ' मुखं चन्द्रः ' इत्यादिरूपकस्थले चन्द्रादिपदस्य चन्द्रादिसदृशे लक्षणया चन्द्रादिसदृशाऽभेदा-न्वयबोध एव, न तु सादृश्यादिसंबन्धेन चन्द्रादेर्मुखादावन्वय इति न तत्र व्यभिचारः ।

---

भक्षणं बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वाभाववत् ' इतिबोधोदयात्, अत्र च धात्वर्थभक्षणस्यैवाभावानुयोगित्वात् । प्रभाकरमते तु विध्यर्थापूर्वांशे विशेषणतयान्वितेन नञुपस्थाप्याभावे सह धात्वर्थभक्षणस्य प्रतियोगित्वरूपेण साक्षादेवान्वयः— ' कलञ्जभक्षणप्रतियोगिकाभाववदपूर्वमुत्पादयेत् ' इतिबोधोदयात्, अत्र च धात्वर्थभक्षणस्याभावप्रतियोगित्वेन भानात्, तथा च धात्वर्थस्य निपातरूपनञर्थाभावस्य च परस्परं साक्षादेव भेदसंबन्धेनान्वयस्येष्टत्वान्निपातातिरिक्तेतिविशेषणं चरितार्थम् । विध्यर्थश्चापूर्वमिति प्राभाकराणां संकेतस्तदुक्तं तैः— "क्रियाक्षणविनशिनी न कालान्तरभाविनः स्वर्गादेः साधनायोपपद्यते इति कालान्तरस्थायि क्रियातो भिन्नं कार्यमपूर्वं लिङादयो बोधयन्तीति स्थितम् । न च कार्याभिधानं कृतिमनभिदधतां लिङादीनामुपपद्यते इति कृतिमप्यभिदधति, अपूर्वं च । " इति । न क्षतिरिति—भेदसंबन्धेन नामार्थयोर्नामार्थधात्वर्थयोश्च साक्षादन्वयाभावो निपातातिरिक्तेति विशेषणात्, निपातार्थेन तु भेदसंबन्धेना साक्षादन्वयो भवत्येवेति प्राप्त्या ' भूतले न घटः ' इत्यादौ निपातार्थनामार्थयोः ' न कलञ्जं भक्षयेत् ' इत्यादौ धात्वर्थनिपातार्थयोः प्रदर्शितरीत्या भेदसंबन्धेन साक्षादप्यन्वये न क्षतिः न दोषः= नोक्तनिपातातिरिक्तेत्यादिकस्य भेदसंबन्धेनान्वयाभावनियामकस्याऽव्याप्तिरित्यर्थः ।

ननु भेदसंसर्गावच्छिन्ननामार्थनिष्ठप्रकारतानिरूपितविशेष्यतासंबन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति विभक्तिनिपातान्यतरजन्योपस्थितेः कारणत्वात् ' राजपुरुषः ' इत्यत्र च ङस्विभक्त्यभावे तज्जन्यतदर्थोपस्थित्यभावात् कथं भेद ( स्वत्व )संबन्धेन राजप्रकारकपुरुषविशेष्यकबोधः स्यादित्याशङ्क्य समासस्थले भेदान्वयबोधं पराचष्टे—राजपुरुषेति । तर्हि कथमत्रान्वयबोधः ? इत्याशङ्क्याह— किं त्विति, तेन=पुरुषपदार्थेन सह । विभक्त्येति—विभक्त्यन्तस्य राज्ञ इति पदस्यार्थः=राजसंबन्धस्तद्विशिष्टे=राजसंबन्धविशिष्टे राजसंबन्धिनि लाक्षणिकं यद्राजपदं तदुपस्थाप्यो लक्षणया राजसंबन्धी तस्य पुरुषपदार्थेनाभेदान्वय एवात्र—राजसंबन्ध्यऽभिन्नः पुरुष इति दोषः= ङस्प्रत्ययजन्योपस्थित्यभावादत्र भेदान्वयबोधस्यापत्तिर्नास्त्येव येन दोषः स्यादित्यर्थः ' मुखं चन्द्र इव ' इत्यत्र तु इवपदजन्योपस्थितिसत्त्वेन भेदान्वयबोधो भवति ' मुखं चन्द्रः ' इत्यादिरूपकस्थले तु इवपदजन्योपस्थित्यभावेनाऽभेदान्वयबोध एव भवति, अत्र चन्द्रपदस्य चन्द्रसदृशे लक्षणा तथा च चन्द्रसदृशाऽभिन्नं मुखमित्यऽभेदान्वयबोध एव न तु स्वप्रतियो

केचित्तु रूपकस्थले चन्द्रादिपदस्य चन्द्रादिसदृशे न लक्षणा किं तु तत्र मुख्यार्थचन्द्रादेरेवाऽभेदभ्रमो मुखादौ । 'मुखं न चन्द्रः' इत्यादिविशेषदर्शनद-शायां च न तत्र शाब्दोऽभेदप्रत्ययः, अपि तु शब्दजन्यविशकलितपदार्थोप-स्थितिमूलको मानस एवाऽऽहार्योऽभेदभ्रम इत्याहुः ।

परे तु– तादात्म्यातिरिक्तसंबन्धेन नामार्थयोर्नान्वयबोधः, तादात्म्यं च प्रकृते तद्वृत्तिधर्मवत्त्वम्, एवं च 'नीलो घटः' इत्यादौ स्ववृत्तिनीलत्वादिम-त्त्वसंबन्धेन घटाद्यंशे नीलपदार्थस्येव 'मुखं चन्द्रः' इत्यादौ स्ववृत्त्याल्हादकत्वा-

---

कसादृश्यसंबन्धेन चन्द्रस्य मुखे भेदान्वयो येन इवपदजन्योपस्थित्यभावेपि भेदान्वयात्स्या भिचारः स्यादित्यर्थः ।

आलङ्कारिकमतमाह– केचित्त्विति, 'मुखं चन्द्रः' इत्यादिरूपकस्थले चन्द्रादिसादृश्यं न तीयते किं तु चन्द्राद्यऽभेद एव प्रतीयते– चन्द्राभिन्नं मुखमिति, अतो न चन्द्रादिपदस्य न्द्रादिसदृशे लक्षणा किं तु तत्र=रूपकस्थले मुखादौ मुख्यार्थस्य चन्द्रादेरेवाऽभेदस्य भ्रमो ति–वस्तुतश्चन्द्रमुखयोर्भिन्नत्वात् । यदि च रूपकस्थले चन्द्रपदस्य चन्द्रसदृशे लक्षणा स्या-दा मुखे चन्द्रसादृश्यमात्रप्राप्तौ रूपकोपमयोर्भेदो न स्यादुपमायामपि चन्द्रादिसादृश्यस्य मादिति रूपके उपमानोपमेययोरभेद एव प्रतीयते इत्यर्थः । यदा च 'मुखं न चन्द्रः' इत्या-रकं विशेषदर्शनम्=भेदज्ञानं वर्तते तदा तत्र=रूपकस्थले उपमानोपमेययोरभेदप्रत्ययोपि न ब्दो भवति किं तु शब्दजन्यविशकलितपदार्थोपस्थितिमूलकः=मुखचन्द्रशब्दाभ्यां विशकलि-=परस्परं संबन्धरहिता मुखचन्द्रपदार्थयोरुपस्थितिर्जायते तन्मूलको मानस एवाऽऽहार्यभेद-मो जायते । बाधज्ञानकालीनेच्छाजन्यं ज्ञानमाहार्यम्, सामान्यतो बाधज्ञानकाले भ्रमो न वति यस्तु भ्रमो बाधज्ञानकालेपि वर्तते स आहार्यभ्रम इत्यर्थः ।

परे त्विति– नामार्थयोः=प्रातिपदिकार्थयोः परस्परं साक्षात् तादात्म्यसंबन्धेनैवाऽन्वयो भवति तु तादात्म्यातिरिक्तसंबन्धेन । तादात्म्यातिरिक्तेन कर्मत्वादिरूपेण भेदसंबन्धेन तु प्रत्य-र्थमन्तराकृत्यैवान्वयो भवति स तु न साक्षाद् भवति प्रत्ययार्थस्य मध्यपातित्वात् तथा क्तायाः "निपातातिरिक्तप्रातिपदिकार्थयोः क्रियातादृशप्रातिपदिकार्थयोश्च भेदेन साक्षाद-यबोधस्याव्युत्पन्नत्वात् ( पृ० ६८ )" इतिव्युत्पत्तेरप्ययमेवार्थ इत्यर्थः । तादात्म्यस्व-पमाह– तादात्म्यमिति । तद्वृत्ति=प्रतियोगिवृत्ति । तथा च 'नीलो घटः' इत्यत्र स्व-त्तिनीलत्ववत्त्वसंबन्धेन घटे नीलपदार्थस्यान्वयो भवति स्ववृत्तिनीलत्ववत्त्वमेवात्र तद्वृत्तिधर्म-त्वं तदेव तादात्म्यरूपः संबन्धः– स्वं नीलपदार्थः तद्वृत्ति नीलत्वं च गुणरूपं नीलरूपमेव– णवाचकनीलादिपदस्य गुणिपरत्वे तादृशनीलादिपदार्थनिष्ठस्य नीलत्वादेर्गुणरूपत्वाद् पत्वरूपनीलत्वादेर्गुणमात्रवृत्तित्वेन गुणिनि द्रव्ये बाधात्, अथ च नीलोपि घट एवेति लवृत्ति नीलत्वं घटवृत्त्येवेति नीलत्ववत्त्वं घटे वर्तते तेन संबन्धेन घटे यथा नीलपदार्थ-

दिमत्त्वसंबन्धेन मुखादौ चन्द्रादेरन्वयबोधः, तादृशान्वयबोधेऽपि समानविभक्तिकत्वं तन्त्रमित्यतो नातिप्रसङ्ग इति वदन्ति ।

अथ 'राजा पुरुषः' इत्यादौ पदार्थोपस्थित्यादिसत्त्वेन कथं न भेदान्वयबोधः ? सामग्र्या कार्यजनने उक्तनियमभङ्गरूपायाः प्रयोजनक्षतेरकिंचित्करत्वात्, सामग्रीसत्त्वेऽवश्यं कार्यमितिनियमात् ।

न च तत्र भेदान्वयबोधौपयिकाकाङ्क्षाविरहाच्छाब्दसामग्र्येवासिद्धेति वाच्यम्, समभिव्याहाररूपाकाङ्क्षायास्तत्रापि सत्त्वात् । न च तादृशाकाङ्क्षायास्तत्र सत्त्वेपि, राजादिपदार्थप्रकारकभेदान्वयबोधे राजादिपदाऽव्यवहितोत्तरङसपदत्वरूपानुपूर्वीविशेषरूपाया आकाङ्क्षाया अपि प्रयोजकत्वात् तदभावादेव न तत्र शाब्दसामग्रीति वाच्यम्, संबन्धादिविशेष्यकराजादिप्रकारकान्वय-

---

स्याभेदान्वयस्तथा 'मुखं चन्द्रः' इत्यत्रापि स्ववृत्त्याल्हादकत्ववत्त्वलक्षणेन तादात्म्यसंबन्धेन मुखे चन्द्रस्याभेदान्वयः, एवं चन्द्रः. चन्द्रवृत्त्याल्हादकत्ववत्त्वं च मुखेऽस्त्येव । ननु गुणरूपनीलत्वं घटेऽस्त्येवेति तेन संबन्धेन 'नीलस्य घटः' इत्यत्राऽप्यभेदान्वयबोधः स्यादित्याशङ्क्याह–तादृशेति, उक्ततादात्म्यसंबन्धेनाप्यभेदान्वयबोधे समानविभक्तिकत्वं प्रयोजकमस्ति 'नीलस्य घटः' इत्यत्र समानविभक्तिकत्वाभावादेवाभेदान्वयबोधो न भवतीति नातिप्रसङ्ग 'नीलो घटः' 'मुखं चन्द्रः' इत्यादौ च समानविभक्तिकत्वस्य सत्त्वादऽभेदान्वयबोधो भवत्येवेत्यर्थः।

ननु 'राजा पुरुषः' इत्यत्रापि राजपदजन्यराजोपस्थितिः पुरुषपदजन्यपुरुषोपस्थितिः पुरुषे राजसंबन्धयोग्यतासत्त्वाद् योग्यताज्ञानमप्यस्ति राजसंबन्धिपुरुषविषयकबोधो भवतु तात्पर्यज्ञानमप्यस्त्येवेति भेदान्वयबोधकसामग्रीसत्त्वे भेदान्वयबोधस्यावश्यंभावात् 'निपातातिरिक्तनामार्थयोः साक्षाद् भेदान्वयो न भवति' इत्युक्तनियमभङ्गरूपायाः प्रयोजनक्षतेः=प्रयोजकक्षतेरबाधकत्वादित्याशङ्कते– अथेति ।

ननु शाब्दबोधं प्रत्याकाङ्क्षाया अपि कारणत्वमस्ति भेदान्वयबोधं प्रति च ङसपदसमभिव्याहाररूपाया ङसन्तराजादिपदसमभिव्याहाररूपाया वा आकाङ्क्षायाः कारणत्वादेतादृशाकाङ्क्षायाः 'राजा पुरुषः' इत्यत्राभावाद् भेदान्वयबोधौपयिकसामग्र्येव नास्तीति कथं भेदान्वयबोधः स्यादित्याशङ्क्याह– न चेति । परिहारमाह–समभिव्याहारेति राजपदपुरुषपदसमभिव्याहाररूपाकाङ्क्षायास्तत्र='राजा पुरुषः' इत्यत्रापि सत्त्वादेव भेदान्वयबोधः स्यादेवेत्यर्थः । ननु तादृशायाः=राजपदपुरुषपदसमभिव्याहाररूपाया आकाङ्क्षायास्तत्र='राजा पुरुषः' इत्यत्र सत्त्वेपि या खलु राजादिपदार्थप्रकारकभेदान्वयबोधप्रयोजिका राजादिपदाव्यवहितोत्तरङसपदत्वरूपानुपूर्वीरूपाऽऽकाङ्क्षा तस्या अभावादेव न तत्र='राजा पुरुषः' इत्यत्र भेदान्वयशाब्दसामग्रीति कथं भेदान्वयबोधः स्यादित्याशङ्क्याह–न चेति । परिहारमाह–संबन्धादीति, राजपदार्थप्रकारकषष्ठ्यर्थस्वत्वसंबन्धविशेष्यकशाब्दबोधं प्रत्येव तादृशाकाङ्क्षाज्ञानस्य=राजपदोत्तरङ

बोधे एव तादृशाकाङ्क्षाज्ञानस्य हेतुतया पुरुषादौ राजादिपदार्थप्रकारकान्वयबोधोत्पत्तौ तादृशाकाङ्क्षाज्ञानरूपकारणविरहस्याकिंचित्करत्वात् ।

अत्र केचित्– नामार्थप्रकारकभेदान्वयबोधं प्रति समानविशेष्यताप्रत्यासत्त्या प्रत्ययजन्योपस्थितेर्हेतुत्वकल्पनान्नामार्थप्रकारकभेदान्वयबोधे विशेष्यतया प्रत्ययार्थस्यैव भानं न तु नामार्थान्तरस्य तत्र विशेष्यतासंबन्धेन प्रत्ययजन्योपस्थितेरसत्त्वात् ।

---

दाकाङ्क्षाज्ञानस्य हेतुत्वमस्ति न तु राजपदार्थप्रकारकपुरुषविशेष्यकशाब्दबोधं प्रत्यपि, मया 'राजा पुरुषः' इत्यत्र न राजप्रकारकस्वत्वसंबन्धविशेष्यकबोधापत्तिरुच्यते किं तु पुरुषविशेष्यकशाब्दबोधापत्तिः, पुरुषविशेष्यकशाब्दबोधं प्रति तु ङसन्तराजपदसमभिव्याहाररूपाया आकाङ्क्षायाः कारणत्वमेव नास्ति, अन्यथा 'राजपुरुषः' इत्यत्रापि पुरुषविशेष्यको बोधो न स्यादेव तथा च तादृश=ङसन्तराजपदसमभिव्याहाररूपाकाङ्क्षाऽभावस्याऽकिंचित्करत्वात्=पुरुषविशेष्यकशाब्दबोधाप्रतिबन्धकत्वात् 'राजा पुरुषः' इत्यत्र राजप्रकारकपुरुषविशेष्यको भेदान्वयबोधः स्यादेवेत्यर्थः । किं वा भेदलक्षणस्वत्वसंबन्धस्य प्रकारतया शाब्दबोधे ङसन्तराजपदसमभिव्याहारस्य कारणत्वमस्ति स्वत्वोपस्थापकङसऽभावे स्वत्वानुपस्थितौ स्वत्वस्य प्रकारतया भानासंभवादुपस्थितस्यैव प्रकारतया भाननियमात्, मया तु स्वत्वसंबन्धस्य संसर्गतया भानमुच्यते संसर्गतया भानं त्वनुपस्थितस्याप्याकाङ्क्षाबलाद् भवत्येवेति 'राजा पुरुषः' इत्यत्र पुरुषविशेष्यकः स्वत्वसंसर्गकः कथं न शाब्दबोधो भवतीति पूर्वपक्षाभिप्रायः ।

अत्र केचिदिति, नामार्थप्रकारकभेदान्वयबोधं प्रति समानविशेष्यताप्रत्यासत्त्या प्रत्ययजन्योपस्थितेर्हेतुत्वकल्पनान्न 'राजा पुरुषः' इत्यत्र राजप्रकारकपुरुषविशेष्यकभेदान्वयबोधस्यापत्तिरित्यन्वयः । नामार्थयोस्साक्षाद् भेदान्वयबोधो नैव भवति किं वा साक्षाद् नामार्थप्रकारकनामार्थविशेष्यकभेदान्वयबोधो नैव भवतीति सिद्धान्तः– नामार्थस्य प्रत्ययार्थेन वा निपातार्थेन वा भेदान्वयबोधस्वीकारात् । 'नीलो घटः' इत्यादौ त्वभेदान्वयबोध एवेति न नीलघटयोर्नामार्थयोर्भेदान्वयबोधः । 'राज्ञः पुरुषः' इत्यादौ च नामार्थपुरुषे न साक्षाद्राजपदार्थान्वयः किं तु राजा निरूपितत्वसंबन्धेन स्वत्वे प्रकारः षष्ठ्यर्थभूतं तादृशस्वत्वं चाश्रयत्वसंबन्धेन पुरुषे प्रकारस्तथा चात्र=निरूपितत्वसंबन्धावच्छिन्नराजत्वावच्छिन्नप्रकारतानिरूपिताश्रयत्वसंबन्धावच्छिन्नस्वत्वत्वावच्छिन्नप्रकारतानिरूपितपुरुषत्वावच्छिन्नविशेष्यताकः शाब्दबोधः किं वा निरूपितत्वसंबन्धावच्छिन्नराजत्वावच्छिन्नप्रकारतानिरूपितस्वत्वनिष्ठविशेष्यतासमानाधिकरणप्रकारतानिरूपितपुरुषत्वावच्छिन्नविशेष्यताकः शाब्दबोधो भवति । नामार्थप्रकारकभेदान्वयबोधश्च प्रत्ययार्थस्य भवति तत्र प्रत्ययार्थे विशेष्यतासंबन्धेन शाब्दबोधो यदा भवति तदा विशेष्यतासंबन्धेन तत्र प्रत्ययजन्योपस्थितिरपि भवत्येव यथा 'राज्ञः' इत्यत्र राजपदेन राजोपस्थितिर्भवति ङस्पदेन च स्वत्वोपस्थितिर्भवति राजपदार्थस्य स्वत्वे भेदलक्षणेन निरूपितत्वसंबन्धेनान्वयो भवतीति नामार्थराजप्रकारस्वत्ववि-

न च संबन्धादेरपि नामार्थतया. तत्प्रकारकान्वयबोधे पुरुषादिपदार्थस्य विशेष्यतया भानानुपपत्तिः, तत्तन्नामपदजन्यतत्तन्नामार्थप्रकारकशाब्दबोधत्वावच्छिन्नं प्रति प्रत्ययजन्योपस्थितित्वेन हेतुत्वेपि 'राजसंबन्धः प्रमेयः' 'राज्ञः पुरुषः' इत्येतादृशवाक्यद्वयजन्यवाक्यार्थद्वयान्वयबोधे पुरुषस्य राजसंबन्धविशेष्यतया भानानुपपत्तिरिति वाच्यम्, प्रत्ययाधीनतत्तत्पदार्थोपस्थित्यजन्यतदर्थप्र-

---

शेष्यकभेदान्वयबोधं प्रति प्रत्ययजन्योपस्थितेः कारणत्वमुक्तमत्र च स्वत्वस्य ङस्प्रत्ययजन्योपस्थितिरप्यस्तीति सर्वं सुस्थम् । 'राजा पुरुषः' इत्यत्र च पुरुषस्य पुरुषपदजन्योपस्थिते प्रत्ययजन्योपस्थित्यभावाद् न राजप्रकारको भेदान्वयबोधः संभवतीत्यर्थः । तथा च नामार्थप्रकारकभेदान्वयबोधे प्रत्ययार्थस्यैव विशेष्यतया भानं भवति प्रत्ययजन्योपस्थितिविषयत्वात्, नामार्थप्रकारकभेदान्वयबोधे नामार्थान्तरस्य तु विशेष्यतया भानं नैव भवति तत्र= नामार्थान्त विशेष्यतासंबन्धेन प्रत्ययजन्योपस्थितेरसंभवादित्येवाह– नामार्थेति ।

ननु यदि नामार्थप्रकारकभेदान्वयबोधं प्रति प्रत्ययजन्योपस्थितेर्हेतुत्वं तदा 'राज्ञः पुरुषः' इत्यत्र षष्ठ्यर्थस्वत्वप्रकारकपुरुषविशेष्यकबोधोपि न स्यात्– संबन्धभूतं यत् षष्ठ्यर्थस्वत्वं तद् यथा ङस्प्रत्ययस्यार्थस्तथा स्वत्वरूपनाम्नः संबन्धरूपनाम्नश्चार्थो भवत्येवेति स्वत्वरूपसंबन्धस्या नामार्थतया स्वत्वप्रकारकबोधेपि पुरुषस्य विशेष्यतया भानं न स्यात्– प्रत्ययजन्योपस्थितिवि षयत्वाभावादित्याशङ्कते– न चेति । ननु यन्नामार्थप्रकारकः शाब्दबोध इष्टः स यदा प्रकारीभू तनामार्थवाचकनामपदजन्यो भवति तदा तादृशशाब्दबोधं प्रत्येव प्रत्ययजन्योपस्थितेर्हेतुत्वमुच्य यथा 'राज्ञः' इत्यत्र षष्ठ्यर्थस्वत्वविशेष्यकबोधे नामार्थस्य राजपदार्थस्य निरूपितत्वसंबन्धे स्वत्वे प्रकारत्वमस्ति. अथ चायं शाब्दबोधो राजनामपदजन्योप्यस्त्येवेत्येतादृशशाब्दबोधं प्रति प्रत्ययजन्योपस्थितेः कारणत्वमस्ति अत्र च स्वत्वस्य विशेष्यस्य ङस्प्रत्ययेनैवोपस्थितिरस्त्येवेति काप्यनुपपत्तिः 'राज्ञः पुरुषः' इत्यत्र तु पुरुषविशेष्यकबोधे पुरुषे प्रकारीभूतस्य स्वत्वस्य यद्य नामार्थत्वमस्त्येव नामार्थत्वस्य केवलान्वयित्वात् तथापि स्वत्वस्योपस्थितिर्नात्र नामजन्या किं ङस्प्रत्ययजन्यैवेति शाब्दबोधस्य प्रकारीभूतं यत्स्वत्वं तस्य तद्वाचकस्वत्वादिनामपदजन्यत्वाभाव न्नात्र प्रत्ययजन्योपस्थितेः कारणत्वमिति पुरुषस्य प्रत्ययजन्योपस्थित्यविषयत्वेपि विशेष्यतया भा न काप्यनुपपत्तिरित्याशङ्क्याह– तत्तन्नामपदेति । अत्रापि दोषमाह– राजसंबन्धेति, तत्तन्नाम पदजन्येत्यादिनियमे कृतेपि 'राजसंबन्धः प्रमेयः' 'राज्ञः पुरुषः' इत्येतादृशवाक्यद्वयजन्य यः समूहालम्बनात्मको बोधस्तत्र पुरुषस्य राजसंबन्धविशेष्यतया यदिष्टं भानं तन्न स्यात्, अ षष्ठ्यर्थस्वत्वस्य यथा ङस्पदेनोपस्थितिरस्ति तथा 'राजसंबन्धः' इतिसंबन्धपदेनाप्यस्त्येवेत्य नामपदजन्यनामार्थप्रकारकशाब्दबोधो जायते संबन्धेतिनामपदजन्यत्वात् संबन्धेतिनामार्थस्वत्व प्रकारकत्वाच्च पुरुषस्य च प्रत्ययजन्योपस्थितिर्नास्तीति राजसंबन्धविशेष्यतया भानानुपपत्ति रिति पूर्वपक्षः ।

कारकशाब्दत्वावच्छिन्नं प्रत्येव प्रत्ययजन्योपस्थितेः समानविशेष्यताप्रत्यासत्त्या हेतुत्वोपगमात् ।

अथैवमपि यत्र 'राजा पुरुषः' इत्यत्र पुरुषपदाधीनपुरुषोपस्थितौ प्रत्ययव-रात् कश्चित्प्रत्ययार्थोऽपि विषयीभूतस्तत्र प्रत्ययजन्यतथाविधसमूहालम्बनोपस्थि-तेर्विशेष्यतासंबन्धेन पुरुषेऽपि सत्त्वात् तस्य राजप्रकारकान्वयबोधे विशेष्यतया भानापत्तिर्दुर्वारैव ।

---

परिहारमाह— प्रत्ययाधीनेति, अर्थात्— यदर्थप्रकारकः शाब्दबोध इष्टः स यदि प्रकारीभूत-ार्थविषयकप्रत्ययजन्योपस्थितिजन्यो न भवति तदा तादृशशाब्दबोधं प्रत्येव विशेष्यतासंबन्धेन यजन्योपस्थितेः कारणत्वमुच्यते यदा च शाब्दबोधे प्रकारीभूतपदार्थस्य प्रत्ययेनोपस्थिति-ति तदा तादृशशाब्दबोधे विशेष्यस्य विशेष्यतया भानं प्रति प्रत्ययजन्योपस्थितेः कारणत्वं स्त्येव, तथा च 'राजसंबन्धः प्रमेयः' 'राज्ञः पुरुषः' इतिवाक्यद्वयजन्यसमूहालम्बनात्म-बोधे पुरुषे प्रकारीभूतस्य राजसंबन्धस्य=षष्ठ्यर्थस्वत्वस्य यद्यपि राजसंबन्धपदेनाप्युपस्थिति-त तथापि 'राज्ञः' इत्यत्रत्य ङस्प्रत्ययेनाप्युपस्थितिरस्त्येवेत्येतादृशसमूहालम्बनात्मकशाब्दबो-य प्रकारीभूतस्वत्वपदार्थविषयकप्रत्ययजन्योपस्थित्यजन्यत्वं नास्तीति नैतादृशशाब्दबोधं प्रति शेष्यस्य पुरुषादेः प्रत्ययजन्योपस्थितेः कारणत्वं येन प्रत्ययजन्योपस्थित्यभावादत्र पुरुषस्य जसंबन्धविशेष्यतया भानं न स्यात्, 'राज्ञः' इत्यत्र च राजप्रकारकस्वत्वविशेष्यकः शाब्दबोधो यते तत्र स्वत्वे प्रकारीभूतस्य राजपदार्थस्य केवलं राजेतिनाम्नैवोपस्थितिरस्ति न तु प्रत्यये-ति प्रत्ययाधीनराजपदार्थोपस्थित्यजन्यराजपदार्थप्रकारकशाब्दबोधत्वाद् एतादृशशाब्दबोधं ति विशेष्यपदार्थस्य प्रत्ययजन्योपस्थितेः कारणत्वमस्ति अत्र च विशेष्यस्य स्वत्वस्य ङस्प्र-येनैवोपस्थितिरप्यस्त्येवेति राजपदार्थप्रकारकस्वत्वविशेष्यकशाब्दबोधस्य नानुपपत्तिरित्यर्थः । वम् 'राजा पुरुषः' इत्यत्रापि पुरुषविशेष्यकराजप्रकारकशाब्दबोधे त्वयाऽऽपाद्यमाने प्रकारी-तराजपदार्थस्य राजेतिनाम्नैवोपस्थितिरस्ति न तु प्रत्ययेनेति प्रकारीभूतराजपदार्थविषयकप्रत्यय-न्योपस्थित्यऽजन्यत्वादत्र विशेष्यभूतपुरुषपदार्थविषयकप्रत्ययजन्योपस्थितेः कारणत्वं प्राप्तं पुरुषे ात्र विशेष्यतासंबन्धेन प्रत्ययजन्योपस्थितिर्नास्त्येव पुरुषस्य पुरुषेतिनाम्नैवोपस्थितत्वादिति नात्र रुषविशेष्यकराजप्रकारकभेदान्वयबोधः संभवति ।

ननूक्तरीत्या 'राजा पुरुषः' इत्यत्र राजप्रकारकभेदान्वयबोधस्य निवारणे कृतेऽपि यत्र=यदा राजा पुरुषः' इत्यत्र पुरुषपदेन पुरुषोपस्थितिर्जाता पुरुषपदोत्तरवर्तमानसुप्रत्ययेन चक-स्योपस्थितिर्जाता तत्र=तदा 'पुरुष एकत्वं च' इत्येतादृशी या समूहालम्बनात्मिकोपस्थि-रस्ति सा यथा पुरुषपदजन्यास्ति तथा सुप्रत्ययजन्याप्यस्त्येव एतादृशप्रत्ययजन्योपस्थितिवि-यत्वं यथा प्रत्ययार्थैकत्वस्यास्ति तथा पुरुषस्याप्यस्त्येवेत्येवंरीत्या प्रत्ययजन्योपस्थितेरत्र विशेष्य-संबन्धेन पुरुषेऽपि सत्त्वात् तस्य=पुरुषस्य राजप्रकारकभेदान्वयबोधे विशेष्यतया भानं स्यादेव र्यादेवंरीत्या 'राजा पुरुषः' इत्यत्र राजपदार्थप्रकारकपुरुषविशेष्यकभेदान्वयबोधस्यापत्तिस्तद-स्थैवास्तीत्याशङ्कते— अथैवमपीति ।

न च प्रत्ययजन्यतावच्छेदकीभूतविशेष्यतासंबन्धेनोपस्थितेर्हेतुत्वोपगमान्ना ऽऽपत्तिः— तादृशसमूहालम्बनोपस्थितिनिरूपितपुरुषनिष्ठविशेष्यताया नाम्न ए

---

पुनः 'राजा पुरुषः' इत्यत्र भेदान्वयबोधापत्तिं निवारयति— न चेत्यादिना, नामार्थ कारकभेदान्वयबोधं प्रति प्रत्ययजन्यतावच्छेदकीभूतविशेष्यतासंबन्धेनोपस्थितेर्हेतुत्वमस्तीत्यन्वय अयमर्थः— यत्र प्रत्ययजन्यतावच्छेदकीभूतविशेष्यतासंबन्धेन विशेष्यपदार्थे प्रत्ययजन्योपस्थि तिर्भवति तत्रैव तत्पदार्थविशेष्यककिंचिन्नामार्थप्रकारकभेदान्वयबोधो भवतीति नियमः प्रत्ययजन्यतेति— प्रत्ययजन्या या उपस्थितिस्तन्निष्ठा या प्रत्ययजन्यता तदवच्छेद चात्र विशेष्यनिष्ठविशेष्यताया ज्ञेयम्—विशेष्यनिष्ठापि विशेष्यता स्वनिरूपितविषयितासंब नोपस्थितौ वर्तते— स्वम्=आश्रयतासंबन्धेन विशेष्यनिष्ठा विषयतारूपा विशेष्यता वि उपस्थितिनिरूपितविषयतायाः सत्त्वात्. उपस्थितेश्च ज्ञानरूपत्वेन विषयित्वादुपस्थि उपस्थितिविषयीभूतपदार्थनिष्ठविषयतानिरूपितविषयिता वर्तते तथा च शाब्दबोधे विशे तया भासमानपदार्थनिष्ठापि विशेष्यता स्वनिरूपितविषयितासंबन्धेनोपस्थितौ वर्तते त श्चोपस्थितौ प्रत्ययजन्यतापि वर्तते इत्येषा विशेष्यता उपस्थितिनिष्ठप्रत्ययजन्यतायाः सा नाधिकरण्यसंबन्धेनावच्छेदिका जातेति. एतादृशप्रत्ययजन्यतावच्छेदकीभूतविशेष्यतासंब नोपस्थितेर्नामार्थप्रकारकभेदान्वयबोधं प्रति कारणत्वमस्ति यथा— 'राज्ञः' इत्यत्र ङसि स्वत्वविशेष्यकराजपदार्थप्रकारकभेदान्वयबोधो भवति— स्वत्वे राजपदार्थस्य निरूपितत्व क्षणभेदसंबन्धस्य सत्त्वाद् निरूपितत्वसंबन्धेन राजवत्स्वत्वमितिबोधात्, अत्र हि स्वत्व ङस्प्रत्ययेनोपस्थितिर्भवतीति स्वत्वविषयकोपस्थितौ ङस्प्रत्ययजन्यता वर्तते. अथ च स योपस्थितीयविषयता वर्तते तादृशविषयतानिरूपितविषयिता स्वत्वविषयकोपस्थितौ वर्तते स्व निष्ठा च विषयता विशेष्यतारूपैव विज्ञेया तथा च— एषा स्वत्वनिष्ठापि विशेष्यता स्व ( स्वत्व ष्ठाविशेष्यता ) निरूपितविषयितासंबन्धेन स्वत्वविषयकोपस्थितौ वर्तते इति स्वत्वविषयक पस्थितौ या प्रत्ययजन्यता वर्तते तस्या अवच्छेदिका जातेति स्वत्वनिष्ठा विशेष्यता प्रत्य जन्यतावच्छेदिकास्ति एतादृशी च प्रत्ययजन्यतावच्छेदकीभूतविशेष्यता विशेष्यभूते स्वत्वेप्या यतासंबन्धेन वर्तत एवेति प्रत्ययजन्यतावच्छेदकीभूतविशेष्यतासंबन्धेन सा ङस्प्रत्ययज स्वत्वोपस्थितिः स्वत्वेपि प्रत्ययार्थे वर्तत एवेति नामार्थप्रकारकभेदान्वयबोधकारणीभूता प्रत्ययजन्यतावच्छेदकीभूतविशेष्यतासंबन्धेनोपस्थितेः स्वत्वे सत्त्वात् 'राज्ञः' इत्यत्र स्वत्व शेष्यकराजपदार्थप्रकारकभेदान्वय उपपद्यते इति कार्यकारणभावसमन्वयः ।

'राजा पुरुषः' इत्यत्र तु पुरुषस्य योपस्थितिरस्ति सा पुरुषेतिनामपदजन्यास्ति न प्रत्ययजन्येति पुरुषविषयकोपस्थितौ प्रत्ययजन्यतैव नास्तीति पुरुषनिष्ठा विशेष्यता स्वनिरूपि विषयितासंबन्धेनोपस्थितौ वर्तमानापि प्रत्ययजन्यतावच्छेदिका कथं स्यात् ? इति पुरुषे प्रत्य

**जन्यतावच्छेदकत्वादितिवाच्यम्, ज्ञानभेदेन विशेष्यताभेदाभावाद् यत्र कुत्र चित् प्रत्ययादेव लक्षणादिना पुरुषाद्युपस्थितिस्तत्र तादृशोपस्थितिनिरूपितप्रत्ययजन्यतावच्छेदकीभूतविशेष्यतातः पुरुषादिपदजन्यपुरुषाद्युपस्थितिविशेष्यताया अभिन्नतया तावताप्युक्तातिप्रसङ्गवारणाऽसंभवादिति चेत् ?**

न्यतावच्छेदकीभूतविशेष्यतैव संबन्धरूपा यदा नास्ति तदा पुरुषे प्रत्ययजन्यतावच्छेदकीभूतविशेष्यतासंबन्धेन पुरुषोपस्थितिरपि कथं वर्तेत संबन्धिसत्तायाः संबन्धसत्ताधीनत्वात् तथा चात्र पुरुषे प्रत्ययजन्यतावच्छेदकीभूतविशेष्यतासंबन्धेनोपस्थितेरभावादेव तत्कार्यभूतः पुरुषपदार्थविशेष्यकराजपदार्थप्रकारकभेदान्वयबोधो न संभवतीत्याह— नापत्तिरिति, 'राजा पुरुषः' इत्यत्र पुरुषविशेष्यकराजप्रकारकभेदान्वयबोधस्यापत्तिर्नास्तीत्यर्थः । उक्ते आपत्त्यभावे हेतुमाह— तादृशेति, पुरुषपदाधीनेत्याद्युक्तसमूहालम्बनोपस्थितिनिरूपिता या पुरुषनिष्ठा विशेष्यता तस्याः प्रत्ययजन्यतावच्छेदकत्वमुक्तरीत्या नास्ति किं तु नाम्न एव जन्यतावच्छेदकत्वमस्ति— नाम्न इति निरूपितत्वं षष्ठ्यर्थः पुरुषेतिनामनिरूपिता या पुरुषोपस्थितौ जन्यता तदवच्छेदकत्वादित्यर्थः । 'राजा पुरुषः' इत्यत्र पुरुषपदार्थस्य योपस्थितिरस्ति सा पुरुषेतिनामपदजन्यास्तीति पुरुषनिष्ठा विशेष्यता पुरुषविषयकोपस्थितिनिष्ठायाः पुरुषेतिनामपदजन्यताया एवावच्छेदिकास्ति न तु प्रत्ययजन्यताया अवच्छेदिका पुरुषविषयकोपस्थितौ प्रत्ययजन्यताया एवाभावादित्यर्थः, तथा च कारणीभूतायाः प्रत्ययजन्यतावच्छेदकीभूतविशेष्यतासंबन्धेनोपस्थितेरभावात् कथं तत्कार्यभूतः पुरुषविशेष्यकराजप्रकारकभेदान्वयबोधः स्यात् ? ।

एवम् 'राज्ञः पुरुषः' इत्यत्रापि पुरुषस्य प्रत्ययाधीनोपस्थितेरभावात् उपस्थितौ प्रत्ययजन्यत्वाभावाच्च पुरुषनिष्ठा विशेष्यता प्रत्ययजन्यतावच्छेदिका नास्तीति प्रत्ययजन्यतावच्छेदकीभूतविशेष्यतासंबन्धेन पुरुषे उपस्थितेरभावाद् राजप्रकारकपुरुषविशेष्यकभेदान्वयबोधो नैव जायते किं तु प्रत्ययार्थस्वत्वप्रकारकभेदान्वयबोधो जायते— आश्रयत्वसंबन्धेन राजनिरूपितस्वत्ववान् पुरुष इति एतादृशप्रत्ययार्थप्रकारकनामार्थविशेष्यकभेदान्वयबोधं प्रति तु प्रत्ययजन्यतावच्छेदकीभूतविशेष्यतासंबन्धेनोपस्थितेः कारणत्वमपि नास्त्येवेति पुरुषनिष्ठविशेष्यतायाः प्रत्ययजन्यतावच्छेदकत्वाभावेपि ङस्प्रत्ययार्थस्वत्वप्रकारकपुरुषेतिनामार्थविशेष्यकभेदान्वयबोधस्यापि नानुपपत्तिरिति सर्वं समञ्जसम् ।

पुनः प्रतिवादी परिहरन् 'राजा पुरुषः' इत्यत्र पुरुषविशेष्यकराजप्रकारकस्वत्वसंसर्गकभेदान्वयबोधमापादयति— ज्ञानभेदेनेत्यादिना । "ज्ञानभेदेन विशेष्यताभेदाभावात्" इति "विशेष्यताया अभिन्नतया" इत्यत्र हेतुः । अयमर्थः— देवदत्तादिभिरनेकैरपि पुरुषैरेकस्मिन्नेव ज्ञाते घटे देवदत्ताद्यनेकपुरुषसमवेतैकघटविषयकज्ञानस्य देवदत्तादिभेदेन भेदेपि यथा घटभेदो न भवति तथा ज्ञानभेदेन घटनिष्ठविशेष्यताया अपि भेदो न भवति विशेष्यभेदेनैव विशेष्यताभेदनियमात्, तथा च यदा कदाचित् 'राज्ञः' इत्यत्र केन चित् ङस्प्रत्ययस्य पुरुषपदार्थे

न, स्वजनकज्ञानीयप्रत्ययवृत्तिप्रकारतानिरूपितविशेष्यताविशिष्टविशेष्यतासं
न्धेनैवोपस्थितेर्हेतुतया उक्तसमूहालम्बनोपस्थितिनिरूपितपुरुषनिष्ठविशेष्यताय

लक्षणावृत्तिर्ज्ञाता तदा ङस्प्रत्ययेन स्वारसिकलक्षणावृत्त्या पुरुषस्योपस्थितिर्भविष्यत्येव तत्र पस्थितेः ङस्प्रत्ययेन जातत्वात् तादृशपुरुषोपस्थितौ प्रत्ययजन्यतापि प्राप्तैव तादृशप्रत्यय पुरुषविषयकोपस्थितिनिरूपिता विषयताख्या विशेष्यता पुरुषेपि वर्तत एव पुरुषनिष्ठा चैषा तोक्तरीत्या स्वनिरूपितविषयितासंबन्धेन पुरुषोपस्थितावपि वर्तते तत्र पुरुषोपस्थितौ प्रत्यय तापि वर्तते इति पुरुषनिष्ठा विशेष्यता उपस्थितिनिष्ठप्रत्ययजन्यताया अवच्छेदिका जातैव. अ विषयभेदेनैव विशेष्यताभेदनियमेन ज्ञानभेदेन विशेष्यताभेदाऽभावात् पुरुषे 'राज्ञः' इत्यत्र णाधीनङस्प्रत्ययजन्यपुरुषोपस्थितिनिरूपितविशेष्यता 'राजा पुरुषः' इत्यत्र शक्त्यधीनपु नामपदजन्यपुरुषोपस्थितिनिरूपितविशेष्यता च वर्तते तयोरुभयोरपि विशेष्यतयोर्विशेष्यभूत पदार्थस्य भेदाभावाद् भेदो नास्तीत्यैक्यं प्राप्तं तथा च 'राज्ञः' इत्यत्र लक्षणाधीनङस् जन्यपुरुषोपस्थितिनिरूपिता पुरुषनिष्ठा विशेष्यता पुरुषोपस्थितिनिष्ठप्रत्ययजन्यताया अ दिकास्तीति 'राजा पुरुषः' इत्यत्रापि शक्त्यधीनपुरुषेतिनामपदजन्यपुरुषोपस्थितिनिर पुरुषनिष्ठा विशेष्यता प्रत्ययजन्यतावच्छेदिका जातैव उक्तपुरुषनिष्ठविशेष्यतयोर ऐक्यात् तथा च 'राजा पुरुषः' इत्यत्रापि पुरुषे प्रत्ययजन्यतावच्छेदकीभूतविशेष्य सत्त्वात् तादृशप्रत्ययजन्यतावच्छेदकीभूतविशेष्यतासंबन्धेन पुरुषे पुरुषपदजन्योपस्थिति एवेति प्राप्तमिति तत्कार्यभूतः पुरुषविशेष्यकराजप्रकारकभेदान्वय ( स्वत्वसंसर्गक ) बोधः न स्यादित्यर्थस्तदाह— तादृशोपस्थितीति । ज्ञानभेदेन विशेष्यताभेदाभावात् तादृशा=' इत्यत्र लक्षणाधीनङस्प्रत्ययजन्या । तादृशोपस्थिनितिरूपिता या प्रत्ययजन्यतावच्छेदक पुरुषनिष्ठा विशेष्यता तादृशविशेष्यतातः 'राजा पुरुषः' इत्यत्र शक्त्यधीनपुरुषपदजन्य पस्थितिनिरूपितायाः पुरुषनिष्ठविशेष्यताया अभिन्नतया. तावतापि=प्रत्ययजन्यतावच्छेदकी शेष्यतासंबन्धेनोपस्थितेः नामार्थप्रकारकभेदान्वयबोधं प्रति कारणतास्वीकारेपि उक्तातिप्रस 'राजा पुरुषः' इत्यत्र राजपदार्थप्रकारकपुरुषविशेष्यकभेदान्वयबोधप्रसङ्गस्य ( आ वारणासंभवादित्यर्थः । उक्तरीत्या 'राजा पुरुषः' इत्यत्र भेदान्वयबोधस्य प्रदर्शित " ज्ञानभेदेन विशेष्यताभेदाभावात् " इत्यादिना " पुरुषपदाधीन " इत्यादिपूर्वोक्तभेदान्वय रस्यैव समर्थनं कृतं न तु प्रकारान्तरेण भेदान्वयापत्तिः प्रदर्शितेत्यवधेयम् ।

उक्तरीत्या प्रतिवादिना 'राजा पुरुषः' इत्यत्रापादितं नामार्थप्रकारकनामार्थविशेष्यक न्वयबोधं परिहरति—नेति, स्वजनकेति—नामार्थप्रकारकभेदान्वयबोधं प्रति स्वजनकज्ञानीयप्र त्तिप्रकारतानिरूपितविशेष्यताविशिष्टविशेष्यतासंबन्धेनोपस्थितेः कारणत्वमुच्यते, स्वम्= स्थितिः, उपस्थितिजनकं यदर्थविशेष्यकशक्तिज्ञानं तादृशशक्तिज्ञानविषयभूता या प्रत्ययवृ कारता ( प्रत्ययार्थविशेष्यकशक्तिज्ञाने प्रत्ययस्य प्रकारतया भानात् ) तादृशप्रकारतानिरू

**तादृशोपस्थितिजनकज्ञानीयप्रत्ययवृत्तिप्रकारतानिरूपितविशेष्यतासामानाधिकरण्यविरहान्नातिप्रसङ्ग इति वदन्ति ।**

या प्रत्ययार्थनिष्ठा विशेष्यता ( शक्तिज्ञानीयविशेष्यता—प्रत्ययार्थविशेष्यकशक्तिज्ञाने प्रत्ययार्थस्य विशेष्यतया भानात् ) तादृशविशेष्यताविशिष्टा या प्रत्ययार्थनिष्ठैवोपस्थितीयविशेष्यता— तादृशेन विशेष्यताविशिष्टविशेष्यतासंबन्धेनोपस्थितेर्नामार्थप्रकारकभेदान्वयबोधं प्रति कारणत्वमुच्यते इत्यन्वयः ।

यथा—'राज्ञः' इत्यत्र या ङस्प्रत्ययजन्या स्वत्वोपस्थितिस्तज्जनकं यत् ङस्प्रत्ययार्थस्वत्वविशेष्यकं शक्तिज्ञानम्—ङस्प्रत्ययशक्यं स्वत्वं शक्तिसंबन्धेन ङस्प्रत्ययवदितिज्ञानं तादृशशक्तिज्ञानविषयभूता या ङस्प्रत्ययनिष्ठा प्रकारता ( उक्तार्थविशेष्यकशक्तिज्ञाने ङस्प्रत्ययस्य प्रकारतया भानात् ) तादृशप्रकारतानिरूपिता ङस्प्रत्ययार्थस्वत्वे विशेष्यता ( शक्तिज्ञानीयविशेष्यता— उक्तशक्तिज्ञाने ङस्प्रत्ययार्थस्वत्वस्य विशेष्यतया भानात् ) वर्तते. अथ च ङस्प्रत्ययार्थभूते स्वत्वे ङस्प्रत्ययजन्योपस्थितीयापि विशेष्यता वर्तते इत्येषा स्वत्वनिष्ठोपस्थितीयविशेष्यता उक्तप्रथमया स्वत्वनिष्ठया शक्तिज्ञानीयविशेष्यतया विशिष्टा जाता—उभयोर्विशेष्यतयोः सामानाधिकरण्यादिति स्वजनकज्ञानीयप्रत्ययवृत्तिप्रकारतानिरूपितविशेष्यताविशिष्टविशेष्यता ङस्प्रत्ययार्थस्वत्वेऽत्र वर्तते एवेति एतादृशविशेष्यताविशिष्टविशेष्यतासंबन्धेनोपस्थिति ( ङस् प्रत्ययजन्यस्वत्वोपस्थिति ) रपि स्वत्वे वर्तते एवेति तत्कार्यभूतो राजपदार्थप्रकारकस्वत्वविशेष्यकनिरूपितत्वलक्षणभेदसंसर्गकशाब्दबोधोपि जायते इति कार्यकारणभावसमन्वयः ।

'राजा पुरुषः' इत्यत्र च पुरुषपदाधीनपुरुषोपस्थितिः पुरुषपदोत्तरवर्तमानसुप्रत्ययवशाचैकत्वादिप्रत्ययार्थोपस्थितिर्जाता तत्र प्रत्ययजन्यतया विधसमूहालम्बनोपस्थितेर्विशेष्यतासंबन्धेन पुरुषेपि सत्त्वात् पुनश्च "ज्ञानभेदेन विशेष्यताभेदाभावात्" इत्यादिना विशेष्यतयोरैक्यं प्रतिपाद्य पुरुषनिष्ठायाः पुरुषपदजन्योपस्थितीयविशेष्यताया अभ्युक्तप्रकारेण प्रत्ययजन्यतावच्छेदकीभूतविशेष्यतात्वमुपपाद्य यात्र पुरुषविशेष्यकराजप्रकारकभेदान्वयापत्तिः प्रदर्शिता सा नेदानीं संभवतीत्याह-उक्तसमूहालम्बनेत्यादिना । उक्ता या समूहालम्बनोपस्थितिस्तादृशोपस्थितिनिरूपिता यात्र पुरुषनिष्ठा विशेष्यता तस्यास्तादृशोपस्थितिजनकज्ञानीयप्रत्ययवृत्तिप्रकारतानिरूपितविशेष्यतया सह सामानाधिकरण्यमेव नास्ति— प्रत्ययवृत्तिप्रकारतानिरूपितविशेष्यतायाः प्रत्ययार्थमात्रवृत्तित्वात् पुरुषे चासत्त्वादिति पुरुषोपस्थितिनिरूपितपुरुषनिष्ठविशेष्यता प्रत्ययवृत्तिप्रकारतानिरूपितविशेष्यताविशिष्टैव नास्तीति संबन्धरूपाया विवक्षितविशेष्यताविशिष्टविशेष्यतायाः पुरुषे अभावात् तादृशविशेष्यताविशिष्टविशेष्यतासंबन्धेनोपस्थितिरपि पुरुषे कथं वर्तेतेति कथं पुरुषविशेष्यकराजप्रकारकभेदान्वयबोधः स्यादित्यन्वयः ।

अयमर्थः—'राजा पुरुषः' इत्यत्र पुरुषपदेन पुरुषोपस्थितिर्भवति पुरुषपदोत्तरवर्तमानसुप्रत्ययेन चैकत्वोपस्थितिर्भवति— पुरुष एकत्वं चेतिरूपा. एतादृशसमूहालम्बनोपस्थितीयविशेष्यता पुरुषे वर्तते 'राज्ञः' इत्यत्र च कस्यचित्स्वारसिकलक्षणावशात् ङस्प्रत्ययेन पुरुषोपस्थितिर्जातेति ङस्-

प्रत्ययजन्योपस्थितीयविशेष्यतापि पुरुषे वर्तते ज्ञान ( अत्रोभयोपस्थिति ) भेदेन विशेष्य दाभावाच्चोक्तोभयोपस्थितिनिरूपितपुरुषनिष्ठविशेष्यतयोरैक्यात् पुरुषनिष्ठोपस्थितीयविशेष्यत स्वनिरूपितविषयितासंबन्धेन पुरुषविषयकप्रत्ययजन्योपस्थितौ वर्तमानत्वाच्च पुरुषनिष्ठा विशे उपस्थितिनिष्ठप्रत्ययजन्यतावच्छेदिका जातेति तादृशप्रत्ययजन्यतावच्छेदकीभूतविशेष्यतासं नोपस्थितिः पुरुषे वर्तते एवेति तत्कार्यभूतः पुरुषविशेष्यकराजप्रकारकभेदान्वयबोधः संभवतं प्रतिवादिना यत् प्रतिपादितम्, तन्न संभवति— 'राजा पुरुषः' इत्यत्रोक्तसमूहालम्बनोपस्थितिनि पितपुरुषनिष्ठविशेष्यता पुरुषे वर्तते तादृश=उक्तसमूहालम्बनोपस्थितिजनकं यच्छक्तिज्ञानं सुप्र शक्यमेकत्वं शक्तिसंबन्धेन सुप्रत्ययवदितिज्ञानं तादृशशक्तिज्ञाननिरूपिता या प्रत्ययनिष्ठा प्र रता ( प्रत्ययार्थविशेष्यकशक्तिज्ञाने प्रत्ययस्य प्रकारत्वात् ) तादृशप्रकारतानिरूपिता विशे तु सुप्रत्ययार्थैकत्वे एव वर्तते न तु पुरुषेपीत्युक्तसमूहालम्बनोपस्थितिनिरूपितपुरुषनिष्ठवि ताया उक्तसमूहालम्बनोपस्थितिजनकज्ञानीय (शक्तिज्ञानीय) प्रत्ययवृत्तिप्रकारतानिरूपितवि तायाश्च वैयधिकरण्येन सामानाधिकरण्याभावादुक्तसमूहालम्बनोपस्थितिनिरूपितपुरुषनिष्ठ ष्यता उक्तसमूहालम्बनोपस्थितिजनकज्ञानीयप्रत्ययवृत्तिप्रकारतानिरूपितविशेष्यताविशिष्टैव न तीति संबन्धत्वेन विवक्षितायाः स्व ( उपस्थिति ) जनकज्ञानीयप्रत्ययवृत्तिप्रकारतानिरूपि शेष्यताविशिष्टविशेष्यतायाः पुरुषेऽभावादेवैतादृशविशेष्यताविशिष्टविशेष्यतासंबन्धेनात्र उपस्थितिरपि न वर्तते इति तत्कार्यभूतस्य पुरुषविशेष्यकराजप्रकारकस्वत्वसंसर्गकभेदान्वय स्यापि प्रसङ्गः=आपत्तिर्नास्त्येवेति वदन्ति ।

एवम्— 'राज्ञः पुरुषः' इत्यत्रापि प्रत्ययजन्योपस्थितिजनकज्ञानीयप्रत्ययवृत्तिप्रकारतानिरू विशेष्यता प्रत्ययार्थे एव वर्तते न तु पुरुषे इति पुरुषे स्वजनकज्ञानीयप्रत्ययवृत्तिप्रका निरूपितविशेष्यताविशिष्टविशेष्यताया अभावेन तादृशविशेष्यताविशिष्टविशेष्यतासंबन्धेन उपस्थितेरप्यऽभावाद् राजप्रकारकपुरुषविशेष्यकभेदान्वयबोधो न जायते । यश्च ङस्प्रत्य स्वत्वप्रकारकपुरुषविशेष्यकभेदान्वयबोधो जायते तादृशप्रत्ययार्थप्रकारकनामार्थविशेष्य दान्वयबोधं प्रति स्वजनकज्ञानीयप्रत्ययवृत्तिप्रकारतानिरूपितविशेष्यताविशिष्टविशेष्यतासंबन् पस्थितेर्हेतुत्वमेव नास्तीति एतादृशविशेष्यताविशिष्टविशेष्यतासंबन्धेनोपस्थितेरभावेपि आश्र संसर्गकप्रत्ययार्थस्वत्वप्रकारकपुरुषविशेष्यकभेदान्वयबोधस्य नानुपपत्तिः । 'राज्ञः पुरुषः' निरूपितत्वसंबन्धेन राजा ङसर्थे स्वत्वे प्रकारः स्वत्वस्य राजनिरूपितत्वात् स्वत्वं चाश्रयत न्वेन पुरुषे प्रकार इत्यवधेयम् ।

'राज्ञः' इत्यत्र च नामार्थप्रकारकभेदान्वयबोधो जायते तादृशभेदान्वयबोधं प्रति स्वज ज्ञानीयप्रत्ययवृत्तिप्रकारतानिरूपितविशेष्यताविशिष्टविशेष्यतासंबन्धेनोपस्थितेः कारणत्वमस 'राज्ञः' इत्यत्र स्वजनकज्ञानीयप्रत्ययवृत्तिप्रकारतानिरूपितविशेष्यताविशिष्टविशेष्यतासंबन्धे स्थितिरपि ङसर्थस्वत्वे वर्तत एवेति नामार्थराजप्रकारकप्रत्ययार्थस्वत्वविशेष्यकनिरूपितत्वा भेदसंसर्गकभेदान्वयबोधोपि जायते एवेति सर्वं समञ्जसम् ।

तदसत्– प्रत्ययत्वस्याऽनुगतस्याऽनतिप्रसक्तस्य दुर्वचतया उक्तकार्यकारणभावकल्पनाया असंभवात् । 'राजसंबन्धः पुरुषः' इत्यादौ संबन्धादिपदे ङस्पदत्वादिभ्रमदशायां संबन्धादिविशेष्यकराजादिपदार्थप्रकारकान्वयबोधानुपपत्तेः । 'राज्ञः पुरुषः' इत्यादौ ङस्पदादिषु संबन्धादिपदत्वभ्रमदशायां संबन्धांशे राजादिप्रकारकान्वयबोधापत्तेश्च ।

न च प्रत्ययत्वेन ज्ञातं यत्पदं तत्पदजन्योपस्थितेः कारणत्वादेतद्दोषद्वयस्य नावकाश इति वाच्यम्, 'राज्ञः पुरुषः' इत्यादौ षष्ठ्यादेः प्रत्ययत्वाद्यनुपस्थितिदशायामपि आनुपूर्वीविशेषप्रकारकज्ञानाधीनतदर्थोपस्थितिसत्त्वे शाब्दबोधोत्पत्त्या प्रत्ययत्वप्रकारकज्ञाननिवेशासंभवात् ।

---

उक्तकार्यकारणभावं सिद्धान्ती परिहरति– तदसदिति, उक्तकार्यकारणभावे प्रत्ययस्य प्रवेशोऽस्ति ...त्ययत्वं च सकलप्रत्ययानुगतं प्रत्ययातिरिक्ते चानतिप्रसक्तं न निर्वक्तुं शक्यते प्रत्ययत्वनिर्वच... संभवे च प्रत्ययज्ञानासंभवात् प्रत्ययविशिष्टोक्तकार्यकारणभावोपि नावधारयितुं शक्यते इत्यर्थः । ...चोक्तप्रत्ययत्वविशिष्टकार्यकारणभावस्वीकारे यदा 'राजसंबन्धः पुरुषः' इत्यत्र कस्य चित् संबन्ध... ङस्पदत्वभ्रमो जायते तदात्र 'राजसंबन्धः' इति भागे ङस्प्रत्ययार्थस्वत्वसंबन्धविशेष्यक...जपदार्थप्रकारकभेदान्वयबोध इष्टोस्ति स न स्यात्– :वस्तुतोत्र राजपदोत्तरं ङस्प्रत्ययाऽभावात् ...र्यकारणभावे च प्रत्ययत्वनिवेशात् । 'राज्ञः पुरुषः' इत्यत्र च यदा ङस्प्रत्यये संबन्धपदत्वभ्रमो ...यते तदा ङस्प्रत्ययार्थस्वत्वविशेष्यकराजप्रकारकभेदान्वयबोध इष्टो नास्ति उक्तकार्य...रणभावस्वीकारे चापद्येतैव वस्तुतोत्र राजपदोत्तरं ङस्प्रत्ययस्य सत्त्वादिति नोक्तकार्यकार...भावः समञ्जसः ।

ननु प्रत्ययत्वेन ज्ञातं यत्पदं तत्पदजन्योपस्थितेः नामार्थप्रकारकभेदान्वयबोधं प्रति कारण...मुच्यते तथा च 'राजसंबन्धः पुरुषः' इत्यत्र संबन्धपदे ङस्पदत्वभ्रमदशायां संबन्धपदं प्रत्य...त्वेन ज्ञातमिति प्रत्ययत्वेन ज्ञातसंबन्धपदजन्योपस्थितेर्नामार्थप्रकारकभेदान्वयबोधं प्रति कारणत्व...कारात् प्रत्ययार्थसंबन्धविशेष्यकराजप्रकारकभेदान्वयबोधस्यानुपपत्तिर्नास्ति तत्कारणीभूतायाः ...ययत्वेन ज्ञातपदजन्योपस्थितेः सत्त्वात् । 'राज्ञः पुरुषः' इत्यत्र ङस्पदे संबन्धपदत्वभ्रमद...यां वस्तुतो विद्यमानमपि ङस्प्रत्ययपदं प्रत्ययत्वेन न ज्ञातमिति प्रत्ययत्वेन ज्ञातपदजन्योप...स्थितेरभावात् तत्कार्यभूतस्य संबन्धविशेष्यकराजपदार्थप्रकारकभेदान्वयबोधस्यापत्तिर्नास्तीत्या...ङ्क्याह– न चेति । परिहारमाह– राज्ञ इति, 'राज्ञः' इत्यत्र यदा षष्ठ्याः प्रत्ययत्वेनोप...तिः=ज्ञानं न भवति तदापि 'राज्ञः' इत्याकारकानुपूर्वीविशेषप्रकारकम् 'राज्ञः' इत्यानु...मात्रविषयकं यज्ज्ञानं तज्जन्या या तदर्थोपस्थितिः=षष्ठ्यर्थस्वत्वविषयकोपस्थितिः तत्सत्त्वेपि ...प्रकारकषष्ठ्यर्थस्वत्वविशेष्यकभेदान्वयबोधो जायते एव इष्टश्च तन्न स्यादिति कार्यकारणभावे ...ययत्वप्रकारकज्ञाननिवेशो न युक्तः । प्रत्ययत्वज्ञाननिवेशाभावे च 'राज्ञः' इत्यत्र षष्ठ्याः प्रत्ययत्वे-

इदं पुनरत्र तत्त्वम्– 'राजा पुरुषः' इत्यादौ पुरुषादिविशेष्यकराजा प्रकारकभेदान्वयबोधस्याऽप्रसिद्धयैव नापत्तिसंभवः । यत्र षष्ठ्यादिविभक्ते स्वारसिकलक्षणया शक्तिभ्रमेण वा पुरुषाद्युपस्थितिस्तत्र तद्विशेष्यकराजादि दार्थप्रकारकभेदान्वयबोधः प्रसिद्ध इति चेत् ?, तर्हि तादृशबोधे तथाविधप्र तिप्रत्ययानुपूर्वीविशेषरूपाकाङ्क्षाज्ञानसहकृततत्तद्विभक्तिजन्यपुरुषाद्युपस्थिति दित सामग्र्या एव तादृशबोधोत्पत्तिनियामकतया तदभावादेव न तदापत्तिः ।

अत एव स्वत्वादिसंबन्धेन राजादिविशिष्टपुरुषादितात्पर्यकतदादिपदघ तात् 'स सुन्दरः' इति वाक्यात् पुरुषादिविशेष्यकस्वत्वादिसंसर्गकराजा प्रकारकशाब्दबोधस्य च प्रसिद्धया 'राजा पुरुषः सुन्दरः' इत्यादौ पदार्थो

---

नानुपस्थितिदशायामपि राजप्रकारकस्वत्वविशेष्यकभेदान्वयबोधस्य नानुपपत्तिरित्यर्थः । यत्वाद्यनुपस्थितिदशायाम्=प्रत्ययत्वादिना रूपेणानुपस्थितिदशायाम् ।

क्वचित् प्रसिद्धस्यैव पदार्थस्यान्यत्रापत्तिः संभवति यथा घटादेर्न त्वप्रसिद्धस्य यथा शाणादेरिति यदि नामार्थप्रकारकनामार्थविशेष्यकभेदान्वयबोधः क्वचिदपि प्रसिद्धः स 'राजा पुरुषः' इत्यत्राप्यापद्येतेत्याह– इदमित्यादिना । नामार्थयोः साक्षाद् भेदान्वयबो ऽव्युत्पन्नत्वादित्यर्थः । नामार्थस्य साक्षात्तु प्रत्ययार्थेन वा निपातार्थेन वा एव भेदान्व जायते न तु निपातातिरिक्तनामार्थेन, तथा च राजपदार्थस्य पुरुषपदार्थेन सह साक्षा भेदान्वयबोधः स्यादित्यर्थः ।

ननु यत्र 'राज्ञः' इति षष्ठ्यैव स्वारसिकलक्षणया शक्तिभ्रमेण वा पुरुषोपस्थिति तत्र तु तद्विशेष्यक=पुरुषविशेष्यकराजप्रकारकभेदान्वयबोधः प्रसिद्ध इति तस्यैव 'राजा पु इत्यत्राप्यापत्तिरित्याशङ्कते– यत्रेति । उत्तरमाह– तर्हीति, कार्यकारणभावो ह्यन्वयव्यति भ्यामवधार्यते इति 'राज्ञः' इत्यत्र यदि लक्षणया शक्तिभ्रमेण वा षष्ठ्या पुरुषोपस्थितौ प्रकारकपुरुषविशेष्यकभेदान्वयबोधो जायते तदा स बोधः कया सामग्र्या जायते इति कर्तव्ये 'राज्ञः' इत्यत्र तादृशबोधे=राजप्रकारकपुरुषविशेष्यकभेदान्वयबोधे तथाविध= इत्याकारकप्रकृतिप्रत्ययानुपूर्वीविशेषरूपाकाङ्क्षासहकृतङस्विभक्तिजन्यपुरुषोपस्थितियुक्तसा एव तादृशबोधोत्पत्तिनियामकतया तदभावादेव=एतादृशसामग्र्यभावादेव 'राजा पुरुषः' राजप्रकारकपुरुषविशेष्यकभेदान्वयबोधस्य नापत्तिः–कारणसत्त्वे एव कार्यसंभवादित्यर्थ "षष्ठ्यादिविभक्तेः" इति पञ्चम्यन्तम् ।

यादृशशाब्दबोधसामग्री भवति तादृश एव शाब्दबोधो भवति न त्वन्यादृश इत्याह– एवेति, 'स सुन्दरः' इत्यत्र स्वत्वसंबन्धेन राजविशिष्टपुरुषतात्पर्येण स इति तत्पदं प्र मिति 'स सुन्दरः' इति वाक्येन पुरुषविशेष्यकस्वत्वसंसर्गकराजप्रकारकः शाब्दबोधो इति तत्प्रसिद्धया 'राजा पुरुषः सुन्दरः' इत्यत्रापि पदार्थोपस्थितियोग्यताबलात् स्वत्वसं

स्थितियोग्यताज्ञानादिबलात् तादृशशाब्दबोधापत्तिरित्यपि निरस्तम्—'स सुन्दरः' इत्यादिवाक्याधीनशाब्दबोधसामग्र्यास्तत्पदत्वाद्यवच्छिन्नविशेष्यकसुन्दरादिपद-समभिव्याहारज्ञानसहकृततदादिपदजन्यतादृशविशिष्टार्थोपस्थितिघटिततया तद-भावादेवापत्त्यभावात् ।

अथैतादृशरीत्यापत्तिवारणे 'राज्ञः पुरुषः' इत्यादौ स्वत्वादिसंबन्धेन पुरु-षादौ राजाद्यन्वयबोधस्वीकारेऽपि क्षतिविरहादुक्तव्युत्पत्तिर्निर्युक्तिका । विभ-क्तीनां संबन्धादिवाचकत्वमपि निर्युक्तिकम्, 'नीलो घटः' इत्यादौ विशेषणवाच-कपदसमभिव्याहृतविभक्तेरिव सर्वविभक्तीनां साधुत्वमात्रार्थकत्वस्यैवोचितत्वात्,

---

जप्रकारकपुरुषविशेष्यकबोधः स्यादेवेत्यपि निरस्तम् । यतः—'स सुन्दरः' इत्यत्र तत्पद-शेष्यकं यत्सुन्दरपदसमभिव्याहारज्ञानं तादृशज्ञानसहकृता या तत्पदजन्या तादृश=स्वत्वसं-न्धेन राजविशिष्टपुरुषविषयकोपस्थितिस्तद्घटितसामग्र्या एव पुरुषविशेष्यकस्वत्वसंसर्गकराज-कारकशाब्दबोधो जायते 'राजा पुरुषः सुन्दरः' इत्यत्र च तदभावादेव=तत्पदाभावेन पदविशेष्यकसुन्दरपदसमभिव्याहारज्ञानसहकृततत्पदजन्यतादृशविशिष्टार्थोपस्थितिघटितसामग्र्यऽ-भावादेव आपत्त्यभावात्=तत्कार्यभूतस्य पुरुषविशेष्यकस्वत्वसंसर्गकराजप्रकारकशाब्दबोधस्यापत्त्य-भावादित्यर्थः ।

अथेति—यादृशशाब्दबोधसामग्री भवति तादृश एव शाब्दबोधो भवतीत्येतादृशोक्तरीत्या राज्ञः पुरुषः' इतिवाक्याज्जायमानशाब्दबोधस्य 'राजा पुरुषः' इत्यत्रापत्तिवारणे कृते तथा स सुन्दरः' इतिवाक्याज्जायमानशाब्दबोधस्य 'राजा पुरुषः सुन्दरः' इत्यत्रापत्तिवारणे कृते राज्ञः पुरुषः' इत्यत्र स्वत्वसंसर्गकराजप्रकारकपुरुषविशेष्यकबोधस्यापि ङसन्तराजपदप्रथमा-पुरुषपदसमभिव्याहाररूपाकाङ्क्षाज्ञानघटितोपस्थित्यादिसामग्रीवशादेव स्वीकारे क्षतिविरहात्= राजा पुरुषः' इत्यत्र ङसन्तराजपदाभावेन 'राज्ञः पुरुषः' इत्यत्रत्यसामग्र्यभावात् स्वत्व-संसर्गकराजप्रकारकपुरुषविशेष्यकशाब्दबोधापत्तिर्न संभवतीति उक्तव्युत्पत्तिः=नामार्थप्रकारक-न्वयबोधं प्रति प्रत्ययजन्योपस्थितिः कारणमिति व्युत्पत्तिर्निर्युक्तिका=पृथक्पृथगाकाङ्क्षादि-घटितविलक्षणसामग्रीवशादेव पृथक्पृथक्स्वरूपशाब्दबोधोत्पत्तिनियमसंभवाद् व्यर्थैवेत्यर्थः । एवं विशेषणवाचकपदोत्तरवर्तमानविभक्तेरिव सर्वविभक्तीनाम्=विशेष्यवाचकपदोत्तरवर्तमानविभक्तीना-म् साधुत्वमात्रार्थकत्वौचित्यात्संबन्धादिवाचकत्वमपि निर्युक्तिकम्—तत्र तत्र जायमानतादृश-संबन्धादिविषयकशाब्दबोधं प्रति तत्र तत्र वर्तमानाकाङ्क्षादिघटितसामग्रीविशेषस्यैव कारणत्व-स्वीकारे तादृशसामग्र्यभावान्नान्यत्र तादृशशाब्दबोधातिप्रसङ्गो यथा 'नीलो घटः' इत्यत्रत्याया: वर्तमानतनीलपदघटपदाकाङ्क्षाया विरहात् 'नीलस्य घटः' इत्यादौ न नीलघटयोरभेदा-न्वयबोधापत्तिरित्यर्थः । तत्रत्यशाब्दबोधविशेषं प्रति तत्रत्यसामग्रीविशेषस्य कारणत्वमि-त्यस्यैव कार्यकारणभावस्य सकलशाब्दसाधारणत्वेन लाघवात् । पृथक्पृथग् व्युत्पत्तीनां

न हि तत्र तथाविधान्वयबोधोपगमे तत्स्थलीयसामग्रीबलात् ' राजा पुरुष इत्यादिष्वपि तथाविधान्वयबोधप्रसङ्गः संभवति— तत्स्थलीयसामग्र्याः षष्ठ्य राजपदत्वाद्यवच्छिन्नधर्मिकपुरुषादिपदसमभिव्याहाररूपाकाङ्क्षाज्ञानघटितत तदभावादेव तत्र तादृशसामग्र्या अभावात् ।

एवं च ' राजपुरुषः ' इत्यादिसमासे राजादिपदस्य राजसंबन्ध्यादिलक्ष स्वीकारोपि व्यर्थः— तत्र भेदान्वयबोधस्वीकारेपि क्षतिविरहात् । न च तत्र भे न्वयबोधाभ्युपगमे तत्स्थलीयसामग्रीबलात् ' राजा पुरुषः ' इत्यादावपि त शान्वयबोधापत्तिरिति वाच्यम्, तत्स्थलीयशाब्दबोधे राजपदाव्यवहितोत्तरपुरु

कार्यकारणभावनियामकत्वे ह्यऽनेककार्यकारणभावानां स्वीकारापत्त्या गौरवाच्चेत्यर्थः । प्रायं प्रकटयति— नहीति । तत्र='राज्ञः पुरुषः' इत्यत्र । तत्स्थलीयसामग्रीबलात्= पुरुषः' इत्यत्रवर्तमानङसन्तराजपदप्रथमान्तपुरुषपदघटितसामग्रीबलात् तथाविधान्वयबोधो निरूपितत्वसंबधेन राजविशिष्टस्वत्वप्रकारकपुरुषविशेष्यकबोधस्वीकारेपि 'राजा पुरुषः' उक्तस्वत्वप्रकारकपुरुषविशेष्यकबोधापत्तेरभावात् षष्ठ्यन्तराजपदाभावात्, एतदेवाह—तत्स्थली तत्स्थलीयसामग्र्याः='राज्ञः पुरुषः' इत्यत्रत्यसामग्र्याः षष्ठ्यन्तं यद्राजपदं तद्विशेष्यकं यत् दसमभिव्याहाररूपाकाङ्क्षाज्ञानं तद्घटितत्वेन, तत्र='राजा पुरुषः' इत्यत्र च तदभावात्= न्तराजपदत्वावच्छिन्नविशेष्यकपुरुषपदसमभिव्याहाररूपाकाङ्क्षाज्ञानाभावादेव तादृशसाम स्वत्वप्रकारकपुरुषविशेष्यकशाब्दबोधजनकसामग्र्या अभावान्न स्वत्वप्रकारकपुरुषविशेष्यक बोधापत्तिरित्यर्थः ।

एवं चेति— यथा 'राज्ञः पुरुषः' इत्यत्र भेदान्वयबोधो भवति तथा 'राजपुरुषः' इ भेदान्वयबोधः स्वीकर्तव्यः— यतोत्र राजपदस्य राजसंबन्धिनि लक्षणां स्वीकृत्याभेदा राजपुरुषयोर्यः स्वस्वामिभावसंबन्धः प्रतीयते तस्य भेदान्वयबोधस्वीकारेप्यनुपपत्तिर्नास्तीति पदस्य राजसंबन्धिनि लक्षणास्वीकारो व्यर्थो गौरवादित्यर्थः । ननु यदि 'राजपुरुषः' भेदान्वयः स्वीक्रियेत तदात्र भेदान्वयं प्रति षष्ठ्यन्तत्वमनिवेश्य केवलं राजपदपुरुषपदयो भिव्याहाररूपाकाङ्क्षाज्ञानस्य कारणत्वं वक्तव्यं तथा च राजपदपुरुषपदसमभिव्याहाररूपाक ज्ञानस्य 'राजा पुरुषः' इत्यत्रापि सत्त्वात् 'राजपुरुषः' इतिदृष्टान्तेन 'राजा पुरुषः' इ भेदान्वयबोधापत्तिः स्यादिति तद्वारणाय 'राजपुरुषः' इत्यत्र न भेदान्वयबोधः स्वीकार्यः राजपदस्य राजसंबन्धिनि लक्षणाद्वाराऽभेदान्वयबोध एव स्वीकार्य इत्याशङ्क्याह— न तत्र=' राजपुरुषः ' इत्यत्र । तत्स्थलीयसामग्रीबलात्='राजपुरुषः ' इत्यत्रवर्तमानसामग्री सामग्रीबलात् । तादृशान्वयबोधापत्तिः=भेदान्वयबोधापत्तिः । परिहारहेतुमाह—तत्स्थल ' राजपुरुषः' इत्यत्र भेदान्वयस्वीकारेपि तादृशभेदान्वयबोधं प्रति राजपदाव्यवहितोत्तरपु समभिव्याहाररूपाकाङ्क्षाज्ञानस्य हेतुत्वं वक्ष्याम एतादृशाकाङ्क्षाज्ञानम् 'राजा पुरुषः' इ

दिपदत्वरूपानुपूर्वीविशेषज्ञानस्य हेतुतयाऽसमासस्थले पुरुषादिपदस्य विभक्त्या राजादिपदव्यवहितत्वात् तादृशानुपूर्वीविशेषज्ञानाऽसंभवेन तत्र तादृशबोधसामग्र्या असिद्धेः ।

न च प्रकृतिप्रत्यययोरानुपूर्वीविशेषरूपस्याकाङ्क्षात्वात् प्रातिपदिकद्वयाऽव्यवधानघटितोक्तानुपूर्वीविशेषज्ञानस्य हेतुत्वमेव निष्प्रामाणिकमितिवाच्यम्, भवन्मतेपि 'राजपुरुषः' इत्यादौ तादृशसामग्रीबलाद् राजपदार्थराजसंबन्धिपुरुषपदार्थयोरभेदान्वयबोधः. तादृशसामग्रीबलात् 'राज्ञः पुरुषः' इत्यादावपि राजादिपदस्य राजसंबन्ध्यादौ लक्षणाग्रहसत्त्वे तादृशाऽभेदान्वयबोधप्रसङ्गवारणाय तथाविधानुपूर्वीविशेषज्ञानस्य समासजन्यबोधे हेतुताकल्पनस्यावश्यकत्वात् । अस्मा-

---

त्स्येव राजपदपुरुषपदयोर्मध्ये प्रथमाविभक्त्या व्यवधानादिति न 'राजपुरुषः' इत्यस्य दृष्टान्तेन राजा पुरुष' इत्यत्र भेदान्वयबोधापत्तिः संभवतीत्यर्थः । तादृशानुपूर्वी=राजपदाव्यवहितोत्तरत्रपदत्वरूपानुपूर्वी । तत्र='राजा पुरुषः' इत्यत्र । तादृशबोधसामग्र्याः=भेदान्वयबोधस्योक्तमग्र्याः ।

न चेति । निष्प्रामाणिकमिति– प्रातिपदिकद्वयस्याव्यवधानमेव न सर्वत्र संभवति मध्ये भक्तिव्यवधानसंभवादिति प्रातिपदिकद्वयाव्यवधानघटितोक्तानुपूर्वीविशेषस्य कथं शाब्दबोधशेषं प्रति हेतुत्वं स्यात् ? तस्मादव्यवहितप्रकृतिप्रत्ययानुपूर्वीविशेषस्यैव हेतुत्वं वक्तव्यं प्रकृत्यययोः सर्वत्राव्यवधानसंभवात् सर्वत्रानुगतस्यैव च कारणत्वौचित्यात् तथा च– आनुज्ञानस्याऽकारणत्वे 'राजपुरुषः' इतिसमासे या सामग्री वर्तते सा 'राजा पुरुष.' इत्यत्रापि जपदपुरुषपदजन्योपस्थितिघटितयोग्यताज्ञानादिसामग्र्यस्तीति 'राजपुरुषः' इत्यत्र भेदान्वयस्वीकारे तद्दृष्टान्तेन 'राजा पुरुषः' इत्यत्रापि राजप्रकारकस्वत्वसंसर्गकपुरुषविशेष्यकभेदान्वयस्यापत्तिरस्त्येवेति तद्वारणाय आनुपूर्वीविशेषस्य (राजपदाव्यवहितपुरुषपदत्वानुपूर्वीविशेषस्य) रणत्वकल्पनप्रयुक्तं गौरवं पूर्वपक्षिमतेतिरिच्यते 'राजपुरुषः' इत्यत्राभेदान्वयवादिसिद्धान्तिपक्षे त्राभेदान्वयस्य राजपदस्य राजसंबन्धिनि लक्षणैव नियामिका तदभावादेव 'राजा पुरुषः' यत्र नाऽभेदान्वयापत्तिरित्यत्राभेदान्वयापत्तिवारणाय राजपदपुरुषपदयोरव्यवधानघटितानुपूर्वीनस्य कारणत्वकल्पनापेक्षाऽभावेनोक्तगौरवाभावाल्लाघवमितिभाव इतिकृष्णंभट्टाभिप्रायः । परिति–भवन्मतेपीति, सिद्धान्तिमतेपि यथा 'राजपुरुषः' इत्यत्र तादृशसामग्रीबलात्=लक्षणाटितसामग्रीबलादऽभेदान्वयबोधो जायते तथा 'राज्ञः पुरुषः' इत्यत्रापि राजपदस्य राजसंबधिनि लक्षणाग्रहे जाते तादृशसामग्रीबलात्=लक्षणाघटितसामग्रीबलादऽभेदान्वयबोधापत्तिरस्त्येति 'राज्ञः पुरुष' इत्यत्राभेदान्वयबोधापत्तिवारणाय समासजन्यबोधे='राजपुरुषः' इतिमस्तपदजन्याऽभेदान्वयबोधे तथाविधानुपूर्वीविशेषज्ञानस्य=राजपदाव्यवहितोत्तरपुरुषपदानुपूर्वीशेषरूपाकाङ्क्षाज्ञानस्य कारणत्वकल्पनमावश्यकमेव ( तथा च 'राज्ञः पुरुषः' इत्यत्र राज-

भिर्भेदान्वयबोधे एव तादृशानुपूर्वीविशेषज्ञानस्य हेतुतायाः कल्पनीयत्वात् । न चोभयमते एव राजसंबन्धिनि राजपदस्य स्वारसिकलक्षणाग्रहेण 'राजपुरुषः' इत्यत्र राजसंबन्धिपुरुषयोरभेदान्वयबोधो भवति, इयांस्तु विशेषः—यदस्मन्मतेऽसौ समासः षष्ठीतत्पुरुषो भवन्मते कर्मधारय इति. एवं च पुरुषविशेष्यकाऽभेदसंसर्गकराजसंबन्धिप्रकारकबोधे राजपदाऽव्यवहितोत्तरवर्तिपुरुषपदत्वप्रकारकज्ञानत्वेन हेतुत्वमुभयवादिसिद्धमेव भेदान्वयबोधे तादृशानुपूर्वीज्ञानहेतुताकल्पन

---

पदपुरुषपदयोरव्यवहितानुपूर्व्यऽभावादेवाऽभेदान्वयबोधापत्तिर्न स्यात्. ) तथा च यथा तथाविधानुपूर्वीविशेषज्ञानस्य 'राजपुरुषः' इत्यत्राभेदान्वयबोधं प्रति कारणत्वं कल्प्यते तथा मया भेदान्वयबोधं प्रत्येव कारणत्वं कल्प्यते तथा च भेदान्वयबोधकारणस्य तादृशानुपूर्वीविशेषज्ञानस्य=राजपदाव्यवहितपुरुषपदानुपूर्वीविशेषज्ञानस्य 'राजपुरुषः' इत्यत्र सत्त्वाद् भेदान्वयबोध एव स्वीकार्यो नाऽभेदान्वयबोधस्तत्र राजपदस्य राजसंबन्धिनि लक्षणापत्त्या गौरवादित्यर्थः। न चैवम् 'राज्ञः पुरुषः' इत्यत्र भेदान्वयबोधो न स्याद् भेदान्वयकारणीभूतोक्तराजपदाव्यवहितपुरुषपदानुपूर्वीविशेषज्ञानस्याभावात् षष्ठ्या व्यवधानादिति वाच्यम्, उक्तकार्यकारणभावस्य समासस्थलार्थमेव कल्पितत्वात्. असमासस्थले 'राज्ञः पुरुषः' इत्यादौ तु भेदान्वयबोधं प्रति षष्ठ्यन्तराजादिपदसमभिव्याहारस्य वा विरुद्धविभक्त्यन्तपदयोः समभिव्याहारज्ञानस्य वा कारणत्वादिति न काप्यनुपपत्तिरिति सूचितम्—"समासजन्यबोधे" इत्यनेन ।

पुनः सिद्धान्ती 'राजपुरुषः' इत्यत्र भेदान्वयबोधस्वीकर्तृपूर्वपक्षिमते गौरवं प्रदर्शयति—चेत्यादिना । 'राजपुरुषः' इत्यत्र राजपदस्य यदि कस्यचित् राजसंबन्धिनि स्वारसिकलक्षणा स्यात्तदा राजपदाल्लक्षणयोपस्थितराजसंबन्धिनः पुरुषेऽभेदान्वयस्य ममेव तवापि स्वीकारावश्यकत्वादभेदान्वयबोधं प्रति राजपदाव्यवहितोत्तरवर्तिपुरुषपदत्वप्रकारकं यदानुपूर्वीज्ञानं तत्कारणत्वमुभयवादि ( तव मम च ) सिद्धमेव त्वया तु तादृशाव्यवहितानुपूर्वीज्ञानस्य राजपदस्य राजसंबन्धिनि लक्षणाग्रहाभावकाले भेदान्वयबोधं प्रत्यपि कारणत्वं कल्पनीयमिति गौरवमित्यर्थः । किं च लक्षणाग्रहनिवेशं विना कारणत्वस्वीकारे भेदान्वयबोधाभेदान्वयबोधयोर्निगमनाविरहः, लक्षणाग्रहनिवेशे ततोऽप्यधिकं गौरवम्, केवललक्षणाया एवाभेदान्वयबोधनियामकत्वे मदीयमतस्वीकारापत्तिरित्यवधेयम् । 'राजपुरुषः' इत्यत्र राजपदस्य राजसंबन्धिनि स्वारसिकलक्षणाग्रहकालिकः स्वस्य प्रतिवादिनश्च यावान् भेदस्तमाह— इयांस्त्विति, 'राजपुरुषः' इत्यत्र लक्षणाग्रहे सत्यभेदान्वयबोधकालेऽसौ समासो मममते षष्ठीतत्पुरुषः 'राज्ञः पुरुषः' इति विग्रहस्वीकारात् ङसन्तराजपदस्य राजसंबन्धविशिष्टे लक्षणास्वीकारात्, त्वन्मते चासौ समासः कर्मधारय एव 'राजा चासौ पुरुषो राजपुरुषः' इतिविग्रहस्वीकारात् प्रथमान्तराजपदस्यैव राजसंबन्धिनि लक्षणास्वीकारात् राजसंबन्धित्वपुरुषत्वेतिभिन्नप्रवृत्तिनिमित्तधर्माभ्यां पदाभ्यामेकधर्मिबोधनादित्यर्थः । पूर्वपक्षी परिहरति— उक्ते

मधिकमिति वाच्यम्, उक्ताऽभेदान्वयबोधे तथाविधानुपूर्वीज्ञानहेतुतायां पर्यायश-ब्दान्तरघटितानुपूर्वीज्ञानजन्यतथाविधान्वयबोधे व्यभिचारवारणाय तादृशानुपूर्वी-ज्ञानानन्तर्यस्य कार्यतावच्छेदककोटावश्यं निवेशनीयतया तत्र विषयनिवेशे प्रयोजनाभावेन तादृशकार्यतावच्छेदकस्यैव भेदान्वयबोधसाधारण्येनानुपूर्वीज्ञानस्य भेदान्वयबोधे हेतुताया अनाधिक्यात् ।

एवम् ' तण्डुलं पचति ' इत्यादावपि पाकादिरूपधात्वर्थे कर्मत्वादिसंबन्धेन तण्डुलादेरन्वयबोधः स्वीकर्तुमुचितः । कर्मत्वस्य पाकाद्यंशे प्रकारत्वे तत्र तत्र

---

राजपुरुषः ' इत्यत्र राजप्रकारकपुरुषविशेष्यकाभेदान्वयबोधं प्रति तथाविधानुपूर्वीज्ञान-तुतायाम्=राजपदाव्यवहितोत्तरपुरुषपदानुपूर्वीज्ञानस्य हेतुत्वे यत्र ' नृपपुरुषः ' ' नृपति-रः ' इत्यादौ राजपुरुषपदपर्यायशब्दान्तरघटितानुपूर्वीज्ञानेनाभेदान्वयबोधो भवति तत्र जपदाव्यवहितोत्तरपुरुषपदज्ञानस्यासत्त्वाद् अभेदान्वयबोधरूपकार्यस्य च सत्त्वाद् व्यभि-ारः प्राप्त इति तादृशव्यभिचारवारणाय तत्तदानुपूर्वीज्ञानानन्तर्यस्य कार्यतावच्छेदककोटौ नवेशः कर्तव्यो यथा— राजपदाव्यवहितोत्तरपुरुषपदानुपूर्वीज्ञानोत्तरत्वविशिष्टराजप्रकारकपुरुषवि-ष्यकाभेदान्वयबोधं प्रति राजपदाव्यवहितपुरुषपदानुपूर्वीज्ञानस्य हेतुत्वम्. नृपतिपदाव्यवहितो-रनरपदानुपूर्वीज्ञानोत्तरत्वविशिष्टराजप्रकारकपुरुषविशेष्यकाभेदान्वयबोधं प्रति नृपतिपदाव्यवहि-ोत्तरनरपदानुपूर्वीज्ञानस्य कारणत्वमित्यादि, एवं हि कार्यतावच्छेदककोटौ तत्तदानुपूर्वीज्ञानानन्त-स्य निवेशे कृते विषयनिवेशे=संबन्धरूपविषयनिवेशस्य प्रयोजनं नास्त्येव कारणानन्तर्यनिवेशेन ादृशशाब्दबोधं प्रत्येव तादृशानुपूर्वीज्ञानस्यैव हेतुत्वप्राप्तौ व्यभिचारासंभवाद् व्यभिचारवारणार्थे-च विषयनिवेशस्यावश्यकत्वात् तथा च राजपदाव्यवहितोत्तरपुरुषपदानुपूर्वीज्ञानानन्तरजायमान-राजप्रकारकपुरुषविशेष्यकशाब्दबोधं प्रति राजपदाव्यवहितोत्तरपुरुषपदानुपूर्वीज्ञानस्य हेतुत्व-त्येवं भेदान्वयबोधाऽभेदान्वयबोधसाधारणं कार्यकारणभावं वक्ष्याम इति न भेदान्व-बोधं प्रत्युक्तानुपूर्वीज्ञानस्य पृथग् हेतुत्वकल्पनापेक्षेति नाधिक्यमित्यर्थः । तादृशकार्येति, राज-कारकपुरुषविशेष्यकशाब्दबोधत्वस्य कार्यतावच्छेदकस्य भेदान्वयबोधसाधारण्यात्— ' राज-रुषः ' इत्यत्र भेदान्वयबोधो वा भवत्वभेदान्वयबोधो वा भवतु : राजप्रकारकपुरुषविशेष्यकबोध-योभयत्रैव जायमानत्वाद् राजप्रकारकपुरुषविशेष्यकबोधत्वस्योभयविधबोधसाधारणत्वात्तादृशो-यबोधसाधारणराजप्रकारकत्वपुरुषविशेष्यकत्वं प्रत्येव राजपदाव्यवहितोत्तरपुरुषपदानुपूर्वीज्ञानस्य तुत्वकल्पनान्नाधिक्यम् ।

यथा ' राज्ञः पुरुषः ' इत्यत्र स्वत्वस्योक्तरीत्या संसर्गत्वमेव युक्तं न प्रकारत्वं तथा ' तण्डुलं चति' इत्यत्र द्वितीयार्थकर्मत्वस्यापि संसर्गत्वमेवोचितं न तु प्रकारत्वमित्याह— एवमित्यादिना । ाथा चात्र कर्मत्वसंबन्धेन पाकादिधात्वर्थे तण्डुलाद्यन्वयः कर्तव्य इत्यर्थः । विपक्षे बाधकमाह— र्मत्वस्येति, कर्मत्वस्य प्रकारत्वस्वीकारे ह्यनुपस्थितस्य प्रकारतया भानं न भवति. उपस्थितिश्च

द्वितीयादेः शक्तिकल्पने तादृशवाक्यजन्यशाब्दबोधे कर्मत्वादिसंसर्गस्याधिकर विषयताकल्पने च गौरवात् । 'तण्डुलं पचति' इत्यादिवाक्यजन्यशाब्दबोध सामग्रीबलात् 'तण्डुलः पचति' इत्यादावपि तथाविधान्वयबोधापत्तिस्तु संभवति- तादृशान्वयबोधे द्वितीयान्ततण्डुलपदत्वाद्यवच्छिन्नधर्मिकपचतीत्या दिसमभिव्याहारज्ञानस्य हेतुतया 'तण्डुलः पचति' इत्यादौ तादृशसामग्र्य अप्रसिद्धेः ।

एवम् 'पचति चैत्रः' इत्यादावपि कृतिसंबन्धेन पाकादेश्चैत्राद्यंशेऽन्वयबोध स्वीकार उचितः, अन्यथा- उक्तरीत्या गौरवात् । तत्र तादृशान्वयबोधस्वीका

---

शक्तिग्रहं विना न भवतीति तत्र तत्र=कर्मत्वादिषु द्वितीयादिविभक्तीनां शक्तिकल्पनापेक्षा प्र तया तादृश= 'तण्डुलं पचति' इत्यादिवाक्यजन्यशाब्दबोधे प्रकारभूतकर्मत्वादेरपि संबन्धस श्रयत्वादिरूपस्य विषयताकल्पना प्राप्तेति गौरवं स्यात्, कर्मत्वस्य संसर्गत्वस्वीकारे त गौरवं नास्त्येव- अनुपस्थितस्यापि संसर्गतया भानसंभवेन कर्मत्वादौ द्वितीयादिविभक्तिश कल्पनापेक्षाभावात्, संसर्गत्वेन भासमानकर्मत्वादीनां संबन्धान्तरस्याश्रयत्वादेः शाब्दबोध यत्वकल्पनापेक्षाभावाच्चेति संसर्गतावादे लाघवमित्यर्थः ।

ननु कर्मत्वस्य संसर्गत्वे वृत्त्या तदुपस्थित्यपेक्षाभावेन यथा 'तण्डुलं पचति' इत्यत्र क त्वसंबन्धेन पाके तण्डुलान्वयबोधस्तथा 'तण्डुलः पचति' इत्यत्रापि बोधः स्यात्, प्रकारत्वस्व कारे त्वऽनुपस्थितस्य प्रकारतया भानाभावनियमेन 'तण्डुलः पचति' इत्यत्र कर्मत्वोपस्थाप द्वितीयाऽभावादेव न तादृशान्वयबोधः प्रथमायाः कर्मत्वे शक्त्यभावादित्याशङ्क्याह- तण्डुल स्यादिना । न संभवतीत्युक्ते हेतुमाह- तादृशेति, कर्मत्वसंबन्धेन पाके तण्डुलान्वयबोधं प्र द्वितीयान्ततण्डुलपदसमभिव्याहारस्य कारणत्वात् 'तण्डुलः पचति' इत्यत्र द्वितीयान्ततण्डु पदाभावाच्च न तादृशान्वयबोधापत्तिरित्यर्थः ।

एवम् 'पचति चैत्रः' इत्यत्र कृतिसंबन्धेन पाकादेश्चैत्रादावन्वयबोधस्तत्रापि कृतेः संसर्ग मेवोचितं न प्रकारत्वमित्याह-एवमिति । विपक्षे बाधकमाह- अन्यथेति, अन्यथा=कृतेः प्र रत्वस्वीकारे, उक्तरीत्या=यथा 'तण्डुलं पचति' इत्यत्र कर्मत्वादौ द्वितीयादेः शक्तिकल्पनाप स्यात् प्रकारत्वे तथात्रापि कृतावाख्यातस्य शक्तिकल्पनापेक्षा स्यात् प्रकारीभूतकृतेश्चाश्रय रूपसंबन्धकल्पनापेक्षा स्यादिति गौरवम् । कृतेः संसर्गत्वस्वीकारे चैतादृशं गौरवं नास्ति अनुपस्थितस्यापि संसर्गतया भानसंभवात्, कृतावाख्यातस्य शक्तिकल्पनापेक्षाभावाद् संसर्ग तकृतिप्रतीत्यर्थं संबन्धान्तरापेक्षाभावादाश्रयतासंबन्धकल्पनाभावाच्चेत्यर्थः । ननु कृतेः संसर्ग तदुपस्थित्यपेक्षाभावेन तदुपस्थापकापेक्षाभावात् 'पच्यते चैत्रः' 'पाकश्चैत्रः' इत्यादा कृतिसंबन्धेन पाकादेश्चैत्रादावन्वयबोधः स्यात्, प्रकारत्वस्वीकारे त्वऽनुपस्थितस्य प्रकारत्वासं वात्तदुपस्थापकशब्विकरणविशिष्टाख्यातस्यात्राभावान्न 'कृतिसंबन्धेन पाकवांश्चैत्रः' इति बोध पत्तिरित्याशङ्क्याह- तत्रेति । तत्र='पचति चैत्रः' इत्यत्र । तादृशान्वयबोधः='कृतिसं

तत्स्थलीयसामग्रीबलात् 'पच्यते चैत्रः' 'पाकश्चैत्रः' इत्यादौ तथाविधान्वयबोधापत्तेरप्युक्तरीत्या वारणसंभवादिति ।

मैवम्- 'राज्ञः पुरुषः' इत्यादौ षष्ठ्यादेः स्वत्वादिवाचकत्वमावश्यकम्, अन्यथा- 'पुरुषो न राज्ञः' इत्यादौ पुरुषे राजस्वत्वाद्यभावबोधानुपपत्तेः । न हि तत्र स्वत्वादिसंबन्धावच्छिन्नप्रतियोगिताकराजाद्यभाव एव प्रतीयते न तु राजस्वत्वाद्यभाव इति संभवति- स्वत्वादिसंबन्धस्य वृत्त्यनियामकतया प्रतियोगितानवच्छेदकत्वेनं तत्संबन्धावच्छिन्नप्रतियोगिताकाऽभावाऽप्रसिद्धेः ।

---

ेन पाकवांश्चैत्रः' इतिबोधः । उक्तरीत्या वारणसंभवात्=कृतेः संसर्गत्वस्वीकारे उक्तान्वयबोधं प्रति व्विकरणविशिष्टाख्यातान्तधातुपदसमभिव्याहारस्य कारणत्वस्वीकारात् 'पच्यते चैत्रः' इत्या- ै च शब्विकरणविशिष्टाख्यातान्तधातुपदाभावान्न 'कृतिसंबन्धेन पाकवांश्चैत्रः' इत्यन्वयबो- पत्तिरित्यर्थः ।

प्रकारतावादी संसर्गतावादं परिहरति- मैवमित्यादिना, अनुपस्थितस्य प्रकारतया भानासंभवेन दुपस्थित्यर्थम् 'राज्ञः पुरुषः' इत्यत्र स्वत्वे षष्ठ्याः शक्तिकल्पनं कर्तव्यं षष्ठ्याद्यर्थभूतस्वत्वा- नां प्रकारत्वमेवोचितमित्यर्थः । विपक्षे बाधकमाह- अन्यथेति । अन्यथा=स्वत्वादेः संसर्गत्वे पुरुषो न राज्ञः' इत्यत्र राजस्वत्वप्रतियोगिकाभावबोधो न स्यात्- स्वत्वस्य संसर्गत्वेन तियोगितावच्छेदकसंबन्धत्वेनैव भानसंभवात् । प्रकारत्वे तु तस्यापि शक्यत्वेन पदार्थत्वात् त्वप्रतियोगिकाभावप्रतीतिः संभवति तथा च 'राज्ञः पुरुषः' इत्यत्र राजनिरूपितस्वत्ववान् रुष इत्येव बोधो न तु स्वत्वसंबन्धेन राजवान् पुरुष इतिबोध इत्यर्थः । ननु 'पुरुषो न ज्ञः' इत्यत्र स्वत्वस्य प्रतियोगितावच्छेदकसंबन्धत्वेनैव भानं भवति न तु प्रतियोगित्वेन येन त्वस्य प्रकारत्वं स्यादित्याशङ्क्याह- न हीति । तत्र= 'पुरुषो न राज्ञः' इत्यत्र । राजस्व- ाद्यभावः=राजनिरूपितस्वत्वप्रतियोगिकाभावः । 'पुरुषो न राज्ञः' इत्यत्र स्वत्वस्य प्रति- ोगितावच्छेदकसंबन्धत्वे बाधकमाह- स्वत्वादीति, आश्रयत्वसंयोगादीनामेव वृत्तिनियामकसंब- ानां प्रतियोगितावच्छेदकसंबन्धत्वं भवति- येन संबन्धेन यः पदार्थो यत्र वर्तते तेनैव संब- ेन तत्रैव तत्पदार्थस्याभावोऽपि नञा प्रत्याय्यते स्वत्वसंबन्धेन तु न कस्यचित् पदार्थस्य राजादेः रुषादौ स्थितिः संभवति. न हि 'राज्ञः पुरुषः' इत्युक्ते स्वत्वसंबन्धेन राज्ञः पुरुषे स्थितिः तीयते येन स्वत्वस्य वृत्तिनियामकत्वं स्यात्, वृत्तिनियामकत्वाभावेन स्वत्वस्य प्रतियोगिताव- छेदकसंबन्धत्वाभावात् तत्=स्वत्वसंबन्धावच्छिन्नप्रतियोगिताकाभावस्य कचिदपि प्रसिद्धत्वाभा- ाच्च न 'पुरुषो न राज्ञः' इत्यत्रापि स्वत्वसंबन्धावच्छिन्नप्रतियोगिताकराजाभावः प्रतीयते ि तु राजस्वत्वाभाव एव, तस्मात् स्वत्वस्य प्रकारत्वमेव युक्तं न संसर्गत्वमित्यर्थः ।

अत एव स्वामित्वादिकं परित्यज्य स्वत्वादेः षष्ठ्यर्थत्वं नवीनाः स्वीकुर्वन्ति- स्वामित्वादेः षष्ठ्यर्थत्वे तस्य निरूपकतासंबन्धेन पुरुषांशेऽन्वयसंभवेपि ताद्दशसंबन्धस्य वृत्त्यनियामकतया संसर्गाभावप्रतियोगितानवच्छेदकत्वेन तत्संबन्धावच्छिन्नाभावस्य नञा प्रत्यायनाऽसंभवात् । आश्रयतासंबन्धाद्यवच्छिन्नाभावबोधस्यैताद्दशसमभिव्याहारस्थलेऽभ्युपगमे चैत्रादिसंबन्धिनि धनेप्याश्रयतासंबन्धावच्छिन्नप्रतियोगिताकचैत्रवृत्तिस्वामित्वाभावसत्त्वात् ' नेदं चैत्रस्य ' इति प्रयोगापत्तिः ।

न च नञ्समभिव्याहारस्थलानुरोधेन षष्ठ्यादेः स्वत्वादिवाचकत्वेपि ' राज्ञः पुरुषः ' इत्यादौ षष्ठ्याद्यर्थस्य संसर्गमर्यादया भानमुचितम्- तस्य प्रकारत्वे

---

अत एव=वृत्त्यनियामकसंबन्धस्य प्रतियोगितावच्छेदकसंबन्धत्वाभावादेव । यदि स्वामित्वं षष्ठ्यर्थः स्यात्तदा पुरुषस्य स्वामित्वनिरूपकत्वाद् निरूपकत्वसंबन्धेन स्वामित्वस्य पुरुषेऽन्वयसंभवाच ' राज्ञः पुरुषः ' इत्यत्र निरूपकतासंबन्धेन राजनिष्ठस्वामित्ववान् पुरुष इति पुरुषविशेष्यकबोधसंभवेपि ताद्दशसंबन्धस्य=निरूपकतासंबन्धस्य वृत्त्यनियामकत्वेन संसर्गाभावप्रतियोगितावच्छेदकसंबन्धत्वासंभवात् 'पुरुषो न राज्ञः' इत्यत्र नञा तत्संबन्धावच्छिन्नाभावस्य=निरूपकत्वसंबन्धावच्छिन्नप्रतियोगिताकस्वामित्वाभावस्य प्रतीतिर्न संभवतीति न स्वामित्वं षष्ठ्यर्थः, स्वत्वस्य षष्ठ्यर्थत्वे तु स्वत्वं हि पुरुषे आश्रयतासंबन्धेन वर्तते, आश्रयतासंबन्धश्च वृत्तिनियामक एवेति आश्रयतासंबन्धेन पुरुषे राजस्वत्वाभावप्रतीतिः संभवत्येव- आश्रयत्वसंबन्धावच्छिन्नप्रतियोगिताकराजनिरूपितस्वत्वाभाववान् पुरुष इतिबोधसंभवादित्यर्थः । ननु स्वामित्वमेव षष्ठ्यर्थ एताद्दशसमभिव्याहारस्थले='पुरुषो न राज्ञः' इति नञ्समभिव्याहारस्थले आश्रयतासंबन्धावच्छिन्नप्रतियोगिताकाभावबोधो भवतीति स्वीकरिष्यामः- आश्रयतासंबन्धस्य वृत्तिनियामकत्वेन संसर्गाभावप्रतियोगितावच्छेदकत्वसंभवादित्याशङ्क्याह- आश्रयतेति, एवं हि आश्रयतासंबन्धेन स्वामित्वस्य पुरुषे सदैवाऽभावाद् राजपुरुषेपि 'पुरुषो न राज्ञः' इतिप्रतीतिः स्यादेव तथा चैत्रसंबन्धिन्यपि धने आश्रयतासंबन्धेन स्वामित्वस्यासत्त्वात् ' नेदं चैत्रस्य ' इति प्रतीत्यापत्तिः किं वा प्रयोगापत्तिः स्यादेव नह्याश्रयतासंबन्धेन स्वकीये धनपुरुषादौ स्वामित्वं वर्तते किं तु स्वामिन्येव । तथा च निरूपकतासंबन्धेन धनपुरुषादौ नञ्सत्त्वे स्वामित्वाभावो वक्तव्यः निरूपकतासंबन्धस्य च संसर्गाभावप्रतियोगितावच्छेदकत्वं न संभवति वृत्त्यनियामकत्वादिति न स्वामित्वं षष्ठ्यर्थः किं तु स्वत्वमेवेत्यर्थः।

न चेति-स्वामित्वस्य षष्ठ्यर्थत्वे ' पुरुषो न राज्ञः ' इत्यत्र निरूपकत्वसंबन्धेनापि स्वामित्वाभावो नञा न प्रत्याययितुं शक्यते निरूपकत्वसंबन्धस्य वृत्त्यनियामकत्वात्. आश्रयतासंबन्धस्य वृत्तिनियामकत्वेन तेन स्वामित्वाभावः प्रत्याययितुं तु शक्यते किं तूक्तरीत्या चैत्रधनेपि ' नेदं चैत्रस्य ' इति प्रयोगः स्यादिति यदि षष्ठ्यर्थः स्वामित्वं न संभवति नञ्समभिव्याहारस्थलानुरोधेन तदा स्वत्वमेवास्तु षष्ठ्यर्थः किं तु षष्ठ्यर्थस्यापि स्वत्वस्य संसर्गत्वमेवोचित

पगमे तत्संबन्धस्याधिकस्य भानकल्पनेन गौरवात् । नञ्समभिव्याहारस्यैव तत्प्रकारकबोधनियामकत्वाभ्युपगमेन सामग्रीविरहात् तत्प्रकारकबोधस्य तदऽसमभिव्याहारस्थलेऽसंभवादितिवाच्यम्, एवं सति नञ्पदं विना यादृशसमभिव्याहारस्थले यत्र धर्मिणि येन संबन्धेन यस्य विशेषणतया भानं तत्र नञ्समभिव्याहारे तत्र धर्मिणि तत्संबन्धावच्छिन्नप्रतियोगिताकतदभावः प्रतीयते इति सर्वजनानुभवस्याऽपलापापत्तेः । 'राज्ञः पुरुषः' इतिवाक्यजन्याऽप्रामाण्यज्ञानानास्कन्दित-

प्रकारत्वमित्यर्थः । स्वत्वस्य प्रकारत्वे बाधकमाह– तस्येति त[illegible]=स्वत्वस्य प्रकारत्वे तत्संबन्धस्याप्यधिकस्य भानापत्त्या गौरवात् यथात्र पुरुषे स्वत्वमाश्रयतासंबन्धेन भासेत । राजनिरूपितस्वत्वाश्रयः पुरुष इति, प्रकारीभूतपदार्थस्य संबन्धान्तरं विना भानासंभवात् । संसर्गभूतपदार्थभानार्थं तु संबन्धान्तरस्यापेक्षाभावात् तस्य स्वयमेव संसर्गत्वाद् यथात्र स्वत्वसंबन्धेन राजवान् पुरुष इति संसर्गतामते बोध इत्यर्थः । नन्वेवं नञ्समभिव्याहारस्थलेपि स्वत्वस्यैव प्रतियोगितावच्छेदकसंबन्धत्वं वक्तव्यं तच्चोक्तरीत्या न संभवति स्वत्वस्य वृत्त्यनियामकत्वादित्याशङ्कयाह– नञ्समभिव्याहारस्येति, 'पुरुषो न राज्ञः' इत्यादि नञ्समभिव्याहारस्थले स्वत्वस्य संसर्गत्वं नोपपद्यते इति प्रकारत्वमेव, नञऽसमभिव्याहारस्थले 'राज्ञः पुरुषः' इत्यादौ तु स्वत्वस्य संसर्गत्वमेव. तथा च नञ्समभिव्याहारस्यैव स्वत्वप्रकारकबोधनियामकतया नञऽसमभिव्याहारस्थले 'राज्ञः पुरुषः' इत्यादौ सामग्रीविरहात्=नञ्पदसमभिव्याहाराभावात् तत्प्रकारकबोधस्य=स्वत्वप्रकारकबोधस्यासंभवात् स्वत्वसंसर्गकबोधोपपत्त्या स्वत्वस्य संसर्गत्वमेवोचितमित्यर्थः ।

परिहरति– एवं सतीति, 'राज्ञः पुरुषः' इत्यत्र स्वत्वस्य संसर्गत्वम् 'पुरुषो न राज्ञः' इत्यत्र च स्वत्वस्य प्रकारत्वमिति वैषम्यं न संभवति यतः प्रतियोग्यभावान्वयौ तुल्ययोगक्षेमौ भवतः । नञ्पदं विनेति– यथा–'घटवद् भूतलम्' इत्यत्र यत्र धर्मिणि=भूतले येन संबन्धेन=संयोगसंबन्धेन यस्य=घटस्य विशेषणतया भानं भवति तत्र=तत्स्थले 'घटवद् भूतलम्' इतिवाक्ये नञ्समभिव्याहारे 'भूतलं न घटवत्' इत्यत्र तत्र धर्मिणि तत्संबन्धावच्छिन्नप्रतियोगिताकतदभावः=संयोगसंबन्धावच्छिन्नप्रतियोगिताकघटाभावः प्रतीयते, एवं प्रकृतेपि यदि 'राज्ञः पुरुषः' इत्यत्र नञऽसमभिव्याहारे पुरुषे स्वत्वसंबन्धेन राजपदार्थस्य विशेषणतया भानं स्यात्तदा 'पुरुषो न राज्ञः' इत्यत्र नञ्समभिव्याहारेपि पुरुषे स्वत्वसंबन्धेन राजपदार्थाभावस्यैव=स्वत्वसंबन्धावच्छिन्नराजत्वावच्छिन्नप्रतियोगिताकाभावस्यैव भानं स्यात् तच्च न संभवति– स्वत्वस्य वृत्त्यनियामकत्वेन प्रतियोगितावच्छेदकत्वासंभवात् । 'राज्ञः पुरुषः' इत्यत्र स्वत्वस्य संसर्गत्वम् 'पुरुषो न राज्ञः' इत्यत्र च स्वत्वस्य प्रकारत्वमिति वैषम्ये दोषान्तरमाह– 'राज्ञः पुरुषः' इति, त्वन्मते 'राज्ञः पुरुषः' इतिवाक्यजन्यो योऽप्रामाण्यज्ञानाऽनास्कन्दितो बोधस्तादृशबोधदशायामपि 'पुरुषो न राज्ञः' इतिवाक्यादपि शाब्दबोधः स्यादेव, अत्र हेतुमाह–

बोधदशायाम् 'पुरुषो न राज्ञः' इत्यादिवाक्यादपि शाब्दबोधापत्तेः–स्वत्वाभावबुद्धौ स्वत्वसंसर्गकज्ञानस्य विरोधित्वे मानाभावात् ।

वृत्त्यनियामकसंबन्धस्याभावप्रतियोगितावच्छेदकत्वेपि 'राज्ञः पुरुषः' इत्यादौ राजस्वत्वादेः प्रकारताभ्युपगमः समुचितः, अन्यथा– तादृशसमभिव्याहारज्ञानघटितशाब्दसामग्रीकाले 'राजस्वत्वाभाववान् पुरुषः सुन्दरः' इत्याकारकवि

---

स्वत्वाभावेति, यथा 'घटवद् भूतलम्' 'पटाभाववद् भूतलम्', इतिवाक्यद्वयजन्यज्ञानयोः परस्परं विरोधो भिन्नविषयत्वात् समानप्रकारकसमानसंसर्गकज्ञानस्यैव विरोधित्वात् तथा स्वत्वाभावबुद्धौ=आश्रयतासंबन्धावच्छिन्नस्वत्वत्वावच्छिन्नप्रतियोगिताकाभावबुद्धौ, 'राज्ञः पुरुषः' इत्यत्र हि तव मते स्वत्वसंसर्गको बोधो भवति– 'स्वत्वसंबन्धेन राजवान् पुरुषः' इति. 'पुरुषो न राज्ञः' इत्यत्र च तव मते स्वत्वस्य प्रकारत्वमेव– 'आश्रयतासंबन्धेन स्वत्वाभाववान् पुरुषः' इति बोधः संसर्गप्रकारयोश्च परस्परं भेदेनोक्तबोधयोरपि भेदात् 'राज्ञः पुरुषः' इत्यत्र संसर्गभूतस्वत्वसत्त्वस्य प्रतीयमानत्वात् 'पुरुषो न राज्ञः' इत्यत्र च प्रकारीभूतस्वत्वासत्त्वस्य प्रतीयमानत्वात् परस्परं प्रतिबध्यप्रतिबन्धकभावो न स्यादिति 'राज्ञः पुरुषः' इतिवाक्यजन्यबोधकालेपि 'पुरुषो न राज्ञः' इतिप्रयोगापत्तिः स्यादेव तत्तु न युक्तमित्यर्थः ।

ननु वृत्त्यनियामकसंबन्धस्य प्रतियोगितावच्छेदकत्वं न भवतीति नात्र श्रुतिरस्ति येन 'पुरुषो न राज्ञः' इत्यत्र वृत्त्यनियामकस्य स्वत्वस्य पुरुषे राजाभावप्रतियोगितावच्छेदकसंबन्धत्वं न स्यात्तथा च 'पुरुषो न राज्ञः' इत्यत्र स्वत्वस्यैवाभावप्रतियोगितावच्छेदकत्वेन संसर्गत्वमेवेति नोक्तवैजनानुभवस्यापलापापत्तिस्तथा च वृत्त्यनियामकस्यापि स्वत्वस्य प्रतियोगितावच्छेदकसंबन्धत्वस्वीकारेण 'पुरुषो न राज्ञः' इत्यस्य स्वत्वसंबन्धेन राजाभाववान् पुरुष इति बोधः 'राज्ञः पुरुषः' इत्यस्य च स्वत्वसंबन्धेन राजवान् पुरुष इतिबोधः. अनयोश्च बोधयोर्भावाभावविषयकत्वेन परस्परविरोधात् 'राज्ञः पुरुषः' इतिवाक्यजन्याऽप्रामाण्यज्ञानानास्कन्दितबोधदशायां न 'पुरुषो न राज्ञः' इतिवाक्यस्य शाब्दबोधापत्तिः प्रयोगापत्तिश्च– स्वत्वसंसर्गकराजाभाववत्त्वबुद्धिं प्रति स्वत्वसंसर्गकराजवत्त्वबुद्धेः प्रतिबन्धकत्वादित्येवमुक्तदोषद्वयस्य परिहारमभ्युपगम्यापि संसर्गतायां दोषमाह– वृत्त्यनियामकेति, वृत्त्यनियामकस्य स्वत्वस्याभावप्रतियोगितावच्छेदकसंबन्धत्वस्वीकारेपि तस्य स्वत्वस्य प्रकारत्वमेव युक्तं न संसर्गत्वमित्यर्थः । विपक्षे बाधकमाह– अन्यथेति विभिन्नविषयकप्रत्यक्षं प्रति शाब्दबोधसामग्र्याः प्रतिबन्धकत्वमुभयवादिसिद्धमस्ति. 'राज्ञः पुरुषः' 'राजस्वत्वाभाववान् पुरुषः सुन्दरः' इतिज्ञानयोः परस्परं विभिन्नविषयत्वमप्यस्ति 'राजस्वत्वाभाववान् पुरुषः सुन्दरः' इति च राजस्वत्वाभावविशिष्टे पुरुषे सुन्दरत्ववैशिष्ट्यमिति विशिष्टवैशिष्ट्यावगाहि प्रत्यक्षम्, तत्र तादृशसमभिव्याहारज्ञानघटितसामग्रीकाले=' राज्ञः पुरुषः ' इत्याकारषष्ठ्यन्तराजपदप्रथमान्तपुरुषपदसमभिव्याहारज्ञानघटितयोग्यतासत्तिज्ञानादिरूपशाब्दबोधसामग्रीकाले'राजस्वत्वाभाववान् पुरुषः सुन्दरः' इत्याकारकविशिष्टवैशिष्ट्यावगाहिप्रत्यक्षं नेष्टमिति तत्

**शिष्टवैशिष्ट्यावगाहिप्रत्यक्षवारणाय तत्र तादृशसामग्र्याः प्रतिबन्धकताकल्पनाधिक्येन गौरवात् । अस्मन्मते तादृशसमभिव्याहारघटितसामग्र्याः ' राजस्वत्वाभाववान् पुरुषः ' इत्यादिबाधाभावघटिततया तत्सत्त्वे विशेष्यतावच्छेदकादिप्रकारकनिश्चयरूपकारणविरहादेव तथाविधविशिष्टवैशिष्ट्यावगाहिप्रत्यक्षोत्पत्त्यऽसंभवेन तादृशसामग्र्यास्तत्र प्रतिबन्धकत्वस्याऽकल्पनात् ।**

---

णाय तत्र=उक्तविशिष्टवैशिष्ट्यावगाहिप्रत्यक्षे=उक्तविशिष्टवैशिष्ट्यावगाहिप्रत्यक्षं प्रति तादृशसामग्र्याः=' राज्ञः पुरुषः ' इत्याकारकषष्ठ्यन्तराजपदप्रथमान्तपुरुषपदसमभिव्याहारज्ञानघटितयोग्यतासत्तिज्ञानादिरूपशाब्दबोधसामग्र्याः प्रतिबन्धकत्वकल्पनाधिक्येन संसर्गतामते गौरवम् । उक्तशाब्दबोधप्रत्यक्षयोर्विभिन्नविषयकत्वेपि परस्परं विरोधो नास्ति यतः— 'राज्ञः पुरुषः' इत्यनेन स्वत्वसंबन्धेन राजवान् पुरुष इतिबोधो जायते प्रत्यक्षं च ' राजस्वत्वाभाववान् पुरुषः सुन्दरः ' इत्याकारकमिति उक्तशाब्दबोधस्यापि सामग्री संपन्ना उक्तप्रत्यक्षस्यापि सामग्री संपन्नेति तत्र तत्कार्यभूतशाब्दबोधप्रत्यक्षयोरापत्तिः समानबलत्वेन प्राप्तेत्युक्तप्रत्यक्षवारणाय ' राज्ञः पुरुषः ' इत्यत्रत्यशाब्दसामग्र्याः प्रतिबन्धकत्वं संसर्गतावादिना कल्पनीयमितिगौरवम् । यद्युक्तशाब्दबोधप्रत्यक्षयोः परस्परं विरोधः स्यात्तदा शाब्दबोधसामग्र्याः प्राबल्येन प्रत्यक्षसामग्रीसंत्तिरेव न स्यादिति प्रत्यक्षकारणाभावादेव प्रत्यक्षं स्वयमेव निवर्तेतेति तद्वारणाय शाब्दसामग्र्याः प्रतिबन्धकत्वकल्पनं न स्यादपि न चैवमस्ति संसर्गतामते उक्तशाब्दबोधप्रत्यक्षयोः परस्परं विरोधाभावादित्यर्थः ।

नन्विदं गौरवं प्रकारतामतेपि स्यादित्याशङ्क्य प्रकारतावादी स्वमते उक्तगौरवाभावमुपपादयति— अस्मन्मते इति; स्वत्वस्य प्रकारतास्वीकारे तु 'राज्ञः पुरुषः' इत्यनेन राजनिरूपितस्वत्ववान् पुरुष इतिशाब्दबोधो जायते इति शाब्दबोधे राजस्वत्ववत्त्वस्य विषयत्वाद् उक्तविशिष्टवैशिष्ट्यावगाहिप्रत्यक्षे च राजस्वत्वाभाववत्त्वस्य विषयत्वादुक्तशाब्दबोधप्रत्यक्षयोः परस्परं विरोधोस्त्येव. अथ च ' राज्ञः पुरुषः ' इतिवाक्यजन्यशाब्दबोधसामग्री योग्यतारूपेण ' राजस्वत्वाभाववान् पुरुषः ' इत्याकारकबाधस्याभावेन घटितास्ति तथा च तत्सत्त्वे=' राजस्वत्वाभाववान् पुरुषः ', इत्याकारको यो बाधस्तदऽभावघटितषष्ठ्यन्तराजपदप्रथमान्तपुरुषपदसमभिव्याहारज्ञानघटितयोग्यताज्ञानादिरूपसामग्रीसत्त्वे, ' राजस्वत्वाभाववान् पुरुषः सुन्दरः ' इत्याकारकविशिष्टवैशिष्ट्यप्रत्यक्षं प्रति च तद्विशेषणीभूतस्य ' राजस्वत्वाभाववान् पुरुषः ' इत्याकारकविशिष्टस्य यज्ज्ञानं तस्य कारणत्वमस्ति विशेष्यतावच्छेदकस्य राजस्वत्वाभावस्य चात्र निश्चयो नास्त्येव शाब्दसामग्र्याः ' राजस्वत्वाभाववान् पुरुषः ' इत्याकारकबाधस्याभावेन घटितत्वात् तथा चोक्तप्रत्यक्षकारणस्य ' राजस्वत्वाभाववान् पुरुषः ' :इत्याकारकस्य विशेष्यतावच्छेदकप्रकारकनिश्चयस्याभावादेवोक्तविशिष्टवैशिष्ट्यावगाहिप्रत्यक्षस्योत्पत्तिः स्वयमेव न संभवतीति नोक्तप्रत्यक्षं प्रत्युक्तशाब्दबोधसामग्र्याः प्रतिबन्धकत्वं कल्पनीयमिति न तत्कल्पनाप्रयुक्तं प्रकारतामते गौरवमित्यर्थः । कारण-

अन्यादृशप्रत्यक्षस्थलीयप्रतिबन्धकतया च न त्वन्मते निर्वाहः- अन्यत्रान्यविधप्रत्यक्षेच्छानामुत्तेजकतया तादृशेच्छायामसत्यां चोपदर्शितविशिष्टवैशिष्ट्यबोधत्वप्रकारकेच्छाबलादुपदर्शितविशिष्टवैशिष्ट्यबोधोपपत्तयेऽन्यादृशाविषयताया एव प्रतिबध्यतावच्छेदकत्वोपगमावश्यकत्वात् ।

---

सत्त्वे एव कार्यसत्त्वसंभवादुक्तप्रत्यक्षकारणाभावे उक्तप्रत्यक्षोत्पत्त्यऽसंभवः ।। तादृशसमभिव्याहारघटितसामग्र्याः= ' राज्ञः पुरुषः ' इतिषष्ठ्यन्तराजपदप्रथमान्तपुरुषपदसमभिव्याहारघटितसामग्र्याः । तथाविधम्=' राजस्वत्वाभाववान् पुरुषः सुन्दरः ' इत्याकारकम् । तादृशसामग्र्याः=' राज्ञः पुरुषः ' इतिशाब्दबोधसामग्र्याः । तत्र=उक्तप्रत्यक्षे=उक्तप्रत्यक्षं प्रति ।

ननु विभिन्नविषयकप्रत्यक्षं प्रति शाब्दबोधसामग्र्याः प्रतिबन्धकत्वं क्लृप्तमेवास्तीति ' राजस्वत्वाभाववान् पुरुषः सुन्दरः ' इत्याकारकप्रत्यक्षं प्रति ' राज्ञः पुरुषः ' इत्याकारकशाब्दबोधसामग्र्या इदानीं नूतनप्रतिबन्धकत्वकल्पनापत्तिरित्याशङ्कयाह- अन्यादृशेति । अन्यादृशप्रत्यक्षस्थलीयप्रतिबन्धकतया=घटादिप्रत्यक्षनिष्ठप्रतिबध्यतानिरूपितेन ' राज्ञः पुरुषः ' इतिशाब्दबोधसामग्रीनिष्ठेन प्रतिबन्धकत्वेन त्वन्मते=संसर्गतामते नात्र निर्वाहः संभवति । अत्रेदमाह- अन्यत्रेति, अयं भावः- विभिन्नविषयकप्रत्यक्षं प्रति शाब्दबोधसामग्र्याः प्रतिबन्धकत्वमस्त्येव किं तु यदि प्रत्यक्षं मे जायतामित्याकारा प्रत्यक्षेच्छा जायते तदा तु प्रत्यक्षमेव भवति इच्छाया उत्तेजकत्वाद् यथा दाहप्रतिबन्धकमणौ सत्यामप्युत्तेजकमणिसंनिधाने दाहो भवति तथा च यदा राजपुरुषविषयकस्य ' राज्ञः पुरुषः ' इतिशाब्दबोधस्य सामग्री प्राप्ता घटविषयकस्य च प्रत्यक्षस्य सामग्री प्राप्ता तत्राऽन्यविधप्रत्यक्षेच्छानाम्=घटप्रत्यक्षं मे जायतामित्याकारकेच्छाया उत्तेजकतया घटप्रत्यक्षं जायते, यदीदृशीच्छा न भवति किं तु ' राजस्वत्वाभाववान् पुरुषः सुन्दरः' इतिविशिष्टवैशिष्ट्यावगाहिप्रत्यक्षत्वप्रकारकेच्छा जायते तदोक्तस्य ' राजस्वत्वाभाववान् पुरुषः सुन्दरः ' इत्याकारकविशिष्टवैशिष्ट्यप्रत्यक्षस्योपपत्तये=उत्पत्त्युपपत्तये अन्यादृशविषयतायाः=घटादिप्रत्यक्षनिष्ठाया घटादिप्रत्यक्षविषयकेच्छानिरूपिताया एव विषयतायाः प्रतिबध्यतावच्छेदकत्वं स्वीकार्यम् । घटादिप्रत्यक्षे विषयतापि वर्तते प्रतिबध्यत्वमपि वर्तेत इति प्रतिबध्यतावच्छेदकत्वं विषयताया ज्ञेयम् ।

अर्थात्- ' राज्ञः पुरुषः ' इत्यादिशाब्दबोधसामग्र्यां सत्यामपि घटप्रत्यक्षसामग्र्यां सत्यां यदि घटप्रत्यक्षेच्छा जायते तदा घटप्रत्यक्षं जायते शाब्दबोधो न जायते किं तु तदापि घटप्रत्यक्षमेव जायते पटादिप्रत्यक्षं तु नैव जायते तथा च घटप्रत्यक्षेच्छाविरहविशिष्टशाब्दबोधसामग्र्या घटप्रत्यक्षं प्रति प्रतिबन्धकत्वं घटप्रत्यक्षस्य च प्रतिबध्यत्वम्, पटप्रत्यक्षेच्छाविरहविशिष्टशाब्दबोधसामग्र्याः पटप्रत्यक्षं प्रति प्रतिबन्धकत्वं पटप्रत्यक्षस्य च प्रतिबध्यत्वम्, इत्येवं पृथक् पृथगेव विशिष्य प्रतिबध्यप्रतिबन्धकभावो वक्तव्य इति ' राजस्वत्वाभाववान् पुरुषः सुन्दरः ' इत्याकारकप्रत्यक्षेच्छाविरहविशिष्टशाब्दबोधसामग्र्या एतत्प्रत्यक्षं प्रति प्रतिबन्धकत्वं एतत्प्रत्यक्ष

न च स्वत्वादेः प्रकारतामतेपि स्वत्वादिसंबन्धावच्छिन्नप्रतियोगिताकराजाद्यभावविशिष्टपुरुषादिवैशिष्ट्यबोधे तथाविधसामग्र्याः प्रतिबन्धकताधिक्यन गौरवम्, तत्संसर्गतामते तादृशसामग्र्याः स्वत्वादिसंबन्धावच्छिन्नप्रतियोगिताकराजाद्यभाववत्तानिश्चयाभावघटिततया तत्सत्त्वे कारणविरहादेव तथाविधप्रत्यक्ष-

---

प्रतिबध्यत्वमिति पृथगेव प्रतिबध्यप्रतिबन्धकभावे वक्तव्ये नान्यादृशप्रत्यक्षस्थलीयप्रतिबन्धत्वेन त्वन्मते निर्वाह इत्यत्र नवीनप्रतिबध्यप्रतिबन्धकभावकल्पनया त्वन्मते गौरवमस्त्येव। प्रकातामते त्वत्र शाब्दबोधसामग्र्याः प्रतिबन्धकत्वकल्पनाभावः प्रथममेव प्रदर्शितः।

उपदर्शितविशिष्टवैशिष्ट्यबोधत्व ( प्रत्यक्षत्व ) प्रकारकेच्छाबलादुपदर्शितविशिष्टवैशिष्ट्यबोधोत्तये अन्यत्रान्यविधप्रत्यक्षेच्छानामुत्तेजकतया तादृशेच्छायामसत्यां चान्यादृशविषयताया एव तिबध्यतावच्छेदकत्वोपगमावश्यकत्वादित्यन्वयः । घटप्रत्यक्षेच्छाया घटप्रत्यक्षमात्रोत्तेजकत्वं वति न तु पटादिप्रत्यक्षोत्तेजकत्वमपि तथा चोक्तवैशिष्ट्यप्रत्यक्षेच्छायां सत्यां घटप्रत्यक्षेच्छायां ऽसत्याम् उक्तवैशिष्ट्यप्रत्यक्षमेव भवति न घटप्रत्यक्षमिति घटप्रत्यक्षस्य प्रतिबध्यत्वं घटत्यक्षनिष्ठविषयतायाश्च प्रतिबध्यतावच्छेदकत्वं न तूक्तवैशिष्ट्यप्रत्यक्षस्य प्रतिबध्यत्वं तन्निष्ठविषययाश्च प्रतिबध्यतावच्छेदकत्वमिति स्वीकार्यम्. तथा चात्र पृथगेव प्रतिबध्यप्रतिबन्धकभावापत्त्या सर्गतामते गौरवमनिवार्यम् ।

संसर्गतावादी प्रतिबन्द्या प्रकारतामते दोषमुपपादयति— न चेति, यथा मम संसर्गतावान: 'राजस्वत्वाभाववान् पुरुषः सुन्दरः' इत्याकारकविशिष्टवैशिष्ट्यावगाहिप्रत्यक्षं प्रति राज्ञः पुरुषः' इत्याकारकशाब्दसामग्र्याः पृथक् प्रतिबन्धकत्वकल्पनापत्त्या गौरवमस्ति या तव प्रकारतावादिनोपि स्वत्वसंबन्धावच्छिन्नप्रतियोगिताको यो राजाभावस्तद्विशिष्टे पुरुषे न्दरत्ववैशिष्ट्यावगाहिनम्='स्वत्वसंबन्धेन राजाभाववान् पुरुषः सुन्दरः' इत्याकारकविशिवैशिष्ट्यावगाहिनं प्रत्यक्षं प्रति तथाविधसामग्र्याः='राज्ञः पुरुषः' इत्याकारकशाब्दबोसामग्र्याः पृथगेव प्रतिबन्धकत्वकल्पनापत्त्या गौरवमस्त्येवेति साम्यम् । मम संसर्गतामते तु त्र प्रतिबन्धकत्वकल्पनापत्तिरित्याह— तत्संसर्गतामत इति । तत्संसर्गतामते=स्वत्वस्य संसर्गताते तु 'राज्ञः पुरुषः' इत्यनेन 'स्वत्वसंबन्धेन राजवान् पुरुषः' इत्येव बोधो जायते एतच्छाबोधं प्रति च 'स्वत्वसंबन्धेन राजाभाववान् पुरुषः' इत्येव बाधोस्ति, बोधसामग्र्याश्च बाधावघटितत्वमपेक्ष्यते एवेति तादृशसामग्र्याः='राज्ञः पुरुषः' इत्याकारकशाब्दबोधसामग्र्याः त्वादिसंबन्धावच्छिन्नप्रतियोगिताकराजाद्यभाववत्तानिश्चयाभावघटिततया='स्वत्वसंबन्धेन राजाभाववान् पुरुषः' इत्याकारकबाधनिश्चयस्याभावेन घटिततया तत्सत्त्वे='राज्ञः पुरुषः' इत्याकाशाब्दबोधसामग्र्या उक्तबाधाभावघटितायाः सत्त्वे कारणविरहादेव='स्वत्वसंबन्धेन राजाभावन् पुरुषः सुन्दरः' इत्याकारकवैशिष्ट्यप्रत्यक्षं प्रति 'स्वत्वसंबन्धेन राजाभाववान् पुरुषः' याकारकविशिष्टविशेषणज्ञानस्य कारणत्वमस्ति तत्तु नास्ति उक्तशाब्दबोधसामग्र्या एतद्विशिष्टशेषणज्ञानाभावघटितत्वादिति कारणाभावात्स्वयमेव तथाविधप्रत्यक्षस्य='स्वत्वसंबन्धेन राजामा-

वारणसंभवादिति वाच्यम्, मन्मते तादृशप्रत्यक्षं प्रति तथाविधसामग्र्याः प्रति न्धकताधिक्येपि निरूपितत्वादिसंबन्धावच्छिन्नप्रतियोगिताकराजाद्यभावविशि ष्टस्वत्वादिवैशिष्ट्यबोधे तथाविधसामग्र्याः प्रतिबन्धकताऽकल्पनेन तदंशे स म्यात्, तथा च पूर्वोक्तराजस्वत्वाभाववान् पुरुषः सुन्दर इत्यादिविशिष्टवैशि ष्ट्यप्रत्यक्षं प्रति 'राज्ञः पुरुषः' इत्यादिसामग्र्याः प्रतिबन्धकत्वकल्पनं संसर्गत वादिनां मतेऽधिकमिति।

न च स्वत्वादेः प्रकारतामते घटप्रत्यक्षादिकं प्रति तादृशसामग्रीप्रतिबन्ध

---

ववान् पुरुषः सुन्दरः ' इति प्रत्यक्षस्य वारणसंभवात्=अनुत्पत्तिसंभवात् न शाब्दबोधसाम प्रतिबन्धकत्वकल्पनापत्तिः। यद्युक्तप्रत्यक्षोत्पत्तिः संभवेत् तदोक्तप्रत्यक्षं प्रति शाब्दसामग्र्याः बन्धकत्वकल्पनापत्तिः स्यादपि नैवमस्तीत्यर्थः।

प्रकारतावादी प्रत्युत्तरमाह— मन्मत इति, उक्तरीत्या प्रकारतामते तादृशप्रत्यक्षं प्रति= त्वसंबन्धेन राजाभाववान् पुरुषः सुन्दरः ' इति प्रत्यक्षं प्रति तथाविधसामग्र्याः='राज्ञः पु इति शाब्दबोधसामग्र्याः प्रतिबन्धकत्वाधिक्येपि निरूपितत्वसंबन्धावच्छिन्नप्रतियोगिताकरा भावविशिष्टस्वत्वादिवैशिष्ट्यबोधे='निरूपितत्वसंबन्धेन राजाभाववत्स्वत्वं प्रमेयम् ' इति नि त्वसंबन्धेन राजाभावविशिष्टे स्वत्वे प्रमेयत्ववैशिष्ट्यावगाहिप्रत्यक्षं प्रति तथाविधसामग्र्याः= पुरुषः ' इति शाब्दसामग्र्याः प्रतिबन्धकत्वकल्पनापत्तिर्नास्ति यतः— ' राज्ञः पुरुषः ' प्रकारतामते स्वत्वस्याश्रयतासंबन्धेन पुरुषेऽन्वयः स्वत्वे च निरूपितत्वसंबन्धेन राजान्वयो निरूपितत्वसंबन्धेन राजविशिष्टं स्वत्वं पुरुषवृत्तित्वेन भासते निरूपितत्वसंबन्धेन राजविशिष्ट ज्ञानस्य च ' निरूपितत्वसंबन्धेन राजाभाववत्स्वत्वम् ' इतिज्ञानमेव बाधः 'राज्ञः पुरुषः' शाब्दसामग्री चोक्तबाधाभावेन घटितास्ति. ' निरूपितत्वसंबन्धेन राजाभाववत्स्वत्वं प्रमे इति प्रत्यक्षे च 'निरूपितत्वसंबन्धेन राजाभाववत्स्वत्वम्' इतिज्ञानं कारणं तच्च नास्तीति णविरहात्स्वयमेव ' निरूपितत्वसंबन्धेन राजाभाववत्स्वत्वं प्रमेयम् ' इति प्रत्यक्षस्योत्पत्तिर्न वतीति नेदृशप्रत्यक्षं प्रति शाब्दसामग्र्याः प्रतिबन्धकत्वकल्पनापत्तिरिति तदंशे साम्यात् तव ' स्वत्वसंबन्धेन राजाभाववान् पुरुषः सुन्दरः ' इति प्रत्यक्षं प्रति शाब्दसामग्र्याः प्रति कत्वकल्पनापत्तिर्नास्ति मम चास्ति तथा ' निरूपितत्वसंबन्धेन राजाभाववत्स्वत्वं प्रमेयम् ' प्रत्यक्षं प्रति शाब्दसामग्र्याः प्रतिबन्धकत्वकल्पनापत्तिर्मम नास्ति तव चास्तीत्येतदंशे साम साम्येपि 'राजस्वत्वाभाववान् पुरुषः सुन्दरः ' इति प्रत्यक्षं प्रति शाब्दासामग्र्याः प्रतिबन्ध कल्पनापत्तिर्मम नास्ति तव त्वस्त्येवेत्येतत्प्रयुक्तं गौरवं तव मतेऽधिकमेवेत्याह— तथा चेति।

पुनः संसर्गतावादी प्रकारतामते गौरवं प्रदर्शयति— न चेति। स्वत्वादेः प्रकारत्वस रेऽनुपस्थितस्य प्रकारत्वासंभवात् ङसादिपदेनोपस्थितिः स्वीकार्या। शाब्दसामग्र्याः प्रतिब शाब्दसामग्रीघटकसर्वेषामेव पदार्थानां प्रतिबन्धकत्वं प्राप्नोतीति 'राज्ञः पुरुषः' इति वाक्य

तायां विभक्तिजन्यस्वत्वाद्युपस्थितिनिवेशाधिक्येन 'राजस्वत्वाभाववान् पुरुषः' इत्यादिबाधाद्यभावनिवेशाधिक्येन च गौरवम्, अस्मन्मते तादृशोपस्थितितथाविधबाधाभावादीनां तथाविधवाक्यजन्यशाब्दबोधं प्रत्यऽहेतुतया तादृशवाक्यघटितसामग्रीप्रतिबन्धकतायां तेषामनिवेशादितिवाच्यम्, भवन्मतेपि 'स्वत्व-

---

ाब्दसामग्रीघटकत्वेन राजपदजन्यराजोपस्थितेर्ङसपदजन्यस्वत्वोपस्थितेः पुरुषपदजन्यपुरुषोपस्थिश्च प्रतिबन्धकत्वं प्राप्तं तथा बाधाभावरूपयोग्यताज्ञानस्यापि शाब्दसामग्रीघटकत्वेन 'निरूपित्वसंबन्धेन राजाभाववत्स्वत्वम्' इत्याकारको यो बाधस्तदभावज्ञानस्यापि प्रतिबन्धकत्वम् 'आयत्वसंबन्धेन राजस्वत्वाभाववान् पुरुषः' इत्याकारकश्च यो बाधस्तदभावज्ञानस्यापि प्रतिबन्धत्वं प्राप्तमिति उपस्थितित्रयस्य बाधाभावद्वयस्य च प्रत्यक्षप्रतिबन्धकत्वं प्राप्तं मिलित्वा पञ्चानां दार्थानां प्रकारतामते प्रतिबन्धकत्वं प्राप्नोतीति गौरवमित्यर्थः । राजपदजन्यराजोपस्थितेः रुषपदजन्यपुरुषोपस्थितेश्च प्रतिबन्धकत्वं तु संसर्गतावादेप्यस्त्येव ङसपदजन्यस्वत्वोपस्थितेः प्रतिन्धकत्वं नास्ति शाब्दबोधे स्वत्वोपस्थित्यपेक्षाभावादनुपस्थितस्यापि संसर्गतया भानसंभवादिति कारतामते यदधिकं स्वत्वोपस्थितेः प्रतिबन्धकत्वं तदेव प्रदर्शितम्— विभक्तीति । संसर्गतामतेपि राजाभाववान् पुरुषः' इत्याकारको यो बाधस्तदभावस्य कारणत्वेन प्रत्यक्षप्रतिबन्धकत्वमयेवेति प्रकारतामते यदधिकं बाधाभावस्य प्रतिबन्धकत्वं तदेव प्रदर्शितम्— राजस्वत्वाभाववाति । तथा च प्रकारतामते पञ्चानां पदार्थानां प्रत्यक्षप्रतिबन्धकत्वं प्राप्तम्. संसर्गतामते च विधोपस्थितेरेकविधबाधाभावस्य च प्रत्यक्षप्रतिबन्धकत्वेन त्रयाणामेव पदार्थानां प्रतिबन्धकत्वं प्नोतीति विवेकः । संसर्गतावादी स्वमते लाघवं प्रदर्शयति— अस्मन्मत इति । संसर्गतावादे 'राज्ञः पुरुषः' इतिवाक्यात् 'स्वत्वसंबन्धेन राजवान् पुरुषः' इति बोधस्वीकाराद् एतधं प्रति राजपदजन्यराजोपस्थितेः पुरुषपदजन्यपुरुषोपस्थितेः 'स्वत्वसंबन्धेन राजाभाववान् रुषः' इत्याकारकबाधस्याभावस्य च कारणत्वमस्तीति प्रत्यक्षं प्रत्येतत्पदार्थत्रयस्यैव प्रतिबन्धत्वं प्राप्नोति, तादृशोपस्थितेः=ङसपदजन्यस्वत्वोपस्थितेः तथाविधबाधाभावस्य='राजस्वत्वाववान् पुरुषः' इत्याकारकबाधस्याभावस्य च तथाविधवाक्यजन्यशाब्दबोधं प्रति='राज्ञः रुषः' इति वाक्यजन्यशाब्दबोधं प्रति कारणत्वाभावात् प्रत्यक्षप्रतिबन्धकत्वकल्पनापत्तिर्नाीति लाघवम् । तादृशवाक्येति—' राज्ञः पुरुषः ' इत्येतद्वाक्यघटित ( एतद्वाक्यसमभिव्यारघटित ) सामग्रीनिष्ठप्रतिबन्धकतायां तेषाम्=स्वत्वोपस्थितेः 'राजस्वत्वाभाववान् पुरुषः' याकारकबाधस्याभावस्य चानिवेशादित्यर्थः ।

प्रकारतावादी प्रत्युत्तरमाह— भवन्मतेपीति, यथा प्रकारतामते उक्तरीत्या पञ्चपदार्थानां प्रत्यप्रतिबन्धकत्वकल्पनारत्या गौरवं तथा संसर्गतामतेपि प्रतिबन्धकत्वकल्पनाधिक्येनास्त्येव गौरवति तात्पर्यम् । एतदेवोपपादयति— स्वत्वेत्यादिना । तद्वत्ताबुद्धिं प्रति तदभाववत्ताज्ञानस्य तद-

**संबन्धावच्छिन्नप्रतियोगिताकराजाभावव्याप्य राजस्वत्वाभाववान् पुरुषः' इत्यां निश्चयस्य तदभावव्याप्यवत्तानिश्चयमुद्रया ताद्दशवाक्यजन्यशाब्दधीविरोधित ताद्दशनिश्चयाभावस्य तथाविधसामग्रीप्रतिबन्धकतायां निवेशस्याधिक्येन लाव नवकाशात् । मन्मते 'राजस्वत्वाभाववान् पुरुषः' इत्यादिबाधकाभावानिवे ताद्दशनिश्चयकाले प्रत्यक्षाभ्युपपत्तेस्तदभावानिवेशात् ।**

---

भावव्याप्यवत्ताज्ञानस्य च प्रतिबन्धकत्वं सर्वसंमतं यथा वह्निमानिति ज्ञानं प्रति वह्न्यभावनि वह्न्यऽभावव्याप्यजलवत्तानिश्चयस्य च प्रतिबन्धकत्वमस्ति तथा संसर्गतामते 'राज्ञः पुरुषः' वाक्यजन्यम् 'स्वत्वसंबन्धेन राजवान् पुरुषः' इतिशाब्दबोधं प्रति स्वत्वसंबन्धावच्छिन्न योगिताकराजाभावनिश्चयस्य तथा स्वत्वसंबन्धावच्छिन्नप्रतियोगिताकराजाभावव्याप्यराजस्व वनिश्चयस्य च प्रतिबन्धकत्वमस्त्येव यत्र स्वत्वसंबन्धेन पुरुषादौ राजा वर्तते तत्र राजस्व वर्तते तथा यत्र स्वत्वसंबन्धेन राजाभावो वर्तते तत्र राजस्वत्वाभावोऽपि वर्तते एवेति सम्न स्वत्वसंबन्धेन राजाभावस्य राजस्वत्वाभावो व्याप्योऽस्ति तथा च 'स्वत्वसंबन्धेन राजा पुरुषः' इत्याकारकबाधनिश्चयाभावस्य 'राज्ञः पुरुषः' इतिवाक्याजायमानशाब्दसामग्र्या शात् 'स्वत्वसंबन्धेन राजाभाववान् पुरुषः सुन्दरः' इति प्रत्यक्षस्य कारणाभावादेवोत्पत्त वात् शाब्दसामग्र्याः प्रतिबन्धकत्वाभावेऽपि 'स्वत्वसंबन्धावच्छिन्नप्रतियोगिताकराजाभाव स्वत्वाभाववान् पुरुषः' इत्याकारकप्रत्यक्षं प्रति तु शाब्दसामग्र्याः प्रतिबन्धकत्वमस्त्येवेति बन्धकत्वकल्पनापत्त्या गौरवमित्यर्थः । मुद्रा=रीतिः । 'स्वत्वसंबन्धावच्छिन्नप्रतियोगि जाभावव्याप्यस्वत्वाभाववान् पुरुषः' इति निश्चयस्य तदभावव्याप्यवत्तानिश्चयमुद्रया= स्व न्धेन राजवत्त्वाभावव्याप्यराजस्वत्वाभाववत्तानिश्चयत्वरूपेण ताद्दशवाक्यजन्यशाब्दधीविरोधि 'राज्ञः पुरुषः' इतिवाक्यजन्यशाब्दबोधविरोधित्वेन ताद्दशनिश्चयाभावस्य= 'स्वत्वसं च्छिन्नप्रतियोगिताकराजाभावव्याप्यस्वत्वाभाववान् पुरुषः' इतिनिश्चयाभावस्य तथाविध प्रतिबन्धकतायाम्='राज्ञः पुरुषः' इतिशाब्दबोधसामग्रीनिष्ठायां विभिन्नविषयकोक्तप्रत्य तिवध्यतानिरूपितप्रतिबन्धकतायां निवेशाधिक्येन लाघवाऽसंभवादित्यन्वयः ।

एतत्प्रतिबन्धकत्वकल्पनापत्तिः प्रकारतामते नास्तीत्याह— मन्मते इति । प्रकारता 'राज्ञः पुरुषः' इत्यत्र 'राजस्वत्ववान् पुरुषः' इत्येव बोधो जायते एतद्बोधे च ' त्वाभाववान् पुरुषः' इत्येव बाधोऽस्ति, अस्यैव च बाधस्य तदभावव्याप्यवत्तानिश्चयमुद्रया पुरुषः' इतिशाब्दधीप्रतिबन्धकत्वं संसर्गतामते प्रदर्शितं तत्र 'राज्ञः पुरुषः' इतिवाक्य 'राजस्वत्ववान् पुरुषः' इतिशाब्दस्य सामग्री यदा 'राजस्वत्वाभाववान् पुरुषः' इ श्चयाभावेन घटिता भवति तदा शाब्दबोध एव जायते प्रत्यक्षस्य च स्वकारणाभावादे संभवतीति न तदर्थमपि शाब्दसामग्र्याः प्रतिबन्धकत्वकल्पनापत्तिः । यदा च 'राजस्व वान् पुरुषः' इतिबाधस्य निश्चयो भवति तदा बाधाभावरूपयोग्यताज्ञानस्याभावाच्छाब्द

यत्तु 'राज्ञः पुरुषः' इत्यादौ 'राजस्वत्ववान् पुरुषः' इत्याद्यन्वयबोधोपगमे 'राजकीयं स्वत्वम्' 'राजस्वत्ववान् पुरुषः' इत्याकारकद्विविधानुमितेरेव तदतिरिक्ताविषयकत्वेन तादृशानुमितिं प्रति प्रत्येकं तादृशवाक्यघटितसामग्र्याः प्रतिबन्धकत्वद्वयम् । अस्मन्मते च तादृशानुमित्योस्तथाविधवाक्यजन्यात् 'राजकीयः पुरुषः' इत्येतादृशबोधादतिरिक्तविषयकतया तत्र तादृशसामग्र्याः प्रतिबन्धकत्वकल्पनं नास्ति– तथाविधानुमितितथाविधशाब्दसामग्र्योश्च सत्योरनुमितेरेवो-

---

ायते किं तु प्रत्यक्षाभ्युपपत्तेः=प्रत्यक्षमेव जायते प्रतिबन्धकीभूतशाब्दसामग्र्यऽभावादिति स्वीकाग तदभावाऽनिवेशात्=शाब्दसामग्र्यां ग्राह्याभावावगाहितया 'राजस्वत्वाभाववान् पुरुषः' इत्याबाधस्याभावस्य निवेशेऽपि तदभावव्याप्यवत्तामुद्रया संसर्गतावादे इव प्रकारतावादे ' राजाभावाप्यराजस्वत्वाभाववान् पुरुषः ' इतिबाधस्याभावस्य शाब्दसामग्रीनिष्ठप्रतिबन्धकतायामनिवेशाघवम्, संसर्गतामते च प्रवेशाद् गौरवमित्यर्थः ।

पुनरपि संसर्गतावादिना प्रकारतामते प्रदर्शितं दोषमनुवदति–यत्त्विति, यथा विभिन्नविषकप्रत्यक्षं प्रति शाब्दसामग्र्याः प्रतिबन्धकत्वमस्ति तथा समानविषयकानुमितिं प्रत्यपि शाब्दमग्र्याः प्रतिबन्धकत्वमस्ति विभिन्नविषयकानुमितेश्च शाब्दबोधप्रतिबन्धकत्वमस्तीत्युभयमतसिम् । तत्र प्रकारतामते ' राज्ञः पुरुषः ' इतिवाक्यात् ' राजनिरूपितस्वत्ववान् पुरुषः ' इतिब्दबोधो जायते तत्स्वीकारे, यदा ' राजकीयं स्वत्वम् ' ' राजस्वत्ववान् पुरुषः ' इत्याकारनुमितिद्वयं प्राप्नुयात् तदा ' राज्ञः पुरुषः ' इत्येतद्वाक्यघटकस्य ' राज्ञः ' इतिभागस्य राजकीयं स्वत्वम् ' इत्येवार्थः, प्रथमानुमितिरपि ' राजकीयं स्वत्वम् ' इत्येतद्रूपेत्युभयोः ानविषयत्वम्, ' राजस्वत्ववान् पुरुषः ' इति शाब्दबोधस्तत्समानविषयैव द्वितीयानुमितिः– राजस्वत्ववान् पुरुषः ' इति तथा चोक्तद्विविधानुमितेरेव=उक्तानुमितिद्वयस्यापि तदतिरिक्ताविकत्वेन=उक्तशाब्दबोधसमानविषयकत्वेन तादृशानुमितिं प्रति प्रत्येकम्=उक्तद्विविधानुमितिं येव तादृशवाक्यघटितसामग्र्याः=' राज्ञः पुरुषः ' इत्याकारकवाक्यघटकसामग्र्याः प्रतिबन्धकद्वयं कल्पनीयं प्रतिबध्यभेदेन प्रतिबन्धकताभेदादित्यर्थः । अस्मन्मते इति– संसर्गतामते च राज्ञः पुरुषः ' इतिवाक्यात् ' राजस्वत्ववान् पुरुषः ' इति शाब्दबोध एव न जायते येनोनुमितिद्वयस्य समानविषयत्वं स्यात्तेन च शाब्दसामग्र्याः प्रतिबन्धकत्वद्वयं कल्पनीयं स्यात् तु ' स्वत्वसंबन्धेन राजवान् पुरुषः ' इत्येव शाब्दबोधो जायते तदेवोक्तम्– ' राजकीयः षः ' इति, अस्य शाब्दबोधस्योक्तानुमितिद्वयस्य चातिरिक्तविषयकतया=विभिन्नविषयकत्वेनोनुमितिद्वयं प्रति शाब्दबोधसामग्र्याः प्रतिबन्धकत्वकल्पनाऽऽपत्तिर्नास्तीति लाघवम् । उक्तानुतिद्वयस्य ' राजकीयः पुरुषः ' इतिशाब्दबोधस्य च विभिन्नविषयकत्वेनानुमितिद्वयस्य शाब्दस्य च सामग्र्यां सत्यामनुमितिरेवोत्पद्यते इति कथं शाब्दसामग्र्याः प्रतिबन्धकत्वं स्यात्, शाब्दसामग्र्या अत्र प्रतिबन्धकत्वं स्यात्तदा कथमनुमितिद्वयमुत्पद्येतेत्याह– तथाविधेति ।

त्पत्तेः, अपि तु 'राजकीयः पुरुषः' इत्याकारकस्वत्वसंसर्गकैकविधानुमि प्रत्येव तादृशसामग्र्याः प्रतिबन्धकत्वमेकं कल्पनीयमिति लाघवमिति ।

तदप्यकिंचित्करम्— भवन्मते यत्र यादृशानुमितिः स्वीक्रियते अस्मन्मते तत्र तादृशानुमितेः स्वीकरणीयतयाऽनुमितौ शाब्दसामग्र्याः प्रतिबन्धकत्व स्यात्—उपदर्शितस्थले भवद्भिरनुमितिः स्वीक्रियते. अस्माभिरपि स्वीक्रि कुतः प्रतिबन्धकताद्वयकल्पनमिति । भवतापि तादृशशाब्दं प्रति तादृशानु तिद्वयसामग्रीद्वयस्य प्रतिबन्धकताया वाच्यतया साम्याच्च ।

किमिदानीं संसर्गतावादेऽनुमितिं प्रति शाब्दसामग्र्याः प्रतिबन्धकत्वं नास्त्येवेत्याशङ्क अपि त्विति, संसर्गतामते 'राज्ञः पुरुषः' इतिवाक्यात् 'राजकीयः पुरुषः' इत्येव बोधो जायते तत्समानविषया च 'राजकीयः पुरुषः' इत्येकैवानुमितिः संभवतीत्येता नुमितिं प्रत्येकमेव शाब्दसामग्र्याः प्रतिबन्धकत्वं कल्पनीयम्, न तु प्रकारतामते इव उभ प्रतिबन्धकताद्वयं कल्पनीयमिति संसर्गतामते लाघवमित्यर्थः ।

प्रकारतावादी परिहरति— तदपीति, यत्र संसर्गतावादिनाऽनुमितिः स्वीक्रियते न बोधस्तत्र प्रकारतावादिनाप्यनुमितिरेव स्वीक्रियते इत्युभयमते प्रतिबध्यप्रतिबन्धकभावः एवेत्यर्थः । एतदेव स्पष्टयति— उपदर्शितेति । उपदर्शितस्थले=' राजकीयं स्वत्वम् ' स्वत्ववान् पुरुषः ' इति स्थले । यद्युक्तानुमितिद्वयस्योत्पत्तिर्न स्वीक्रियेत तदानुमितिद्वय सति शाब्दसामग्र्याः प्रतिबन्धकत्वद्वयकल्पनापत्तिः स्यादपि नैवमस्ति तत्रोक्तानुमि स्वीकारादेवेत्याह— कुत इति । ननु किंचिद्विचार्य दोषः परिहर्तव्यः— ' राजकीयं स ' राजस्वत्ववान् पुरुषः ' इत्यनुमितिद्वयस्य ' राज्ञः पुरुषः ' इतिवाक्यजन्यस्य ' राज पुरुषः ' इतिशाब्दबोधस्य च समानविषयत्वान्नानुमितिः स्वीकर्तुं शक्यते शाब्दसामग्र्या नविषयकानुमितिं प्रति प्रतिबन्धकत्वादित्याशङ्क्य यथार्थमुत्तरमाह— भवतापीति, यथा शाब्दसामग्र्यां प्रतिबन्धकताद्वयस्य कल्पनापत्तिरुक्ता तथा तव संसर्गतामते ' राज्ञः इतिवाक्यजन्यस्य ' स्वत्वसंबन्धेन राजवान् पुरुषः ' इति शाब्दबोधस्य ' राजकीयं स ' राजस्वत्ववान् पुरुषः ' इत्युक्तानुमितिद्वयस्य च विभिन्नविषयकत्वात् शाब्दबोधं प्रति नुमितिद्वयस्य यत्सामग्रीद्वयं तस्य प्रतिबन्धकत्वं कल्पनीयमिति प्रतिबन्धकत्वद्वयकल्पना मतेऽप्यस्त्येवेति तव मम च साम्यमेव— विभिन्नविषयकशाब्दबोधं प्रत्यनुमितेः प्रतिबन्धक यवादसिद्धत्वादित्यर्थः ।

यच्च संसर्गतावादिनोक्तम्— यथा ' राज्ञः पुरुषः ' इत्यत्र ' स्वत्वसंबन्धेन राजवान् इति स्वत्वसंसर्गकभेदान्वयबोधस्तथा ' राजपुरुषः ' इत्यत्रापि ' स्वत्वसंबन्धेन राजवान् इति स्वत्वसंसर्गकभेदान्वयबोध एव स्वीकार्यो न तु राजपदस्य राजसंबन्धिनि लक्षणां ' राजसंबन्ध्यभिन्नः पुरुषः ' इत्यभेदान्वयः ( पृ. ८४ ) इति तत्परिहरति प्रकार

एवम् 'राजपुरुषः' इत्यादिसमासवाक्यात् स्वत्वसंसर्गकशाब्दबोधस्वीकारे तादृशशाब्दबोधसामग्र्याः स्वत्वसंसर्गेण राजविशिष्टपुरुषतात्पर्यज्ञानादिघटिताया भिन्नविषयकप्रत्यक्षादिकं प्रति प्रतिबन्धकत्वाधिक्येन गौरवात् तत्र राजसंबन्धिप्रकारकाभेदान्वयबोधस्वीकार एवोचितः ।

न च भवन्मतेपि तादृशाभेदान्वयबोधसामग्र्याः प्रतिबन्धकताधिक्येन गौरवमिति वाच्यम्, राजपदस्य राजसंबन्धिनि स्वारसिकलक्षणाग्रहदशायामभेदसंबन्धेन राजसंबन्धिविशिष्टपुरुषे तात्पर्यग्रहसत्त्वे भवन्मतेपि कर्मधारयत्वेनाभिमतात् तथाविधसमासवाक्यात् तादृशशाब्दबोधस्वीकारस्यावश्यकतया तादृशसामग्रीप्रतिबन्धकताया उभयमतसिद्धत्वात् ।

यत्तु— 'दधि पश्य' इत्यादौ लुप्तद्वितीयाविभक्तिस्मरणेन दधिकर्मकदर्शनबोध-

---

मिति, 'राजपुरुषः' इतिसमासे 'स्वत्वसंबन्धेन राजवान् पुरुषः' इत्येवं स्वत्वसंसर्गकान्वयबोधस्वीकारे तादृशशाब्दबोधसामग्र्याः=' राजपुरुषः ' इतिराजपदाव्यवहितोपुरुषपदसमभिव्याहारसामग्र्याः 'स्वत्वसंबन्धेन राजवान् पुरुषः' इत्येवं स्वत्वसंसर्गेण जविशिष्टो यः पुरुषस्तद्विषयकतात्पर्यज्ञानादिघटिताया विभिन्नविषयकप्रत्यक्षं प्रति प्रतिबन्धकल्पनापत्त्या गौरवम् । विभिन्नविषयकप्रत्यक्षं प्रति शाब्दसामग्र्याः प्रतिबन्धकत्वस्योभयदिसिद्धत्वात् । तस्मादेतद्गौरवपरिहाराय तत्र=' राजपुरुषः ' इतिसमासे राजपदस्य राजन्धिनि लक्षणां स्वीकृत्य ' राजसंबन्ध्यभिन्नः पुरुषः ' इत्येवं राजसंबन्धिप्रकारकाऽभेदान्वयध एवोचित इत्यर्थः ।

ननु विभिन्नविषयकप्रत्यक्षं प्रति शाब्दसामग्र्याः प्रतिबन्धकत्वेन भवन्मतेपि=प्रकारतावादेपि दृशाभेदान्वयबोधसामग्र्याः=' राजपुरुषः ' इत्यत्र ' राजसंबन्ध्यभिन्नः पुरुषः ' इत्येवं राजन्धिप्रकारकाऽभेदान्वयबोधसामग्र्या अभेदसंबन्धेन राजसंबन्धिविशिष्टपुरुषविषयकतात्पर्यनादिघटिताया विभिन्नविषयकप्रत्यक्षं प्रति प्रतिबन्धकताकल्पनापत्त्या गौरवमस्त्येवेत्याशङ्क्याह— चेति । परिहारहेतुमाह— राजपदस्येति, ' राजपुरुषः ' इत्यत्र त्वया भेदान्वये स्वीकृतेपि कस्य चिद् राजपदस्य राजसंबन्धिनि स्वारसिकलक्षाग्रहेणाऽभेदसंबन्धेन राजसंबन्धिविशिष्टे तात्पर्यग्रहो भवति तदात्र त्वया ' राजपुरुषः ' इत्यत्र कर्मधारयत्वम् ( राजसंबन्धी चासौ इति ) स्वीकृत्य तथाविधसमासवाक्यात्=' राजपुरुषः ' इतिसमासवाक्यात् तादृशब्दबोधस्य=' राजसंबन्ध्यभिन्नः पुरुषः ' इत्यऽभेदान्वयबोधस्य स्वीकार्यत्वात् ' राजपुरुषः ' त्राऽभेदान्वयबोधसामग्र्या विभिन्नविषयकप्रत्यक्षं प्रति प्रतिबन्धकत्वं यथा मम मते तथा मतेपि प्राप्तमेव किं तु तव मते ' राजपुरुषः ' इत्यत्र भेदान्वयबोधसामग्र्या अपि विभिन्नयकप्रत्यक्षं प्रति प्रतिबन्धकत्वकल्पनं कर्तव्यं तदेवाधिकं गौरवमित्यर्थः ।

पुनः परिहाराय संसर्गतावादिवचनमनुवदति— यत्त्विति, ' दधि पश्य ' इत्यत्र प्रकारताम-

वत् 'राजपुरुषः' इत्यादावपि लुप्तषष्ठीविभक्तिस्मरणेन राजसंबन्धप्रकारकभेदा-न्वयबोधनिर्वाहे राजसंबन्धिनि निरूढलक्षणां स्वीकृत्याभेदान्वयबोधोपगमो नि-रर्थकः, न च षष्ठीतत्पुरुषादिस्थलेपि लुप्तविभक्तिस्मरणे एव चेदन्वयबोधः तदा 'ऋद्धस्य राजमातङ्गाः' इत्यादिप्रयोगापत्तिः— तत्र मातङ्गादौ राजादीनाम-न्वयबोधोपपत्तये राजादिपदोत्तरषष्ठ्यादिविभक्त्यनुसंधानस्यावश्यकत्वेन समान-विभक्तिकतया राजादौ ऋद्धादिपदार्थस्याऽभेदान्वयबोधसंभवादिति वाच्यम् यतस्तत्र ऋद्धराजादीनामभेदान्वयबोधानुपपत्त्या नाभियुक्तानामऽप्रयोगः. अपि तु समासाऽघटकपदसापेक्षतया राजपदस्याऽसामर्थ्याऽतिदेशात् समासाऽसा-

तेपि दधिपदोत्तरं लुप्तविभक्तेः स्मरणं यथा भवति तेन च 'दधिकर्मकं दर्शनम्' इति भेदान्व-यश्च भवति दध्नः स्वकर्मकत्वसंबन्धेन धात्वर्थे दर्शनेऽन्वयस्वीकारात् तथा 'राजपुरुषः', अ-त्रापि लुप्तषष्ठीविभक्तिस्मरणेन राजसंबन्धप्रकारकभेदान्वयबोधनिर्वाहे='राजसंबन्धवान्=रा-जनिरूपितस्वत्ववान् पुरुषः' इत्येवं राजसंबन्धप्रकारकस्य भेदान्वयबोधस्य 'राज्ञः पुरुषः', अ-त्रेव निर्वाहे संभवति सति राजपदस्य राजसंबन्धिनि लक्षणां स्वीकृत्याऽभेदान्वयबोधस्वी-कारो व्यर्थः। एवं हि 'राज्ञः पुरुषः' 'राजपुरुषः' इति समासाऽसमासवाक्ययोरेकगत्या तु-ल्यत्वमपि स्यादित्यर्थः। ननु 'राजपुरुषः' इत्यत्रापि यदि लुप्तषष्ठीस्मरणे सत्येवान्वयबोधः तदात्र राजपदस्य स्मृतिविषयीभूतषष्ठ्यन्तत्वप्राप्त्या यथा 'ऋद्धस्य राज्ञो मातङ्गाः' इति प्र-योगो भवति तथा 'ऋद्धस्य राजमातङ्गाः' इत्यपि प्रयोगः स्यात्। अत्र हेतुमाह— तत्रेति, त्वन्म-तेन 'राजपुरुषः' इत्यत्रेव तत्र='राजमातङ्गाः' इत्यत्रापि 'स्वत्वसंबन्धेन राजवन्तो मात-ङ्गाः' इत्येवं मातङ्गेषु राजान्वयबोधोपपत्तये राजपदोत्तरं लुप्तषष्ठ्या अनुसंधाने कृते राजपदस्य ष-ष्ठ्यन्तत्वं प्राप्तमिति 'ऋद्धस्य' 'राज्ञः' इतिपदयोः समानविभक्तिकत्वापत्त्या 'नीलो घटः' इत्यत्रेवात्रापि राजपदार्थे ऋद्धपदार्थस्याऽभेदान्वयः संभवतीति 'ऋद्धस्य राजमातङ्गाः', इति प्रयोगः स्यादेव तस्मात् समासे लुप्तविभक्तिस्मरणं न युक्तं लुप्तविभक्तेरस्मरणे च 'राजमा-तङ्गाः' इत्यत्रापि राजपदस्य षष्ठ्यन्तत्वाभावेन समानविभक्तिकत्वाभावाद् ऋद्धपदार्थराजपदार्थयोर-भेदान्वयाऽसंभवात् 'ऋद्धस्य राजमातङ्गाः' इति प्रयोगापत्तिर्नास्ति. तथा च 'राजपुरुषः', इत्य-त्रापि लुप्तषष्ठीस्मरणं न युक्तमित्याशङ्क्याह— न चेति। संसर्गतावादी परिहारहेतुमाह— यत इति। तत्र='ऋद्धस्य राजमातङ्गाः' इत्यत्र यदि ऋद्धराजपदार्थयोरभेदान्वयः संभवेत्तदा 'ऋद्धस्य राजमातङ्गाः' इति प्रयोगः स्यादेवात्र च ऋद्धराजपदार्थयोरभेदान्वयबोधो नैव संभ-वतीत्यभेदान्वयबोधानुपपत्तिमुद्दिश्याऽभियुक्तानाम्=प्रामाणिकवृद्धानाम् 'ऋद्धस्य राजमातङ्गाः' इतिप्रयोगस्य परिहारो नास्ति येन त्वदुक्तरीत्या ऋद्धराजपदार्थयोरभेदान्वयापत्त्या लुप्त-विभक्तिस्मरणं न स्यात्। 'ऋद्धस्य राजमातङ्गाः' इत्यप्रयोगे हेतुमाह— अपि त्विति— "समर्थः पदविधिः" इत्यत्र समर्थः समर्थेन सह समस्यते इतिनियमेन "सापेक्षमसमर्थवद् भवति" इति नियमेन च 'ऋद्धस्य राजमातङ्गाः' इत्यत्र राजपदस्य समासाघटकऋद्धपदसापेक्षतया

त्वेन । तत्सापेक्षत्वं च= तदर्थान्वितस्वार्थपरत्वम्, स्वार्थश्च=स्वीयवृत्तिग्रहविशेष्यः । अत एव 'शरैः शातितपत्रः' 'चैत्रस्य दासभार्या' इत्यादौ न समस्यमानशातितदासपदादेः सापेक्षता— तदर्थैकदेशशातनदासत्वादावेव शरकरणकत्वचैत्रनिरूपितत्वादीनामन्वयात् । तदर्थान्वितेत्यत्राऽभेदान्वयो वा निवेशनीय इति ।

---

भावाद् मातङ्गपदेन समास एव न संभवतीति 'ऋद्धस्य राजमातङ्गाः' इत्यत्र 'राजमातङ्गाः' इति समासस्याऽसाधुत्वं स्यादित्यभिप्रायेणैवाभियुक्तानाम् 'ऋद्धस्य राजमातङ्गाः' इतिप्रयोगपरिहारोऽस्तीत्यर्थः । किं वा "सविशेषणानां वृत्तिर्न" इति नियमेन समासाघटकपदार्थस्य विशेषणत्वे तद्विशेष्यवाचकपदस्य पदान्तरेण समासो न भवतीति नियमेन 'ऋद्धस्य राजमातङ्गाः' इति प्रयोगाऽभावो विज्ञेयः । समासाघटकपदसापेक्षत्वं निरूपयति— तत्सापेक्षत्वमिति । तत्सापेक्षत्वम्=विशेषणसापेक्षत्वम् । तदर्थान्वितस्वार्थपरत्वम्=विशेषणान्वितस्वार्थबोधकत्वम्, यथा 'ऋद्धस्य राजमातङ्गाः' इत्यत्र राजपदस्य ऋद्धपदार्थान्वितराजपदार्थबोधकत्वात्सापेक्षत्वं सापेक्षत्वादसमर्थत्वमसमर्थत्वात्समासासाधुत्वम् । स्वार्थपदार्थमाह—स्वार्थश्चेति । स्वीयेति— स्वनिष्ठवृत्तिग्रहविशेष्यः स्वार्थ इत्यर्थः यथा स्वं राजपदं तन्निष्ठा या वृत्ती राजा राजपदशक्य इति तादृशवृत्तिग्रहे विशेष्यतया भासमानत्वाद् राजपदस्य राजपदार्थः स्वार्थः । अत एवेति— अत एव=समासघटकपदस्य समासाऽघटकपदवाच्यपदार्थान्वितस्वार्थपरत्वे सापेक्षत्वादेव । तथा च 'ऋद्धस्य राजमातङ्गाः' इत्यत्र समासघटकराजपदस्य स्वीयवृत्तिग्रहविशेष्यभूतराजपदार्थवाचकस्य समासाऽघटकर्द्ध(ऋद्ध) पदवाच्यार्थान्वितराजपदार्थपरत्वेन सापेक्षत्वात् समासासाधुत्वम् । 'शरैः शातितपत्रः' इत्यत्र समासघटकशातितपदस्य सापेक्षत्वं नास्ति शातितपदस्य शरकरणकत्वरूपार्थान्वितस्वार्थपरत्वाभावात्, तथा 'चैत्रस्य दासभार्या' इत्यत्रापि समासघटकदासपदस्य सापेक्षत्वं नास्ति—चैत्रनिरूपितत्वरूपार्थान्वितस्वार्थपरत्वाभावात्, तथा च नात्र समासानुपपत्तिरित्यर्थः । उक्तेहेतुमाह— तदर्थेति । तदर्थैकदेशे=शातितपदार्थैकदेशे शातने दासपदार्थैकदेशदासत्वे चैव शरकरणकत्वस्य चैत्रनिरूपितत्वस्य चान्वयात् । विनिगमनान्तरमाह— तदर्थान्वितेति, एवं च— अभेदान्वयस्वार्थपरत्वं सापेक्षत्वमिति लब्धम्—समासाऽघटकपदवाच्यार्थेन सहाऽभेदसंबन्धेनान्वितस्वार्थबोधकत्वं सापेक्षत्वमित्यर्थः । तथा च 'ऋद्धस्य राजमातङ्गाः' इत्यत्र राजपदार्थर्द्धपदार्थयोरभेदान्वनबोधे तात्पर्यसत्त्वात् सापेक्षत्वं तेन च समासासाधुत्वम् । 'शरैः शातितपत्रः' इत्यत्र तु समासाघटकपदवाच्यार्थेन शरेण समासघटकशातितपदार्थस्य नाऽभेदान्वये तात्पर्यं किं तु शराणां शातितपदार्थे स्वकरणकशातनफलशालित्वेन भेदसंबन्धेनान्वये तात्पर्यमिति नात्र सापेक्षत्वापत्तिर्येन समासाऽसाधुत्वं स्यात्, 'चैत्रस्य दासभार्या' इत्यत्र च समासाघटकचैत्रपदार्थस्य समासघटकदासपदार्थे स्वनिरूपितस्वत्वरूपभेदसंबन्धेनान्वय इति न समासानुपपत्तिरित्यर्थः ।

तदसत्– स्वारसिकलक्षणाग्रहस्थलानुरोधेन तादृशसमभिव्याहारज्ञानादेस्तथाविधबोधजनकतायाः क्लृप्तत्वात् तत्र निरूढलक्षणास्वीकारे गौरवाभावात् । य राजपदस्य राजसंबन्धिनि स्वारसिकलक्षणाग्रहस्तत्र तादृशबोधस्योभयमतसि तया तादृशसमभिव्याहारज्ञानस्य राजसंबन्ध्यऽभिन्नपुरुषबोधे कारणताय क्लृप्तत्वात् तयैव निर्वाहेण सर्वत्र लुप्तविभक्तिस्मरणकल्पने मानाभावात् ।

---

अत्र कृष्णंभट्टो यथा– " तदुक्तम्– " सविशेषणानां वृत्तिर्न वृत्तस्य विशेषणयोगो न इति, विशेषणसहितानां विशेष्याणामेव वृत्तिर्न लुप्तविशेषणानां विशेष्याणामपि तेन सवि णानां मातङ्गानां राजरूपविशेषणेन सह समास उपपन्नः । एवं वृत्तस्य विशेषणस्य वि योगो नेत्यर्थस्तेन 'सुन्दरा राजमताङ्गाः' इत्यत्र सुन्दरविशेषणस्य राजमातङ्गे विशेष्येऽन्व समासघटकेत्येतदभिप्रायकमेव । ऋद्धविशेषणयुक्तस्य विशेषणस्य राज्ञः समासरूपा वृत्तिर्न. च वृत्तस्य=समस्तस्य राज्ञो विशेषणस्य ऋद्धस्येति विशेषणयोगोपि नेति तदर्थः । तत्स तदर्थान्वितस्वार्थपरत्वम्– समासाऽघटकऋद्धपदार्थान्वितो यः स्वार्थो राजपदार्थस्तत्परं यस्य तत् तदर्थान्वितस्वार्थपरं राजपदं तत्त्वं राजपदेस्ति, स्वार्थश्च स्वीयवृत्तिग्रहविशेष्य राजपदं तच्छक्तिग्रहो ' राजा राजपदशक्यः ' इत्याकारकस्तद्विशेष्यो राजा तदर्थान्वितः राजपदार्थः स च राजपदशक्तिग्रहविशेष्य इत्यर्थकरणादेव । " " शरैः शातितपत्रश्चैत्रस्य भार्येत्यादौ न समस्यमानशातितदासपदादेः सापेक्षता तदर्थैकदेशशातनदासत्वादावेव शरक कत्वचत्रनिरूपितत्वादीनामन्वयादिति मूलम्–तत्पदं समासाऽघटकं तृतीयापदं तदर्थः शर कत्वं तदन्वितस्वार्थः शातितपदशक्तिग्रहविशेष्यं शातनकर्म पत्रादिकं न भवति किं तु शाि दार्थैकदेशशातनक्रियैव भवति शरकरणकत्ववती या शातनक्रिया तत्कर्म पत्रं यस्येत्यर्थ एवम् ' चैत्रस्य दासभर्या ' इत्यत्र तत्पदं समासाऽघटकं चैत्रस्येति षष्ठीपदं तदर्थो निरू तदन्वितः स्वार्थो दासपदशक्तिग्रहविशेष्यो दासो न भवति किं तु दासपदार्थैकदेशः सेवा चैत्रनिरूपितत्ववद्दासत्वं तद्वती भार्येत्यर्थात्. तेन न समस्यमानशातितदासपदादेः समा टकशरैरितिचैत्रस्येतिपदसापेक्षत्वं येनाऽसमर्थत्वात् समासो न स्यादित्यर्थः ।" इति ।

प्रकारतावादी परिहरति-- तदसदिति, यदा ' राजपुरुषः ' इत्यत्र कस्य चिद् राज राजसंबन्धिनि स्वारसिकलक्षणाग्रहो भवति तदा तादृशसमभिव्याहारज्ञानादेः=राजपदाव्यवहि त्तरपुरुषपदसमभिव्याहारज्ञानस्य तथाविधशाब्दबोधजनकतायाः= ' राजसंबन्ध्यभिन्नः पुरु इति बोधजनकताया उभयमतक्लृप्तत्वात् तत्र=राजसंबन्धिनि राजपदस्य निरूढलक्षणास्वी गौरवाभावात्– स्वारसिकलक्षणास्वीकारस्य गले पतितत्वादित्यर्थः । उक्तमेव विशदय यत्रेति । तत्र=स्वारसिकलक्षणाग्रहस्थले । तादृशबोधस्य=' राजसंबन्ध्यभिन्नः पुरुषः ' इति स्य । तादृशसमभिव्याहारज्ञानस्य=राजपदाव्यवहितोत्तरपुरुषपदसमभिव्याहारज्ञानस्य । तयै लक्षणयैव । सर्वत्र=' दधि पश्य ' इत्यत्रेव ' राजपुरुषः ' इत्यादौ लुप्तविभक्तिकल्पने मानाभा युक्त्यभावाचेत्यर्थः ।

न च स्वारसिकलक्षणाग्रहस्थले तत्र तादृशान्वयबोधस्योभयवादिसिद्धत्वेपि निरूढलक्षणामते संबन्धितात्पर्यस्यानादित्वकल्पनागौरवम्. अनादितात्पर्यविषयीभूतार्थनिष्ठलक्षणाया एव निरूढलक्षणात्वादिति वाच्यम्, 'राजपुरुषः' इत्यादिवाक्यजन्यशाब्दबोधात् पूर्वं नियमतो लुप्तविभक्तिस्मरणकल्पनापेक्षया तात्पर्यस्याऽनादित्वकल्पनायां गौरवविरहादिति ।

न चैवम्— 'दधि पश्यति' इत्यादावपि दध्यादिपदस्य दधिकर्मकादौ लक्षणां स्वीकृत्य धात्वर्थेन समं तस्याऽभेदान्वयबोधोपपादनसंभवात् तत्रापि लुप्तविभक्तिस्मरणकल्पनमनुचितमिति वाच्यम्, दध्यादिपदस्य दधिकर्मकादौ लक्षणाग्रहदशायामपि तस्य द्वितीयेतरविभक्त्यन्तत्वभ्रमदशायाम् 'दधिकर्मकः पश्यति' 'दधिकर्मकेण पश्यति' इत्यादाविवोक्तस्थलेपि दधिकर्मकदर्शनान्वयबोधानुदयात् । भवन्मते 'दधिकर्मकः पश्यति' इत्यत्र 'दधि पश्यति' इतिस्थलीयदधिपदोत्तरपश्यतिपदत्वरूपाकाङ्क्षाज्ञानादिघटितसामग्रीसत्त्वाद् दधिकर्मकदर्श-

---

नन्वऽनादितात्पर्यवती लक्षणा हि निरूढलक्षणेत्युच्यते 'राजपुरुषः' इत्यत्र च निरूढलक्षस्वीकारे राजसंबन्धिनि राजपदस्यानादितात्पर्यकल्पनेन किं वा तात्पर्यस्यानादित्वकल्पनेन गौरवात्. स्वारसिकलक्षणास्थले तु तात्पर्यस्यानादित्वकल्पना नास्तीति गौरवाभावात् स्वारसिकलगादृष्टान्तेन निरूढलक्षणास्वीकारो नोचित इत्याशङ्क्याह— न चेति । परिहारहेतुमाह—जेति, 'राजपुरुषः' इत्यादौ राजसंबन्धिनि राजपदस्याऽनादितात्पर्यकल्पना त्वेकदैव कर्तव्या वारं वारं लुप्तविभक्तिस्मरणं तु प्रतिवाक्यश्रवणं कर्तव्यमिति लुप्तविभक्तिस्मरणकल्पनायामेवाधिकं रवमित्यर्थः ।

ननु यदि 'राजपुरुषः' इत्यादौ लक्षणां स्वीकृत्योक्तरीत्या लुप्तविभक्तिस्मरणं न स्वीक्रि- तदा 'दधि पश्यति' इत्यादावपि लुप्तविभक्तिस्मरणं न कर्तव्यं किं तु दध्यादिपदस्य दधि- कादौ लक्षणा स्वीकर्तव्या तस्य=दधिकर्मकस्य धात्वर्थेन दर्शनेन सह 'दधिकर्मकं दर्शनम्' वमभेदान्वयस्य संभवेनाभेदान्वयबोधसंभवादित्याशङ्क्याह— न चेति । परिहारहेतुमाह—यादीति । तस्य=दधिपदस्य । 'दधि पश्यति' इत्यत्र दधिपदस्य दधिकर्मके लक्षणाग्रहदशापि यदा कस्यचित् दधीतिपदे प्रथमाविभक्त्यन्तत्वस्य तृतीयाविभक्त्यन्तत्वस्य वा भ्रमो जायते दधिकर्मकस्य धात्वर्थेनाऽभेदान्वयबोधासंभवात् 'दधिकर्मकः पश्यति' 'दधिकर्मकेण यति' इत्येव बोधो भवति न त्वभेदान्वयबोधस्तथोक्तस्थलेपि= 'दधि पश्यति' इत्यत्र दधि- द्वितीयेतरविभक्त्यन्तत्वभ्रमाभावदशायामप्यऽभेदसंबन्धेन दधिकर्मकदर्शनान्वयबोधो न संभ- विनिगमनाविरहादिति हेतोरभेदान्वयबोधं प्रति द्वितीयान्तदधिपदोत्तरपश्यतिपदसमभिव्याहा- कारणत्वं वक्तव्यं तथा च लुप्तविभक्तिस्मरणमावश्यकमेव। एतदेवोपपादयति दोषान्तरं प्रदर्श- —भवन्मत इति । किं च भवन्मते लुप्तविभक्तिस्मरणास्वीकारे ह्यऽभेदान्वयबोधं प्रति द्वितीया-

नान्वयस्यापत्तेर्द्वितीयान्तदध्यादिपदत्वावच्छिन्नधर्मिकताद्दशधात्वादिसमभिव्याहारज्ञानस्य ताद्दशान्वयबोधे हेतुताया आवश्यकत्वात्, 'दधि पश्यति' इत्यादौ लुप्तद्वितीयानुसंधानस्यावश्यकत्वात् ।

राजसंबन्धिपुरुषाद्यन्वयबोधे च राजादिपदाऽव्यवहितोत्तरपुरुषादिपदत्वप्रकारकज्ञानस्य हेतुतायाः स्वारसिकलक्षणाग्रहस्थलानुरोधेनावश्यकल्पनीयतया 'राजपुरुषः' इत्यादौ राजादिपदस्य तृतीयाद्यन्तत्वभ्रमदशायां राजसंबन्धिपुरुषाद्यन्वयबोधापत्त्यऽसंभवात् तृतीयादिविभक्त्या व्यवधानात् । 'दधि पश्यति' इत्यादौ दधिपदाऽव्यवहितोत्तरत्वप्रकारकधातुपदज्ञानस्य हेतुताया अक्लृप्तत्वात् 'पश्यति दधि' 'पश्यति चैत्रो दधि' इत्यादावपि दधिकर्मकदर्शनान्वयबोधात् ताद्दशज्ञानहेतुताया अशक्यकल्पनीयत्वाच्चेति ।

---

न्तदधिपदोत्तरपश्यतिपदसमभिव्याहारज्ञानस्य तु हेतुता न वक्तुं शक्यते लुप्तद्वितीयानुसंधानापत्तेः, तस्मादऽभेदान्वयबोधं प्रति दधिपदोत्तरपश्यतिपदसमभिव्याहारज्ञानस्य कारणत्वं वा तत्तु यथा 'दधि पश्यति' इत्यत्रास्ति तथा 'दधिकर्मकः पश्यति' इत्यत्राप्यस्त्येवेति 'दधिकर्मकः पश्यति' इत्यत्राप्यभेदान्वयापत्तिः प्राप्ता तद्वारणाय द्वितीयान्तदधिपदोत्तरपश्यतिपदसमभिव्याहारज्ञानस्याऽभेदान्वयबोधं प्रति कारणत्वं वक्तव्यं तथा च 'दधि पश्यति' इत्यादौ लुप्तद्वितीयादिस्मरणं प्राप्तमेवेत्यर्थः । ताद्दशान्वयबोधे=अभेदान्वयबोधे ।

ननु 'दधि पश्यति' इत्यत्रेव 'राजपुरुषः' इत्यत्रापि लुप्तविभक्तिस्मरणं कथं न स्वीक्रियते ? इत्याशङ्क्य 'राजपुरुषः' इत्यस्य वैषम्यमुपपादयति– राजसंबन्धीति, राजपुरुषयोः राजसंबन्धिनि स्वारसिकलक्षणाग्रहस्थलानुरोधेन 'राजपुरुषः' इत्यत्र राजसंबन्धिपुरुषयोरभेदान्वयबोधं प्रति राजपदाव्यवहितोत्तरपुरुषपदसमभिव्याहारज्ञानस्य कारणत्वमस्तीति 'राजपुरुषः' इत्यत्र सत्त्वादऽभेदान्वयबोधो जायते, 'राजपुरुषः' इत्यत्र राजपदस्य तृतीयाद्यन्तत्वभ्रमदशायां च भ्रमविषयीभूततृतीयादीनां राजपदाग्रे स्मरणेन तेन तृतीयादिना व्यवधानात् राजपदाव्यवहितोत्तरपुरुषपदसमभिव्याहारज्ञानस्याभावादऽभेदान्वयबोधापत्तिर्नास्तीति नातिप्रसङ्गो न वा 'राजपुरुषः' इत्यत्र लुप्तविभक्तिस्मरणापेक्षेत्यर्थः । नन्वेवम् 'दधि पश्यति' इत्यादावप्यभेदान्वयबोधं प्रति दधिपदाव्यवहितोत्तरपश्यतिपदसमभिव्याहारस्य कारणत्वं वक्तव्यमिति 'दधिकर्मकः पश्यति' इत्यत्र मध्ये कर्मकपदेन व्यवधानात्कारणाभावान्नाभेदान्वयबोधापत्तिरित्याशङ्क्याह– दधि पश्यतीति । 'पश्यति दधि' 'पश्यति चैत्रो दधि' इत्यादौ दधिपदाव्यवहितोत्तरपश्यतिपदसमभिव्याहाराभावेऽप्यऽभेदान्वयबोधस्वीकारादभेदान्वयबोधं ताद्दशज्ञानहेतुतायाः=दधिपदाव्यवहितोत्तरपश्यतिपदसमभिव्याहारज्ञानस्य हेतुत्वं नैव शक्यते इति द्वितीयान्तदधिपदसमभिव्याहारसहकृतपश्यतिपदसमभिव्याहारज्ञानस्य हेतुत्वं वक्त

'तण्डुलं पचति' इत्यादौ, तण्डुलादिपदस्यैव तण्डुलादिकर्मके लक्षणा विभक्तिस्तु साधुत्वार्था । एवम्– 'राज्ञः पुरुषः' इत्यादावपि राजादिपदस्य संबन्ध्यादौ लक्षणा विभक्तिः साधुत्वार्था । तत्तद्विभक्त्यन्तसमभिव्याहारस्य तत्तल्लाक्षणिकार्थबोधनियामकत्वान्नातिप्रसङ्गः । विभक्तेरेव प्रकृत्यर्थविशेषितस्वार्थे लक्षणेति तु न संभवति– विभक्तेः कुत्रापि शक्तेरक्लृप्ततया तत्र शक्यसंबन्धरूपलक्षणाया असंभवात् । 'तण्डुलः प्रमेयः' इत्यादौ विभक्त्यर्थाऽमिश्रितस्यैव प्रकृत्यर्थस्य भानात् प्रकृतिशक्तेः स्वार्थे क्लृप्ततया तत्र लक्षणासंभवादिति तु चिन्तनीयम् ।

---

था च लुप्तद्वितीयादिस्मरणमावश्यकमेवेत्यसमासस्थले लुप्तविभक्तिस्मरणं भवति समासस्थले च भवतीति स्वीकार्यमित्यर्थः ।

पुनः पूर्वपक्षिमतमनुवदति– तण्डुलमिति । यदुच्यते–'तण्डुलं पचति' इत्यत्र तण्डुलपदस्य ण्डुलकर्मके लक्षणयाऽभेदान्वयबोधः संभवति 'तण्डुलकर्मकः पाकः' इति, विभक्तिस्तु साधुत्वार्था नरर्थकैवेति तच्चिन्तनीयम् । तथा यदुच्यते– यथा– 'राजपुरुषः' इत्यत्र राजपदस्य राजसंबधिनि लक्षणां स्वीकृत्याभेदान्वयबोधः स्वीक्रियते तथा 'राज्ञः पुरुषः' इत्यत्रापि राजदस्य राजसंबन्धिनि लक्षणां स्वीकृत्याभेदान्वयबोध एव स्वीकार्यो न तु ङस्पदोपस्थितवत्वद्वारा भेदान्वयः– विभक्तेः साधुत्वार्थत्वेन निरर्थकत्वादिति तदपि चिन्तनीयमित्यन्वयः । न्वेवं तण्डुलादिपदस्यैव तण्डुलकर्मके लक्षणास्वीकारे विभक्तेश्च निरर्थकत्वस्वीकारे 'तण्डुलः चति' इत्यादावपि तण्डुलादिपदस्य तण्डुलकर्मके लक्षणापत्त्याऽभेदान्वयबोधापत्तिः स्यादित्याशङ्क्याह– तत्तद्विभक्त्यन्तेति, विभक्तेर्निरर्थकत्वेपि स्वरूपेण स्थितिसंभवाद् द्वितीयातत्तण्डुलपदस्यैव तण्डुलकर्मके लक्षणास्वीकारात् तण्डुलकर्मकाभेदान्वयबोधं प्रति द्वितीयासमभिव्याहारज्ञानस्य कारणत्वान्नातिप्रसङ्गः=' तण्डुलः पचति ' इत्यत्र नाभेदान्वयबोधात्तिरित्यर्थः । ननु प्रकृतेः किमर्थं लक्षणा स्वीक्रियते ? विभक्तेरेव प्रकृत्यर्थविशेषितस्वार्थे=ण्डुलकर्मकादौ लक्षणा किं न स्यादित्याशङ्क्याह– विभक्तेरेवेति । परिहारहेतुमाह–विभक्तेरिति, यदि विभक्तेः क्वचिदप्यर्थे शक्तिः स्यात्तदा विभक्तिशक्यस्य सत्त्वात् शक्यसंबन्धरूपा लक्षणापि क्वचिदर्थे विभक्तेः स्यात्. न चैवमस्ति–विभक्तेः क्वचिदप्यर्थे शक्तेरक्लृप्तत्वात् । तत्र=विभक्तौ । ननु ' तण्डुलं पचति ' इत्यत्र विभक्तिप्रकृत्योरुभयोरपि सत्त्वात् तण्डुलकर्मके प्रकृतिभूततण्डुलपदस्यैव लक्षणा न विभक्तेरित्यत्र विनिगमनाविरह इत्याशङ्क्य विनिगमनामाह– तण्डुल इति, 'तण्डुलः प्रमेयः' इत्यत्र तव मते प्रथमायाः प्रातिपदिकमात्रार्थकत्वात् दर्थस्तु कर्मत्वादिः कोपि न संभवति विभक्त्यर्थामिश्रितस्तण्डुलपदार्थस्तु भासते एवेति तत्र कृतिशक्तेरवश्यं स्वीकर्तव्यत्वात् प्रकृतेरेव तण्डुलकर्मकादौ लक्षणास्वीकार उचितो न विभक्तेरित्यर्थः । तत्र=प्रकृतौ । स्वार्थे=तण्डुलपदार्थादौ ।

राजादिपदस्य राजसंबन्ध्यादौ शक्तत्वभ्रमदशायामिव तदर्थलक्षणाग्रहदशायामपि 'राजसंबन्धिसंबन्धी पुरुषः' इत्याद्यन्वयबोधस्य सर्वजनानामनुभवसिद्धत्वात् ।

'पचति चैत्रः' इत्यादावपि कृतिसंबन्धेन पाकादेश्चैत्राद्यंशे विशेषणत्वोपगमे 'चैत्रो न पचति' इत्यादावऽन्वयबोधानुपपत्तिर्द्रष्टव्या- कृतिसंबन्धस्यापि वृत्त्यनियामकतया तत्संबन्धावच्छिन्नप्रतियोगिताकाभावस्याऽप्रसिद्ध्या तद्बोधनासंभवात्

अथैवमपि 'चैत्रो जानाति' इत्यादौ चैत्राद्यंशे ज्ञानादेराश्रयतासंबन्धेनान्वय-

---

यत् ( ८३ पृ, ) " अथैतादृशरीत्यापत्तिवारणेपि " इत्यादिना 'राज्ञः पुरुषः' इत्यत्र विभक्तेः संबन्धवाचकत्वं न स्वीकार्यमित्युक्तं तत् परिहरति- राजादिपदस्येति, 'राज्ञः पुरुषः' इत्यत्र राजपदस्य राजनि वस्तुतः शक्तत्वेपि यदा राजसंबन्धिनि शक्तत्वभ्रमः स्यात्तदा यथा 'राजसंबन्धिसंबन्धीपुरुषः' इत्येव बोधो भवति तथा राजपदस्य राजसंबन्धिनि लक्षणाग्रहदशायामपि 'राजसंबन्धिसंबन्धी ( राजसंबन्धिसंबन्धवान् ) पुरुषः' इत्यन्वयबोधः सर्वानुभवसिद्ध एव तत्र राजपदस्य राजसंबन्धी अर्थः, षष्ठ्या एव संबन्धरूपोर्थो भासते इति न विभक्तेर्निरर्थकत्वमित्यर्थः।

यत् ( ८८ पृ. ) " एवम् 'पचति चैत्रः' इत्यादावपि कृतिसंबन्धेन पाकादेश्चैत्राद्यंशेऽन्वयबोधस्वीकार उचितः " इत्युक्तम्, तत्परिहरति- पचतीति । नञऽसत्त्वे य एव संबन्धः प्रकारतावच्छेदको भवति नञ्सत्त्वे स एव संबन्धः प्रतियोगितावच्छेदको भवतीति " प्रतियोग्यऽभावान्वयौ तुल्ययोगक्षेमौ " इत्यत्र व्युत्पादितं तथा च 'पचति चैत्रः' इत्यत्र कृतिसंबन्धेन पाकस्य चैत्रे प्रकारत्वोपगमे 'चैत्रो न पचति' इति नञ्घटितवाक्यस्थले शाब्दबोधानुपपत्तिः स्याद् यतः 'चैत्रो न पचति' इत्यत्र प्रतियोगितावच्छेदकसंबन्धत्वं कृतेर्वक्तव्यं तच्च न संभवति कृतिरूपसंबन्धस्य वृत्त्यऽनियामकतया प्रतियोगितावच्छेदकसंबन्धत्वासंभवात्, तत्संबन्धावच्छिन्न=कृतिसंबन्धावच्छिन्नप्रतियोगिताकाभावस्याप्रसिद्धत्वेन नञा तद्बोधनासंभवात्=कृतिसंबन्धावच्छिन्नप्रतियोगिताकाभावबोधनासंभवादिति न 'पचति चैत्रः' इत्यत्र कृतिसंबन्धेन पाकादेश्चैत्रादावन्वयः संभवतीत्यर्थः किं तु पाकस्यानुकूलत्वसंबन्धेन वा निरूपितत्वसंबन्धेन वा कृतावन्वयस्तादृशकृतेश्चाश्रयतासंबन्धेन चैत्रादावन्वयः स्वीकार्यः, आश्रयतासंबन्धस्य च वृत्तिनियामकत्वेन प्रतियोगितावच्छेदकत्वात् 'चैत्रो न पचति' इत्यत्रान्वयबोधानुपपत्तिर्नास्ति-आश्रयतासंबन्धेन कृत्यभावस्य प्रत्येतुं शक्यत्वात् । आख्यातस्यापि कृत्यर्थकत्वान्नाऽऽनर्थक्यमित्यर्थः ।

नन्वेवमपि=कृतिसंबन्धस्य वृत्त्यनियामकतया 'न पचति चैत्रः' इत्यत्र शाब्दबोधानुपपत्त्याऽऽख्यातस्य कृत्यर्थकतया सार्थक्योपपादनेपि आश्रयतासंबन्धस्य वृत्तिनियामकत्वेन 'चैत्रो न जानाति' इत्यादौ 'आश्रयतासंबन्धावच्छिन्नप्रतियोगिताकज्ञानाभाववांश्चैत्रः' इतिबोधसंभवादाख्यातस्याश्रयत्वार्थकत्वकल्पनं निर्युक्तिकमित्याशङ्कते- अथैवमपीति । ११६ इतिचेदित्यन्तं

बोधोपगमे क्षतिविरहः । आश्रयतासंबन्धस्याभावप्रतियोगितावच्छेदकतया 'न जानाति चैत्रः' इत्यादावाश्रयतासंबन्धावच्छिन्नप्रतियोगिताकज्ञानाद्यभावस्यैव भानसंभवात् । तथा च तत्राख्यातस्याश्रयत्वार्थकत्वं निर्युक्तिकम् ।

न च धात्वर्थज्ञानादेराश्रयतासंबन्धेन चैत्रादिरूपप्रातिपदिकार्थे साक्षात् प्रकारत्वोपगमे 'ज्ञानं चैत्रः' इत्यादावपि तथान्वयबोधापत्तिरिति वाच्यम्, तादृशान्वयबोधे आख्यातान्तधातुसमभिव्याहारज्ञानस्य हेतुत्वात् । भवतोप्याश्रयताप्रकारकबोधे तादृशसमभिव्याहारज्ञानस्य हेतुताया आवश्यकत्वात् ।

यत्तु- 'पचति चैत्रः' इत्यादौ 'पाककृतिमांश्चैत्रः' इत्याकारकाख्यातार्थ-

---

शङ्काग्रथः । क्षतिविरहः=' न जानाति चैत्रः ' इत्यत्रान्वयबोधानुपपत्तिर्नास्ति—आश्रयतासंबन्धेन चैत्रे ज्ञानाभावस्य प्रत्येतुं शक्यत्वात्, आश्रयतासंबन्धस्य वृत्तिनियामकत्वेनाऽभावीयप्रतियोगितावच्छेदकसंबन्धत्वोपपत्तेः । तत्र=' चैत्रो जानाति ' इत्यादौ । आश्रयतायाः संसर्गत्वाश्रयणादितिभावः ।

ननु यदि ' चैत्रो जानाति ' इत्यत्र धात्वर्थज्ञानस्य चैत्रे आश्रयतासंबन्धेन साक्षादेवान्वयः स्यात्तदा ' ज्ञानं चैत्रः ' इत्यत्रापि तथान्वयबोधापत्तिः=संसर्गविधयाऽऽकाङ्क्षादिबलेन भासमानाश्रयतासंबन्धेन धात्वर्थज्ञानस्य चैत्रे साक्षादेवान्वयः स्यान्न चैतदिष्टमित्याख्यातस्याश्रयत्वार्थकत्वं स्वीकार्यं तथा चाश्रयत्वोपस्थापकस्याख्यातस्य ' ज्ञानं चैत्रः ' इत्यत्राभावादाश्रयतासंबन्धेन चैत्रे धात्वर्थज्ञानस्यान्वयापत्तिर्नास्तीत्याशङ्क्याह— न चेति । परिहारहेतुमाह—तादृशेति । तादृशान्वयबोधे=आश्रयतासंबन्धेनान्वयबोधे आख्यातान्तधातुपदसमभिव्याहारज्ञानस्य कारणत्वात् ' ज्ञानं चैत्रः ' इत्यत्र चाख्यातान्तधातुपदसमभिव्याहाराभावान्नाश्रयतासंबन्धेन चैत्रे धात्वर्थज्ञानस्यान्वयापत्तिरित्यर्थः । भवतः=प्रकारतावादिनोप्याऽऽश्रयताप्रकारकबोधे='ज्ञानाश्रयत्ववांश्चैत्रः ' इति बोधे तादृशसमभिव्याहारज्ञानस्य=' जानाति चैत्रः ' इत्याकारकाख्यातैकवचनान्तज्ञाधातुसमभिव्याहृतप्रथमैकवचनान्तचैत्रपदज्ञानस्य हेतुताया आवश्यकत्वात्, अन्यथा 'ज्ञानं चैत्रः' इत्यत्राश्रयतोपस्थापकाख्याताभावेनाश्रयतासंबन्धप्रकारकान्वयबोधस्य वारणे कृतेपि ' जानन्ति चैत्रः ' इत्यत्राश्रयताप्रकारकः ' ज्ञानाश्रयत्ववांश्चैत्रः ' इत्यन्वयबोधापत्तिः स्यादेवाश्रयतोपस्थापकस्याख्यातस्य सत्त्वात् तद्वारणार्थं तवाप्युक्तरीत्योक्तसमभिव्याहारज्ञानस्य हेतुत्वस्वीकारे आवश्यके आख्यातस्याश्रयत्वार्थकत्वकल्पनं निर्युक्तिकमेव. उक्तसमभिव्याहारज्ञानेनैव कारणीभूतेन सर्वाऽनिष्टनिवारणसंभवादित्यर्थः ।

पुनरपि ' जानाति ' इत्यादावाख्यातस्य सार्थकतामुपपादयति— यत्त्विति ( तदप्यसदित्यन्तम् ) । 'पचति चैत्रः ' इतिवाक्यात् ' पाककृतिमांश्चैत्रः ' इत्याकारकः शाब्दबोधो जायते अत्र चैत्रे कृतिः प्रकारतया भासते प्रकारतया भानं च पदेनोपस्थितस्यैव भवतीत्यत्राख्याते

प्रकारकशाब्दबोधोत्पत्त्या तत्राख्यातजन्यकृत्युपस्थितेर्हेतुत्वकल्पनमावश्यक तथा च तत्तदर्थविशेषान् निवेश्यात्मनिष्ठप्रत्यासत्त्या पदार्थोपस्थितेर्हेतुत्वकल्प शक्यलक्ष्यसहस्रार्थभेदेनाख्यातजन्योपस्थितेः कारणताबाहुल्यमित्यर्थविशेषानि वेश्य धात्वर्थप्रकारकान्वयबोधं प्रति प्रत्ययजन्योपस्थितेः समानविशेष्यताप्रत्या सत्त्यैव हेतुत्वमुपेयते तथा च तादृशकारणबाधेन चैत्रादेर्धात्वर्थज्ञानविशेष्यतय 'चैत्रो जानाति' इत्यादौ भानं न संभवति ।

---

कृतेरुपस्थितिः स्वीकार्या कृत्युपस्थितेश्च शाब्दबोधं प्रति हेतुत्वमवश्यं स्वीकार्यमन्यथात्र प्रकारत्वं न स्यात्, तथा च शाब्दबोधोपस्थित्योः स्थलभेदेन भिन्नत्वाद् आत्मनिष्ठप्रत्यास हेतुत्वे हि 'पचति' इत्यत्र पाककृत्युपस्थितित्वेन कारणता 'जानाति' इत्यत्राश्रयत्वोपस्थि त्वेन कारणता 'नश्यति' इत्यत्र नाशप्रतियोगित्वोपस्थितित्वेन कारणतेत्येवं तत्तदर्थविशेष(प कृत्यादि ) प्रवेशः स्यादिति तत्तदर्थविशेषान्निवेश्यात्मनिष्ठप्रत्यासत्त्या पदार्थोपस्थितेर्हे 'पचति' इत्यादावाख्यातजन्यकृत्याद्युपस्थितेर्हेतुत्वं प्राप्तं तत्राख्यातस्याप्यनेके शक्य लक्ष्यार्था भवन्तीति शक्यलक्ष्यसहस्रा(अनेका)र्थभेदेन तत्तद्विषयकाख्यातजन्योपस्थितेरपि भे कारणताबाहुल्यम्=अनन्तकार्यकारणभावकल्पनेन गौरवं स्याद् यथा— 'पचति' इत्यत्र कृतिप्रकारकशाब्दबोधं प्रत्याऽऽख्यातजन्यकृत्युपस्थितेः कारणत्वम् 'जानाति' इत्यत्राश्रय का रकशाब्दबोधं प्रत्याऽऽख्यातजन्याश्रयत्वोपस्थितेः कारणत्वमित्याऽऽत्मनिष्ठप्रत्यासत्त्या न क णत्वमुपेयते; स्वीकार्यं किं तु विषयनिष्ठप्रत्यासत्त्या तथा चोक्तरीत्याऽऽख्यातोपस्थिताख्या र्थकृत्यादिप्रवेशस्यापेक्षाभावेन कारणताबाहुल्यं न स्यात् तथाचार्थविशेषानऽनिवेश्य 'धात्व प्रकारकान्वयबोधं प्रति समानविशेष्यताप्रत्यासत्त्या प्रत्ययजन्योपस्थितेः कारणत्वम्' इत्येव गत एकः कार्यकारणभावः स्वीक्रियते 'पचति' इत्यादौ च 'अनुकूलतासंबन्धेन पाक कृतिः' इत्येवं धात्वर्थप्रकारककृतिविशेष्यक एव शाब्दबोधः स्वीक्रियते. अत्र च धात्व तत्संब ... प्रकारः कृतौ च विशेष्यता वर्तते तादृशकृतिनिष्ठविशेष्यतासंबन्धेन शाब्दबोध स पाकः ... संबन्धावच्छिन्नप्रति... ख्यातरूपप्रत्ययजन्यकृतिविषयकोपस्थितिश्च कृतौ वर्तते एव कृतेः प्रत्ययेनोपस्थितत्वाद्विशेष्यत्वे चेत्यर्थः । तथा च=धात्वर्थप्रकारकान्वयबोधं प्रति प्रत्ययजन्योपस्थितेः कारणत्वस्वीकारे च ताद कारणबाधेन='चैत्रो जानाति' इत्यत्र चैत्रस्य प्रत्ययेनोपस्थित्यभावात् चैत्रे समानविशेष्यतासंब नोपस्थित्यभावेन धात्वर्थज्ञानप्रकारकचैत्रविशेष्यकबोधासंभवात् चैत्रादेर्धात्वर्थज्ञानविशेष्यतया भा न संभवतीति 'जानाति' इत्यत्राख्यातस्याश्रयत्वार्थकत्वं स्वीकार्यम्. अथ च 'पचति' इत्य यथा 'अनुकूलतासंबन्धेन पाकवती कृतिः' इत्येवमाख्यातार्थकृतिविशेष्यकबोधो जायते त 'चैत्रो जानाति' इत्यत्रापि 'स्वरूपसंबन्धेन चैत्रनिष्ठा निरूपितत्वसंबन्धेन ज्ञानवत्याऽऽश्रयता' इत्येवमाख्यातार्थाश्रयताविशेष्यकधात्वर्थप्रकारकः शाब्दबोधः स्वीकार्य इति 'पचति' इत्या दावित्र 'जानाति' इत्यादावप्याख्यातस्य सार्थकत्वं प्राप्तमेवेत्यर्थः । अत्र चाश्रयताया नि

यदि च धातुत्वप्रत्ययत्वादीनामनुगतानां दुर्निर्वचतया नैतादृशानुगतकार्यकारणभावकल्पनं संभवतीति मन्यते ? तदापि यत्र ज्ञाधातोरेव पाकादौ लक्षणा तत्र ' जानाति ' इत्यादिवाक्यात् पाककृत्यादिप्रकारकान्वयबोधोत्पत्त्या ज्ञाधात्वर्थप्रकारकान्वयबोधे तदव्यवहितोत्तरातिप्त्वादिप्रकारकज्ञानजन्योपस्थितेः समानविशेष्यत्वप्रत्यासत्त्या हेतुतायास्तत्र कल्पनीयतया तादृशकारणबाधात् ' चैत्रो जानाति ' इत्यादौ चैत्रादेर्ज्ञानविशेष्यतया भानानुपपत्तिर्दुर्वारैवेति ।

त्वेन विशेष्यतासंबन्धेनाख्यातरूपप्रत्ययजन्योपस्थितिरप्याश्रयतायां वर्तत ( आश्रयताया आख्यातप्रत्ययेनोपस्थितत्वात् ) शाब्दबोधोपि वर्तते एव ( शाब्दबोधेप्याश्रयताया एव विशेष्यत्वात्. ) इत्येषैव समानविशेष्यताप्रत्यासत्तिः, धात्वर्थो ज्ञानं चाश्रयतायामेव प्रकार इति धात्वर्थप्रकारकान्वयबोधं प्रति प्रत्ययजन्योपस्थितेः समानविशेष्यतासंबन्धेन कारणत्वम् ' इति कार्यकारणभावोप्युपपन्नः, आख्यातस्य ' जानाति ' इत्यादौ सार्थकत्वमप्युपपन्नमित्यर्थः ।

यदि चेति– ननु यदि धातुत्वप्रत्ययत्वादीनामनुगतत्वेन निर्वचनमुपपद्येत तदा ' धात्वर्थप्रकारकान्वयबोधं प्रति प्रत्ययजन्योपस्थितेः कारणत्वम् ' इति कार्यकारणभावोप्युपपद्येत नैवमिति नोक्तकार्यकारणभावकल्पनं संभवतीति.( यदि मन्यते? ) उक्तकार्यकारणभावानुपपत्त्या धात्वप्रकारकान्वयबोधे प्रत्ययजन्योपस्थितेरकारणत्वात् ' जानाति ' इत्यत्राख्यातप्रत्ययेनाश्रयतोपस्थितेरपेक्षाभावादनुपस्थितस्य च प्रकारत्वविशेष्यत्वे न संभवत इत्याश्रयताविशेष्यकशाब्दबोधं त्यक्त्वा ' चैत्रो जानाति ' इत्यत्र ' आश्रयतासंबन्धेन ज्ञानवांश्चैत्रः ' इत्येवं चैत्रविशेष्यक एव बोधः स्वीकार्यो न त्वाश्रयताविशेष्यक इत्युक्तबोधे आश्रयतायाः संसर्गत्वेन भानेन प्रकारतया विशेष्यतया वा भानाभावात्. तत्राख्यातस्य वृत्तिकल्पनं व्यर्थमेवेति ' जानाति ' इत्यादावाख्यातस्य निरर्थकत्वमेव ' आश्रयतासंबन्धेन ज्ञानवांश्चैत्रः ' इत्यत्राश्रयतायाः संसर्गमात्रत्वेन संसर्गस्याकाङ्क्षाबलेन भानसंभवादाख्यातेन तदुपस्थितेरपेक्षैव नास्ति येनात्राख्यातस्याश्रयतार्थकत्वं कल्पनीयं स्यादिति यदि मन्यते इत्यर्थः ।

एवमाक्षिप्य पुनरपि ' जानाति ' इत्यादावाख्यातस्य सार्थक्यमुपपादयति– तदापीति ; तदापि=धातुत्वप्रत्ययत्वादीनामननुगततया धात्वर्थप्रकारकान्वयबोधे प्रत्ययजन्योपस्थितेरकारणत्वेपि यत्र ज्ञाधातोः पाके लक्षणा तत्र ' जानाति ' इतिवाक्यात् ' अनुकूलतासंबन्धेन पाकविशिष्टकृतिमांश्चैत्रः ' इत्येवं पाककृतिप्रकारकान्वयबोधोत्पत्त्या ज्ञाधात्वर्थप्रकारकान्वयबोधे=कृतिनिष्ठविशेष्यतानिरूपितज्ञाधात्वर्थप्रकारताकान्वयबोधं प्रति ज्ञाधात्वव्यवहितोत्तरतिप्त्वादिप्रकारकतिबादिज्ञानजन्यतिवर्थकृतिविशेष्यकोपस्थितेः समानविशेष्यताप्रत्यासत्त्यास्तत्र=लक्षणास्थले हेतुता कल्पनीया ज्ञाधातुत्वतिप्त्वादीनामनुगततया च नैतत्कार्यकारणभावकल्पने काचिदनुपपत्तिरित्यर्थः । तथा च– ज्ञाधातुत्वतिप्त्वादीनामनुगततयोक्तलक्षणास्थले इव मुख्यार्थज्ञानपरज्ञाधातुप्रयोगस्थलेपि ' ज्ञाधात्वर्थज्ञानप्रकारकान्वयबोधे ज्ञाधात्वव्यवहितोत्तरतिप्त्वादिप्रकारकतिबादिज्ञानजन्योपस्थितेः समानविशेष्यताप्रत्यासत्त्या हेतुत्वम् ' इत्येवं कार्यकारणभावस्य

**तदप्यसत्**- प्रत्ययान्तरार्थविशेष्यकशाब्दबोधे व्यभिचारवारणाय तादृशो स्थितिवैशिष्ट्यस्य तादृशोपस्थितिजन्यतावच्छेदककोटावऽवश्यं निवेशनीयतया दनुत्तरशाब्दबोधे चैत्रादेर्ज्ञानादिविशेष्यतया भाने तादृशकारणबाधस्याकिंचित् रत्वात् तादृशानुपूर्वीघटकज्ञादिधातुजन्यज्ञानाद्युपस्थितिचैत्रादिरूपविशेष्योपस्

संभवेन स्वीकर्तव्यत्वात् चैत्रे च तादृशकारणबाधात्=तिप्जन्योपस्थितेरसत्त्वात् चैत्रस्य ति त्वाभावात् चैत्रस्य ज्ञानविशेष्यतया भानानुपपत्तिस्तदवस्थैव. मुख्यार्थपरप्रयोगस्थलेऽन्यादृश कारणभावाश्रयणे गौरवात् । यतश्चोक्तरीत्या चैत्रे विशेष्यतासंबन्धेन प्रत्यय( तिप् )ज पस्थितेरसत्त्वेन चैत्रस्य धात्वर्थनिष्ठप्रकारतानिरूपितविशेष्यता न संभवति तिबर्थस्य च त्यऽतः ' जानाति ' इत्यादावाख्यातस्याश्रयत्वार्थकत्वं स्वीकार्यं तथा च ' जानाति ' इ ख्यातेनाश्रयताया उपस्थितौ तस्यामाश्रयतायां विशेष्यतासत्त्वेन तादृशविशेष्यतासंबन्धे स्थितिरप्यस्ति शाब्दबोधोऽप्यस्तीत्युक्तकार्यकारणभावोऽप्युपपन्नः 'निरूपितत्वसंबन्धेन ज्ञानवत्याश्र इत्येवं धात्वर्थप्रकारकाख्यातार्थाश्रयताविशेष्यकश्च शाब्दबोधः स्वीकार्य इति ' पचति ' इ विव ' जानाति ' इत्यादावप्याख्यातस्य सार्थक्यं प्राप्तमेवेति सर्वं सुस्थमित्यर्थः ।

आख्यातस्य निरर्थकत्वप्रतिपादनाय संसर्गतावादी ' जानाति ' इत्यादौ धात्वर्थज्ञानप्र चैत्रविशेष्यकबोधं प्रतिपिपादयिषुरुक्तं परिहरति- तदप्यसदिति । ' ज्ञाधात्वर्थप्रकारकान्व प्रति ज्ञाधात्वव्यवहितोत्तरतिप्त्वादिप्रकारकज्ञानजन्योपस्थितेः समानविशेष्यताप्रत्यासत्त्या हेतुत इत्येवमुक्तरीत्या सामान्यतः कार्यकारणभावो न संभवति- ' जानन् ज्ञाता ' इत्यादौ ज्ञा ज्ञानप्रकारकचैत्रविशेष्यको बोधो विशेष्यतासंबन्धेन शत्राद्यर्थे चैत्ररूपाश्रये जायते चैत्रस्य यार्थत्वेन विशेष्यत्वात् तत्र चैत्रे तिप्ज्ञानजन्योपस्थितिस्तु नास्त्येव ' जानन् ' इत्यादौ ऽभावादिति व्यभिचारः प्राप्त इति तादृशव्यभिचारवारणाय तादृशोपस्थितिवैशिष्ट्यस्य ( क व्यहितोत्तरत्वस्य ) तादृशोपस्थितिजन्यतावच्छेदककोटौ ( कार्यतावच्छेदककोटौ ) नि कर्तव्यो यथा- ज्ञाधातोः पाकादौ लक्षणास्थले ' आख्यातार्थकृत्युपस्थित्यव्यवहितोत्तरत्ववि ज्ञाधात्वर्थपाकादिप्रकारकशाब्दबोधत्वावच्छिन्नं प्रति ज्ञाधातूत्तरवर्तमानाख्यातजन्यकृत्युपस्थि कारणम् ' इत्येवं विशिष्य कार्यकारणभावो वक्तव्यस्तथा च ' जानन् ' इत्यादिवाक्यजन्यबो व्यभिचार आख्यातार्थकृत्युपस्थित्युत्तरत्वाभावाद् आख्यातजन्यकृत्युपस्थितिजन्यत्वाभावाच्च, ' जानाति चैत्रः ' इत्यत्र ' आश्रयतासंबन्धेन ज्ञानवांश्चैत्रः ' इत्याकारके तदनुत्तरशाब्दबो तिप्ज्ञानजन्यकृत्युपस्थित्यनुत्तरशाब्दबोधे चैत्रस्य ज्ञानविशेष्यतया भाने तादृशकारणबाध ज्ञाधातूत्तरतिप्ज्ञानजन्योपस्थितिरूपकारणबाधस्याऽकिंचित्करत्वात्- तिप्ज्ञानजन्योपस्थिते र्थकृतिविशेष्यकशाब्दबोधं प्रति कारणत्वेऽपि चैत्रविशेष्यकशाब्दबोधं प्रति कारणत्वमेव न येनात्र चैत्रस्य तिपोपस्थित्यभावे ज्ञाधात्वर्थज्ञानविशेष्यतया भानं न स्यात् किं तु तादृश=' जानाति ' इत्यानुपूर्वीघटकज्ञाधातुजन्यज्ञानोपस्थितिचैत्ररूपविशेष्योपस्थितियोग्यताज्ञानादि

तियोग्यताज्ञानादिघटितसामग्र्या आश्रयतासंसर्गकशाब्दबोधजनने बाधकाभावात् ।

न चैतन्मते आश्रयतासंबन्धेन ज्ञानादिप्रकारकशाब्दबोधे तादृशयोग्यताज्ञानहेतुत्वान्तरकल्पनाधिक्यम्, आश्रयतासंबन्धेन ज्ञानविशिष्टचैत्रादितात्पर्यकात्

---

सामग्र्या 'आश्रयतासंबन्धेन ज्ञानवांश्चैत्रः' इत्येवमाश्रयतासंसर्गकबोधो बाधकाभावाज्जायते । अत्र च चैत्रादेर्ज्ञाधात्वर्थज्ञानविशेष्यतया भानं भवत्येवेत्येवं चैत्रस्य धात्वर्थज्ञानविशेष्यतया नसंभवेनाश्रयतायाः संसर्गतया भानसंभवे तत्राख्यातस्य वृत्तिकल्पनं व्यर्थमेव अन्यथाश्रयया आख्यातार्थत्वे तदुपस्थितिकल्पनापत्त्या गौरवं स्यादिति 'जानाति' इत्यादावाख्यातं र्थकमेवेत्यर्थः ।

नन्वाख्यातस्याश्रयतार्थकत्वे आश्रयतायाश्च प्रकारत्वे यथा ज्ञाधातोः पाकादौ लक्षणादशायां धात्वर्थनिष्ठप्रकारतानिरूपितज्ञाधातूत्तरवर्तमानतिबर्थनिष्ठविशेष्यताकयोग्यताज्ञानस्य ज्ञाधात्वकारकशाब्दबोधं प्रति हेतुत्वमस्ति तथा तस्यैव योग्यताज्ञानस्य मुख्यार्थपरवाक्यजन्यशाब्देपि कारणत्वमस्ति, लक्षणास्थले ज्ञाधात्वर्थः पाकः तिबर्थश्च कृतिः मुख्यार्थपरप्रयोगस्थले च त्वर्थो ज्ञानं तिबर्थश्चाश्रयतेत्यन्यदेतत् तथोभयत्र कार्यकारणभावोप्येकविध एव– धात्वर्थप्रकारतिबर्थविशेष्यककार्यकारणभावस्याश्रयणात् । तव संसर्गतावादिनस्तु मते नैवं संभवति किं तु धातोः पाकादौ लक्षणादशायामाख्यातस्य कृत्यर्थकत्वाश्रयणेन तत्र 'जानाति' इत्यत्राख्यार्थकृतिप्रकारकयोग्यताज्ञानस्य 'पाकानुकूलकृतिमांश्चैत्रः' इतिशाब्दबोधे हेतुत्वम्. मुख्यार्थ- 'जानाति' इति प्रयोगे च 'आश्रयतासंबन्धेन ज्ञानवांश्चैत्रः' इत्याकारकाऽऽश्रयतासंबन ज्ञानप्रकारकशाब्दबोधे तादृश=आश्रयतासंबन्धेन ज्ञानप्रकारकयोग्यताज्ञानस्य हेतुत्वमाख्यातत्र निरर्थकत्वाश्रयणाद् आश्रयतायाश्च संसर्गत्वाश्रयणादित्येकस्मिन्नेव 'जानाति' इतिप्रयोस्थले द्विविधयोग्यताज्ञानस्य हेतुत्वापत्त्या तत्राश्रयतासंसर्गकयोग्यताज्ञानस्य यद्धेतुत्वकल्पनं तदकमित्याशङ्कते– न चेति । एतन्मते–संसर्गतावादे । [illegible]

ननु नाश्रयतासंसर्गकयोग्यताज्ञानस्य हेतुत्वकल्पनमधिकं यतः–यदा 'आश्रयतासंबन्धेन नविशिष्टश्चैत्रोस्ति तमानय' इत्येवं केनचिदुक्तं तत्र तत्पदस्य बुद्धिविषयतावच्छेदकत्वोपलतधर्मावच्छिन्ने शक्त्येन आश्रयतासंबन्धेन ज्ञानविशिष्टचैत्रबोधकत्वात् तत्र तादृशबोधं प्रत्याश्रयतासंसर्गकज्ञानप्रकारकयोग्यताज्ञानस्य हेतुत्वं क्लृप्तमस्ति तथा यदा केनचित् 'मया णिघण्ट इत्युक्ते त्वया आश्रयतासंबन्धेन ज्ञानविशिष्टश्चैत्रो बोद्धव्यः' इति संकेतः कृतस्तदा य मणिघण्टशब्दस्याश्रयतासंसर्गकज्ञानप्रकारकचैत्रविशेष्यकशाब्दबोधजनकत्वात्तत्राश्रयतासंसकज्ञानप्रकारकयोग्यताज्ञानस्य हेतुत्वं सर्वमतक्लृप्तमेवेति तेनैव योग्यताज्ञानेन 'जानाति' ति मुख्यार्थपरप्रयोगस्थलेप्याऽऽश्रयतासंसर्गकज्ञानप्रकारकजायमानशाब्दबोधं प्रति हेतुत्वस्य र्वाहेण न नवीनहेतुत्वकल्पनापत्तिरित्याशङ्क्याह– आश्रयतासंबन्धेनेति । आश्रयतासंबन्धेन

सर्वनाम्नः सांकेतिकशब्दान्तराद्वा तादृशसंबन्धेन: ज्ञानादिप्रकारकचैत्रादिविशेष्यकशाब्दबोधस्य सर्वमते एव प्रसिद्धावपि तादृशशाब्दबोधे पदार्थान्तरभाननैयत्ये तन्मिश्रितयोग्यताज्ञानस्य तत्र हेतुताया आवश्यकत्वात्, ज्ञानादिविशिष्टचैत्रादिमात्रविषयकयोग्यताज्ञानस्य ज्ञानादिविशिष्टचैत्रादिविषयकशाब्दबोधे हेतुताया कुत्राप्यक्लृप्तत्वादिति वाच्यम्, भवन्मतेपि ज्ञानाश्रयताप्रकारकचैत्रादिविशेष्य

---

ज्ञानविशिष्टचैत्रादितात्पर्यकात् सर्वनाम्नः सांकेतिकशब्दान्तराद्वा तादृशसंबन्धेन=आश्रयतासं ज्ञानादिप्रकारकचैत्रादिविशेष्यकशाब्दबोधस्य सर्वमते एव प्रसिद्धावपि तत्र यादृशयोग्यताज्ञा हेतुत्वं नात्र तादृशयोग्यताज्ञानेन निर्वाहो यतः- शाब्दबोधे ह्यपरपदार्थवैशिष्ट्यं तदन्य भासते इति नियमः अपरपदार्थवैशिष्ट्यभानं विना पदार्थस्य शाब्दबोधविषयत्वमेव न किं तूपस्थितिमात्रविषयत्वं भवतीति तादृशशाब्दबोधे=आश्रयतासंबन्धेन ज्ञानादिविशिष्टत कात् सर्वनाम्नः सांकेतिकशब्दान्तराद्वा जायमाने शाब्दबोधे पदार्थान्तरभाननैयत्येन=' ' तम् ' ' मणिघण्टः ' इत्यादावाऽऽश्रयतासंबन्धेन ज्ञानविशिष्टचैत्रस्तु पदार्थं एवेति तद्बोधकसर्वनामादिपदोत्तरवर्तमानविभक्त्यर्थैकत्वादेर्वैशिष्ट्यस्य भानमवश्यं स्वीकार्यम्- ' यतासंबन्धेन ज्ञानविशिष्टचैत्र एकः ' इति तथा चात्र त्वेकत्ववैशिष्ट्यं योग्यताज्ञाने भास तन्मिश्रम्=एकत्वविषयकं यद् योग्यताज्ञानं तस्यैव हेतुत्वमस्ति ' जानाति ' इति मुख्य प्रयोगजन्यशाब्दबोधे त्वेकत्वविषयकयोग्यताज्ञानस्य हेतुत्वं नास्ति शुद्धचैत्रमात्रस्य पदा तत्र धात्वर्थवैशिष्ट्यस्य भासमानत्वादिति ' जानाति ' इतिमुख्यार्थपरप्रयोगजन्यशा प्रत्युक्तरीत्या यदाश्रयतासंसर्गकयोग्यताज्ञानस्य हेतुत्वं तदधिकमेव संसर्गतावादे इत्यर्थः ।

नन्वाश्रयतासंबन्धेन ज्ञानविशिष्टचैत्रादितात्पर्यकात् सर्वनाम्नः सांकेतिकशब्दान्तराद्वा माने उक्ते शाब्दबोधे नैकत्वादिविशिष्टविषयकयोग्यताज्ञानस्य हेतुत्वं किं तु ज्ञानविशिष्टचै विषयकयोग्यताज्ञानस्य हेतुत्वं वक्ष्यामस्तथा च तेनैव योग्यताज्ञानेन ' जानाति ' इतिमु परप्रयोगजन्यशाब्दबो[illegible]हो भविष्यतीत्याशङ्क्याह- ज्ञानादिविशिष्टचैत्रादिमा ज्ञानादिविशिष्टचैत्रादिवि[illegible]ब्दबोधं प्रति पदार्थान्तरैकत्वादिवैशिष्ट्यशून्यज्ञानादिविशि ष्टैकपदार्थमात्रविषयकयोग्यताज्ञानस्य कचिदपि लोके हेतुत्वं क्लृप्तं नास्ति येन तेनैव ' जा इत्यत्र निर्वाहः स्यादिति ' जानाति ' इतिमुख्यार्थपरप्रयोगजन्यशाब्दबोधे आश्रयतासं ग्यताज्ञानस्य यद्धेतुत्वकल्पनं तदुक्तरीत्याधिकमेवेत्यर्थः । तथा च ' जानाति ' इत्यत्रा श्रयत्वार्थकत्वं स्वीक्रियतामितिभावः ।

परिहारहेतुमाह- भवन्मतेपीति । भवन्मते='जानाति ' इत्यादावाख्यातस्याश्रयत्वार्थ तेपि ज्ञाधातोः पाकादौ लक्षणास्थले तु पाकानुकूलकृतिप्रकारकयोग्यताज्ञानस्य हेतुत्वं स तेन च योग्यताज्ञानेन ' जानाति ' इत्यादौ मुख्यार्थस्थले आख्यातस्याश्रयत्वार्थकत्व निर्वाहाभावाद् यथा मन्मते आश्रयतासंसर्गकयोग्यताज्ञानस्य हेतुत्वकल्पनमधिकं तथा तव

कशाब्दबोधे तथाविधयोग्यताज्ञानहेतुताया आधिक्यात् । आश्रयतासंसर्गकज्ञानीयकारणतावच्छेदकस्य तदीयसंसर्गविषयताघटिततत्प्रकारकज्ञानत्वरूपकारणतावच्छेदकापेक्षया लघुशरीरतयाऽऽश्रयतायाः संसर्गतामतस्यैव लघुत्वात् ।

न च यत्राश्रयत्वे ज्ञाधातुसमभिव्याहताख्यातस्य शक्तिभ्रमः स्वारसिकलक्षणाग्रहो वा तत्र ज्ञानाश्रयताप्रकारकशाब्दबोधस्योभयमतसिद्धतया तत्र तादृशयोग्यताज्ञानहेतुत्वमुभयमतसिद्धमेवेति वाच्यम्, आश्रयतायाः संसर्गतावादिना तत्राप्याश्रयताप्रकारकबोधस्यानभ्युपगन्तव्यत्वादितिचेत् ?,

ज्ञानाश्रयताप्रकारकचैत्रादिविशेष्यकशाब्दबोधं प्रति तथाविध=ज्ञानाश्रयताप्रकारकचैत्रादिविशेष्यकयोग्यताज्ञानस्य हेतुत्वकल्पनमधिकमस्त्येवेति तव मम चात्र साम्यमेवेत्यर्थः । स्वसंसर्गतावादे लाघवं प्रदर्शयति– आश्रयतेति, आश्रयतासंसर्गकज्ञानं शाब्दबोधस्तदीयं यत्कारणतावच्छेदकं योग्यताज्ञानस्यावच्छेदकम् ( योग्यताज्ञानत्वं किं वा संसर्गभूताश्रयत्वादिविषयकत्वम् ) तस्य तदीयसंसर्ग=आश्रयतासंसर्गविषयताघटितं यत् तत्प्रकारकज्ञानम्=आश्रयताप्रकारकशाब्दबोधस्तस्य यद् योग्यताज्ञानत्वरूपमाश्रयताप्रतियोगिकसंसर्गविषयकत्वं रूपं वा कारणतावच्छेदकं तदपेक्षया लघुशरीरतया=लघुभूतत्वेन=आश्रयतायाः संसर्गतामतस्यैव लघुत्वात्=आश्रयतायाः संसर्गत्वे एव लाघवादित्यन्वयः । आश्रयतासंसर्गकयोग्यताज्ञाने हि 'ज्ञानं चैत्र आश्रयता' इति त्रयो विषयाः– ज्ञानस्य प्रकारत्वात् चैत्रस्य विशेष्यत्वाद् आश्रयताया उभयसंसर्गत्वात् । आश्रयताप्रकारकयोग्यताज्ञाने हि 'ज्ञानं चैत्रः आश्रयता. आश्रयतायाश्च स्वरूपसंबन्धः. ज्ञानस्य निरूपितत्वसंबन्धः' इति पञ्च विषयाः– ज्ञानस्य निरूपितत्वसंबन्धेनाश्रयतायामन्वयस्तादृशाश्रयतायाश्च स्वरूपसंबन्धेन चैत्रेऽन्वयः 'ज्ञानाश्रयतावांश्चैत्रः' इतिबोधः । प्रकारीभूताया आश्रयतायाः संबन्धान्तरं विना चैत्रेऽन्वयानुपपत्तेरिति प्रकारतावादापेक्षया संसर्गतावादे लाघवम्, एवमुपस्थितावपि लाघवगौरवे ज्ञेये इति भावः । तदेवोक्तम्– तदीयेति– प्रकारीभूताश्रयताया यः संसर्गः=स्वरूपसंबन्धस्तद्विषयताघटितमित्यर्थः प्रकारतामते योग्यताज्ञानस्य आश्रयतासंसर्ग ( आश्रयतायाः स्वरूपसंबन्ध ) विषयकत्वाद् आश्रयतासंसर्गविषयताघटितत्वम् । किं वात्र ज्ञानपदाभ्यां योग्यताज्ञानमेव ग्राह्यम् ।

ननु यत्त्वया " भवन्मते " इत्यादिनाश्रयताप्रकारकयोग्यताज्ञानस्य हेतुताधिक्यं मे प्रदर्शितं तन्नास्ति यतः यत्र ज्ञाधातूत्तरवर्तमानाख्यातस्य कस्यचित् पुंस आश्रयत्वे शक्तिभ्रमः स्वारसिकलक्षणाग्रहो वा स्यात् तत्र ज्ञानाश्रयताप्रकारक एव शाब्दबोधो जायते स च तादृश=आश्रयताप्रकारकयोग्यताज्ञानेनैव जायते इत्युभयमतसिद्धमेव तथा चाश्रयताप्रकारकयोग्यताज्ञानस्यात्र हेतुत्वं सिद्धमेवेति तेनैवाश्रयताप्रकारकयोग्यताज्ञानेन 'जानाति' इतिमुख्यार्थपरप्रयोगाज्जायमानाश्रयताप्रकारकशाब्दबोधस्यापि निर्वाहो भविष्यतीत्याशङ्क्याह– न चेति । परिहारहेतुं हठेनाह–आश्रयताया इति । तत्रापि=आख्यातस्याश्रयत्वे शक्तिभ्रमस्थलेपि तथा स्वारसिकलक्षणास्थलेपि संसर्गतावादिनाश्रयताप्रकारकबोधो न स्वीक्रियते किं त्वाश्रयतासंसर्गक एव बोधः

सत्यम्- एतदभिप्रायेणैव 'जानाति' इत्यादावाख्यातस्य निरर्थकतां मणिकार उरीचकार। तत्राश्रयत्वे निरूढलक्षणामभ्युपगच्छतां दीधितिकाराणां पुनरेष आशयः-यत्र ज्ञाधातोर्ज्ञानाश्रयत्वे शक्तिभ्रमः स्वारसिकलक्षणाग्रहो वा तत्र चैत्राद्यं धात्वर्थैकदेशस्य ज्ञानादेरन्वयानुपपत्त्या स्वरूपसंबन्धेन ज्ञानाश्रयताप्रकारकचैत्रादिविशेष्यकान्वयबोध एव तत्र मणिकृता स्वीकरणीयः। तथा च तत्र ज्ञानाश्रयताप्रकारकशाब्दबोधे तत्प्रकारकयोग्यताज्ञानहेतुतायाः क्लृप्तत्वादाऽऽश्रयतासंसर्गकशाब्दबोधे तादृशयोग्यताज्ञानहेतुताकल्पनमधिकमेव मणिकृन्मते।

---

स्वीक्रियते इति नोभयमतसिद्धः शक्तिभ्रमादावप्याश्रयताप्रकारकशाब्दबोधो येनोक्तरीत्या प्रस्तावादे आश्रयताप्रकारकयोग्यताज्ञानस्य हेतुत्वकल्पनमधिकं न स्यात् तत्प्रयुक्तं गौरवं च स्यादित्यर्थः। यथा कस्यचिन्मते विभक्त्यर्थः कर्मत्वमपि संसर्ग एव 'कर्मतासंबन्धेनौदन पाकः' इति बोधस्वीकारात्. यथा च 'राज्ञः पुरुषः' इत्यत्र षष्ठ्यर्थस्वत्वमपि संसर्ग 'स्वत्वसंबन्धेन राजवान् पुरुषः' इतिबोधस्वीकारात्. तथा 'जानाति' इत्यादावाख्या आश्रयतापि संसर्ग एव न तु प्रकारः 'आश्रयतासंबन्धेन ज्ञानवांश्चैत्रः' इति च बोधः क्रियते, अनुपस्थितस्य प्रकारत्वासंभवेप्युपस्थितस्य संसर्गत्वे बाधकाभावादाख्यातेन शक स्थितस्याप्याश्रयत्वस्य संसर्गत्वमेव प्रकारत्वे हि तत्संसर्गभानावश्यंभावाद् गौरवं स्यादिति भ 'जानाति.' इत्यादावाश्रयत्वस्य संसर्गतयैव भानं भवति न प्रकारतयेत्यत्र चिन्तामणि प्रमाणयति-सत्यमिति। एतदभिप्रायेणैवेति- यद्याश्रयतायाः प्रकारत्वं स्यात्तदा पदादनु तस्य प्रकारत्वासंभवेनाख्यातस्याश्रयत्वे शक्तिर्वा लक्षणा वा स्वीक्रियेत तथा चाश्रयत्वोप कत्वादाख्यातस्य 'जानाति' इत्यादौ सार्थक्यं स्यादपि नैवमस्ति. आश्रयत्वस्य संसर्ग कारात् संसर्गतया भानं च पदादनुपस्थितस्यापि संभवतीत्याश्रयत्वे आख्यातस्य वृत्तिक पेक्षाऽभावादाख्यातस्य 'जानाति' इत्यादौ निरर्थकत्वमेवेत्यर्थः। दीधितिकारेण त्वाश्र प्रकारत्वं स्वीकृत्य 'जानाति' इत्यादावाख्यातस्याश्रयत्वे निरूढलक्षणा ( अनादितात्पर्य लक्षणा ) स्वीकृतेत्याह-तत्रेति। तत्र='जानाति' इत्यादौ। दीधितिकाराशयं वर्ण यत्रेति, यदा हि कस्यचित् 'जानाति' इत्यत्र प्रकृतिमात्रज्ञाधातोरेव ज्ञानाश्रयत्वे भ्रमः स्वारसिकलक्षणाग्रहो वा जातस्तत्र ज्ञानाश्रयत्वं धात्वर्थस्तदेकदेश एव ज्ञानमिति र्थैकदेशस्य ज्ञानस्य चैत्रेऽन्वयो न संभवति- "एकत्र विशेषणत्वेनान्वितस्यान्यत्र विशेषण न्वयाऽयोगात्" इतिनियमेनोक्तस्थले आश्रयत्वे विशेषणतयान्वितस्य ज्ञानस्य चैत्रादा संभवात् तेन च 'आश्रयतासंबन्धेन ज्ञानवांश्चैत्रः' इतिशाब्दबोधासंभवात् तत्र स्वरूप ज्ञानाश्रयत्वप्रकारकचैत्रादिविशेष्यक एव 'ज्ञानाश्रयत्ववांश्चैत्रः' इति बोधः संसर्गताव मणिकारेण स्वीकर्तव्यः, तथा चोक्तस्थले ज्ञाधातोरेव ज्ञानाश्रयत्वे शक्तिभ्रमस्थले स्वारसि णाग्रहस्थले चोक्तरीत्या ज्ञानाश्रयत्वप्रकारकशाब्दबोधं प्रति तत्प्रकारक=ज्ञानाश्रयत्वप्रका

न च दीधितिकृन्मते ताद्दशयोग्यताज्ञानहेतुत्वाकल्पनलाघवेपि 'जानाति' इत्याद्यानुपूर्वीज्ञानघटितज्ञाधातुशक्तिज्ञानजन्यज्ञानोपस्थितिघटितशाब्दसामग्र्या भिन्नविषयकप्रत्यक्षं प्रति प्रतिबन्धकतायामाख्यातजन्याश्रयत्वोपस्थितेर्निवेशस्याधिक्याद् गौरवमिति वाच्यम्, भवन्मतेपि 'ज्ञानाश्रयत्वाभाववांश्चैत्रः सुन्दरः' इत्यादिविशिष्टवैशिष्ट्यावगाहिप्रत्यक्षे 'जानाति चैत्रः' इत्याद्यानुपूर्वीज्ञानघटितज्ञाधातुजन्यज्ञानोपस्थितिघटितसामग्र्याः प्रतिबन्धकताधिक्येन गौरवात् ।

मन्मते च ताद्दशसामग्र्या विरोधिज्ञानाश्रयत्वाभाववत्तानिश्चयघटिततया

---

ग्यताज्ञानस्य हेतुता स्वीकरणीया. अन्यत्राश्रयत्वसंसर्गकशाब्दबोधं प्रति ताद्दश=आश्रयतासंसर्गकयोग्यताज्ञानस्य च हेतुता स्वीकार्येति द्विविधकार्यकारणभावकल्पनापत्त्या संसर्गतावादे गौरवम् । प्रकारतावादे तु ज्ञानाश्रयत्वप्रकारकयोग्यताज्ञानस्यैव हेतुत्वमित्येककार्यकारणभावकल्पनेन लाघवमित्यर्थः ।

ननु दीधितिकृन्मते=आश्रयत्वस्य प्रकारतावादे ताद्दश=आश्रयत्वसंसर्गकयोग्यताज्ञानस्य हेतुत्वकल्पनापत्तिर्यद्यपि नास्ति सर्वत्राश्रयत्वप्रकारकयोग्यताज्ञानस्यैव हेतुत्वात्तेनैव च ज्ञाधातोर्ज्ञानाश्रयत्वे शक्तिभ्रमस्थले स्वारसिकलक्षणाग्रहस्थले च निर्वाहादिति लाघवमस्ति तथापि विभिन्नविषयकप्रत्यक्षं प्रति शाब्दसामग्र्याः प्रतिबन्धकत्वं सर्वसंमतमस्ति तत्र 'जानाति' इत्यादावाऽऽश्रयत्वस्य प्रकारत्वे आश्रयत्वस्याख्यातेनोपस्थितिः स्वीकार्या तथा चात्र जानातीत्यानुपूर्वीज्ञानघटिता तथा ज्ञाधातुशक्तिज्ञानजन्यज्ञानोपस्थितिघटिता या शाब्दसामग्री तस्याः प्रतिबन्धकत्वे प्राप्ते ताद्दशप्रतिबन्धकतायामाख्यातजन्याश्रयत्वोपस्थितेर्निवेशस्य=आख्यातजन्याश्रयत्वोपस्थितेरपि प्रतिबन्धकत्वं कल्पनीयमिति गौरवम् । संसर्गतावादे चाख्यातस्यात्र निरर्थकत्वादाश्रयत्वस्य च संसर्गविधया भानादाख्यातजन्याश्रयत्वोपस्थितिरेव न भवति येन तस्याः प्रतिबन्धकत्वकल्पनापत्तिः स्यात्, तथा चाऽऽश्रयत्वोपस्थितेः प्रतिबन्धकत्वकल्पनापत्त्यभावात्संसर्गतावादे लाघवमित्याशङ्क्याह– न चेति । प्रतिबन्द्या परिहारहेतुमाह– भवन्मतेपीति । भवन्मते=आश्रयत्वस्य संसर्गतामतेपि । संसर्गतामते हि 'जानाति चैत्रः' इतिवाक्येन 'आश्रयतासंबन्धेन ज्ञानवांश्चैत्रः' इत्येव बोधो जायते विशिष्टवैशिष्ट्यावगाहिप्रत्यक्षं च 'ज्ञानाश्रयत्वाभाववांश्चैत्रः सुन्दरः' इति. अत्र च ज्ञानाश्रयत्वाभावश्चैत्रे विशेषणं न तु ज्ञानाभाव इत्युक्तशाब्दबोधप्रत्यक्षयोः परस्परं विरोधाभावाद् विभिन्नविषयकत्वाच्चोभयप्रयोजकसामग्र्योर्युगपदापत्तिः संभवतीत्युक्तविशिष्टवैशिष्ट्यावगाहिप्रत्यक्षं प्रति 'जानाति चैत्रः' इतिशाब्दबोधसामग्र्या ज्ञाधातुजन्यज्ञानोपस्थितिघटितायाः प्रतिबन्धकताकल्पनाधिक्येन गौरवमित्यर्थः । ज्ञानाश्रयत्वाभावविशिष्टे चैत्रे सुन्दरत्ववैशिष्ट्यमिति प्रत्यक्षस्य विशिष्टवैशिष्ट्यावगाहित्वम् ।

प्रकारतावादी स्वमते उक्तगौरवाभावमुपपादयति– मन्मत इति । 'जानाति' इत्यत्राख्यातस्याश्रयत्वार्थकत्वादाश्रयत्वस्य प्रकारत्वस्वीकाराच्च 'जानाति चैत्रः' इतिवाक्येन 'ज्ञानाश्र-

तथाविधविशिष्टवैशिष्टयबोधसामग्र्यास्तादृशशाब्दसामग्र्या समं युगपदऽवस्था नासंभवेन तादृशप्रतिबन्धकत्वकल्पनाविरहादित्यधिकं दर्शितदिशाऽवसेयम् ॥

अथैवंरीत्या 'भूतले न घटः' इत्यादौ घटादिपदस्य घटप्रतियोगिकादौ तदु त्तरसुब्विभक्तेरेव वा प्रतियोगितायां लक्षणामभ्युपेत्य तत्र 'घटप्रतियोगिकाभावो भूतलवृत्तिः' इत्याद्याकारकप्रतियोगिताप्रकारकशाब्दबोधोपगम एव समुचितः तथा सति तथाविधसमभिव्याहारज्ञानघटितसामग्र्याः 'घटप्रतियोगिकत्वाभाव-

---

यत्ववांश्चैत्रः' इति बोधो जायते इति शाब्दबोधे चैत्रे ज्ञानाश्रयत्वस्य विशेषणत्वाद् उक्तवि ष्टवैशिष्ट्यावगाहिप्रत्यक्षे च चैत्रे ज्ञानाश्रयत्वाभावस्य विशेषणत्वात् शाब्दबोधप्रत्यक्षयोः पर विरोधः प्राप्त इति शाब्दबोधप्रत्यक्षसामग्र्योर्युगपदवस्थानमेव न संभवति येनैकसाम प्रतिबन्धकत्वकल्पनापत्तिः स्यात् तथा च तादृशसामग्र्याः= 'जानाति चैत्रः,' शाब्दबोधीयसामग्र्या ज्ञानाश्रयत्वप्रकारकयोग्यताज्ञानघटितायाः यो विरोधी ज्ञानाश्रयत्वा ववत्तानिश्चयस्तेन तथाविध=उक्तविशिष्टवैशिष्ट्यावगाहिप्रत्यक्षसामाग्र्याः घटिततया तस्याः प्र क्षसामग्र्यास्तादृश=उक्तशाब्दबोधसामग्र्या सहावस्थानमेव न संभवति, अर्थात् ज्ञानाश्रय भाववत्ताया निश्चयेनोक्तप्रत्यक्षमेव भवति शाब्दबोधश्च ज्ञानाश्रयत्वनिश्चयरूपस्वकारणाभावात मेवानुत्पन्नं तिष्ठतीति न प्रतिबन्धकत्वकल्पनाधिक्यमित्यर्थः । प्रकृतवादविस्तरमुपसंहरि इत्यधिकमिति, वादग्रन्थानां दिक्प्रदर्शकत्वादधिकमेवमेव प्रदर्शितरीत्या स्वयं कल्पनीयमित्यर्थ

एवंरीत्या=यथा 'जानाति' इत्यादावाख्यातार्थाश्रयत्वप्रकारकबोधः स्वीकृतस्तथा 'भू न घटः' इत्यादावपि प्रतियोगिताप्रकारक एव शाब्दबोधः स्वीकर्तव्य इत्यन्वयः । प्रतियोगि प्रकारकशाब्दबोधप्रकारमाह— भूतल इति । 'भूतले न घटः' इत्यत्र घटपदस्य घटप्रतियो लक्षणा तेन नञर्थाऽभावेन चाभेदान्वयेन सप्तम्यन्तभूतलपदस्य च भूतलवृत्तित्वार्थपरत्वेन 'घ प्रतियोगिकाभावो भूतलवृत्तिः' इतिशाब्दबोधो जायते, किं चात्र घटपदस्य घट एवार्थस्तदुत्तर घटपदोत्तरवर्तमानविभक्तेरेव प्रतियोगितायां लक्षणा तत्र घटस्याऽऽधेयत्वसंबन्धेन प्रतियोगिता प्रतियोगितायाश्च निरूपकत्वसंबन्धेन नञर्थाभावे भेदान्वयः 'घटत्वावच्छिन्नप्रतियोगिताका भूतलवृत्तिः' इति शाब्दबोधः । अत्र चाभावे प्रतियोगिता प्रकारतया भासते इति प्रतियो ताप्रकारकः शाब्दबोधः । एवंरूपप्रतियोगिताप्रकारकशाब्दबोधस्वीकारस्योपयोगमाह— सतीति, प्रतियोगिताप्रकारकशाब्दबोधस्वीकारे सति तथाविध='भूतले न घटः' इत्याका समभिव्याहारज्ञानघटितशाब्दसामग्र्याः 'घटप्रतियोगिकत्वाभाववानऽभावः प्रमेयः' इति विशि वैशिष्ट्यावगाहिप्रत्यक्षं प्रति प्रतिबन्धकत्वकल्पनापत्तिर्नास्ति तथा हि— प्रतियोगिताप्रकारक ब्दबोधस्वीकारे 'भूतले न घटः' इति वाक्यात् 'घटप्रतियोगिकाभावो भूतलवृत्तिः' शाब्दबोधो जायते तत्र प्रतियोगिता प्रकारः, 'घटप्रतियोगिकत्वाभाववानभावः प्रमेयः' प्रत्यक्षे चाभावे घटप्रतियोगिकत्वाभावः प्रकार इति प्रत्यक्षशाब्दबोधयोः परस्परं वि

वानभावः प्रमेयः' इत्यादिविशिष्टवैशिष्ट्यबोधं प्रति प्रतिबन्धकत्वाकल्पनेन लाघवादित्युक्तनियमे निपातातिरिक्तत्वविशेषणवैयर्थ्यमिति चेत् ?,

न, 'भूतले न घटः' इत्यादौ घटाद्यभावे भूतलाद्यन्वितसप्तम्यर्थाधेयत्वस्यैव तात्पर्यवशाद् घटादौ सप्तम्यन्तार्थभूतलादिवृत्तित्वाभावस्यान्वयबोधोप्यनुभव-

---

प्राप्ते उक्तशाब्दबोधस्य च 'घटप्रतियोगिकत्वाभाववानभावः' इत्येवं बाधस्तादृशबाधस्याभावस्य 'घटप्रतियोगिकत्वाभावाभाववानभावः' इत्येवमुक्तशाब्दसामग्र्या निश्चये जाते प्रत्यक्षं विशेषणज्ञानरूपस्वकारणाभावात् स्वयमेव नोत्पद्यते इति न शाब्दसामग्र्याः प्रतिबन्धकत्वकल्पनापत्तिः। तथा चैतल्लाघवार्थं प्रतियोगिताप्रकारकशाब्दबोधे स्वीकृतेऽत्र घटप्रतियोगिकेतिघटनामार्थेन नञर्थाभावेन च परस्परमभेदान्वये जाते निपातातिरिक्तनामार्थयोरभेदेनैवान्वयो भवति निपातार्थनिपातातिरिक्तनामार्थयोस्तु भेदान्वयोपि भवतीतिनियमस्य तदर्थं निपातातिरिक्तत्वविशेषणस्य चापेक्षा नास्त्येव– उक्तरीत्या निपातार्थरूपनञर्थाभावस्य नामार्थस्य घटस्य चाभेदान्वयस्य प्रदर्शितत्वादित्यर्थः । अयं भावः– उक्तनियमे निपातातिरिक्तत्वविशेषणस्य निपातार्थनिपातातिरिक्तनामर्थयोर्भेदान्वय एव फलमस्ति तत्रोक्तरीत्या निपातार्थनिपातातिरिक्तनामार्थयोरभेदान्वये संभवति सति भेदान्वयप्रतिपादनं निष्फलमेव किं च निपातातिरिक्तनामार्थयोरभेदान्वयो निपातार्थनिपातातिरिक्तनामार्थयोश्च भेदान्वय इतिवैषम्ये गौरवमपीति तदर्थं निपातातिरिक्तत्वविशेषणमपि व्यर्थमेव निपातातिरिक्तत्वविशेषणाभावे हि निपातार्थनिपातातिरिक्तनामार्थयोरभेदान्वयः प्राप्नोति स च प्रदर्शित एव, एवम् 'चन्द्र इव मुखम्' इत्यत्रापि चन्द्रपदस्य चन्द्रप्रतियोगिके लक्षणया चन्द्रप्रतियोगिकं यत्सादृश्यं तद्वन्मुखमित्येवं निपातार्थसादृश्यस्य निपातातिरिक्तनामार्थचन्द्रस्य चाभेदान्वयो द्रष्टव्यः, एवमन्यत्राप्यूह्यमिति । उक्तनियमे=निपातातिरिक्तनामार्थयोः ( ६८ ) इतिनियमे ।

प्राचीनमते तु प्रतियोगितायाः प्रकारत्वानभ्युपगमात् 'भूतले न घटः' इतिवाक्यात् 'प्रतियोगितासंबन्धेन घटवानऽभावः' इति शाब्दबोधो जायते इत्यऽभावे घट एव प्रकार उक्तप्रत्यक्षे चाभावे घटप्रतियोगिकत्वाभावः प्रकारो न तु घटाभावो येनोक्तशाब्दबोधप्रत्यक्षयोर्विरोधः स्यात्. विरोधाभावे चोभयसामग्र्योर्युगपदवस्थानसंभवात् प्रत्यक्षस्य विभिन्नविषयकत्वाच्च तत्प्रति शाब्दसामग्र्याः प्रतिबन्धकत्वकल्पनापत्त्या गौरवं स्यादेवेति प्रतियोगिताप्रकारक एव शाब्दबोधः समुचित इत्यर्थः ।

उक्तं परिहरति– नेति । परिहारहेतुमाह– भूतल इति । भूतलाद्यन्वितः=भूतलनिरूपितो यः सप्तम्यर्थ आधेयत्वम्=वृत्तित्वम् ( भूतलवृत्तित्वम् ) तस्यैव. यथोक्तरीत्या 'भूतले न घटः' इत्यत्र घटाभावे भूतलवृत्तित्वस्यान्वयः– 'घटप्रतियोगिकाभावो भूतलवृत्तिः' इत्येवमस्ति तथा तात्पर्यवशाद् घटादौ सप्तम्यर्थो यद् भूतलवृत्तित्वं तदभावस्याप्यन्वयबोधः 'घटो भूतलवृत्तित्वाभाववान्' इत्येवं बोधोऽनुभवसिद्ध एवेति कथं प्रतियोगिताप्रकारक एव शाब्दबोधः सर्वत्र

**सिद्धः, अन्यथा-- तादृशवाक्यजन्यस्याऽप्रामाण्यज्ञानानास्कन्दितबोधस्य 'भूतले घटः' इत्यादिवाक्यजन्यघटादिविशेष्यकभूतलाद्याधेयत्वप्रकारकबोधविरोधिताया: सर्वानुभवसिद्धाया अनुपपत्तेः। नञ्पदं विना यत्र धर्मिणि यस्य विशेषणतया भानं यादृशसमभिव्याहाराद् भवति तादृशसमभिव्याहारस्थले नञ्सत्त्वे तत्र धर्मिणि तदभावः प्रतीयते इत्यनुभवाऽपलापप्रसङ्गाच्च। एवं च नञर्थाभावेऽनुयोगितया घटाद्यन्वयबोधोपपत्तये निपातातिरिक्तत्वविशेषणमावश्यकम्।**

---

स्वीक्रियेत। विपक्षे बाधकमाह- अन्यथेति। अन्यथा- 'भूतले न घटः' इतिवाक्यात् 'घ भूतलवृत्तित्वाभाववान्' इत्येवं घटविशेष्यकभूतलवृत्तित्वाभावप्रकारकशाब्दबोधानङ्गीकारे त्व करीत्या तादृशवाक्यजन्यस्य='भूतले न घटः' इतिवाक्यजन्यस्य बोधस्य 'भूतले घट: इतिवाक्यजन्यस्य च बोधस्य परस्परं सर्वानुभवसिद्धो विरोधो नोपपद्येत, अयं भावः- प्रतियो ताप्रकारकशाब्दबोधस्वीकर्तृमते उक्तरीत्या 'भूतले न घटः' इतिवाक्यात् 'घटप्रतियोगिक भावो भूतलवृत्तिः' इत्येवं भूतलवृत्तित्वप्रकारकप्रतियोगिताप्रकारकाभावविशेष्यक एव शा बोधो जायते 'भूतले घटः' इतिवाक्याच्च भूतलवृत्तित्वप्रकारकघटविशेष्यकशाब्दबोधो जा तयोश्च परस्परं विरोधो नोपपद्यते- न हि घटाभावविशेष्यकं भूतलवृत्तित्वप्रकारकं प्रतियो ताप्रकारकं च ज्ञानं घटविशेष्यकभूतलवृत्तित्वप्रकारकज्ञानं विरुणद्धि ग्राह्याभावानवगाहित्वात् तु घटविशेष्यकभूतलवृत्तित्वप्रकारकज्ञानं घटविशेष्यकभूतलवृत्तित्वाभावप्रकारकमेव ज्ञानं विरुण तस्मात् 'भूतले घटः' 'भूतले न घटः' इत्युभयवाक्यजन्यशाब्दबोधयोः परस्परं सर्वानु वसिद्धविरोधस्योपपत्तये 'भूतले न घटः' इतिवाक्यात् 'घटो भूतलवृत्तित्वाभाववान्' इ घटे सप्तम्यन्तार्थभूतलवृ[illegible]त्वाभावस्यान्वयः स्वीकर्तव्य एव. अन्यथा- नञ्पदं विनेत्यादिस नुभवापलापश्च स्यात्। नञ्पदमिति- नञ्पदं विना यादृशसमभिव्याहारात्='भूतले घट इतिसमभिव्याहारात् यत्र धर्मिणि=घटे यस्य=भूतलवृत्तित्वस्य विशेषणतया भानं भवति तादृश मभिव्याहारस्थले नञ्सत्त्वे='भूतले न घटः' इत्यत्र तत्र धर्मिणि=घटे तदभावः=भूतलवृ त्वाभावः प्रतीयते इति सर्वानुभवः "प्रतियोग्यभावान्वयौ तुल्ययोगक्षेमौ" इत्यनेनोक्तः तथा 'भूतले घटः' इत्यस्माद् 'भूतलवृत्तित्ववान् घटः' इतिबोधो जायते इति 'भूतले न घ इत्यस्मात् 'भूतलवृत्तित्वाभाववान् घटः' इतिशाब्दबोधः स्वीकर्तव्य एव. अत्र भूतलवृत्तित्वाभ ऽनुयोगित्वरूपेण घटस्यान्वयोऽस्ति- घटस्यैवात्र भूतलवृत्तित्वाभावानुयोगित्वात्। अनुयोगि रूपेण चान्वयो भेदान्वय एव भेदेन च नामार्थयोरन्वयो न भवतीत्यत्र नञर्थे भूतलवृत्तित्वा घटस्याप्यनुयोगित्वेन रूपेण भेदान्वयो न स्यादिति तदुपपत्तये उक्तनियमे निपातातिरिक्तत्ववि षणं देयमेव तथा च निपातातिरिक्तनामार्थयोर्भेदेनान्वयासंभवेपि निपातार्थनिपातातिरिक्तनामा योस्तु भेदेनान्वयः संभवतीति नञो निपातत्वात् तदर्थस्याभावस्य घटस्य च भेदेनाप्यन्वयो विरुद्ध इत्याह- एवं चेति।

एवम् ' न पचति चैत्रः ' ' चैत्रस्य न धनम् ' इत्यादौ पाककृतिचैत्रस्वत्वाद्यभावस्य नञर्थस्य चैत्र– धनादावन्वयबोधोपपत्तये च तदावश्यकम् ।

न चोक्तस्थलेषु नञोऽभाववल्लाक्षणिकतयाऽभाववता सममनुयोगिनोऽभेदान्वयबोध एव तत्रोपेयते इति वाच्यम्, तथा सति सर्वत्राऽभाववत एव नञर्थतया मुख्यार्थपरनञो दुर्लभत्वापत्तेः । अभावस्य भेदान्वयोपगमेपि कार्यकारणभावकल्पनाधिक्यविरहेणाऽभाववति लक्षणाऽनौचित्यात् । अभाववतोऽभेदान्वयबो-

---

एवमिति– यथोक्तस्थले नञर्थाभावस्य घटस्य च भेदेनान्वयोपपत्त्यथमुक्तनियमे निपातातिरिक्तत्वविशेषणमावश्यकमेवम् ' न पचति चैत्रः ' इत्यत्र नञर्थस्य पाककृत्यऽभावस्य चत्रे विशेष्यत्वादिलक्षणभेदसंबन्धेनान्वयोपपत्त्यर्थम् ' चैत्रस्य न धनम् ' इत्यत्र नञर्थस्य चैत्रस्वत्वाभावस्य धने भेदसंबन्धेनान्वयोपपत्त्यर्थं च तत्=निपातातिरिक्तत्वविशेषणमावश्यकम् । अन्यथात्र नञर्थाभावस्य चैत्रादौ भेदेनान्वयो न भवेदित्यर्थः ।

ननु यद्युक्तस्थलेषूक्तरीत्या भेदेनैवान्वयः संभवेन्नाऽभेदेन तदोक्तनियमे निपातातिरिक्तत्वविशेषणमावश्यकं स्यादपि नैवमस्ति किं तूक्तस्थलेषु नञोऽभाववति लक्षणा तेनाभाववता चानुयोगिनोऽभेदान्वयोपि संभवति यथा– ' भूतले न घटः ' इत्यत्र घटाभाववदभिन्नं भूतलम्. ' न पचति चैत्रः ' इत्यत्र पाककृत्यभाववदभिन्नश्चैत्रः. ' चैत्रस्य न धनम् ' इत्यत्र चैत्रस्वत्वाभाववदभिन्नं धनमित्येवमभेदान्वयबोधो भविष्यतीत्याशङ्क्याह–न चेति । परिहारहेतुमाह– तथा सतीति, एवं हि सर्वत्र नञोऽभाववति लक्षणापत्त्या नञः स्वमुख्यार्थाभावबोधकत्वं क्वचिदपि नोपलभ्येत विनिगमनाविरहात् सर्वत्रैव लक्षणाप्रसङ्गात् । मुख्यार्थाभावे च लक्षणापि न स्यात् लक्षणायाः शक्यसंबन्धरूपत्वात् । नञश्चोक्तस्थलेष्वभावबोधकत्वे स्वीकृते उक्तानुपपत्त्या उक्तनियमे निपातातिरिक्तत्वविशेषणमावश्यकमित्यर्थः ।

ननूक्तस्थलेषु सर्वत्रैव वाऽभावस्य भेदान्वयोपगमे नञोऽभावार्थकत्वं स्वीकार्यं तथा च नञोऽभाववति लक्षणाऽनङ्गीकारेणाऽभावपरत्वाश्रयणे नञ्पदघटितवाक्यस्थले नञाऽभावस्योपस्थितिः स्वीकार्या तादृशनञ्पदजन्याभावोपस्थितेरपि शाब्दबोधं प्रति कारणत्वापत्त्या कार्यकारणभावकल्पनाधिक्येन गौरवं स्यात्; मन्मते च नञोऽभाववति लाक्षणिकतयाऽभावोपस्थितेरपेक्षैव नास्ति येनाभावोपस्थितेः कारणत्वं स्यादिति न तादृशं गौरवमित्याशङ्क्याह–अभावस्येति, अभावस्य भेदान्वयोपगमाथ नञोऽभावार्थकत्वस्वीकारेपि कार्यकारणभावकल्पनायामाधिक्यं नास्त्येव यतः– नञोऽभावार्थकत्वस्वीकारे यथा नञ्पदघटितवाक्यजन्यशाब्दबोधं प्रति नञ्पदजन्याऽभावोपस्थितेः कारणत्वमस्ति. तथा नञोऽभाववति लक्षणास्वीकारे नञ्पदजन्याभाववदुपस्थितेः कारणत्वमस्त्येवेत्युभयमते कार्यकारणभावे साम्यमेव नाधिक्यमिति न नञोऽभाववति लक्षणास्वीकारः समुचित इत्यर्थः ।

विपक्षे बाधकमाह– अभाववत इति, नञोऽभाववति लक्षणास्वीकारे तस्याभाववतोऽनुयो-

धोपगमे ' भूतले घटः ' इत्यादिवाक्यजन्यबोधे ' भूतले न घटः ' इत्यादिवाक्यजन्यबोधस्याऽविरोधितापत्तेश्च. लाघवात् स्वरूपसंबन्धेन ग्राह्याभावनिश्चयस्यैव विशिष्टबुद्धिविरोधित्वात्. न त्वभेदसंसर्गकग्राह्याभावाश्रयप्रकारकनिश्चयस्येति । ' नीलो घटः ' इत्यादौ विशेषणविभक्तेरभेदार्थकत्वमतेपि यद्यप्युक्तरीत्या लाघवं संभवति तथापि तत्रापि न नो विद्वेष इति दिक् ॥

गिपदार्थेनाभेदान्वयस्वीकारे ' भूतले घटः ' ' भूतले न घटः ' इतिवाक्यजन्यशाब्दबोधयो खलु सर्वानुभवसिद्धो विरोधः स नोपपद्येत. यतः— ' भूतले घटः ' इति वाक्यात् ' भूतल त्तिर्घटः ' इति बोधो जायते. नञोऽभाववति लक्षणया ' भूतले न घटः ' इत्यस्माच्च ' घटाभाव दभिन्नं भूतलम् ' इति बोधो जायते इति प्रथमवाक्येन घटे भूतलवृत्तित्वस्य द्वितीयवाक्येन भूतले घटाभाववदभिन्नत्वस्य बोधनात् परस्परं न विरोध उपपद्यते । घटे भूतलवृत्तित्वबो घटे भूतलवृत्तित्वाभावबोधेनैव प्रतिपक्षिणा विरोधसंभवात् । स्वयमपि विरुद्धाविरुद्धस्वरू माह— लाघवादिति, अन्यप्रकारेण विरोधस्वीकारे गौरवाल्लाघवात् ' भूतले घटः ' इत्यत्र यद् भूतलवृत्तित्वं स्वरूपसंबन्धेन=अभावीयविशेषणतासंबन्धेन तदभावनिश्चयस्य=भूतलवृत्तित्वा बनिश्चयस्यैव=घटो भूतलवृत्तित्वाभाववानित्यस्यैव बोधस्य विशिष्टबुद्धिविरोधित्वात्=घटो भूत त्तिरित्येवं घटे भूतलवृत्तित्वलक्षणा या विशिष्टबुद्धिस्तां प्रति विरोधित्वमुपपद्यते, न त्वऽभेदसं कग्राह्याभावाश्रयप्रकारकनिश्चयस्य नाम ग्राह्याभावो यो भूतलवृत्तिर्घटाभावस्तदाश्रयो यत् भाववद् अभेदसंबन्धेन यस्तत्प्रकारकनिश्चयः=घटाभाववदभिन्नं भूतलमिति तस्य तु विरोधि नोपपद्यते इत्यर्थः ।

नीलो घट इति, अत्र कृष्णंभट्टो यथा— " यथा ' राजस्वत्वाभाववान् पुरुषः सुन्दर इति प्रत्यक्षं प्रति षष्ठी स्वत्वार्थिकेति नव्यमते ' राज्ञः पुरुषः ' इति शाब्दसामग्र्याः प्रतिब कत्वं न कल्प्यते— ' राजस्वत्वाभाववान् पुरुषः ' इतिविशेष्यतावच्छेदकप्रकारकनिर्णयः (निश्च प्रत्यक्षे कारणं स एव निर्णयः शाब्दबोधे बाधः तादृशबाधाभावः शाब्दबोधे कारणं च बाधतदभावयोर्युगपदवस्थानासंभवात् सामग्र्योर्मेलनं न संभवतीति न शाब्दसामग्री प्रत प्रतिबन्धिका, तथा— ' नीलाभेदाभाववान् घटः प्रमेयः ' इति प्रत्यक्षेपि ' नीलाभेदाभाव घटः ' इति विशेष्यतावच्छेदकप्रकारकनिर्णयः कारणं स एव च ' नीलो घटः ' इतिवाक्यज ' नीलाभेदवान् घटः ' इतिशाब्दबोधे बाधः तस्य बाधस्याभावः शाब्दबोधे कारणमिति प्रत्य शाब्दसामग्र्योर्बाधतदभावघटितयोर्यौगपद्यासंभवात् न शाब्दसामग्री प्रत्यक्षे प्रतिबन्धिकेत्युक्तरी त्यर्थः । तथा च ' नीलो घटः ' इत्यत्रापि विशेषणविभक्तिरभेदबोधकतया षष्ठीवत्सा त्यर्थः । इष्टापत्त्या समाधत्ते— तथापि तत्रापि न नो विद्वेष इति दिगिति, तथापि प्रतिब प्रतिबन्धकभावस्थले उक्तरीत्या लाघवसंभवेपि तत्रापि=प्रतिबन्धकतालाघवलभ्ये विशेषणविभ भेदार्थकत्वेपि नः=अभेदसंसर्गतावादिनामस्माकं युक्तिबलादस्तुसिद्धौ न विद्वेष इति भावः । व्युत्पत्तिवादे नामार्थान्वयबोधविवरणम् " इति ॥

प्रत्ययाश्च विभक्तिकृत्तद्धितादिभेदेन नानाविधाः । विभक्तिश्च सुप्तिङ्भेदेन द्विविधा । सुब्विभक्तयः प्रथमाद्वितीयादयः सप्त । तत्र प्रथमार्थः प्रकृत्यर्थे विशेषणविधयाऽन्वयिनी संख्यैव, अत एव यत्र विशेष्यवाचकसमानविभक्तिकपदं निपातपदं वा नास्ति तत्र प्रथमान्तार्थस्य विशेष्यभासकसामग्र्यऽभावादसौ मुख्यविशेष्यतयैव भासते । संख्यावाचकानां चैकवचनद्विवचनबहुवचनानामेकत्वत्वद्वित्वत्वबहुत्वत्वावच्छिन्नेषु शक्तिः । शक्तता च सुत्वौत्वजस्त्वादिना न तु स्वादितिबादिसाधारणैकवचनत्वादिना—एकवचनत्वादेर्दुर्वचत्वात् । न चैकत्वादिवाचकत्वं तत्—वाचकतायाः शक्ततारूपत्वे आत्माश्रयप्रसङ्गात्, बोधकता-

---

पूर्वं प्रत्ययजन्योपस्थितेः शाब्दबोधं प्रति कारणत्वमुक्तमिति संप्रति प्रत्ययं निरूपयति— प्र-ययाश्चेति । स्पष्टोयं ग्रन्थः । प्रथमं प्रथमाविभक्त्यर्थमाह— तत्रेति । प्रथमया कर्मत्वादीनां बोधो न भवतीति संख्यैव प्रथमार्थः । सा च संख्या प्रकृत्यर्थे विशेषणं भवतीत्यर्थः । "संख्यैवेत्येवकारेण संख्यातिरिक्तार्थव्यवच्छेदः, अन्यथा ' तण्डुलं पचति ' इत्यत्र द्वितीयार्थ एकत्वं कर्मत्वं च तत्र ' एकत्वविशिष्टतण्डुलनिष्ठा कर्मता ' इति बोधाद् यथैकत्वं प्रकार एव न तु विशेष्यं तथा संख्यातिरिक्तार्थस्वीकारे तस्यैव विशेष्यतया भानं स्यान्न त्वेकत्वस्य ' घटः' इत्यत्र नीलादिपदान्ताऽसमभिव्याहारे ' घटवृत्त्येकत्वम् ' इत्येवानुभूयते न तु 'एकत्ववान् घटः' इति तथा सति घटत्वादिवदेकत्वस्यापि प्रकृत्यथत्वं स्यादिति प्रथमा निरर्थकैव स्यादिति वैयाकरणमतप्रवेश इति भावः" इति कृष्णंभट्टाः । प्रथमार्थस्य संख्यायाः शाब्दबोधे विशेष्यत्वेपि प्रकृत्यर्थे नीलादिवदऽन्वयित्वामुक्तम्—विशेषणविधयेति । अत एव=संख्यामात्रस्यैव प्रथमार्थत्वादेव । ' नीलो घटः ' इत्यत्र विशेष्यवाचकसमानविभक्तिकं नीलपदमस्तीति घट एव विशेष्यतया भासते । ' चन्द्र इव मुखम् ' इत्यत्र इवेतिनिपातस्य सादृश्यार्थकस्य सत्त्वात् चन्द्रप्रतियोगिकसादृश्यविशेष्यतया किं वा चन्द्रविशेष्यतया मुखमेव भासते न प्रथमार्थः संख्या । ' घटः ' इत्यत्र च प्रथमान्तार्थस्य=घटस्योक्तविशेष्यभासकसामग्र्यऽभावादसौ=प्रथमार्थः संख्यैव मुख्यविशेष्यतया भासते— ' घटवृत्त्येकत्वम् ' 'घटौ' इत्यत्र ' घटवृत्ति द्वित्वम् ' ' घटाः ' इत्यत्र ' घटवृत्ति बहुत्वम् ' इति बोधोत्पात् । शक्ततेति—सुइत्येकवचनस्यैकत्वं शक्यमित्येकत्वे एकवचनसुपदस्य शक्तिः शक्ततावच्छेदकं च सुत्वमेव नैकवचनत्वम्, एवं द्वित्वे औइतिद्विवचनपदं शक्तं शक्ततावच्छेदकमौत्वमेव न द्विवचनत्वम्, बहुत्वे जसितिबहुवचनपदं शक्तं शक्ततावच्छेदकं च जस्त्वमेव न तु बहुवचनत्वमित्यन्वयः । एकवचनत्वादेः शक्ततावच्छेदकत्वाऽसंभवे हेतुमाह— एकवचनत्वादेरिति । नन्वेकत्वादिवाचकत्वमेव तत्=एकवचनत्वादि ज्ञेयमित्याशङ्क्याह— न चेति । परिहारमाह— वाचकतााया इति, ' एकत्ववाचकत्वमेकवचनत्वम् ' इत्यत्र या वाचकता सा यदि शक्ततारूपा गृह्यते तदा ' केन रूपेण शक्तता ' इति निरूपणे किं वा शक्ततावच्छेदकनिरूपणे शक्तताज्ञानापेक्षाप्राप्तेत्यात्माश्रयदोषापत्तिः । यदि च वाचकतात्र बोधकतारूपा गृह्यते तदा शक्तिभ्रमेण औइ-

रूपत्वे शक्तिभ्रमेण द्विवचनादीनामप्येकत्वबोधकतयाऽतिप्रसक्तत्वात् । न चैक वचनत्वादिकं जातिविशेषः—सुत्वादिना साङ्कर्यात् ।

न च शक्तिसंबन्धेनैकवचनादिपदवत्त्वं तत्, तादृशाज्ञानदशायां च सुत्वादिन शक्तिभ्रमादेव शाब्दबोधः, एकवचनादिशब्दस्य पदद्वयात्मकतया तादृशसमुदा यशक्तेरेवाप्रसिद्धिरिति तु नाशङ्कनीयम्— एकं वक्तीत्यादिव्युत्पत्त्या एकवच नादिशब्दस्य स्वादिबोधकत्वे एकादिशब्देपि तादृशव्यवहारापत्तेः । एकवचना दिशब्दस्य स्वादौ रूढिस्वीकारस्यावश्यकत्वादिति वाच्यम्, ग्रन्थकारीयसङ्के तेनैवोपपत्तावेकवचनादिपदे शक्तेरप्रामाणिकत्वात् । "तान्येकवचनद्विवचन

---

त्यादिद्विवचनस्याप्येकत्वबोधकत्वेन द्विवचनस्याप्येकवचनत्वं स्यादित्यन्वयः । साङ्कर्यादिति— न्वपदघटकसुपदे सुत्वमस्त्येकवचनत्वं नास्ति अम्विभक्तावेकवचनत्वमस्ति सुत्वं नास्ति सुत्व वचनत्वं च सुविभक्तावस्तीति साङ्कर्यम् । सुप्त्वादिनेति पाठे तु सुप्त्वं सुब्बहुवचनेष्वस्ति ए कवचनत्वं नास्ति. एकवचनत्वं च तिङेकवचनेष्वस्ति तत्र सुप्त्वं नास्ति सुप्त्वमेकवचनत्वं च कवचनेष्वस्तीति साङ्कर्यं विज्ञेयम् ।

शङ्कते— न चेति । अयमर्थः— एकत्वादिबोधकं स्वादिकं तादृशस्वादिबोधकं चैकवचना दम्— "तान्येकवचन" इत्यादिसङ्केतात् तत्रैकवचनादिपदनिष्ठायाः शक्तेर्निरूपकत्वं स्वादि ऽस्तीति तादृशनिरूपकत्वसंबन्धेन स्वादिषु शक्तिर्वर्तत इति तादृशशक्तिसंबन्धेन स्वादिष्वेक नादिपदं वर्तते इति तादृशं शक्तिसंबन्धेनैकवचनादिपदवत्त्वमेवैकत्वादिनिरूपितशक्तताया अव दकं न तु सुत्वादिकमित्यर्थः । किं वा तत्पदेनात्रोक्तैकवचनत्वं ग्राह्यं तच्च शक्ततावच्छेदकं नन्वेतादृशशक्ततावच्छेदकज्ञानाभावे स्वादिनैकत्वादिबोधो न स्यादित्याशङ्क्याह— तादृ उक्तशक्ततावच्छेदकाऽज्ञानदशायामपि स्वादीनां सुत्वादिरूपेणैकत्वादिषु शक्तिभ्रमः संभव तादृशशक्तिभ्रमादेवैकत्वादिबोधः संभवतीत्यर्थः । नन्वेकस्मिन्नर्थे एकस्य पदस्य शक्तिर्भवति त्वनेकपदानामत एव वाक्यस्य वाक्यार्थे शक्तिर्न स्वीक्रियते तथा च 'एकवचनम्' इति पदद्वयात्मकमस्तीति तादृशपदसमुदायस्य शक्तिरेव प्रसिद्धा नास्ति यस्या उक्तरूपेण संभ स्यादित्याशङ्क्याह— एकवचनादिशब्दस्येति, एकवचनादिशब्दानां स्वादिबोधकत्वस्य प्रसि त्वात् स्वादिषु शक्तिरस्त्येव तत्रापि रूढ्यैव बोधकत्वं स्वीकार्यं यदि चैकवचनादिपदं वक्तीति व्युत्पत्त्या स्वादिबोधकत्वं स्यात्तदैकशब्दस्याप्येकत्वबोधकत्वेन 'एकं वक्ति' इतियो र्थवत्त्वात् किं वा स्वादिबोधकैकवचनपदघटकत्वात् स्वादिबोधकत्वमापद्येत तस्मादेकवच दिपदस्य स्वादिषु रूढिरेवास्तीति स्वीकार्यं स्वादिष्वेकपदस्य तु रूढिर्नास्त्येवेत्यभिप्रायेण एकमिति । तादृशव्यवहारापत्तेः=स्वादिवाचकत्वव्यवहारापत्तेः । परिहारमाह— ग्रन्थकारी एकवचनादिपदं स्वादिबोधकमिति पाणिनिसङ्केत एव न तु शक्तिः शक्तेरीश्वरेच्छारूपत्वा पाणिनिसङ्केतेनाप्येकवचनादिपदानां स्वादिबोधकत्वमुपपद्यते एवेति तत्र शक्तिस्वीकारो

इत्यादिपाणिनिसूत्रस्य तदीयसङ्केतग्रहपरतयाप्युपपत्तेः । न हि " यू स्त्र्याख्यौ नदी " इत्यनुशासनात् स्त्र्याख्येदूदन्तादिशब्दे नद्यादिपदस्य शक्तिः सिद्ध्यति, किं तु तदीयसङ्केत एव । अत एव नद्यादिसंज्ञाऽऽधुनिकसङ्केतशालित्वात् पारिभाषिक्येव न त्वौपाधिकी ।

अथैवमपि पाणिनिसङ्केतसंबन्धेन तादृशपदवत्त्वमेवैकत्वादिशक्ततावच्छेदकमस्त्विति चेत्?, न । तादृशसङ्केतस्य केन रूपेण संबन्धता?, संकेतत्वेनेति चेत्?, तर्हि कस्यचित् पुंस एकवचनपदात् स्वौजसादिर्बोद्धव्य इत्याकारकसंकेतस्यापि संभवादतिप्रसक्तिर्दुर्वारैव । पाणिनिसंकेतत्वेनेतिचेत्?, तर्हि व्याकरणप्रणेतुः पुरुषान्तरस्यापि तादृशसंकेतस्य सभवात् तदीयसङ्केतसंबन्धेन तत्पदवत्त्वस्य. डित्थादिपदात् स्वौजसादिर्बोद्धव्य इत्याकारकपुरुषसंकेतसंबन्धेन डित्थादिपदवत्त्वस्य वा विनिगमनाविरहेण शक्ततावच्छेदकताप्रसङ्गस्तथा चागत्या आनुपूर्वीविशेष एव शक्ततावच्छेदक इति ।

---

एवेत्यर्थः । न हीति– यथा– " यूस्त्र्याख्यौ नदी " इत्यत्र स्त्र्याख्येदूदन्तादिशब्देषु नदीपदस्य पाणिनिसंकेत एव न तु शक्तिस्तथैकवचनादिपदस्यापि स्वादिषु पाणिनिसंकेत एव न तु शक्तिरित्यर्थः । उक्ते विनिगमनामाह– अत एवेति, नद्यादिसंज्ञा पाणिनिकृताधुनिकसंकेतशालित्वात् परिभाषिक्येव न त्वौपाधिकी=उपाधिभूतं घटत्वादिकं प्रवृत्तिनिमित्तं कृत्वा प्रवृत्ता संज्ञा औपाधिकी भवति यथा घटे घट इति नद्यां च नदीति नह्येवमीदूदन्तशब्देषु नदीत्वं वर्तते येन नदीसंज्ञा औपाधिकी स्यात्, एवं प्रकृतेप्येकवचनादिपदं स्वादिषु पारिभाषिकमेवेति शक्तेरभावान्नोक्तं युक्तमित्यर्थः । शक्तिर्नास्त्येव यस्याः संबन्धत्वं स्यादिति यावत् ।

ननु " तान्येकवचनद्विवचन " इति संकेतेन ' एकवचनपदशक्यं सुअमादिकम्, द्विवचनपदशक्यं औड्त्यादिकम्, बहुवचनपदशक्यं जसादिकम् ' इति बोध्यते तथा च निरूपकत्वसंबन्धेन पाणिन्युक्तसंकेतः सुअमादिषु वर्तते तादृशसंकेतसंबन्धेन च सुअमादिषु एकवचनपदं वर्तते इति सुअमादीनामेकवचनपदवत्त्वं प्राप्तमिति तादृशपदवत्त्वमेव=एकवचनपदवत्त्वमेव सुअमादिषु या एकत्वनिरूपिता शक्तता तादृशशक्तताया अवच्छेदकं ज्ञेयम्, एवम्– औड्त्यत्र पाणिनिसंकेतसंबन्धेन द्विवचनपदवत्त्वं द्वित्वशक्ततावच्छेदकम्, जसादौ च बहुवचनपदवत्त्वं बहुत्वशक्ततावच्छेदकमित्याशङ्कते– अथेति । परिहरति– नेति । परिहारमुपपादयति–तादृशेति । तादृशसंकेतस्य=पाणिनिसंकेतस्य । यदि पाणिनिसंकेतस्यात्र केवलं संकेतत्वरूपेणैव संबन्धता तदा केनचित्पुरुषेण ' एकवचनपदात् स्वौजसादिर्बोद्धव्यः ' इति संकेते कृते तादृशसंकेतसंबन्धेन एकवचनपदवत्त्वं औजसादिनिष्ठाया द्वित्वबहुत्वशक्ततायाः अपि अवच्छेदकं स्यादित्यतिप्रसङ्गः स्यात् । यदि च पाणिनीसंकेतस्य पाणिनिसंकेतत्वेनैव संबन्धत्वं तदा . चन्द्रादीनामपि व्याकरणप्रणेतृत्वेन चन्द्रादिसंकेतसंबन्धेनैकवचनपदवत्त्वस्याप्येकत्वादिशक्ततावच्छेदकत्वं स्यात् तथा

यत्तु संख्यापि प्रकृतेरर्थः, एकवचनादिकं चैकत्वाद्यर्थे तात्पर्यग्राहकमेव, चैवमेकप्रकृत्युपस्थाप्ययोरर्थयोः परस्परमन्वये आकाङ्क्षाविरहाद् घटादावेकत्वा द्यन्वयानुपपत्तिः, अन्यथा हर्यादिपदादुपस्थितयोरश्वसूर्ययोराधाराधेयभावेनान्वयापत्तिः, घटादिपदस्यैकत्वादिविशिष्टघटादौ च न शक्तिसंभवः 'घटरूपं पश्य' इत्यादौ संख्यानवच्छिन्नघटादेरेवाऽन्वयबोधादितिवाच्यम्, आकाङ्क्षावैचित्र्यादेकप्रकृत्युपस्थाप्ययोरपि घटैकत्वयोः परस्परमन्वयसंभवात् । अत एव खण्डशक्त्यैवकाराद्युपस्थाप्ययोरन्ययोगव्यवच्छेदाद्योः परस्परमन्वयबोधः ।

---

केनचित् 'डित्थपदात् स्वौजसादिर्बोद्धव्यः' इति संकेते कृते तादृशसंकेतसंबन्धेन डित्थपदत्वस्याप्येकत्वादिशक्ततावच्छेदकत्वं स्यादिति विनिगमनाविरहः=कस्य शक्ततावच्छेदकत्वं स्वीकार्यमिति निश्चयो न स्यादित्यऽगत्याऽऽनुपूर्वीविशेषः=सुत्वौत्वजस्त्वादिकमेव शक्ततावच्छेदकत्वं स्वीकार्यमित्यर्थः ।

यत्तु केनचिदर्धवैयाकरणेनोक्तम्—'प्रथमाविभक्त्यर्थः संख्यापि 'घटः' इत्यादौ प्रकृतेरेवार्थो न तु विभक्तेः, न चापि विभक्तेः सर्वथा नैरर्थक्यम् ? एकवचनादीनामेकत्वादौ तात्पर्यग्राहकत्वेन सार्थक्यात्' इति तदनुवदति— यत्त्विति । ननु संख्याया अपि प्रकृत्यर्थत्वे 'घटः' इत्यादौ घटपदेनैव संख्याया घटस्य चोपस्थितिः स्यादित्येकप्रकृत्युपस्थाप्यत्वाद् घटसंख्याया अन्वयो न स्यात्तादृशाकाङ्क्षाविरहादित्याशङ्कते— न चेति । विपक्षे बाधकमाह— अन्यथेति । अन्यथा=एकप्रकृत्युपस्थाप्ययोरपि परस्परमन्वये हरिपदेनोपस्थितयोरश्वसूर्ययोराधाराधेयभावेनान्वयः स्यात् न चैवं भवतीत्यर्थः । ननु यथैकघटपदेनोपस्थितयोरपि घटघटत्वयोः परस्परमन्वयो भवति तथात्राप्येक ( घटपदरूप ) प्रकृत्युपस्थितयोर्घटैकत्वयोः परस्परमन्वयो भविष्यतीत्याशङ्क्याह— घटादिपदस्येति । तत्र घटपदस्य घटत्वविशिष्टे एव घटे शक्तिरस्तीति संभवत्यन्वयः, अत्रत्वेकत्वविशिष्टे घटे घटपदस्य शक्तिर्न संभवति, अन्यथा एकत्वावच्छिन्नस्यैव घटस्य सर्वत्र बोधः स्यान्न त्वेकत्वानवच्छिन्नस्य, भवति च संख्याऽनवच्छिन्नस्य घटस्य 'घटरूपं पश्य' इत्यादौ बोधः, 'घटरूपम्' इत्यादौ रूपे एव संख्यान्वयस्य प्रतीयमानत्वादित्याह— घटरूपमिति । परिहारहेतुमाह— आकाङ्क्षेति । आकाङ्क्षावैचित्र्यात्=शक्तिवैचित्र्यात् ( अत्राकाङ्क्षापदं शक्तिपरमेवात्र ज्ञेयम् ) अत एव=आकाङ्क्षा ( शक्ति ) वैचित्र्यादेकप्रकृत्युपस्थाप्ययोरप्यर्थयोः परस्परमन्वयसंभवादेव एकेनाप्येवकारपदेन खण्डशक्त्योपस्थितयोरन्ययोगव्यवच्छेदयोः परस्परमन्वयो भवत्येव, तत्रान्ययोगप्रतियोगिकस्य व्यवच्छेदस्य=अभावस्य प्रतीयमानत्वेन स्वप्रतियोगिकत्वसंबन्धेन व्यवच्छेदेऽन्ययोगस्यान्वयो भवति । तथा प्रकृतेपि संख्यायां घटादौ च घटादिपदानां खण्डशक्तिस्वीकारेण परस्परमन्वयसंभवान्न किंचिदनुपपत्तिरित्यर्थः ।

न चैवं कर्मत्वादिकमपि प्रकृत्यर्थ एवास्तु किं तत्र द्वितीयादिशक्त्येतिवाच्यम्, नामार्थधात्वर्थयोः साक्षाद्भेदान्वयबोधस्याव्युत्पन्नतया कर्मत्वादेर्नामार्थत्वे तेन समं धात्वर्थान्वयाऽसंभवात् ।

न च संख्यायाः प्रातिपदिकार्थत्वे सति तात्पर्यज्ञाने विनैव शक्तिभ्रमं लक्षणाग्रहं च द्विवचनाद्यन्तपदादेकत्वादिबोधसंभवात्– एकत्वादितात्पर्येणैकवचनान्तस्येव द्विवचनान्तस्यापि पदस्य स्वारसिकप्रयोगापत्तिरिति वाच्यम्, अनादितात्पर्यस्यैव स्वारसिकप्रयोगमूलत्वात्. एकवचनाद्यन्तपदस्यैवैकत्वादावनादितात्पर्योपगमेनातिप्रसङ्गविरहात् । " द्व्येकयोर्द्विवचनैकवचने " इत्याद्यनुशासनं च तादृशतात्पर्यग्राहकमेवेति वैयाकरणमतम् ।

तदसत्– अनन्तानां प्रकृत्यानुपूर्वीणां शक्ततावच्छेदकत्वापेक्षयाऽल्पतरविभक्त्याद्यानुपूर्वीणामेकत्वादिशक्ततावच्छेदकत्वस्यैवोचितत्वात् ।

---

ननु यथा संख्या प्रकृत्यर्थस्तथा कर्मत्वादिकमपि ' घटं करोति ' इत्यादौ प्रकृत्यर्थ एवास्तु द्वितीयादिविभक्तिश्च तात्पर्यग्राहिका भविष्यतीत्याशङ्क्याह– न चैवमिति । परिहारहेतुमाह– नामार्थेति, नामार्थधात्वर्थयोः साक्षाद् भेदेनान्वयो न भवतीति कर्मत्वादेरपि प्रकृत्यर्थत्वेन नामार्थत्वे प्राप्ते तेन=कर्मत्वादिना सह धात्वर्थस्य साक्षाद् भेदेनान्वयो न स्यादिति न कर्मत्वादीनां प्रकृत्यर्थत्वं स्वीकर्तुं शक्यते– कर्मत्वादेर्धात्वर्थेन सह साक्षाद्भेदान्वयस्यैवेष्टत्वात् कर्मत्वादेर्द्वितीयाद्यर्थत्वस्वीकारे तु प्रत्ययार्थधात्वर्थयोः साक्षाद् भेदान्वयस्येष्टत्वात् निरूपकत्वसंबन्धेन कर्मत्वादेर्धात्वर्थेन सह साक्षाद् भेदान्वयः संभवति ।

ननु संख्यायाः प्रातिपदिकार्थत्वे=प्रकृत्यर्थत्वस्वीकारे शक्तिभ्रमं लक्षणाग्रहं च विनैव ' घटौ ' इतिपदमेकत्वविशिष्टं बोधयत्विति तात्पर्यज्ञाने सति द्विवचनाद्यन्तपदादेकत्वादिबोधसंभवादेकत्वादितात्पर्येणैकवचनान्तस्येव द्विवचनान्तस्यापि पदस्य प्रयोगः स्यादेव प्रकृतेरेवैकत्वादिसंख्याबोधकत्वस्वीकारात् तादृशप्रकृतेश्च द्विवचनान्तप्रयोगेपि सत्त्वादित्याशङ्क्याह– न चेति । संख्याया विभक्त्यर्थत्वे तु द्विवचनान्तप्रयोगे एकत्वबोधकैकवचनस्याभावान्न द्विवचनान्तपदेनैकत्वबोधापत्तिः, एकत्वतात्पर्येण द्विवचनान्तप्रयोगापत्तिर्वेति भावः । परिहारहेतुमाह– अनादीति, अनादितात्पर्ये सत्येव स्वारसिकप्रयोगो भवति, एकत्वादौ चैकवचनाद्यन्तपदस्यैवानादितात्पर्यस्वीकारेण नैकत्वतात्पर्येण द्विवचनान्तपदप्रयोगापत्तिरिति नातिप्रसङ्ग इति संख्यायाः प्रकृत्यर्थत्वस्वीकारेपि न दोष इत्यर्थः । नन्वेकवचनान्तपदस्यैवैकत्वादावनादितात्पर्यमस्ति न द्विवचनाद्यन्तपदस्येत्यत्र किं मानमित्याशङ्क्याह– द्व्येकयोरिति । तादृशतात्पर्यग्राहकम्=अनादितात्पर्यग्राहकम् ।

यत्त्वित्यादिनोक्तं वैयाकरणमतं निराचष्टे– तदसदिति, संख्यायाः प्रकृत्यर्थत्वे प्रकृतेरेव संख्यायां शक्तत्वं स्यादिति घटपटादिप्रकृत्यानुपूर्वीणामनन्तानां शक्ततावच्छेदकत्वं स्यादिति महद् गौरवं स्यात्. तस्मात् सुबौत्वजस्त्वादिरूपाणां विभक्त्यानुपूर्वीणामेव लाघवाच्छक्ततावच्छेदकत्वमुक्तं विभक्त्यानुपूर्वीणामल्पतरत्वादिति विभक्तेरेव संख्यार्थकत्वं न प्रकृतेरित्यर्थः ।

न च प्रातिपदिकत्वमेव शक्ततावच्छेदकं न तु घटपदत्वादिकमिति न शक्त्या-
नन्त्यमिति वाच्यम्, प्रातिपदिकत्वस्य दुर्वचत्वात् । तदज्ञानेप्येकत्वादिज्ञा-
स्याऽनुभविकत्वात् । पदत्वेन वर्णत्वेन वा शक्तत्वे विभक्तेरपि तद्वाचकतासिद्धे-
एकत्वादिशाब्दबोधात् पूर्वं वर्णत्वाद्युपस्थितेरप्यनावश्यकत्वाच्च । फलानुरो-
तत्कल्पने च कल्पनागौरवात् ।

एवमानुपूर्वीभिन्नधर्मस्य वाचकतावच्छेदकत्वे घटपदं सुपदं च न संख्यावा-
कमिति विपरीतनिश्चयकालेपि तादृशधर्मावच्छिन्नस्य वाचकताग्रहसंभ-
'घटः' इत्यादौ संख्याया बोधापत्तिः ।

---

ननु यदि घटपदत्वादिकमेकत्वादिशक्ततावच्छेदकं स्यात्तदा घटादिपदत्वरूपाऽऽनुपू-
मनन्तत्वादनन्तशक्ततावच्छेदकस्वीकारापत्तिः स्यादपि नैवमस्ति किं तु प्रातिपदिकत्वमेव श-
वच्छेदकम्, प्रातिपदिकत्वं च प्रकृतिभूताखिलपदेष्वेकमेवेति न शक्ततावच्छेदकानन्त्यं
शक्त्यानन्त्यम्- प्रातिपदिकस्यैव संख्यायां शक्तिस्वीकारादित्याशङ्क्याह- न चेति । प-
हेतुमाह- प्रातिपदिकत्वस्येति, प्रकृतिभूतसकलपदसाधारणस्य प्रातिपदिकत्वस्य निरूपयि-
क्यत्वादित्यर्थः । किं च यदि प्रातिपदिकत्वमेकत्वादिशक्ततावच्छेदकं स्यात्तदा 'घटपदं प्र-
दिकम्' इत्येवं प्रातिपदिकत्वज्ञानं विनैकत्वबोधो न स्यात्. न चैवमस्ति किं तु तदज्ञा-
प्रातिपदिकत्वाज्ञानेप्येकत्वविषयकबोधो भवत्येवेति न प्रातिपदिकत्वमेकत्वादिशक्ततावच्छे-
त्याह- तदज्ञानेपीति । यदि च संख्यायां पदस्य शक्तिः शक्ततावच्छेदकं च पदत्वम्. कि-
संख्यायां वर्णस्य शक्तिः शक्ततावच्छेदकं च वर्णत्वमित्युच्यते तदा विभक्तेरपि पदरूपत्वा-
रूपत्वाच्च तद्वाचकता=संख्यावाचकत्वं प्राप्तमेवेत्याह- पदत्वेनेति । यदि पदत्वं वा वर्ण-
शक्ततावच्छेदकं स्यात्तदा एकत्वादिसंख्याशाब्दबोधात्पूर्वं वर्णत्वाद्युपस्थितेरप्यपेक्षा स्या-
चैवमस्ति वर्णत्वाद्युपस्थितिं विनाप्येकत्वबोधसंभवादिति न वर्णत्वादिकं शक्ततावच्छेद-
त्याह- एकत्वादीति । फलानुरोधेनेति- शक्ततावच्छेदकोपस्थितिं विना शक्यार्थबोधो न-
तीति नियममाश्रित्य यद्येकत्वशाब्दबोधे फलरूपे जाते तत्पूर्वं हेतुभूतायाः शक्ततावच्छेदक-
द्युपस्थितेः कल्पना क्रियेत तदा गौरवं स्यादेव- लोके वर्णत्वाद्युपस्थितिमन्तरेणैवैकत्वादि-
प्रसिद्धत्वादित्यर्थः ।

दोषान्तरमाह- एवमिति, सुत्वाद्यानुपूर्वीभिन्नस्य धर्मस्य प्रातिपदिकत्वादेर्यद्येकत्वादि-
निरूपितशक्ततावच्छेदकत्वं स्यात्तदा 'घटपदं सुपदं च न संख्यावाचकम्' इत्याकारक-
श्चयकालेपि तादृशधर्मावच्छिन्नस्य=प्रातिपदिकत्वादिधर्मावच्छिन्नस्य संख्यावाचकत्वग्रहस्य-
वात् 'घटः' इत्यादौ संख्याया बोधः स्यादेव- 'घटपद सुपदं च न संख्यावाचकम्'
ज्ञानेन घटपदसुपदयोः संख्यावाचकत्वग्रहप्रतिबन्धेपि प्रातिपदिकस्य संख्यावाचकत्वग्र-
न्धासंभवात् । न च 'घटपदं सुपदं च न संख्यावाचकम्' इति ज्ञाने सति 'घटः'

अथ विभक्तीनां सार्थकतामते प्रकृतिविभक्त्योरेकवाक्यताविरहनिश्चयदशायां विभक्त्युपस्थाप्यैकत्वादेः प्रकृत्यर्थेऽन्वयबोधवारणाय तयोः समभिव्याहारज्ञानस्य घटादिविशेष्यकैकत्वान्वयबोधं प्रति कारणत्वमधिकं कल्पनीयम् । एकपदोपस्थापितयोर्घटैकत्वाद्योरन्वयबोधोपगमे च न समभिव्याहारज्ञानस्य तत्र हेतुता कल्प्यते इति लाघवात् प्रकृत्याद्यानुपूर्वीणां संख्यावाचकतावच्छेदकत्वमुपेयते इति चेत् ?, न, आकाङ्क्षाविचारे समभिव्याहाराकाङ्क्षाज्ञानस्य हेतुताया निराकृतत्वात् ।

---

संख्याबोधो भवतीति न सुत्वाद्यानुपूर्वीभिन्नधर्मस्य प्रातिपदिकत्वादेः शक्ततावच्छेदकत्वं किं तु सुत्वादेरेवेत्यर्थः ।

ननु यदि विभक्तेरेव संख्यार्थत्वं स्यात्तदा प्रकृतिविभक्त्योरेकवाक्यताविरहनिश्चयदशायां नाम यदा ' घटः ' इत्यत्र घटपदेन घटोपस्थितिर्जाता ' पटः ' इति पटपदोत्तरसुविभक्त्या चैकत्वोपस्थितिर्जाता तदा प्रकृतिविभक्त्योरेकवाक्यत्वं नास्तीत्येकवाक्यत्वाभावेपि विभक्त्युपस्थितैकत्वस्य प्रकृत्यर्थे=प्रातिपदिकार्थे घटेऽन्वयः स्यादेव बाधकाभावाद् विभिन्नपदोपस्थितयोः परस्परमन्वयस्य लोकप्रसिद्धत्वात्, न चैवं प्रकृतिविभक्त्योरेकवाक्यताविरहे पटपदोत्तरविभक्त्यर्थसंख्याया घटादावन्वयो भवतीति तादृशान्वयबोधवारणाय तयोः=प्रकृतिविभक्त्योः समभिव्याहारज्ञानस्य=' घटः ' इत्येवं घटपदोत्तरसुत्वरूपसमभिव्याहाराकाङ्क्षाज्ञानस्य घटविशेष्यकैकत्वान्वयबोधं प्रति कारणत्वमधिकं कल्पनीयम्, तथा विभक्तिज्ञानजन्यैकत्वोपस्थितेरपि कारणत्वं कल्पनीयं स्यादित्याऽऽशङ्कते— अथेति । स्वमते लाघवमाह— एकेति, विभक्तेः संख्यार्थत्वास्वीकारेण प्रकृतेरेव संख्यार्थत्वस्वीकारे तु घटपदेनैव घटैकत्वयोरुपस्थितिर्भवतीति तयोरन्वयबोधोपगमे न तत्र=घटविशेष्यकैकत्वान्वयबोधे समभिव्याहारज्ञानस्य=घटपदोत्तरसुत्वरूपसमभिव्याहारज्ञानस्य हेतुता कल्प्यते— घटपदेनैव घटैकत्वयोरुपस्थितिस्वीकारात् विभक्तेः संख्यार्थत्वाभावाच्च संख्याप्रकारकान्वयबोधं प्रति विभक्तिसमभिव्याहारस्याऽकारणत्वादिति संख्यायाः प्रकृत्यर्थत्वे एतादृशलाघवात् प्रकृतेरेव संख्यावाचकत्वं प्रकृत्यानुपूर्व्या एव च संख्यानिरूपितशक्ततावच्छेदकत्वं स्वीक्रियते । अत्र च मते विभक्तिज्ञानजन्यैकत्वादिसंख्योपस्थितेरप्यपेक्षा नास्त्येव प्रकृत्यैव संख्योपस्थितेः संभवादित्यर्थः । परिहरति— नेति । परिहारहेतुमाह—आकाङ्क्षेति, अत्र— " यत्पदार्थस्य यत्पदार्थेन सहान्वयबोधो विवक्षितस्तयोः पदयोः परस्परसमभिव्याहार आकाङ्क्षेति तात्पर्यगर्भाऽऽकाङ्क्षा सा च तात्पर्यघटितेति तात्पर्यज्ञानकारणतयैव शाब्दबोधनिर्वाहे घट इत्यादौ घटपदोत्तरसुत्वरूपसमभिव्याहाराकाङ्क्षाज्ञानहेतुताया निराकृतत्वादित्यर्थः " इति कृष्णभट्टाः । एकपदोपस्थापितयोः=घटाद्येकपदोपस्थापितयोः ।

नन्वेवमपि=तात्पर्यज्ञानस्य कारणत्वमाश्रित्य समभिव्याहाररूपाकाङ्क्षाज्ञानस्य कारणत्वास्वीकारेपि विभक्तेः संख्यार्थकत्वे घटादिविशेष्यकसंख्याप्रकारकान्वयबोधं प्रति प्रकृतिधर्मिकस्य=

९

अथैवमपि विभक्तेः संख्यार्थकत्वे विनिगमनाविरहेण प्रकृतिधर्मिकस्य वि
क्तिधर्मिकस्य च संख्याप्रकारकान्वयबोधपरत्वज्ञानस्य हेतुता कल्पनीया, वि
क्तेर्द्योतकत्वमते तु विभक्तितात्पर्यविरहेण प्रकृतिधर्मिकमेव तात्पर्यज्ञानं तादृश
न्वयबोधहेतुरिति लाघवमिति चेत्?, न- विभक्तेः संख्यावाचकताविरहेपि प्र
तिविभक्त्योरानुपूर्वीज्ञानस्य तादृशान्वयबोधहेतुताया निर्विभक्तिकादिपदज्ञान
दन्वयबोधवारणायावश्यकल्पनीयतया संख्यावाचकप्रकृतेरिव तदवाचकविभ
रपि संख्यान्वयबोधकत्वप्रकारकेच्छाविषयत्वरूपतादृशबोधपरत्वसंभवेन वि
क्तिधर्मिकतज्ज्ञानहेतुताया विनिगमनाविरहेणाऽऽवश्यकत्वात् ।

*अथ स्वादीनां संख्यावाचकत्वकल्पनापेक्षया प्रकृतेस्तत्र लक्षणैवोचिता*

---

विभक्तिसमभिव्याहृता प्रकृतिः संख्याप्रकारकान्वयबोधपरा इत्यस्य. विभक्तिधर्मिकस्य=प्र
समभिव्याहृता विभक्तिः संख्याप्रकारकान्वयबोधपरेत्यस्य च तात्पर्यज्ञानस्य विनिगमना
हेतुता प्राप्तेति द्विविधतात्पर्यज्ञानस्य कारणत्वं कल्पनीयमिति गौरवं स्यादित्याशङ्कते-अथे
त्वमते लाघवमाह-विभक्तेरिति । द्योतकत्वमते=संख्या तु प्रकृत्यर्थ एव विभक्तेस्तात्पर्यग्राह
मिति मते तु विभक्तितात्पर्यविरहेण=विभक्तिः संख्याप्रकारकान्वयबोधं जनयतु इत्याकार
र्यस्य विभक्त्या( विभक्तिविषयकस्य )वऽभावात् केवलं प्रकृतिधर्मिकस्यैव=प्रकृतिः सं
प्रकारकान्वयबोधं जनयतु इत्यस्यैवैकस्य तात्पर्यज्ञानस्य घटादिविशेष्यकसंख्याप्रका
न्वयबोधं प्रति हेतुत्वमस्तीति लाघवमित्यर्थः । परिहरति- नेति, यदि प्रकृतिविभक्त्योः 'घ
इत्येवमव्यवहितानुपूर्वीज्ञानस्य घटादिविशेष्यकसंख्याप्रकारकान्वयबोधं प्रति हेतुत्वं न स्यात्तदा
रूपम् ' इत्यादौ निर्विभक्तिकं यद् घटपदं तज्ज्ञानादपि घटे संख्यान्वयस्य बोधः स्यादेव
काभावात्. न चैवं भवतीति निर्विभक्तिकपदज्ञानात्संख्यान्वयबोधवारणाय प्रकृतिविभक्त्योर
हितानुपूर्वीज्ञानस्य हेतुता विभक्तेः संख्यावाचकत्वास्वीकारेपि कल्पनीया. तथा च संख्या
कप्रकृतेरिव तदवाचक=संख्याऽवाचकविभक्तेरपि प्रकृतिसमभिव्याहृता विभक्तिः संख्याप्रकार
न्वयं बोधयतु इत्याकारिका या संख्यान्वयबोधकत्वप्रकारकेच्छा तादृशेच्छाविषयत्वरूपं यत्
बोधपरत्वम्=संख्याप्रकारकबोधपरत्वं तत्संभवेन विभक्तिधर्मिकतज्ज्ञानहेतुतायाः=विभक्तिधर्मि
संख्याप्रकारकान्वयबोधतात्पर्यज्ञानस्य हेतुताया विनिगमनाविरहेणावश्यं कल्पनीयत्वात्
मतेऽयुक्तलाघवं न संभवतीति तव मम चात्र साम्यमेवेत्यर्थः । किं वा प्रकृतिधर्मिकस्ये
स्वादिविभक्तिपदाऽव्यवहितपूर्ववर्तिघटादिपदत्वज्ञानस्य विभक्तिधर्मिकस्येत्यस्य च घटादिपदा
हितोत्तरवर्तिस्वादिविभक्तिपदत्वज्ञानस्येत्यर्थः । संख्याप्रकारकान्वयबोधं प्रति विनिगमनाविरहा
दशोभयविधतात्पर्यज्ञानस्य कारणत्वापत्तिः प्रतिपादितैव ।

ननु स्वादीनामपि संख्यावाचकत्वं न युक्तं तथा प्रकृतेरपि संख्यावाचकत्वं न युक्तं वि
संख्यायां प्रकृतेर्लक्षणैव स्वीकार्येत्याशङ्कते- अथेति । नन्वेवम् ' घटः ' इत्यादौ घ

क्यलक्ष्ययोः परस्परमन्वयोपगमे क्षतिविरहात्, प्रथमाविभक्तेः कुत्रापि शक्तेरक्लृप्ततया तस्याः शक्यसंबन्धरूपा लक्षणा न संभवति, द्वितीयादेः कर्मत्वादौ शक्तत्वेपि तादृशविभक्तेस्तत्समभिव्याहृतप्रकृतेर्वा संख्यायां लक्षणेत्यत्र विनिगमकं दुर्लभम् ।

न चैकत्वाद्यन्वयबोधे घटपदादिज्ञानजन्योपस्थितित्वेनाऽनन्तहेतुताकल्पनमपेक्ष्य स्वादिपदज्ञानजन्यतदुपस्थितित्वेन कतिपयहेतुताकल्पनायां लाघवात् कतिपयशक्तिकल्पने गौरवमकिंचित्करम्, सामान्यतः पदवृत्तिज्ञानजन्यतदुपस्थि-

---

शक्त्या घटोपस्थितिर्लक्षणया चैकत्वोपस्थितिः स्यात्तत्र शक्यलक्ष्ययोर्घटैकत्वयोः कथं परस्परान्वयः स्यात् एकेन घटपदेनैककाले व्यापारद्वयासंभवेन शक्त्या घटस्य लक्षणया चैकत्वस्योपस्थितेरसंभवादित्याशङ्क्याह—शक्येति, यथा 'गङ्गायां घोषः' इत्यनेन 'गङ्गातीरे घोषः' इति बोधस्वीकारे गङ्गापदेन शक्त्या प्रवाहस्य लक्षणया च तीरस्योपस्थितिर्जायते तथात्रापि शक्त्या घटस्य लक्षणया चैकत्वस्योपस्थितिसंभवाद् घटैकत्वयोः परस्परान्वये न काप्यनुपपत्तिर्न वा कापि क्षतिरित्यर्थः । ननु संख्यायां प्रकृतेर्लक्षणास्वीकारापेक्षया विभक्तेरेव लक्षणा किं न स्यादित्याशङ्क्याह— प्रथमाविभक्तेरिति । नन्वेवं द्वितीयादेस्तु कर्मत्वादौ शक्तिरस्तीति संख्यायां शक्यसंबन्धरूपा लक्षणा संभवत्येवेति 'घटं करोति' इत्यादौ विभक्तेरेव संख्यायां लक्षणा स्वीकार्या न तु प्रकृतेरित्याशङ्क्याह— द्वितीयादेरिति, द्वितीयादेः कर्मत्वादौ शक्तिरस्ति प्रकृतेरपि प्रकृत्यर्थे शक्तिरस्तीति प्रकृतिविभक्त्योरुभयोरपि संख्यायां शक्यसंबन्धरूपा लक्षणा संभवत्येवेति द्वितीयादिविभक्तेरेव संख्यायां लक्षणा स्यात् किं वा द्वितीयादिप्रकृतेरेव संख्यायां लक्षणा स्यादित्यत्र विनिगमकं किमपि नोपलभ्यते इत्यर्थः । तादृशविभक्तेः=द्वितीयादिविभक्तेः । तत्समभिव्याहृतप्रकृतेः=द्वितीयादिविभक्तिसमभिव्याहृतप्रकृतेः । यद्यप्युक्तरीत्या द्वितीयाद्यन्तप्रयोगस्थले संख्यायां विभक्तेर्वा प्रकृतेर्वा लक्षणेत्यत्र विनिगमकं दुर्लभं तथापि प्रथमान्तप्रयोगस्थले संख्यायां प्रकृतेरेव लक्षणाया उक्तरीत्या समाश्रयणाद् द्वितीयाद्यन्तप्रयोगस्थलेऽपि प्रकृतेरेव संख्यायां लक्षणा स्वीकार्या, अन्यथा प्रथमान्तप्रयोगस्थले संख्यायां प्रकृतेर्लक्षणा द्वितीयाद्यन्तप्रयोगस्थले च संख्यायां विभक्तेर्लक्षणेति वैषम्यं स्यादित्यवधेयम् ।

ननु संख्यायां प्रकृतेर्लक्षणास्वीकारे प्रकृतीनां घटपटादिपदानामनन्तत्वेनैकत्वादिसंख्याप्रकारकान्वयबोधं प्रति 'घटः' इत्यत्र घटपदजन्यैकत्वोपस्थितेः कारणता 'पटः' इत्यत्र च पटपदजन्यैकत्वोपस्थितेः कारणतेत्यनन्तकार्यकारणभावकल्पनापत्त्या महद् गौरवं स्यादिति तदपेक्षया लाघवार्थं विभक्तेरेव संख्यार्थकत्वं स्वीकार्यं तथा च प्रकृतीनामपेक्षया स्वादिविभक्तीनामल्पत्वाद् एकत्वादिसंख्याप्रकारकान्वयबोधं प्रति स्वादिविभक्तिपदजन्यैकत्वादिसंख्योपस्थितेः कारणत्वलाभाच्च लाघवं स्यात्, एवं हि यद्यपि संख्यायां प्रथमाविभक्तेः शक्तिकल्पनप्रयुक्तं गौरवमस्ति तथापि लक्षणयाऽनन्तप्रकृतिजन्याऽनन्तसंख्योपस्थितीनां कारणत्वस्वीकारापेक्षया संख्यायां विभक्तिशक्तिकल्पनप्रयुक्तं गौरवमकिंचित्करम्=तुच्छमेवास्तीति विभक्तेरेव संख्यायां शक्तिरेव स्वीकर्तव्येत्याशङ्कते— न चेति ।

**त्तित्वेनैककरणताकल्पनं तु न सम्यक् निर्विभक्तिककुम्भपदादितः संख्योपस्थि तदगृहीतवृत्तिकघटादिपदे तत्ताद्विभक्त्यन्तत्वज्ञानवतः पुंसो घटादौ संख्यान्वय धप्रसङ्गाद्, घटपदादिज्ञानजन्यैकत्वाद्युपस्थितित्वेनैकत्वादिविषयकशाब्दबोधहेतु कल्पयित्वा विभक्तिघटादिपदानुपूर्वीज्ञानतादृशोपस्थित्योः परस्परसहका फलजनकताया अवश्याभ्युपेयत्वादिति वाच्यम्, घटादिपदस्यैकत्वादौ लक्षण**

---

नन्वेकत्वादिसंख्याप्रकारकान्वयबोधं प्रति ' घटः ' इत्यत्र घटपदजन्यैकत्वोपस्थितेः कार ' पटः ' इत्यत्र पटपदजन्यैकत्वोपस्थितेः कारणतत्येवं न वक्ष्यामो येन तत्तत्पदनिवे न्तकारणताकल्पनं स्यात्, किं तु सामान्यतः पदवृत्तिज्ञानजन्यतदुपस्थितित्वेन=पदनिष्ठस *विषयकवृत्तिज्ञानजन्यसंख्योपस्थितेः* ( लक्षणावृत्त्या प्रकृतिभूतपदजन्यसंख्योपस्थितेः ) कार त्येवमेककारणतामेव कल्पयाम इति नोक्तगौरवम्, पदवृत्तिज्ञानजन्यसंख्योपस्थितित्वं च स सकलपदजन्यसंख्योपस्थितावस्त्येवेति प्रकृतेरेव संख्यायां लक्षणा न विभक्तेः शक्तिरित्याशङ्क सामान्यत इति । अस्य परिहारमाह— निर्विभक्तिकेति, एवं सामान्यतः पदजन्यसंख्योप संख्याप्रकारकशाब्दबोधं प्रति कारणत्वस्वीकारे यदा कस्यचित् पुंसः ' कुम्भरूपम् ' निर्विभक्तिककुम्भपदात्संख्योपस्थितिर्जाता तदगृहीतवृत्तिकघटादिपदे=' घटः ' इत्यत्र दस्य च संख्यायां लक्षणाग्रहो न जातः किं तु विभक्त्यन्तत्वमात्रज्ञानं जातं तदा कुम्भ पस्थितसंख्याया अपि घटेऽन्वयबोधः स्यादेव संख्योपस्थितेः घटपदेनाजातत्वेपि कुम्भपदेन त्वात् सामान्यतः पदजन्यसंख्योपस्थितेरेव कारणत्वस्वीकारात्, न च कुम्भपदादुपस्थितसं घटादावन्वयो भवतीत्यर्थः । तथा चोक्तदोषवारणाय घटविशेष्यकसंख्याप्रकारकशाब्दबोधं घटपदजन्यैकत्वादिसंख्योपस्थितेः कारणत्वं कल्पनीयं तत्रापि 'घटरूपम्' इत्यादौ घटपदे ख्योपस्थितौ तादृशसंख्याया घटेऽन्वयबोधवारणाय विभक्तिघटादिपदानुपूर्वीज्ञानतादृशोपस्थि अव्यवधानेन घटपदविभक्तिपदानुपूर्वीज्ञानजन्ययोः ( विभक्त्यन्तघटादिपदज्ञानजन्ययोः ) शोपस्थित्योः=प्रकृत्यर्थघटादिविषयकसंख्याविषयकोपस्थित्योः परस्परसहकारेण फलजनकताया घटादिविशेष्यकसंख्याप्रकारकशाब्दबोधजनकतायाः स्वीकार्यत्वात् तत्र विभक्तिज्ञानस्यापि ष्टत्वाल्लाघवात् संख्याया विभक्त्यर्थत्वमेवोक्तरीत्या युक्तं न प्रकृत्यर्थत्वमित्याह— घटपदादौ प्रकृत्यर्थोपस्थितिं विनापि संख्याप्रकारकशाब्दबोधो न संभवति संख्योपस्थितिं विनापि न वतीत्युक्तम्— परस्परसहकारेणेति ।

न चेत्यादिना शङ्कितं परिहरति— घटादिपदस्येति, त्वया ह्येकत्वादिसंख्यान्वयबोधे घ पदज्ञानजन्यसंख्योपस्थितेः कारणत्वे संख्योपस्थापकप्रकृतिभूतघटादिपदानामनन्तत्वेन तज्ज ख्योपस्थितीनामप्यनन्तत्वादनन्तकारणताकल्पनप्रयुक्तं संख्यायाः प्रकृत्यर्थत्वस्वीकारे प्रदर्शितं तन्नूतनं नास्ति यतः— घटपदस्यैकत्वादौ लक्षणाग्रहसत्त्वे ' घटः प्रमेयः ' इ

ग्रहसत्त्वे 'घटः प्रमेयः' इत्यादिवाक्यात् 'एकत्वं प्रमेयम्' इत्याद्यन्वयबोधस्य सर्वसंमततया तदनुरोधेनैकत्वादिविषयकशाब्दबोधे घटादिपदजन्यैकत्वाद्युपस्थितित्वेन हेतुतायाः सर्वसंमतत्वात् ।

मैवम्— यादृशयादृशपदानां लक्षणयैकत्वादिशाब्दधीजनकत्वं नोभयवादिसिद्धं तादृशानन्तपदज्ञानजन्यैकत्वाद्युपस्थितीनां तच्छाब्दहेतुत्वकल्पनं प्रकृतेः संख्यावाचकतावादिनामधिकमिति तत्कल्पनापेक्षया चाल्पतरस्वादिपदजन्यैकत्वाद्युपस्थितिहेतुताकल्पन एव लाघवम् ।

एतेन— संख्याविशेषावच्छिन्नघटादिर्लक्षणया प्रकृतेरर्थो न तु संख्या विभक्त्यर्थः- शाब्दबोधे विभक्तिजन्यसंख्योपस्थितिहेतुताकल्पनाधिक्येन गौरवात् । घटादिपदस्यैकत्वादिविशिष्टघटादौ लक्षणाग्रहदशायां सर्वमत एव तज्जन्य-

---

यात् 'एकत्वं प्रमेयम्' इत्याकारकशाब्दबोधः सर्वसंमत एव तत्र लक्षणया घटपदेनैवैकत्वस्योपस्थितिर्भवतीति घटपदजन्यैकत्वोपस्थितेः कारणत्वमपि सर्वैः स्वीकर्तव्यमिति तदनुरोधेन=यथा तत्र घटपदजन्यैकत्वोपस्थितेः कारणत्वं तथान्यत्र 'घटः' इत्यादौ घटपदस्य घटे शक्तिग्रहदशायामप्येकत्वादिसंख्याविषयकशाब्दबोधे घटपदजन्यैकत्वादिसंख्योपस्थितेः कारणत्वं युक्तमेवेति न नूतनं घटपदजन्यसंख्योपस्थितेः कारणत्वकल्पनमस्ति येन गौरवं स्यादिति संख्यायाः प्रकृत्यर्थत्वमेव युक्तमित्यर्थः । प्रत्युतोक्तलक्षणाग्रहस्थले घटपदजन्यसंख्योपस्थितेः कारणत्वमन्यत्र विभक्तिजन्यसंख्योपस्थितेः कारणत्वमिति द्विविधकार्यकारणभावकल्पनप्रयुक्तं गौरवं संख्याया विभक्त्यर्थत्वस्वीकारे एवास्तीत्यभिप्रायः । घटपदस्यैकत्वे लक्षणाग्रहसत्त्वे घटपदेनैकत्वस्यैवोपस्थितिर्भवति प्रमेयपदेन च प्रमेयस्येति 'घटः प्रमेयः' इतिवाक्यात् 'एकत्वं प्रमेयम्' इतिशाब्दबोधो जायत इत्युक्तम्— घटादिपदस्येति ।

अथेत्यादिनोक्तं लक्षणावादं परिहरति— मैवमिति, येषां पदानां लक्षणयैकत्वादिसंख्याविषयकशाब्दबोधजनकत्वमुभयमतसिद्धं तत्र गौरवाभावेपि येषां पदानां लक्षणयैकत्वादिशाब्दबोधजनकत्वमुभयमतसिद्धं नास्ति तेषामप्यनन्तत्वात् तज्जन्यसंख्योपस्थितीनामप्यनन्तत्वेनानन्तकारणताकल्पनं संख्यायाः प्रकृत्यर्थत्वमतेऽधिकमेव स्यादिति तदपेक्षया लाघवात् स्वादिविभक्तीनामेव संख्यायां शक्तिः स्वीकार्या स्वादिविभक्तिपदजन्यैकत्वादिसंख्योपस्थितेरेव च लाघवात् संख्याविषयकशाब्दबोधं प्रति हेतुत्वं स्वीकार्यमित्यर्थः । तच्छाब्दहेतुत्वकल्पनम्=संख्याविषयकशाब्दबोधहेतुत्वकल्पनम् ।

एतेनेति— यच्चोक्तं घटपदस्य शुद्धघटे शक्तिरेकत्वादिसंख्याविशिष्टे घटे एव प्रकृतेर्लक्षणा न प्रकृत्यापि लक्षणया केवलसंख्याया बोधो जायते न वा संख्या विभक्त्यर्थः— संख्याया विभक्त्यर्थत्वे संख्याप्रकारकशाब्दबोधं प्रति विभक्तिजन्यसंख्योपस्थितेरपि हेतुत्वापत्त्या गौरवापात् । अत्र विनिगमनामाह— घटादिपदस्येति, यदा कस्यचित् पुंसो घटादिपदस्यैकत्ववि-

विशिष्टविषयकोपस्थित्या विशिष्टविषयकशाब्दधीजननात् तथाविधोपस्थितिहेतुतायाः सर्वानुमतत्वात् । पदान्तरासमभिव्याहृतात् 'घटः' इत्यादिपदादेकत्वादिविशिष्टघटादिशाब्दबोधस्त्वलीक एव– तद्विषयकस्मरणस्य तत्रोपगमात् तच्चोक्तम्– "सर्वं हि वाक्यं क्रियायां परिसमाप्यते" इत्यपि निरस्तम् । यादृशपदानां लक्षणयैकत्वादिविशिष्टस्वार्थबोधहेतुत्वं नोभयवादिसिद्धं तादृशानन्तपदजन्यविशिष्टोपस्थितीनां शाब्दधीहेतुताकल्पनमपेक्ष्य विभक्तिजन्यसंख्योपस्थितीनामल्पानां तत्कल्पने लाघवात् ।

इदं पुनरिहावधेयम्– विभक्तेः संख्याबोधकत्वे समानविषयकानुमित्यादि प्रति शाब्दसामग्रीप्रतिबन्धकतायां या प्रातिपदिकजन्या घटाद्युपस्थितिर्या

शिष्टघटादौ लक्षणाग्रहो जातस्तदा सर्वैरेव तज्जन्यविशिष्टविषयकोपस्थित्या=घटपदजन्यैकत्वविशिष्टघटविषयकोपस्थित्या विशिष्टविषयकशाब्दधीजननात्=एकत्वविशिष्टघटविषयकशाब्दबोधोत्पत्तेः स्वीकृतत्वात् नैकत्वविशिष्टपदार्थविषयकोपस्थितिशाब्दबोधयोः कार्यकारणभावो नूतनः कल्प्यते इत्येकत्वादिसंख्याविशिष्टे घटादिपदानां सर्वानुमतलक्षणाग्रहस्थले इवान्यत्रापि घटादिपदादेकत्वादिसंख्याविशिष्टघटादिविषयकोपस्थितिशाब्दबोधयोः संभवात् सर्वैः स्वीकर्तव्यत्वात् । ननु शाब्दबोधे ह्येकपदार्थेऽपरपदार्थस्य संसर्गो भासते इति नियमोऽस्ति तत्र संख्याया विभक्त्यर्थत्वे 'घटः' इत्यत्र घटपदार्थे विभक्त्यर्थसंख्यायाः संसर्गभानेन शाब्दबोध उपपद्यते तव तु ह्येकत्वविशिष्टो घटो घटपदस्यार्थो विभक्तिश्च निरर्थिकैवेति 'घटः' इत्यत्र पदार्थान्तरसंसर्गभानाभावाच्छाब्दबोधो न स्यादित्याशङ्क्याह– पदान्तरेति, 'घटः' इत्येकपदादेकत्वविशिष्टघटविषयकोपस्थितिरेव भवति न तु शाब्दबोधोऽपीत्यर्थः । अत्र प्रमाणमाह– सर्वमिति । क्रियायां परिसमाप्यते=क्रियाविशेष्यक एव शाब्दबोधो भवतीति 'अस्ति' इत्यादिक्रियापदसहितादेव वाक्याच्छाब्दबोधो जायते न तु 'घटः' इत्याद्येकपदादित्यर्थः । इत्येवं निरसनीयमतम् निरसति– इत्यपि निरस्तमिति । निरस्तत्वे उक्तहेतुं स्मारयति– यादृशेति । पदानामनन्तत्वेनैकत्वादिसंख्याविशिष्टेऽगृहीतवृत्तिकपदानामप्यनन्तत्वात् तज्जन्यैकत्वादिसंख्याविशिष्टविषयकोपस्थितीनां संख्याविशिष्टविषयकशाब्दबोधं प्रति हेतुत्वकल्पनापेक्षयाऽल्पानां विभक्तिजन्यसंख्योपस्थितीनां तत्कल्पने=संख्याप्रकारकशाब्दबोधहेतुत्वकल्पने लाघवादित्यर्थः । अत्र एतेन=मैवम् इत्याद्युक्तेन इत्यपि=संख्याविशेषावच्छिन्नेत्याद्युक्तमपि निरस्तमित्यन्वयः ।

उक्ते विभक्तेः संख्याबोधकत्वमते गौरवदोषं प्रदर्शयति– इदमित्यादिना, विभिन्नविषयकप्रत्यक्षं प्रति समानविषयकानुमितिं प्रति च शाब्दबोधसामग्र्याः प्रतिबन्धकत्वं भवति विभक्तेः संख्याबोधकत्वस्वीकारे च संख्याप्रकारकशाब्दबोधसामग्र्यां प्रातिपदिक=प्रकृतिभूतघटादिपदजन्यघटाद्युपस्थितेर्विभक्तिजन्यसंख्योपस्थितेश्च प्रवेशादुपस्थितिद्वयस्य प्रतिबन्धकत्वं प्राप्तं किं चोपस्थित्योः परस्परं विशेष्यविशेषणभावे विनिगमनाविरहाद् घटपदजन्यघटोपस्थितिविशिष्टविभ

विभक्तिजन्या संख्योपस्थितिः प्रवेश्या तयोश्च मिथो विशेष्यविशेषणभावे विनिगमनाविरहात् प्रतिबन्धकताबाहुल्यम् । प्रकृतेर्विशिष्टलाक्षणिकत्वे तु तदुभयस्थलीयविशिष्टविषयकोपस्थितिरेकैव सामग्र्यामन्तर्भवतीति लाघवम् ।

न च विशिष्टविषयकोपस्थितेरप्येकत्वादिप्रकारतानिरूपितघटादिविशेष्यताशालित्वेन घटादिविशेष्यतानिरूपितैकत्वादिविषयताशालित्वेन वा प्रवेश इति विनिगमनाविरहात्साम्यमिति वाच्यम्, भवन्मते योग्यताज्ञानघटोपस्थित्येकत्वोपस्थितीनां तिसृणां विशेष्यविशेषणभावे विनिगमनाविरहेण प्रतिबध्यप्रतिबन्धकभावषट्कम् । मन्मते तत्र योग्यताज्ञाने विशिष्टविषयकोपस्थितेः प्रत्येकं

---

जन्यसंख्योपस्थितेः प्रतिबन्धकत्वं तथा विभक्तिजन्यसंख्योपस्थितिविशिष्टघटपदजन्यघटोपस्थितेरपि प्रतिबन्धकत्वमित्येवं बहुविधोपस्थितीनां प्रतिबन्धकत्वकल्पनया गौरवं स्यादेवेत्यर्थः । प्रकृतेरेव संख्याविशिष्टप्रकृत्यर्थघटादौ लक्षणास्वीकारे तु तदुभयस्थलीयविशिष्टविषयकोपस्थितिः=उक्तघटादिप्रकृत्यर्थविषयकसंख्याविषयकोभयोपस्थितिस्थानीया संख्याविशिष्टप्रकृत्यर्थविषयकोपस्थितिरेकैवास्तीति तस्या एकस्या एव विशिष्टोपस्थितेः संख्याप्रकारकशाब्दबोधसामग्र्यामन्तर्भावात् तस्या एकस्या एव समानविषयकानुमित्यादिकं प्रति प्रतिबन्धकत्वकल्पनाल्लाघवमित्याह— प्रकृतेरिति ।

ननु प्रकृत्या संख्याविशिष्टविषयकोपस्थितेरपि लक्षणया स्वीकारे तादृशोपस्थितेरप्येकत्वादिसंख्याप्रकारकघटादिविशेष्यकत्वेन घटादिविशेष्यकसंख्याप्रकारकत्वेन च द्वैविध्यात् तादृशोभयोरुपस्थित्योः प्रतिबन्धकताकल्पनापत्त्या पूर्वोक्तमतेन साम्यमेवेत्याशङ्क्याह— न चेति । परिहारहेतुमाह— भवन्मते इति, भवन्मते=संख्याया विभक्त्यर्थत्वमते शाब्दबोधसामग्र्यां योग्यताज्ञानस्य घटपदजन्यघटोपस्थितेर्विभक्तिजन्यैकत्वादिसंख्योपस्थितेश्च प्रवेशात् तेषां त्रयाणां विशेष्यविशेषणभावे विनिगमनाविरहाच्च षट् प्रतिबन्ध्यप्रतिबन्धकभावा भवन्ति यथा— १ योग्यताज्ञानविशिष्टा या घटोपस्थितिस्तादृशघटोपस्थितिविशिष्टैकत्वोपस्थितेः प्रतिबन्धकत्वम्, २ योग्यताज्ञानविशिष्टा या एकत्वोपस्थितिस्तादृशैकत्वोपस्थितिविशिष्टघटोपस्थितेः प्रतिबन्धकत्वम्, ३ घटोपस्थितिविशिष्टं यद् योग्यताज्ञानं तादृशयोग्यताज्ञानविशिष्टैकत्वोपस्थितेः प्रतिबन्धकत्वम्, ४ घटोपस्थितिविशिष्टा या एकत्वोपस्थितिस्तादृशैकत्वोपस्थितिविशिष्टयोग्यताज्ञानस्य प्रतिबन्धकत्वम्, ५ एकत्वोपस्थितिविशिष्टा या घटोपस्थितिस्तादृशघटोपस्थितिविशिष्टयोग्यताज्ञानस्य प्रतिबन्धकत्वम्, ६ एकत्वोपस्थितिविशिष्टं यद् योग्यताज्ञानं तादृशयोग्यताज्ञानविशिष्टघटोपस्थितेश्च प्रतिबन्धकत्वमिति । स्वमते लाघवमाह— मन्मते इति, मन्मते प्रकृतेः संख्याविशिष्टप्रकृत्यर्थे लक्षणास्वीकारेण शाब्दबोधसामग्र्यां योग्यताज्ञानस्य प्रकृतिभूतपदजन्यसंख्याविशिष्टप्रकृत्यर्थविषयकोपस्थितेश्चैकस्या एव प्रवेशात् तयोर्द्वयोर्विशेष्यविशेषणभावे विनिगमनाविरहाच्च प्रत्येकं दर्शितोभयरूपेण=संख्य

दर्शितोभयरूपेण वैशिष्ट्यं निवेश्य तदुभयम्, प्रत्येकं तादृशरूपद्वयावच्छिन्नाया-मुपस्थितौ योग्यताज्ञानस्य वैशिष्ट्यं निवेश्य च द्वयमिति तच्चतुष्टयमात्रमिति- त्याऽस्माकमल्पतरतत्कल्पने महालाघवम् ।

तादृशरीत्यैव च 'प्रणमति' इत्यादौ प्रकर्षविशिष्टनतिर्धातूनामेवार्थः, प्राद्यं द्योतका एव न तु प्रकर्षादिवाचका इति सर्वानुमतः पन्थाः परिष्कर्तुं शक्यते अन्यथा- अनन्तधातुजन्यप्रकर्षादिविशिष्टतत्तत्स्वार्थोपस्थितीनां शाब्दधीजनक-तामपेक्ष्य कतिपयोपसर्गाधीनप्रकर्षाद्युपस्थितीनां तज्जनकताकल्पने लाघवा- स्वादीनामिव प्रादीनामपि वाचकता निराबाधा सिद्ध्येतेति ।

संख्यायाश्च प्रकृत्यर्थे पर्याप्तिसंबन्धेनैव विशेषणत्वं न तु समवायादिना, तथ-

शिष्टप्रकृत्यर्थोपस्थितेर्यद्रूपद्वयं प्रदर्शितं तस्य प्रत्येकस्य योग्यताज्ञाने वैशिष्ट्यनिवेशेन तदुभय- प्रतिबन्धकताद्वयम्, तथा प्रत्येकं तादृशरूपद्वयावच्छिन्नायामुपस्थितौ=या द्विविधरूपा सं- विशिष्टार्थोपस्थितिः प्रदर्शिता तस्याः प्रत्येकरूपे योग्यताज्ञानस्य वैशिष्ट्यनिवेशेन च द्व- प्रतिबन्धकत्वद्वयमिति मिलित्वा तच्चतुष्टयम्=प्रतिबन्धकत्वचतुष्टयमिति अल्पतरतत्कल्पने=भ- पेक्षयाऽल्पसंख्याकप्रतिबन्धकत्वकल्पनापत्त्या महालाघवम् । यथा- १ एकत्वादिप्रकारता- पितघटादिविशेष्यकोपस्थितिविशिष्टयोग्यताज्ञानस्य, २ घटादिविशेष्यतानिरूपितैकत्वादिप्र- ताकोपस्थितिविशिष्टयोग्यताज्ञानस्य, ३ योग्यताज्ञानविशिष्टैकत्वादिप्रकारतानिरूपितघटादि- शेष्यकोपस्थितेः, ४ योग्यताज्ञानविशिष्टघटादिविशेष्यतानिरूपितैकत्वादिप्रकारताकोपस्थि- प्रतिबन्धकत्वमिति ।

उक्तन्यायं प्रादिष्वतिदिशति- तादृशरीत्यैवेति, 'प्रणमति' इत्यादौ लक्षणया प्रकर्षवि- नतिर्धात्वर्थ एव, प्रादीनां प्रकर्षादिद्योतकत्वम्=प्रकर्षादितात्पर्यमात्रग्राहकत्वमेव न तु प्रक- वाचकत्वमिति मतमप्युक्तरीत्या परिष्कर्तुं शक्यते । प्रादीनां प्रकर्षादिवाचकत्वे शाब्दबो- मग्र्यां प्रादिजन्यप्रकर्षाद्युपस्थितेः प्रवेशात् तस्याश्च विभिन्नविषयकप्रत्यक्षं प्रति समानविषय- नुमितिं प्रति च प्रतिबन्धकत्वे योग्यताज्ञानेन सह विशेष्यविशेषणभावविनिगमनाविरहाच्च प्र- बध्यप्रतिबन्धकभावसंख्याधिक्यापत्त्या गौरवं स्यादिति धातोरेव प्रकर्षादिविशिष्टधात्वर्थं लक्ष- युक्तेत्यर्थः । विपक्षे बाधकमाह- अन्यथेति, यद्युक्तलाघवं न स्वीक्रियेत तदा धातूनामनन्त- प्रकर्षादिविशिष्टधात्वर्थविषयकानन्तोपस्थितीनां शाब्दबोधकारणत्वापेक्षया कतिपयोपसर्गाणा- प्रकर्षादिवाचकत्वमाश्रित्य प्रादिजन्यप्रकर्षाद्युपस्थितीनां प्रकर्षादिप्रकारकशाब्दबोधकारणताक- लाघवात् स्वादिविभक्तीनां संख्यावाचकत्वमिव प्राद्युपसर्गाणामपि प्रकर्षादिवाचकत्वं निरा- सिद्ध्येदेवेत्यर्थः ।

संख्यायाः प्रकृत्यर्थे=संख्येयपदार्थे समवायस्तु वृत्तिनियामक एव संबन्ध इति सं- संख्या गुणरूपत्वात्समवायेनैव वर्तते शाब्दबोधे च भासमानविशेष्यविशेषणभावावच्छेदकस्तु पर्या-

सति– एकव्यक्तिबोधपरादाकाशशब्दादपि द्विवचनबहुवचनाद्यापत्तेः– तत्तदर्थयोर्द्वित्वबहुत्वयोः समवायादिनाऽऽकाशाद्यन्वययोग्यत्वात् ।

न च पर्याप्तेः संसर्गत्वेपि तद्दोषतादवस्थ्यम्– घटाकाशादौ द्वित्वादेः पर्याप्तिसत्त्वे प्रत्येकमाकाशादौ तत्पर्याप्तिर्नास्तीति वक्तुमशक्यत्वात् प्रत्येकस्योभयाऽनतिरिक्तत्वादिति वाच्यम्, उद्देश्यतावच्छेदकव्याप्यत्वविशिष्टपर्याप्तेरेव संसर्गतोपगमात्, आकाशत्वादिव्याप्यताया द्वित्वादिपर्याप्तावऽसत्त्वेनातिप्रसङ्गविरहात् ।

---

बन्ध एवेत्यभिप्रायेणाह– संख्यायाश्चेति । तथासति=संख्यायाः प्रकृत्यर्थे समवायेन विशेणत्वे सति समवायस्यैकत्वेन द्वित्वबहुत्वसमवायस्याप्याकाशे सत्त्वात् तेन समवायेन च तत्तद्योर्द्वित्वबहुत्वयोरप्याकाशेऽन्वयसंभवादेकव्यक्तिविषयकबोधजनकादप्याकाशपदाद् द्विवचनबहुवनयोरापत्तिः स्यादिति न समवायादिना संख्याया विशेषणत्वं किं तु पर्याप्तिसंबन्धेनैव, द्वित्वबत्वपर्याप्तेश्चानेकव्यक्तिकपदार्थेष्वेव सत्त्वेनाकाशेऽभावात्तादशपर्याप्तिसंबन्धेन द्वित्वबहुत्वयोरप्याकाऽसंभवान्नाऽऽकाशपदाद् द्विवचनबहुवचनापत्तिः, एकत्वपर्याप्तेश्च सत्त्वादेकवचनं भवत्येवेत्यर्थः । तदर्थयोरिति– संख्यायाः प्रकृत्यर्थत्वमते प्रकृत्यर्थभूतयोः संख्याया विभक्त्यर्थत्वमते विभक्त्यभूतयोरित्यर्थः । किं वा द्विवचनबहुवचनार्थयोर्घटाकाशादिगतद्वित्वबहुत्वयोरित्यर्थः । न च यौ रूपसमवाये सत्यपि रूपाभावेन रूपवत्त्वप्रसक्त्यऽभाववदाकाशेपि द्वित्वसमवाये सत्यपि त्वाभावेन द्विवचनाद्यापत्त्यभाव इति वाच्यम्, घटाकाशोभयगतद्वित्वस्याकाशेपि सत्त्वादेव । नन्‌ संख्यायाः प्रकृत्यर्थे पर्याप्तिसंबन्धेनापि विशेषणत्वोपगमे तद्दोषतादवस्थ्यम्=आकाशाद् द्विवचनबहुवचनयोरापत्तिरस्त्येव यतः– घटाकाशोभयपदार्थे द्वित्वपर्याप्तिरस्त्येव प्रत्येकाकाशादौ घटाकाशाद्युभयभेदाभावेन प्रत्येकस्योभयानतिरिक्तत्वात् प्रत्येकमाकाशादौ तत्पर्या:=द्वित्वपर्याप्तिर्नास्तीति वक्तुमशक्यत्वादित्याशङ्क्याह– न चेति । घटपटोभयस्य प्रत्येकपत्वमेव– प्रत्येकं त्यक्त्वा घटपटोभयस्वरूपासंभवादित्युभयस्मिन् प्रत्येकस्य भेदो न स्वीक्रि‍न्‍ प्रत्येकं तूभयभेदः स्वीक्रियते– प्रत्येकस्योभयस्वरूपत्वाभावादन्यथा प्रत्येकेनाप्युभयकार्यात्तिः स्यादिति सिद्धांत इति अत्र यत् "प्रत्येकस्योभयानतिरिक्तत्वात्" इत्यनेन प्रत्येकस्योभयानरिक्तत्वस्य=उभयस्वरूपत्वस्य प्रतिपादनद्वारा प्रत्येकस्योभयाभिन्नत्वं प्रतिपादितं तद् यद्यपि सिन्तविरुद्धमेव सिद्धान्ते प्रत्येकस्योभयस्वरूपत्वाभावात्तथाप्यस्य शङ्काग्रन्थत्वान्न दोषः । सिद्धानुकूलं कथंचिदेतद्वाक्यव्याख्यानसंभवेपि शङ्काग्रन्थसमन्वयो न स्यात् । परिहारहेतुमाह–श्यतेति, यथा 'आकाशम्' इत्यत्रोद्देश्यतावच्छेदकं यदाकाशत्वं तद्व्याप्यत्वविशिष्टा=तद्व्या या पर्याप्तिस्तस्या एव संबन्धत्वस्वीकाराद् आकाशत्वव्याप्या चैकत्वपर्याप्तिरेव न द्वित्वपर्याप्तिः– व्याप्यत्वं हि व्यापकाभाववदऽवृत्तित्वं द्वित्वपर्याप्तिस्त्वाऽऽकाशत्वाभाववति घटादावप्यस्त्येवेति स्याः संबन्धत्वाभावान्नाकाशपदाद् द्विवचनबहुवचनयोरापत्तिरित्यर्थः, एतदेवाह– आकाशत्वाति । द्वित्वादिपर्याप्तावाकाशत्वव्याप्यताया अभावान्न तस्याः संबन्धत्वम् । अतिप्रसङ्गविरहात्=

वैशिष्ट्यं च वैज्ञानिकं न तु वास्तवं तेन यत्र योग्यताभ्रमजन्यः ' अत्राकाशौ इत्यादिवाक्यजन्यद्वित्वादिप्रकारकाऽऽकाशादिशाब्दबोधस्तत्र विशिष्टसंसर्गा सिद्धावपि न क्षतिः— द्वित्वादिपर्याप्तावन्यत्र प्रसिद्धस्याकाशत्वादिव्याप्यत्व भ्रान्तेस्तत्रोपगमात्, प्रकारतायां भ्रमस्य सर्वानुभवसिद्धत्वेपि संबन्धतावच्छे दकांशे भ्रमत्वस्यान्यत्रोपपादितत्वात् ।

न च प्रकृत्यर्थतावच्छेदके एव व्यापकतासंबन्धेन द्वित्वान्वयधीः किं नो

द्वित्वादिपर्याप्तिराकाशेऽसत्त्वेनाकाशपदाद् द्विवचनाद्यापत्तिर्नास्तीत्यर्थः । अत्र पर्याप्तावुद्देश्य च्छेदकव्याप्यत्ववैशिष्ट्यं च वैज्ञानिकमेव न तु वास्तवं विवक्षितम्, वैशिष्ट्यस्य ज्ञानमात्रमे इत्याह— वैशिष्ट्यं चेति । तथा चाऽऽकाशे वस्तुतो विशिष्टसंसर्गाप्रसिद्धावपि=उद्देश्यताव कव्याप्यत्वविशिष्टद्वित्वपर्याप्तेः संबन्धभूताया असत्त्वेपि यदि कस्यचित् पुंस आकाशे द्वित्वभ्र स्यात्तदा द्वित्वपर्याप्तावप्युद्देश्यतावच्छेदकाकाशत्वव्याप्यत्ववैशिष्ट्यस्य भ्रमसत्त्वेन ' अत्राका इति द्विवचनान्तप्रयोगसंभवात् न क्षतिः=' अत्राकाशौ ' इति प्रयोगस्यानुपपत्तिर्नास्ति, चात्र वैशिष्ट्यं वास्तवं विवक्षितं स्यात्तदा वस्तुतो द्वित्वपर्याप्तावाकाशत्वव्याप्यत्ववैशि भावात् ' अत्राकाशौ ' इति प्रयोगो भ्रान्त्यापि न स्यादेवेत्यर्थः । ननु क्वचित् प्रसिद्ध न्यत्र भ्रमो भवतीति कथं द्वित्वपर्याप्तावाकाशत्वव्याप्यत्वस्य भ्रम इत्याशङ्क्याह— द्वित्वाद अन्यत्र=शब्दादौ प्रसिद्धस्याकाशत्वव्याप्यत्वस्य तत्र ' अत्राकाशौ ' इतिवाक्यस्थले द्वित्व भ्रान्तेः स्वीकारादित्यर्थः । ननु प्रकारांशे भ्रमो भवति न तु संबन्धांशे पर्याप्तिश्चात्र संबन्ध कथं तत्र भ्रमः स्यादित्याशङ्क्याह— प्रकारतायामिति । प्रकारतायां भ्रमस्य शुक्तिरज स्थले शुक्तौ रजतत्वमसदपि प्रकारतया भासते इति सर्वानुभवसिद्धत्वेपि संबन्धतावच्छेद भ्रमो भवतीत्यन्यत्रोपपादितम् । अत्र " नन्वत्राकाशावित्यत्राकाशे द्वित्वं प्रकारतया भास संबन्धः पर्याप्तिस्तत्राकाशत्वव्याप्यत्वमसदपि भासते संबन्धतावच्छेदकांशे भ्रमत्वं न तु पप्रकारांशे संबन्धतावच्छेदकांशे च भ्रमत्वस्यानङ्गीकारादित्यत आह— संबन्धतावच्छेदकांशे भ्रमत्वस्यान्यत्रोपपादितत्वादिति, पर्याप्तिः संबन्धस्तत्राकाशत्वव्याप्यत्वं विशेषणं संबन्धता दकं तत्राकाशत्वव्याप्यत्वाभाववत्पर्याप्तौ चाकाशत्वव्याप्यत्वं प्रकारतयाऽवच्छेदक इति संब वच्छेदकांशे भ्रमत्वस्यान्यत्रोपपादितत्वादित्यर्थः । परस्परविशेषणविशेष्यभावापन्नेष्वेव संस स्वीकारात् तादृशप्रकारतामादायैव भ्रमत्वमुपपादनीयमित्याद्यन्यत्र स्थितम् ।" इति कृष्णंभ

ननु संख्यायाः व्यापकतासंबन्धेन प्रकृत्यर्थतावच्छेदके एवान्वयः स्वीक्रियतां तथा च यत्र घटादौ संख्या वर्तते तत्र तत्र प्रकृत्यर्थतावच्छेदकघटत्वादेरपि सत्त्वात् प्रकृत्यर्थताव व्यापकत्वमस्त्येवेति तेन संबन्धेन प्रकृत्यर्थतावच्छेदके संख्यान्वयो नानुपपन्नः, द्वित्वपर्याप्ता काशत्वव्याप्यत्ववैशिष्ट्यस्याभावाद् यथा ' आकाशौ ' इतिप्रयोगवारणं पर्याप्तेः संबन्धत्वे वति तथा व्यापकतासंबन्धेन द्वित्वस्य प्रकृत्यर्थतावच्छेदके आकाशत्वेप्यन्वयस्वीकारे सं

यत इति वाच्यम्, 'घटौ' इत्यादौ घटत्वादीनां स्वरूपत एवोपस्थिततया तत्रो-क्तान्वयबोधस्याऽसंभवात् । स्वव्यापकीभूतोद्देश्यतावच्छेदकवत्त्वरूपपरम्पराया एव प्रकृत्यर्थे द्वित्वादेः संबन्धतास्वीकारे च व्यापकतारूपसंबन्धतावच्छेदकांशे भ्रमत्वस्यावश्यकतया उद्देश्यतावच्छेदकव्याप्यत्वविशिष्टपर्याप्तेः संबन्धतोपेक्षाया निर्बीजत्वात् ।

अथात्र व्याप्तिर्व्यापकसामानाधिकरण्यरूपैव वाच्या न तु तद्वदन्यावृत्तित्व-

---

त्वव्यापकताया आकाशत्वेऽभावात्तेन संबन्धेनाकाशत्वे द्वित्वासंभवादिति विनिगमनाविरहेणा-ङ्क्याह— न चेति । परिहारहेतुमाह— घटाविति, पदार्थान्तरनिष्ठप्रकारतानिरूपितविशेष्यता-न्धेन शाब्दबुद्धित्वावच्छिन्नं प्रत्यऽन्वयितावच्छेदकरूपेणोपस्थितिः कारणमिति नियमात् घटौ' इत्यादौ घटत्वादेः स्वरूपेणोपस्थितत्वेनाऽन्वयितावच्छेदक( घटत्वत्वादि )रूपेणो-स्थित्यभावात्तत्र द्वित्वादिसंख्यान्वयो न संभवतीति न प्रकृत्यर्थतावच्छेदके केनापि संबन्धेन ख्यान्वयः स्वीकर्तुं शक्यते इति उद्देश्यतावच्छेदकव्याप्यत्वविशिष्टपर्याप्तिसंबन्धेन प्रकृत्यर्थे क्तरीत्या संख्यान्वयो युक्त इत्यर्थः । ननूक्तोद्देश्यतावच्छेदकव्याप्यत्वविशिष्टपर्याप्तेः संबन्धत्वं कृत्वा स्वव्यापकीभूतोद्देश्यतावच्छेदकवत्त्वस्यैव संबन्धत्वं स्वीकार्यं तथा च स्वं संख्या तद्-पकीभूतं यदुद्देश्यतावच्छेदकं घटत्वादि तद्वत्त्वं प्रकृत्यर्थे घटादावस्त्येवेति तेन संबन्धेन घटादौ त्वादिसंख्यान्वये न काचिदनुपपत्तिः, 'आकाशौ' इत्यत्र स्वपदेन द्वित्वं ग्राह्यं द्वित्वव्या-ता चोद्देश्यतावच्छेदके आकाशत्वे नास्तीति स्वव्यापकतावच्छेदकवत्त्वसंबन्धेनाकाशे द्वित्वा-भात् 'आकाशौ' इतिप्रयोगापत्तिरपि नास्त्येवेत्याशङ्क्याह— स्वव्यापकीति । उत्तरमाह— पकतारूपेति, एवमपि भ्रान्त्या 'अत्राकाशौ' इतिप्रयोगोपपत्त्यर्थं उद्देश्यतावच्छेदकव्याप्य-विशिष्टपर्याप्तेः संबन्धत्वे यथोक्तरीत्या द्वित्वपर्याप्तौ आकाशत्वव्याप्यत्वभ्रमः स्वीक्रियते तथा व्यापकीभूतोद्देश्यतावच्छेदकवत्त्वस्य संबन्धत्वेप्याऽऽकाशत्वे द्वित्वव्यापकत्वभ्रमः स्वीकर्तव्य त विशेषाभावाद् उद्देश्यतावच्छेदकव्याप्यत्वविशिष्टपर्याप्तेः संबन्धत्वपरित्यागे कारणं नास्त्येव, व विनिगमनाविरहः— "आचार्याः कृत्वा न निवर्तन्ते" इत्यस्यैव विनिगमकत्वादित्यर्थः व्यापकीभूतोद्देश्यतावच्छेदकवत्त्वं संबन्ध इत्यस्य स्वनिरूपितव्यापकताश्रयीभूतोद्देश्यतावच्छेदक- संबन्ध इत्यर्थ एतत्संबन्धस्वरूपे च व्यापकता प्रविष्टास्तीति सा व्यापकता संबन्धतावच्छे-का जाता. स्वपदेन च द्वित्वादिसंख्या ग्राह्या. आकाशत्वे च द्वित्वव्यापकताया असत्त्वेपि यद् व्यापकताज्ञानं तद् भ्रम एव 'आकाशौ' इत्यत्रेत्यवधेयम्

ननु संबन्धभूता योद्देश्यतावच्छेदकव्याप्यत्वविशिष्टपर्याप्तिस्तत्र व्याप्यत्वस्य प्रवेशोस्ति व्याप्यत्वं व्याप्त्याश्रयत्वमेवेति व्याप्तेरपि पर्याप्तौ प्रवेशः प्राप्तो व्याप्तिश्च द्विविधाऽस्ति व्यापकसामानाधिक-रूपा तद्वदन्यावृत्तित्वरूपा=व्यापकवदन्यावृत्तित्वरूपा च, तत्र तद्वदन्यावृत्तित्वरूपा व्याप्ति-न ग्रहीतुं शक्यते यतः 'द्वौ प्रमेयौ' इत्यत्रोद्देश्यतावच्छेदकं प्रमेयत्वं तच्च केवलान्वयि तथा

रूपा—केवलान्वयिधर्मस्य प्रकृत्यर्थतावच्छेदकता यत्र तत्राप्रसिद्धेः, एवं चोद्दे तावच्छेदकव्याप्तिविशिष्टपर्याप्त्यऽपेक्षया लघोः स्वव्यापकतादृशधर्मवत्त्वस्यैव सं न्धत्वमुचितमिति चेत् ?, तर्हि ‘ आकाशो न द्वौ ’ इत्यादिवाक्यजन्यशाब्द धदशायामपि ‘ आकाशौ ’ इत्यादिवाक्याद् द्वित्वबोधापत्तिः, तथा हि–‘ आ काशो न द्वौ ’ इत्यादितो द्वित्वावच्छिन्नभेदः प्रतीयते स च न स्वव्यापका काशत्ववत्त्वादिसंबन्धावच्छिन्नप्रतियोगितावच्छेदकताकः— तादृशसंबन्धेन द्वि वतोऽप्रसिद्धेः. अपि तु पर्याप्तिसंबन्धावच्छिन्नप्रतियोगितावच्छेदकताक तत्काले च पर्याप्तिसंबन्धेन द्वित्वविशिष्टबुद्धिरेव प्रतिबध्यते न तूक्तपरम्परास न्धेन तद्विशिष्टबुद्धिरपीति ।

---

चात्रपर्याप्तौ प्रमेयत्वाभाववद्ऽवृत्तित्वमपेक्ष्यते तच्च न संभवति प्रमेयत्वाभावस्याप्रसिद्धत्वादिति प्तिरत्र व्यापकसामानाधिकरण्यरूपैव ग्राह्या. ‘द्वौ प्रमेयौ’इत्यत्राप्युद्देश्यतावच्छेदकं यत्प्रमेयत्वं त मानाधिकरण्यं तु द्वित्वपर्याप्तावस्त्येवेति न कोपि दोषः, किं त्वेवमुद्देश्यतावच्छेदकरूपं यद् पकं तादृशव्यापकसामानाधिकरण्यविशिष्टायाः पर्याप्तेः संबन्धत्वं प्राप्तं तत्र च व्याप व्यापकसामानाधिकरण्यस्य च प्रवेशेन गौरवात् तादृशपर्याप्त्यपेक्षया लघुभूतस्य स्वव्याप दृशधर्मवत्त्वस्य=स्वव्यापकीभूतोद्देश्यतावच्छेदकवत्त्वस्यैव संबन्धत्वमुचितम्. अत्र व्यापकत्वस शेपि व्यापकसामानाधिकरण्यप्रवेशाभावेन लाघवादित्याशङ्कते— अथेति । स्वं संख्या । परि तर्हीति, स्व(संख्या) व्यापकीभूतोद्देश्यतावच्छेदकवत्त्वसंबन्धेन प्रकृत्यर्थे संख्याया अन्वयस ‘ आकाशो न द्वौ ’ इतिवाक्यजन्यशाब्दबोधे सत्यपि ‘ आकाशौ ’ इतिवाक्येनाकाशे न्वयबोधोऽनिष्ट आपद्येत । एतदेवोपपादयति— तथाहीति, ‘ आकाशो न द्वौ ’ इत्यत्रा शब्दद्विशब्दयोः समानविभक्तिकत्वाद् द्वित्वावच्छिन्नप्रतियोगिताकभेदः प्रतीयते, स च भे स्व(संख्या)व्यापकाकाशत्ववत्त्वसंबन्धावच्छिन्नप्रतियोगितावच्छेदकताक इति न स्वव्यापका त्ववत्त्वसंबन्धेन द्वित्वावच्छिन्नभेदः प्रतीयते । अत्र हेतुमाह— तादृशसंबन्धेनेति, यथा सं संबन्धेन घटवतो भूतलस्य प्रसिद्धत्वात् संयोगसंबन्धेन घटाभावः प्रत्येतुं शक्यते तथा तादृशसंबन्धेन=स्व ( द्वित्व ) व्यापकीभूताकाशत्ववत्त्वसंबन्धेन द्वित्ववान् प्रसिद्धः स्यात्तदा शसंबन्धेन द्वित्वावच्छिन्नभेदः प्रत्येतुं शक्येतापि नैवमस्ति, आकाशत्वे द्वित्वव्यापकत्वस्यैवाभ त्यर्थः, किं तु ‘ आकाशो न द्वौ ’ इत्यत्र पर्याप्तिसंबन्धावच्छिन्नप्रतियोगितावच्छेदक उद्देश्यतावच्छेदकव्याप्यत्वविशिष्टपर्याप्तिसंबन्धेन द्वित्वावच्छिन्नभेदः प्रतीयते उद्देश्यतावच्छेद प्यत्वविशिष्टपर्याप्तिसंबन्धेन द्वित्ववतो घटादेः प्रसिद्धत्वात्, अत्रापि शब्दे उद्देश्यतावच्छेद ताकाशत्वव्याप्यत्वस्य सत्त्वादेवेत्यर्थः । तथा च यथा संयोगसंबन्धेन घटाभावज्ञानकाले गेनैव घटवत्त्वज्ञानप्रतिबन्धो भवति न तु समवायादिनापि तथा प्रकृतेपि ‘ आकाशो न इत्यत्र तत्काले=उक्तपर्याप्तिसंबन्धेन द्वित्वावच्छिन्नभेदप्रतीतिकाले उक्तपर्याप्तिसंबन्धेनैव द्वि

अथ 'आकाशो न द्वौ' इत्यादौ केवलपर्याप्तिसंबन्धावच्छिन्नप्रतियोगितावच्छेदकताकभेदो नञा बोधयितुं न शक्यते– आकाशेऽप्युक्तयुक्त्या द्वित्वपर्याप्तेः सत्त्वेन तत्र तेन संबन्धेन तद्वद्भेदस्य वक्तुमशक्यत्वात्, आकाशत्वव्याप्यपर्याप्तिसंबन्धावच्छिन्नप्रतियोगितावच्छेदकताकद्वित्वादिमद्भेदश्चाऽप्रसिद्ध एवेति चेत्? न– द्वित्वादिपर्याप्तेरुभयादिवृत्तिधर्मेणैवाऽवच्छेदात्, तदनवच्छेदकैकमात्रवृत्तिधर्मावच्छेदेन तद्वद्भेदस्य तेन संबन्धेन द्वित्वादिमद्भेदस्य च तद्वति वृत्तौ बाधकाभावात् ।

---

ष्टबुद्धेः=द्वित्ववत्त्वबुद्धेः प्रतिबन्धः संभवति न तूक्तपरम्परासंबन्धेन=स्वव्यापकीभूतोद्देश्यताच्छेदकवत्त्वसंबन्धेनापि तद्विशिष्टबुद्धेः=द्वित्ववत्त्वबुद्धेः प्रतिबन्धः संभवतीति यथा संयोगेन घटावज्ज्ञाने सत्यपि समवायेन घटवत्त्वज्ञानं जायते एव बाधकाभावात्तथात्रापि 'आकाशो न द्वौ' तिवाक्याद् उक्तपर्याप्तिसंबन्धेन द्वित्वावच्छिन्नभेदज्ञानकालेपि स्वव्यापकीभूतोद्देश्यतावच्छेदकत्वसंबन्धेन 'आकाशौ' इत्यत्राकाशे द्वित्वान्वयबोधः स्यादेव बाधकाभावादित्याह– अपि त्विति । ननु पर्याप्तेः केवलपर्याप्तित्वरूपेण संबन्धत्वमुच्यते किं वाऽऽकाशत्वव्याप्यपर्याप्तित्वेन रूपेण न्धत्वमुच्यत इत्याशङ्कते–अथेति । यदि केवलपर्याप्तित्वरूपमात्रेण पर्याप्तेः संबन्धत्वं तदा काशेऽप्युक्तयुक्त्या=घटाकाशोभयगतद्वित्वस्याऽऽकाशेपि सत्त्वात् प्रत्येकस्योभयानतिरिक्तत्वात् =द्वित्ववत्याकाशे तेन संबन्धेन=केवलपर्याप्तिसंबन्धेन तद्वद्भेदस्य=द्वित्ववद्भेदस्य ( द्वित्वावच्छिन्नभेदस्य ) वक्तुमशक्यत्वात् 'आकाशो न द्वौ' इत्यत्र केवलपर्याप्तिसंबन्धावच्छिन्नप्रतियोतावच्छेदकताकभेदः=केवलपर्याप्तिसंबन्धेन द्वित्वावच्छिन्नभेदो नञा बोधयितुं नैव शक्येत सान्यतः पर्याप्तिसंबन्धेन घटाकाशोभयगतद्वित्वस्याकाशेपि सत्त्वादेवेत्याह–केवलेति । द्वितीयदलशति–आकाशत्वेति, केवलाकाशे द्वित्वं नास्त्येवेति द्वित्वपर्याप्तावाकाशत्वव्याप्यत्वं नास्तीत्याशत्वव्याप्यपर्याप्तेः संबन्धत्वमपि न संभवति तथा चाऽऽकाशत्वव्याप्यपर्याप्तिसंबन्धावच्छिन्नप्रतिगितावच्छेदकताकद्वित्वादिमद्भेदश्च=आकाशत्वव्याप्यपर्याप्तिसंबन्धेन द्वित्वावच्छिन्नभेदश्चाऽप्रद्ध एव, यद्याकाशत्वव्याप्यपर्याप्तिसंबन्धेन द्वित्ववत्त्वं प्रसिद्धं स्यात्तदाऽऽकाशत्वव्याप्यपर्याप्तिन्धेन द्वित्वावच्छिन्नभेदोपि प्रसिद्धः स्यात् नैवमस्ति द्वित्वपर्याप्तावाऽऽकाशत्वव्याप्यत्वाभावेनाऽकाया आकाशत्वव्याप्यपर्याप्तेः संबन्धत्वासंभवादित्याऽऽकाशे द्वित्वावच्छिन्नभेदबोधनस्याऽसंभत् 'आकाशो न द्वौ' इतिप्रयोगोऽमूलक एवेत्यर्थः । परिहरति– नेति । द्वित्वपर्याप्तेरुभयादित्तिधर्मेणैवावच्छेदादिति– उभयवृत्तिधर्म उभयत्वमेव द्वित्वपर्याप्तेरवच्छेदकं भवतीत्युभयत्वावछेदेन द्वित्वावच्छिन्नभेदस्य विरोधोस्ति–द्वित्वपर्याप्त्यवच्छेदकोभयत्ववति घटपटद्वये द्वित्वस्यैव त्वेन द्वित्वावच्छिन्नभेदस्याऽसंभवात् । एकमात्रवृत्तिधर्मस्त्वाऽऽकाशत्वादि द्वित्वपर्याप्तेरवच्छेदक न भवतीति तदनवच्छेदकैकमात्रवृत्तिधर्मावच्छेदेन=तस्या द्वित्वपर्याप्तेरनवच्छेदको य आकाशादिरूप एकमात्रवृत्तिधर्मस्तदवच्छेदेन तद्वद्भेदस्य=द्वित्वादिपर्याप्तिवद्भेदस्य=उभयभेदस्य (प्रत्ये-

न चैवम्- ' घटपटौ न द्वौ ' इतिप्रयोग आपद्येत–घटपटयोरपि प्रत्येकं द्वि
वच्छिन्नभेदसत्त्वादिति वाच्यम्, द्विवचनाद्युपस्थापितद्वित्वावच्छेदेनैव द्वित्वावच्छि
न्नभेदस्य बाधेन तादृशप्रयोगाभावोपपत्तेः । नञा व्यासज्यवृत्तिधर्मावच्छिन्न
योगिताकभेदश्चोद्देश्यतावच्छेदकावच्छेदेनैव बोध्यते इतिव्युत्पत्तेर्द्वित्वसामान
करण्येन तद्बाधस्याकिंचित्करत्वात् ।

---

कस्योभयस्य रूपत्वाभावेन प्रत्येकमुभयभेदस्य स्वीकारात् ) तेन संबन्धेन=पर्याप्तिसंबन्धेन द्वि
मद्भेदस्य=द्वित्वावच्छिन्नभेदस्य च तद्वति=एकमात्रवृत्त्याकाशत्वादिधर्मवत्याकाशादौ वृत्तौ
बाधकाभावादित्यन्वयः । तथा चाकाशत्वस्यैकमात्रवृत्तित्वेन द्वित्वपर्याप्त्यवच्छेदकत्वाभावा
त्वावच्छेदेनाकाशे द्वित्वावच्छिन्नभेदस्य वृत्तित्वे बाधकाभावात् ' आकाशो न द्वौ ' इति
उपपद्यते । ' घटपटौ न द्वौ ' इति प्रयोगस्तु न भवति घटपटोभये द्वित्वपर्याप्त्यवच्छे
भयत्वस्य सत्त्वेन तत्र द्वित्वावच्छिन्नभेदस्यासत्त्वादित्यर्थः ।

नन्वेवम्=द्वित्वपर्याप्तेरुभयत्वादिव्यासज्यवृत्तिधर्मावच्छेदेनैव स्वीकारे यथा ' आकाशो
इति प्रयोगो भवति तथा ' घटपटौ न द्वौ ' इत्यपि प्रयोगः स्यादेव प्रत्येकं घटे च पटे
त्वाभावेन द्वित्वपर्याप्तेरभावाद् द्वित्वस्याभावेन द्वित्वावच्छिन्नभेदस्य सत्त्वात्– द्वित्वपर्याप्ति
तादृशपर्याप्तिसंबन्धेन द्वित्वस्यासंभवादित्याशङ्कयाह– न चेति । परिहारमाह– द्वि
' घटपटौ ' इत्यत्र द्विवचनेन यद् द्वित्वमुपस्थितं भवति तस्य घटपटयोरन्वयात् तादृ
च्छेदेन घटपटयोरुभयोर्द्वित्वावच्छिन्नभेदस्यासंभवात् ( द्वित्वस्यैव सत्त्वात् ) तादृशप्रयोग
' घटपटौ न द्वौ ' इतिप्रयोगाभाव उपपद्यते । घटपटोभयत्वावच्छेदेन द्वित्वपर्याप्तेः सत्त्वे
शपर्याप्तिसंबन्धेन घटपटोभयस्मिन् द्वित्वस्यैव सत्त्वात् द्वित्वावच्छिन्नप्रतियोगिताकभेदो न सं
यावत् । प्रत्येकं घटपटयोर्द्वित्वाभावेन द्वित्वावच्छिन्नभेदस्य सत्त्वेपि घटपटद्वये तु द्वि
द्वित्वावच्छिन्नभेदस्यासत्त्वात् नञा घटपटद्वये द्वित्वावच्छिन्नभेदस्य स्वार्थस्य बोधनमेव न
येन 'घटपटौ न द्वौ' इति प्रयोग आपद्येतेत्याह– नञेति, व्यासज्यवृत्तिधर्मो द्वित्वोभयत्व
व्यासज्यवृत्तिधर्मेण=उभयत्वेन द्वित्वेन वाऽवच्छिन्ना प्रतियोगिता यस्यैवंभूतभेदस्य द्वित्वाव
दस्य नञर्थस्य नञा उद्देश्यतावच्छेदकावच्छेदेनैव प्रतीतिर्भवति, ' घटपटौ न द्वौ ' इत्यत्र
श्यतावच्छेदकम् ' घटपटौ ' इति द्विवचनोपस्थाप्यं द्वित्वमिति ' घटपटौ न द्वौ ' इत्यत्र
वच्छेदेन घटपटोभयस्मिन्नेव नञा द्वित्वावच्छिन्नभेदो बोधनीयस्तत्तु न संभवति– घटपटो
द्वित्वस्यैव सत्त्वेन द्वित्वभेदस्य बाधितत्वात्, द्वित्वसामानाधिकरण्येन=घटवृत्तिद्वित्वसामा
रण्येन पटवृत्तिद्वित्वसामानाधिकरण्येन च तदऽबाधस्य=द्वित्वावच्छिन्नभेदाऽबाधस्य=द्वित्वा
भेदसत्त्वस्याकिंचित्करत्वात्=प्रयोगापादकत्वाभावात् ' घटपटौ न द्वौ ' इति प्रयोगापत्ति
अयं भावः– ' घटपटौ ' इत्यत्र घटपटद्वये वर्तमानं द्वित्वं प्रत्येकं घटे च पटे चापि
अन्यथा प्रत्येकं घटपटयोर्द्वित्वाभावे घटपटद्वयेपि द्वित्वं न स्यादेव समुदायवृत्तिधर्मस्य

न च घटत्वादेरतिप्रसक्ततया द्वित्वादिपर्याप्तेरऽनवच्छेदकत्वात् तदवच्छेदेन द्वित्ववद्भेदस्य भवतामप्यनुमतत्वात् प्रकृत्यर्थगतैकत्वाविवक्षायाम् ‘ घटो न द्वौ ’ इत्यादिप्रयोगापत्तिरिति वाच्यम्, तादृशप्रयोगाभावे घटत्वादेर्द्वित्वपर्याप्तेरिव द्वित्वादिमद्भेदस्याप्यनुयोगितावच्छेदकताया अप्रामाणिकत्वात्, प्रतियोगिताव-च्छेदकाऽनवच्छेदकताया भेदावच्छेदकतानियतत्वासिद्धेः ।

---

ावश्यकत्वात् तत्र प्रत्येकं घटपटयोर्वर्तमानद्वित्वसामानाधिकरण्येन प्रत्येकं घटपटयोर्व्यासज्यवृ-त्तिधर्मावच्छिन्नप्रतियोगिताकभेदस्य=द्वित्वावच्छिन्नभेदस्य सत्त्वेपि–( प्रत्येकं घटपटयोर्द्वित्वस्या-वात् ) घटपटद्वये तु द्वित्वावच्छिन्नभेदो नास्त्येव द्वित्वस्यैव सत्त्वात् नञा द्वित्वभेदश्चोद्देश्यता-च्छेदकावच्छेदेनैव=उभयत्वावच्छेदेन घटपटोभयस्मिन्नेव बोधयितुं शक्यते न तु प्रत्येकम्. उभ-स्मिंश्च द्वित्वावच्छिन्नभेदस्यासत्त्वात् ‘ घटपटौ न द्वौ ’ इतिप्रयोगस्यापत्तिर्नास्त्येव– द्वित्वावच्छि-भेदसत्त्वे एव ‘ न द्वौ ’ इतिप्रयोगस्य संभवात् । द्वित्वसामानाधिकरण्येन प्रत्येकं घटपटयोर्द्वि-ावच्छिन्नभेदसत्त्वेपि द्वित्वावच्छेदेन घटपटोभयस्मिन् द्वित्वसत्त्वेन द्वित्वावच्छिन्नभेदाभावसत्त्वे ्यकाभावात् ।

ननु द्वित्वपर्याप्तिस्तु ‘ घटपटौ ’ इत्यत्र घटपटोभयत्रैव वर्तते घटत्वं तु द्वित्वपर्याप्त्यनधिक-ण्वपि बहुषु घटेषु वर्तते इत्यतिप्रसक्तं अतिप्रसक्तधर्मस्यावच्छेदकत्वास्वीकाराद् द्वित्वपर्याप्ति-त्वमनवच्छेदकमेवेति तदवच्छेदेन=द्वित्वपर्याप्त्यनवच्छेदकीभूतघटत्वावच्छेदेन=यत्र यत्र घटत्वं र्तते तत्र तत्र द्वित्वपर्याप्तेरभावात् तादृशपर्याप्तिसंबन्धेन द्वित्वस्याप्यसत्त्वेन द्वित्ववद्भेदस्य=द्वित्वा-च्छिन्नभेदस्य सत्त्वात् भवतामप्यनुमतत्वात् प्रकृत्यर्थगतैकत्वस्याविवक्षायाम् ‘ घटो न द्वौ ’ तिप्रयोगः स्यादेवेत्याशङ्क्याह– न चेति । प्रकृत्यर्थगतैकत्वस्य विवक्षायां त्वेकत्वविशिष्टे टे द्वित्वाभावेन द्वित्वावच्छिन्नभेदस्य विवक्षितत्वात् ‘ घटो न द्वौ ’ इतिप्रयोगस्येष्टत्वादुक्तम्–कत्वाविवक्षायामिति । प्रकृत्यर्थगतैकत्वाविवक्षायां तु ‘घटो न द्वौ’ इति प्रयोगो नेष्टः– द्वित्व-भवेन द्वित्ववद्भेदासंभवादित्यर्थः । परिहरति– तादृशेति, तादृशप्रयोगाभावे=प्रकृत्यर्थगतैकत्वा-वक्षायाम् ‘घटो न द्वौ’ इतिप्रयोगाभावे घटत्वादेर्द्वित्वपर्याप्त्यनुयोगितावच्छेदकत्वस्याप्रामाणि-त्वस्येव द्वित्ववद्भेदा ( द्वित्वावच्छिन्नभेदा ) नुयोगितावच्छेदकत्वस्याप्रामाणिकत्वस्यैव हेतुत्वा-त्यन्वयः । यथोक्तरीत्यातिप्रसक्तत्वेन घटत्वं द्वित्वपर्याप्त्यवच्छेदकत्वाभावेन द्वित्वपर्याप्त्यनुयोगि-वच्छेदकं नास्ति तथा द्वित्वावच्छिन्नभेदानुयोगितावच्छेदकमपि नास्त्येव– ‘ घटपटौ द्वौ ’ यत्र द्वित्वसत्त्वेन द्वित्वावच्छिन्नभेदाभावेपि घटत्वस्य सत्त्वेनातिप्रसक्तत्वात् तथा च घटत्वस्य त्वावच्छिन्नभेदानुयोगितावच्छेदकत्वाभावेन घटत्वावच्छेदेन द्वित्वावच्छिन्नभेदप्रसक्त्यऽसंभवात् टो न द्वौ ’ इतिप्रयोगापत्तिरेकत्वाऽविवक्षायां नास्ति, एकत्वविवक्षायां त्वेकत्वस्य द्वित्वावच्छि-भेदानुयोगितावच्छेदकत्वसंभवेन तादृशैकत्वावच्छेदेनैकस्मिन् घटे द्वित्वावच्छिन्नभेदसंभवादेकं मुद्दिश्य ‘ घटो न द्वौ ’ इतिप्रयोग उपपद्यते, न चैवमेकत्वाविवक्षायामेकत्वस्य द्वित्वावच्छि-

**अस्तु वाऽतिप्रसक्तोऽपि घटत्वादिर्द्वित्वपर्याप्तेरवच्छेदकः ' घटौ ' इत्यादिप्रती बलात् ।**

**वस्तुतस्तु घटत्वादेः प्रत्येकं द्वित्वपर्याप्त्यनवच्छेदकत्वेपि द्वित्वपर्याप्तित्वावच्छिन्नानतिप्रसक्ततया तदवच्छिन्नावच्छेदकत्वमव्याहतमेव ।**

न्नभेदानुयोगितावच्छेदकत्वं संभवति येनैकत्वाऽविवक्षायामपि ' घटो न द्वौ ' इतिप्रयोग तेत्यर्थः । ननु ' यद् भेदीयप्रतियोगितावच्छेदकानवच्छेदकं भवति तद् भेदावच्छेदकं भवति नियमोस्ति यथा ' घटो न पटः ' इत्यत्र पटभेदस्य प्रतियोगितावच्छेदकं पटत्वं प्रतियोगितावच्छेदकावच्छेदकं पटत्वत्वं भवति घटत्वं तु प्रतियोगितावच्छेदकानवच्छेदकमेवेति तद् घटत्वं दस्यावच्छेदकं भवत्येव— घटे पटभेदस्य घटत्वस्य च सत्त्वात् सामानाधिकरण्येन घटत्वस्य भेदावच्छेदकत्वात् । एवम्— द्वित्ववद्भेदस्य ( द्वित्वावच्छिन्नभेदस्य ) प्रतियोगी द्वित्ववान् योगिता द्वित्ववति. प्रतियोगितावच्छेदकं द्वित्ववति वर्तमानं द्वित्वं प्रतियोगितावच्छेदका द्वित्वत्वं घटत्वं तु प्रतियोगितावच्छेदकानवच्छेदकमेवेति तद् घटत्वं द्वित्ववद्भेदस्यावच्छेदकं तथा च घटे द्वित्ववद्भेदस्य प्राप्त्या एकत्वाविवक्षायामपि ' घटो न द्वौ ' इति प्रयोगः ' न द्वौ ' इत्यस्य द्वित्ववद्भेदबोधकत्वादित्याशङ्कयाह— प्रतियोगितावच्छेदकेति, भेदस्य गितावच्छेदकानवच्छेदकं घटत्वादिकं भेदस्यावच्छेदकं भवत्येवेति नियतं नास्त्येव— अस्वी अन्यथा— एकत्वाविवक्षायामपि त्वदुक्तरीत्या ' घटो न द्वौ ' इति प्रयोगः स्यादेव, प्रयोगो भवतीति नोक्तनियमः स्वीक्रियते तथा चोक्तनियमास्वीकारे घटत्वस्य द्वित्ववद्भेदकत्वाप्राप्तौ घटत्वावच्छेदेन द्वित्ववद्भेदाप्रसक्त्या ' घटो न द्वौ ' इतिप्रयोगापत्तिर्नास्त्येव

अतिप्रसक्तधर्मस्यावच्छेदकत्वं स्वीकृत्याप्याह— अस्तु वेति, न्यूनवृत्तिधर्मस्यावच्छेदकत्वेऽप्यतिप्रसक्तधर्मस्यावच्छेदकत्वस्वीकारेणोक्तरीत्यातिप्रसक्तस्यापि घटत्वस्य द्वित्वपर्याप्त्यवच्छेदकत्वस्वीकाराद् द्वित्वावच्छेदकत्वमेव प्राप्तमिति द्वित्वावच्छेदकस्य घटत्वस्य द्वित्ववद्भेदावच्छेदकत्वात् ' घटो न द्वौ ' इतिप्रयोगापत्तिर्नास्त्येव— एकत्वाविवक्षायां घटे द्वित्वान्वयस्वीकारेण वद्भेदासंभवादित्यर्थः । यद्यतिप्रसक्तस्यापि घटत्वस्य द्वित्वपर्याप्त्यवच्छेदकत्वं न स्यात्तदा इत्येवं घटत्वावच्छेदेन घटे द्विवचनोपस्थाप्यद्वित्वस्यान्वयो न स्यादिति ' घटौ ' इतिप्रतीदेवातिप्रसक्तस्यापि घटत्वस्य द्वित्वपर्याप्त्यवच्छेदकत्वं स्वीक्रियत इत्याह— घटाविति ।

घटत्वस्य द्वित्वपर्याप्त्यतिप्रसक्तत्वमेव नास्ति येन द्वित्वपर्याप्त्यवच्छेदकत्वं न स्या वस्तुतस्त्विति, द्वित्वपर्याप्तितत्तद्व्यक्तीनां भिन्नत्वाद् या द्वित्वपर्याप्तिव्यक्तिरेतद्घ स्ति सान्यघटपटद्वये नास्ति घटत्वं तु तत्राप्यस्त्येवेति चालनीन्यायेन प्रत्येकं द्वित्वपर्या द्वित्वपर्याप्तितत्तद्व्यक्तीनाम् ( द्वित्वपर्याप्तितत्तद्व्यक्त्यपेक्षया ) घटत्वस्यातिप्रसक्तत दकत्वेपि द्वित्वपर्याप्तित्वावच्छिन्नानतिप्रसक्ततया=यत्र यत्र घटत्वं तत्र तत्र कस्या अपि प्तिव्यक्तेः सत्त्वात् सर्वासां च द्वित्वपर्याप्तीनां द्वित्वपर्याप्तित्वेन रूपेणैकत्वाद् घटत्व

अथ पर्याप्त्याख्यविलक्षणसंबन्ध एवाऽप्रामाणिकस्तत्कथं तत्संबन्धता ? 'आकाशो न द्वौ' इति प्रतीतिस्तु समवायसंबन्धावच्छिन्नप्रतियोगितावच्छेदकताकद्वित्वावच्छिन्नभेदविषयिकैवाऽस्ताम्– आकाशादौ द्वित्वसमवायसत्त्वेपि द्वित्वादेरेवोभयादिवृत्तिधर्ममात्रावच्छिन्नत्वोपगमात् तदनवच्छेदकाऽऽकाशत्वाद्यवच्छेदेन समवायसंबन्धेन तद्वतो भेदस्य वृत्तौ बाधकाभावादिति चेत्, न–

---

द्वित्वपर्याप्तित्वावच्छिन्नाभावस्याऽसत्त्वाद् द्वित्वपर्याप्तित्वावच्छिन्नातिप्रसक्तत्वं नास्त्येव घटत्वाधिकरणे कस्या अपि द्वित्वपर्याप्तेः सत्त्वादेवेति तदवच्छिन्नावच्छेदकत्वम्=द्वित्वपर्याप्तित्वावच्छिन्नावच्छेदकत्वं घटत्वस्याऽव्याहतमेव तथा च घटत्वस्य द्वित्वपर्याप्त्यवच्छेदकत्वेन द्वित्वावच्छेदकत्वमपि प्राप्तमिति घटत्वावच्छेदेन द्वित्वस्यैव सत्त्वाद् द्वित्ववद्भेदस्यासत्त्वाचैकत्वाविवक्षायाम् 'घटो न द्वौ' इति प्रयोगापत्तिर्नास्त्येवेत्यर्थः ।

ननु पर्याप्तिरूपः कोपि संबन्ध एव प्रामाणिको नास्ति येन तत्संबन्धता=तस्याः पर्याप्तेः संबन्धता स्यात् किं वा तस्याः पर्याप्तेः संबन्धो यस्मिन् स तत्संबन्धः शाब्दबोधः तत्संबन्धता=पर्याप्तिसंबन्धविषयतेत्यर्थः, अलीकभूतपर्याप्त्याख्यसंबन्धविषयता शाब्दबोधे कथं स्यादित्याशङ्कते– अथेति । ननु यदि पर्याप्तेः संख्यासंबन्धत्वं न स्यात्तदा पर्याप्तिसंबन्धेनाकाशादौ द्वित्वादिवद्भेदप्रतीतिरपि न स्यादिति 'आकाशो न द्वौ' इत्यादिप्रतीतिरपि न स्यादित्याशङ्क्याह= आकाश इति, समवाय एव संख्यासंबन्धः 'आकाशो न द्वौ' इत्यत्रापि समवायसंबन्धेनैवाकाशे द्वित्ववद्भेदः प्रतीयते न पर्याप्तिसंबन्धेनेत्यर्थः। समवायसंबन्धावच्छिन्ना द्वित्वनिष्ठा प्रतियोगितावच्छेदकता यस्य स समवायसबन्धावच्छिन्नप्रतियोगितावच्छेदकताको द्वित्वावच्छिन्नभेदस्तद्विषयैवेत्यन्वयः । द्वित्वावच्छिन्नभेदस्य द्वित्वावच्छिन्नः=द्वित्ववान् प्रतियोगी. प्रतियोगिता द्वित्ववति. प्रतियोगितावच्छेदकं द्वित्वमिति प्रतियोगितावच्छेदकता द्वित्वे द्वित्वं च द्वित्ववति समवायेन वर्तते इति स समवायोपि घटे संयोग इव द्वित्वे वर्तते इति प्रतियोगितावच्छेदकता समवायसंबन्धावच्छिन्ना जातेति 'आकाशो न द्वौ' इत्यत्राकाशे समवायसंबन्धावच्छिन्नप्रतियोगितावच्छेदकताकस्यैव द्वित्वावच्छिन्नभेदस्य प्रतीतिर्जायते न तु पर्याप्तिसंबन्धावच्छिन्नप्रतियोगितावच्छेदकताकस्येत्यर्थः । ननु यदि समवाय एव संख्यासंबन्धस्तदा समवायस्यैकत्वेन घटपटोभयस्मिन् वर्तमानस्य द्वित्वसमवायस्याकाशेपि सत्त्वात् 'आकाशो न द्वौ' इत्येवमाकाशे द्वित्ववद्भेदः कथं प्रतीयेतेत्याशङ्क्याह– आकाशादाविति, यथा वायौ रूपसमवायसत्त्वेपि रूपाभावाद्रूपवत्ताबुद्धिर्न जायते तथा समवायस्यैकत्वेनाकाशे द्वित्वसमवायसत्त्वेपि द्वित्वस्योभयवृत्त्युभयत्वधर्ममात्रावच्छिन्नत्वोपगमेनोभयत्वावच्छेदेनैव सत्त्वात् तदनवच्छेदक=द्वित्वानवच्छेदकाकाशत्वावच्छेदेन समवायेन द्वित्वस्याऽसत्त्वाच्चाकाशत्वावच्छेदेनाकाशे तद्वतो भेदस्य=द्वित्वावच्छिन्नभेदस्य वृत्तौ=सत्त्वे बाधकाभावात् 'आकाशो न द्वौ' इत्येवमाकाशे द्वित्वावच्छिन्नभेदप्रतीतौ न काप्यनुपपत्तिरित्यर्थः । परिहरति–नेति, 'आकाशो' इति वाक्यजन्यशाब्दबोधेऽनिद्वत्वादप्रा-

'आकाशौ' इत्यादिवाक्यजन्यशाब्दबोधस्याप्रमात्वानुपपत्त्यैव तादृशसंब सिद्धेः । तादृशबुद्धेः समवायविषयकत्वे प्रमात्वनिराकरणस्याशक्यत्वात् । श्यतावच्छेदकव्याप्तिविशिष्टसमवायस्य संसर्गतोपगमे ? 'घटौ' इत्यादिवा स्याप्यप्रमाणतापत्तिः– समवायस्यैक्येन घटादिनिष्ठस्य द्वित्वादिसमवा पटादावपि सत्त्वेन घटत्वाद्यव्याप्यत्वात् ।

---

माणिक एव तस्याप्रमात्वं च समवायस्य संख्यासंबन्धत्वस्वीकारे न संभवतीति तस्याऽप्र पपादनार्थमेव तादृशसंबन्धसिद्धेः=पर्याप्तिसंबन्धः सिद्ध्यतीत्यर्थः । विपक्षे बाधकमाह–ता तादृशबुद्धेः='आकाशौ' इत्यादिवाक्यजन्यबोधस्य समवायविषयकत्वे=यदि संख्या समवायः स्यात्तदा घटाकाशगतद्वित्वस्य द्वित्वसमवायस्य चाकाशे सत्त्वादेव 'आकाशौ वाक्यजन्यस्याकाशानुयोगिकद्वित्वविषयकशाब्दबोधस्याप्रामाण्यं न स्यादेव । पर्याप्तिः संबन्ध द्वित्वपर्याप्तेः घटाकाशोभयस्मिन्नेव सत्त्वेन केवलाकाशेऽभावात् तादृशपर्याप्तिसंबन्धेनाकाशे स्यासंभवाद् 'आकाशौ' इतिवाक्यजन्यशाब्दबोधस्याऽप्रामाण्यं सूपपादमेवेत्यर्थः । अत्र चापि समवायेनाकाशे द्वित्वं नाकाशत्वावच्छेदेन किं तु घटाकाशोभयत्वावच्छेदेनैवेति पर्या ङ्गीकारेपि 'आकाशौ' इति धियोऽप्रमात्वं सूपपादं तथापि तत्संबन्धावच्छेदकस्य त दकतानियमात् प्रकृते च द्वित्वसमवायावच्छेदकस्याकाशत्वस्य द्वित्वावच्छेदकत्वनियमादाक वच्छेदेन द्वित्वसमवायोस्ति द्वित्वं चास्तीति 'आकाशौ' इतिप्रतीतेः प्रमात्वं स्यादतः शत्वानवच्छेद्यः कश्चिद् द्वित्वसंबन्धोऽन्वेष्टव्यः स च पर्याप्तिनामास्तु इति द्वित्वपर्याप्त्यव दकाकाशत्वावच्छेदेन पर्याप्तिसंबन्धेन द्वित्वावगाहिनी 'आकाशौ' इतिप्रतीतिरप्रमैवेति पर्या बन्धोऽवश्यमङ्गीकरणीयः" इति कृष्णंभट्टाः ।

ननु न शुद्धसमवायस्य संबन्धत्वं येन 'आकाशौ' इतिवाक्यजन्यशाब्दबोधस्याप्रमात्वं न किं तूद्देश्यतावच्छेदकव्याप्तिविशिष्टसमवायस्य संबन्धत्वमुच्यते व्याप्तिश्च तदभाववदवृत्तित्व चोद्देश्यतावच्छेदकाभाववदऽवृत्तिसमवायस्य संबन्धत्वं प्राप्तं समवायस्य चैकत्वात् 'आका इत्यत्रोद्देश्यतावच्छेदकं यदाकाशत्वं तदभाववति घटादावपि वृत्तित्वात् समवाये उद्देश्यता कव्याप्यत्वमेव नास्तीत्याऽऽकाशत्वव्याप्तिविशिष्टसमवायेनाऽऽकाशे द्वित्वासंभवात् 'आका इतिप्रतीतेः कथं प्रमात्वं स्यादित्याशङ्क्याह– उद्देश्यतावच्छेदकेति । अत्र दोषमाह– घ उद्देश्यतावच्छेदकव्याप्तिविशिष्टसमवायस्य संबन्धत्वस्वीकारे 'आकाशौ' इत्यादि प्रामाण्यवत् 'घटौ' इत्यादिप्रतीतेरप्यप्रामाण्यं स्यात् 'घटौ' इत्यत्रोद्देश्यतावच्छेदक घटत्वव्याप्यत्वं च द्वित्वसमवाये नास्त्येव– द्वित्वसमवायस्य घटत्वाभाववति पटादावपि दिति घटत्वव्याप्यसमवायस्यालीकत्वेन तेन संबन्धेन घटेपि द्वित्वासंभवात् 'घटौ' इति जन्यशाब्दबोधस्याप्यप्रामाण्यं स्यात् तत्तु नेष्टमित्यर्थः । द्वित्वसमवायस्य घटत्वा व्ययमेवोपपादयति– समवायस्यैक्येनेति ।

न चोद्देश्यतावच्छेदकव्याप्यद्वित्वादिसमवायत्वेनैव संबन्धतास्तु. द्वित्वादिसमवायस्य घटत्वाद्यव्याप्यत्वेपि द्वित्वादेस्तद्व्याप्यतया न ' घटौ ' इत्यादेप्रमाणतेति वाच्यम्, एवं सति तथाविधद्वित्वादेरेव लाघवेन द्वित्वादिसंबन्धतौचित्यात् ।

अथास्त्वेवमेव तावतापि पर्याप्तिसंबन्धस्य विलयादिति चेत् ?, न- द्वित्वादिस्वरूपस्यैव द्वित्वादिपर्याप्तितयाऽभिमतसिद्धेः । उक्तं च दीधितिकृता- " पर्याप्तिश्च ' अयमेको घट इमौ द्वौ ' इत्यादिप्रतीतिसाक्षिकः स्वरूपसंबन्धविशेषः "

---

ननूद्देश्यतावच्छेदकव्याप्यं यद् द्वित्वं तादृशद्वित्वसमवायस्यैव संबन्धत्वमुच्यते तथा च द्वित्ववायस्यैकत्वेन घटत्वाभाववति पटादौ वृत्तित्वेन घटत्वाव्याप्यत्वेपि द्वित्वस्य तु घटत्वव्याप्यत्वंवत्येव द्वित्वव्यक्तीनामधिकरणभेदेन भिन्नत्वात् प्रत्येकघटद्विकवृत्तिद्वित्वव्यक्तीनां घटत्वव्याप्यत् तथा च घटत्वव्याप्यद्वित्वस्य घटे सत्त्वात् समवायस्याप्येकत्वेन घटे सत्त्वात् ' घटौ ' इतितेः प्रमात्वेनाऽप्रामाण्यं न संभवति,आकाशे च समवायस्यैकत्वेन सत्त्वेपि द्वित्वे आकाशत्वव्यावाभावेन तादृशद्वित्वासंभवात् ' आकाशौ ' इतिप्रतीतेः प्रमात्वं न संभवतीत्याशङ्क्याह- चेति । परिहारहेतुमाह- एवं सतीति, एवं सति=उद्देश्यतावच्छेदकव्याप्यत्वस्य द्वित्वविशेषणत्वेत, उद्देश्यतावच्छेदकव्याप्यद्वित्वसमवायस्य संबन्धत्वापेक्षया लाघवात् तथाविधद्वित्वादेः=उद्देश्यवच्छेदकव्याप्यद्वित्वस्यैव ( अर्थात् स्वरूपस्यैव ) द्वित्वसंबन्धत्वं युक्तं प्रथमसंबन्धस्वरूपे समवायशेन गौरवाद् उद्देश्यतावच्छेदकव्याप्यद्वित्वस्य च संबन्धत्वे समवायाऽप्रवेशेन लाघवात्, तथाघटे द्वित्वसंबन्धभूतस्य घटत्वव्याप्यद्वित्वस्य सत्त्वात् ' घटौ ' इतिप्रतीतेर्नाऽप्रमात्व आकाशेवाभावादाकाशत्वव्याप्यत्वस्य च द्वित्वेऽभावाद् द्वित्वसंबन्धभूतस्याऽऽकाशत्वव्याप्यद्वित्वस्यालीनाकाशेऽसंभवात् ' आकाशौ ' इतिप्रतीतेरप्रमात्वं सूपपादमेवेत्यर्थः ।

नन्वस्त्वेवमेव=उद्देश्यतावच्छेदकव्याप्यद्वित्वस्यैव ( स्वरूपस्यैव ) संबन्धत्वमस्तु तावतापि=श्यतावच्छेदकव्याप्यद्वित्वस्य संबन्धत्वस्वीकारेणापि पर्याप्तेस्तु संबन्धत्वं नष्टमेवेत्यभ्युपगम्यङ्कते- अथेति । परिहरति- नेति । द्वित्वादीति- उद्देश्यतावच्छेदकव्याप्यद्वित्वस्वरूपैवत्वपर्याप्तिरस्ति द्वित्वस्वरूपस्य संबन्धत्वे स्वीकृते च पर्याप्तेः संबन्धत्वं स्वीकृतमेवेति सिद्धं नःाहितमित्यर्थः । ननु द्वित्वस्वरूपस्य द्वित्वपर्याप्तित्वं कथं स्यादित्याशङ्क्यात्र प्रमाणमाह- चेति, ' अयमेको घट इमौ द्वौ ' इतिप्रतीतिसाक्षिकः स्वरूपसंबन्धविशेषः=' अयमेको: ' इत्यत्रैकत्वस्वरूपमेवैकत्वपर्याप्तिः ' इमौ द्वौ ' इत्यत्र द्वित्वस्वरूपमेव द्वित्वपर्याप्तिस्तथाटाः ' इत्यत्र बहुत्वस्वरूपमेव बहुत्वपर्याप्तिः, तथा च ' घटः ' इत्यादावेकत्वादीनां स्वरूपे- पर्याप्तिरूपेण घटादौ प्रतीयमानत्वादेकत्वादिस्वरूपमेवैकत्वादिपर्याप्तिरित्यर्थः । यदा चवायस्य नानात्वं स्वीक्रियते तदा द्वित्वादिसमवाय एव द्वित्वादिपर्याप्तिर्न तु द्वित्वादिस्वरूपंप्तिः द्वित्वादिसमवायातिरिक्तपदार्थो वा पर्याप्तिः, समवायस्य नानात्वेन द्वित्वादिसमवायस्यापि

इति । समवायस्य नानात्वमते च द्वित्वादिसमवाय एव तत्पर्याप्तिर्न तु
मतिरिक्तपदार्थो वेत्यन्यदेतत् ।

यत्तु ' आकाशं न द्वे ' इत्यादिप्रतीतिवत् ' आकाशं न द्वित्ववत् '
तीतेः प्रमात्वस्य वारणाय समवायेन द्वित्वादिमद्भेद आकाशत्वावच्छे

---

द्वित्वादिसंबन्धत्वस्वीकारे ' आकाशौ ' इतिप्रतीतेरप्रमात्वस्य ' घटौ ' इतिप्रतीतेः
च सूपपादत्वात् तथा हि समवायस्य नानात्वेन द्वित्वसमवायस्याकाशेऽसत्त्वात् समवा
स्याप्यसत्त्वाच्च ' आकाशौ ' इतिप्रतीतेराकाशानुयोगिकद्वित्वावगाहिन्या अप्रमात्वमे
द्वित्वसमवायद्वित्वयोः सत्त्वात् ' घटौ ' इतिप्रतीतेर्घटानुयोगिकद्वित्वावगाहिन्याः प्रमा
प्रायेणाह— समवायस्येति । अन्यदेतत्=अत्रैतद्विचारापेक्षा नास्तीत्यर्थः ।

पर्याप्त्याख्यसंबन्धसिद्ध्यर्थमन्योक्तयुक्त्यन्तरं परिहारायानुवदति— यत्त्विति । आका
' आकाशं न द्वे ' इतिप्रतीतिर्भवति तस्याः प्रमात्वमपीष्टमस्ति, घटाकाशोभयगत
शेपि सत्त्वेन तेन द्वित्वेनाकाशस्यापि द्वित्ववत्त्वात् ' आकाशं न द्वित्ववत् ' इतिप्रती
तस्याः प्रमात्वमपीष्टं नास्तीति सिद्धान्तः । किं च ' आकाशं न द्वे ' इत्यनेनापि
च्छिन्नभेदः ( द्वित्ववन्नेतिभेदः ) प्रतिपाद्यते तथा ' आकाशं न द्वित्ववत् ' इत्यनेन
वच्छिन्नभेद एव प्रतिपाद्यते इति प्रतीयते इत्युभयोरपि वाक्ययोस्तज्जन्यप्रतीत्योश्च सा
यदि द्वित्वसंबन्धः समवाय एव स्यात्तदा समवायस्यैकत्वेन द्वित्वसमवायस्याप्याकाशे
घटाकाशोभयगतद्वित्वस्याप्याकाशेपि सत्त्वादेवाकाशे ' आकाशं द्वित्ववन्न ' इ
द्वित्वावच्छिन्नभेदस्याऽसत्त्वाद् द्वित्वावच्छिन्नभेदबोधकस्य ' आकाशं न द्वित्ववत् ' इ
यथा ह्यऽप्रामाण्यं स्यात् ( असद्बोधकत्वात् ) तथा ' आकाशं न द्वे ' इतिवाक्यस्या
ण्यं स्यादेव— उभयोर्वाक्ययोः समानार्थत्वात्, न च ' आकाशं न द्वे ' इत्यस्याऽ
ष्टम्, स्वयमप्येतद्वदति— तथा चेत्यादिना । यदि चैतद्दोषपरिहाराय पर्याप्तिरेव सि
स्वीक्रियते तदा घटाकाशोभयगतद्वित्वस्याकाशे सत्त्वेपि संबन्धभूता घटाकाशोभय
र्याप्तिस्तु घटाकाशोभयस्मिन्नेव संभवति न तु केवलाकाशेपीति तादृशपर्याप्तिसं
द्वित्वाभावेन द्वित्वावच्छिन्नभेदस्यापि ( द्वित्ववन्नेतिभेदस्यापि ) सत्त्वात् तद्बोधकस्य '
द्वे ' इति वाक्यस्य यथा हि प्रामाण्यं स्यात्तथा आकाशं न द्वित्ववत् ' इतिवाक्यस
प्रतीतेश्चापि प्रामाण्यं स्यादेव— उभयोर्वाक्ययोस्तज्जन्यप्रतीत्योश्च विशेषाभावात् ( द्वि
भेदविषयकत्वेन समानत्वात् ) । न च ' आकाशं न द्वित्ववत् ' इतिप्रतीतेः प्रमा
तस्याः प्रमात्वस्य वारणाय ' आकाशं न द्वित्ववत् ' इत्यत्राकाशे समवायेन द्वित
द्वित्वावच्छिन्नभेदो न स्वीकर्तव्यस्तथा च ' आकाशं न द्वित्ववत् ' इतिवाक्यस्याका
द्वित्वावच्छिन्नभेदबोधकत्वस्वीकाराद् आकाशे च द्वित्वसमवायस्य घटाकाशोभयगतद्वि
सत्त्वेन समवायेन द्वित्वावच्छिन्नभेदस्याऽसत्त्वादऽसतो द्वित्वावच्छिन्नभेदस्य बोधक

ीकर्तव्यः, तथा च पर्याप्तेरविलक्षणत्वे ' आकाशं न द्वे ' इत्यादिप्रतीतेरप्यऽ-
ात्वापत्तिरिति, तन्न– ' आकाशं न द्वित्ववत् ' इतिप्रतीतौ द्वित्वसमवायाव-
छिन्नभेद एव विषयो मतुपा संबन्धयुल्लेखात् न तु द्वित्वावच्छिन्नभेदः, एवं चाका-
त्वाद्यवच्छेदेन द्वित्वाद्यवच्छिन्नभेद एव स्वीकर्तव्यो न तु तत्संबन्धावच्छिन्नभेद
ति ' आकाशं न द्वे ' इतिप्रतीतेरप्रमात्वस्य ' आकाशं न द्वित्ववत् ' इति प्रती-
र्ाप्रमात्वस्य न प्रसङ्ग इति ।

---

द्यते । घटाकाशोभयगतद्वित्वस्याकाशे सत्त्वेपि द्वित्वपर्याप्तेर्घटाकाशोभयत्रैव संभवात् केव-
शे चासंभवात् पर्याप्तिसंबन्धेन केवलाकाशे द्वित्वस्यासंभवेन द्वित्वावच्छिन्नभेदस्य स्वीकारात्
द्वित्वावच्छिन्नभेदस्य सतो बोधकत्वात् ' आकाशं न द्वे ' इतिवाक्यस्य प्रामाण्यमप्युपप-
इति संबन्धभेदेनोभयप्रतीत्योः प्रामाण्याऽप्रामाण्ययोर्व्यवस्था संभवतीत्यर्थः । अत्र ' आकाशं
इतिप्रतीतिवदिति व्यतिरेकी दृष्टान्तस्तथा च यथा ' आकाशं न द्वे ' इतिप्रतीतेः
ं तथा ' आकाशं न द्वित्ववत् ' इतिप्रतीतेरापद्यमानप्रमात्वस्य वारणायेत्यन्वयः ।
दि च पर्याप्तिर्द्वित्वस्वरूपा वा द्वित्वसमवायस्वरूपा वा स्यात्तद्विलक्षणा न स्यात्तदा सम-
येकत्वेन घटाकाशोभयगतद्वित्वसमवायस्याप्याकाशे सत्त्वाद् घटाकाशोभयगतद्वित्वस्यापि
शे सत्त्वादेव ' आकाशं न द्वे ' इतिप्रतीतेरसंभवाद्प्रमात्वं स्यादेव, द्वित्वाद् द्वित्वसम-
च विलक्षणायाः पर्याप्तेर्द्वित्वसंबन्धत्वे तु घटाकाशोभयगतद्वित्वस्याकाशे सत्त्वेपि घटाका-
यगतद्वित्वपर्याप्तेस्तूभयत्वावच्छेदेनैव संभवेन केवलाकाशेऽसंभवात् संबन्धाभावे संबन्धिप्रतीत्य-
ाचाकाशे द्वित्वप्रतीतिर्न संभवतीति ' आकाशं न द्वे ' इति द्वित्वावच्छिन्नभेदप्रतीतिस्तस्याः
च संभवत्येवेति पर्याप्त्याख्यसंबन्धोऽवश्यं स्वीकर्तव्य इत्याह– तथा चेति । तथा च=
येन द्वित्वादिमद्भेदस्याकाशत्वावच्छेदेनाऽस्वीकारे पर्याप्तेश्चाविलक्षणरूपत्वे ' आकाशं न
इत्यादिप्रतीतेरप्यऽप्रमात्वमापद्येत न चैतदिष्टमित्यर्थः ।
रिहरति– तन्नेति, द्वित्वात् द्वित्वसमवायाच्च विलक्षणायाः पर्याप्तेः संबन्धत्वस्वीकारं विनापि
यस्यैव द्वित्वसंबन्धत्वस्वीकारेण ' आकाशं न द्वे ' इतिप्रतीतेः प्रमात्वम् ' आकाशं न
वत् ' इतिप्रतीतेरप्रमात्वं चोपपादयितुं शक्यते इति भावः, तथा हि– ' आकाशं न
वत् ' इत्यत्र मतुपः संबन्ध्युपस्थापकत्वाद् द्वित्वसमवायवतः संबन्धिनो भेदो विषयोस्ति–
ाशं द्वित्वसमवायवद्भिन्नम् ( आकाशं द्वित्वसमवायवन्न ) इति, न त्वत्र ' न द्वित्ववत् '
न द्वित्वावच्छिन्नभेदः ( द्वित्ववन्नेतिभेदः ) प्रतिपाद्यते, ' आकाशं न द्वे ' इत्यत्र च द्वित्वा-
न्नभेद एव विषयः, उक्तप्रतीत्योः प्रमात्वाप्रमात्वयोरुपपत्त्यर्थं चाकाशत्वावच्छेदेनाकाशे
वच्छिन्नभेदस्तु स्वीक्रियते तत्संबन्धावच्छिन्नभेदः=द्वित्वसमवायावच्छिन्नभेदः ( आकाशं
समवायवद्भिन्नम्=द्वित्वसमवायवन्नेतिभेदः ) तु न स्वीक्रियते, तथा चाकाशे समवायेन
वच्छिन्नभेदस्य स्वीकारात् तद्बोधकस्य ' आकाशं न द्वे ' इतिवाक्यस्य तज्जन्यप्रतीतेश्च

अथोद्देश्यतावच्छेदकव्याप्यपर्याप्तेर्द्वित्वसंबन्धत्वे 'धवखदिरौ छिनत्ति' इत्यादावुद्देश्यतावच्छेदकीभूतधवत्वखदिरत्वव्याप्यं द्वित्वादिद्वयमेव प्रत्येतव्यं धवखदिरादिपर्याप्तद्वित्वादिकं तथा चैकैकधवखदिरादितात्पर्येण तथाप्रयोगानु त्तिरिति द्वित्वान्वयितावच्छेदकमऽपेक्षाबुद्धिविशेषविषयत्वादिरूपमुभयादि साहित्यं द्वन्द्वसमासार्थो वाच्यस्तथा च मीमांसकमतप्रवेश इति चेत्?, न-

प्रामाण्यमुपपद्यते एवेति न तदर्थं पर्याप्तिसंबन्धस्वीकारापेक्षा। आकाशे द्वित्वसमवायावच्छिन्न चास्वीकारात् तद्बोधकस्य 'आकाशं न द्वित्ववत्' इतिवाक्यस्य तज्जन्यप्रतीतेश्चाऽप्रामाण्य पपद्यते, द्वित्वसमवायस्यैकत्वादाकाशत्वावच्छेदेनापि सत्त्वेनाकाशस्य द्वित्वसमवायवत्त्वादेव समवायवद्भिन्नत्वाभावाद् द्वित्वसमवायवद्भेदबोधकस्य 'आकाशं न द्वित्ववत्' इति तज्जन्यप्रतीतेश्च प्रामाण्यप्रसक्तेर्न संभवः। तथा च विलक्षणपर्याप्तेः संबन्धत्वास्वी 'आकाशं न द्वे' इतिप्रतीतेरप्रमात्वप्रसङ्गो नास्त्येव प्रमात्वस्यैवोपपादितत्वात्, 'आका द्वित्ववत्' इतिप्रतीतेश्च प्रमात्वप्रसङ्गोऽपि नास्त्येव- अप्रमात्वस्यैवोपपादितत्वादिति सर्वं सुस्थ न द्वित्वाद् द्वित्वसमवायाच्च विलक्षणायाः पर्याप्तेः संबन्धत्वस्वीकारापेक्षेत्यर्थः।

ननु त्वया "उद्देश्यतावच्छेदकव्याप्यत्वविशिष्टपर्याप्तेरेव संसर्गतोपगमात् (पृ. १३ इत्यनेनोद्देश्यतावच्छेदकव्याप्यपर्याप्तेर्द्वित्वसंबन्धत्वमुक्तं तत्रोद्देश्यतावच्छेदकव्याप्यपर्याप्तेर्द्वित्व 'धवखदिरौ छिनत्ति' इत्यत्रोद्देश्यतावच्छेदकं धवत्वं च खदिरत्वं चेति धवत्वव्याप्यप बन्धेनैकस्य द्वित्वस्य धवेऽन्वयो भविष्यति खदिरत्वव्याप्यपर्याप्तिसंबन्धेन चापरस्य द्वित्वस्य ऽन्वयो भविष्यतीति 'धवखदिरौ' इत्यत्र प्रकारतया द्वित्वद्वयस्य भानं प्राप्तं धवत्वखदिरत्वयो रेवोद्देश्यतावच्छेदकत्वेन साम्याद् धवत्वव्याप्यपर्याप्तिसंबन्धेन धवातिरिक्ते खदिरादौ द्वित्वा संभवात् खदिरत्वव्याप्यपर्याप्तिसंबन्धेन च खदिरातिरिक्ते धवादौ द्वित्वान्वयासंभवाच्च न धवख भयपर्याप्तमेकं द्वित्वं प्रत्येतुं शक्यते युक्त्यभावात्, तथा चैकैकधवखदिरादितात्पर्येण तथा स्य='धवखदिरौ' इतिप्रयोगस्योपपत्तिर्न स्यादेव किं तु धवद्वयखदिरद्वयतात्पर्येणैव 'धवख इति प्रयोगो भविष्यति- उक्तयुक्त्या द्वित्वस्य प्रत्येकं धवखदिरयोः प्रतीत्यापत्तेः, न चैवमि त्वेकैकधवखदिरतात्पर्येणैव 'धवखदिरौ' इति प्रयोग इष्ट इति तदुपपत्त्यर्थं यदि द्वित्वस द्वित्वस्यान्वयितावच्छेदकस्वरूपं तथा 'इमौ द्वौ' इत्याकारकापेक्षाबुद्धिविशेषविषयत्वरूपं ( त्यस्यापेक्षाबुद्धिविषयत्वादेव ) धवखदिरोभयपदार्थनिष्ठं यत् साहित्यं ( एकक्रियान्वयित्वरू तदेव 'धवखदिरौ' इत्यादौ द्वन्द्वसमासार्थः स्वीकर्तव्यः एवं हि द्वित्वान्वयितावच्छेदक देश्यतावच्छेदकं साहित्यमेवेति प्राप्तं साहित्यं च धवखदिरोभयपर्याप्तमेव न तु प्रत्येकं धवखदि रित्युद्देश्यतावच्छेदकीभूतसाहित्यव्याप्यपर्याप्तिसंबन्धेन द्वित्वस्य धवखदिरोभये एवाऽन्वयसंभ कधवखदिरतात्पर्येण 'धवखदिरौ' इतिप्रयोगोपपत्तेरेकमेवोभयगतं द्वित्वं प्रतीतं भविष्यति न द्वयप्रतीत्यापत्तिरित्युच्यते तदा मीमांसकमतप्रवेशः स्यादित्याशङ्कते- अथेति । परिहरति

कधर्मस्य द्वित्वाद्युद्देश्यतावच्छेदकता तत्रैवोद्देश्यतावच्छेदकव्याप्तिविशिष्टपर्याप्तेः संसर्गतानियमः । यत्र धर्मद्वयादेस्तथात्वं तत्र केवला पर्याप्तिः समवाय एव वा संसर्ग इत्युपगमाद् विनैव साहित्यस्यान्वयितावच्छेदकतामेकैकतात्पर्येण 'धवखदिरौ' इत्यादिप्रयोगोपपत्तेः ।

न चैवमेकैकधवखदिरादितात्पर्येण 'धवौ' 'खदिरौ' इत्यादिप्रयोगापत्तिः ताद्दशवाक्यद्वयविषयकसमूहालम्बनजन्यसमूहालम्बनशाब्दबोधस्य नानाधर्मावच्छिन्नोद्देश्यताकतया शुद्धपर्याप्तेरपि संसर्गतयाऽवगाहनसंभवादिति वाच्यम्, यत्र नानाधर्मावच्छिन्नविशेष्यतानिरूपिता एकैव द्वित्वादिप्रकारता तत्रैव शुद्धायाः पर्याप्तेः समवायस्य वा संसर्गतया भानात् । 'धवौ' 'खदिरौ' इत्यादिनानावाक्य-

---

त्रैकेति । यत्रैकस्यैव धर्मस्य द्वित्वोद्देश्यतावच्छेदकत्वं भवति तत्रैवोद्देश्यतावच्छेदकव्याप्यपर्याप्तेर्द्वि-संबन्धत्वं स्वीक्रियते यथा 'घटौ' इत्यादौ, यत्र च 'धवखदिरौ' इत्यादौ धर्मद्वयस्य तथा-म्=उद्देश्यतावच्छेदकत्वं भवति तत्र तु शुद्धपर्याप्तेः समवायस्य वा द्वित्वसंबन्धत्वं स्वीक्रियते तूद्देश्यतावच्छेदकव्याप्यपर्याप्तेः तत्र द्वित्वपर्याप्तावुद्देश्यतावच्छेदकव्याप्यत्वस्यासंभवात् तथा हि—द्देश्यतावच्छेदकं ह्यत्र धवत्वं खदिरत्वं च व्याप्यत्वं च तद्वदन्यावृत्तित्वं द्वित्वपर्याप्तिश्चात्र धवत्व-न्यस्मिन् खदिरेपि सत्त्वान्न धवत्वव्याप्यत्वं तथा खदिरत्ववदन्यस्मिन् धवेपि सत्त्वान्न खदि-व्याप्यत्वमिति 'धवखदिरौ' इत्यादौ शुद्धाया एव पर्याप्तेः समवायस्य वा द्वित्वादिसंबन्धत्वं वीक्रियते तथा च 'घटौ' इत्यत्रोद्देश्यतावच्छेदकीभूतस्य घटत्वस्यैकत्वात् तद्व्याप्यपर्याप्तिसंब-धेन घटद्वये एकस्यैव द्वित्वस्यान्वयः प्रतीतिश्च संभवति, 'धवखदिरौ' इत्यत्र च धवत्वखदिर-भयस्योद्देश्यतावच्छेदकत्वाद् द्वित्वसंबन्धभूतपर्याप्तावुद्देश्यतावच्छेदकव्याप्यत्वविशेषणराहित्याच हित्यस्य द्वित्वान्वयितावच्छेदकत्वाश्रयणं विनापि केवलपर्याप्तिसंबन्धेन वा समवायसंबन्धेन कस्य द्वित्वस्य धवखदिरयोरुभयोरन्वये विरोधाभावादेकैकधवखदिरतात्पर्येण 'धवखदिरौ' तिप्रयोगे न काचिदनुपपत्तिर्न वा मीमांसकमतप्रवेश इत्यर्थः ।

ननु यत्रोद्देश्यता नानाधर्मावच्छिन्ना स्यादर्थाद् उद्देश्यतावच्छेदकं धर्मद्वयं धर्मत्रयादिकं वा स्या-त्र यदि शुद्धपर्याप्तेर्द्वित्वसंबन्धत्वं स्वीक्रियते तदा ताद्दशवाक्यद्वय='धवौ' 'खदिरौ' इत्ये-ताद्दशवाक्यद्वयविषयकेन समूहालम्बनेन=समूहालम्बनात्मकश्रावणप्रत्यक्षेणजन्यो यो धवविशेष्यक-दिरविशेष्यकशाब्दबोधस्तस्मिन् उद्देश्यतावच्छेदकत्वेन धवत्वखदिरत्वैतद्धर्मद्वयस्य भानाद् द्वित्वसंबन्धत्वं शुद्धपर्याप्तेः प्राप्तं तथा च ताद्दशशुद्धपर्याप्तिसंबन्धेन प्रत्येकं धवखदिरयोर्द्वित्वा-यसंभवादेकधवैकखदिरतात्पर्येणापि 'धवौ' 'खदिरौ' इतिप्रयोगः स्यादेव प्रत्येकं धवादौ त्वस्य तत्संबन्धभूतपर्याप्तेश्च सत्त्वादेव न चैतदिष्टमित्याशङ्क्याह— न चैवमिति । परिहारमाह—त्रेति, यत्र नानाधर्मावच्छिन्नविशेष्यतानिरूपिता एका द्वित्वादिनिष्ठा प्रकारता भवति तत्रैव द्धायाः ( उद्देश्यतावच्छेदकव्याप्यत्वविशेषणरहितायाः ) पर्याप्तेः समवायस्य वा द्वित्वादिसं-

जन्यसमूहालम्बनशाब्दबोधे विशेष्यताभेदेन प्रकारताभेदादुद्देश्यतावच्छेदकव्या त्वादिव्याप्तिविशिष्टपर्याप्तेः संसर्गतानियमेनैकैकधवखदिरादितात्पर्येण तथाप्रयो गासंभवात् ।

' धवखदिरौ ' इत्यादिसमासोत्तरद्विवचनेन धवत्वखदिरत्वाद्यवच्छिन्ननाना विशेष्यतानिरूपितैकद्वित्वादिप्रकारताशालिज्ञानमेव जन्यते– तादृशवाक्यजन्

---

बन्धत्वं स्वीक्रियते यथा– ' धवखदिरौ ' इत्यत्र धवत्वखदिरत्वरूपनाना ( उभय ) धर्मावच्छि या धवखदिरनिष्ठा विशेष्यता तादृशविशेष्यतानिरूपिता एका द्वित्वनिष्ठा प्रकारतास्तीति शुद्धपर्याप्तेः समवायस्य वा संबन्धत्वं स्वीक्रियते ( शेषं पूर्ववत् ) ' धवौ ' ' खदिरौ ' तु एतादृशवाक्यद्वयजन्यसमूहालम्बनात्मकशाब्दबोधे धवे धवपदोत्तरद्विवचनार्थद्वित्वनिरू विशेष्यता पृथग् भासते खदिरे च खदिरपदोत्तरवर्तमानद्विवचनार्थद्वित्वनिरूपिता विशे पृथग् भासते विशेष्यताभेदेन च धवनिष्ठविशेष्यतानिरूपिता एकद्वित्वनिष्ठा प्रकारता भिन्ना खदिरनिष्ठविशेष्यतानिरूपिताऽपरद्वित्वनिष्ठा प्रकारता भिन्नास्तीति प्रकारताया अनेकत्वेनै भावान्नात्र शुद्धपर्याप्तेः समवायस्य वा द्वित्वसंबन्धत्वं स्वीक्रियते किं तूद्देश्यतावच्छेदकव्याप्य रेव संबन्धत्वं स्वीक्रियते तथा च ' धवौ ' ' खदिरौ ' इत्यादिनानावाक्यजन्यसमूहालम्ब ब्दबोधे धवत्वमप्युद्देश्यतावच्छेदकमस्ति खदिरत्वमप्युद्देश्यतावच्छेदकमस्ति धवत्वव्याप्यद्वित्वपर्या धवद्वये एव संभवति न त्वेकस्मिन् धवे इत्येकस्मिन् धवे धवद्वयगतद्वित्वस्य संभवेपि संबन्धभू द्वित्वपर्याप्तेरसंभवात् संबन्धाभावे च संबन्धि ( द्वित्व ) प्रतीत्यसंभवादेकधवतात्पर्येण ' धवौ ' इति प्रयोगापत्तिर्नास्त्येव, एवमेकखदिरतात्पर्येण ' खदिरौ ' इतिप्रयोगापत्तिर्नास्त्येवेत्येकै खदिरादितात्पर्येण तथाप्रयोगासंभवात्=‘धवौ’ ‘खदिरौ’ इतिप्रयोगासंभवान्न कोपि दोष इ धवद्वये च द्वित्वमप्यस्ति धवत्वव्याप्यद्वित्वपर्याप्तिरप्यस्त्येवेति धवद्वयतात्पर्येण ' धवौ ' प्रयोग उपपद्यते । एवम् ' घटौ ' इत्यादावपि बोध्यम् । धवखदिरोभयस्मिंश्च द्वित्वमप्य द्वित्वपर्याप्तिर्द्वित्वसमवायो वा द्वित्वसंबन्धोप्यस्त्येवेत्येकैकधवखदिरतात्पर्येण ' धवखदिरौ ' प्रयोगोप्युपपद्यते, धवखदिरोभयगतद्वित्वस्य प्रत्येकं धवखदिरयोः सत्त्वेपि द्वित्वपर्याप्तेरस प्रत्येकं द्वित्वप्रतीतिसंभवः । किं वा द्वित्वस्यैव प्रत्येकं पर्याप्तत्वाभावान्न प्रत्येकं द्वित्वप्रती भव इत्यवधेयम् ।

यदुक्तम्– " यत्र नानाधर्मावच्छिन्नविशेष्यतानिरूपिता एकैवद्वित्वादिप्रकारता तत्रैव शुद्ध पर्याप्तेः समवायस्य वा संसर्गतया भानात् " इति, तत्र नानाधर्मावच्छिन्नविशेष्यतानिरू एका द्वित्वनिष्ठाप्रकारता कास्तीति जिज्ञासायामाह– धवखदिराविति, ' धवखदिरौ ' इत्य पृथग् विशेष्यतास्ति खदिरे च पृथग् विशेष्यतास्ति तादृशविशेष्यताद्वयनिरूपिता प्रकार द्विवचनार्थैकद्वित्वनिष्ठा एकैवास्तीत्यर्थः । अत्र हेतुमाह– तादृशेति, समूहालम्बनात्मकबोधे विशेष्यताभेदेन प्रकारताभेदो भवति यथा ' धवौ ' ' खदिरौ ' इत्यत्र । तादृशवाक्य='

बोधस्य समूहालम्बनाऽनात्मकतया विशेष्यताभेदेन प्रकारताभेदाभावात् । यथा हि समूहालम्बनानात्मके 'खड्गी चैत्रः कुण्डली' इत्याकारकनानाविशेषणकैक-विशेष्यकज्ञाने नानाप्रकारतानिरूपिता एका विशेष्यता तथा तथाविधे 'धव-खदिरौ' इत्याद्याकारके नानाविशेष्यकैकविशेषणकज्ञाने विशेष्यताभेदेऽप्यभिन्नैव द्वित्वादिप्रकारता, अन्यथा– समूहालम्बनतस्तद्वैलक्षण्यानुपपत्तेः, समासघटक-धवखदिरादिपदानामेकवाक्यतानुपपत्तेश्च, तत्प्रयोज्यविषयतया साक्षात् परम्परया वा निरूपिता या विषयता तत्प्रयोजकत्वस्यैव तदेकवाक्यतापदार्थत्वात् ।

---

[ध्वख]दिरौ' इत्येतादृशवाक्यजन्यशाब्दबोधस्तु न समूहालम्बनात्मक इत्यत्र विशेष्यताभेदेपि प्रका-[रत]ाभेदो न भवतीत्यर्थः । अत्र दृष्टान्तमाह– यथा हीति, यथा 'खड्गी कुण्डली चैत्रः' [इत्]यादौ समूहालम्बनाऽनात्मके बोधे नानाखड्गकुण्डलादिनिष्ठानां प्रकारतानां भेदेपि विशेष्यता-[भे]दो न भवति किं त्वेकैव चैत्रनिष्ठा विशेष्यता भासते तथा तथाविधे=समूहालम्बनानात्मके [']धवखदिरौ' इत्याकारकवाक्यजन्यबोधेपि विशेष्यताभेदेपि प्रकारताभेदो न भवति किं त्वे-[क]ैकद्वित्वनिष्ठा प्रकारता भासते इत्यर्थः । विपक्षे बाधकमाह– अन्यथेति, यदि 'धवौ' [']खदिरौ' इत्याकारकसमूहालम्बनात्मकबोधे इव 'धवखदिरौ' इतिबोधेपि विशेष्यताभेदेन [प्र]कारताभेदः स्यात्तदा 'धवौ' 'खदिरौ' इतिसमूहालम्बनात्मकस्य 'धवखदिरौ' [इ]तिसमूहालम्बनानात्मकस्य च बोधस्य परस्परं किमपि वैलक्षण्यं न स्यादित्यर्थः । 'धवख-[दि]रौ' इत्यत्र विशेष्यताभेदेपि प्रकारताभेदाभावे हेत्वन्तरमाह– समासेति, यद्यत्र विशेष्य-[ता]भेदेन प्रकारताभेदोपि स्यात्तदा धवखदिरपदयोः परस्परमेकवाक्यता न स्यात्, एकवा-[क्य]ताऽभावे च समासोपि न स्यादित्यर्थः । विशेष्यताभेदेन प्रकारताया भेदे एकवाक्यता [क]थं न भवतीति जिज्ञासायामेकवाक्यतास्वरूपमाह– तत्प्रयोज्येति, तथा हि– 'राजपुरुषः' [इ]त्यत्र राजपदप्रयोज्यप्रकारताख्यविषयतया साक्षान्निरूपिता या पुरुषनिष्ठा विशेष्यताख्या विष-[य]ता=शाब्दबोधीयविषयता तत्प्रयोजकत्वं पुरुषपदेस्ति, एवं पुरुषपदप्रयोज्यविशेष्यताख्यविषय-[त]या साक्षान्निरूपिता या राजनिष्ठा प्रकारताख्यविषयता तत्प्रयोजकत्वं राजपदेस्तीत्येतादृशप्र-[यो]ज्यप्रयोजकभावरूपैकवाक्यतायाः सत्त्वात्समासो जातः, तत्राप्यत्र राजनिष्ठप्रकारतायाः पुरुष-[नि]ष्ठविशेष्यतायाश्च साक्षादेव परस्परं निरूप्यनिरूपकभावो विज्ञेयः । 'धवखदिरौ' इत्यत्र च [ध]वपदप्रयोज्यविशेष्यताख्यविषयतानिरूपिता खदिरपदप्रयोज्यविशेष्यताख्यविषयतानिरूपिता [ए]का द्विवचनोपस्थापितद्वित्वनिष्ठा प्रकारतास्तीति तादृशप्रकारतारूपपरम्परया वा द्वित्वरूपप-[र]म्परया वा धवखदिरोभयनिष्ठविशेष्यतयोर्निरूप्यनिरूपकभावोस्ति न तु धवः खदिरे वा खदिरो [ध]वे वा विशेषणमस्ति येन साक्षान्निरूप्यनिरूपकभावः स्यात् किं तु धवखदिरयोरेकस्मिन्नेव द्वित्वेऽन्वयोस्त्येतादृशपारम्परिकप्रयोज्यप्रयोजकभावरूपैकवाक्यतायाः सत्त्वादत्र समासो जातः । [य]द्यत्र धवनिष्ठविशेष्यतानिरूपिता द्वित्वनिष्ठा प्रकारता भिन्ना स्यात् खदिरनिष्ठविशेष्यतानिरूपित

**न चैतादृशैकवाक्यताविरहेऽपि क्षतिविरहः– तथा सति समासस्यैवानुपपत्तेः ' अयमेति पुत्रो राज्ञः पुरुषोऽपसार्यताम् ' इत्यादौ राजपुरुषपदादीनां समास वारणाय समर्थपदयोरेव समासानुशासनात्, सामर्थ्यस्य च निरुक्तैकवाक्यत रूपत्वात् ।**

---

च द्वित्वनिष्ठा प्रकारता भिन्ना स्यात्तदा तादृशप्रकारतयोः परम्पराख्याभावात् परम्परया योज्यप्रयोजकभावो न स्यादित्येकवाक्यताया असत्त्वात् समासो न स्यादेव. भवति च स इति धवखदिरोभयनिष्ठविशेष्यताद्वयनिरूपिता द्वित्वनिष्ठा एकैव प्रकारतास्तीति स्वीकार्य तादृशद्वित्वनिष्ठप्रकारताया एकत्वे तु तादृशप्रकारतारूपपरम्परयाऽन्यतरपदप्रयोज्यविषयत रूपितविषयताप्रयोजकत्वमन्यतरपदस्य संभवतीति संभवत्येकवाक्यतेत्यर्थः ।

अत्र च " ' धवखदिरौ ' इत्यत्र तत्प्रयोज्या=धवपदप्रयोज्या या धवपदज्ञानजन्य दार्थोपस्थितिजन्यधवखदिराविति शाब्दबोधनिरूपितधवपदार्थनिष्ठविशेष्यता तया परम्परया नि पिता या द्वित्वनिष्ठा प्रकारताख्यविषयता तत्प्रयोजकत्वस्य खदिरपदनिष्ठस्यैव तदेकवाक्यताप त्वात्= धवपदैकवाक्यतापदार्थत्वात्, धवपदजन्यधवोपस्थितिजन्यधवखदिरशाब्दबोधनिरू धवनिष्ठविशेष्यतानिरूपितद्वित्वनिष्ठप्रकारतानिरूपितशाब्दबोधीयखदिरनिष्ठविशेष्यताशालिश धीजनकखदिरोपस्थितिजनकत्वं खदिरपदे इति धवपदैकवाक्यतापन्नं खदिरपदमेवेत्येवंरीत्या रपदैकवाक्यतापन्नं धवपदमिति परस्परं धवखदिरपदयोरेकवाक्यत्वमित्यर्थः । एवम्– ' रा रुषः ' इत्यत्र राजसंबन्धी प्रकारः पुरुषो विशेष्यस्तत्र तत्प्रयोज्या=राजपदप्रयोज्या या राज जन्यराजसंबन्ध्युपस्थितिजन्यशाब्दबोधीयराजसंबन्धिनिष्ठा प्रकारताख्यविषयता तन्निरूपिता पुरुषनिष्ठा विशेष्यताख्या साक्षाद्विषयता तत्प्रयोजकत्वम्=तन्निरूपकशाब्दबोधजनकपदार्थो स्थितिजनकत्वरूपमेकवाक्यत्वं पुरुषपदे, एवं पुरुषपदप्रयोज्या पुरुषपदजन्यपदार्थोपस्थितिज शाब्दबोधनिरूपिता पुरुषनिष्ठविशेष्यताख्यविषयता तन्निरूपिता या राजसंबन्धिनिष्ठा प्रका तत्प्रयोजकत्वम्= तन्निरूपकशाब्दबोधजनकपदार्थोपस्थितिजनकत्वरूपमेकवाक्यत्वं राजपदे तत्पदजन्यज्ञाननिरूपितत्वेन तत्पदप्रयोज्यत्वव्यवहारो विषयतायामिति बोध्यमित्यर्थः । " कृष्णंभट्टाः ।

ननु ' धवखदिरौ ' इत्यत्रोक्तस्वरूपैकवाक्यता मा भवतु विशेष्यताभेदेन प्रकारत तु स्वीकरिष्याम एव इत्याशङ्क्याह– न चेति । परिहारमाह– तथा सतीति, विशे ताभेदेन प्रकारताभेदस्वीकारे उक्तैकवाक्यता न भविष्यति तथा सति=उक्तस्वरूपैकवाक्यत अभावे च ' धवखदिरौ ' इति समासो न भविष्यतीत्यत्रोक्तैकवाक्यता स्वीकार्या. ए वाक्यतार्थं च विशेष्यताभेदेऽप्यभिन्नैव द्वित्वनिष्ठा प्रकारता स्वीकार्येत्यर्थः । उक्तैकवाक्यत्वा समासानुपपत्तौ प्रमाणमाह– अयमेतीति, यद्युक्तैकवाक्यता समासे कारणं न स्या ' अयमेति पुत्रो राज्ञः पुरुषोऽपसार्यताम् ' इत्यत्रापि राजपदपुरुषपदयोः सम

'जलपृथिव्योः स्नेहगन्धौ' इत्यादितोपि न 'जले स्नेहः पृथिव्यां गन्धः' इत्याकारकसमूहालम्बनबोधः किंतु तद्विलक्षणो द्वित्वादिनिष्ठैकप्रकारतानिरूपितजलत्वपृ-

---

वद् न च भवतीत्यत्र राजपदपुरुषपदयोः समासवारणाय समर्थानामेव पदानाम् " समर्थः पदविधिः " इत्यनेन समासानुशासनं कृतं सामर्थ्यं चोक्तैकवाक्यतारूपमेवेति समासकारणत्वेनैकवाक्यतायाः स्वीकार आवश्यक एवेत्यन्वयः । " सापेक्षमसमर्थवद् भवति " इतिव्युत्पत्त्या ' अयमेति ' इतिवाक्यघटकराजपदपुरुषपदयोः समासे कृते तादृशराजपदस्य समासाघटकपुत्रपदसापेक्षत्वेन पुरुषपदस्य च समासाघटकापसार्यतापदसापेक्षत्वेनाऽसमर्थत्वात्तयोः समासस्याऽसाधुत्वं स्यादिति तयोः समासापत्तिर्नास्ति, अन्यथा ' ऋद्धस्य राजमातङ्गाः ' इत्यपि स्यात्, तत्रापि राजपदस्य समासाघटकऋद्धपदसापेक्षत्वेनाऽसामर्थ्यात्समासाऽसाधुत्वम् । अत्र च राजपदजन्यपदार्थोपस्थितिजन्यशाब्दनिरूपितराजनिष्ठप्रकारताख्यविषयतानिरूपितसंबन्धनिविशेष्यत्वाभिन्नप्रकारतानिरूपितशाब्दबोधीयपुत्रनिष्ठविशेष्यताशालिशाब्दबोधजनकपुत्रोपस्थितिजनकत्वरूपैकवाक्यत्वं पुत्रपदे एव न तु पुरुषपदेस्तीतिभावः । " इतिकृष्णंभट्टाः । तथा च अयमेति ' इत्युक्तवाक्यघटकराजपदपुरुषपदयोरुक्तैकवाक्यत्वाभावादेव न समासापत्तिरित्यर्थः । वम् ' धवखदिरौ ' इत्यत्राप्युक्तद्वित्वनिष्ठप्रकारताया भेदे धवखदिरपदयोरुक्तैकवाक्यत्वाभावात्तया समासो न स्यादेव. प्रकारताया एकत्वे तूक्तरीत्या तादृशैकप्रकारतापरम्परया ह्येकवाक्यत्वसंभवात् संभवति समासः ।

ननु यथा ' धवौ ' ' खदिरौ ' इत्यत्र वाक्यद्वयसत्त्वात्समूहालम्बनात्मको बोधस्तथा जलपृथिव्योः स्नेहगन्धौ ' इत्यत्रापि वाक्यद्वयसत्त्वात् ' जले स्नेहः पृथिव्यां गन्धः ' इत्याकारकसमूहालम्बनात्मक एव बोधो भविष्यतीत्याशङ्कयाह— जलेति । अत्रत्यसमूहालम्बनानात्मकबोधस्य स्वरूपमाह— किं त्विति । तद्विलक्षणः=समूहालम्बनविलक्षणः । ' जलपृथिव्योः ' इत्यत्र सप्तम्यर्थ आधेयत्वं द्विवचनार्थश्च द्वित्वं तच्च द्वित्वं जलपृथिव्युभयनिष्ठमेकमेव, द्वित्वे प्रकारता वर्तते, जलपृथिव्योश्च द्वित्वनिष्ठप्रकारतानिरूपितविशेष्यतापि वर्तते सप्तम्यर्थाधेयत्वनिष्ठविशेष्यतानिरूपितप्रकारतापि वर्तते, आधेयत्वेपि जलपृथिवीनिष्ठप्रकारतानिरूपितविशेष्यतापि वर्तते स्नेहगन्धनिष्ठविशेष्यतानिरूपितप्रकारतापि वर्तते. स्नेहगन्धौ इत्यत्र च द्वित्वनिष्ठप्रकारता स्नेहगन्धनिष्ठविशेष्यतानिरूपिता ज्ञेया, स्नेहगन्धोभयस्य धर्मितावच्छेदकमपि द्वित्वं उभयवृत्तित्वात् गन्धत्वादेरुभयवृत्तित्वाभावादितिपदार्थः, तथा च जलनिष्ठविशेष्यतानिरूपिता पृथिवीनिष्ठविशेष्यतानिरूपिता चैकद्वित्वनिष्ठा एकैव प्रकारतास्ति न तु विशेष्यताभेदेन प्रकारताभेदस्तथा स्नेहनिष्ठविशेष्यतानिरूपिता गन्धनिष्ठविशेष्यतानिरूपिताच द्वित्वनिष्ठा एकैव प्रकारता न तु विशेष्यताभेदेन प्रकारताभेदोस्ति येनात्रत्यबोधस्य समूहालम्बनात्मकत्वं स्यात् तथा चोक्तैकवाक्यतायाः सत्त्वादेव 'जलपृथिव्योः' इति 'स्नेहगन्धौ' इति च समासोपि जात इति भावः । वाक्यार्थबोधमाह— द्वित्वेति, द्वित्वनिष्ठप्रकारतानिरूपितजलपृथिव्युभयवृत्तिविशेष्यता तादृशविशेष्यतासमानाधिकरणप्रकारतानिरूपिताऽऽधेयत्वनिष्ठविशेष्यता तादृशविशेष्यतासमानाधिकरणप्रका-

थिवीत्वाद्यवच्छिन्नविशेष्यतात्मकप्रकारताद्वयनिरूपिताधेयत्वप्रकारतानिरूपितं य द्धर्मितावच्छेदकद्वित्वादिनिष्ठैकप्रकारतानिरूपकं स्नेहत्वगन्धत्वाद्यवच्छिन्नवि ष्यताद्वयं तद्वानिति, अतो न कुत्राप्येकवाक्यताभङ्गः ।

'चैत्रो मैत्रश्च गच्छतः' इत्यादावाख्यातार्थद्वित्वादिप्रकारेण भासमाने चैत्रमै त्रोभयादौ गमनाश्रयत्वाद्यन्वयेन निरुक्तैकवाक्यतासंभवेपि समासविधेर्विभाषा धिकारीयत्वादसमासः । तत्र विशेष्यताभेदभिन्नद्वित्वनिष्ठप्रकारताद्वयप्रतियोग समूहालम्बनात्मकबोध इति तु न सम्यक् तथा सत्युक्तयुक्तया एकैकचैत्रमैत्रा दितात्पर्येण तथाप्रयोगानुपपत्तेः ।

---

रतानिरूपितं तथा स्नेहगन्धपदोत्तरद्विवचनार्थद्वित्वनिष्ठप्रकारतानिरूपकं स्नेहगन्धोभयवृत्तिवि ष्यताद्वयं यत्तद्वान् बोधो जायते इति न कुत्रापि समासे उक्तैकवाक्यताया भङ्गः=अभा ( व्यभिचारः )येनोक्तैकवाक्यतायाः समासं प्रति कारणत्वं न स्यात्, तथाचोक्तैकवाक्यता समासकारणत्वे सिद्धे 'धवखदिरौ' इत्यादौ विशेष्यताभेदेन प्रकारताभेदस्वीकारे उक्तैकवाक्य न स्याद् एकवाक्यताया अभावे च समासोपि न स्यादित्याह– अत इति । अत्र च " ज पृथिव्योः स्नेहगन्धावित्यत्र सप्तम्यर्थौ द्वित्वमाधेयत्वं च तथा च जलपृथिवीवृत्तिद्वित्वादिनि कप्रकारतानिरूपितं यज्जलत्वावच्छिन्नपृथिवीत्वावच्छिन्नविशेष्यताद्वयात्मकप्रकारताद्वयं त रूपिता या सप्तम्यर्थाधेयत्वनिष्ठविशेष्यतारूपप्रकारता तन्निरूपितं यद्धर्मितावच्छेदकं द्वित्वादि ष्ठैकप्रकारतानिरूपकं स्नेहत्वावच्छिन्नगन्धत्वावच्छिन्नविशेष्यताद्वयं तद्वान् स्नेहो गन्धश्चेति बो द्वौ स्नेहगन्धौ जलपृथिव्युभयवर्तिनौ इतिबोधाकारः " इतिकृष्णंभट्टाः ।

ननु यदि यत्र विशेष्यताभेदेन प्रकारताभेदो न भवति तत्रोक्तैकवाक्यतायाः सत्त्वेन समा भवति यथा 'धवखदिरौ' इत्यत्रेतिनियमस्तदा 'चैत्रो मैत्रश्च गच्छतः' इत्यत्रापि चैत्रमैत्रनिष्ठ शेष्यत्वयोर्भेदेपि धातूत्तरद्विवचनार्थद्वित्वनिष्ठा प्रकारतात्वेकैवास्ति न तु भिन्नेति चैत्रनिष्ठ शेष्यतानिरूपितद्वित्वनिष्ठप्रकारतानिरूपितमैत्रनिष्ठविशेष्यतायाः सत्त्वाद् द्वित्वद्वारा चैत्रमैत्र परस्परं प्रयोज्यप्रयोजकभावापन्नविषयताशालित्वेन 'धवखदिरौ' इत्यत्रेव 'चैत्रो मै गच्छतः' इत्यत्र कथं न समासः ? समासकारणीभूताया उक्तैकवाक्यतायाः सत्त्वादेवेत्या ङ्क्याह– चैत्रो मैत्रश्चेति, यद्यप्यत्रास्त्येकवाक्यता तथापि समासविधेर्वैकल्पिकत्वादेव नात्र सम सः । एकवाक्यतायाः सत्त्वाच्च 'चैत्रमैत्रौ गच्छतः' इतिसमासोप्येकपक्षे भवत्येवेत्यर्थः । द्वित्व दिप्रकारेणेति– द्वित्वं प्रकारोऽत्रेति बहुव्रीहिसमासेन द्वित्वस्यैव चैत्रमैत्रोभयप्रकारत्वं ज्ञेयम् ननु यत्र विशेष्यताभेदेपि प्रकारताभेदो न भवति तत्रोक्तैकवाक्यतायाः सत्त्वात्समासो भव वेति नियमस्तादृशनियमपरिरक्षणाय च तत्र–'चैत्रो मैत्रश्च गच्छतः' इत्यत्र विशेष्यताभे द्वित्वनिष्ठप्रकारतापि भिन्नैव स्वीकार्या यथा– चैत्रनिष्ठविशेष्यतानिरूपिता द्वित्वनिष्ठा प्रकार भिन्ना मैत्रनिष्ठविशेष्यतानिरूपिता च द्वित्वनिष्ठा प्रकारता भिन्नेति प्रकारताया अभेदो नास्

आख्यातोपस्थापितद्वित्वादिकं चोभयादिरूपान्वयितावच्छेदकावच्छिन्ने एवान्वेतीति व्युत्पत्तिः, तेनोक्तप्रयोगदर्शनात् क्रियापदस्य विशेष्यवाचकपदसमानवचनकत्वाऽनियमेपि घटद्वयादितात्पर्येण 'घटस्तिष्ठतः' इत्यादयो न प्रयोगाः । एकवचनान्तं क्रियापदं च तादृशविशेष्यवाचकपदप्रयोगे एव साधु—अतः 'घटास्तिष्ठति' इत्यादयो न प्रयोगाः ।

अथैकघटादिव्यक्तेरेतद्देशवृत्तितादशायाम् 'अत्र घटौ स्तः घटाः सन्ति',

---

येनात्रोक्तैकवाक्यता प्राप्नुयात् तया च समासः प्राप्नुयादित्याशङ्क्याह— तत्रेति । प्रतियोगी= संबन्धी ( तद्वान् ) तद्विषयक इतियावत्. 'प्रतियोगी नाम निरूपकः' इत्यपि केचित्, 'चैत्रो मैत्रश्च गच्छतः' इत्यत्र विशेष्यताभेदेन भिन्ना या द्वित्वनिष्ठा प्रकारता तादृशप्रकारताद्वयविषयकः समूहालम्बनात्मक एव बोधो जायते इत्यर्थः । परिहरति— तथासतीति, तथासति=विशेष्यताभेदेन द्वित्वनिष्ठप्रकारताया भेदे सति, उक्तयुक्त्या= अथोद्देश्यतावच्छेदकव्याप्यपर्याप्तेः ( १९० पृ. ) इत्युक्तयुक्त्या । यद्यत्र विशेष्यताभेदेन द्वित्वनिष्ठा प्रकारतापि भिन्ना स्यात्तदा चैत्रमैत्रोभयविशेषणतयैकं द्वित्वं न प्रतीयेत किं तु चैत्रविशेषणतया पृथग् द्वित्वं प्रतीयेत मैत्रविशेषणतया च पृथग् द्वित्वं प्रतीयेत तथा च चैत्रद्वयमैत्रद्वयतात्पर्येणैव 'चैत्रो मैत्रश्च गच्छतः' इति प्रयोगः स्याद् एकैकचैत्रमैत्रतात्पर्येण च तथा प्रयोगो न स्यात् तत्तु नेष्टमित्यर्थः । तथाप्रयोगानुपपत्तेः= 'चैत्रो मैत्रश्च गच्छतः' इतिप्रयोगानुपपत्तेः ।

आख्यातेति— 'चैत्रो मैत्रश्च गच्छतः' इत्यादावाऽऽख्यातद्विवचनोपस्थितं द्वित्वं चैत्रत्वमैत्रत्वरूपं यदुभयं तदन्वयितावच्छेदकम्=धर्मितावच्छेदकं यदुभयत्वं चपदोपस्थाप्यं साहित्यं वा तदवच्छिन्ने चैत्रमैत्रद्वये एवान्वेतीति नियमः । "तेन" इत्यस्य "घटस्तिष्ठतः इत्यादयो न प्रयोगाः" इत्यनेनान्वयः । उक्तप्रयोगदर्शनात्='चैत्रो मैत्रश्च गच्छतः' इतिप्रयोगदर्शनात् । अत्र च विशेष्यवाचकचैत्रमैत्रपदयोरेकवचनान्तत्वेपि क्रियापदस्य द्विवचनान्तत्वेन क्रियापदस्य विशेष्यवाचकपदसमानवचनकत्वाऽनियमेपि घटद्वयतात्पर्येण 'घटस्तिष्ठतः' इत्यादयो न प्रयोगा भवन्ति, 'तिष्ठतः' इत्याख्यातोपस्थाप्यद्वित्वस्य घटद्वये एवान्वयसंभवात् 'घटः' इत्येकवचनान्तघटपदस्य घटद्वयानुपस्थापकत्वादित्यर्थः । एकवचनान्तक्रियापदम् 'तिष्ठति' इत्यादिकं च तादृश=एकवचनान्तविशेष्यवाचकघटादिपदस्य प्रयोगे एव साधु भवतीति 'घटास्तिष्ठति' इत्यादयोपि न प्रयोगा भवन्ति । आख्यातोपस्थापितैकत्वस्यैकव्यक्तावेवान्वयसंभवात् ।

नन्वेतद्देशे घटद्वयसत्त्वे 'अत्र घटौ स्तः' इति प्रयोगो भवति तत्कस्य हेतोः घटत्वव्याप्यपर्याप्तिसंबन्धेन घटद्वये द्वित्वस्यापि सत्त्वात् क्रियापदबोध्यस्यैतद्देशवृत्तित्वाश्रयत्वस्यापि सत्त्वाद् एतद्देशवृत्तित्वं घटेऽस्तीति तदाश्रयत्वमस्त्येव तथा चैतद्देशे एकघटसत्त्वेपि 'अत्र घटौ स्तः' 'अत्र घटाः सन्ति' इत्यादिप्रयोगः स्यादेव वर्तमाने एकस्मिन्नपि घटे स्वरूपसंबन्धेनैतद्देशवृत्तित्वाश्रयत्वस्यापि सत्त्वादेव घटत्वव्याप्यपर्याप्तिसंबन्धेन च द्वित्वस्यापि सत्त्वादेव, देशान्तरस्थे एतद्देशस्थे च घटे

इति कथं न प्रयोगः ? घटादौ घटत्वादिव्याप्तिविशिष्टपर्याप्तिसंबन्धेन द्वित्व स्वरूपादिसंबन्धेनैतद्देशवृत्तित्वाश्रयत्वादेश्च सत्त्वात् ।

न च द्वित्वेनोपस्थितयोर्द्वयोरेव व्यक्त्योरेवं बहुत्वेनोपस्थितासु बहुषु व्य विधेयान्वयाद् व्यक्त्यन्तरेष्वेतद्देशवृत्तित्वाश्रयत्वादिबाधान्न तादृशप्रयोग वाच्यम्, व्यक्त्यन्तरेऽयोग्यतया तादृशविधेयानवगाहिन एकघटे तदवगा बोधस्योत्पत्तौ बाधकाभावात् तथातात्पर्येण तथाप्रयोगस्य दुर्वारत्वात् ।

न च व्यासज्यवृत्तिधर्मो यत्रान्वयितावच्छेदकस्तत्र यावत्स्वऽन्वयितावच्छे दकस्य पर्याप्तिस्तावतामेव पदार्थान्तरेणान्वय इतिव्युत्पत्तिस्तन्निर्वाहाय च ता

---

मिलित्वा द्वित्वमस्त्येवेति तादृशोभयगतद्वित्वस्य प्रत्येकमपि घटे बाधाऽभावादित्याशङ्क अथेति । एवम् 'अत्र घटाः सन्ति' इतिप्रयोगापत्तिर्बहुत्वसत्त्वेन विज्ञेया ।

ननु 'अत्र घटौ स्तः' इत्यत्र द्वित्वेनोपस्थितघटव्यक्तिद्वये एव विधेयस्य=एतद्देशवृत्तित्वाश्र स्यान्वयः स्वीक्रियते तथा चात्रैकघटव्यक्तेरेव सत्त्वाद् या खलु द्वितीया घटव्यक्तिर्देशान्तरे वर्तते त मेतद्देशवृत्तित्वाश्रयत्वस्याभावादेव अर्थात् द्वित्वाश्रयीभूतैकव्यक्तावेतद्देशवृत्तित्वाश्रयत्वस्य सत्त्वे त्वाश्रयीभूतव्यक्तिद्वये एतद्देशवृत्तित्वाश्रयत्वस्य बाधादेवैकघटसत्त्वदशायां तादृशप्रयोगः='अत्र स्तः' इति प्रयोगो न भवतीत्याशङ्क्याह— न चेति । एवं अत्र 'घटाः सन्ति' इत्यादावपि बो द्वित्वेन बहुत्वेनेति तृतीयार्थः प्रकारत्वं द्वित्वप्रकारतया बहुत्वप्रकारतयेत्यर्थः । परिहारहेतु व्यक्त्यन्तरेति, यथा ह्येकस्मिन् घटे नीलत्वाभावेऽप्यन्यस्मिन् नीलत्वसत्त्वे बाधो न भवति प्रकृतेपि देशान्तरवृत्तिघटे एतद्देशवृत्तित्वाश्रयत्वस्य बाधेप्येतद्देशवृत्तिघटे त्वेतद्देशवृत्तित्वाश्रय विधेयस्यान्वये बाधो न संभवतीत्येकघटसत्त्वदशायामपि 'अत्र घटौ स्तः' इति प्रयोगः स्या त्यर्थः । व्यक्त्यन्तरे=देशान्तरवृत्तिघटव्यक्तौ । देशान्तरवृत्तिव्यक्तौ चैतद्देशवृत्तित्वाश्रय योग्यता नास्ति विरोधात् । तादृशविधेयानवगाहिनः=एतद्देशवृत्तित्वाश्रयत्वरूपविधेयानवगा नोपि, एकघटे=एतद्देशवृत्तिघटे, तदवगाहिनः=एतद्देशवृत्तित्वाश्रयत्वरूपविधेयावगाहिनो स्योत्पत्तौ बाधकाभावात् तथातात्पर्येण=एतद्देशवर्तमानैकमात्रघटे एतद्देशवृत्तित्वाश्रयत्वबोध त्पर्येण तथाप्रयोगस्य=' अत्र घटौ स्तः ' इत्यादिप्रयोगस्य दुर्वारत्वादित्यन्वयः ।

ननु यत्र व्यासज्यवृत्तिधर्मो द्वित्वादिकं धर्मितावच्छेदकं भवति तत्र यावतीषु व्यक्तिषु व्यासज्यवृत्तिधर्मितावच्छेदकस्यान्वयो भवति तावद्व्यक्तिष्वेव पदार्थान्तरस्यान्वयो भवति ' नीलौ घटौ ' इत्यत्र धर्मितावच्छेदकस्य व्यासज्यवृत्तिधर्मस्य द्वित्वस्य घटद्वयेऽन्वयो भव पदार्थान्तरस्य नीलस्यापि घटद्वये एवान्वयो भवति न त्वेकस्मिन् घटे इति नियम एता यमनिर्वाहाय च तादृशधर्मावच्छिन्ने= व्यासज्यवृत्तिद्वित्वादिधर्मावच्छिन्ने, इतरान्वयबोधस्य= शतद्देशवृत्तित्वाश्रयत्वान्वयबोधस्य, जनकसामग्र्याः=अत्रेतिसप्तम्यन्तसमभिव्याहृतद्विवचनान्तघ ज्ञानजन्यपदार्थोपस्थितियोग्यताज्ञानादिसामग्र्या उभयत्वावच्छिन्नघटद्वयविशेष्यकैतद्देश त्वाश्रयत्वरूपपदार्थान्तरान्वयबुद्धित्वमेव जन्यतावच्छेदकं वक्तव्यम्, अर्थादुक्तनियम हाय व्यासज्यवृत्ति द्वित्वादिधर्मावच्छिन्ने घटादिद्वयादौ य इतरपदार्थस्य=एतद्देशवृत्तित्वा

धर्मावच्छिन्ने इतरान्वयबोधजनकसामग्र्या उभयादिविषयकपदार्थान्तरान्वयबुद्धित्वमेव जन्यतावच्छेदकं वक्तव्यमिति द्वित्वादिनैकघटादिमात्रविषयकैतद्देशवृत्तित्वाद्यन्वयबोधो न संभवतीति न तादृशबोधतात्पर्येण तादृशप्रयोगापत्तिरिति वाच्यम्, योग्यताभ्रमेण ' आकाशावत्र स्तः ' इत्यादिवाक्याद् द्वित्वादिनैकव्यक्तिमात्रविषयकपदार्थान्तरान्वयबोधात् तादृशव्युत्पत्तेस्तन्निर्वाहककार्यकारणभावस्य च कल्पनाऽसंभवात् ।

---

देरन्वयस्तद्विषयको यो बोधस्तज्जनकसामग्र्या योग्यताज्ञानादिरूपया व्यासज्यवृत्तिद्वित्वादिधच्छिन्नघटद्वयादावेव पदार्थान्तरान्वयविषयको बोधो जायते इति स्वीकर्तव्यं तथा च व्यासवृत्तिद्वित्वादिधर्मावच्छिन्ने इतरान्वयबोधजनकसामग्र्या द्वित्वादिनैकघटविषयक एतद्देशवृत्तित्वात्वान्वयबोधो न संभवति, अर्थात् एकघटव्यक्तौ उभयवृत्तिद्वित्वस्य सत्त्वेप्येतद्देशवृत्तित्वाश्रयस्यान्वयो न संभवति— एकघटव्यक्तौ द्वित्वस्य पर्याप्त्यभावाद् द्वित्वपर्याप्तिस्तु घटद्वये एवास्तीति द्वये एवैतद्देशवृत्तित्वाश्रयत्वस्यान्वयः ' अत्र घटौ स्तः ' इत्यत्र संभवतीति न तादृशतात्पर्ये=एतद्देशवर्तमानैकमात्रघटे एतद्देशवृत्तित्वाश्रयत्वबोधनतात्पर्येण एतद्देशे एकमात्रघटसत्त्वदशायातियावत् तथाप्रयोगापत्तिः=' अत्र घटौ स्तः ' इतिप्रयोगापत्तिरित्याशङ्क्याह— न चेति । च " द्वित्वादिनैकघटादिमात्रविषयकैतद्देशवृत्तित्वाद्यन्वयबोधो न संभवतीति— उभयत्वावच्छिन्नघटद्वयविशेष्यकैतद्देशवृत्तित्वप्रकारकान्वयबुद्धित्वरूपमुक्तसामग्रीकार्यतावच्छेदकमुभयत्वावच्छिभयविशेष्यकैतद्देशवृत्तित्वप्रकारिकायाम् ' अत्र घटौ स्तः ' इत्याकारकबुद्धावेवास्ति न तु अत्र घटौ स्तः ' इत्याकारकद्वित्वविशिष्टैकघटमात्रविषयकैतद्देशवृत्तित्वप्रकारकान्वयबोधेस्त्यऽतकसामग्रीबलात् कार्यतावच्छेदकानाक्रान्तद्वित्वविशिष्टैकघटमात्रविषयकैतद्देशवृत्तित्वप्रकारको बोधपादयितुं न शक्यते इति तादृशबोधतात्पर्येण=द्वित्वविशिष्टैकघटमात्रविशेष्यकैतद्देशवृत्तित्वप्रकारकबोधः ' अत्र घटौ स्तः ' इति वाक्याज्जायतामिति तात्पर्येण न तादृशप्रयोगापत्तिः=अत्र घटौ स्तः ' इतिप्रयोगापत्तिः " इति कृष्णंभट्टाः । परिहरति— योग्यताभ्रमेणेति, आकाशौ द्वौ ' इत्याकारकभ्रमे जाते यदा योग्यताभ्रमेण ' अत्राकाशौ स्तः ' इतिवाक्यमुच्चा- तदाऽन्वयितावच्छेदकव्यासज्यवृत्तिद्वित्वस्याऽऽकाशपदोत्तरद्विवचनार्थस्य पर्याप्तिस्तु व्यक्तिद्वये संभवति नाकाशैकव्यक्तौ. आकाशस्य चैकैव व्यक्तिरिति तत्राकाशैकव्यक्तावप्येतद्देशवृत्तित्वाश्रयरूपपदार्थान्तरस्यान्वयो भवतीत्युक्तव्युत्पत्तौ व्यभिचारः प्राप्त इति तादृशव्युत्पत्तेः=" व्याज्यवृत्तिधर्मो यत्रान्वयितावच्छेदकस्तत्र यावत्स्वन्वयितावच्छेदकस्य पर्याप्तिस्तावतामेव पदार्थान्तरान्वयः " इतिव्युत्पत्तेः कल्पना न संभवति, तथोक्तव्युत्पत्तिनिर्वाहककार्यकारणभावस्य=व्यासज्यवृत्तिधर्मावच्छिन्ने इतरपदार्थान्वयबोधजनकसामग्र्या व्यासज्यवृत्तिद्वित्वादिधर्मपर्याप्त्याश्रयभूतयावद् (सकल )व्यक्तिष्वेव इतरपदार्थान्वयविषयकबोधो जायते न त्वेकव्यक्ताविति कार्यकारणभावस्यापि कल्पना न संभवति—' अत्राकाशौ स्तः ' इत्यत्र व्यभिचारात्, अत्र व्यासज्यवृत्तिद्वि-

यत्तु द्वित्वाद्यवच्छिन्नोद्देश्यताकबुद्धावुद्देश्यतावच्छेदकव्यापकता नि
विधेयसंसर्गे भासते इतिव्युत्पत्तिः, यत्र चोद्देश्यतावच्छेदकविशिष्टाधिक
सिद्धया तद्व्यापकत्वमप्रसिद्धं तत्रापि खण्डशः प्रसिद्धानां तत्तद्घटकप
विशेष्यविशेषणभावापन्नानां भानसंभवान्न 'पीतशङ्खावत्र' इत्यादौ

---

त्वस्यान्वयितावच्छेदकत्वेपि द्वित्वपर्याप्त्यऽनाश्रयीभूतायामप्याकाशैकव्यक्तावेतद्देशवृत्तित्व
पपदार्थान्तरस्यान्वयादित्यर्थः । तथा च प्रकृतेपि द्वित्वपर्याप्त्यऽनाश्रयीभूतायामप्येक
वेतद्देशवृत्तित्वाश्रयत्वरूपपदार्थान्तरस्यान्वयसंभवाद् एतद्देशे एकघटव्यक्तिदशायामपि
घटौ स्तः' 'अत्र घटाः सन्ति' इति प्रयोगः स्यादेव बाधकाभावादिति भावः । द्वि
तृतीयार्थः प्रकारत्वम्, द्वित्वप्रकारकैकव्यक्तिमात्रविषयक इत्यर्थः ।

एकघटव्यक्तिदशायाम् 'अत्र घटौ स्तः' इतिप्रयोगस्याप्रामाण्योपपादकं मतान्तर
रायानुवदति— यत्त्विति, यस्मिन् बोधे उद्देश्यता द्वित्वावच्छिन्ना भवति तस्मिन् बोधे
देश्यतावच्छेदकव्यापकता विधेयसंसर्गे भासते इति नियमः, यथा 'नीलौ घटौ' इ
त्वसमानाधिकरणद्वित्वव्यापकता विधेयस्य नीलत्वस्य संसर्गे समवाये भासते तथा च
घटौ स्तः' इत्यत्रापि घटत्वसमानाधिकरणद्वित्वव्यापकत्वं विधेयसंसर्गे=एतद्देशवृत्तित्वा
विधेयस्य संसर्गे स्वरूपसंबन्धे भासते ( आश्रयत्वस्य स्वरूपसंबन्धेन वर्तमानत्वात् )
यत्रैतद्देशविद्यमानघटद्वये घटत्वसमानाधिकरणद्वित्वमस्ति तत्रैतद्देशविद्यमानघटद्वये ए
त्वाश्रयत्वस्य स्वरूपसंबन्धोपि वर्तते अर्थात् स्वरूपसंबन्धेनैतद्देशवृत्तित्वाश्रयत्वमपि
तथा चैकघटादिव्यक्तिमात्राधिकरणपरस्य=एतद्देशे एकघटव्यक्तिदशायामेकघटव्यक्तावेत
श्रयत्वबोधनपरस्य 'अत्र घटौ स्तः' इतिवाक्यस्याऽप्रामाण्यं सुघटमेव=स्पष्टमेवास्ति,
हेतुमाह— उद्देश्यतावच्छेदकेति, 'अत्र घटौ स्तः' इति वाक्येनोक्तव्युत्पत्त्या यत्र घ
समानाधिकरणं द्वित्वं तत्र तत्रैतद्देशवृत्तित्वाश्रयत्वस्य संसर्ग इति प्रतिपाद्यते एतद्देशे
घटो न तु घटद्वयं घटत्वसमानाधिकरणद्वित्वं च देशान्तरस्थद्वितीयघटेप्यस्ति तत्रैत
श्रयत्वसंबन्धो नास्त्येवेति विधेयसंसर्गे घटत्वसमानाधिकरणद्वित्वव्यापकताया बाधेन बा
पादकत्वाद् एतद्देशे एकघटव्यक्तिदशायाम् 'अत्र घटौ स्तः' इतिवाक्यस्य प्रामाण्या
वेत्यर्थः । ननु 'अत्र पीतशङ्खौ स्तः' इत्यादौ द्वित्वसमानाधिकरणं पीतशङ्खत्वम
च्छेदकमेव प्रसिद्धं नास्ति येनैतद्देशवृत्तित्वाश्रयत्वादिविधेयसंसर्गे तद्व्यापकता स्यादि
चारान्नैषा व्युत्पत्तिः स्वीकर्तुं शक्यते येनैकघटव्यक्तिदशायाम् 'अत्र घटौ स्तः'
स्याऽप्रामाण्यमुक्तरीत्या सुघटं स्यादित्याशङ्क्योक्तम्— यत्र चेति, उद्देश्यतावच्छेदक
समानाधिकरणपीतशङ्खत्वं तद्विशिष्टस्याधिकरणभूतस्य पीतशङ्खस्याऽप्रसिद्धत्वेनोद्देश्य
स्याप्यप्रसिद्धया तद्व्यापकत्वम्=उद्देश्यतावच्छेदकव्यापकत्वमप्रसिद्धं यत्र तत्रापि त
र्थानाम्=व्यापकताघटकपदार्थानां पीतत्वशङ्खत्वादीनां खण्डशः प्रसिद्धानाम्—यथा पी

व्युत्पत्तिभङ्गः, एवं चैकघटादिव्यक्तिमात्राधिकरणपरस्य 'अत्र घटौ स्तः' इत्यादिवाक्यस्याप्रामाण्यं सुघटमेव—उद्देश्यतावच्छेदकीभूतघटमात्रवृत्तिद्वित्वव्यापकताभास्तादृशवाक्यप्रतिपाद्याया विधेयसंसर्गे बाधादिति ।

तदपि तुच्छम्— 'अत्र घटौ स्तः' इत्यादौ द्वित्वसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकत्वस्य द्वित्ववद्घटनिष्ठाभावप्रतियोगितानवच्छेदकत्वस्य च तदधिकरणावृत्तिघटादिनिष्ठाभावप्रतियोगितावच्छेदकीभूते तत्तद्विधेयसंसर्गे बाधाद् घटद्वयाधिकरणपरतादृशवाक्यस्याप्यप्रामाण्यापत्तेः । तत्तद्द्वित्व-

---

सिद्धं शङ्खत्वं शुक्लशङ्खे प्रसिद्धमिति तेषाम् 'पीतशङ्खौ' इत्यत्रापि विशेष्यविशेषणभावेन नसंभवात् न 'पीतशङ्खावत्र स्तः' इत्यत्रोक्तव्युत्पत्तेर्व्यभिचारस्तथा च 'अत्र पीतशङ्खौ ः' इत्यत्रापि शङ्खद्वयसत्त्वे विधेयसंसर्गे उद्देश्यतावच्छेदकव्यापकता भासते एव । ज्ञानमिदं मात्मकमित्यन्यदेतत् किं वात्र व्यापकताभानमपि भ्रमात्मकमेवास्तु. उक्तव्युत्पत्तेः भ्रमप्रमासारणत्वादित्यर्थः ।

परिहरति— तदपीति, एवं ह्येतद्देशे घटद्वयसत्त्वेपि घटद्वयाधिकरणपरतादृशवाक्यस्य='अत्र टौ स्तः' इतिवाक्यस्य यदिष्टं प्रामाण्यं तन्न स्यादित्यन्वयः । तथा हि— व्यापकत्वं द्विविधं वति भेदघटितमऽत्यन्ताभावघटितं च, तत्र भेदघटितं हि तत्समानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकत्वं व्यापकत्वं ज्ञेयं यथा— धूमसमानाधिकरणो यो जलादिमान्नेत्याकारकोऽन्योन्याभावस्तत्प्रतियोगी जलादिमान् प्रतियोगितावच्छेदकत्वं जलादौ प्राप्तं न तु वह्नौ धूमाधिकरणे ह्निमान्नेतिभेदस्याऽसंभवाद् धूमाधिकरणस्य वह्निमत्त्वादेव तथा च वह्नौ धूमसमानाधिकरणभेदप्रतियोगितानवच्छेदकत्वरूपं व्यापकत्वं प्राप्तम्, अत्यन्ताभावघटितं च व्यापकत्वम्— तत्समानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकवत्त्वं ज्ञेयं यथा— धूमसमानाधिकरणो यः पर्वते जलंत्यन्ताभावस्तत्प्रतियोगि जलं प्रतियोगितावच्छेदकं यज्जलत्वं तद्वत्त्वं जले प्राप्तं वह्नित्वं च दृशाभावप्रतियोगितानवच्छेदकमेव तद्वत्त्वं वह्नौ प्राप्तमिति वह्निर्धूमव्यापकः । प्रकृते च 'अत्र टौ स्तः' इत्यत्र विधेयसंसर्गे= एतद्देशवृत्तित्वाश्रयत्वस्य विधेयस्य संसर्गे स्वरूपसंबन्धे उद्देश्यतावच्छेदकव्यापकत्वम्=घटत्वसमानाधिकरणद्वित्वव्यापकत्वं त्वदुक्तव्युत्पत्त्याऽपेक्षितमस्ति तन्न भवति. तथा हि तदधिकरणावृत्तिघटाद्यन्तरनिष्ठाभावप्रतियोगितावच्छेदकीभूते इति— एतदधिकरणावृत्ति यद् घटद्वयं तस्मिन् एतद्देशवृत्तित्वाश्रयत्वसंसर्गवन्नेति भेदो वर्तते एव तादृशान्योन्याभावप्रतियोगी ह्येतद्देशवृत्तित्वाश्रयत्वसंसर्गवदेव तादृशान्योन्याभावप्रतियोगितावच्छेदकं चैतद्वृत्तित्वाश्रयत्वसंसर्ग एवेति तदधिकरणावृत्तिघटाद्यन्तरनिष्ठाभाव ( भेद ) प्रतियोगितावच्छेदकीभूते तत्तद्विधेयसंसर्गे भेदघटितं यद् द्वित्वसमानाधिकरणाभाव ( भेद ) प्रतियोगितानवच्छेदकत्वं व्यापकत्वं तदपि नास्ति यतः— एतद्देशावृत्तिघटद्वयेपि द्वित्वं तु वर्तते एतद्देशवृत्तित्वाश्रयत्वसंसर्गवत्त्वं तु न वर्तते इत्येतद्देशावृत्तिघटद्वये य एतद्देशवृत्तित्वाश्रयत्वसंसर्गवन्नेतिभेदस्तादृशभेदप्र-

समानाधिकरणाभावप्रतियोगितानवच्छेदकत्वस्य तत्तद्विधेयसंसर्गांशे भानं
मस्तु न संभवति— तत्तद्द्वित्वत्वेनानुपस्थितेः ।

न च तदवच्छिन्नस्य संसर्गतया भाने तेन रूपेणोपस्थितेर्नाऽपेक्षेति वाच्
तत्संसर्गावच्छिन्नतत्प्रकारतानिरूपिततत्तद्विशेष्यताशालिशाब्दबोधपरमित्याव

---

तियोगितावच्छेदकत्वमेवोक्तरीत्या विधेयस्यैतद्देशवृत्तित्वाश्रयत्वस्य संसर्गे प्राप्तं न तूक्तं न्या
रूपं तादृशसंसर्गवन्नेतिभेदप्रतियोगितानवच्छेदकत्वम् । एवमत्यन्ताभावघटितं यद् द्वित्वव
ष्ठाभावप्रतियोगितानवच्छेदकवत्त्वं व्यापकत्वं तदपि नास्ति यतः—एतद्देशावृत्तिघटद्वये
वर्तते एतद्देशवृत्तित्वाश्रयत्वसंसर्गस्तु न वर्तत इत्येतद्देशावृत्तिघटद्वये य एतद्देशवृत्तित्वाश्र
र्गस्याभावस्तादृशाभावप्रतियोगितावच्छेदकं यत् तादृशसंसर्गत्वं तद्वत्त्वमेव तादृशे विधेयसं
न तूक्तं व्यापकत्वरूपं द्वित्ववद्घटनिष्ठाभावप्रतियोगितानवच्छेदकवत्त्वमिति विधेयसंसर्गे
द्विविधस्यापि व्यापकत्वस्य बाधाद् बाधितार्थबोधकत्वाद् घटद्वयाधिकरणपरस्य=घटद्व
णबोधकस्यापि ( घटद्वयसत्तादशायामपि ) तादृशवाक्यस्य=' अत्र घटौ स्तः ' इति
ऽप्रामाण्यं स्यादित्यर्थः । ननु न घटत्वसमानाधिकरणद्वित्वमात्र ( यावद्द्वित्व ) व्यापक
यसंसर्गे उच्यते येनैतद्देशावृत्तिघटद्वये द्वित्वसत्त्वेप्येतद्देशवृत्तित्वाश्रयत्वसंसर्गस्याऽसत्त्वेनाऽ
स्यात् किं तु तत्तद्द्वित्वसमानाधिकरणाभाव ( भेद ) प्रतियोगितानवच्छेदकत्वरूपं त
व्यापकत्वमुच्यते. अस्ति चैतद्देशवृत्तिघटद्वयनिष्ठतद्द्वित्वव्यापकत्वं विधेयसंसर्गे द्वित्ववत्
त्तिघटद्वये एतद्देशवृत्तित्वाश्रयत्वसंसर्गस्य स्वरूपसंबन्धस्य सत्त्वात् तथा च घटद्वयसत्ता
' अत्र घटौ स्तः ' इतिवाक्यस्य नाऽप्रामाण्यापत्तिरित्याशङ्क्याह— तत्तद्द्वित्वेति । न
त्यत्र हेतुमाह— तत्तद्द्वित्वत्वेनेति, ' अत्र घटौ स्तः ' इत्यादौ द्विवचनेन द्वित्वस्य स
द्वित्वत्वेनैव रूपेणोपस्थितिर्भवति न तु तद्द्वित्वत्वेन रूपेण येन त्वदीयेनाऽनेन निवे
' अत्र घटौ स्तः ' इत्यस्याऽप्रामाण्यं परिहृतं स्यादित्यर्थः । कृष्णंभट्टमहाशयानामभिप्रा
मेव टीकायां द्रष्टव्यः ।

ननु संसर्गस्य संसर्गघटकपदार्थानां चोपस्थितेरपेक्षा न भवति. अत्र च विधेयसं
व्यापकत्वभानमुक्तं विधेयसंसर्गश्चात्र तद्द्वित्वव्यापकीभूतैतद्देशवृत्तित्वाश्रयत्वसंसर्गः (
बन्धः ) एवेति तदवच्छिन्नस्य=तद्द्वित्वत्वावच्छिन्नस्य तद्द्वित्वस्य संसर्गतया=संसर्ग
भाने स्वीकृते तेन रूपेण=तद्द्वित्वत्वेन रूपेणोपस्थितेरपेक्षैव नास्ति येन तद्द्वित्वत्वेन रूपे
त्यभावाद् विधेयसंसर्गस्य तद्द्वित्वव्यापकत्वेन भानं न स्यादित्याशङ्क्याह— न चेति । परि
तत्संसर्गेति, तत्संसर्गावच्छिन्ना=तद्द्वित्वव्यापकैतद्देशवृत्तित्वाश्रयत्वस्य स्वरूपसंसर्गेणाव
तत्प्रकारता=एतद्देशवृत्तित्वाश्रयत्वनिष्ठा प्रकारता तन्निरूपिता या तत्तद्विशेष्यता=घ
विशेष्यता तच्छालिशाब्दबोधपरम् ' अत्र घटौ स्तः ' इति वाक्यमित्याकारकतात्पर्यज्ञाने

तात्पर्यज्ञाने संसर्गस्य विशेषणतया तद्भाननिर्वाहाय संसर्गघटकोपस्थितेरपि ाब्दबोधात् प्रागावश्यकत्वात् । प्रकृतसंसर्गेणैकपदार्थविशिष्टापरपदार्थबोधपर- ज्ञानस्य प्रकृतवाक्यार्थविषयकतया प्रागऽसंभवेनोपदर्शिततात्पर्यज्ञानस्यैव शाब्द- हेतुत्वोपगमात् . एवं वाक्यार्थघटकसंसर्गस्याननुगमे 'घटौ स्तः' इत्यादौ क्यभेदप्रसङ्गाच्च ।

---

र्गो विशेषणत्वेनैव भासते प्रकारतावच्छेदकत्वादिति तद्भाननिर्वाहाय=उक्तसंसर्गभानस्य निर्वा- संसर्गघटकोपस्थितेः=संसर्गघटकस्य तद्द्वित्वादेरप्युपस्थितेः शाब्दबोधात् पूर्वमावश्यकत्वात् पस्थितिं विना विशेषणीभूतसंसर्गघटकतद्द्वित्वादेर्भानासंभवात् ) 'अत्र घटौ स्तः' इत्यत्र च नेन द्वित्वस्य तद्द्वित्वत्वेनोपस्थितेरभावाद् न तद्द्वित्वव्यापकत्वस्यैतद्देशवृत्तित्वाश्रयत्वसंसर्गे संभवति किं तु द्वित्वत्वेनोपस्थितद्वित्वव्यापकत्वस्यैव. द्वित्वव्यापकत्वं तु विधेयसंसर्गे नास्त्ये- प्रतिपादितमेवेति घटद्वयदशायामपि 'अत्र घटौ स्तः' इतिवाक्यस्याप्रामाण्यं तदवस्थमेवे- । ननु यद्युक्ततात्पर्यज्ञानस्यात्र शाब्दबोधकारणत्वं स्यात्तदोक्ततात्पर्यज्ञाने उक्तसंसर्गस्य रतावच्छेदकतया विशेषणत्वेन तस्य तद्घटकतद्द्वित्वादिपदार्थानां च भाननिर्वाहायोपस्थिते- स्यात् तथा च द्वित्वस्य तद्द्वित्वत्वेन रूपेणोपस्थित्यभावात् तद्द्वित्वव्यापकत्वभानं विधेय- न स्यादपि न चैवमस्तिति– उक्ततात्पर्यज्ञानस्य कारणत्वास्वीकारात् किं तु प्रकृतसंसर्गेण= त्वव्यापकैतद्देशवृत्तित्वाश्रयत्वीयस्वरूपसंसर्गेण एकपदार्थविशिष्टः=एतद्देशवृत्तित्वविशिष्टो यो- दार्थः=घटादिस्तद्बोधनपरम् 'अत्र घटौ स्तः' इति वाक्यमित्याकारकतात्पर्यज्ञानस्यै- शाब्दबोधकारणत्वं स्वीक्रियते अस्मिंश्च तात्पर्यज्ञाने नोक्तसंसर्गस्य किंचिदवच्छेदकतया येनावच्छेदकत्वेन विशेषणत्वप्राप्त्या तस्य तद्घटकतद्द्वित्वादेश्च भानार्थमुपस्थितेरपेक्षा , तथा चोक्तसंसर्गघटकतद्द्वित्वस्य तद्द्वित्वत्वेनोपस्थित्यभावेपि तद्व्यापकत्वस्य भाने न नुपपत्तिः ( शेषं पूर्ववत् ) इत्याशङ्क्याह– प्रकृतेति, प्रकृतसंसर्गेणेत्याद्युक्ततात्पर्यज्ञानं हि प्रकृ- यार्थविषयकमेव= 'अत्र घटौः स्तः' इति वाक्यार्थबोधस्वरूपमेवेत्यस्य तात्पर्यज्ञानस्य बोधात् प्रागऽसंभवेन कारणत्वं न संभवतीत्युपदर्शितं यत् तत्संसर्गावच्छिन्नतत्प्रकारतानि- ितत्तद्विशेष्यताशालिशाब्दबोधपरमेतद्वाक्यमित्याकारकं तात्पर्यज्ञानं तस्यैवात्र शाब्दबोधका- स्वीकार्यं तत्र चोक्तसंसर्गस्य प्रकारतावच्छेदकतया विशेषणत्वेन तस्य तद्घटकतद्द्वित्वा- च भानायोपस्थितेरावश्यकत्वात् तद्द्वित्वत्वेन तद्द्वित्वस्योपस्थितेरभावाच्च न विधेयसंसर्गे त्वव्यापकत्वभानं संभवति. उपस्थितिश्च द्वित्वत्वेन द्वित्वसामान्यस्यास्ति द्वित्वमात्रव्याप- च विधेयसंसर्गे नास्त्येवेति प्रदर्शितमेवेति घटद्वयदशायामपि 'अत्र घटौ स्तः' इत्यस्या- ाण्यं तदवस्थमेवेत्यर्थः । तद्द्वित्वस्य संसर्गघटकत्वे दोषान्तरमप्याह– 'एवमिति, संसर्ग- ाक्यभेदनियमोस्ति. अत्र च तद्द्वित्वं संसर्गघटकम्. द्वित्वं चापेक्षाबुद्धिजन्यमपेक्षाबुद्धिनाश- च बुद्धिश्च तृतीयक्षणे नश्यत्येवेति तया सह तत्तद्द्वित्वानामपि नाशेन तद्घटित

अत्रोच्यते– व्यासज्यवृत्तिधर्मावच्छिन्नोद्देश्यताकशाब्दबुद्धौ स्वव्याप्य धर्मवत्त्वमपि विधेयसंसर्गतया भासते इति व्युत्पत्तिः । व्याप्यत्वं च तद्वद् त्तित्वं व्यतिरेकिविधेयस्थले । तादृशधर्मवत्त्वं । चोद्देश्यतावच्छेदकताघटकसं बोध्यम् ।

---

संसर्गस्यापि नाशे प्राप्ते भिन्नभिन्नसंसर्गाणां च संसर्गत्वे प्राप्ते संसर्गभेदाद्वाक्यभेदप्रसङ्ग वाक्यार्थज्ञानभेदे एव वाक्यभेद इत्युच्यते वाक्यार्थज्ञानं च संसर्गज्ञानमेव संसर्गज्ञानं चा घटकतत्तद्द्वित्वानां भेदेन संसर्गभेदात् प्रतितृतीयक्षणं भिन्नं भिन्नं स्यादेवेति भावः "वाक्यार्थघटकसंसर्गस्याननुगमे 'अत्र घटौ स्तः' इत्यादौ वाक्यभेदप्रसङ्गाच्चेति– त्तित्वं प्रकारो द्वौ घटौ विशेष्यौ तत्तद्द्वित्वव्यापकैतद्देशवृत्तित्वीयस्वरूपमेतद्देशवृत्तित्वस तत्तद्द्वित्वं तत्तदपेक्षाबुद्धिजन्यमपेक्षाबुद्धिनाशनाश्यं चेति, नानाविधसंसर्गभेद एव वा यामकः, संसर्गज्ञानं वाक्यार्थज्ञानं शाब्दबोध इत्येते पर्यायशब्दाः" इति कृष्णंभट्टाः सामान्यस्य संसर्गघटकत्वे तु तस्य द्वित्वत्वेन रूपेणानुगमसंभवात् तद्घटितसंसर्गस्य संभवत्येव । तत्तद्द्वित्वव्यक्तीनां त्वनुगमो नैव संभवतीत्यर्थः ।

अथेत्यादिना ( पृ. १६७ ) आशङ्कितस्योत्तरमारभते– अत्रोच्यते इत्यादिना । वृत्तिधर्मेण द्वित्वादिनाऽवच्छिन्ना उद्देश्यता यस्यामेतादृशशाब्दबुद्धौ, यथा– 'अत्र घटौ इत्यत्र घटनिष्ठोद्देश्यता व्यासज्यवृत्तिद्वित्वेनावच्छिन्नास्तीत्येतादृशवाक्यजन्यशाब्दबोधे, त्यत्र स्वम्=विधेयम्, तथा चैतद्देशवृत्तित्वाश्रयत्वलक्षणविधेयव्याप्यो यस्तादृशधर्मः= त्तिधर्मो द्वित्वं तद्वत्त्वमपि विधेयस्य ( एतद्देशवृत्तित्वाश्रयत्वरूपविधेयस्य ) संसर्गतया भा व्युत्पत्तिः, व्याप्यत्वं चात्र व्यतिरेकिविधेयस्थले ( अत्यन्ताभावप्रतियोगिविधेयकस्थले दन्यावृत्तित्वरूपं बोध्यम्, तादृशधर्मवत्त्वम्=विधेयव्याप्यव्यासज्यवृत्तिद्वित्वादिधर्मवत्त्वं तावच्छेदकताघटकसंबन्धेन=उद्देश्यतावच्छेदकघटत्वादिव्याप्यपर्याप्तिसंबन्धेन बोध्यम्, 'अत्र घटौ स्तः' इत्यत्रैतद्देशवृत्तित्वाश्रयत्वरूपविधेयस्य यथा स्वरूपसंबन्धेनान्वयो भ एतद्देशवृत्तित्वाश्रयत्वव्याप्यद्वित्ववत्त्वसंबन्धेनाप्यन्वयो भवतीति प्राप्तम्, संबन्धभूतं द्वि उद्देश्यतावच्छेदकघटत्वव्याप्यपर्याप्तिसंबन्धेन बोध्यमित्यर्थः । एतद्देशे घटद्वयसत्त्वे ता घटत्वव्याप्यपर्याप्तिसंबन्धेन द्वित्ववत्त्वं ( द्वित्वं ) वर्तत एवेति तादृशद्वित्ववत्त्वसंबन्धे एव विधेयस्यैतद्देशवृत्तित्वाश्रयत्वस्यान्वयः संभवति न त्वेकस्मिन् घटे तत्रोक्तसंबन्धेन तद्द्वित्ववत्त्वस्यासंभवादिति घटद्वयसत्त्वे 'अत्र घटौ स्तः' इति प्रयोग उपपद्यते । मानघटद्वयवृत्ति द्वित्वं चात्र विधेयव्याप्यमेव एतद्द्वित्वस्यैतद्देशवृत्तित्वाश्रयत्वरूपविधे देशान्तरस्थघटेऽसत्त्वाद् विधेयवत्येतद्देशवृत्तिघटद्वये एव सत्त्वाच्चेति बोध्यम् । एतद्दे सत्त्वे च वर्तमानैकघटे उद्देश्यतावच्छेदकघटत्वव्याप्यपर्याप्तिसंबन्धेन विधेयव्याप्यद्वित्वव वाद् घटत्वव्याप्यपर्याप्तिसंबन्धावच्छिन्नविधेयव्याप्यद्वित्ववत्त्वसंबन्धेनैतद्देशवृत्तित्वाश्र

'अत्र घटौ स्तः' इत्यादावेतद्देशवर्तमानत्वादिरूपविधेयस्य तद्वदन्यावृत्तित्व-रूपव्याप्तिमच्चैतद्देशस्यैकघटादिव्यक्तिमात्राधिकरणत्वे घटपटादिनिष्ठद्वित्वमेव, टत्वव्याप्यपर्याप्तिरूपोद्देश्यतावच्छेदकताघटकसंबन्धावच्छिन्नतद्वत्त्वं च घटादौ

ाप्यन्वयो न संभवति— संबन्धाभावे संबन्ध्यन्वयासंभवादित्येकघटसत्त्वे 'अत्र घटौ स्तः' वाक्यस्य प्रामाण्यं नोपपद्यते, यद्यप्येतद्देशस्थघटे देशान्तरस्थघटे च मिलित्वा घटत्वव्याप्यप-सिसंबन्धेनैकं द्वित्वमस्त्येव तथापि तद् द्वित्वं विधेयव्याप्यं नास्ति—एतद्देशवृत्तित्वाश्रयत्वरू-धेयाभाववति देशान्तरस्थघटेपि तस्य सत्त्वादिति न तद् द्वित्वं संबन्धघटकत्वेन ग्राह्यम् । घटसत्त्वदशायां तत्र विधेयव्याप्यं द्वित्वं नैवोपलब्धुं शक्यते येन तद्वत्त्वसंबन्धेनैकघटे ियान्वयः स्यादिति यावत् ।

एतद्देशे एकघटैकपटसत्त्वेपि 'अत्र घटौ स्तः' इति प्रयोगो न संभवतीत्याह—'अत्र स्तः' इत्यादिना । एतद्देशस्यैकघटादिव्यक्तिमात्राधिकरणत्वे=एतद्देशे एकघटैकपटसत्त्वे. पदेन द्वितीयघटव्यक्तिनिरासः, एतद्देशवर्तमानत्वादिरूपविधेयस्य=एतद्देशवृत्तित्वाश्रयत्वरूप-यस्य, तद्वदन्यावृत्तित्वरूपव्याप्तिमच्च=व्याप्यं च घटपटोभयनिष्ठमेव द्वित्वं न तु घटद्वयनिष्ठं ं घटद्वयनिष्ठद्वित्वस्यैतद्देशवृत्तित्वाश्रयत्वरूपविधेयाभाववति देशान्तरस्थघटेपि सत्त्वेन विधेय-प्यत्वाभावात् . तथा चैकघटैकपटसत्त्वदशायां घटादौ घटत्वव्याप्यपर्याप्तिरूपोद्देश्यतावच्छे-ताघटकसंबन्धावच्छिन्नतद्वत्त्वम्=घटत्वव्याप्यपर्याप्तिरूपो य उद्देश्यतावच्छेदकताघटकसंबन्ध-वच्छिन्नतद्वत्त्वम् अर्थात्— उद्देश्यतावच्छेदकघटत्वव्याप्यपर्याप्तिसंबन्धेन तद्वत्त्वम्=विधेयव्या-द्वित्ववत्त्वं बाधितमेव ( विधेयव्याप्यद्वित्वस्यात्र घटत्वपटत्वोभयव्याप्यपर्याप्तिसंबन्धेनैव ात् ) इति न तादृशवाक्यस्य='अत्र घटौ स्तः' इतिवाक्यस्य प्रामाण्यमित्यन्वयः । ात् 'अत्र घटौ स्तः' इत्यादि व्यासज्यवृत्तिधर्मावच्छिन्नोद्देश्यताकशाब्दबोधस्थले विधेय-व्यासज्यवृत्तिद्वित्ववत्त्वसंबन्धेन विधेयान्वयो भवतीति स्वीकृतम्, तथा चैतद्देशे एकघटै-सत्त्वदशायामेतद्देशवृत्तित्वाश्रयत्वरूपविधेयव्याप्यद्वित्ववत्त्वरूपो विधेयसंबन्धो घटपटोभय-नेवास्ति ( इति 'अत्र घटपटौ स्तः' इतिवाक्यस्य प्रामाण्यमुपपद्यते ) न त्वेकस्मिन् घटे. सहवर्तमानैकस्मिन्नेतद्घटे घटपटोभयगतविधेयव्याप्यद्वित्वस्य घटत्वपटत्वोभयव्याप्यपर्या-बन्धेन सत्त्वेपि घटत्वव्याप्यपर्याप्तिसंबन्धेनाऽसत्त्वात्, यच्च द्वित्वम् एतद्देशस्थे देशान्तरस्थे च त्वा घटद्वयेस्ति तस्यैतद्देशवृत्तित्वाश्रयत्वरूपविधेयव्याप्यत्वं नास्ति— एतद्देशवृत्तित्वाश्रयत्वरू-धेयाभाववति देशान्तरस्थघटेपि सत्त्वात्, तथा चात्र पटेन सह वर्तमानैकघटे घटत्वव्याप्य-प्तिसंबन्धेन विधेयव्याप्यद्वित्ववत्त्वस्य संसर्गभूतस्याऽभावात् तादृशसंसर्गेणैतद्देशवृत्तित्वाश्रय-रूपविधेयस्यान्वयोपि न संभवति ( संबन्धाभावे संबन्ध्यन्वयाभावस्यावश्यंभावात् ) इत्येक-कपटसत्त्वेपि 'अत्र घटौ स्तः' इतिप्रयोगस्यापत्तिर्नास्त्येवेत्यर्थः । घटपटोभयसत्त्वे 'अत्र स्तः' इतिवाक्यस्य प्रामाण्यनिरासार्थं तादृशधर्मवत्त्वम्=विधेयव्याप्यव्यासज्यवृत्तिद्वित्वा-

बाधितमिति न तादृशवाक्यस्य प्रामाण्यम् । अधिकरणस्य घटद्वयादि म
घटत्वादिव्याप्यं द्वित्वमेव तथेति घटत्वादिव्याप्यपर्याप्तिसंबन्धेन तद्वत्त्वं
वऽबाधितमिति तादृशवाक्यस्य प्रामाण्यं निर्वहति ।

केवलान्वयिविधेयकस्थले च द्वित्वत्वाद्यवच्छिन्नव्यापकत्वमेव संसर्गघ
केवलान्वियिनि तादृशव्यापकताया अक्षतत्वात्, न तु तत्तद्द्वित्वत्वावच्छि
पकत्वमिति न पूर्वोक्तदोषावकाशः ।

---

द्विवर्मवत्त्वम् उद्देश्यतावच्छेदकव्याप्यपर्याप्तिसंबन्धेनोक्तं तथा च 'अत्र घटौ स्तः' इत्य
वच्छेदकं घटत्वमेव घटत्वव्याप्यपर्याप्तिसंबन्धेन चात्र घटे विधेयव्याप्यं द्वित्वं नास्तीति
व्याप्यद्वित्ववत्त्वसंबन्धेन विधेयान्वयासंभवात् 'अत्र घटौ स्तः' इतिवाक्यस्य प्रामाण्यापत्ति
अन्यथा संबन्धान्तरेणात्र विधेयव्याप्यद्वित्ववत्त्वस्यैकघटेपि संभवात् प्रामाण्यापत्तिः स्या
यम् । यच्च घटद्वयनिष्ठं द्वित्वं घटत्वव्याप्यं तन्न विधेयव्याप्यम्— विधेयाभाववति देश
टेपि सत्त्वात्, यच्च घटपटोभयनिष्ठं द्वित्वं विधेयव्याप्यं तन्न घटत्वव्याप्यं घटत्वाभाववति
सत्त्वादितिसारः एतद्देशे घटद्वयसत्त्वे 'अत्र घटौ स्तः' इतिवाक्यस्य प्रामाण्यमुप
अधिकरणस्येति, पूर्वमेवेदं व्याख्यातम् । तथा=एतद्देशवृत्तित्वाश्रयत्वरूपविधेयव्याप्तिमत्
यमित्यर्थः ), तद्वत्त्वम्=विधेयव्याप्यद्वित्ववत्त्वम्, घटद्वये विधेयव्याप्यद्वित्ववत्त्वं घट
र्याप्तिसंबन्धेनास्त्येवेति तादृशद्वित्ववत्त्वसंबन्धेन विधेयान्वयोपपत्त्या 'अत्र घटौ स्त
वाक्यस्य प्रामाण्यमुपपद्यते इति सारः । एवकारो भिन्नक्रम इति 'घटत्वादिव्याप्यमेव द्वि
इत्यन्वयः ।

ननु 'घटौ प्रमेयौ' इत्यादिकेवलान्वयिविधेयकस्थले विधेयव्याप्यत्वं तद्वदन्यावृत्ति
तन्न संभवति—केवलान्वयिवदन्यस्याऽप्रसिद्धेरित्याशङ्क्याह— केवलान्वयीति, केवलान्
कस्थले विधेयव्याप्यत्वं संसर्गप्रविष्टं नास्ति किं तु द्वित्वत्वावच्छिन्नव्यापकत्वम्=द्वित्व
त्वनिरूपितं केवलान्वयिप्रमेयत्वादिरूपविधेयनिष्ठं व्यापकत्वमेव संसर्गघटकं ज्ञेयं केव
प्रमेयत्वादौ व्यापकत्वं चाक्षतमेवेत्यन्वयः, अर्थात्— 'घटौ प्रमेयौ' इत्यत्र स्वनिष्ठव्या
रूपकोद्देश्यतावच्छेदकाश्रयत्वसंबन्धेन विधेयस्य प्रमेयत्वस्यान्वयो भवतीति स्वीकृतम्,
यत्वं तन्निष्ठव्यापकतानिरूपकं यदुद्देश्यतावच्छेदकं प्रमेयत्वव्याप्यं द्वित्वं तदाश्रयत
घटद्वये एवास्तीति तादृशद्वित्ववत्त्वसंबन्धेन घटद्वये एवात्र प्रमेयत्वस्यान्वयः संभवति
घटौ प्रमेयौ' इतिवाक्यस्य घटद्वयसत्त्वे एव प्रामाण्यमुपपद्यते, संबन्धभूतं व्यापकता
द्वित्ववत्त्वं चोद्देश्यतावच्छेदकव्याप्यपर्याप्तिसंबन्धेन बोध्यं तेनैकघटैकपटदशायां यद् व्या
रूपकं घटपटोभयगतं द्वित्वं तत्तूद्देश्यतावच्छेदकघटत्वव्याप्यपर्याप्तिसंबन्धेन नास्ति तस्य
बोभयव्याप्यपर्याप्तिसंबन्धेन वर्तमानत्वात्, यच्च एतद्देशस्थे देशान्तरस्थे च घटद्वये
घटत्वव्याप्यपर्याप्तिसंबन्धेन द्वित्वमस्ति तत्तूक्तव्यापकताया निरूपकमेव नास्ति— अत्र

'घटावानयति चैत्रः' इत्यादौ चैत्रकर्तृकानयनकर्मत्वादिव्याप्यद्वित्वादिम-न्निष्ठनिरूपकताकाधेयत्वादिसंबन्धेन कर्मत्वादौ घटादेरन्वयो व्युत्पन्नस्तेन चैत्रादा-वेकघटादिव्यक्तिमात्राऽऽनयनकर्तृत्वे न तादृशप्रयोगः । द्वित्वादिमत्त्वं च प्रकार-तावच्छेदकीभूतघटत्वादिव्याप्यपर्याप्तिसंबन्धेन बोध्यं तेन चैत्रस्य पटादिसहित-कघटादिव्यक्त्यानयनकर्तृत्वेपि न तादृशप्रयोगः । एवमन्यत्राप्यूहनीयम् ।

---

ष्ठव्यापकताया एतद्देशवृत्तिपदार्थद्वयवृत्तिद्वित्वनिरूपितत्वादिति न देशान्तरस्थघटव्यासक्तद्वित्व-त्वसंबन्धेनैकघटे विधेयान्वयः संभवतीत्येकघटसत्त्वदशायाम् 'अत्र घटौ प्रमेयौ' इतिवाक्यस्य माण्यापत्तिर्नास्त्येवेत्यर्थः । नन्वत्र द्वित्वपदेन तत्तद्द्वित्वव्यक्तीनां ग्रहणे "एवम् १६३ पृ." यादिनोक्तोवाक्यभेदप्रसङ्गः स्यादित्याशङ्क्याह— न त्विति, द्वित्वपदेन सामान्यतो द्वित्व-वच्छिन्नस्यैव ग्रहणात् तत्तद्द्वित्वव्यक्तीनां चाऽग्रहणात् पूर्वोक्तस्य ( १६३ ) वाक्यभेदप्रसङ्ग-पदोषस्य प्रसक्तिर्नास्तीत्यर्थः ।

घटावानयतीति—'घटावानयति चैत्रः' इत्यत्र चैत्रकर्तृकानयनकर्मत्वमेव विधेयं विशेष्यं च तच्चा-यनकर्मत्वं घटाधेयमस्तीति तत्राधेयत्वं वर्तते तथा चात्र चैत्रकर्तृकानयनकर्मत्वव्याप्यं यद्द्वित्वं ता-द्द्वित्ववन्निष्ठनिरूपकताकाधेयत्वसंबन्धेन= तादृशद्वित्ववद् यद् घटद्वयं तन्निष्ठा याऽऽधारता तन्नि-पिता या कर्मत्वनिष्ठाऽऽधेयता तादृशाधेयतारूपसंबन्धेन चैत्रकर्तृकानयनकर्मतायां घटादेरन्वयो त्पन्न इति चैत्रकर्तृकैकघटानयनदशायाम् 'घटावानयति चैत्रः' इतिवाक्यस्य प्रामाण्यप्रसङ्गो स्ति—तादृशैकघटे संबन्धघटकस्य चैत्रकर्तृकानयनकर्मत्वव्याप्यद्वित्वस्याभावात् एकघटकर्मका-यनकर्मतानिष्ठाधेयतायां विवक्षितस्यानयनकर्मत्वव्याप्यद्वित्ववन्निष्ठाधारतानिरूपितत्वस्याभावाच्च र्मतायां संबन्धभूतस्यानयनकर्मत्वव्याप्यद्वित्ववन्निष्ठाधारतानिरूपिताधेयत्वस्याभावान्न तेन संब-न घटान्वयः संभवति, यच्चैतद्देशस्थे देशान्तरस्थे च घटद्वये मिलित्वा द्वित्वमस्ति तत्त्वाऽऽनय-कर्मत्वव्याप्यमेव नास्ति— आनयनकर्मत्वाभाववति देशान्तरस्थघटेपि सत्त्वात् । घटद्वयानयनद-ायां तु घटद्वयनिष्ठं द्वित्वमाऽऽनयनकर्मत्वव्याप्यमस्ति तादृशद्वित्ववद् यद् घटद्वयं तन्निष्ठाधारता-रूपिताधेयता चानयनकर्मतायां वर्तते इति तादृशाधेयतासंबन्धेन कर्मतायां घटद्वयस्यान्वयः भवतीति 'घटावानयति' इति प्रयोगस्य प्रामाण्यमुपपद्यते इत्यर्थः । तादृशप्रयोगः='घटा-नयति' इति प्रयोगः, भवतीति शेषः । किं चात्र द्वित्ववत्त्वं प्रकारतावच्छेदकीभूतघटत्वव्या-पर्याप्तिसंबन्धेन बोध्यं तथा च 'घटावानयति' इत्यत्र प्रकारतावच्छेदकं घटत्वमेवेति घटद्व-नयनदशायामेव घटत्वव्याप्यपर्याप्तिसंबन्धेन द्वित्ववत्त्वोपपत्त्या 'घटावानयति' इति प्रयोग पपद्यते, एकघटैकपटानयनदशायां प्रकारतावच्छेदकं घटत्वपटत्वोभयमेव न केवलघटत्वमिति टत्वव्याप्यपर्याप्तिसंबन्धेन द्वित्ववत्त्वाभावान्न 'घटावानयति' इति प्रयोगस्य प्रामाण्यापत्तिः तु 'घटपटावानयति' इति प्रयोगस्यैव प्रामाण्यं स्यादित्याह—द्वित्वादिमत्त्वं चेति । अत्र र्मतायां घटस्याऽन्वयाद् घटः प्रकारो घटत्वं प्रकारतावच्छेदकम् । अत्र— "एवमन्यत्रापि=

यत्रानेकवृत्तिधर्मो द्वित्वान्वयितावच्छेदकतया भासते तत्रोभयादिनैव पदार्थान्तरस्यान्वयः। यत्रैकमात्रवृत्तिस्तथा तत्रैकेनापि, व्युत्पत्तिभेदावलम्बना कार्यकारणभाववैचित्र्याच्च सर्वं समञ्जसमित्यपि वदन्ति।

अथ घटादिव्यक्तिभेदेनाऽऽनयनकर्मता भिन्नेति प्रतिसंदधानस्य पुंसः 'घ वानयति' इतिवाक्याच्छाब्दबोधानुपपत्तिः– तस्य कर्मतात्त्वावच्छेदेनाऽऽधेय

'घटानाऽऽनयति' इति बहुवचनान्तप्रयोगेऽपि चैत्रकर्मकानयनकर्मतादिव्याप्यबहुत्वादि निरूपकताकाधेयत्वादिसंबन्धेन कर्मतायां तादृशप्रकारता बोध्येत्यप्यूहनीयमित्यर्थः। कृष्णंभट्टाः।

मतान्तरमाह– यत्रेति, यथा 'अत्र घटौ स्तः' इत्यत्राऽनेकवृत्तिधर्मो घटत्वमेव द्वित्व तावच्छेदकमस्तीत्यत्रोभयेनैव=घटद्वयेनैव पदार्थान्तरस्य=एतद्देशवृत्तित्वाश्रयत्वस्यान्वयः स्वी इत्येकघटसत्त्वदशायाम् 'अत्र घटौ स्तः' इतिप्रयोगापत्तिर्नास्ति वर्तमानैकघटे एतद्देशवृ श्रयत्वस्यान्वयास्वीकारात्। एकघटैकपटसत्त्वदशायां च द्वित्वान्वयितावच्छेदकं घटत्वप यमेव न केवलघटत्वमिति न तत्रापि केवलघटेनैतद्देशवृत्तित्वाश्रयत्वान्वयोपपत्तिर्येन 'अ स्तः' इतिवाक्यस्य प्रामाण्यं स्यादित्यर्थः। यत्र चैकमात्रवृत्ति आकाशत्वादिकं तथा=द्वि यितावच्छेदकतया भासते तत्रैकेनाप्याकाशादिना पदार्थान्तरस्य एतद्देशवृत्तित्वाश्रयत्वस स्वीक्रियते यथा 'अत्राकाशौ स्तः' इत्यत्र, तथा चात्रैकेनैवाकाशेन पदार्थान्तरान्वयस्वी देकाकाशबोधकस्य 'अत्राकाशः' इतिवाक्यस्यैव प्रामाण्यं स्यात् न तु 'अत्राकाशौ' स्यापीत्याऽऽह– यत्रैकेति। व्युत्पत्तिभेदावलम्बनात्= उक्तनियमस्वीकारात्। कार्यकार वैचित्र्यादिति–अत्र "द्वित्वविशिष्टघटद्वयविशेष्यकैतद्देशवृत्तित्वादिरूपेतरपदार्थान्वयबुद्धि च्छिन्नं प्रति अत्रेत्यादिसप्तम्यन्तपदसमभिव्याहृतद्विवचनान्तघटपदज्ञानत्वेन कारणता, एव शावत्रेत्यत्र अत्रेतिसमभिव्याहृतद्विवचनान्ताकाशपदज्ञानत्वेन कारणता इति कार्यकारण चित्र्यात् सर्वं समञ्जसम्– एकघटसत्त्वे 'अत्र घटौ' इत्यापत्तिर्न, 'अत्राकाशौ' इ गोऽपि, सर्वं समञ्जसं सर्वकार्यनिर्वाहः, वदन्तीत्यनेन 'अत्राकाशौ स्तः' इति प्रयो भवति तन्निर्वाहाय व्युत्पत्त्यङ्गीकारकार्यकारणभावकल्पनमसमञ्जसमेवेत्यस्वरसः सूचि इति कृष्णंभट्टाः।

ननु 'घटावानयति चैत्रः' इत्यत्र यदेकस्यामानयनकर्मतायां घटद्वयस्यान्वय उ संभवति यतः– आनयनकर्मत्वं ह्येतद्देशसंयोगाश्रयत्वमेव तत्र संयोगस्य स्वाश्रयीभूतव्य भिन्नत्वात् ( नानात्वात् ) संयोगाश्रयत्वमपि घटादिव्यक्तिभेदेन भिन्नमेवेति प्राप्तं तथा च कर्तृकघटद्वयानयनदशायामपि तद्घटवृत्त्यानयनकर्मत्वे तस्यैवैकस्य घटस्यान्वयः संभ घटद्वयस्यापि– घटद्वये एकाया आनयनकर्मताया अभावात्– आश्रयीभूतव्यक्तिभेदेनान ताया भिन्नत्वादिति प्रतिसंदधानस्य=ज्ञानवतः पुंसः 'घटावानयति' इतिवाक्यात् शाब्द नुपपत्तिः= घटद्वयप्रकारकैककर्मताविशेष्यकशाब्दबोधस्यानुपपत्तिरित्याशङ्कते– अथेति,

संसर्गावच्छिन्नप्रतियोगिताकस्य द्वित्वाद्यवच्छिन्नघटाद्यभावस्य निश्चयसंभवात्, तस्य द्वित्वादिना तादृशसंसर्गकघटादिविशिष्टधीविरोधित्वादिति चेत्?, न-उभयत्वाद्यवच्छिन्नाभाववत्ताज्ञानमुभयत्वावच्छिन्ननिरूपिताधेयतासंसर्गावगाहिज्ञानमेवं प्रतिबध्नाति न तु केवलं विशेष्ये विशेषणमितिरीत्या जायमानमुभयत्वादिविशि-

[उ]पपादयति– तस्येति । तस्य=उक्तपुरुषस्य कर्मतात्वावच्छेदेन=कर्मतात्वावच्छिन्नकर्मतायां आधेयतासंसर्गावच्छिन्नप्रतियोगिताकस्य=आधेयतासंबन्धावच्छिन्ना प्रतियोगिता यस्यैवंभूतस्य द्वित्वा[द्य]वच्छिन्नघटाद्यभावस्य निश्चयसंभवात् अर्थात् पूर्वोक्ताधेयतासंबन्धेन घटद्वयाभावस्य ( विषय[ता]र्थे षष्ठ्यर्थः) निश्चयसंभवात्=निश्चयसत्त्वात् तस्य=उक्तनिश्चयस्य द्वित्वादिना तादृशसंसर्गकघटा[दि]विशिष्टधीविरोधित्वात्=उक्ताधेयतासंसर्गेण द्वित्वविशिष्टघटप्रकारककर्मताविशेष्यकधीविरोधि[त्वा]त् ( आधेयतासंबन्धेन द्वित्वविशिष्टघटद्वयस्यैककर्मतायामन्वयज्ञानविरोधित्वात् ) इत्यन्वयः । [य]दि घटद्वये आनयनकर्मत्वमेकमेव स्यात्तदा घटद्वयस्यैकानयनकर्मत्वेऽन्वयः स्यादपि न चैवमस्ति [घ]टव्यक्तिभेदेनानयनकर्मत्वस्य भिन्नत्वात् तथा चोक्ताधेयतासंसर्गेण कर्मतायां घटद्वयस्याभावनि[श्च]ये जाते तादृशनिश्चयस्याधेयतासंबन्धेन कर्मतायां घटद्वयान्वयज्ञानविरोधित्वात् तादृशनिश्चय[व]तः पुरुषस्य 'घटावानयति' इतिवाक्याद् द्वित्वविशिष्टघटप्रकारकैककर्मताविशेष्यकशाब्दबोधो [न] संभवतीतिभावः ।

परिहरति– नेति । उभयत्वावच्छिन्नाभाववत्ताज्ञानम्=उक्तस्वरूपमाधेयतासंबन्धेनैककर्मतायां [घ]टद्वयान्वयो न संभवतीत्याकारकं निश्चयात्मकं ज्ञानम् उभयत्वावच्छिन्ननिरूपिताधेयतासंसर्गाव[ग]गाहिज्ञानमेव=घटद्वयनिरूपिता यैकानयनकर्मतानिष्ठा एकाधेयता तादृशाधेयतासंबन्धेनानयन[क]र्मतायां घटद्वयान्वयज्ञानमेव प्रतिबध्नाति प्रथमे निश्चयात्मके प्रतिबन्धकज्ञाने आनयनकर्मता[नि]ष्ठाधेयतायां घटद्वयनिरूपितत्वाभावस्य विषयत्वेन द्वितीये प्रतिबध्यज्ञाने आनयनकर्मतानिष्ठा[धे]येतायां घटद्वयनिरूपितत्वस्य च विषयत्वेन परस्परं विरोधात्,– उक्तोभयत्वावच्छिन्नाभाव[व]त्ताज्ञानमपि केवलं विशेष्ये विशेषणमितिरीत्या जायमानमुभयत्वविशिष्टज्ञानं तु न प्रतिबध्नाति [प]रस्परं विरोधाभावात् ।

अयं भावः—प्रतिबन्धके आधेयतासंबन्धेनाऽऽनयनकर्मतायामुभयत्वावच्छिन्नघटद्वयाभावविषय[क]ज्ञाने उभयत्वं न केवलं घटविशेषणमात्रं किं त्वानयनकर्मतानिष्ठाधेयताया निरूपिका या घट[द्व]यनिष्ठाऽऽधारता तादृशाधारतावच्छेदकमप्यस्तीति एतादृशज्ञानेन यस्मिन् ज्ञाने उभयत्वं [सं]बन्धभूताधेयतानिरूपकाधारताया अवच्छेदकं स्यात् तादृशज्ञानस्यैव प्रतिबन्धः संभवति, तथा [च] उभयत्वावच्छिन्ननिरूपिताधेयतासंसर्गावगाहि ज्ञानं हि 'उभयत्वावच्छिन्नघटद्वयनिष्ठाधारता[नि]रूपिता याऽऽनयनकर्मतानिष्ठाऽऽधेयता तादृशाधेयतासंबन्धेन घटद्वयवती आनयनकर्मता' [इ]ति ज्ञानमेव अत्र च ज्ञाने उभयत्वं संबन्धभूताधेयतानिरूपकाधारताया अवच्छेदकत्वेन भासते [इ]त्युक्तोभयत्वावच्छिन्नाभाववत्ताज्ञानं ह्येतद् उभयत्वावच्छिन्ननिरूपिताधेयतासंसर्गावगाहिज्ञानमेव

**ष्ट्ज्ञानम्, अतो विशेषदर्शिनां तादृशवाक्याद् दोषायत्तमाधेयत्वांशे उभयत्वा च्छिन्ननिरूपितत्वावगाहिभ्रमात्मकज्ञानं न भवत्येव अपि तु तदंशे तद्नव प्रमात्मकं ज्ञानमिति । उभयत्वावच्छिन्ननिरूपिताधेयत्वं चोभयादिवृत्ताव धर्मे एव न तु प्रत्येकमात्रवृत्ताविति कर्मत्वांशे तादृशाधेयत्वावगाहिज्ञान भ्रमत्वमित्यवधेयम् ।**

---

प्रतिबध्नाति. न तु यस्मिन् ज्ञाने उभयत्वं केवलं विशेष्ये घटद्वये विशेषणमात्रं स्यात्ताद मपि-' घटावानयति चैत्रः ' इतिवाक्यजन्यशाब्दज्ञाने चोभयत्वं घटद्वयस्य विशेषणमात्रमे संबन्धभूताधेयतानिरूपकाधारताया अवच्छेदकत्वेनापि भासते ( येन प्रतिबध्यत्वं स्यात् ) वानयति' इतिवाक्येनानयनकर्मता घटद्वयनिष्ठा एकैवेति प्रतिपादनाभावात्, घटद्वयनि कर्मताया ऐक्ये आनयनकर्मतानिष्ठाधेयता एका स्यात्तदा तादृशैकाधेयतानिरूपिका घट एकैवाधारता स्यादिति तादृशाधारतावच्छेदकमुभयत्वं स्यादपि न चैवमस्ति व्यक्तिभेदेन कर्मताया भिन्नत्वात्, तस्मादुक्तप्रतिबन्धकज्ञानेन 'घटावानयति' इतिवाक्याज्जायमानस्य ( द्वित्व ) विशिष्टघटप्रकारकानयनकर्मताविशेष्यकज्ञानस्य प्रतिबन्धो न भवतीत्यर्थः । ष्टानयनकर्मतायामेव प्रत्येकघटस्य प्रकारतया भानस्वीकारात् प्रत्येकघटस्यापि द्वित्वविशि द्वित्वविशिष्टघटद्वयस्यैकानयनकर्मतायामन्वयास्वीकाराच्च ।

अत इति- यतो व्यक्तिभेदेनानयनकर्मता भिन्नास्त्यऽतस्तादृशानयनकर्मतानिष्ठा भिन्नास्ति न तु घटद्वयनिरूपिता ( घटद्वयनिष्ठाधारतानिरूपिता ) एकैवाधेयतास्तीति र्शिनां किं वाऽऽनयनकर्मत्वमुभयत्वावच्छिन्ननिरूपिताधेयत्वाभाववदिति विशेषनिश्चयवतां तादृशवाक्यात्=' घटावानयति ' इतिवाक्याद् आधेयत्वांशे दोषायत्तम्=दोषाधीनमुभ च्छिन्न( घटद्वय ) निरूपितत्वावगाहि भ्रमात्मकं ज्ञानं नैव भवति ( आधेयताया घटद्वयनि त्वाभावाद् घटद्वयनिरूपितत्वज्ञानं भ्रमात्मकमेव स्यात् ) अपि तु तदंशे=आधेयत्वांशे तद हि=उभयत्वावच्छिन्न ( घटद्वय ) निरूपितत्वानवगाहि प्रमात्मकमेव ज्ञानं भवतीत्यर्थः । त प्रतिबन्धकत्वेनाभिमतमपि ज्ञानमाऽऽधेयत्वांशे उभयत्वावच्छिन्ननिरूपितत्वाभावावगाह्येव 'घ नयति' इतिवाक्यजन्यमपि ज्ञानमाऽऽधेयत्वांशे उभयत्वावच्छिन्ननिरूपितत्वानवगाह्येवेति साम्येन विरोधाभावात् प्रतिबध्यप्रतिबन्धकभावो नैव संभवतीति यावत् । ननूक्ताधेयत्व भयत्वावच्छिन्ननिरूपितत्वावगाहिज्ञानस्य कथं भ्रमत्वमित्याशङ्क्याह- उभयत्वावच्छिन्ने खलु धर्मो घटद्वये एक एव व्यासज्यवृत्त्या वर्तेत तस्मिन् धर्मे याऽऽधेयता सैवोभयत्वा निरूपिता भवति यथा द्वित्वनिष्ठाऽऽधेयता द्वित्वं घटद्वये एकमेवेति द्वित्वनिष्ठाऽऽधेयता द्वयनिरूपिता=घटद्वयनिष्ठाधारतानिरूपिता भवति न तु प्रत्येकवृत्तिधर्मनिष्ठाऽऽधेयता उभ वच्छिन्ननिरूपिता भवति किं तु प्रत्येकमात्रनिरूपितैव भवति यथा ' नीलौ घटौ ' इत्यत्र त्वगुणस्य घटव्यक्तिभेदेन भिन्नत्वेन प्रत्येकवृत्तित्वाद् नीलत्वनिष्ठाधेयता न घटद्वयनि

**संख्याश्च प्रकृत्यर्थतावच्छेदकगताः क्वचित् प्रतीयन्ते यथा 'संपन्नौ व्रीहियवौ' इत्यादौ, एतत्तत्त्वं प्रागेवाभिहितम् ।**

**विरुद्धसंख्यावच्छिन्नवाचकशतादिपदोत्तरविभक्त्युपस्थाप्या संख्या प्रकृत्यर्थतावच्छेदकसंख्यायामेवान्वेति यथा–'शतमेकम्' 'द्वे शते' 'त्रीणि शतानि' इत्यत्र**

---

भवति किं तु प्रत्येकनिरूपितैव तथा 'घटावानयति' इत्यत्रापि घटव्यक्तिभेदेनानयनकर्मत्वस्य भिन्नत्वाद् आनयनकर्मत्वनिष्ठाधेयतापि प्रत्येकनिरूपिता भिन्नैव न तूभयत्वावच्छिन्न (घटद्वय) निरूपिता भवतीत्यानयनकर्मत्वे तादृशाधेयतावगाहिज्ञानस्य=उभयत्वावच्छिन्ननिरूपिताधेयता वर्तते इत्यवगाहिज्ञानस्य भ्रमत्वमेवेत्यर्थः ।

'अत्र घटौ स्तः' 'घटावानयति'इत्यादौ प्रकृत्यर्थघटादिगतैव संख्या प्रतीयते, क्वचिच्च प्रकृत्यर्थे संख्यान्वयबाधे सति प्रकृत्यर्थतावच्छेदकगतैवसंख्या प्रतीयते यथा 'संपन्नौ व्रीहियवौ' इत्यत्र संपन्नानेकव्रीहियवेषु द्विवचनार्थद्वित्वसंख्यान्वयस्य बाधात् प्रकृत्यर्थतावच्छेदकीभूतयोर्व्रीहित्वयवत्वयोरन्वयो भवति– व्रीहित्वयवत्वजातिमन्तौ संपन्नावित्यर्थ इत्याशयेनाह– संख्याचेति । एतत्तत्त्वं=प्रकृत्यर्थतावच्छेदके संख्यान्वयतत्त्वं प्रागेव'संपन्नो व्रीहिः' (पृ.७) इत्यत्र प्रदर्शितम् । तथा चात्रापि स्वाश्रयप्रकृत्यर्थतावच्छेदकवत्त्वसंबन्धेन द्वित्वस्य प्रकृत्यर्थभूतव्रीहियवयोरप्यन्वयः संभवतीत्यादिकं तत्रैव द्रष्टव्यम् ।

क्वचिच्च प्रकृत्यर्थतावच्छेदकसंख्यायामेव विभक्त्यर्थसंख्या अन्वेतीत्याह– विरुद्धेति, शतादिपदोत्तरविभक्त्युपस्थाप्या या संख्या तद्विरुद्धसंख्यावच्छिन्नवाचकं यच्छतादिपदं तदुत्तरवर्तमानविभक्त्युपस्थाप्येत्यन्वयः । यथा– 'शतमेकम्'इत्यत्र शतपदं शतत्वसंख्यावच्छिन्नवाचकं शतपदोत्तरप्राप्तप्रथमैकवचनं चैकत्ववाचकम्. एकत्वसंख्यायाः शतत्वसंख्यायाश्च परस्परं विरोधाच्छतत्वसंख्यावच्छिन्ने एकत्वसंख्याऽन्वयासंभवात् प्रकृत्यर्थतावच्छेदकीभूतशतत्वसंख्यायां विभक्त्यर्थैकत्वस्यान्वयो भवति– अत्र शतत्वस्यैकत्वात् 'एकत्वविशिष्टं शतत्वम्'इत्यर्थः । 'एकम्' इतिपदं चोक्तैकत्वस्यानुवादकं बोध्यम्. एकत्वस्य स्पष्टप्रतिपत्त्यर्थं चैकपदप्रयोगः। यत्र शतत्वव्यक्ती द्वे भवतस्तत्र द्विवचनं भवति यथा– 'द्वे शते' इति 'द्वित्वविशिष्टं शतत्वम्'इत्यर्थः । एवम् 'त्रीणि शतानि' इत्यादि।यद्यप्यत्र शतत्वसंख्यापि बहुत्वरूपा बहुवचनार्थभूतापि बहुत्वसंख्येति तयोर्बहुत्वत्वेन रूपेण विरोधो नास्ति तथापि त्रिशब्दसामानाधिकरण्यादत्र शतशब्दोत्तरबहुवचनं त्रित्वसंख्योपस्थापकमेव त्रित्वसंख्यायाः शतत्वसंख्यायाश्च परस्परं विरोधाच्छतत्वसंख्यावच्छिने त्रित्वसंख्यान्वयासंभवात् प्रकृत्यर्थतावच्छेदकशतत्वे एव शतशब्दोत्तरबहुवचनार्थत्रित्वसंख्याया अन्वयः– त्रित्वविशिष्टं शतत्वमिति । 'त्रिशतं गावः' इत्यादौ तु एकत्वविशिष्टशतत्वत्रिकावच्छिन्ना गावः' इतिवाक्यार्थः । शतादिशब्दानां शक्तिस्तु शतत्वादिसंख्यावच्छिन्ने संख्येये एव । न च शतत्वादिसंख्यायामेकत्वद्वित्वादिसंख्यान्वयासंभवः– गुणे गुणानङ्गीकारादिति वाच्यम्, अत्रैकत्वद्वित्वादीनामपेक्षाबुद्धिविषयत्वरूपत्वेन शतत्वादिसंख्यायामन्वये विरोधा-

शतत्वादावेकत्वद्वित्वबहुत्वानामन्वयः । अत एव चैकशतद्विशततात्पर्येण 'शतानि' इति प्रयोगः— तत्र प्रकृत्यर्थस्य शतस्य बहुत्वाद्यन्वययोग्यते प्रकृत्यर्थतावच्छेदकशतत्वांशे बहुत्वाद्यन्वये एव बहुवचनस्य साकाङ्क्षत्वात् च योग्यताविरहात् ।

न चैकशतेपि नानापुरुषीयापेक्षाबुद्धिजन्यनानाशतत्वसंभवादेकशतनिष्ठशतत्वे बहुत्वान्वययोग्यताऽक्षतैवेति वाच्यम्, परस्परसमानाधिकरणद्वयाऽवृत्तिबहुत्वस्य शतादिपदोत्तरबहुवचनार्थत्वात् तादृशबहुत्वस्य चैकशतादिवृत्तिनानाशतत्व

भावात् । एकादिपदं चानुवादकमपि सन्न व्यर्थम्—"संभेदे नान्यतरवैयर्थ्यम्" इति न्याय विभावनीयम् ।

अत एव=विरुद्धसंख्यावच्छिन्नवाचकशतादिपदोत्तरविभक्त्युपस्थाप्या च संख्या प्र तावच्छेदकसंख्यायामेवान्वेतीति नियमस्वीकारादेव । तत्र=एकशततात्पर्येण द्विशततात्पर्ये कृते 'शतानि' इति प्रयोगे । तत्र=शतत्वे । एकशततात्पर्येण वा द्विशततात्पर्येण वा ' इतिप्रयोगकाले प्रकृत्यर्थे शतत्वसंख्याविशिष्टे बहुत्वमस्तीति बहुवचनार्थबहुत्वान्वययोग्यता यद्यपि तथापि तत्रान्वयस्वीकारो नास्ति यत्र च प्रकृत्यर्थतावच्छेदकीभूतशतत्वे शतप बहुवचनार्थबहुत्वस्यान्वय इष्टस्तत्र शतत्वे तदानीं बहुत्वाऽभावाद बहुत्वान्वययोग्यता ना एकशतविषयकतात्पर्ये सति शतत्वव्यक्तेरेकत्वविशिष्टत्वाद् द्विशतविषयकतात्पर्ये च सति द्वित्व ष्टत्वादित्यर्थः । एकशतद्विशततात्पर्येण 'शतानि' इतिप्रयोगो न भवतीतिविनिगमनायाः देव विरुद्धसंख्यावच्छिन्नवाचकेत्याद्युक्तनियमः स्वीक्रियते अन्यथा बहुवचनार्थबहुत्वस्य शतत्वसं च्छिन्नप्रकृत्यर्थेऽन्वयसंभवे एकशतद्विशततात्पर्येणापि 'शतानि' इतिप्रयोगः स्याद् न चैतदि

ननु शतत्वादिसंख्या ह्यपेक्षाबुद्धिजन्यैव भवति अपेक्षाबुद्धिश्च पुरुषभेदेन भिन्नेत्येकस्मि शते देवदत्तयज्ञदत्तादिनानापुरुषीयापेक्षाबुद्धिभिर्नानाशतत्वोत्पत्त्या एकशतद्विशततात्पर्यकाले शतादौ नानाशतत्वसंभवात् तादृशनानाशतत्वेषु बहुत्वसत्त्वेन बहुवचनार्थबहुत्वान्वययोग्यता संभवाद् एकशतद्विशततात्पर्यकालेपि 'शतानि' इति प्रयोगः कथं न स्यादित्याशङ्कते चेति । परिहारमाह—परस्परेति, नानापुरुषीयापेक्षाबुद्धिजन्यनानाशतत्वानि परस्परं समान करणान्येव भवन्ति— एकस्मिन्नेव शते वर्तमानत्वात्, शतादिपदोत्तरबहुवचनार्थभूतबहुत्व परस्परसमानाधिकरणद्वयाऽवृत्तिबहुत्वमेव भवति यथा बहुशततात्पर्ये सति 'शतानि', शतत्रये पृथक् पृथक शते शतत्वं वर्तते इत्येतादृशशतत्वानि परस्परं व्यधिकरणान्येवेति तत्र त्रयगतशतत्वत्रये यद् बहुत्वं तत् परस्परसमानाधिकरणम्= एतत्तृतीयशतत्वसमानाधि यच्छतत्वद्वयं तद्वृत्तिन भवति तादृशबहुत्वस्य परस्पराऽसमानाधिकरणशतत्वेषु वर्तमान एतादृशं परस्पराऽसमानाधिकरणशतत्वेषु वर्तमानमेव बहुत्वं च शतपदोत्तरबहुवचनार्थ इति बहुशततात्पर्ये सत्येव शतत्वेष्वन्वयः संभवति न त्वेकशतद्विशततात्पर्ये सत्यपि— तादृशबहुत्व

बाधात् । अथ वा तत्रापि बहुत्वमेव बहुवचनार्थः, परस्परसमानाधिकरणद्वयावृत्तिपर्याप्तिरेवाकाङ्क्षानिरूपकः संबन्धः ।

यत्तु 'द्वे शते' 'त्रीणि शतानि' इत्यादौ संख्यैव शतादिशब्दार्थो न तु संख्येयम्, संख्येयस्य तदर्थत्वे "विंशत्याद्याः सदैकत्वे सर्वाः संख्येयसंख्ययोः" इत्य-

रस्पराऽसमानाधिकरणशतत्वेषु वर्तमानस्य बहुवचनार्थभूतबहुत्वस्य एकशतवृत्त्यपेक्षाबुद्धिजन्यो-नानाशतत्वेषु बाधात्, तस्मादेकशतद्विशततात्पर्येण 'शतानि' इति प्रयोगापत्तिर्नास्त्येवे-र्थः । एकस्मिन्नेव शते यदा नानापुरुषीयापेक्षाबुद्धिभिर्नानाशतत्वान्युत्पद्यन्ते तत्र तादृशनाना-तत्वेषु वर्तमानं बहुत्वं परस्परसमानाधिकरणम्=बहुत्वाश्रयीभूततृतीयशतत्वसमानाधिकरणं च्छतत्वद्वयं तद्वृत्त्येव भवति तत्र बहुत्वाश्रयीभूतसकलशतत्वानामेकस्मिन्नेव शते वर्तमानत्वेन मानाधिकरणत्वात्, न चैतादृशं परस्परसमानाधिकरणनानाशतत्वेषु वर्तमानं बहुत्वं बहुवच-र्थो भवति येनैकशतगतनानाशतत्वान्याश्रित्यैकशतद्विशततात्पर्येणापि 'शतानि' इति योगः स्यादित्यर्थः ।

पक्षान्तरमाह—अथ वेति । यथान्यत्र सर्वत्र बहुत्वमेव बहुवचनार्थस्तथा तत्रापि='शतानि' इत्य-पि परस्परसमानाधिकरणद्वयावृत्तित्वविशेषणरहितमेव बहुत्वं बहुवचनार्थं इत्यत्र बहुत्वस्य पर-रसमानाधिकरणद्वयावृत्तिपर्याप्तिः संबन्ध इत्युच्यते तथा च बहुशततात्पर्ये सति 'शतानि' तिप्रयोगो भवति— तत्र बहुत्वाश्रयीभूतशतत्वत्रयस्य पृथक् पृथक् शते वर्तमानत्वेन समानाधि-रणत्वाभावात् । परस्परसमानाधिकरणम्=तृतीयशतत्वसमानाधिकरणं यच्छतत्वद्वयं तदऽवृत्तिर्यो हुत्वपर्याप्तिस्तादृशपर्याप्तिसंबन्धेन बहुवचनार्थबहुत्वस्य शतत्वत्रये वर्तमानत्वात् । बहुत्वपर्याप्ति-हुशतत्वेष्वेव संभवादित्यर्थः । एकशतद्विशतविषयकतात्पर्ये च सत्येकशतगतनानापुरुषीयापे-बुद्धिजन्यनानाशतत्वेषु बहुत्वस्य परस्परसमानाधिकरणद्वयावृत्तिपर्याप्तिसंबन्धेन वृत्तित्वं न भवति यतः— एकशतगतनानापुरुषीयापेक्षाबुद्धिजन्यनानाशतत्वानामेकशतगतत्वेन समानाधि-रणत्वात् तेषु वर्तमानस्य बहुत्वस्य बहुत्वाश्रयीभूततृतीयशतत्वसमानाधिकरणशतत्वद्वयेपि र्याप्तिरस्त्येवेति तत्र बहुत्वं परस्परसमानाधिकरणद्वय ( शतत्वद्वय ) वृत्तिपर्याप्तिसंबन्धेनैव र्तते न चैतादृशपर्याप्तिसंबन्धेन बहुत्वमिष्टमिति नैकशतद्विशतविषयकतात्पर्येण 'शतानि' ति प्रयोगापत्तिः ।

परिहाराय मतान्तरमनुवदति— यत्त्विति, 'शतानि' इत्यत्र शतादिशब्दानां संख्येयवाचक-शतत्वादेः संख्येयपदार्थतावच्छेदकत्वं प्राप्तं तत्र शतत्वादौ शतपदोत्तरबहुवचनार्थबहुत्वा-न्वये च "प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वम्" इतिनियमस्य परित्यागः स्यादेव— कृत्यर्थभूतसंख्येये समन्वयाभावात् संख्येयार्थावच्छेदकीभूते शतत्वादावन्वयात्, तथा शतादि-ब्दानां संख्येयवाचकत्वे "विंशत्याद्याः" इत्यनुशासनेनैकवचनान्तत्वं प्रतिपाद्यते 'द्वे शते' त्रीणि शतानि' इत्यत्र तु द्विवचनान्तो बहुवचनान्तश्च प्रयोगोस्तीत्युक्तानुशासनविरोधोपि संख्ये-

नुशासनविरोधाद् द्विवचनादिसाधुतानुपपत्तेः 'गवां शतानि' इत्यादौ षष्ठ्यर्था यानुपपत्तेश्च। न चाभेदः षष्ठ्यर्थः– तथा सति 'ब्राह्मणा दश' इत्यत्र 'ब्राह्मण दश' इत्यपि स्यात् । अस्माकं चादशतः संख्याः संख्येये वर्तन्ते. अतः संख्याने संख्येये च इत्यनुशासनाद् दशादिशब्दानां शतादिशब्दवत् सं

यवाचकत्वेऽत्र प्राप्तः, उक्तानुशासनविरोधादेव शतादिशब्दस्य संख्येयवाचकत्वे 'द्वे 'त्रीणि शतानि' इत्यादौ द्विवचनादेः साधुत्वानुपपत्तिरपि प्राप्ता, तथा शतादिशब्दानां यवाचकत्वे 'गवां शतानि' इत्यादौ गोपदोत्तरषष्ठ्यर्थस्यान्वयानुपपत्तिरप्यस्ति– षष्ठ भेदसंबन्धस्य कचिदप्यन्वयो न संभवति– यथा 'घटस्य नीलः' इत्यत्र 'घटवृत्तिर्नीलः बोधो जायते तथात्र 'गोवृत्तीनि शतसंख्येयानि' इत्यपि बोधो नोपपद्यते तस्मात् श शब्दा न संख्येयवाचकाः किं तु संख्यावाचका एवेति स्वीकार्यम्, संख्यावाचकत्वे तु दिपदोत्तरबहुवचनाद्यर्थबहुत्वादेः प्रकृत्यर्थशतादिसंख्यायामेवान्वयात् "प्रत्ययानां प्रकृत्य तस्वार्थबोधकत्वम्" इति नियमरक्षापि भवति, तथा संख्यावाचकत्वे "संख्यायां स्तः" इत्यनेन द्विवचनान्तत्वबहुवचनान्तत्वयोरपि बोधनात् 'द्वे शते' 'त्रीणि श इत्यत्रानुशासनविरोधोपि नास्तीति द्विवचनादिसाधुतानुपपत्तिरपि नास्ति, 'गवां शतानि षष्ठ्यर्थान्वयानुपपत्तिरपि नास्ति 'घटस्य नीलः' इत्यत्र 'घटवृत्तिर्नीलः' इतिबोध 'गोवृत्तीनि बहूनि शतत्वानि' इतिबोध उपपद्यते संख्यायाः संख्येयपदार्थवृत्तित्वे मावादित्यर्थः । ननु 'गवां शतानि' इत्यत्राभेद एव षष्ठ्यर्थस्तथा च शतशब्दस्य सं त्वे 'गवाभिन्नानि शतसंख्येयानि' इतिवाक्यार्थबोधो भविष्यतीत्याशङ्क्याह– न परिहारमाह– तथा सतीति, यद्यभेदोपि षष्ठ्यर्थः स्यात्तदा 'ब्रह्मणा दश' ( दशसं ब्राह्मणाः ) इत्यस्य स्थाने 'ब्रह्मणानां दश' इत्यपि प्रयोगः स्यात्–अभेदबोधसंभवात्, 'ब्राह्मणानां दश' इतिप्रयोगो भवतीति नाऽभेदः षष्ठ्यर्थस्तथा च शतादिशब्दानां सं चकत्वे 'गवां शतानि' इत्यादौ षष्ठ्यर्थान्वयानुपपत्तिस्तदवस्थेति संख्यैव शतादिशब्दार्थ इ

स्वमतमाह– अस्माकं चेति, "संख्येये ह्यादश त्रिषु" इत्यनुशासनाद् आदशतः=ए रभ्याष्टादशपर्यन्ताः संख्यावाचकाः शब्दाः संख्येयवाचका एव यथा 'एकः पटो द्वौ प ब्राह्मणा अष्टादश गावः' इति तथा च दशशब्दस्य संख्येयपरत्वेनाऽभेदबोधनार्थम् ' दश' इत्येव प्रयोगो भवति न तु 'ब्राह्मणानां दश' इत्यपि–अभेदबोधासंभवात् । परम्=अष्टादशसंख्यातः परं एकोनविंशत्यादिसंख्यावाचकाः शब्दाः संख्यावाचकाः सं चकाश्च भवंति तत्र संख्येयवाचका यथा– 'एकोनविंशतिः पटाः' 'शतं गावः' इ संख्यावाचका यथा 'पटानामेकोनविंशतिः' 'गवां शतम्' इत्यादि, तथा च शता वत्=यथा शतादिशब्दानाम् "विंशत्याद्याः" इत्यनुशासनेन संख्यानार्थकत्वम्=संख्या त्वमस्ति तथा दशादिशब्दानाम्=एकमारभ्याष्टादशपर्यन्तसंख्यावाचकानां दशादिश

र्थकत्वाभावात् । दशत्वादिसंख्यायाः पदार्थतावच्छेदकत्वेन तत्र षष्ठ्यर्थसंबन्धान्वयासंभवेन न तथाप्रयोग इति ।

तदसत्—' गवां शतानि' इत्यादौ संख्यायाः प्राधान्येन शतादिशब्दवाच्यत्वे ' गवां शतं दद्यात्' इत्यादौ शतादिपदार्थस्य संख्याया दानादिकर्मत्वान्वयायोग्यतया प्रामाण्यानुपपत्तिः, ' गवां शतं शुक्लम्' इत्यादौ संख्यायां शुक्लाद्यभेदान्वययोग्यताविरहात् तदनुपपत्तिश्च, तस्माद् दशादिशब्दा इव विंशतिशतसहस्रादिशब्दा अपि संख्यावच्छिन्नवाचका एव न तु धर्मिविशेषणतानापन्नसंख्यावाचकाः ।

---

संख्येये ह्यादश त्रिषु " इत्यनुशासनात्संख्येयमात्रवाचकत्वेन संख्यानार्थकत्वाभावात्=संख्यावाचकत्वमेव नास्ति येन 'ब्राह्मणानां विंशतिः' इतिवत् 'ब्राह्मणानां दश' इत्यपि प्रयोगः स्यात् । दशादिशब्दानां संख्यावाचकत्वे "पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेन " इति व्युत्पत्तेर्विरोधमप्याह— दशत्वादीति, दशादिशब्दानां संख्यावाचकत्वे संख्यायाश्च पदार्थतावच्छेदकत्वेन पदार्थत्वाभावात् तत्र षष्ठ्यर्थस्य वृत्तित्वस्य दशत्वसंख्यायामन्वयो न संभवतीतिहेतोः न तथा=' ब्राह्मणानां दश' इति प्रयोगो न भवति. ब्राह्मणानां विंशतिः' इत्यादौ तु विंशत्याद्याः " इत्यनुशासनबलाद् विवशम् " पदार्थः पदार्थेनान्वेति " इतिव्युत्पत्तेः संकोचं कृत्वा पदार्थतावच्छेदकीभूतविंशतित्वादिसंख्यायां षष्ठ्यर्थान्वयः स्वीक्रियते यथा— ' ब्राह्मणवृत्ति विंशतित्वम्' इति, एवमेव 'गवां शतानि' इत्यस्यापि 'गोवृत्तीनि शतत्वानि' इत्येवार्थस्तथा च सिद्धम्— 'द्वे शते' 'त्रीणि शतानि' इत्यादौ संख्यैव शतादिशब्दार्थ इत्यर्थः ।

परिहरति— तदसदिति, यदुक्तम् ' द्वे शते ' ' त्रीणि शतानि ' इत्यादौ संख्यैव शतादिशब्दार्थो न तु संख्येयमिति तन्न युक्तं एवं हि ' गवां शतानि ' इत्यत्रापि शतशब्दवाच्या प्राधान्येन संख्यैव स्यात् तथा च ' गवां शतं दद्यात् ' इत्यत्रापि शतशब्दवाच्या संख्यैव स्यात् संख्यायाश्च दानकर्मत्वं न संभवतीति शतसंख्याया दानकर्मत्वेऽन्वययोग्यताया असंभवाद् असंबद्धार्थबोधकत्वात् ' गवां शतं दद्यात् ' इत्यस्याप्रामाण्यं स्यात्, एवम् ' गवां शतं शुक्लम् ' इत्यत्रापि शतशब्दवाच्या संख्यैव स्यात् संख्यायाश्च शुक्लगुणवत्त्वं शुक्लत्वगुणेनाभेदो वा न संभवतीति ' गवां शतं शुक्लम् ' इति वाक्यस्यापि तदनुपपत्तिः=प्रामाण्यानुपपत्तिः, तस्माद् यथा दशादिशब्दाः संख्यावच्छिन्नसंख्येयवाचकास्तथा शतादिशब्दा अपि संख्यावच्छिन्नसंख्येयवाचका एव न तु प्राधान्येन संख्यावाचकास्तथा च ' गवां शतं दद्यात् ' इत्यत्र शतशब्दस्य संख्येयवाचकत्वे प्राप्ते संख्येयस्य च दानकर्मत्वयोग्यत्वान्न प्रामाण्यानुपपत्तिः, तथा ' गवां शतं शुक्लम् ' इत्यत्रापि शतशब्दस्य संख्येयवाचकत्वे प्राप्ते संख्येयस्य च शुक्लत्वगुणेनाऽन्वययोग्यत्वेन शुक्लपदार्थेनाभेदान्वययोग्यत्वान्न प्रामाण्यानुपपत्तिरित्यर्थः । धर्मिविशेषणतानापन्नेति— यथा घटादिशब्दानां घटाद्यवच्छेदकीभूतघटत्वादिवाचकत्वमपि भवति— घटादिवाचकत्वाद्

स्वार्थैकदेशेपि संख्यायां स्वप्रकृतिकविभक्त्यर्थसंख्यान्वयसाकाङ्क्षतया प्रकृतिकषष्ठ्यर्थसंबन्धान्वयसाकाङ्क्षतया च तेषां संख्यानार्थकताप्रवा तु दशादिशब्दानां तथात्वं दशादिब्राह्मणतात्पर्येण 'ब्राह्मणानां दश' इत्य प्रयोगविरहादिति तेषां संख्येयमात्रवाचिताप्रवाद इति, "विंशत्याद्याः सं

---

घटादिपदार्थानां घटत्वादिविशिष्टत्वात् तथा विंशत्यादिसंख्याशब्दानामपि संख्याविशि यवाचकत्वमेवेति संख्येयरूपधर्मिविशेषणतापन्नसंख्यावाचकत्वमपि प्राप्तमेवेत्येव युक्तं धर्मिविशेषणताऽनापन्नसंख्यावाचकत्वम्=केवलं संख्यामात्रवाचकत्वमित्यर्थः ।

ननु यदि 'गवां शतानि' 'गवां शतं दद्यात्'इत्यादौ शतादिशब्दानां संख्येयवा न च संख्यावाचकत्वं तदा सर्वत्र संख्येयवाचकत्वमेव स्यात्तथा च, शतादिशब्दानां चकत्वं कथमुच्यते जनैः तथा दशादिशब्दानां केवलं संख्येयमात्रवाचकत्वं न संख्या मित्यपि कथमुच्यते? इत्याशङ्क्य शतादिशब्दानां संख्यावाचकत्वप्रवादमुपपादयति— स्व दशादिशब्दानां संख्येयमात्रवाचकत्वप्रवादं चोपपादयति—दशादिब्राह्मणेति । 'एकं इत्यत्र स्वार्थैकदेशे=स्वार्थैकदेशभूतायां संख्यायाम्=शतत्वसंख्यायां स्वप्रकृतिकविभक्त्य न्वयसाकाङ्क्षतया= स्वं शतशब्दस्तत्प्रकृतिकविभक्तिः शतपदोत्तरप्रथमाविभक्तिस्तदर्थ संख्याया अन्वये साकाङ्क्षतया ( एकं शतत्वमितिबोधात् ) तेषाम्=शतादिशब्दानां नार्थकताप्रवादः=संख्यावाचकत्वप्रवादोस्ति—शतादिपदोत्तरविभक्त्यर्थभूतसंख्यायाः श ख्यायामन्वयस्वीकारादित्यर्थ एतच्च पूर्वमेव 'विरुद्धसंख्यावच्छिन्नवाचक' ( पृ. १७१ ) नोक्तम्, तथा स्वार्थैकदेशसंख्यायां शतत्वादौ अन्यप्रकृतिकषष्ठ्यर्थसंबन्धान्वयसाका 'गवां शतम्' इत्यत्रान्यप्रकृतिका= गोपदप्रकृतिका या गवामिति गोपदोत्तरषष्ठी यो वृत्तित्वसंबन्धस्तस्यान्वये साकाङ्क्षतया च तेषां शतादिशब्दानां संख्यानार्थ दोस्ति— 'गवां शतम्' इत्यत्र गोवृत्तिशतत्वम्=गोवृत्तित्वाश्रयतावच्छतत्वमितिबो षष्ठ्यर्थवृत्तित्वस्य शतत्वादावन्वयस्वीकारात् संख्यावाचकत्वप्रवाद एव, संख्येयवा युक्तमेव 'गवां शतं दद्यात्' इत्यादिप्रयोगात् । दशादिशब्दानां च तथात्वम्=स्वप्र भक्त्यर्थसंख्यान्वयसाकाङ्क्षत्वं तथाऽन्यप्रकृतिकषष्ठ्यर्थसंबन्धान्वयसाकाङ्क्षत्वं च ति दशपदोत्तरविभक्त्यर्थसंख्यायास्तथा ब्रह्मणपदाद्युत्तरषष्ठ्यर्थवृत्तित्वस्य दशत्वसंख्या संभवान्न दशादिशब्दानां संख्यानार्थकताप्रवाद इत्यर्थः । दशादिशब्दानां संख्येयमा प्रवादकारणमाह— दशादिब्राह्मणेति, यदि दशादिशब्दानामपि संख्यावाचकत्वं 'ब्राह्मणानां शतम्' इतिवत् 'ब्राह्मणानां दश' इत्यपि प्रयोगः स्याद् न चैवं भवतीति न दशादिशब्दानां संख्यावाचकत्वं किं तु 'ब्राह्मणा दश' इत्येव प्रयोगो तेषाम्=दशादिशब्दानां संख्येयमात्रवाचिताप्रवादोस्ति, वस्तुतस्तु सर्वेषामेव दशा

सर्वाः संख्येयसंख्ययोः । संख्यार्थे द्विबहुत्वे स्तः '' इत्यनुशासनमप्युक्तार्थे तात्पर्यग्राहकम् ।

एकद्विबहुशब्दोत्तरैकवचनद्विवचनबहुवचनानि च न संख्याबोधकानि— उद्देश्यतावच्छेदकविधेययोरैक्येनैकत्वाद्यन्वये आकाङ्क्षाविरहादिति तदुत्तरं प्रथमाविभक्तिः प्रयोगसाधुतामात्राय ।

नित्यबहुवचनान्ताऽबादिशब्दपरं प्रथमाबहुवचनमपि क्वचिन्निरर्थकमेव— यत्रै-

---

तादिशब्दानां च संख्यावच्छिन्नवाचकत्वमेवास्ति तत्र 'ब्राह्मणा दश' इत्यादौ दशादिशब्दोत्तरविभक्त्यर्थसंख्यायाः प्रकृत्यर्थे दशादावेवान्वयो भवति न तु दशत्वादावित्येव दशादिशब्दानां संख्येयवाचकत्वम्, विभक्त्यर्थसंख्याया दशत्वादावन्वयासंभवादेव 'ब्राह्मणानां दश' इति प्रयोगो भवति, शतत्वादावन्वयसंभवादेव 'ब्राह्मणानां शतम्' इतिप्रयोगस्तु भवति । शतादिशब्दोत्तरविभक्त्यर्थसंख्यायास्तु प्रकृत्यर्थतावच्छेदकशतत्वादावप्यन्वयो भवतीत्येव शतादिशब्दानां संख्यानार्थकता वस्तुतस्तु संख्यावच्छिन्नबोधकत्वमेव, तत्रापि यत्र शतादिशब्दोत्तरविभक्त्यर्थसंख्यायाः शतत्वादिसंख्यायामन्वयस्तत्र वचनत्रयमेव भवति यथा 'गवां शतं शते शतानि' , यत्र च प्रकृत्यर्थे एवान्वयस्तत्रैकवचनमेव यथा 'शतं गावः' इति विवेकः । अत्रामरकोशं प्रमाणयति— विंशत्याद्येति । उक्तार्थे=विंशत्यादिशब्दोत्तरविभक्त्यर्थसंख्यायाः प्रकृत्यर्थे विंशत्यादावन्वये विंशत्यादिशब्दानामेकवचनान्तत्वं प्रकृत्यर्थतावच्छेदके विंशतित्वादावन्वये च वचनत्रयान्तत्वमेव यथायोग्यं भवतीत्यमरवाक्यस्यार्थ एतदेवोक्तम्— संख्यार्थे इति । अत्र उक्तार्थे तात्पर्यग्राहकमिति— विंशत्याद्याः संख्याः ( संख्याशब्दाः ) संख्येयसंख्ययोर्वाचका इत्यर्थः किं तु संख्येयसंख्यान्यतरविशेष्यकैकत्वादिरूपविभक्त्यर्थप्रकारकान्वयबोधपरा इत्येवानुशासनार्थः— 'शतं गावः' 'गवां शतम्' इत्युभयविधप्रयोगदर्शनात्, संख्येयमात्रविशेष्यकैकत्वादिप्रकारकबोधपराः शतादिसंख्यावाचकशब्दाः सदैकत्वे वर्तन्ते 'शतं ब्राह्मणाः' प्रयोगदर्शनात्, संख्यायाम्=शतत्वादिसंख्याविशेष्यकशतादिपदोत्तरैकवचनद्विवचनबहुवचनैकत्वद्वित्वबहुत्वप्रकारकबोधपराः शतादिसंख्यावाचकाः शब्दा एकवचनान्ता द्विवचनान्ता बहुवचनान्ता अपीत्यर्थः—'गवां शतं शते शतानि' इतिप्रयोगात्— एकं शतत्वं द्वे शतत्वे त्राणि शतत्वानीत्यर्थादिति '' इति कृष्णंभट्टाः ।

एकेति— एकशब्दोत्तरमेकवचनं द्विशब्दोत्तरं द्विवचनं बहुशब्दोत्तरं च बहुवचनं संख्याबोधकं भवति संख्याबोधकत्वे ह्येकमित्यत्रोद्देश्यतावच्छेदकमप्येकत्वं विधेयमप्येकत्वमेव द्वावित्यत्र द्वित्वमेव बहव इत्यत्र बहुत्वमेव स्यात्तथा चोद्देश्यतावच्छेदकविधेययोरैक्ये जाते एकत्वादेःप्रकृत्यर्थेनान्वये आकाङ्क्षा न संभवतीति न संख्याबोधकत्वं किं तु साधुत्वार्थत्वमेव, एतच्च पूर्वमेव ( पृ. ६४ ) ''एवमुद्देश्यतावच्छेदकविधेययोरैक्येन'' इत्यत्र प्रतिपादितम् ।

नित्येति— यथा एकद्विबहुशब्देभ्यो जायमाना प्रथमा विभक्तिर्निरर्थकैव तथा नित्यबहुवच-

कव्यक्तिमात्रतात्पर्येण तादृशशब्दः प्रयुज्यते तत्र बहुत्वान्वये योग्यताविर

यत्तु तद्गतगुणादिसाधारणबहुत्वस्य तत्रान्वय इति, तन्न शोभनम्— प्र थैतावच्छेदकव्याप्यपर्याप्तिसंबन्धेनैवाऽनेकवृत्तिसंख्यान्वयस्य व्युत्पन्नतया त संबन्धेन तथाविधबहुत्वान्वये योग्यताविरहात् । अन्यथा— उदासीनघटप साधारणबहुत्वस्याप्यन्वयसंभवेन तद्गतगुणादिसाधारणबहुत्वानुधावनस्या चित्करत्वात् ।

---

नान्ताऽबादिशब्दोत्तरवर्तमानमपि प्रथमाबहुवचनं क्वचिन्निरर्थकमेव— यत्रैकजलव्यक्ति 'आपः' इत्युच्यते तत्र प्रकृत्यर्थभूतैकजलव्यक्तौ बहुवचनार्थबहुत्वस्यान्वयासंभवादि तादृशशब्दः=आपः इतिशब्दः । आदिपदेन नित्यबहुवचनान्तदारादिपदं ग्राह्यम् ।

ननु 'आपः' इत्यत्रैका जलव्यक्तिरनेकाश्च जलगतमाधुर्यादिगुणव्यक्तय इति मिलि बहुत्वमस्त्येवेति तत्र प्रथमाबहुवचनार्थबहुत्वस्यान्वये न योग्यताविरह इति नाबादिशब्दो माबहुवचनं निरर्थकमित्याशङ्कते— यत्त्विति । परिहरति— तन्नेति । परिहारहेतुमा थैति, अनेकवृत्तिसंख्यान्वयस्य=द्वित्वबहुत्वादिसंख्याया अन्वयस्तु प्रकृत्यर्थतावच्छेदक तावच्छेदकव्याप्यपर्याप्तिसंबन्धेनैव भवतीति पूर्वम् ( पृ० १३७ ) " उद्देश्यतावच्छेदक विशिष्टपर्याप्तिरेव संसर्गतोऽवगमात् " इत्यनेन प्रतिपादितम् 'आपः' इत्यत्र प्रकृत्यर्थत श्यता ) वच्छेदकं जलत्वमेव तथा च जलत्वव्याप्यबहुत्वपर्याप्तिर्जले एव संभवति न तु गुणेष्वपीति तादृशसंबन्धेन=जलत्वव्याप्यपर्याप्तिसंबन्धेन तथाविधबहुत्वान्वये=जलत्वव्या प्तिकबहुत्वस्यान्वये जलगतगुणानां योग्यता नास्ति— जलीयगुणेषु जलत्वाऽभावादिति शब्दोत्तरप्रथमाबहुवचनार्थबहुत्वस्य जलेन सह जलीयगुणेष्वन्वयः संभवति येन बहुवचनस्य निरर्थकत्वं न स्यादित्यर्थः । अन्यथा= यदि 'आपः' इत्यत्र जलगत संख्यामादाय बहुत्वान्वयो युक्तः स्यात्तदा जलसमीपवर्तिघटपटादिवृत्तिसंख्यामादायापि टादिसाधारणस्यापि बहुत्वस्य जलेऽन्वयसंभवाज्जलगतगुणादिसाधारणबहुत्वपर्यन्तानु व्यर्थमेव स्यात् न च 'आपः' इत्यत्र जले घटपटादिसाधारणबहुत्वस्यान्वयो युक्तस्तथ यगुणसाधारणबहुत्वस्याप्यन्वयो न युक्त इति प्रथमाबहुवचनं निरर्थकमेवेत्यर्थः । एवम् इत्यादावपि बोध्यम् ।

ननु 'आपः' इत्यत्र न जलत्वमात्रावच्छिन्नः प्रकृत्यर्थो येन जलत्वव्याप्यपर्या प्त्यत्वेन तादृशसंबन्धेन जलीयगुणेषु बहुत्वान्वयोपपत्तिर्न स्यात् किं तु अजहत्स्वार्थल स्वार्थं जलमत्यक्त्वैव जलजलगतगुणोभयसाधारणो यस्तृट्शामकत्वादिरूपो धर्मस्तदवच्छि प्रकृत्यर्थस्तथा च प्रकृत्यर्थतावच्छेदक तृट्शामकत्वं तादृशतृट्शामकत्वव्याप्यबहुत्वपर्याप्ति जलगुणेष्वपि सत्त्वादेव तृट्शामकत्वव्याप्यपर्याप्तिसंबन्धेन बहुत्वस्य जलजलगतगुणसा

अथाऽजहत्स्वार्थलक्षणया गुणादिसाधारणधर्मावच्छिन्न एव प्रकृत्यर्थ इतिचेत्?, तर्हि बहुत्वेन भासमानेषु गुणादिष्वपि पदार्थान्तरान्वयः स्यात् तथा च 'आपो द्रव्याणि' 'दारा अत्र गृहे सन्ति' इत्यादिवाक्यानामप्रमाणतापत्तिः– गुणादिषु द्रव्याभेदगृहवृत्तितादेर्बाधात् मुख्यार्थमात्रपरतादृशशब्दानां बहुवचनान्ततानुपपत्तिश्चेति न किंचिदेतत् । अबादिपदार्थे एकत्वद्वित्वान्वययोग्यतासत्त्वेऽप्यसाधुत्वादेव तदुत्तरमेकवचनं न प्रयुज्यते इतिध्येयम् ।

आख्यातैकवचनस्य संख्यार्थकत्वे विवदन्ते निष्कर्षानुसारिणः– 'घटोस्ति'

न काचिदनुपपत्तिरिति न प्रथमाबहुवचनं निरर्थकमित्याशङ्कते– अथेति । परिहरति– ति, एवं हि 'अनेकवृत्तिसंख्याया यावत्स्वऽन्वयो भवति तावत्स्वेव पदार्थान्तरस्यान्वयो ति यथा 'अत्र घटौ स्तः' इत्यत्र द्वित्वाधिकरणघटद्वये एवैतद्देशवृत्तित्वस्यान्वयो भवति' पूर्वोक्त ( १९८ ) नियमेनात्रापि 'आपो द्रव्याणि' इत्यत्र बहुत्वेन भासमानेषु=बहुधिकरणत्वेन भासमानेषु जलीयगुणेष्वपि द्रव्याभेदरूपपदार्थान्तरस्यान्वयः स्याद् न च गुणयोरभेदः संभवतीति जलगुणेषु द्रव्याभेदस्य बाधात्=बाधितत्वात् बाधितार्थप्रदकत्वात् 'आपो द्रव्याणि' इत्यस्याऽप्रामाण्यं स्यात्. एवम्– 'दारा अत्र गृहे ' इत्यत्रापि बहुत्वाधिकरणत्वेन भासमानेषु दारगुणेष्वप्येतद्गृहवृत्तित्वरूपपदार्थान्तरवयः स्यात् न च दारगुणेष्वेतद्गृहवृत्तित्वमस्तीति गृहवृत्तितादेर्बाधाद् बाधितार्थप्रतिकत्वात् 'दारा अत्र गृहे सन्ति' इतिवाक्यस्याऽप्रामाण्यं स्याद् न च 'आपो द्रव्याणि' रा अत्र गृहे सन्ति' इत्यादिवाक्यानामप्रामाण्यमिष्टमिति नात्र गुणादिसाधारणधर्मान्नः प्रकृत्यर्थः किं तु जलत्वावच्छिन्नो दारत्वावच्छिन्नश्चेत्येकजलव्यक्तौ बहुत्वान्वयास 'आपः'इत्यत्र बहुवचनं निरर्थकमेवेत्यर्थः । एवम् 'दाराः' इत्यत्रापि बोध्यम् । तरमाह– मुख्यार्थेति, यदि 'आपः' इत्यत्र बहुवचनार्थबहुत्वस्य गुणादिसाधारण्येनैवान्वयः दा गुणादिसहितजलबोधनतात्पर्ये सति बहुवचनोपपत्तावपि केवलजलमात्रप्रतिपादनतात्पर्ये मुख्यार्थपराणाम्=जलादिमात्रार्थप्रतिपादकानां तादृशशब्दानाम्=अबादिशब्दानां बहुवचनानोपपद्येत– बहुत्वाश्रयीभूतजलीयगुणेषु तदानीं तात्पर्याभावादिति नेदं मतं शोभन। सिद्धान्तमाह– अबादीति, एकजलव्यक्तावेकत्वस्य जलव्यक्तिद्वये द्वित्वस्य चान्वयतायाः सत्त्वेनाऽबादिशब्दोत्तरमेकवचनद्विवचनयोः प्रयोगे यद्यप्यनुपपत्तिर्नास्ति तथापि धुत्वात् तदुत्तरम्= अबादिशब्दोत्तरमेकवचनं द्विवचनं च न प्रयुज्यते किं तु नमेव, एवं दारपदेपि बोध्यम् । तथा चानुशासनम्–"आपः स्त्री भूम्नि" इति न दाराः" इति च ।

ख्यातेति, निष्कर्षः=सिद्धान्तः । 'घटोस्ति' इत्यत्रैकत्वविशिष्टघटस्य बोधो भवतीति कत्वान्वयार्थमेकत्वोपस्थितेरपेक्षास्तीत्येकत्वसंख्यार्थकत्वमाख्यातैकवचनस्य वा स्वीकर्तव्यं

इत्यादौ सुबेकवचनादेव संख्याबोधसंभवात् 'चैत्रेण दृष्टो घटः' इत्यादिस्थला-नुरोधेन तस्य तद्बोधकताया आवश्यकत्वात्। न चैकवचनत्वेनाऽनुगतेनैकत्वशक्त-त्वात् तिङेकवचनस्याप्येकत्ववाचकत्वमक्षतमिति वाच्यम्, एकवचनत्वस्यैकत्वश-क्ततावच्छेदकतायाः प्रागेव निराकृतत्वात्।

अस्तु वा तेन रूपेण तिङेकवचनस्याप्येकत्वे शक्तिस्तथापि तज्जन्यैकत्वोपस्थि-तेः शाब्दबोधोपयोगित्वे मानाभावः— न हि सामान्यत एकवचनज्ञानजन्योपस्थि-तित्वेन तच्छाब्दबोधहेतुता संभवति तथा सत्येकत्वेऽगृहीतसुपदवृत्तिकस्य पुंस-सुपदप्रकृतिघटादिपदोपस्थाप्यघटादौ पटादिपदोत्तराऽमादिपदोपस्थाप्यैकत्वाद्य-न्वयबोधप्रसङ्गात्, किं तु सुपदत्वादिप्रकारकज्ञानजन्यतदुपस्थितित्वादिनैव तदा

---

घटपदोत्तरप्रथमैकवचनस्य वा स्वीकर्तव्यमिति संशये 'चैत्रेण दृष्टो घटः' इत्यत्राख्यात नास्त्येव यस्य घटविशेषणीभूतैकत्वोपस्थापकत्वं स्यादिति तस्य=सुबेकवचनस्य ( प्रथमैकव नस्य ) तद्बोधकतायाः=एकत्वसंख्याबोधकताया आवश्यकत्वात् 'घटोस्ति' इत्यत्रापि सु वचनस्यैवैकत्वबोधकत्वं युक्तं न त्वाख्यातैकवचनस्येत्यर्थः। 'चैत्रो मैत्रश्च गच्छतः' इत्यत्र चै त्रयोर्विशेषणीभूतद्वित्वोपस्थापकं सुब्द्विवचनं तु नास्तीत्यत्राख्यातद्विचनस्यैव द्वित्वोपस्थापक स्सार्थक्यमेव तथा 'चैत्रो मैत्रो देवदत्तश्च गच्छन्ति' इत्यत्राख्यातबहुवचनस्यैव बहुत्वोपस्थाप त्वात्सार्थक्यमेवेत्याऽऽख्यातैकवचनस्यैव संख्यार्थकत्वे विवादो न तु द्विवचनबहुवचनयोरिति वः। ननु वाचकत्वं हि शक्त्यधीनमस्ति शक्तिश्च वाच्यवाचकयोरनुगतरूपाधीनास्ति यथा घ घटत्वरूपेण वाच्यत्वं घटपदस्य च घटपदत्वेन रूपेण वाचकत्वं तथाऽऽख्यातैकवचनस्याप्य गतेनैकवचनत्वरूपेणैकत्वे शक्तत्वं संभवतीति कथं नैकत्ववाचकत्वं स्यादित्याशङ्क्याह— न चेति परिहरति— एकवचनत्वस्येति, एकवचनत्वस्य निरूपयितुमशक्यत्वादेव शक्ततावच्छेद प्रागेव=( पृ० १२३ ) "एकवचनत्वादेर्दुर्वचत्वात्" इत्यादिना निराकृतम्, तथा चाख्य कवचनं निरर्थकमेवेत्यर्थः।

अभ्युपगम्याह— अस्तु वेति, तेन रूपेण=एकवचनत्वेन रूपेणाख्यातैकवचनस्यैकत्वे श सत्त्वेपि तज्जन्यैकत्वोपस्थितेः=आख्यातैकवचनज्ञानजन्यैकत्वोपस्थितेरेकत्वप्रकारककर्त्रादिवि कशाब्दबोधोपयोगित्वं न संभवतीत्यन्वयः। उक्तमुपपादयति— न हीति, यदि सामान्यत वचनज्ञानजन्यैकत्वोपस्थितेस्तच्छाब्दबोधहेतुता=एकत्वप्रकारकशाब्दबोधहेतुत्वं स्यात्तदा पुरुषेण सुपदस्यैकत्वे शक्तिर्न गृहीता तस्य 'घटोस्ति', 'पटं पश्य' इत्याकारकवाक्य श्रवणकाले घटपदोपस्थापितघटे पटपदोत्तराऽमपदोपस्थाप्यैकत्वस्याप्यन्वयबोधः स्यादेव— त्वोपस्थितेरेकवचनज्ञानजन्यत्वात्— अम्पदस्याप्येकवचनत्वात्, न चैवं पटपदोत्तराऽमप स्थितैकत्वस्य घटेऽन्वयो भवति किं तु 'घटोस्ति' इत्यादौ स्वन्तघटपदोपस्थितघटे सुपद प्रकारकज्ञानजन्यतदुपस्थितत्वादिनैव नाम सुपदत्वप्रकारकम्=सुपदविषयकं यद् एकत्वं सुपद

सति घटादिपदोत्तरसुपदत्वादिरूपानुपूर्वीविशेषरूपाकाङ्क्षाज्ञानघटितायां घटादावेकत्वान्वयबोधस्य सामग्र्यां सुपदत्वादिप्रकारकधीजन्योपस्थितेरेवान्तर्भावात् तादृशापत्तेरनवकाशात् । एवं च तिबादिपदत्वप्रकारकज्ञानजन्योपस्थितित्वेन तच्छाब्दबोधहेतुत्वे मानाभाव इति ।

यत्तु तिबादेः संख्यानभिधायकत्वे 'चैत्रः पचति तण्डुलम्' 'चैत्रेण पच्यते तण्डुलः' इत्यादौ कर्तृकर्मवाचकपदात् तृतीयाद्वितीययोरापत्तिः– कर्तृ-

---

मित्याकारकं शक्तिज्ञानं तादृशशक्तिज्ञानजन्या या एकत्वोपस्थितिस्तादृशोपस्थितित्वेनैव रूपेणैकत्वोपस्थितेरेकत्वप्रकारकशाब्दबोधं प्रति हेतुता संभवति अर्थात् स्वन्तघटपदोपस्थितघटविशेष्यकैकत्वप्रकारकबोधं प्रति सुपदज्ञानजन्यैकत्वोपस्थितेरेव हेतुतास्ति स्वन्तघटपदोपस्थितघटे सुपदोपस्थितस्यैवैकत्वस्यान्वयस्वीकारात्, तथा सति=तथा च घटादौ=स्वन्तघटपदोपस्थितघटे एकत्वान्वयबोधस्य या घटादिपदोत्तरसुपदत्वादिरूपानुपूर्वीविशेषरूपाकाङ्क्षाज्ञानघटिता सामग्री=शाब्दबोधसामग्री तस्यां सुपदत्वादिप्रकारकधीजन्यैकत्वोपस्थितेरेवान्तर्भावात्= स्वन्तघटपदोपस्थितघटविशेष्यकैकत्वप्रकारकशाब्दबोधं प्रति सुपदज्ञानजन्यैकत्वोपस्थितेः कारणत्वमित्येवं कार्यकारणभावस्वीकारात् स्वन्तघटपदोपस्थितघटे सुपदोपस्थितैकत्वस्यैवान्वयो भविष्यति न त्वऽम्पदोपस्थितैकत्वस्यापीति न तादृशापत्तेः=सुपदप्रकृतिघटादिपदोपस्थाप्यघटादौ घटादिपदोत्तराऽमादिपदोपस्थाप्यैकत्वाद्यन्वयबोधापत्तेरवकाश इत्यर्थः । एवमिति– यदा हि स्वन्तघटपदोपस्थितघटे सुपदोपस्थितैकत्वस्यैवान्वयो भवतीति नियमः स्वीकृतस्तदा यथा स्वन्तघटपदोपस्थितघटे अम्पदोपस्थितैकत्वस्यान्वयो न भवत्येवमाऽऽख्यातैकवचनोपस्थितैकत्वस्याप्यन्वयो न भवतीति तिबादि ( आख्यात ) पदत्वप्रकारकज्ञान ( शक्तिज्ञान ) जन्योपस्थितित्वेन रूपेणैकत्वोपस्थितेस्तच्छाब्दबोधहेतुत्वे=एकत्वप्रकारकशाब्दबोधहेतुत्वे प्रमाणं नास्त्येव, तथा चाख्यातैकवचनस्यैकवचनत्वेन रूपेणैकत्वे शक्तिस्वीकारेप्याख्यातैकवचनोपस्थितैकत्वस्य घटादावन्वयो न भवतीत्याख्यातैकवचनस्य निरर्थकत्वमेव प्राप्तम्– आख्यातैकवचनोपस्थितैकत्वस्योपयोगाभावादित्यर्थः ।

यत्त्विति– आख्यातैकवचनस्य यद्येकत्वसंख्याभिधायकत्वं ( वाचकत्वम् ) न स्यात्तदा नैयायिकमते लकारस्य कर्तृकर्मवाचकत्वमपि नास्ति येन तदनभिधानस्य=कर्त्रऽनभिधानस्य कर्तृवाचकपदात् तृतीयानियामकत्वं स्याद् यथा–'चैत्रेण पच्यते' इत्यत्र तथा कर्मानभिधानस्य कर्मवाचकपदाद् द्वितीयानियामकत्वं स्याद् यथा–'तण्डुलं पचति' इत्यत्र, किं तु नैयायिकमते कर्तृकर्मगतसंख्यानभिधानस्यैव तृतीयाद्वितीयानियामकत्वमस्तीति कर्तृगतसंख्याया अनभिधाने=आख्यातवाच्यसंख्यायाः कर्तरि अनन्वये हि "कर्तृकरणयोस्तृतीया" इतिसूत्रेण कर्तृवाचकपदात्तृतीया भवति यथा–'चैत्रेण पच्यते तण्डुलः' इति अत्राख्यातवाच्यसंख्यायाः कर्मभूततण्डुले एवान्वयो न तु कर्तृभूतचैत्रेपीति चैत्रपदात्तृतीया प्राप्ता, एवं कर्मगतसंख्याया

कर्मगतसंख्याया अनभिधाने "कर्तृकरणयोस्तृतीया" इति "कर्मणि द्वितीया" इतिसूत्राभ्यां तयोरनुशासनात् । नैयायिकमते लकारस्य कर्तृकर्माऽवाचकतया तदनभिधानस्य द्वितीयातृतीयानियामकत्वासंभवात् ।

न च कर्त्रादिगतसंख्यानभिधानमेव कथं कर्त्रादिवाचकपदोत्तरतृतीयादिनियामकम् 'चैत्रेण पच्यते तण्डुलः' इत्यादिस्थलेपि लकारस्य चैत्रादिगतसंख्याभिधायकत्वाद् एकत्वत्वादिना एकत्वादिसामान्यस्यैवैकवचनाद्यभिधेयत्वादिति वाच्यम्, यतस्तद्गतसंख्यानभिधायकत्वं प्रकृते न तद्गतसंख्यानिष्ठवृत्त्य-

---

अनभिधाने=आख्यातवाच्यसंख्यायाः कर्मण्यऽनन्वये हि "कर्मणि द्वितीया" इतिसूत्रेण कर्मवाचकपदाद् द्वितीया भवति यथा— 'तण्डुलं पचति चैत्रः' इति. अत्राख्यातवाच्यसंख्यायाः कर्तृभूतचैत्रे एवान्वयो न तु कर्मभूततण्डुलेपीति तण्डुलपदाद् द्वितीया प्राप्ता. इत्येवं प्राप्ते. यदि तिबादेः=आख्यातैकवचनस्य संख्याभिधायकत्वं न स्यात्तदा 'चैत्रः पचति' इत्यत्र कर्तृगतसंख्यानभिधानस्य तृतीयाप्रयोजकस्य सत्त्वात् चैत्रपदात्तृतीया प्राप्नुयात् न चात्र चैत्रपदात् तृतीया भवति 'चैत्रः पचति' इत्यस्यैव साधुत्वात् 'चैत्रेण पचति' इत्यस्याऽसाधुत्वात्. तथा 'चैत्रेण पच्यते तण्डुलः' इत्यत्र कर्मगतसंख्यानभिधानस्य द्वितीयाप्रयोजकस्य सत्त्वात् तण्डुलपदाद् द्वितीया प्राप्नुयात् न चात्र तण्डुलपदाद् द्वितीया भवति 'तण्डुलः पच्यते' इत्यस्यैव साधुत्वात् 'तण्डुलं पच्यते' इत्यस्यासाधुत्वादिति तिबादेः संख्यावाचकत्वं स्वीकार्यं तथा च 'चैत्रः पचति' इत्यत्राख्यातस्य कर्तृगतसंख्यावाचकत्वान्न तृतीयाप्राप्तिः, 'तण्डुलः पच्यते' इत्यत्र चाख्यातस्य कर्मगतसंख्यावाचकत्वान्न द्वितीयापत्तिरित्यर्थः ।

ननु कर्तृगतसंख्यानभिधानमपि न कर्तृवाचकपदात्तृतीयानियामकं तथा कर्मगतसंख्यानभिधानं च न कर्मवाचकपदाद् द्वितीयानियामकं संभवति अन्यथा यथा 'चैत्रः पचति' इत्यत्राख्यातस्य कर्तृगतसंख्याभिधायकत्वमस्ति तथा 'चैत्रेण पच्यते तण्डुलः' इत्यत्राप्याख्यातस्य कर्तृगतसंख्याभिधायकत्वं स्यादेव— उभयत्राख्यातस्य समानरूपत्वेन विशेषाभावादिति 'चैत्रेण पच्यते' इत्यत्राख्यातस्य कर्तृगतसंख्याभिधायकत्वे प्राप्ते चैत्रपदात् तृतीया न स्यात्— भवति चात्र कर्तृगतसंख्यानभिधानेऽसत्यपि तृतीयेति न कर्तृगतसंख्यानभिधानं तृतीयाप्रयोजकम्. तथा 'तण्डुलं पचति' इत्यत्राख्यातस्य कर्मगतसंख्याभिधायकत्वात् कर्मगतसंख्यानभिधानेऽसत्यपि द्वितीया भवतीति न कर्मगतसंख्यानभिधानं द्वितीयाप्रयोजकमित्यभिप्रायेणाशङ्कते— न चेति । आख्यातस्य संख्याभिधायकत्वे हेतुमाह— एकत्वत्वादिनेति, सामान्यरूपेणैकत्वस्यैकवचनवाच्यत्वे प्राप्ते सुबेकवचनस्यैकत्ववाचकत्वमस्त्याऽऽख्यातैकवचनस्यैकत्ववाचकत्वं नास्तीत्यत्र नियामकाभावादित्यर्थः । परिहरति— यत इति, प्रकृते='तण्डुलं पचति' 'चैत्रेण पच्यते' इत्यादौ तद्गत ( कर्तृकर्मगत ) संख्यानभिधायकत्वं न तद्गतसंख्यानिष्ठवृत्त्यनिरूपकत्वम्=संबन्धविशेषेण कर्तृकर्मगतसंख्यानिष्ठा या वृत्तिः=शक्तिस्तदऽनिरूपकत्वं यत आख्यातैकवचनस्य

निरूपकत्वम्, अपि तु तद्विशेष्यकसंख्याप्रकारकशाब्दबोधाऽननुकूलत्वमेव तथा च कर्त्रादिविशेष्यकसंख्यान्वयबोधाजनकलकारादिसमभिव्याहृतकर्त्रादिवाचकपदात् तृतीयादयो भवन्तीत्यत्रैतदनुशासनतात्पर्यम् ।

'चैत्रेण पच्यते तण्डुलः' इत्यादौ चैत्रादिविशेष्यकसंख्यान्वयबोधकत्वं नाख्यातस्य, आख्यातार्थभावनाया यत्रान्वयस्तद्विशेष्यकसंख्यान्वयबोधस्यैवाख्यातेन जननात् तादृशभावनान्वयबोधे विशेष्यश्च प्रथमान्तपदोपस्थाप्य एव ।

---

कर्तृगतकर्मगतसंख्यानिष्ठवृत्तिनिरूपकत्वमेवास्तीति उक्तरूपाऽनिरूपकत्वरूपसंख्यानभिधानस्याख्यातेऽभावात् कर्तृपदात्तृतीया कर्मपदाद् द्वितीया च न स्यादेव भवति च तृतीया द्वितीयेति तद्गतसंख्यानभिधायकत्वं हि तद्विशेष्यकसंख्याप्रकारकशाब्दबोधाननुकूलत्वमेवेति ( शाब्दबोधाजनकत्वमेव ) उच्यते तथा च "कर्तृकरणयोस्तृतीया" इतिसूत्रस्य 'कर्तृविशेष्यकसंख्याप्रकारकबोधाऽजनकलकारेण सह समभिव्याहृतकर्तृवाचकपदात् तृतीया भवति' इत्यर्थस्तथा च 'चैत्रेण पच्यते' इत्यत्र लकारेण=लकारस्थानीयतिपा कर्तृविशेष्यकसंख्याप्रकारकबोधो न जन्यते किं तु कर्मविशेष्यकसंख्याप्रकारक एव बोधो जन्यते इत्येतादृशलकारसमभिव्याहृतकर्तृवाचकचैत्रपदात्तृतीया भवति, एवम् "कर्मणि द्वितीया" इतिसूत्रस्य 'कर्मविशेष्यकसंख्याप्रकारकबोधाजनकलकारेण सह समभिव्याहृतकर्मवाचकपदाद् द्वितीया भवति' इत्यर्थस्तथा च 'तण्डुलं पचति' इत्यत्र लकारेण=लकारस्थानीयतिपा 'कर्मविशेष्यकसंख्याप्रकारकबोधो न जन्यते किं तु कर्तृविशेष्यकसंख्याप्रकारक एव बोधो जन्यत इत्येतादृशलकारसमभिव्याहृतकर्मवाचकतण्डुलपदाद् द्वितीया भवतीति सर्वं समञ्जसं तस्मादाख्यातैकवचनस्यापि संख्यावाचकत्वं युक्तमेवेत्यर्थः । संख्यानिष्ठवृत्तीति यदुक्तं तत्र वृत्तेर्वाच्यनिष्ठत्वं शक्तिवादेऽस्मदीयतट्टीकायां वा द्रष्टव्यम् । किं चार्थविशेष्यकशक्तेराश्रयत्वसंबन्धेनार्थनिष्ठत्वं भवतीति तथात्रापि बोध्यम्, पदविशेष्यकशक्तेश्चार्थनिष्ठत्वं शक्तिवादोक्तपरम्परासंबन्धेन बोध्यम् । एतदनुशासनस्य="कर्तृकरणयोस्तृतीया" "कर्मणि द्वितीया" इत्यनुशासनद्वयस्य ।

'कर्त्रादिविशेष्यकसंख्यान्वयबोधाजनकलकारादिसमभिव्याहृतकर्तृवाचकपदात् तृतीया भवति' इत्यनेनानुशासनतात्पर्येण किं प्राप्तमित्याह– चैत्रेणेति, 'चैत्रेण पच्यते तण्डुलः' इत्यत्राख्यातस्य कर्मभूततण्डुलविशेष्यकसंख्याप्रकारकान्वयबोधजनकत्वादेव कर्तृभूतचैत्रविशेष्यकसंख्याप्रकारकान्वयबोधजनकत्वं नास्तीत्यत्र कर्तृविशेष्यकसंख्यान्वयबोधाऽजनकलकारेण सह चैत्रपदं समभिव्याहृतमस्तीति चैत्रपदात्तृतीया प्राप्ता । अत्राख्यातस्य चैत्रविशेष्यकसंख्यान्वयाऽबोधकत्वे हेतुमाह–आख्यातार्थेति, आख्यातार्थभावनाया यत्रान्वयो भवति तद्विशेष्यकसंख्यान्वयबोध एवाख्यातेन जन्यते "भावनान्वयिनि संख्यान्वयः" इतिनियमात्, तादृशभावनान्वयबोधे=आख्यातार्थभावनान्वयबोधे च प्रथमान्तपदोपस्थाप्य एव विशेष्यो भवति तस्मात् प्रथमान्तपदोपस्थाप्ये

'चैत्रः पचति तण्डुलम्' इत्यादौ चैत्रादिः साक्षादेव भावनाविशेष्यः। 'चैत्रेण पच्यते तण्डुलः' इत्यादौ तु परम्परया, चैत्रादिनिष्ठभावनाजन्यफलशाली तण्डुल इत्याकारकबोधस्यैव तत्रोदयात्। तस्मात्तिबादेरपि संख्याबोधकत्वमावश्यकमिति।

तन्न विचारसहम्– तथा हि कर्त्रादिनिष्ठसंख्यान्वयबोधाननुकूलत्वं यदि तादृशबोधोपधायकज्ञानविषयत्वाभाववत्त्वं तदा यादृशतिबादिज्ञानेन सहकार्यन्तरविरहात् तादृशबोधो न जनितस्तद्योगे तृतीयाद्यापत्तिः। यदि च तादृश-

---

एव भावनायाः संख्यायाश्चान्वयो जायते इति 'चैत्रेण पच्यते तण्डुलः' इत्यत्र प्रथमान्ततण्डुलपदोपस्थाप्यतण्डुलस्यैव विशेष्यत्वात् तत्रैव भावनायाः संख्यायाश्चान्वयो जायते इत्याख्यातेनात्र तण्डुलविशेष्यकसंख्यान्वयबोधजननात् चैत्रविशेष्यकसंख्यान्वयबोधाऽजननाच्च चैत्रपदात् तृतीया प्राप्तेत्यर्थः। एवम् 'चैत्रः पचति तण्डुलम्' इत्यत्र प्रथमान्तचैत्रपदोपस्थाप्यत्वात् चैत्रस्यैव विशेष्यत्वमिति तत्रैव भावनायाः संख्यायाश्चान्वय इत्यत्राख्यातेन चैत्रविशेष्यकसंख्यान्वयबोधजननात् तण्डुलविशेष्यकसंख्यान्वयबोधाऽजननाच्च तण्डुलपदाद् द्वितीया जाता। ननु 'तण्डुलः पच्यते' इत्यत्र तण्डुलस्य कथं भावनाविशेष्यत्वं येन तत्र संख्यान्वयः स्यादित्याशङ्कयाह– चैत्र इति, 'चैत्रः पचति' इत्यत्र चैत्रस्य तु साक्षादेव भावनाविशेष्यत्वमस्ति– साक्षादेव भावनाश्रयत्वात्, 'चैत्रेण पच्यते तण्डुलः' इत्यत्र तण्डुलस्य तु परम्परयैव भावनाविशेष्यत्वम्– भावनायाः साक्षात्संबन्धेन चेतननिष्ठत्वनियमात्। तण्डुलस्य परम्परया भावनाविशेष्यत्वे शाब्दबोधस्वरूपमाह– चैत्रादीति, चैत्रनिष्ठभावनाजन्यफलशालित्वमेवात्र तण्डुलस्य भावनाविशेष्यत्वमस्तीत्यर्थः, किं वा तण्डुलस्य स्वजन्यफलशालित्वसंबन्धेन भावनाश्रयत्वाद् भावनाविशेष्यत्वं विज्ञेयम्, एवं भावना। उपसंहरति–तस्मादिति, यस्मात्तिबादेः संख्यानभिधायकत्वे उक्तरीत्या तृतीयाद्वितीययोर्व्यवस्था नोपपद्यते तस्मात् तिबादेः=आख्यातैकवचनस्यापि संख्याबोधकत्वमवश्यं स्वीकार्यमित्यर्थः।

यत्त्वित्यादिना प्रतिपादितं परिहरति–तन्नेति। कर्त्रादिनिष्ठसंख्यान्वयबोधाननुकूलत्वमिति तृतीयाप्रयोजकं कर्तृविशेष्यकसंख्याप्रकारकशाब्दबोधाननुकूलत्वं यदुक्तं तत् किं स्वरूपम् यदि तादृशबोधोपधायकज्ञानविषयत्वाभाववत्त्वम्= अर्थात् तादृशबोधः=कर्तृविशेष्यकसंख्याप्रकारकबोधः, तादृशबोधोपधायकम्=कर्तृविशेष्यकसंख्याप्रकारकबोधरूपफलजनकं यज्ज्ञानं तद्विषयकज्ञानं तादृशज्ञानविषयत्वाभाववत्त्वमेव यदि कर्तृविशेष्यकसंख्याप्रकारकशाब्दबोधाननुकूलं तदा यथा 'चैत्रेण पच्यते' इत्यत्र चैत्रविशेष्यकसंख्याप्रकारकबोधस्तिब्ज्ञानेन न जन्यते इति चैत्रविशेष्यकसंख्याप्रकारकबोधजनकज्ञानविषयत्वाभाववत्त्वं तिपोऽस्तीति चैत्रपदात् तृतीया भवति तथा यदा तिब्ज्ञानेन 'चैत्रः पचति' इत्यत्र सहकार्यन्तरविरहात्=' तिबेकवचनमेकत्वे शक्तम्' इत्याकारकशक्तिज्ञानादिलक्षणसहकारिविरहात् तादृशबोधः=चैत्रविशेष्यकसंख्याप्रका-

बोधस्वरूपयोग्यज्ञानविषयत्वाभावस्तदा यगादिसमभिव्याहृतात्मनेपदादिज्ञानस्यापि तादृशबोधस्वरूपयोग्यत्वात् । तत्स्वरूपयोग्यज्ञानाविषयतिबाख्यातस्यैवाऽप्रसिद्धेः ।

अथ कर्त्रादिविशेष्यकसंख्यान्वयबुद्धित्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकविषयित्वानिरूपकत्वमेव तादृशबोधाननुकूलत्वम् 'चैत्रः पचति' इत्या-

---

कबोधो न जनितस्तदा तद्योगे=एतादृशतिङ्योगे 'चैत्रः पचति' इत्यत्र चैत्रपदाद् तृतीयापत्तिः स्यादेव– यतोत्र तिङ्ज्ञानेन चैत्रविशेष्यकसंख्याप्रकारकबोधो न जनित इति तिपश्चैत्रविशेष्यकसंख्याप्रकारकबोधाजनकज्ञानविषयत्वात् चैत्रविशेष्यकसंख्याप्रकारकबोधोपधायकज्ञानविषयत्वाभाववत्त्वमस्त्येव, शक्तिज्ञानं विना बोधो न जायते इति तस्य सहकारित्वं तदुक्तम्–"शक्तिधीः सहकारिणी" इति । संख्याप्रकारकज्ञानं तिप्पदज्ञानेन जन्यते इति तिप्पदज्ञानविषयत्वं तिपः तदुक्तम्– "पदज्ञानं तु करणम्" इति, 'चैत्रः पचति' इत्यत्र उक्तसहकारिसत्त्वे तु चैत्रविशेष्यकसंख्याप्रकारकबोधस्तिप्ज्ञानेन जन्यते इति तिपश्चैत्रविशेष्यकसंख्याप्रकारकबोधोपधायक-( बोधरूपफलजनक ) ज्ञानविषयत्वं विज्ञेयम् । द्वितीयकल्पमाह– यदि चेति, तादृशबोधस्वरूपयोग्यज्ञानविषयत्वाभावः= कर्तृविशेष्यकसंख्याप्रकारकबोधजननविषयकस्वरूपयोग्यताविशिष्टज्ञानविषयत्वाभाववत्त्वमेव यदि कर्तृविशेष्यकसंख्याप्रकारकशाब्दबोधाननुकूलत्वं तदा यक्समभिव्याहृतात्मनेपद ( ते ) ज्ञानस्यापि तादृशबोधस्वरूपयोग्यत्वात्=कर्तृविशेष्यकसंख्याप्रकारकशाब्दबोधजननानुकूलस्वरूपयोग्यतालक्षणकारणताविशिष्टत्वाद् यक्समभिव्याहृतात्मनेपदस्य चैतादृशज्ञानविषयत्वादेवाऽऽत्मनेपदे तादृशबोधस्वरूपयोग्यज्ञानविषयत्वाभाववत्त्वस्य तृतीयाप्रयोजकस्याऽभावात् 'चैत्रेण पच्यते' इत्यत्रापि चैत्रपदात् तृतीया न स्यादेवेत्यर्थः । संख्याप्रकारकशाब्दबोधजनकतावच्छेदकं हि एकवचनत्वं वा तिङ्त्वं वा वाच्यं तत्तु यक्समभिव्याहृतात्मनेपदेऽप्यस्त्येवेति तद्विषयकज्ञाने संख्याप्रकारकशाब्दबोधजननानुकूलस्वरूपयोग्यता त्वस्त्येव यगादिसमभिव्याहाररूपप्रतिबन्धकवशात् शाब्दबोधरूपं फलं न जन्यते इतिभावः । उक्ते हेतुमाह– तत्स्वरूपेति, कर्त्रादिविशेष्यकसंख्याप्रकारकशाब्दबोधजननानुकूलस्वरूपयोग्यताविशिष्टज्ञानाविषयस्तिबाख्यातमेव प्रसिद्धं नास्ति येन तादृशबोधस्वरूपयोग्यज्ञानाविषयत्वं तृतीयाप्रयोजकं स्यादित्याक्षेपः । "तादृशबोधस्वरूपयोग्यत्वात्" इत्यस्याग्रे 'चैत्रेण पच्यते इत्यादावपि तृतीया न स्यात् तण्डुलं पचतीत्यादावपि द्वितीया न स्यात्' इतिपाठशेषः ।

अथेति– ननु कर्तृविशेष्यकसंख्याप्रकारकशाब्दबोधाननुकूलत्वं न उक्ततादृशबोधोपधायकज्ञानविषयत्वाभाववत्त्वं वा उक्ततादृशबोधस्वरूपयोग्यज्ञानविषयत्वाभाववत्त्वं वा येनोक्तरीत्या 'चैत्रः पचति' इत्यत्र तृतीयापत्तिः स्यात्तथा 'चैत्रेण पच्यते' इत्यत्र तृतीयानुपपत्तिः स्यात्, किं तु तादृशबोधाननुकूलत्वम्=कर्तृविशेष्यकसंख्याप्रकारकशाब्दबोधाननुकूलत्वं हि कर्त्रादिविशेष्यकसंख्यान्वयबुद्धित्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकविषयित्वानिरूपकत्वमित्युच्यते. यथा-

दिवाक्यघटकतिबादिविषयिता चैत्रादिविशेष्यकसंख्यान्वयबुद्धित्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदिका— तादृशान्वयबुद्धित्वावच्छिन्नं प्रति चैत्रादिपदसमभिव्याहृततिबादिपदज्ञानस्य हेतुत्वात् । 'चैत्रेण पच्यते तण्डुलः' इत्यादिवाक्यघटकतादिपदविषयिता च न तादृशी— चैत्रादिपदसमभिव्याहृततादृशपदज्ञानत्वेन तादृशबुद्धित्वावच्छिन्नं प्रत्यहेतुत्वात् ।

---

'चैत्रः पचति' इत्यत्र कर्तृविशेष्यकसंख्यान्वयबुद्धिः ( शाब्दबोधः ) तिब्ज्ञानेन जन्यते एतादृशबुद्धौ बुद्धित्वमप्यस्ति जन्यताप्यस्तीत्येतादृशबुद्धित्वावच्छिन्ना या एतादृशबुद्धिनिष्ठा जन्यता तादृशजन्यतानिरूपिता या तिब्ज्ञाननिष्ठा जनकता तादृशजनकतावच्छेदकं यद्विषयित्वं तिब्ज्ञाने जनकताया विषयित्वस्य च सत्त्वात् जनकताया अवच्छेदकं विषयित्वं जातं तादृशविषयित्वस्य निरूपकत्वं तिबि वर्तते ज्ञानविषयस्यैव ज्ञानीयविषयितानिरूपकत्वादिति अत्र चैतादृशतिब्ज्ञानस्यैव कर्तृविशेष्यकसंख्याप्रकारकशाब्दबोधजनकत्वमस्तीति नात्र तृतीयायाः प्राप्तिः, एतादृशविषयित्वानिरूपकत्वं च 'चैत्रेण पच्यते' इत्यत्रात्मनेपदेऽस्त्येवेति तत्र कर्तृवाचकपदात् तृतीया प्राप्तेति न कोपि दोष इत्यर्थः । एतदेव स्वयमप्याह— चैत्र इत्यादिना, 'चैत्रः पचति' इत्यादिवाक्यघटकं यत् तिप्पदं तादृशतिप्पदनिष्ठविषयतानिरूपिता या तिप्पदज्ञाननिष्ठा विषयिता साऽत्र चैत्रविशेष्यकसंख्यान्वयबुद्धि ( संख्याप्रकारकबुद्धि ) त्वावच्छिन्नजन्यतानिरूपिता या तिप्पदज्ञाननिष्ठा जनकता तस्या अवच्छेदिकास्ति. एतादृशजनकतावच्छेदकीभूतविषयितायाश्चात्र तिबि निरूपकत्वमेवास्ति नाऽनिरूपकत्वमिति न चैत्रपदात्तृतीयापत्तिरित्यर्थः, उक्ततिबादिविषयिताया उक्तजनकतावच्छेदकत्वे हेतुमाह— तादृशेति, यतः— तादृशान्वयबुद्धित्वावच्छिन्नम्=चैत्रविशेष्यकसंख्याप्रकारकशाब्दबुद्धित्वावच्छिन्नं प्रति चैत्रादिपदसमभिव्याहृततिबादिपदज्ञानस्य हेतुत्वमस्ति अतः उक्तशाब्दबोधजनकतिबादिविषयकज्ञाननिष्ठजनकताया तिबादिज्ञाननिष्ठा विषयितात्रावच्छेदिका जातेत्यर्थः । चैत्रेणेति— 'चैत्रेण पच्यते तण्डुलः' इतिवाक्यघटकं यदात्मनेपदं ते इति पदं तन्निष्ठविषयतानिरूपिता या तेपदविषयकज्ञाननिष्ठा विषयिता सा तु तादृशी=चैत्रविशेष्यकसंख्याप्रकारकशाब्दबुद्धित्वावच्छिन्नजन्यतानिरूपिता या तेपदज्ञाननिष्ठा जनकता तादृशजनकताया अवच्छेदिका न— अत्र चैत्रविशेष्यकसंख्याप्रकारकबोधस्याऽजायमानत्वेन तेपदज्ञाने चैत्रविशेष्यकसंख्याप्रकारकबोधजनकत्वं नास्ति येन तेपदज्ञाननिष्ठा विषयिता जनकतावच्छेदिका स्यात्. तथा चोक्तजनकतावच्छेदकविषयिताया निरूपकत्वम् 'चैत्रः पचति' इतिवाक्यघटकतिबि वर्तते अनिरूपकत्वं च 'चैत्रेण पच्यते' इतिवाक्यघटकात्मनेपदे वर्तते इत्यत्र चैत्रपदात्तृतीया प्राप्ता. अत्र तेपदज्ञानस्य कर्मविशेष्यकसंख्याप्रकारकशाब्दबोधजनकत्वादित्यर्थः । न तादृशीत्यत्र हेतुमाह— चैत्रादीति, 'चैत्रेण पच्यते' इत्यत्र चैत्रादिपदसमभिव्याहृततादृशपदज्ञानत्वेन= चैत्रपदसमभिव्याहृतात्मनेपदज्ञानस्य तादृशबुद्धित्वावच्छिन्नम्=चैत्रविशेष्यकसंख्याप्रकारकशाब्दबुद्धित्वावच्छिन्नं प्रत्यऽहेतुत्वात् । यद्यत्र तेपदज्ञानस्य हेतुत्वं स्यात्तदा तेपदज्ञाननिष्ठविवक्षित-

न च 'चैत्रः पचत' इत्यादौ चैत्रविशेष्यकाख्यातार्थसंख्यान्वयबोधोत्पत्त्या चैत्रादिपदसमभिव्याहृततादिपदज्ञानत्वेन तादृशान्वयबुद्धित्वावच्छिन्नहेतुताऽक्षतैवेति 'चैत्रेण पच्यते' इत्यादिवाक्यघटकीभूततादिपदविषयितापि तादृश्येवेति वाच्यम्, 'चैत्रेण पचेत' 'चैत्रः पच्यते' इत्यादिवाक्याच्चैत्रादिविशेष्यकस्य भावनायाः संख्यायाश्चान्वयबोधस्यानुदयात् । तद्विशेष्यकतदुभयान्वयबोधे प्रथमान्तचैत्रादिपदसमभिव्याहृतशबादिविकरणोत्तरतत्तदाख्यातपदज्ञानत्वेन हेतुत्वात् 'चैत्रेण पच्यते तण्डुलः' इत्यादिवाक्यघटकतादीनां

---

जनकतायास्तेपदज्ञाननिष्ठा विषयिता अवच्छेदिका स्यादपि तथाच तादृशजनकतावच्छेदकीभूतविषयिताया निरूपकत्वमात्मनेपदे प्राप्नुयादित्यत्र तृतीयानुपपत्तिः स्यादपि न चैवमस्तीत्यर्थः ।

ननु 'चैत्रः पचते' इत्यत्रात्मनेपदज्ञानेनापि चैत्रविशेष्यकाख्यातार्थभूतसंख्याप्रकारकशाब्दबोधो जायत एवेति चैत्रादिपदसमभिव्याहृततादिपद ( आत्मनेपद ) ज्ञानस्य तादृशान्वयबुद्धित्वावच्छिन्नहेतुता=चैत्रविशेष्यकसंख्याप्रकारकशाब्दबोधहेतुताऽस्त्येवेति 'चैत्रेण पच्यते' इत्यादिवाक्यघटकीभूततादिपदविषयिता=इत्यादिवाक्यघटकात्मनेपदनिष्ठविषयतानिरूपिता याऽऽत्मनेपदज्ञाननिष्ठा विषयिता सापि तादृश्येव=चैत्रविशेष्यकसंख्याप्रकारकशाब्दबुद्धित्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदिकैवेति तादृशजनकतावच्छेदकीभूतविषयिताया निरूपकत्वमेवात्रात्मनेपदे प्राप्तं नाऽनिरूपकत्वम्—उक्तशाब्दबोधजनकात्मनेपदज्ञाननिष्ठविषयितायास्तद्विषयीभूतात्मनेपदनिरूपितत्वादेवेति 'चैत्रेण पच्यते' इत्यत्र तृतीया न स्यादेवेत्याशङ्कते— न चेति । परिहरति—चैत्रेणेति । यदि चैत्रादिपदसमभिव्याहृतात्मनेपदज्ञानस्य चैत्रविशेष्यकसंख्याप्रकारकशाब्दबोधजनकत्वं स्यात्तदा 'चैत्रेण पचते' 'चैत्रः पच्यते' इत्यादिवाक्यादपि चैत्रविशेष्यको भावनाप्रकारकः संख्याप्रकारकश्च शाब्दबोधः स्यादेव—अत्रापि चैत्रपदसमभिव्याहृतात्मनेपदज्ञानस्य सत्त्वात्, न चैवं भवति तस्मान्न चैत्रविशेष्यकाख्यातार्थसंख्याप्रकारकशाब्दबोधं प्रति चैत्रपदसमभिव्याहृतात्मनेपदमात्रज्ञानस्य हेतुत्वं किं तु प्रथमान्तचैत्रपदसमभिव्याहृतं शबादिविकरणोत्तरं च यत् तत्तदाख्यातपदम्=आत्मनेपदं वा परस्मैपदं वा तज्ज्ञानस्य हेतुत्वमस्ति तथा च 'चैत्रः पचति' 'चैत्रः पचते' इत्यादावाख्यातस्य शबादिविकरणोत्तरत्वात् तादृशाख्यातज्ञानेन चैत्रविशेष्यकसंख्याप्रकारकशाब्दबोधो जायते, 'चैत्रेण पच्यते' इत्यत्र चात्मनेपदस्य यगुत्तरत्वेन शबादिविकरणोत्तरत्वाभावान्नैतादृशात्मनेपदज्ञानेन चैत्रविशेष्यकसंख्याप्रकारकशाब्दबोधो जायते इति नोक्ततादिपदविषयिता=आत्मनेपदज्ञाननिष्ठविषयितापि तादृशी=चैत्रविशेष्यकसंख्याप्रकारकशाब्दबुद्धित्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदिका येनात्र तृतीयानुपपत्तिः स्यादित्यर्थः, तद्विशेष्यकतदुभयान्वयबोधे=चैत्रादिकर्तृविशेष्यकभावनाप्रकारकसंख्याप्रकारकबोधे । स्वयमपि व्यतिरेकमाह—चैत्रेणेति । तादीनाम्=आत्मनेपदस्य । तादृशसमभिव्याहारादिशून्यतया=शबादिविकरणसमभिव्याहारशून्यतया । तद्विषयितायाः=' चैत्रेण पच्यते ' इत्यत्रात्मनेपदज्ञाननिष्ठविषयि-

तादृशसमभिव्याहारादिशून्यतया तद्विषयिताया अतादृशत्वात् ।

'चैत्रः पक्ष्यते' इत्यादितः 'तण्डुलः पक्ष्यते' इत्यादितश्च चैत्रतण्डुलादिविशेष्यकसंख्यान्वयबोधोत्पत्त्या 'चैत्रः पक्ष्यते तण्डुलः' इत्यत्रोभयविशेष्यकसंख्यान्वयबोधौपयिकतादृशसमभिव्याहारज्ञानविषयितायाः 'पक्ष्यते' इत्यादौ सत्त्वेन कर्तृकर्मणोस्तृतीयाद्वितीययोरप्रसक्तावपि न तादृशवाक्यं व्युत्पन्नाः प्रयुञ्जते— कर्तरि साक्षात् कर्मणि च दर्शितपरम्परया युगपद्भावनाविशेषणका-

---

तायाः । अतादृशत्वात्=चैत्रादिविशेष्यकसंख्याप्रकारकबुद्धित्वावच्छिन्नजन्यतानिरूपितजनकताऽनवच्छेदकत्वात् । तथा च 'चैत्रेण पच्यते' इत्यत्रोक्तजनकतावच्छेदकीभूतविषयिताया आत्मनेपदेऽनिरूपकत्वमेवोक्तरीत्यास्तीति न तृतीयानुपपत्तिः—शबादिविकरणोत्तराख्याते उक्तविषयितानिरूपकत्वस्य संभवादित्यर्थः ।

प्रसङ्गेनाह—चैत्र इति, 'चैत्रः पक्ष्यते' इति कर्तरि लृटः प्रयोगः, अत्र प्रथमान्तचैत्रपदसमभिव्याहृतं स्यविकरणोत्तरात्मनेपदाख्यातमस्तीति चैत्रविशेष्यकसंख्याप्रकारकबोधो जायते 'तण्डुलः पक्ष्यते' इति कर्मणि लृटः प्रयोग इतियग्विकरणोत्तराख्यातज्ञानेन कर्मविशेष्यकसंख्याप्रकारकबोधो जायते अत्र च प्रथमान्ततण्डुलपदसमभिव्याहृतं यग्विकरणोत्तरात्मनेपदाख्यातमस्तीति तण्डुलविशेष्यकसंख्याप्रकारकबोधो जायते तथा च 'पक्ष्यते' इत्याकारकपदसमभिव्याहारे चैत्रविशेष्यकसंख्याप्रकारकबोधस्य तथा तण्डुलविशेष्यकसंख्याप्रकारकबोधस्य च योग्यतास्त्येवेत्युभयविशेष्यकसंख्याप्रकारकशाब्दबोधार्थम् 'चैत्रः पक्ष्यते तण्डुलः' इतिप्रयोगस्यादेव—उभयविशेष्यकसंख्यान्वयबोधौपयिकं यत्समभिव्याहारज्ञानम्=प्रथमान्तचैत्रतण्डुलपदसमभिव्याहृतपक्ष्यतेपदसमभिव्याहारज्ञानं तादृशसमभिव्याहारज्ञाननिष्ठाविषयिता निरूपकत्वसंबन्धेनेइत्यात्मनेपदेऽत्र वर्तते एव विषयस्य ज्ञाननिष्ठविषयितानिरूपकत्वेन ज्ञाननिष्ठविषयिताया निरूपकत्वसंबन्धेन विषये सत्त्वादत्रोक्तसमभिव्याहारज्ञानं तेइत्यात्मनेपदविषयकमेवेति उक्तसमभिव्याहारज्ञाननिष्ठाविषयिता तेइत्यात्मनेपदे वर्तते तथा चात्राख्याते चैत्रविशेष्यकसंख्याप्रकारशाब्दबोधजनकज्ञाननिष्ठजनकतावच्छेदिकीभूतविषयिताया निरूपकत्वमेवास्ति न तु तृतीयाप्रयोजकमनिरूपकत्वमिति न चैत्रपदादत्र तृतीयाप्रसक्तिः, तथा प्रथमान्ततण्डुलपदसमभिव्याहृतपक्ष्यतेपदज्ञानस्य तण्डुलविशेष्यकसंख्याप्रकारकशाब्दबोधजनकत्वादत्राख्याते तण्डुलविशेष्यकसंख्याप्रकारकशाब्दबोधजनकोक्तज्ञाननिष्ठजनकतावच्छेदकीभूतविषयिताया अपि निरूपकत्वमेवास्ति न तु द्वितीयाप्रयोजकमनिरूपकत्वमिति न तण्डुलपदादत्र द्वितीयाप्रसक्तिः. इत्येवंरीत्या उभयविशेष्यकसंख्यान्वयबोधार्थम् 'चैत्रः पक्ष्यते तण्डुलः' इतिप्रयोगस्य साधुत्वेपि प्राप्ते नैतादृशवाक्यं व्युत्पन्नाः प्रयुञ्जते—'पक्ष्यते' इत्यस्य कर्तरि लृटः प्रयोगत्वे तण्डुलपदाद् द्वितीयास्यादेवेति प्रथमान्ततण्डुलपदस्यात्राऽसाधुत्वात्. कर्मणि लृटः प्रयोगत्वे च चैत्रपदात्तृतीया स्यादेवेति प्रथमान्तचैत्रपदस्याऽसाधुत्वादित्यर्थः । 'चैत्रः पक्ष्यते तण्डुलः' इतिवाक्यस्याऽप्र-

न्वयबोधजनकताया आख्यातस्याऽव्युत्पन्नतया तादृशवाक्यादुभयविशेष्यका-न्वयबोधाऽसंभवात्।

न चाकाङ्क्षायोग्यतादिसत्त्वात् कथं न तादृशान्वयबोध इतिवाच्यम्, अगत्यैकविधान्वयबोधेऽन्यविधान्वयबोधसामग्र्यास्तद्घटकतात्पर्यज्ञानस्य वा प्रतिबन्धकत्वोपगमात्।

न च 'चैत्रेण तण्डुलः पक्ष्यते' 'चैत्रस्तण्डुलं पक्ष्यते' इत्यादिवाक्यद्वय-विषयकसमूहालम्बनदशायामप्युभयविधान्वयबोधानुपपत्तिरिति वाच्यम्, तादृशैकविधान्वयबोधे तादृशान्यविधान्वयबोधपरत्वेनाऽगृह्यमाणतथाविधाख्यातघ-

---

स्वयमपि हेतुमाह—कर्तरीति, कर्तरि साक्षात्=समवायसंबन्धेन भावनाविशेषणकान्वयबोधं कर्मणि च दर्शितपरम्परया=चैत्रनिष्ठभावनाप्रयोज्यव्यापारजन्यफलशालित्वपरम्परया भावनाविशेषण-कान्वयबोधं युगपत्=एककाले जनयितुमाख्यातस्य सामर्थ्यमेव नास्ति—एककाले एकमात्रविशेष्य-कभावनाप्रकारकसंख्याप्रकारकबोधजननसमर्थत्वादित्येककाले तादृशवाक्यात्='चैत्रः पक्ष्यते तण्डुलः' इतिवाक्यात् कर्तृकर्मोभयविशेष्यकशाब्दबोधासंभवादित्यर्थः। तथा च कर्तृविशेष्यकशा-ब्दबोधस्येष्टत्वे 'चैत्रः पक्ष्यते तण्डुलम्' इत्येव स्यात्, कर्मविशेष्यकशाब्दबोधस्येष्टत्वे च 'चैत्रेण पक्ष्यते तण्डुलः' इत्येव स्यादिति।

ननु "यत्पदेन विना यस्याऽननुभावकता भवेत् आकाङ्क्षा" इति कर्तृविशेष्यकस्य कर्म-विशेष्यकस्य च बोधस्य 'पक्ष्यते' इतिपदमाकाङ्क्षा सापि 'चैत्रः पक्ष्यते तण्डुलः' इत्यत्रास्ति तथा कर्तृकर्मणोर्विशेष्यत्वस्य योग्यताप्यत्रास्त्येवेति कथं न तादृशान्वयबोधः=चैत्रत-ण्डुलोभयविशेष्यकभावनाप्रकारकसंख्याप्रकारकशाब्दबोधः स्यात् आकाङ्क्षायोग्यतादिज्ञान-स्यैव शाब्दबोधकारणत्वात् कारणे सति कार्यावश्यंभावादित्याशङ्कते— न चेति। परिहरति— अगत्येति, एकेन वाक्येनैकविशेष्यकबोध एव जायते इति "सिद्धस्य गतिश्चिन्तनीया" इति-न्यायेनागत्या एकविधान्वयबोधे=एकविशेष्यकशाब्दबोधं प्रत्यऽन्यविशेष्यकशाब्दबोधसामग्र्या वा तादृशसामग्रीघटकतात्पर्यज्ञानस्य वा प्रतिबन्धकत्वं कल्प्यते तथा च कर्मविशेष्यकसंख्यान्वय-तात्पर्ये सति कर्तृविशेष्यकसंख्याप्रकारकशाब्दबोधस्यापत्तिर्नास्ति कर्तृविशेष्यकसंख्यान्वयता-त्पर्ये च सति कर्मविशेष्यकसंख्याप्रकारकशाब्दबोधस्यापत्तिर्नास्तीति नैककाले एकस्माद् वाक्या-दुभयविशेष्यकशाब्दबोधापत्तिरित्यर्थः।

ननु यद्युक्तरीत्या एकविशेष्यकशाब्दबोधं प्रत्यपरविशेष्यकशाब्दबोधस्य प्रतिबन्धकत्वादेककाले एकविशेष्यक एव शाब्दबोधो जायते नोभयविशेष्यकस्तदा 'चैत्रेण तण्डुलः पक्ष्यते' 'चैत्र-स्तण्डुलं पक्ष्यते' इतिवाक्यद्वयेनापि समूहालम्बनात्मकश्चैत्रतण्डुलोभयविशेष्यकः शाब्दबोधो न स्यादेव. इष्टश्चात्रोभयविशेष्यकः शाब्दबोध इत्याशङ्कते— न चेति। परिहरति— तादृशैकेति, तादृशैकविधान्वयबोधे=कर्तृकर्मणोर्मध्ये एकविशेष्यकाख्यातार्थप्रकारकशाब्दबोधं प्रति तादृ-

मिकप्रकृतान्वयबोधपरत्वज्ञानस्य हेतुतया 'चैत्रः पक्ष्यते तण्डुलः' इत्येक वाक्यात् तादृशद्विविधान्वयबोधवारणस्य दर्शितवाक्यद्वयात् तदुपपादनस्य च शक्यत्वात् ।

न च निरुक्तसंख्यानभिधानस्य तृतीयाद्वितीयानियामकत्वे 'चैत्रेण स्वं दृश्यते' 'चैत्रः स्वं पश्यति' इत्यादौ तृतीयाद्वितीययोरनुपपत्तिः-कर्त्रादिविशेष्यकसंख्याप्रकारकान्वयबोधौपयिकाऽऽकाङ्क्षाज्ञानीयविषयित्वनिरूपकत्वस्य तत्राख्याते सत्त्वा

---

शान्यविधान्वयबोधपरत्वेनाऽगृह्यमाणतथाविधाख्यातधर्मिकप्रकृतान्वयबोधपरत्वज्ञानस्य हेतुत्वम् यथा 'पक्ष्यते' इतिपदघटितवाक्यात् कर्तृविशेष्यकाख्यातार्थप्रकारकशाब्दबोधं प्रति यस् तादृशान्यविधान्वयबोधः=आख्यातार्थप्रकारककर्मविशेष्यकशाब्दबोधस्तत्परत्वेनागृह्यमाणं यत्तथा आख्यातम्='पक्ष्यते' इतिपदघटकाऽऽख्यातं तादृशाख्यातधर्मिकम्=तादृशाख्यातविशेष्यक (आख्यातविषयकम्) यत् प्रकृतान्वयबोध (कर्तृविशेष्यकाख्यातार्थप्रकारकबोध) परत्वज्ञानम्=कर्तृविशेष्यकाख्यातार्थप्रकारकशाब्दबोधपरमिदमाख्यातमिति ज्ञानं तादृशज्ञानस्य हेतुत्वमस्ति तथा च 'चैत्रः पक्ष्यते तण्डुलः' इत्यत्रैकविशेष्यकबोधकाले आख्यातस्यापरविशेष्यकबोधपरत्वेनाऽगृह्यमाणत्वमस्त्येवेति एकविशेष्यक एवैकवाक्याद्बोधो जायते न तूभयविशेष्यक इति तादृशविधान्वयबोधवारणस्य=आख्यातार्थप्रकारकोभयविशेष्यकबोधवारणस्य शक्यत्वात् । दर्शितवाक्यद्वयात्='चैत्रेण तण्डुलः पक्ष्यते' 'चैत्रस्तण्डुलं पक्ष्यते' इतिवाक्यद्वयात् तदुपपादनस्य=आख्यातार्थप्रकारकचैत्रतण्डुलोभयविशेष्यकबोधोपपादनस्य च शक्यत्वात्=एतद्वाक्यद्वयविषयकसमूहालम्बनात्मकबोधदशायां चैत्रविशेष्यकाऽऽख्यातार्थाऽन्वयबोधपरत्वेन वा तण्डुलविशेष्यकाख्यातार्थान्वयबोधपरत्वेन वा 'पक्ष्यते' इत्याख्यातस्यागृह्यमाणत्वमेकमात्रविशेष्यकबोधप्रयोजकं नास्ति किं तूभयविशेष्यकाख्यातार्थान्वयबोधपरत्वेन गृह्यमाणत्वमेवास्तीति नोभयविशेष्यकाख्यातार्थप्रकारकशाब्दबोधस्यानुपपत्तिरित्यर्थः ।

ननु निरुक्तसंख्यानभिधानस्य=यदि कर्तृविशेष्यकसंख्यान्वयबुद्धित्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकीभूतविषयिताया अनिरूपकत्वं कर्तृपदात्तृतीयाप्रयोजकम्, तथा कर्मविशेष्यकसंख्यान्वयबुद्धित्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकीभूतविषयिताया अनिरूपकत्वं (उक्ततादृशसंख्यानभिधानं) कर्मवाचकपदाद् द्वितीयाप्रयोजकम् ( १८९ पृ० उक्तम् ) तदा 'चैत्रेण स्वं दृश्यते' इत्यत्राऽऽख्यातार्थसंख्यायाः स्वपदार्थेऽन्वयोस्तीति स्वपदार्थविशेष्यकसंख्याप्रकारकबोधो जायते स्वपदार्थश्चात्र चैत्र एव न त्वन्य इति संख्यायाः स्वपदार्थेऽन्वये चैत्रे एवान्वयो जातस्तथा च चैत्रविशेष्यकसंख्याप्रकारक एव बोधो जायते इति प्राप्तं तत्र चैत्रविशेष्यकसंख्याप्रकारकबोधौपयिकम्=बोधजनकं यदाकाङ्क्षाज्ञानं तन्निष्ठा या जनकतावच्छेदकीभूतविषयिता तादृशविषयिताया निरूपकत्वमेवात्राऽऽख्यातेऽस्ति (आख्यातस्यैव विषयत्वेनोक्तविषयितानिरूपकत्वात्) न त्वनिरूपकत्वं तृतीयाप्रयोजकमिति चैत्रपदात्तृतीयानुपपत्तिः-

**दितिवाच्यम्, कर्त्रादिपरयत्पदाख्यातपदयोः समभिव्याहारः संख्यान्वयबुद्धित्वावच्छिन्नप्रयोजकविषयित्वानिरूपकस्तत्पदोत्तरं तृतीयाविभक्तिरित्येवं नियमोपगमेन प्रथमस्थले चैत्रपरस्वपदाख्यातपदयोर्द्वितीये च तत्परचैत्राख्यातपदयोः समभिव्याहारस्यैव तद्विशेष्यकसंख्यान्वयबोधप्रयोजकतया क्रमेण चैत्रपदस्वपदाभ्यां तृतीयाद्वितीययोरनुपपत्त्यऽनवकाशादिति चेत्?,**

---

तत्प्रयोजकाभावात्— अर्थात् ' चैत्रेण स्वं दृश्यते ' इत्यत्राख्यातार्थसंख्यायाः स्वपदार्थेनान्वयो न चैत्रेणेति चैत्रपदात्तृतीया प्राप्तेत्युच्यते तत्र स्वपदार्थोऽपि चैत्र एवेत्याख्यातार्थसंख्यायाः स्वपदार्थेनान्वये चैत्रेणैवान्वयो जात इति तृतीया न स्यात् । तथा 'चैत्रः स्वं पश्यति' इत्यत्राख्यातार्थसंख्यायाश्चैत्रेणान्वयोस्तीति चैत्रविशेष्यकसंख्याप्रकारकबोधो जायते चैत्र एव चात्र स्वपदार्थ इति संख्यायायाश्चैत्रेऽन्वयेन स्वपदार्थे एवान्वयो जातः—अत्र चैत्रपदार्थस्वपदार्थयोरभेदात् तथा चात्र स्वपदार्थविशेष्यकसंख्याप्रकारक एव बोधो जायते इति प्राप्तं तत्र स्वपदार्थविशेष्यकसंख्याप्रकारकबोधौपयिकं यदाकाङ्क्षाज्ञानं तन्निष्ठा या उक्तबोधीयजनकताया अवच्छेदकीभूता विषयिता तादृशविषयिताया अत्राख्याते निरूपकत्वमेवास्ति न तु द्वितीयाप्रयोजकमनिरूपकत्वमिति स्वपदाद् द्वितीयानुपपत्तिः— द्वितीयाप्रयोजकाभावात्, अर्थात् ' चैत्रः स्वं पश्यति ' इत्यत्राख्यातार्थसंख्यायाश्चैत्रेणैवान्वयो न स्वपदार्थेनेति स्वपदाद् द्वितीया जातेत्युच्यते तत्र चैत्रपदार्थस्वपदार्थयोरभेदाच्चैत्रेणान्वये स्वपदार्थेनान्वयो जात एवेति स्वपदाद् द्वितीया न स्यादित्याशङ्क्ते— न चेति । परिहरति— कर्त्रादीति, कर्तृबोधकस्य यस्य पदस्याख्यातपदस्य च समभिव्याहारः संख्याप्रकारकशाब्दबोधप्रयोजकं यज्ज्ञानं तन्निष्ठविषयिताया अनिरूपकस्तस्मात् पदात् तृतीया भवतीति नियमस्तथा च प्रथमस्थले=' चैत्रेण स्वं दृश्यते ' इत्यत्र चैत्रपरं यत्स्वपदं तादृशस्वपदाख्यातपदयोः समभिव्याहारे स्वपदार्थविशेष्यकसंख्याप्रकारकशाब्दबोधस्यैव प्रयोजकतया स्वपदार्थविशेष्यकसंख्याप्रकारकशाब्दबोधप्रयोजकैतादृशसमभिव्याहारविषयकज्ञाननिष्ठविषयिताया एव निरूपकत्वमस्ति चैत्रविशेष्यकसंख्याप्रकारकशाब्दबोधजनकज्ञाननिष्ठविषयितायास्त्वनिरूपकत्वमेवास्तीति चैत्रपदात्तृतीयाया अनुपपत्तिर्नास्ति, तथा—कर्मबोधकस्य यस्य पदस्याख्यातपदस्य च समभिव्याहारः संख्याप्रकारकशाब्दबोधप्रयोजकज्ञाननिष्ठविषयिताया अनिरूपकस्तस्मात् पदाद् द्वितीया भवतीति नियमस्तथा च द्वितीये= ' चैत्रः स्वं पश्यति ' इतिस्थले कर्तृपरं यच्चैत्रपदं तादृशचैत्रपदाख्यातपदयोः समभिव्याहारस्य चैत्रविशेष्यकसंख्याप्रकारकशाब्दबोधस्यैव प्रयोजकतया चैत्रविशेष्यकसंख्याप्रकारकशाब्दबोधप्रयोजकैतादृशसमभिव्याहारविषयकज्ञाननिष्ठविषयिताया एव चैत्रपदाख्यातपदसमभिव्याहारे निरूपकत्वमस्ति स्वपदार्थविशेष्यकसंख्याप्रकारकशाब्दबोधजनकसमभिव्याहारज्ञाननिष्ठविषयितायास्त्वऽनिरूपकत्वमेवास्तीति स्वपदाद् द्वितीयानुपपत्तिर्नास्तीत्यर्थः ।

न- " अनभिहिते " इत्यधिकारे " कर्तृकरणयोस्तृतीया " इत्याद्यनुशासनस्य किं प्रयोजनमितिवक्तव्यम् । ' चैत्रः पचाति ' ' तण्डुलः पच्यते ' इत्यादौ चैत्रतण्डुलपदाभ्यां तृतीयाद्वितीययोरप्रयोग इति चेत् ? तत् किं मणिमन्त्रादिन्यायेन तादृशानुशासनस्य तथाविधप्रयोगविरोधिता येन तदभावस्तत्प्रयुक्तः स्यात्? न चैवं संभवति । ' पचति ' ' पच्यते ' इत्यादिक्रियायोगे कर्तृकर्मवाचकपदानन्तरतृतीयाद्वितीययोरसाधुत्वस्य तत्कर्तृत्वतत्कर्मत्वादिबोधौपयिकाकाङ्क्षादिरहितत्वादिरूपस्य प्रतिपत्तिः प्रयोजनं तस्येति चेत् ?, तर्हि- उक्तनियम

अथेत्यादिना प्रतिपादितं परिहरति- नेति । " अनभिहिते " इत्यधिकारे " कर्तृकरणयोस्तृतीया " " कर्मणि द्वितीया " इत्यनुशासनयोः पाठस्य प्रयोजनं पृच्छति- अनभिहितेति " अनभिहिते " इत्यधिकारे उक्तसूत्रयोः पाठेन कर्तुरनभिधाने तृतीया भवति यथा- ' चैत्रेण पच्यते ' इत्यत्र- आख्यातस्य कर्माभिधायकत्वात्, ' चैत्रः पचति ' इत्यत्र तृतीया न भवति आख्यातस्य कर्त्रऽभिधायकत्वात्, तथा ' तण्डुलं पचति ' इत्यत्र द्वितीया भवति- आख्यातस्य कर्मानभिधायकत्वात् ' तण्डुलः पच्यते ' इत्यत्र द्वितीया न भवति- आख्यातस्य कर्माभिधायकत्वादित्येव प्रयोजनमित्युत्तरमाशङ्कते- चैत्र इति । उत्तरमाह-तदिति, यदि मणिमन्त्रादिरीत्या तादृशानुशासनस्य=" कर्तृकरणयोस्तृतीया " " कर्मणि द्वितीया " इत्यनुशासनद्वयस्य तथाविधप्रयोगविरोधिता= ' चैत्रेण पचति ' ' तण्डुलं पच्यते ' इतिप्रयोगविरोधिता स्यात् ' चैत्रेण पचति ' ' तण्डुलं पच्यते ' इत्यादिप्रयोगाणामुच्चारणमेवाशक्यं स्यात् न चैवमस्त्यर्थः । तदभावः=' चैत्रेण पचति ' ' तण्डुलं पच्यते ' इतिप्रयोगाभावः । तत्प्रयुक्तः=" कर्तृकरणयोस्तृतीया " " कर्मणि द्वितीया " इत्यनुशासनप्रयुक्तः । ननु ' पचति ' इतिक्रियायोगे कर्तृवाचकचैत्रादिपदानन्तरं तृतीयाया असाधुत्वज्ञानमेव " अनभिहिते " इत्यधिकारे तत्र " कर्तृकरणयोः " इत्यनुशासनस्य प्रयोजनं तथा चासाधुत्वात् ' चैत्रेण पचति ' इति प्रयोगो न भवति किं तु ' चैत्रः पचति ' इति प्रयोगो भवति, तथा ' पच्यते ' इतिक्रियायोगे कर्मवाचकतण्डुलादिपदानन्तरं द्वितीयाया असाधुत्वज्ञानमेव " अनभिहिते " इत्यधिकारे तत्र " कर्मणि द्वितीया " इत्यनुशासनस्य प्रयोजनं तथा चाऽसाधुत्वात् ' तण्डुलं पच्यते ' इतिप्रयोगो न भवति किं तु ' तण्डुलः पच्यते ' इत्येव प्रयोगो भवतीत्याह-पचतीति । असाधुत्वस्वरूपमाह- तत्कर्तृत्वेति, अत्र च "तत्कर्तृत्वकर्मत्वादीति- पचतीत्यत्र पाककर्तृत्वबोधौपयिकाकाङ्क्षा प्रथमायामेवास्ति तृतीयायां तु पाककर्तृत्वादिबोधौपयिकाकाङ्क्षारहितत्वमस्ति तदेवाऽसाधुत्वम् ' चैत्रेण पचति' इति प्रयोगादिति भावः, एवम्-'पच्यते' इत्यत्र पाककर्मत्वबोधौपयिकाकाङ्क्षा प्रथमायामेवास्ति 'चैत्रेण तण्डुलः पच्यते' इतिप्रयोगात्. द्वितीयायां तु पाककर्मत्वबोधौपयिकाकाङ्क्षारहित्यरूपमसाधुत्वमस्ति ' तण्डुलं पच्यते ' इत्यप्रयोगात् " इति कृष्णंभट्टाः । उत्तरमाह- तर्हीति, उक्तानुशासनद्वयस्य उक्तनियमपरतयापि=कर्तृपरयत्पदाख्यातपदयोः समभिव्या

परतयापि न ततस्तल्लाभः । प्रथमान्तचैत्रतण्डुलादिपदतत्तदाख्यातपदयोः समभिव्याहारस्यैव चैत्रतण्डुलादिविशेष्यकतत्तदाख्यातार्थसंख्यान्वयबोधप्रयोजकतया 'चैत्रेण पचति' 'तण्डुलं पच्यते' इत्यादिवाक्यघटकचैत्रतण्डुलादिपदतिवादिपदयोः समभिव्याहारस्याऽतथात्वेन तद्घटकतृतीयाद्वितीययोः साधुत्वस्योक्त-

---

संख्यान्वयबुद्धित्वावच्छिन्नप्रयोजकविषयित्वानिरूपकस्तत्पदोत्तरं तृतीया तथा कर्मपरयत्पदाख्यातपदयोः समभिव्याहारः संख्यान्वयबुद्धित्वावच्छिन्नप्रयोजकविषयित्वानिरूपकस्तत्पदोत्तरं द्वितीया भवतीति नियमपरतयापि न ततः="कर्तृकरणयोः" इत्यनुशासनात् तल्लाभः='पचति' इतिक्रियायोगे कर्तृवाचकपदात्तृतीयाया असाधुत्वलाभस्तथा "कर्मणि द्वितीया" इत्यनुशासनात् 'पच्यते' इतिक्रियायोगे कर्मवाचकपदाद् द्वितीयाया असाधुत्वलाभ इत्यन्वयः । उक्ताऽसाधुत्वालाभमुपपादयति— प्रथमान्तेति, प्रथमान्तचैत्रपदपचतीत्याख्यातपदयोरेव समभिव्याहारस्य चैत्रविशेष्यकतत्तदाख्यातार्थसंख्याप्रकारकशाब्दबोधप्रयोजकत्वमस्ति तथा प्रथमान्ततण्डुलपदपच्यतेइत्याख्यातपदयोरेव समभिव्याहारस्य तण्डुलविशेष्यकतत्तदाख्यातार्थसंख्याप्रकारकशाब्दबोधप्रयोजकत्वमस्तीति 'चैत्रः पचति' 'तण्डुलः पच्यते' इत्यत्र चैत्रतण्डुलपदाभ्यां प्रथमैव भवति न तृतीयाद्वितीये, बोधस्य यद्विशेष्यकत्वमिष्टं भवति तद्वाचकपदात् प्रथमैवेति नियमात्, 'चैत्रेण पचति' 'तण्डुलं पच्यते' इत्यादिवाक्यघटकचैत्रतण्डुलादिपदतत्तदाख्यातपदयोः समभिव्याहारस्य अतथात्वेन=चैत्रतण्डुलविशेष्यकतत्तदाख्यातार्थसंख्याप्रकारकान्वयबोधाऽप्रयोजकत्वेन च 'चैत्रेण पचति' 'तण्डुलं पच्यते' इत्येतद्वाक्यघटकतृतीयाद्वितीययोः साधुत्वस्योक्तनियमाऽव्यवच्छेद्यत्वादित्यन्वयः, अयं भावः— उक्ततात्पर्येण हि यादृशचैत्रपदाख्यातपदयोः समभिव्याहारश्चैत्रविशेष्यकसंख्याप्रकारकशाब्दबोधाऽप्रयोजको भवति तादृशचैत्रपदात्तृतीया भवति तथा यादृशतण्डुलपदाख्यातपदयोः समभिव्याहारस्तण्डुलविशेष्यकसंख्याप्रकारकशाब्दबोधाऽप्रयोजको भवति तादृशतण्डुलपदाद् द्वितीया भवति यथा— 'चैत्रेण पच्यते' 'तण्डुलं पचति' इति लभ्यते, तथा च 'चैत्रेण पचति' इत्येतत्समभिव्याहारस्यापि चैत्रविशेष्यकसंख्याप्रकारकशाब्दबोधाप्रयोजकत्वादत्र चैत्रपदात्तृतीया स्यादेव एतादृशतृतीयायाः साधुत्वं च नोक्ततात्पर्यनियमव्यवच्छेद्यं भविष्यति—उक्ततात्पर्यनियमेनैवात्र तृतीयायाः प्राप्तत्वात्, तथा तण्डुलं पच्यते' इत्येतत्समभिव्याहारस्यापि तण्डुलविशेष्यकसंख्याप्रकारकशाब्दबोधाप्रयोजकत्वादत्र तण्डुलपदाद् द्वितीया स्यादेव एतद्द्वितीयायाः साधुत्वं च नोक्ततात्पर्यनियमव्यवच्छेद्यं भविष्यति— उक्ततात्पर्यनियमेनैवात्र द्वितीयायाः प्राप्तत्वादिति । उक्तं च कृष्णंभट्टैरपि— "कर्तृपरयत्पदाख्यातपदयोः समभिव्याहारः संख्यान्वयबुद्धित्वावच्छिन्नप्रयोजकविषयित्वानिरूपकस्तत्पदोत्तरं तृतीयादिविभक्तिरितिनियमवाक्यात् 'चैत्रेण पचति' इत्यत्र कर्तरि तृतीया न साध्वी 'तण्डुलं पच्यते' इत्यत्र कर्मणि द्वितीया न साध्वीत्यर्थो न प्रतीयते इति भावः"

नियमाऽव्यवच्छेद्यत्वात्. तस्मान्मुख्यभाक्तसाधारणकर्तृत्वकर्मत्वयोः कर्तृकर्म-वाचकपदसमभिव्याहृतलकृत्तद्धितसमासैरनभिधानमेव तृतीयाद्वितीयानियामकम्। शिरोमणिभिरप्यत्रैव निर्भरो विहितः।

लादीनां तदनभिधायकत्वं च न तदऽवाचकत्वं तन्निष्ठवृत्त्यनिरूपकत्वं वा आत्मनेपदस्याप्याख्यातत्वेन लत्वादिना वा कर्तृत्वादिनिष्ठशक्तिलक्षणानिरूपक-त्वात्, कर्तृत्वानभिधायकाख्यातस्यैवाप्रसिद्धेः।

तच्छाब्दबोधौपयिकाकाङ्क्षाशून्यत्वमेव तत् 'चैत्रेण पच्यते तण्डुलः' इत्याद

---

इति। उपसंहरति—तस्मादिति, कर्तृकर्मगतसंख्यानभिधानस्य तृतीयाद्वितीयानियामकत्वास-वात् कर्तृकर्मवाचकपदसमभिव्याहृतलकृत्तद्धितसमासैर्मुख्यभाक्तसाधारणकर्तृत्वकर्मत्वयोरेवाऽनभि- तृतीयाद्वितीययोर्नियामकमित्येव युक्तं तथा च 'पचति' इत्यत्र लकारेण कर्तृत्वाभिधानात् क- पदात् तृतीया न भवति किं तु प्रथमैव यथा— 'चैत्रः पचति' इति, 'पच्यते' इत्यत्र ल- रेण कर्तृत्वानभिधानात् तृतीया भवति यथा— 'चैत्रेण पच्यते' इति, तथा 'पच्यते' इ- लकारेण कर्मत्वाभिधानात् कर्मवाचकपदाद् द्वितीया न भवति किं तु प्रथमैव यथा— 'तण्डु- पच्यते' इति, 'पचति' इत्यत्र लकारेण कर्मत्वानभिधानात् कर्मवाचकपदाद् द्विती- भवति यथा—'तण्डुलं पचति' इति, एवं च 'चैत्रेण पचति' इतिप्रयोगस्य प्राप्तिर्नास्त्येव तृतीयाप्रयोजकस्यात्राख्याते कर्तृत्वानभिधानस्याभावात्, तथा 'तण्डुलं पच्यते' इतिप्रयो- स्यापि प्राप्तिर्नास्त्येव— द्वितीयाप्रयोजकस्यात्राख्याते कर्मत्वानभिधानस्याभावादिति सर्वं समञ्ज- अत्र शिरोमणिं प्रमाणयति— शिरोमणिभिरिति। 'चैत्रः पचति' इत्यत्र मुख्यं कर्तृत्व- 'जानाति' इत्यत्र भाक्तम्=गौणं कर्तृत्वम्, 'तण्डुलः पच्यते' इत्यत्र मुख्यं कर्मत्वम्, 'ज्ञायते घटः' इत्यादौ गौणं कर्मत्वमितिबोध्यम्। कर्तरि तिङ्—'पचति' इति, कर्म- तिङ् 'पच्यते' इति, कर्तरिकृत् 'कर्ता कटान्' इति तृच्, कर्मणि कृत् 'लक्ष्म्या सेवि- इति क्तः, कर्तरि तद्धितम्— 'पक्षिणो हन्ति पाक्षिकः' इति ठक्, कर्मणि तद्धि- 'शतेन क्रीतः शत्यः' इति यत्, कर्तरि समासः—'कृतं विश्रमनेनेति कृतविश्रो हरिः' कर्मणि समासः—'प्राप्त आनन्दो यं स प्राप्तानन्दः' इति, कर्तरिप्रत्ययस्थले कर्मत्वानभि- कर्मणि प्रत्ययस्थले कर्तृत्वानभिधानं बोध्यम्।

लादीनां तदनभिधायकत्वम्=कर्तृत्वकर्मत्वानभिधायकत्वं च न तदवाचकत्वम्-कर्तृत्वा- भिधायकाख्यातस्यैवाप्रसिद्धेः, न वा तन्निष्ठवृत्त्यनिरूपकत्वम्=कर्तृत्वादिनिष्ठवृत्त्यनिरूपकत्व- आत्मनेपदस्याप्याख्यातत्वेन रूपेण लत्वादिरूपेण वा कर्तृत्वादिनिष्ठशक्तिलक्षणारूपवृत्तिनिरू- कत्वादेव, अर्थविशेष्यकवृत्तिस्वीकारपक्षे वृत्तेराश्रयतासंबन्धेनार्थनिष्ठाया अर्थवाचकपदनि- त्वादेवेत्यर्थः।

तदनभिधायकत्वमाह—तच्छाब्दबोधेति, अस्य "इत्यपि न" इत्यनेनान्वयः। तच्छाब्दबोधौ

वाख्यातस्य कर्तृत्वादिवाचकत्वेपि तच्छाब्दबोधौपयिकाकाङ्क्षाराहित्यं तत्राक्षतमेव– चैत्रादिपदोत्तरतृतीययैव कर्तृत्वबोधनसंभवात् तत्र तादृशाकाङ्क्षाया अकल्पनात्, इत्यपि न– 'चैत्रेण पक्ष्यते' इत्यादौ तृतीयानुपपत्तेः, 'पक्ष्यते चैत्रः' इत्यादितश्चैत्रादौ पाककृतेः केवलात् 'पक्ष्यते' इत्यादितश्च मुख्यविशेष्यतया तस्या बोधात् तादृशाख्यातधात्वोरानुपूर्वीविशेषाकाङ्क्षायाः कृतिबोधौपयिकत्वात्।

---

काकाङ्क्षाशून्यत्वमेव=कर्तृविशेष्यकाख्यातार्थसंख्याप्रकारकशाब्दबोधजनकाकाङ्क्षाशून्यत्वमेव कर्तृत्वानभिधायकत्वं तथा च 'चैत्रेण पच्यते तण्डुलः' इत्यत्राख्यातस्य कर्मविशेष्यकसंख्याप्रकारकशाब्दबोधजनकाकाङ्क्षावत्त्वेन तच्छाब्दबोधौपयिकाकाङ्क्षाराहित्यम्=कर्तृविशेष्यकाख्यातार्थसंख्याप्रकारकशाब्दबोधजनकाकाङ्क्षाशून्यत्वं तत्र='पच्यते' इत्याख्यातेऽक्षतमेवेति न तृतीयाया अनुपपत्तिः। ननु यद्येतादृशाकाङ्क्षाशून्यत्वेनाख्यातस्यात्र कर्तृविशेष्यकबोधजनकत्वं न स्यात्तदा चैत्रस्य कर्तृत्वमपि न ज्ञातं स्यान्न चैवमस्तीत्याशङ्क्याह–'चैत्रादीति, 'चैत्रेण पच्यते' इत्यत्र न चैत्रस्य कर्तृत्वमाख्यातेन प्रतिपाद्यते किं तु चैत्रपदोत्तरतृतीययैवेति तृतीयया कर्तृत्वबोधनसंभवात्तत्र='पच्यते' इत्याख्याते तादृशाकाङ्क्षायाः=कर्तृविशेष्यकसंख्याप्रकारकबोधजनकाकाङ्क्षाया अकल्पनात्=कल्पनापेक्षाभावादित्यर्थः। यदा ह्याख्यातस्याख्यातत्वेन रूपेण वा लत्वादिना रूपेण वा कर्तृत्वादिवाचकत्वमस्ति तदा 'पच्यते' इत्याख्यातस्यापि कर्तृत्वादिवाचकत्वमक्षतमेव शक्ततावच्छेदकरूपेणाख्यातत्वेन लत्वादिना वा समाक्रान्तत्वादित्युक्तम्–कर्तृत्वादिवाचकत्वेपीति। एवं कर्मविशेष्यकसंख्याप्रकारकशाब्दबोधजनकाकाङ्क्षाशून्यत्वमेव कर्मत्वानभिधायकत्वं तदेव द्वितीयाप्रयोजकम्. यथा 'तण्डुलं पचति' इत्यत्राख्यातेस्ति। तच्छाब्दबोधेत्याद्युक्तं परिहरति–इत्यपि नेति, एवं हि 'चैत्रेण पक्ष्यते' इत्यत्र तृतीया न स्यात्–'पक्ष्यते' इति यथा कर्मणि लृटा भवति तथा कर्तर्यपि लृटा भवतीति 'पक्ष्यते' इत्याख्याते कर्तृविशेष्यकसंख्याप्रकारकशाब्दबोधजनकाकाङ्क्षायाः सत्त्वेन तृतीयाप्रयोजकं कर्तृविशेष्यकसंख्याप्रकारकशाब्दबोधजनकाकाङ्क्षाशून्यत्वं नास्तीति तृतीयानुपपत्तिरित्यर्थः। 'पक्ष्यते' इत्याख्यातस्य कर्तृविशेष्यकसंख्याप्रकारकशाब्दबोधजनकाकाङ्क्षावत्त्वमुपपादयति–पक्ष्यते चैत्र इत्यादिना, 'पक्ष्यते चैत्रः' इत्यत्र कृतिश्चैत्रे प्रकारीभूय भासते इति चैत्रविशेष्यककृतिप्रकारको बोधो जायते, केवलात्=चैत्रपदरहितात् 'पक्ष्यते' इतिपदाच्च मुख्यविशेष्यतया तस्याः=पाककृतेर्बोधो जायते कृतिश्च कर्तृत्वमेवेति कर्तृत्वविशेष्यकबोधस्य जायमानत्वात् तादृशाख्यातधात्वोः='पक्ष्यते' इत्याख्यातधात्वोरानुपूर्वीविशेषाकाङ्क्षायाः='पक्ष्यते' इत्यत्र वर्तमानाकाङ्क्षायाः कृतिबोधौपयिकत्वात्=कृतिविशेष्यकबोधजनकत्वात्. 'पक्ष्यते' इत्याख्याते कर्तृविशेष्यकसंख्याप्रकारकशाब्दबोधौपयिकाकाङ्क्षायाः सत्त्वेनैतादृशाकाङ्क्षाशून्यत्वरूपं कर्तृत्वानभिधायकत्वं तृतीयाप्रयोजकं नास्तीति 'चैत्रेण पक्ष्यते' इत्यादौ तृतीयानुपपत्तिरित्यर्थः। "पाककृतेः" इत्यस्य "बोधात्" इत्यनेनान्वयः।

**न च समभिव्याहाररूपाकाङ्क्षैव विवक्षणीया प्रकृते च प्रकृतिप्रत्यययोरानुपूर्वी रूपाकाङ्क्षा न तु समभिव्याहार इति नोक्तानुपपत्तिरिति वाच्यम्, तथा सति 'चैत्रेण पचति' इत्यादावपि तृतीयायाः साधुतापत्तेः- तादृशचैत्रपदाख्यातपदयोः समभिव्याहारस्य कृतिबोधानौपयिकत्वात् । 'चैत्रेण विजेष्यते मैत्रः' इत्यादौ तृतीयानुपपत्तेश्च-'विजेष्यते मैत्रः' इत्यादितो मैत्रकृतिबोधात् तादृशाख्यातपदमैत्रपदयोः समभिव्याहारस्य कृतिबोधौपयिकत्वात् ।**

ननु "तच्छाब्दबोधौपयिकाकाङ्क्षाशून्यत्वं तदनभिधायकत्वम्" इत्यत्राकाङ्क्षापदेन समभिव्याहाररूपैवाऽऽकाङ्क्षा गृह्यते न तु प्रकृतिप्रत्यययोरानुपूर्वीरूपा, तत्र प्रकृतिप्रत्यययोः पूर्वापरीभावे वैपरीत्यं नैव संभवति-प्रकृत्यव्यवहितोत्तरमेव प्रत्ययसंभवाद् यथा 'पचति पक्ष्यते' इत्यादौ इत्येषा पूर्वापरीभावरूपाकाङ्क्षास्ति, समभिव्याहारे तु पूर्वापरीभावस्य वैपरीत्यमपि भवति यथा-'पचति चैत्रः' इत्यपि वक्तुं शक्यते 'चैत्रः पचति' इत्यपि वक्तुं शक्यते इति, तथा च कर्तृविशेष्यकसंख्याप्रकारकशाब्दबोधजनकसमभिव्याहाररूपाकाङ्क्षाशून्यत्वं तृतीयाप्रयोजकमस्ति कर्तृविशेष्यकसंख्याप्रकारकशाब्दबोधजनकसमभिव्याहारश्च प्रथमान्तचैत्रपदसमभिव्याहृताख्यातसमभिव्याहार एव. प्रकृते 'चैत्रेण पक्ष्यते' इत्यत्र च प्रकृतिप्रत्यययोरानुपूर्वीरूपा 'पक्ष्यते' इत्याकाङ्क्षैवास्ति न तु समभिव्याहारः=प्रथमान्तचैत्रपदसमभिव्याहृताख्यातसमभिव्याहार इत्येतादृशसमभिव्याहारशून्यत्वं तृतीयाप्रयोजकम् 'चैत्रेण पक्ष्यते' इत्यत्रास्त्येवेति नोक्तानुपपत्तिः=तृतीयानुपपत्तिरित्याशङ्कते-न चेति । परिहरति-तथा सतीति तथा सति=यदि कर्तृविशेष्यकसंख्याप्रकारकशाब्दबोधजनकसमभिव्याहारशून्यत्वमेव तृतीयाप्रयोजकं तदैतादृशसमभिव्याहारशून्यत्वं तु 'चैत्रेण पचति' इत्यत्राप्यस्त्येव तादृश='चैत्रेण पचति' इत्याकारकतृतीयान्तचैत्रपदाख्यातपदयोः समभिव्याहारस्य कृतिबोधानौपयिकत्वात् कर्तृत्वबोधाजनकत्वादत्र कर्तृविशेष्यकशाब्दबोधजनकसमभिव्याहारशून्यत्वं तृतीयाप्रयोजकमस्त्येवेति तृतीयायाः साधुत्वं स्यादेव. न चैतदिष्टमित्यर्थः । किं च कर्तृविशेष्यकसंख्याप्रकारकशाब्दबोधजनकसमभिव्याहारशून्यत्वं यदि तृतीयाप्रयोजकं स्यात्तदा 'चैत्रेण विजेष्यते मैत्रः' इत्यत्र तृतीयाप्रयोजकस्य तादृशसमभिव्याहारशून्यत्वस्याऽभावात् तृतीया न स्यात्, 'विजेष्यते मैत्रः' इतिसमभिव्याहारात् मैत्रकृतिबोधात्=कर्तृविशेष्यकबोधस्य जायमानत्वात् तादृश='विजेष्यते मैत्र' इत्याकारकाख्यातमैत्रपदयोः समभिव्याहारस्य कृतिबोधौपयिकत्वात्=कर्तृविशेष्यकबोधजनकत्वात् एतादृश ( विजेष्यते मैत्र इत्याकारक ) कर्तृविशेष्यकशाब्दबोधजनकसमभिव्याहारशून्यत्वं 'चैत्रेण विजेष्यते मैत्रः' इत्यत्र नास्ति तादृशसमभिव्याहारघटितत्वादेवेति चैत्रपदात्तृतीया न स्यादित्यर्थः ।

तस्मात् तच्छाब्दबोधौपयिकाकाङ्क्षाशून्यत्वं कर्तृत्वकर्मत्वानभिधायकत्वं न संभवति किं तु तत्तात्पर्यशून्यत्वम्=कर्तृविशेष्यकशाब्दबोधविषयकतात्पर्यशून्यत्वमेव कर्तृत्वानभिधायकत्वं तदे-

**किं तु तत्तात्पर्यशून्यत्वमेव तथा च 'चैत्रेण पक्ष्यते' इत्यादावाख्यातस्य कर्तृत्वादितात्पर्यकत्वे तृतीयाऽसाधुरेव, तथा च 'चैत्रेण पचति' इत्यादावाख्यातस्याऽर्थाविवक्षायां तृतीयायाः साधुत्वेपि परस्मैपदस्याऽसाधुत्वान्न प्रयोगः । परस्मैपदस्यासाधुत्वं च धात्वर्थविशेष्यस्य प्रत्ययेनाऽविवक्षणे "भावकर्मणोः" इतिसूत्रेणात्मनेपदनियमात् । आख्यातार्थविवक्षायां न 'चैत्रेण पचते' इत्यादिप्रयोगः- शबादिविकरणस्याऽसाधुत्वात्, कर्तृत्वतात्पर्यकसार्वधातुकयोगे एव तत्साधुत्वात् ।**

**कर्तृत्वकर्मत्वोभयतात्पर्येण 'मैत्रः पक्ष्यते तण्डुलः' इत्यादयस्तु न प्रयोगाः-**

तृतीयाप्रयोजकम्, कर्मविशेष्यकशाब्दबोधविषयकतात्पर्यशून्यत्वमेव कर्मत्वानभिधायकत्वं तदेव द्वितीयाप्रयोजकमित्याह- किं त्विति, तथा च 'पक्ष्यते' इतिप्रयोगः कर्तर्यपि लृटा भवति कर्मण्यपि लृटा भवति तत्र 'चैत्रेण पक्ष्यते' इत्यत्राख्यातस्य कर्तृविशेष्यकशाब्दबोधविषयकतात्पर्यविशिष्टत्वे तृतीयाप्रयोजकस्य कर्तृविशेष्यकशाब्दबोधविषयकतात्पर्यशून्यत्वस्याभाववत्त्वादसाधुरेव ( असाध्वेव ) तृतीया, यदा चाख्यातस्याऽत्र कर्मविशेष्यकशाब्दबोधविषयकतात्पर्यविशिष्टत्वं तदा कर्तृविशेष्यकशाब्दबोधविषयकतात्पर्यशून्यत्वात्तृतीया साधुरेवेत्यर्थः । 'चैत्रेण पचति' इत्यत्राख्यातार्थस्य कर्तृत्वस्याविवक्षायाम्=कर्तृविशेष्यकशाब्दबोधविषयकतात्पर्यस्यासत्त्वे तृतीयायाः साधुत्वसंभवेपि परस्मैपदस्य साधुत्वं न संभवतीति परस्मैपदप्रयोगो न संभवतीत्याह- तथाचेति । अत्र परस्मैपदस्य कथमसाधुत्वमित्याह- परस्मैपदस्यासाधुत्वं चेति, 'चैत्रेण पचति' इत्यत्र धात्वर्थस्य पाकस्य विशेष्यभूतायाः कृतेराख्यातप्रत्ययेनाविवक्षायां भावस्य वा कर्मत्वस्य वा विवक्षा स्यादेव- आख्यातस्य निरर्थकत्वासंभवात् तत्र च "भावकर्मणोः" इतिसूत्रेणात्मनेपदं प्राप्नोतीति परस्मैपदस्याऽसाधुत्वं स्यादेवेति न 'चैत्रेण पचति' इतिप्रयोगापत्तिरत्र तृतीयापत्तिर्वेत्यर्थः । ननु यदि 'चैत्रेण पचति' इत्यत्र परस्मैपदस्यासाधुत्वमात्मनेपदप्राप्तेस्तदात्मनेपदेन 'चैत्रेण पचते' इतिप्रयोगः स्यादेव न चैतदिष्टमित्याशङ्क्याह- आख्यातार्थविवक्षायामिति, आत्मनेपदाख्याते कर्तृविशेष्यकबोधस्य कर्मविशेष्यकबोधस्य भावविशेष्यकबोधस्य च सामर्थ्यमस्त्येवेति 'चैत्रेण पचते' इत्यत्राख्यातार्थविवक्षायाम्=आख्यातार्थस्य कर्मत्वस्य भावस्य वा विशेष्यतया विवक्षायामात्मनेपदस्य साधुत्वेपि विकरणस्य शप्प्रत्ययस्य साधुत्वं न संभवति- कर्तृत्वतात्पर्यकसार्वधातुकाख्यातयोगे एव तत्साधुत्वात्=शपः साधुत्वात् "कर्तरि शप्" इत्यनुशासनात्, आख्यातार्थस्य कर्तृत्वस्य विशेष्यतया विवक्षायां चात्मनेपदस्य शपश्च साधुत्वेपि तृतीयायाः साधुत्वं न संभवति- कर्तृविशेष्यकत्वाविवक्षायामेव कर्तृविशेष्यकशाब्दबोधविषयकतात्पर्यशून्यत्वस्य तृतीयाप्रयोजकत्वस्य संभवेन तृतीयायाः साधुत्वात् कर्तृविशेष्यकत्वविवक्षायां चाऽसाधुत्वादिति न 'चैत्रेण पचते' इत्यपि प्रयोगो भवतीत्यर्थः ।

कर्तृत्वेति- कर्तृत्वकर्मत्वोभयविशेष्यकशाब्दबोधतात्पर्येण 'मैत्रः पक्ष्यते तण्डुलः' इत्यादिप्रयोगो न भवति- तदेकतरबोधे=कर्तृकर्मणोर्मध्ये एकतरविशेष्यकाख्यातार्थप्रकारकशाब्दबोधे

तदेकतरबोधेऽन्यतरपरत्वेनागृह्यमाणाख्यातधर्मिकप्रकृतान्वयबोधपरत्वज्ञानस्य हेतुत्वात्। 'चैत्रेण पक्ष्यते तण्डुलः' इत्यादौ कर्त्तृत्वादावाख्यातस्य तात्पर्यग्रहे कर्मत्वाद्यन्वयबोधोपि न भवत्येव।

अथ 'पक्कानि भुङ्क्ते चैत्रः' 'ओदनः पक्त्वा भुज्यते' इत्यादौ कृता क्रमेण कर्तृत्वकर्मत्वानभिधानात् चैत्रपदौदनपदाद्युत्तरं तृतीयाद्वितीये कथं न स्याताम्?। न च कृताऽनभिधानेप्याऽऽख्यातेन तदभिधानान्नाऽनभिहितत्वम्–समभिव्याहृतपदाभिहितत्वसामान्याभावस्यैवाऽनभिहितपदेन विवक्षणात्. समभिव्याहृतेति-

---

ह्यन्यपरत्वेन=कर्तृकर्मणोर्मध्ये ह्यन्यपरत्वेनाऽगृह्यमाणं यदाख्यातधर्मिकमाऽऽख्यातविषयकं प्रकृतान्वयबोधपरत्वज्ञानं प्रकृतशाब्दबोधपरत्वज्ञानं तस्य हेतुत्वाद् यथात्र कर्तृविशेष्यकाख्यातार्थप्रकारकशाब्दबोधे कर्मविशेष्यकशाब्दबोधपरत्वेनागृह्यमाणं यदाख्यातं पक्ष्यते इत्याख्यातं तादृशाख्यातधर्मिकं तादृशाख्यातविषयकं यत्प्रकृतान्वयबोधपरत्वज्ञानं इदमाख्यातं कर्तृविशेष्यकबोधजनकमितिज्ञानं तस्य हेतुत्वादेक ( कर्तृ ) विशेष्यक एव बोधो जायते एवं कर्मविशेष्यकबोधपक्षेपि ज्ञेयम्– तथा च कर्तृविशेष्यकबोधविवक्षायाम् 'मैत्रः पक्ष्यते तण्डुलम्' इत्येव भवति–आख्यातस्य कर्तृत्वाभिधायकत्वेन मैत्रपदात् प्रथमायाः कर्मत्वानभिधायकत्वेन तण्डुलपदाच्च द्वितीयायाः प्राप्तेः, कर्मविशेष्यकबोधविवक्षायां च 'मैत्रेण पक्ष्यते तण्डुलः' इत्येव भवति–आख्यातस्य कर्मत्वाभिधायकत्वेन तण्डुलपदात् प्रथमायाः कर्तृत्वानभिधायकत्वेन मैत्रपदाच्च तृतीयायाःप्राप्तेरित्यर्थः। फलमाह–चैत्रेणेति, 'पक्ष्यते' इत्याख्यातस्य कर्तृत्वे तात्पर्यग्रहे कर्मत्वविशेष्यकबोधो न भवति कर्मत्वे तात्पर्यग्रहे कर्तृत्वविशेष्यकबोधो न भवति–एकविशेष्यकबोधपरत्वस्याऽपरविशेष्यकबोधे प्रतिबन्धकत्वादित्यर्थः। यद्यपि 'चैत्रेण पक्ष्यते तण्डुलः' इत्यत्र कर्मविशेष्यकबोध इष्ट एव तथाप्यत्राख्यातस्य कर्तृत्वे तात्पर्यग्रहे जाते कर्मत्वाद्यन्वयबोधः=कर्मत्वप्रकारककर्मव्यक्तिविशेष्यकोपि बोधो न जायते– तत्प्रतिबन्धकस्य कर्तृत्वपरत्वतात्पर्यग्रहस्य सत्त्वादित्यभिप्रायेणोक्तम्–कर्तृत्वादाविति। इदं च पूर्वमपि ( १८९पृ. ) व्याकृतम्।

ननु यदि कर्तृत्वानभिधाने तृतीया भवति तदा 'पक्कानि फलानि भुङ्क्ते चैत्रः' इत्यत्र पक्कपदघटकक्तप्रत्ययस्य कर्मत्वाभिधायकत्वेन कर्तृत्वानभिधायकत्वादत्र चैत्रपदात्तृतीया कथं न स्यात्? तथा यदि कर्मत्वानभिधाने द्वितीया भवति तदा 'ओदनः पक्त्वा भुज्यते' इत्यत्र क्त्वाप्रत्ययस्य कर्तृत्वाभिधायकत्वेन कर्मत्वानभिधायकत्वादत्रौदनपदाद् द्वितीया कथं न स्यादित्याशङ्कते–अथेति। ननु 'कर्तृत्वानभिधाने तृतीया कर्मत्वानभिधाने च द्वितीया' इत्यत्रानभिहितपदेन कर्तृकर्मवाचकपदसमभिव्याहृतपदाभिहितत्वसामान्याभावो विवक्षितः–अर्थात् कर्तृकर्मवाचकपदेन सह समभिव्याहृतेन केनापि पदेन यदि कर्तृत्वकर्मत्वयोरभिधानं न भवति तदा कर्तृपदात्तृतीया कर्मपदाद्द्वितीया भवति तथा च 'पक्कानि भुङ्क्ते चैत्रः' इत्यत्र कृता=क्त-

करणाच्च 'चैत्रेण गम्यते ग्रामस्तं मैत्रो गच्छति' इत्यादौ न तृतीयाद्वितीययोरनुपपत्तिः- 'गच्छति' 'गम्यते' इत्याख्यातस्य तत्तत्पदासमभिव्याहृतत्वादिति वाच्यम्, तथा सति 'भुञ्जानेन चैत्रेण पच्यते' 'भोक्तव्यमोदनं पचति' इत्यादौ तृतीयाद्वितीययोरनुपपत्तिः- कृता कर्तृत्वकर्मत्वयोरभिधानात् ।

कृता तत्र भोजनकर्तृत्वतत्कर्मत्वयोरभिधानेपि पाककर्तृत्वं तत्कर्मत्वं चानभिहितमेवेति चेत् ?, तर्हि प्रकृतेपि तदनभिहितमेव ।

---

त्येन कर्तृत्वस्यानभिधानेप्याऽऽख्यातेनाभिधानमस्त्येवेत्यभिहितत्वसामान्याभावस्य तृतीयाप्रयोजकस्याभावान्न चैत्रपदात्तृतीयापत्तिः, एवम् 'ओदनः पक्त्वा भुज्यते' इत्यत्र क्त्वाप्रत्ययेन कर्मत्वस्यानभिधानेप्याख्यातेनाभिधानमस्त्येवेत्यभिहितत्वसामान्याभावस्य द्वितीयाप्रयोजकस्याभावान्नौदनपदाद्द्वितीयापत्तिरित्याशङ्कते-नचेति । अत्र यदि 'पदाभिहितत्वसामान्याभावस्यैवाऽनभिहितपदेन विवक्षणात्' इत्येवोच्येत तदा 'चैत्रेण गम्यते ग्रामः, तम् (ग्रामम्) मैत्रो गच्छति' इत्यत्र गच्छतिपदेन कर्तृत्वस्याभिधानादनभिधानं तृतीयाप्रयोजकं नास्तीति चैत्रपदात्तृतीया न स्यात्तथा गम्यतेपदेन कर्मत्वस्याभिधानादनभिधानं द्वितीयाप्रयोजकं नास्तीति तमितितत्पदाद् द्वितीया न स्यादितिदोषपरिजिहीर्षया समभिव्याहृतेतिक्तम्=" समभिव्याहृतपदाभिहितत्वसामान्याभावस्य " इत्येवमुक्तं तथा चात्र 'चैत्रेण गम्यते ग्रामः' इति पृथक् वाक्यम् 'तं मैत्रो गच्छति' इति च पृथक् वाक्यं तथा च गच्छतीतिपदेन कर्तृत्वस्याभिधानेपि 'गच्छति' इत्याख्यातस्य तत्पदाऽसमभिव्याहृतत्वात्=चैत्रपदेन सह समभिव्याहाराभावात्-वाक्यान्तरघटकत्वाद् न गच्छतीत्याख्यातकृतकर्तृत्वाभिधानमाश्रित्य चैत्रपदात्तृतीयानुपपत्तिः, तथा गम्यते इतिपदेन कर्मत्वस्याभिधानेपि 'गम्यते' इत्याख्यातस्य वाक्यान्तरघटकत्वेन तत्पदासमभिव्याहृतत्वात्-तत्पदेन सह समभिव्याहाराभावाद् न गम्यतेइत्याख्यातकृतकर्मत्वाभिधानमाश्रित्य वाक्यान्तरस्थतत्पदाद् द्वितीयानुपपत्तिरित्याह-समभिव्याहृतेतिकरणाच्चेति । परिहरति-तथा सतीति, यदि समभिव्याहृतपदैः कर्तृत्वाभिधानसामान्याभावस्य तृतीयाप्रयोजकत्वमुच्यते तदा 'भुञ्जानेन चैत्रेण पच्यते' इत्यत्रापि चैत्रपदात्तृतीया न स्यादेव-अत्र पच्यतेपदेन कर्तृत्वस्यानभिधानेपि भुञ्जानपदेन कर्तृत्वाभिधानस्य तृतीयाप्रतिबन्धकस्य सत्त्वादेव-शानच्प्रत्ययस्य कर्तरि वर्तमानत्वात् । तथा यदि समभिव्याहृतपदैः कर्मत्वाभिधानसामान्याभावस्य द्वितीयाप्रयोजकत्वमुच्यते तदा 'भोक्तव्यमोदनं पचति' इत्यत्राप्योदनपदाद् द्वितीया न स्यादेव-अत्र पचतीतिपदेन कर्मत्वस्यानभिधानेपि भोक्तव्यपदेन कर्मत्वाभिधानस्य द्वितीयाप्रतिबन्धकस्य सत्त्वादेव-तव्यप्रत्ययस्य कर्मणि वर्तमानत्वादिति " समभिव्याहृतपदाभिहितत्वसामान्याभावस्य " इत्यादिव्युत्पादनमपि न युक्तमित्यर्थः ।

ननु 'भुञ्जानेन चैत्रेण पच्यते' इत्यत्र भुञ्जानपदेन भोजनकर्तृत्वस्याभिधानेपि पच्यते इति पदेन पाककर्तृत्वं त्वभिहितं नास्तीति तादृशपाककर्तृत्वानभिधानमाश्रित्यैवात्र चैत्रपदात्तृतीया प्राप्ता साध्वी च, तथा 'भोक्तव्यमोदनं पचति' इत्यत्र भोक्तव्यपदेन भोजनकर्मत्वस्याभि-

न च प्रधानक्रियानिरूपितकर्तृत्वाद्यनभिधाने तृतीयादेः साधुतेति तदुक्तम्- "प्रधानशक्त्यऽभिधाने गुणशक्तिरभिहितवत् प्रकाशते" इति शक्तिः=कर्तृत्वादिकमिति वाच्यम्, तथापि 'चैत्रेण दृश्यमानं घटं मैत्रः पश्यति' इत्यादौ ज्ञानभे-

धानेपि पचतीतिपदेन पाककर्मत्वं त्वभिहितं नास्तीति तादृशपाककर्मत्वानभिधानमाश्रित्यैवात्रौदनपदाद् द्वितीया प्राप्ता साध्वी चेत्याह- कृतेति । अथेतिपूर्वपक्षी समाधत्ते- तर्हीति । प्रकृतेपि=' पक्वानि भुङ्क्ते चैत्रः ' इत्यत्रापि भुङ्क्तेइतिपदेन भोजनकर्तृत्वाभिधानेपि पक्वानीतिपदेन पाककर्तृत्वं त्वभिहितं नास्ति क्तप्रत्ययस्य कर्मणि सत्त्वादिति तादृशपाककर्तृत्वानभिधानमाश्रित्य चैत्रपदात्तृतीया स्यादेव तथा ' ओदनः पक्त्वा भुज्यते ' इत्यत्रापि भुज्यते इतिपदेन भोजनकर्मत्वाभिधानेपि पक्त्वेतिपदेन पाककर्मत्वं त्वभिहितं नास्ति क्त्वाप्रत्ययस्य कर्मण्यऽसत्त्वादिति तादृशपाककर्मत्वानभिधानमाश्रित्यौदनपदाद् द्वितीया स्यादेवेत्यथेत्याद्युक्तशङ्का तदवस्थैवेत्यर्थः । तत्=पाककर्तृत्वं पाककर्मत्वं च ।

ननु प्रधानक्रियानिरूपितस्य कर्तृत्वस्यानभिधाने तृतीया कर्मत्वस्यानभिधाने च द्वितीया भवति साध्वी च प्रधानक्रियानिरूपितस्य कर्तृत्वस्य कर्मत्वस्य चाऽभिधाने गौणक्रियानिरूपितमपि कर्तृत्वं कर्मत्वं चाऽभिहितवदेव भवति तथा प्रधानक्रियानिरूपितस्य कर्तृत्वस्य कर्मत्वस्य चाऽनभिधाने गौणक्रियानिरूपितमपि कर्तृत्वं कर्मत्वमऽनभिहितवदेव भवति, उक्तं च " प्रधानशक्त्यभिधाने " इत्यादिना, प्रधानशक्तेः=प्रधानक्रियानिरूपितस्य कर्तृत्वस्य कर्मत्वत्वाऽभिधाने सति गुणशक्तिः=गौणक्रियानिरूपितमपि कर्तृत्वं कर्मत्वमऽभिहितवदेव भवतीत्यर्थः, उक्तं च हरिणा-

" प्रधानेतरयोर्यत्र द्रव्यस्य क्रिययोः पृथक् ।
शक्तिः, गुणाश्रया तत्र प्रधानमनुरुध्यते ॥
उक्तमेवोक्ततां याति क्वचिदुक्तमनुक्तताम् ।
अनुक्तमपि नोक्तं स्यात् क्वचिदेव पदान्तरैः ॥" इति ।

तथा च ' पक्वानि भुङ्क्ते चैत्रः ' इत्यत्र प्रधानीभूतभोजनक्रियानिरूपितकर्तृत्वस्याभिहितत्वाद् गौणीभूतपाकक्रियानिरूपितकर्तृत्वमप्यभिहितवदेव प्रकाशते इति प्रधानीभूतभोजनक्रियानिरूपितकर्तृत्वानभिधानस्य तृतीयाप्रयोजकस्याभावान्नात्र चैत्रपदात्तृतीयापत्तिः, तथा ' ओदनः पक्त्वा भुज्यते ' इत्यत्र प्रधानीभूतभोजनक्रियानिरूपितकर्मत्वानभिधानस्य द्वितीयाप्रयोजकस्याभावान्नात्रौदनपदाद् द्वितीयापत्तिः । ' भुञ्जानेन चैत्रेण पच्यते ' इत्यत्र च प्रधानीभूतपाकक्रियानिरूपितकर्तृत्वानभिधानस्य तृतीयाप्रयोजकस्य सत्त्वान्न चैत्रपदात्तृतीयानुपपत्तिः तथा 'भोक्तव्यमोदनं पचति' इत्यत्र प्रधानीभूतपाकक्रियानिरूपितकर्मत्वानभिधानस्य द्वितीयाप्रयोजकस्य सत्त्वान्नात्रौदनपदाद् द्वितीयानुपपत्तिरित्याशङ्क्याह-नचेति । परिहरति- तथापीति ज्ञानभेदेपि ज्ञेयपदार्थनिष्ठकर्मत्वरूपविषयताया भेदो न भवतीति'चैत्रेण दृश्यमानं घटं मैत्रः पश्यति

देनविषयताभेदाभावात् चैत्रदर्शनमैत्रदर्शनोभयनिरूपिताविषयत्वरूपकर्मतायाः कृताऽभिधानाद् द्वितीयानुपपत्तिः, इति चेत् ?,

न, तत्तत्प्रातिपदिकार्थविशेषणत्वमात्रेण कर्तृत्वकर्मत्वाद्यविवक्षाया एव तदनभिधानपदार्थत्वात्, तत्तत्प्रातिपदिकार्थविशेष्यतया कर्मत्वकर्तृत्वादिविवक्षायां द्वितीयादिविभक्तेः साधुत्वमित्यर्थे तात्पर्यस्य पर्यवसितत्वात् । शेषमाख्यातार्थविचारावसरे विवेचयिष्यत इत्यलमत्राधिक्येन ।

---

इत्यत्र मैत्रकर्तृकप्रधानीभूतदर्शनक्रियानिरूपितं विषयत्वरूपं कर्मत्वं चैत्रकर्तृकगुणीभूतदर्शनक्रियानिरूपितं विषयत्वरूपं कर्मत्वं च घटे एकमेव तच्च 'दृश्यमानम्' इतिकृताऽभिहितमेवेति प्रधानक्रियानिरूपितकर्मत्वस्यात्राभिहितत्वेनाऽनभिहितत्वं द्वितीयाप्रयोजकं नास्तीति घटपदाद् द्वितीया न स्यादेवेतिदोषः । दर्शनमपि दर्शनत्वेन रूपेणैकमेवेति विज्ञेयम् ।

अथेत्यादिनाशङ्कितं परिहरति– नेति, तत्तत्प्रातिपदिकार्थविशेषणत्वेन या कर्तृत्वस्याऽविवक्षा तदेव कर्तृत्वानभिधानम्, तत्तत्प्रातिपदिकार्थविशेषणत्वेन या कर्मत्वस्याविवक्षा तदेव कर्मत्वानभिधानम्, तस्मात् कर्तृत्वस्य तत्तत्प्रातिपदिकार्थस्य विशेषणत्वेनाऽविवक्षायां विशेष्यत्वेन विवक्षायां च कर्तृवाचकपदात् तृतीया भवति तथा च 'चैत्रेण पच्यते' इत्यत्र तृतीयार्थस्य कर्तृत्वस्य चैत्ररूपप्रातिपदिकार्थस्य विशेषणतया विवक्षा नास्ति किं तु विशेष्यतयैव विवक्षास्ति कर्तृत्वस्य प्रत्ययार्थत्वेन प्रधानत्वात् "प्रकृतिप्रत्ययार्थौ सहार्थं ब्रूतस्तयोः प्रत्ययार्थस्य प्राधान्यम्" इति न्यायात् चैत्रपदात्तृतीया जाता साध्वी च, एवम् 'भुञ्जानेन चैत्रेण पच्यते' 'चैत्रेण दृश्यमानम्' इत्यादिष्वपि कर्तृत्वस्य प्रातिपदिकार्थविशेष्यत्वात् तृतीयोपपत्तिर्ज्ञेया । एवं कर्मत्वस्य तत्तत्प्रातिपदिकार्थस्य विशेषणत्वेनाऽविवक्षायां विशेष्यत्वेन विवक्षायां च कर्मवाचकपदाद् द्वितीया भवति यथा 'तण्डुलं पचति' इत्यत्र द्वितीयार्थस्य कर्मत्वस्य तण्डुलरूपप्रातिपदिकार्थस्य विशेषणतया विवक्षा नास्ति किं तु विशेष्यतयैव विवक्षास्ति कर्मत्वस्य प्रत्ययार्थत्वेन प्रधानत्वादिति तण्डुलपदाद् द्वितीया जाता, एवमेव 'भोक्तव्यमोदनं पचति' 'चैत्रेण दृश्यमानं घटं मैत्रः पश्यति' इत्यादिष्वपि कर्मत्वस्य प्रातिपदिकार्थविशेष्यत्वाद् द्वितीयोपपत्तिर्ज्ञेया । 'चैत्रः पचति' 'पक्वानि भुङ्क्ते चैत्रः' इत्यत्र चैत्रपदोत्तरप्रथमार्थो न कर्तृत्वं येन कर्तृत्वस्य प्राधान्येन विशेष्यत्वं स्यात् किं तु चैत्ररूपप्रातिपदिकार्थविशेषणत्वमेवास्ति कृतिमांश्चैत्र इत्याकारकबोधोदयादिति नात्र कर्तृवाचकचैत्रपदात्तृतीयापत्तिः । तथा– 'तण्डुलः पच्यते' 'ओदनः पक्त्वा भुज्यते' इत्यादौ तण्डुलादिपदोत्तरप्रथमार्थो न कर्मत्वं येन तस्य प्राधान्येन विशेष्यत्वं स्यात् किं तु तण्डुलादिरूपप्रातिपदिकार्थविशेषणत्वमेव विक्लित्त्याश्रयस्तण्डुल इत्याकारकबोधोदयादिति नात्र कर्मवाचकतण्डुलादिपदाद् द्वितीयापत्तिरित्यर्थः । उक्तमेव स्पष्टयति– तत्तत्प्रातिपदिकार्थविशेष्यतयेति, 'चैत्रेण पच्यते तण्डुलः' इत्यादौ चैत्रादिवृत्तिकृतिजन्यव्यापारजन्यविक्लित्त्याश्रयस्तण्डुलः' इत्याद्याकारकबोधोदयाच्चैत्रादिविशेष्यत्वेन कर्तृत्वम्=कृतिर्भासते इति चैत्रादिपदात्तृतीया जाता । 'तण्डुलं पचति चैत्रः' इत्यादौ

आख्यातद्विवचनबहुवचनयोस्तु संख्याबोधकत्वमावश्यकम्- 'चैत्रो मैत्रश्च गच्छतः' 'चैत्रो मैत्रो देवदत्तश्च गच्छन्ति' इत्यादौ

"चन्द्रे कलङ्कः सुजने दरिद्रता विकाशलक्ष्मीः कमलेषु चञ्चला ।
मुखाप्रसादः सधनेषु सर्वदा यशो विधातुः कथयन्ति खण्डितम् ॥"

इत्यादौ च द्वित्वबहुत्वबोधकसुपोऽभावात् ।

न च तत्र सुबेकवचनस्यैव द्वित्वबहुत्वादौ लक्षणास्त्विति वाच्यम्, आनुशासनिकातिरिक्तार्थे सुब्विभक्तेर्लक्षणाया अनभ्युपगमात्, अन्यथा 'चैत्रो मैत्रश्च गच्छतः' इत्यादाविव च्छन्दसि लक्षणयैव स्वादिना द्वित्वादिबोधनसंभवाद् औजसादिरूपादेशिस्मृतिद्वारा द्वित्वादिबोधनिर्वाहाय छन्दसि " सुपां सुलुक् "

---

'तण्डुलादिवृत्तिविक्लित्त्यनुकूलव्यापारानुकूलकृतिमांश्चैत्रः' इत्याद्याकारकबोधोदयात् तण्डुलादिविशेष्यत्वेनैव विक्लित्तिर्भासते विक्लित्तिरेव चात्र कर्मत्वमिति तण्डुलादिपदाद्द्वितीया प्राप्नोतीत्यनुसन्धेयम् । फलस्य कर्मत्वं चाग्रे धातुप्रकृतिकप्रत्ययार्थविचारस्थले "कर्मत्वं च धात्वर्थतावच्छेदकीभूतसंयोगविभागादिरेव" इत्यादिना वक्ष्यति ।

आख्यातैकवचनस्य संख्याबोधकत्वाभावेऽप्याख्यातद्विवचनस्य द्वित्वसंख्याबोधकत्वमाख्यातबहुवचनस्य च बहुत्वसंख्याबोधकत्वमावश्यकमेव- 'चैत्रो मैत्रश्च गच्छतः' इत्यत्र सुब्विभक्तिद्विवचनस्याभावादाख्यातद्विवचनादेव द्वित्वबोधस्वीकारावश्यंभावात्, एवम् 'चैत्रो मैत्रो देवदत्तश्च गच्छन्ति' "चन्द्रे कलङ्कः" इत्यादिवाक्यघटकाख्यातबहुवचनस्यापि बहुत्वसंख्याबोधकत्वमावश्यकम्- शाब्दबोधविषयीभूतबहुत्वस्य सुपा बोधासंभवात् सुब्विभक्तिबहुवचनस्याभावादित्याह- आख्यातेति । आख्यातद्विवचनबहुवचनार्थद्वित्वबहुत्वयोश्च प्रातिपदिकार्थचैत्रादावन्वयो प्रातिक्रियायां द्वित्वसंख्यान्वयासंभवात्, चैत्रमैत्रपदोत्तरसुबेकवचनं चात्र साधुत्वमात्रार्थकत्वान्निरर्थकमेव चैत्रमैत्रद्वये .सुबेकवचनार्थैकत्वस्य बाधितत्वेनाऽन्वयासंभवादित्यनुसंधेयम् ।

ननु तत्र=' चैत्रो मैत्रश्च गच्छतः ' इत्यादौ सुबेकवचनस्यैव द्वित्वे बहुत्वे वा लक्षणास्तित्याऽख्यातैकवचनवदाख्यातद्विवचनबहुवचनयोरपि निरर्थकत्वमेव युक्तमित्याशङ्कते- न चेति । परिहरति- आनुशासनिकेति, व्याकरणे सुबेकवचनस्य द्वित्वार्थकत्वं बहुत्वार्थकत्वं न नोक्तमिति न द्वित्वबहुत्वयोर्लक्षणा स्वीकर्तुं शक्यते, शक्यार्थैकत्वेन सह द्वित्वबहुत्वयोः संबन्धासंभवादपि न तत्र लक्षणा संभवति- लक्षणायाः शक्यसंबन्धरूपत्वात् । विपक्षे बाधकमाह- अन्यथेति, यदि सुब्विभक्तेरपि क्वचिदर्थे लक्षणा व्याकरणकर्तुरभीष्टा स्यात्तदा " ऋजवः सन्तु पन्थाः " इत्यत्राऽऽदेशिभूतजस्स्मरणद्वाराऽऽदेशरूपसुबेकवचनाद् बहुत्वबोधनिर्वाहाय ' पन्थानः' इत्यत्रत्यजसः स्थाने ' पन्थाः ' इत्यत्रत्यसुइत्येकवचनस्यादेशविधानं व्यर्थमेव स्यात्- 'चैत्रो मैत्रश्च गच्छतः ' इत्यादाविव ' ऋजवः सन्तु पन्थाः ' इत्यत्रापि सुबेकवचनस्य बहुत्वे लक्षणया बहुत्वार्थबोधकत्वसंभवात्, व्याकरणकर्त्रा चात्र " सुपां सु " इत्यादिसूत्रेण ' पन्थाः ' इत्येक

इत्यादिसूत्रेण औजसादिस्थाने स्वाद्यादेशस्य वैयर्थ्यात् । चैत्रादिपदोत्तरैकवचनस्य द्वित्वादिलाक्षणिकत्वे तदप्रकृत्यर्थमैत्रादिसाधारणद्वित्वादिबोधस्योक्तव्युत्पत्तिविरोधेनाऽनुपपत्तेश्च ।

आख्यातार्थसंख्यान्वयबोधे च समानविशेष्यकतदर्थभावनान्वयबुद्धिसामग्री अपेक्षिता– भावनाया बाधादिग्रहकाले तात्पर्यादिग्रहशून्यकाले चोक्तस्थले द्वित्वान्वयाऽबोधात्, भावनाया अविशेष्ये धात्वर्थादौ संख्यान्वयाऽबोधाच्च तादृशसामग्र्याः संख्यान्वयबुद्धित्वावच्छिन्नं प्रति स्वातन्त्र्येण हेतुता । तदकल्पनेऽपि आख्यातजन्यसंख्योपस्थितियोग्यताज्ञानविशेषादिघटितसामग्र्या भावनानवगा-

---

वचनस्य जस्स्थाने आदेशविधानं कृतमितिज्ञायते– सुब्विभक्तेर्लक्षणा न भवतीति न 'चैत्रो मैत्रश्च गच्छतः' इत्यादावपि सुबेकवचनस्य द्वित्वबहुत्वादौ लक्षणासंभव इत्यर्थः । दोषान्तरमाह– चैत्रादिपदोत्तरेति, अत्र यदि चैत्रपदोत्तरैकवचनस्य द्वित्वादौ लक्षणा स्यात्तदा तादृशद्वित्वस्य तदप्रकृत्यर्थे=चैत्रपदोत्तरैकवचनस्य प्रकृत्यर्थश्चैत्र एव न तु मैत्र इति चैत्रपदोत्तरैकवचनाऽप्रकृत्यर्थमैत्रादावन्वयो न संभवति– उक्तव्युत्पत्तिविरोधेन= "प्रत्ययानां स्वप्रकृत्यर्थान्वितस्वार्थबोधकत्वम्" इति व्युत्पत्तिविरोधात् । किं वा चैत्रपदोत्तरैकवचनार्थद्वित्वस्योद्देश्यतावच्छेदकव्याप्यपर्याप्तिसंबन्धेनैवान्वयः स्यात् चैत्रपदोत्तरैकवचनद्वित्वस्य च चैत्रत्वमेवोद्देश्यतावच्छेदकं संभवति चैत्रत्वव्याप्यपर्याप्तिसंबन्धेन च द्वित्वस्य चैत्रद्वये एवान्वयः संभवतीत्युक्तद्वित्वान्वयव्युत्पत्तिविरोधाद् न चैत्रमैत्रद्वयेऽन्वयबोध उपपद्यते इत्यर्थः । चैत्रमैत्रादिसकलपदोत्तरैकवचनानां द्वित्वादौ लक्षणायामनेकद्वित्वादिबोधापत्तिरित्यपि विज्ञेयम् ।

आख्यातार्थसंख्यायाः कुत्रान्वयो भवतीति जिज्ञासायामाह– आख्यातार्थेति, आख्यातार्थसंख्याप्रकारकशाब्दबोधं प्रति समानविशेष्यक=आख्यातार्थसंख्याभावनयोर्यो विशेष्यस्तद्विशेष्यक, तदर्थ ( आख्यातार्थ ) भावनाप्रकारकशाब्दबोधसामग्री अपेक्षिता भवति सा च सामग्री भावनाप्रकारकतात्पर्यज्ञानयोग्यताज्ञानादिघटिता ज्ञेया तथा च यत्राख्यातार्थभावनाया अन्वयो भवति तत्रैवाख्यातार्थसंख्याया अन्वयो भवतीति प्राप्तम् । आख्यातार्थसंख्याप्रकारकशाब्दबोधं प्रत्याऽऽख्यातार्थभावनाप्रकारकशाब्दबोधसामग्र्याः कारणत्वे हेतुमाह– भावनाया इति, यदि आख्यातार्थसंख्याप्रकारकशाब्दबोधं प्रत्याख्यातार्थभावनाप्रकारकान्वयबोधसामग्री कारणं न स्यात्तदा भावनाया बाधग्रहकालेपि तथा भावनायाः=भावनाविषयकतात्पर्यादिग्रहशून्यकालेपि उक्तस्थले= 'चैत्रो मैत्रश्च गच्छतः' इत्यादिस्थले चैत्रादावाख्यातार्थसंख्याया अन्वयः स्यादेव न चैवं भवति, तथा भावनाया अविशेष्ये धात्वर्थादावप्याख्यातार्थसंख्याया अन्वयो न भवतीत्याऽऽख्यातार्थसंख्याप्रकारकशाब्दबोधं प्रति तादृशसामग्र्याः=आख्यातार्थभावनाप्रकारकशाब्दबोधसामग्र्याः स्वातन्त्र्येण=पृथगेव हेतुत्वमस्तीत्यर्थः । विपक्षे बाधकमाह– तदकल्पनेपीति, आख्यातार्थसंख्याप्रकारकशाब्दबोधं प्रति भावनाप्रकारकशाब्दबोधसामग्र्या हेतुत्वाकल्पनेप्याऽऽख्यातजन्यसंख्योपस्थिति-

हिसंख्यान्वयबोधस्य कदाप्यजननात्, संख्यान्वयबोधसाधारणभावनान्वयबोधत्वावच्छिन्नहेतनामपि तादृशसामग्रीघटकत्वेनापत्त्यभावात् ।

न च तादृशकारणानां भावनान्वयबुद्धित्वं संख्यान्वयबुद्धित्वं वा जन्यतावच्छेदकमुपेयत इत्यत्र विनिगमनाविरहः– संख्यामविषयीकृत्यापि भावनान्वयबोधस्यानुभवसिद्धत्वात्, द्वितीयस्य जन्यतावच्छेदकत्वाऽसंभवादितिदिक् ।

---

योग्यताज्ञानादिघटितया आख्यातार्थसंख्याप्रकारकशाब्दबोधसामग्र्या भावनानवगाही ( भावनामविषयीकृत्य ) संख्याप्रकारकशाब्दबोधः कदापि न जन्यते इति विवशमाऽऽख्यातार्थसंख्याप्रकारकशाब्दबोधं प्रति भावनाप्रकारकशाब्दबोधसामग्र्या हेतुत्वं कल्प्यते. एवं च भावनाप्रकारकशाब्दबोधसामग्र्या एव भावनाप्रकारकशाब्दबोधंप्रत्याख्यातार्थसंख्याप्रकारकशाब्दबोधं प्रति च कारणत्वाल्लाघवमपि भवतीत्यर्थः । ननु यदि भावनाप्रकारकशाब्दबोधसामग्र्या आख्यातार्थसंख्याप्रकारकशाब्दबोधं प्रति स्वातन्त्र्येण हेतुत्वमस्ति तदा तादृशसामग्र्या भावनामविषयीकृत्यापि भावनानवगाह्याख्यातार्थसंख्याप्रकारकशाब्दबोधः कथं न स्यादित्याशङ्क्याह– संख्यान्वयबोधेति, संख्याप्रकारकशाब्दबोधसामग्र्यां भावनाप्रकारकशाब्दबोधहेतूनामपि भावनाविषयकतात्पर्यज्ञानयोग्यताज्ञानादीनां घटकत्वेन=सत्त्वेन आपत्त्यऽभावात्=तादृशसामग्र्या भावनामविषयीकृत्य भावनानवगाहिकेवलसंख्याप्रकारकशाब्दबोधस्यापत्तिर्नास्तीत्यर्थः । किं वा "कदाप्यजननात्" इत्युक्ते हेतुमाह–संख्यान्वयेति । अर्थस्तु स एव विज्ञेयः ।

ननु तादृशकारणानाम्=संख्यान्वयबोधसाधारणभावनान्वयबोधसामग्रीघटककारणानां भावनान्वयबुद्धिरेव जन्या न संख्यान्वयबुद्धिर्जन्येत्यत्र विनिगमनाविरहः,अर्थाद् यद्येकैव सामग्री संख्याप्रकारकबोधस्य भावनाप्रकारकबोधस्य च कारणं किं वा यदि भावनामविषयीकृत्य संख्याप्रकारकशाब्दबोधो न जायते तदाऽऽख्यातार्थसंख्याप्रकारकशाब्दबोधं प्रति भावनाप्रकारकशाब्दबोधसामग्रीकारणं न तु भावनाप्रकारकशाब्दबोधं प्रत्याख्यातार्थसंख्याप्रकारकशाब्दबोधसामग्रीकारणमित्यत्र विनिगमनाविरहः तथा च भावनाप्रकारकशाब्दबोधं प्रत्येवाख्यातार्थसंख्याप्रकारकशाब्दबोधसामग्री किं न कारणं स्यात् इत्याशङ्क्याह– न चेति ।परिहारहेतुत्वेन विनिगमनामाह– संख्यामिति, भावनामविषयीकृत्य संख्याप्रकारकशाब्दबोधः कदापि न जायते संख्यामविषयीकृत्य तु 'चैत्रमैत्राभ्यां भूयते' इत्यादौ भावाख्यातेन भावनाप्रकारकबोधो जायते भावनाप्रकारकबोधस्य व्यापकत्वेन तत्सामग्र्या एव संख्याप्रकारकशाब्दबोधं प्रति हेतुत्वमुच्यते युक्तं चेत्यर्थः,न तु द्वितीयस्य=संख्याप्रकारकशाब्दबोधत्वस्य जन्यतावच्छेदकत्वम्=तादृशसामग्रीजन्यतावच्छेदकत्वं युक्तमित्याह– द्वितीयस्येति, संख्याप्रकारकशाब्दबोधसामग्र्यास्तु भावनाप्रकारकशाब्दबोधं प्रति कारणत्वं न युक्तमित्यर्थः । संख्यामविषयीकृत्यापि भावनाप्रकारकशाब्दबोधस्य जायमानत्वेन संख्याप्रकारकशाब्दबोधत्वस्य न्यूनवृत्तित्वाजन्यतानवच्छेदकत्वं विज्ञेयम् ।

अथ गुणादिवाचकपदोत्तरद्विवचनबहुवचनयोः कथं द्वित्वादिबोधकता ? सङ्ख्याया गुणत्वेन गुणादौ बाधात् । न च तत्र स्वाश्रयसमवेतत्वादिसंबन्धेन द्रव्यगतं द्वित्वादिकमेव भासते इति वाच्यम्, एकव्यक्तावपि तादृशसंबन्धेन द्वित्वादेः परिसमाप्ततया एकमात्रतात्पर्येणापि द्विवचनाद्यापत्तिरितिचेत् ?, मैवम्— अपेक्षाबुद्धिविषयत्वमेव तदुत्तरद्विवचनादिना बोध्यते । तत्रैकमात्रवृत्तिधर्मस्य प्रकृत्यर्थतावच्छेदकत्वस्थले प्रकृत्यर्थतावच्छेदकव्याप्यत्वविशिष्टपर्याप्तिसंबन्धेन

---

ननु 'रूपरसौ' इत्यादौ गुणादिवाचकपदोत्तरवर्तमानद्विवचनबहुवचनयोर्द्वित्वबहुत्वरूपसंख्याबोधकत्वं कथं स्यात् संख्याया गुणत्वाद् गुणे गुणानङ्गीकाराच्चेत्याशङ्कते— अथेति । एकवचनस्य तु साधुत्वार्थकत्वसंभवेन नैरर्थक्यमपि संभवति न तु द्विवचनबहुवचनयोः केवलं साधुत्वार्थकत्वमित्येकवचनाशङ्कां परित्यज्य द्विवचनबहुवचनविषयकमेवाशङ्कितम् । ननु स्वाश्रयसमवेतत्वसंबन्धेन=स्वं द्वित्वादिस्तदाश्रयो घटादिस्तत्र समवेतत्वं गुणादावस्तीत्येतादृशसंबन्धेन द्रव्यगतमेव द्वित्वादिकं तत्र=गुणादौ भासते न तु गुणादौ वास्तवं गुणरूपं द्वित्वादिकं स्वीक्रियते इति न कोपि दोष इत्याशङ्क्याह—न चेति । परिहरति— एकव्यक्तावपीति, पर्याप्त्यादिसंबन्धेन द्वित्वस्यैकव्यक्तावऽसंभवेपि तादृशसंबन्धेन=स्वाश्रयसमवेतत्वसंबन्धेन त्वेकरूपादिगुणव्यक्तावपि द्वित्वादेः परिसमाप्ततया=पर्याप्तिसंभवात् पर्याप्तत्वात् एकमात्ररूपव्यक्तितात्पर्येणापि 'घटे रूपे' इत्येवं द्विवचनापत्तिः स्यादेवेति दोषः । तथास्मिन् मते 'घटे रूपरसौ' इत्यत्र रूपरसाश्रयीभूतघटे एव द्वित्वं नास्तीति कथं घटगतं द्वित्वं रूपरसयोर्भासेतेत्यपिदोषः । न च रूपरसपदोत्तरद्विवचनार्थद्वित्वस्य घटेन्वयः घटेन्वितं च तदेव द्वित्वं पुना रूपरसयोर्भासते इतिवाच्यम्, एकस्मिन् घटे द्वित्वान्वयासंभवादित्यवधेयम् । परिहरति—मैवमिति, 'अयमेकोऽयमेकः' इत्याकारकापेक्षाबुद्धेर्विषयत्वरूपमेव द्वित्वादिकं गुणादौ तदुत्तरद्विवचनादिना=गुणादिपदोत्तरद्विवचनादिना बोध्यते न तु संख्यारूपं द्वित्वादिकं येन द्विवचनाद्यर्थद्वित्वादेर्गुणादावन्वयो न स्यादित्यर्थः । तत्र=अपेक्षाबुद्धिविषयत्वरूपं द्वित्वादिकम् एकमात्रवृत्तिधर्मस्य=रूपत्वादेः प्रकृत्यर्थतावच्छेदकत्वस्थले 'घटे रूपे रूपाणि' इत्यादौ प्रकृत्यर्थतावच्छेदक ( रूपत्वादि ) व्याप्यत्वविशिष्टपर्याप्तिसंबन्धेनान्वेतीति नैकरूपतात्पर्येणापि 'रूपे' इत्यादि द्विवचनापत्तिः तादृशसंबन्धेन रूपद्वये एव द्वित्वस्य संभवात् । अन्यत्र=यत्रानेकवृत्तिधर्मस्य प्रकृत्यर्थतावच्छेदकत्वं यथा 'रूपरसौ' इत्यत्राऽनेकवृत्तिरूपत्वरसत्वयोः प्रकृत्यर्थतावच्छेदकत्वमिति तत्र द्वित्वपर्याप्तौ रूपत्वव्याप्यत्वं वा रसत्वव्याप्यत्वं वा नास्त्येव—तादृशद्वित्वपर्याप्ते रूपत्वाभाववति रसे रसत्वाभाववति रूपे च सत्त्वादिति द्वित्वं शुद्धपर्याप्तिसंबन्धेन प्रकृत्यर्थेऽन्वेति, शुद्धपर्याप्तिसंबन्धेनापि द्वित्वस्य रूपरसयोरुभयोरेवान्वयसंभवात् पर्याप्तौ किंचिद्व्याप्यत्वविशेषणापेक्षा नास्ति । एकरूपव्यक्तावपि रूपरसोभयगतद्वित्वस्य शुद्धपर्याप्तिसंबन्धेनान्वयसंभवादेकरूपव्यक्तितात्पर्ये-

प्रकृत्यर्थेऽन्वेति, अन्यत्र तु शुद्धपर्याप्तिसंबन्धेनेति न द्वन्द्वादिस्थलोक्तदोष इति विदुषां परामर्शः ॥

॥ इति व्युत्पत्तिवादे प्रथमाकारकम् ॥

---

णापि 'रूपे' इति प्रयोगः स्यात्तद्वारणाय पर्याप्तौ प्रकृत्यर्थतावच्छेदकव्याप्यत्वविशेषणापेक्षा स्तीत्यादिकं सर्वमपेक्षितं यथामति पूर्वमेव प्रतिपादितं तदेवात्राप्यनुसंधेयम् । फलमाह—न द्वन्द्वादीति, 'धवखदिरौ' इति द्वन्द्वस्थले ये दोषाः प्रदर्शितास्तेषां प्राप्तिर्नास्तीत्यर्थः । तथा यथा 'घटौ' इत्यादौ घटद्वये द्वित्वान्वयः प्रदर्शितस्तथैव 'रूपे', 'रसौ' इत्यादौ द्वित्वान्वयो ज्ञेयः, यथा च 'धवखदिरौ' इत्यत्र द्वित्वान्वयः प्रदर्शितस्तथैव 'रूपरसौ' इत्यादिद्वन्द्वस्थले द्वित्वान्वयो विज्ञेयः । इति शम् । श्रीमते हयग्रीवाय नमः ।

॥ इति व्युत्पत्तिवादाऽऽदर्शे प्रथमाकारकं समाप्तम् ॥

# अथ द्वितीया

"कर्मणि द्वितीया" इत्यनुशासनात् कर्मत्वं द्वितीयार्थः, तत्र कर्मपदस्य धर्मपरत्वात्, सप्तम्या वाचकतार्थकत्वात् । कर्मणश्च न तथात्वम्– कर्मणि नामार्थस्य ग्रामादेरभेदान्वयसंभवेपि धात्वर्थगमनादिना तदन्वयासंभवात्. गौरवाच्च । कर्मत्वं च क्रियाजन्यफलशालित्वम्. तत्र च क्रिया धातुत एव लभ्यते, जन्यजनकभावस्य च विनैव पदार्थत्वं संसर्गमर्यादया भानं संभवतीति फलमात्रं कर्मप्रत्ययार्थः ।

---

॥ श्रीमद्धयग्रीवाय भगवते नमः ॥

द्वितीयाविभक्त्यर्थनिरूपणमारभते–कर्मणीति, कर्मत्वं द्वितीयार्थ इत्यत्र "कर्मणि द्वितीया" इति सूत्रमेव प्रमाणमित्यर्थः । तत्र="कर्मणि द्वितीया" इतिसूत्रे कर्मपदस्य ग्रामादिरूपकर्मपदार्थवृत्तिकर्मत्वरूपधर्मपरत्वात् कर्मत्वं द्वितीयार्थः । "गुणे शुक्लादयः पुंसि" इत्यादौ 'गुणवाचकाः शुक्लादयः पुंसि' इत्यर्थस्याभीष्टत्वाद् यथा "गुणे" इति सप्तम्या वाचकतार्थकत्वं तथात्रापि "कर्मणि" इति सप्तम्या वाचकतार्थकत्वात् "कर्मणि द्वितीया" इतिसूत्रस्य 'कर्मत्ववाचिका द्वितीया' इत्यर्थः संपन्न इत्याह–सप्तम्या इति । ननु सूत्रे कर्मपदं कर्मभूतग्रामादिपदार्थपरमेव किं न स्यादित्याशङ्क्याह--कर्मणश्चेति, कर्मणः=कर्मभूतग्रामादिपदार्थस्य तु न तथात्वम्=द्वितीयार्थत्वं संभवति, यदि कर्मैव द्वितीयार्थः स्यात्तदा ग्रामस्यैव कर्मत्वाद् द्वितीयार्थत्वेन प्रधानीभूततादृशकर्मपदार्थे नामार्थस्य=ग्रामपदवाच्यस्य ग्रामस्य 'ग्रामं गच्छति' इत्यत्राभेदान्वयसंभवेपि धात्वर्थगमनादिना तु तत्=तस्य कर्मपदार्थस्यान्वयो न संभवति–कर्मभूतग्रामादिनिरूपितजनकत्वादेर्धात्वर्थगमनादावऽभावादित्यर्थः । ननु कर्मणोपि द्वितीयार्थत्वे तस्य कर्मभूतग्रामपदार्थस्य स्ववृत्तिफलजनकत्वसंबन्धेन धात्वर्थगमनादिनाऽन्वयः संभवत्येवेति 'ग्रामं गच्छति' इत्यादौ कर्मणोपि द्वितीयार्थत्वे न कोपि दोषः स्वं कर्म तद्वृत्ति फलं संयोगस्तज्जनकत्वं धात्वर्थगमनेऽस्त्येवेत्याशङ्क्याह–गौरवाच्चेति, एवं हि गौरवं स्यादेवेति न कर्मद्वितीयार्थः ;किं तु कर्मत्वमेव, तत्र कर्मत्वं हि चैत्रादिकर्तृकव्यापारजन्यसंयोगादिरूपं फलमेव तस्य तु जनकत्वसंन्बधेन साक्षादेव धात्वर्थगमनादिनाऽन्वयः संभवत्येव–ग्रामवृत्तिसंयोगजनकव्यापारवांश्चैत्र इतिबोधोदयादिति न गौरवमपीति भावः । कर्मत्वस्वरूपमाह–कर्मत्वमिति । तत्र=क्रियाजन्यफलशालित्वे यः क्रियापदार्थः प्रविष्टः स धातुवाच्य एव क्रियातज्जन्यफलयोश्च यो जन्यजनकभावः स संसर्गत्वादाकाङ्क्षाबलेनैव भासते इत्यवशिष्टं संयोगादिरूपं फलमात्रमेव कर्मप्रत्ययस्य द्वितीयादेरर्थ इत्यर्थः ।

न च संयोगविभागादिरूपफलमपि धातुलभ्यमेव- गमित्यजिप्रभृतीनां तदवच्छिन्नस्पन्दादिरूपव्यापारवाचकत्वादितिवाच्यम्, व्यापारमात्रस्य धात्वर्थत्वात् । फलविशेषान्वयबोधे च धातुविशेषजन्यव्यापारोपस्थितेर्हेतुतया 'ग्रामं त्यजति' इत्यादौ धात्वर्थस्पन्दे ग्रामनिष्ठविभागजनकत्वमेव 'ग्रामं गच्छति' इत्यादौ च धात्वर्थस्पन्दे ग्रामनिष्ठसंयोगजनकत्वमेव प्रतीयते न तु विपरीतम् ।

'ग्रामं गच्छति' इत्यादिवच्च 'ग्रामं स्पन्दते' इत्यादयो न प्रयोगाः-द्वितीयादेर्गम्याद्युपस्थापितस्पन्दादावेव फलान्वयबोधकत्वात्, स्पन्दिप्रभृत्युपस्थापिते तस्मिन् द्वितीयादिना फलान्वयबोधजननासंभवात्, न हि येन केन चिद्-

---

ननु "फलव्यापारयोर्धातुः" इति प्रमाणात् संयोगविभागादिरूपं फलमपि धातुलभ्यमेव- गमित्यजिप्रभृतीनां धातूनां तदवच्छिन्नस्पन्दादिरूपव्यापारवाचकत्वात्=संयोगविभागादिफलजनकस्पन्दादिरूपव्यापारवाचकत्वात्-जनकत्वसंबन्धेन संयोगादिरूपफलविशिष्टव्यापारवाचकत्वे संयोगादिरूपफलवाचकत्वस्यापि प्राप्तत्वात् कथं फलस्य कर्मप्रत्ययवाच्यत्वमुच्यते इत्याशङ्कते- न चेति । परिहरति-व्यापारेति, व्यापारमात्रमेव धातुवाच्यमस्ति न तु फलमपीति संयोगादिरूपफलम् 'ग्रामं गच्छति' इत्यादौ कर्मप्रत्यय ( द्वितीया ) वाच्यमेवेत्यर्थः । ननु व्यापारमात्रस्य धात्वर्थत्वे फलमात्रस्य च कर्मप्रत्ययार्थत्वे 'ग्रामं त्यजति' इत्यत्रापि धात्वर्थव्यपारे संयोगजनकत्वं प्रतीयेतेति सर्वत्र सर्वप्रतीत्यापत्त्या व्यापारविशेषफलविशेषयोः प्रतीतिनियमो न स्यादित्याशङ्क्याह-फलविशेषेति, सामान्यतः फलविषयकशाब्दबोधं प्रति कर्मप्रत्ययस्य कारणत्वेपि फलविशेषविषयकशाब्दबोधं प्रति तु धातुविशेषजन्यव्यापारोपस्थितेरेव कारणत्वं ज्ञेयं तथा च 'ग्रामं त्यजति' इत्यत्र ग्रामकर्मकत्यागरूपफलविषयकशाब्दबोधं प्रति त्यजधातुजन्यस्पन्दरूपव्यापारोपस्थितेर्हेतुत्वात् त्यजधात्वर्थस्पन्दे ग्रामनिष्ठो यो विभागस्तादृशविभागरूपफलजनकत्वमेव प्रतीयते न तु विपरीतम्=ग्रामनिष्ठसंयोगरूपफलजनकत्वम्' तथा 'ग्रामं गच्छति' इत्यत्र ग्रामकर्मकसंयोगरूपफलविषयकशाब्दबोधं प्रति गम्धातुजन्यस्पन्दरूपव्यापारोपस्थितेर्हेतुत्वाद् गम्धात्वर्थस्पन्दे ग्रामनिष्ठो यः संयोगस्तादृशसंयोगरूपफलजनकत्वमेव प्रतीयते न तु विपरीतम्=ग्रामनिष्ठविभागरूपफलजनकत्वम्, फलविशेषान्वयबोधे यदि धातुविशेषजन्यव्यापारोपस्थितेर्हेतुत्वं न स्यात्तदोक्तवैपरीत्यमपि स्यादेव= त्यज्धात्वर्थस्पन्दे ग्रामनिष्ठसंयोगजनकत्वं गम्धात्वर्थस्पन्दे च ग्रामनिष्ठविभागजनकत्वमपि प्रतीयेत न चैवं प्रतीयते इति "फलविशेषान्वयबोधे" इत्यादिविशेषकार्यकारणभाव आश्रीयते इत्यर्थः ।

ग्राममिति-द्वितीया विभक्तिर्गमधातूपस्थिते एव स्पन्दरूपव्यापारे जनकत्वसंबन्धेन संयोगरूपफलस्यान्वयबोधजननसमर्थाऽस्ति न तु स्पन्दधातूपस्थापितेपि स्पन्दरूपव्यापारे, स्पन्दधातूपस्थापिते तस्मिन्=स्पन्दरूपव्यापारे द्वितीयादिना फलान्वयस्य बोधजननासंभवादिति 'ग्रामं गच्छति 'इतिवत् 'ग्रामं स्पन्दते' इति प्रयोगो न भवतीत्यर्थः । उक्तमुपपादयति- न हीति

पस्थापितयोरेवार्थयोः परस्परमन्वयः प्रतीयते तथा सति घटकर्मत्वादिपदोपस्थापितयोरपि घटकर्मत्वाद्योः परस्परमन्वयबोधप्रसङ्गात्, कृञादिसमानार्थकयतधातूपस्थाप्यफले विषयितात्मकद्वितीयार्थान्वयसंभवेन 'घटं करोति' इतिवत् 'घटं यतते' इत्यादिप्रयोगप्रसङ्गाच्च, अपि तु ययोर्यादृशान्वयबोधे आकाङ्क्षा तदुपस्थापितयोरेव तादृशान्वयबोधः । आकाङ्क्षा च द्वितीयादेर्गम्यादिना कृञादिना च कल्प्यते न तु तत्समानार्थकेनापि स्पन्दियतिप्रभृतिनेति ।

---

किं वा ननु गम्धात्वर्थोपि स्पन्द एव स्पन्दधात्वर्थोपि स्पन्द एवेति समानार्थकत्वात् 'ग्रामं गच्छति' इतिवत् 'ग्रामं स्पन्दते' इति प्रयोगः कथं न स्यादित्याशङ्क्याह— न हीति, न हि याभ्यां काभ्यां पदाभ्यामुपस्थितयोरर्थयोः परस्परमन्वयः प्रतीयते, तथा सति= यदि याभ्यां काभ्यां पदाभ्यामुपस्थितयोरप्यर्थयोः परस्परमन्वयः प्रतीयेत तदा 'घटः कर्मत्वम्' इत्यत्र घट-कर्मत्वपदाभ्यामुपस्थितयोरपि घटकर्मत्वयोः परस्परमन्वयबोधः स्यादेव न चैवं भवति किं तु 'घटं करोति' इत्यत्र घटपदेनोपस्थितघटस्य द्वितीयोपस्थितकर्मत्वस्य चान्वयः प्रतीयते तस्मान्न याभ्यां काभ्यां पदाभ्यामुपस्थितयोरर्थयोरन्वयः प्रतीयते इति गम्धातूपस्थितस्पन्दस्य द्वितीयोपस्थितफलस्य चान्वयः संभवति न तु स्पन्दधातूपस्थितस्पन्दस्य फलस्य चेत्यर्थः । किं च यदि येन केनचिदुपस्थितयोरप्यर्थयोः परस्परमन्वयः प्रतीयेत तदा कृञादिसमानार्थक-यत्यादिधातूपस्थाप्यफलेपि विषयितात्मकद्वितीयार्थस्यान्वयसंभवेन 'घटं करोति' इतिवत् 'घटं यतते' इत्यपि प्रयोगः स्यादेव न चैवं भवतीत्यर्थः । अत्र धातोः फलावच्छिन्नव्यापारवाचकत्व-मतेनोक्तम्— कृञादिसमानार्थकयतधातूपस्थाप्यफले इति तन्मते फलावच्छिन्नव्यापारस्य धातु-वाच्यत्वेन फलस्यापि धातुवाच्यत्वं प्राप्तमेव, अवच्छिन्नत्वं चात्र जनकत्वमेव, फलं चात्र यत्नः, तस्मिन् यत्नरूपफले द्वितीयार्थविषयिताया आश्रयत्वेनान्वयः, घटनिष्ठविषयतानिरूपितविषयि-ताश्रयत्वस्य यत्ने सत्त्वात् 'घटं करोति' इत्यत्र घटनिष्ठविषयतानिरूपितविषयिताश्रयीभूतकृति-( यत्न ) मानिति बोधोदयात् । 'घटं यतते' इतिप्रयोगस्तु न भवतीति सिद्धान्तमाह— अपि त्विति, ययोः पदयोर्यादृशान्वयबोधे आकाङ्क्षा=परस्परमपेक्षा भवति ताभ्यामेव पदाभ्या-मुपस्थितयोरर्थयोस्तादृशान्वयस्य बोधो जायते यथा— घटपदद्वितीयापदयोर्घटकर्मत्वबोधे आकाङ्क्षास्तीति 'घटम्' इतिघटपदद्वितीयापदाभ्यामुपस्थितयोरेव घटकर्मत्वयोः परस्परम-न्वयबोधो जायते, तथात्रापि द्वितीयादेर्गम्यादिनैवाकाङ्क्षेति गम्धातूपस्थितस्पन्दे एव द्विती-योपस्थितफलस्यान्वयो भवति न तु स्पन्दधातूपस्थितस्पन्देपीति न 'ग्रामं स्पन्दते' इति प्रयोगापत्तिः । तथा द्वितीयादेः कृञादिनैवाऽऽकाङ्क्षेति कृञ्धातूपस्थाप्यफले एव द्वितीया-र्थस्य ( विषयितायाः ) अन्वयो भवति न यतिधातूपस्थापितफलेपीति न 'घटं यतते' इति-प्रयोगापत्तिरित्याह— आकाङ्क्षा चेति । स्पन्दियतीत्यत्र यथासंख्यमन्वयः ।

न चाकाङ्क्षात्र समभिव्याहारः स च गम्यादिनेव स्पन्द्यादिनापि समान एवेति वाच्यम्, यतः- द्वितीयादेर्गम्यादिसमभिव्याहारस्यैव फलबलादन्वयबोधौपयिकत्वमुपगम्यते न तु स्पन्दिप्रभृतिसमभिव्याहारस्येति न तस्याकाङ्क्षात्वम्- अन्वयबोधौपयिकसमभिव्याहारस्यैव तथात्वात्, अत एव समानार्थकत्वेपि गम्यादेरिव न स्पन्द्यादेः सकर्मकत्वव्यवहारः- फलान्वितव्यापारबोधकधातुत्वस्यैव तन्नियामकत्वात् ।

अथ धातोर्व्यापारमात्रवाचित्वे 'त्यजति गच्छति' 'त्यागो गमनम्' इत्यादिवाक्यादविलक्षणबोधप्रसङ्गः, न हि शक्तिभ्रमाद्यऽजन्मनोस्तादृशवाक्यजन्य

---

नन्वाकाङ्क्षा समभिव्याहार एव समभिव्याहारश्च गम्यादिनेव स्पन्द्यादिनापि नानुपपन्न इ द्वितीयार्थफलस्य संयोगादेः स्पन्दिधातूपस्थापितस्पन्दरूपव्यापारे जनकत्वसंबन्धेन कथं नान्व स्यादित्याशङ्क्याह- न चेति । परिहरति- यत इति, 'ग्रामं स्पन्दते' इत्यत्र ग्रामवृ संयोगजनकत्वविशिष्टव्यापारविषयको बोधो न जायते 'ग्रामं गच्छति' इत्यत्र च जायते इ फलबलाद् द्वितीयादेर्यो गम्यादिना समभिव्याहारस्तस्यैवोक्तशाब्दबोधकारणत्वमुपगम्यते इ तादृशस्योक्तशाब्दबोधजनकस्यैव समभिव्याहारस्याकाङ्क्षात्वं युक्तं न तु द्वितीयादेः स्पन्दिप्रभृ धातुनापि यः समभिव्याहारस्तस्यापि- उक्तशाब्दबोधाऽजनकत्वादित्यर्थः । तस्य=स्पन्दिप्रभृ समभिव्याहारस्य । अत्र विनिगमनामाह- अन्वयेति । तथात्वात्= आकाङ्क्षात्वा अत एव= द्वितीयादेः स्पन्द्यादिना सह समभिव्याहरस्याकाङ्क्षात्वाऽभावादेव=द्वितीयार्थफल स्पन्द्याद्युपस्थापितस्पन्दादिव्यापारे आकाङ्क्षाविरहेणान्वयासंभवादेव गमिस्पन्दिधात्वोः समान कत्वेपि गम्यादेरेव सकर्मकत्वं न स्पन्द्यादेः- फलान्वितव्यापारबोधकधातोरेव सकर्मकत्वमिस तथा च गम्यादेः फलान्वितव्यापारबोधकत्वात्सकर्मकत्वम्, स्पन्द्यादेः फलान्वितव्यापारबोधक भावादकर्मकत्वमित्यर्थ इत्याह- अत एवेति । तन्नियामकत्वम्=सकर्मकत्वव्यवहारनियामकत्व एवं समानार्थकत्वेपि कृञादेरेव सकर्मकत्वं न यत्यादेरिति ज्ञेयम् । येन व्याप कर्मभूतपदार्थे किंचित् फलमुत्पद्यते तस्य फलान्वितव्यापारत्वं ज्ञेयं यथा गमनव्याप ग्रामे गमनकर्तृदेवदत्तस्य संयोग उत्पद्यते न चैवं स्पन्द्यादिधातुबोध्यव्यापारेस्तीति तत्र फ न्वितत्वं नास्तीति ।

ननु यदि धातोः फलवाचकत्वं न स्यात् किं तु व्यापारमात्रवाचकत्वं स्यात्तदा सर्वे धातूनां व्यापारमात्रवाचकत्वेन समानार्थकत्वं स्यात्तथा च य एव 'त्यजति' पदाद्बोधः स एव 'गच्छति' पदादपि बोधः स्यात्, तथा त्यागगमनपदाभ्यामपि समानार्थक एव स्यात्, न च शक्तिभ्रमं विना कोपि त्यजतिपदजन्यबोधगच्छतिपदजन्यबोधयोरवैलक्षण्य तुल्यत्वं स्वीकरोति, तथा त्यागपदजन्यगमनपदजन्यबोधयोरप्यवैलक्षण्यं न कोपि स्वीक तथासति=उक्तबोधयोरवैलक्षण्ये सति त्यागादितात्पर्येण गमनादिपदं व्युत्पन्ना अपि प्रयुञ्जी

बोधयोर्वैलक्षण्यं कश्चिदभ्युपैति, तथा सति त्यागादितात्पर्येण गमनादिपदं व्युत्पन्ना अपि प्रयुञ्जीरन् । न च तत्र फलविशेषावच्छिन्नव्यापारे लक्षणा स्वीक्रियते इति विलक्षणबोधोपपत्तिरिति वाच्यम्, लक्षणया विलक्षणबोधजननेपि शक्त्याऽविलक्षणबोधजननसंभवेन दर्शितातिप्रसङ्गस्य दुर्वारत्वात् ।

न च गम्यादिशक्तिज्ञानजन्यार्थोपस्थित्या फलाविषयकान्वयबोधस्य कुत्राप्यजननात् तादृशोपस्थितिघटितसामग्रीशरीरे फलविशेषबोधकसामग्र्यपि निवेश्यते तथा च त्यागगमनादिपदयोः शक्त्या नाऽविलक्षणबोधजनकतेति वाच्यम्, त्यजिगम्योरेकार्थवाचकतारूपपर्यायतां विपर्यस्यतो गमनादिपदात् त्यागादिपदजन्यबोधसमानाकारकबोधस्य सर्वानुभवसिद्धतया गम्यादिशक्तिज्ञानात् फला-

---

न चैवमस्ति, तस्माद्धातोः फलविशिष्टव्यापारवाचकत्वमेव युक्तं तथा च त्यागगमनादिव्यापाराणामवच्छेदकीभूतफलभेदान्नोक्तबोधयोर्वैलक्षण्यापत्तिर्न वा व्युत्पन्नानां गमनादितात्पर्येण त्यागादिपदप्रयोगापत्तिरित्याशङ्कते— अथेति । ननु धातोर्व्यापारमात्रवाचकत्वेपि= व्यापारमात्रे एव शक्तिस्वीकारेपि तत्र=' त्यजति गच्छति ' ' त्यागो गमनम् ' इत्यादौ फलविशेषविशिष्टव्यापारे लक्षणा स्वीक्रियते तथा च फलभेदात् लक्षणया तत्तद्धातुपदेन विलक्षणबोधसंभवेन नाऽविलक्षणबोधप्रसङ्ग इति न गमनादितात्पर्येण त्यागादिपदप्रयोगापत्तिरित्याशङ्क्याह— न चेति । परिहरति— लक्षणयेति । लक्षणया विलक्षणबोधसंभवेपि शक्त्याऽविलक्षणबोधसंभवेन दर्शितातिप्रसङ्गस्य=गमनादितात्पर्येण त्यागादिपदप्रयोगप्रसङ्गस्य दुर्वारत्वात् ।

ननु गम्यादिधातुशक्तिज्ञानेन जायमाना यार्थोपस्थितिस्तया फलाऽविषयकबोधः कदापि न जन्यते किं तु फलविषयक एव बोधो जन्यते इति शाब्दबोधजनिका या तादृशोपस्थितिघटिता सामग्री तस्याः शरीरे=स्वरूपे फलविशेषबोधकसामग्र्यपि निवेश्यते तथा च फलविशेषविषयकबोधजनकसामग्रीघटितया उक्तगम्यादिशक्तिज्ञानजन्यार्थोपस्थितिघटितसामग्र्या त्यागगमनादिपदाभ्यां शक्त्यापि नाऽविलक्षणबोधप्रसङ्ग इति न गमनादितात्पर्येण त्यागादिपदप्रयोगापत्तिरित्याशङ्कते— न चेति । परिहरति— त्यजिगम्योरिति, विपर्यस्यतः=( भ्रमवतः ) यस्य पुरुषस्य त्यजिगम्योरेकार्थवाचकतारूपपर्यायत्वभ्रमो जातः=य एव त्यज्धातोरर्थः स एव गम्धातोरर्थ इति भ्रमो जातस्तस्य पुरुषस्य गमनादिपदात् त्यागादिपदजन्यबोधतुल्य एव बोधो जायते इति सर्वानुभवसिद्धमस्ति—उक्तभ्रान्तपुरुषदृष्ट्या त्यजिगम्योः समानार्थकत्वेन पर्यायरूपत्वादिति तस्य भ्रान्तस्य गम्यादिधातुशक्तिज्ञानात् फलाविषयकबोधस्यापि=फलविशेषाविषयकबोधस्यापि सिद्धेः=जायमानत्वात् शक्त्यापि त्यागगमनादिपदाभ्यामविलक्षणबोधोत्पत्तिस्तदवस्थैव । एवमेव तादृशस्य=उक्तभ्रमवतः पुंसः त्यजिगम्योः पर्यायत्वज्ञान ( भ्रम ) सत्त्वेन ' ग्रामं गच्छति ' ग्रामं त्यजति' इत्यादिवाक्याभ्यामप्यविलक्षणबोधोदयात् फलविशेषबोधकसामग्र्या यद् गम्यादिजन्यबोधनियामकत्वमुक्तं नाम त्यजिगमिधातुभ्यां सामान्यतो व्यापारमात्रविषयकबोधे जायमा

विषयकबोधस्यापि प्रसिद्धेः, एवं तादृशस्य पुंसः 'ग्रामं गच्छति' 'ग्रामं त्यजति' इत्यादितोऽप्यऽविलक्षणबोधोदयात् फलविशेषबोधकसामग्र्या गम्यादिपदजन्यबोधनियामकतया वक्तुमशक्यत्वात्, तथा चाऽभ्रान्तस्यापि भवन्मते ततोऽविलक्षणबोधसंभवेनैकविधबोधतात्पर्येण व्युत्पन्नानां तादृशप्रयोगप्रसङ्गो दुर्वार इति चेत् ?,

---

नैपि फलविशेषबोधकसामग्रीप्रभावात् फलविशेषस्याप्युपस्थित्या त्यजतिगच्छतिपदाभ्यां विलक्षण एव बोध उत्पद्येतेत्युक्तं तदपि वक्तुं न शक्यते- अविलक्षणबोधोदयस्य प्रदर्शितत्वादित्यर्थ एवमिति । तथा चाभ्रान्तस्यापि ततः=' त्यजति, गच्छति ' 'त्यागः, गमनम्' इत्यादितोऽविलक्षणबोधसंभवेनैकविधबोधतात्पर्येण व्युत्पन्नानां तादृशप्रयोगप्रसङ्गः=त्यागादितात्पर्येण गमनादिपदप्रयोगप्रसङ्गो दुर्वार एवेत्युपसंहरति- तथा चेति ।

अयं भावः- पूर्वपक्षिणा धातोर्व्यापारमात्रवाचित्वं स्वीकृत्यापि गम्यादिपदजन्यशाब्दबोधसामग्रीशरीरे फलविशेषबोधिकाया द्वितीयाविभक्त्यादिसमभिव्याहारादिरूपायाः सामग्र्या निवेशस्वीकारात्वस्यापि गम्यादेर्विलक्षणबोधजनकत्वं प्रतिपादितं तत्र त्यजिगम्योः पर्यायताभ्रमाभावकाले गम्धातुजन्यशाब्दबोधसामग्रीशरीरे संयोगरूपफलबोधकसामग्रीनिवेशेन त्यज्धातुजन्यशाब्दबोधसामग्रीशरीरे च विभागरूपफलबोधकसामग्रीनिवेशेन संयोगविभागादिरूपफलविशेषविषयकबोधस्यापि जायमानत्वात् त्यजिगम्योः शक्त्या विलक्षणबोधजनकत्वसंभवेपि त्यजिगम्योः पर्यायताभ्रमकाले तु नैवं संभवति किं तु त्यज्धातुजन्यशाब्दबोधसामग्रीशरीरे गम्धातुजन्यशाब्दबोधसामग्रीशरीरे चैकसमानफलबोधकसामग्र्या एव निवेशः स्यादिति 'ग्रामं गच्छति' 'ग्रामं त्यजति' इत्युभयत्रैवैकसमानफलबोधकसामग्रीविशिष्टसामग्र्या व्यापारमात्रवाचकत्यजिगमिशक्त्या विलक्षणबोधोत्पत्तेरसंभव एव, 'त्यागः' 'गमनम्' इत्यादौ तु फलबोधकद्वितीयासमभिव्याहाराभावेन संयोगादिरूपफलविशेषबोधकद्वितीयासमभिव्याहाररूपसामग्र्याः शाब्दबोधजनकसामग्र्यां निवेश एव नास्ति येन त्यागगमनपदाभ्यां विलक्षणबोधः स्यादिति त्यागगमनादिघटकगम्यादिशक्तिज्ञानात् फलाविषयक एव बोधः संभवति न फलविषयक इति सिद्धं तथा 'त्यागः' 'गमनम्' इत्यादौ गम्यादिशक्तिज्ञानात् फलाविषयकबोधस्याप्युक्तरीत्या जननत्वे बोधवैलक्षण्यसंपादकफलोपस्थितेश्च फलोपस्थापकाभावादभावे प्राप्ते त्यजिगम्योश्च व्यापारमात्रवाचकत्वस्वीकारेणाऽभ्रान्तस्यापि त्यजिगमिभ्यामविलक्षणबोधावश्यम्भावाद् व्युत्पन्नानां त्यागादितात्पर्येण गमनादिपदप्रयोगादिप्रसङ्गः स्यादेव । एवमेव 'ग्रामं गच्छति' 'ग्रामं त्यजति' इत्यत्रापि त्यजिगम्योस्तु व्यापारमात्रवाचकत्वमेव फलविशेषबोधकसामग्र्याश्चोक्तरीत्या गम्यादिधातुजन्यबोधवैलक्षण्यनियामकत्वं न संभवतीत्यऽभ्रान्तस्यापि व्युत्पन्नस्य त्यजिगमिभ्यां विलक्षणबोधावश्यम्भावात् 'ग्रामं त्यजति' इतितात्पर्येण 'ग्रामं गच्छति' इतिप्रयोगप्रसङ्गः स्यादेवेति धातोर्व्यापारमात्रवाचकत्वं न युक्तमिति ।

मैवम्—कर्मप्रत्ययासमभिव्याहृतत्यागगमनादिपदस्य तत्तत्फलावच्छिन्नव्यापारेऽनादितात्पर्यं कल्प्यते न तु केवलव्यापारे, अनादितात्पर्यमेव च स्वारसिकप्रयोगनियामकमित्येकार्थतात्पर्येण प्रामाणिकानां स्वारसिको न त्यागगमनादिपदप्रयोगः ।

एवं त्यजिगमिप्रभृतिसमभिव्याहृतकर्मप्रत्ययस्य फलविशेषे एव नियतं तादृशं तात्पर्यमिति न विभागादितात्पर्येण 'ग्रामं गच्छति' इत्यादिप्रयोगः । तदर्थबोधकत्वमात्रं तु न तदर्थतात्पर्येण स्वारसिकप्रयोगनियामकम्, तथा सति

---

परिहरति— मैवमिति, कर्मप्रत्ययो द्वितीयादिस्तत्समभिव्याहारस्थले 'ग्रामं गच्छति' 'ग्रामं त्यजति' इत्यादौ तु संयोगविभागादिरूपफलबोधकद्वितीयासत्त्वादेतादृशवाक्यजन्यबोधस्य वैलक्षण्यं स्पष्टमेव संभवति, कर्मप्रत्ययाऽसमभिव्याहृतत्यागगमनादिपदस्य=द्वितीयान्तकर्मवाचकग्रामादिपदरहितस्य 'त्यजति' 'गच्छति' 'त्यागः' 'गमनम्' इत्यादिपदस्य तत्तत्फलावच्छिन्नव्यापारे तात्पर्यं कल्प्यते यथा 'गच्छति' इतिपदघटकगम्धातोः संयोगरूपफलजनकव्यापारे 'त्यजति' इतिपदघटकत्यज्धातोर्विभागरूपफलजनकव्यापारे एवानादितात्पर्यमस्ति न तु केवलव्यापारे=फलानवच्छिन्नव्यापारे, अनादितात्पर्यमेव च स्वारसिकप्रयोगनियामकमस्तीति न प्रामाणिकानामेकार्थतात्पर्येण=त्यागतात्पर्येण गमनपदप्रयोगापत्तिः, गमनतात्पर्येण वा त्यागपदप्रयोगापत्तिरित्यर्थः । यथा कौपीनशब्दस्य पापे शक्तत्वेऽप्यऽनादितात्पर्यं पुरुषेन्द्रियाच्छादकवस्त्रविशेषे एवास्तीति तादृशवस्त्रतात्पर्येणैव कौपीनशब्दप्रयोगो भवति न तु शक्यार्थपापतात्पर्येणापि तथात्र धातोर्व्यापारमात्रशक्तत्वेऽप्यनादितात्पर्यं फलविशेषावच्छिन्नव्यापारे एवास्तीति तादृशफलविशेषावच्छिन्नव्यापारतात्पर्येणैव तत्तद्धातुपदप्रयोग उपपद्यते न तु शक्यार्थव्यापारमात्रतात्पर्येणापीति नोक्तप्रयोगसांकर्यापत्तिरिति भावः ।

एवमेव 'ग्रामं गच्छति' इत्यादौ कर्मप्रत्ययस्य द्वितीयादेर्यदि संयोगादिरूपफलविशेषे तात्पर्यं न स्यात् किं तु फलमात्रे तात्पर्यं स्यात्तदा द्वितीयायाः संयोगविभागादिरूपानेकविधफलेषु शक्तत्वाद् द्वितीयया विभागरूपफलोपस्थितेरपि संभवाद् धातोश्च व्यापारमात्रस्योपस्थितेः संभवात् 'ग्रामं गच्छति' इत्यनेन विभागजनकव्यापारबोधस्यापि संभवाद् विभागादितात्पर्येण 'ग्रामं गच्छति' इति प्रयोगः स्यादेव, यदा च गम्धातुसमभिव्याहृतकर्मप्रत्ययद्वितीयायाः फलविशेषे=संयोगे एव तात्पर्यं न विभागे तथा त्यज्धातुसमभिव्याहृतद्वितीयाया विभागरूपफले एव तात्पर्यं न संयोगे तदा तु विभागादितात्पर्येण 'ग्रामं गच्छति' इत्यादिप्रयोगापत्तिर्नास्त्येवेत्याह—एवमिति । तादृशम्=अनादि । ननु यदि द्वितीयाया विभागरूपफलबोधकत्वमप्यस्ति तत्र शक्तत्वात् तदा 'ग्रामं गच्छति' इत्यत्रापि द्वितीयया विभागरूपफलोपस्थितिसंभवाद् विभागतात्पर्येण 'ग्रामं गच्छति' इतिस्वारसिकप्रयोगः कथं न स्यादित्याशङ्क्याह—तदर्थेति । विपक्षे बाधकमाह—तथा सतीति । तथासति=यदि तदर्थबोधकत्वमात्रं तदर्थतात्पर्येण स्वारसि-

शक्तिभ्रमादिना घटपदस्यापि पटादिबोधकतया पटादितात्पर्येणापि स्वारसिकघ-टादिपदप्रयोगापत्तेः। नापि शक्त्या बोधकत्वं तथा—निरूढलक्षणयापि स्वारसि-कपदप्रयोगात्।

शक्तिभ्रमं लक्षणाज्ञानं चान्तरेण गम्यादेर्विभागादिरूपफलविशेषविशेषितस्प-न्दादिबोधकत्वाऽभावनियमोऽसिद्ध एवेति तात्पर्यभ्रमसहकृतशक्तिप्रमया तादृश-बोधजननेपि न क्षतिः। विना लक्षणाग्रहं भ्रमानधीनतादृशबोधो गमिप्रभृतितो न

---

कप्रयोगनियामकं स्यात्तदा शक्तिभ्रमेण घटपदस्यापि पटादिबोधकत्वात् पटेपि घटपदस्य स्वारसि-कप्रयोगः स्यादेव न चैवं भवतीति न तदर्थबोधकत्वमात्रं तदर्थतात्पर्येण स्वारसिकप्रयोगनिया-मकमित्यर्थः। ननु नात्र शक्तिभ्रमस्य प्रसङ्ग इति शक्त्या बोधकत्वं स्वारसिकप्रयोगनियामकं भविष्यत्येवेति द्वितीयायाः शक्त्यैव विभागरूपफलबोधकत्वमस्त्येवेति विभागादितात्पर्येण 'ग्रामं गच्छति' इतिप्रयोगः स्यादेवेत्याशङ्क्याह—नापीति। तथा=स्वारसिकप्रयोगनियामकम् परिहारहेतुमाह—निरूढेति। तस्मादनादितात्पर्यमेव स्वारसिकप्रयोगनियामकम्, गम्धातुसमभि-व्याहृतद्वितीयाया अनादितात्पर्यं च संयोगरूपफले एवेति न विभागतात्पर्येण 'ग्रामं गच्छति' इतिप्रयोगापत्तिरित्यर्थः। निरूढलक्षणया स्वारसिकपदप्रयोगो यथा प्रवीणे कुशलेतिपदप्रयोगः

नन्वनादितात्पर्यस्यैव स्वारसिकप्रयोगनियामकत्वे शक्तिभ्रमं विना तथा लक्षणाज्ञानं विना गम्यादेर्विभागादिरूपफलविशेषविशेषितस्पन्दादिबोधकत्वं नास्ति किं तु शक्तिभ्रमेण वा लक्षणा-ज्ञानेन वैव गम्यादेर्विभागादिरूपफलविशेषविशेषितस्पन्दादिबोधकत्वमस्तीति नियमस्य भङ्गः स्यात्, अनादितात्पर्यस्य नियामकत्वेऽनादितात्पर्यभ्रमेणापि गम्यादेर्विभागादिरूपफलविशेषवि-शेषितस्पन्दादिबोधकत्वापत्तेरित्याशङ्क्याह—शक्तिभ्रममिति। उक्तनियमो नास्त्येवेति तात्पर्यभ्रम-सहकृतशक्तिप्रमया तादृशबोधजनने=गम्यादेर्विभागादिरूपफलविशेषविशेषितस्पन्दविषयकबोध-जननेपि न क्षतिः=न किंचिन्नियमभङ्गः। द्वितीयायाः संयोगविभागादौ शक्तिरस्त्येवेति 'ग्रामं गच्छति' इत्यत्रापि द्वितीयाया यद् विभागे शक्तिज्ञानं तत्प्रमैवास्ति किं तु गम्धातुसमभिव्या-हृतद्वितीयायाः संयोगे एवानादितात्पर्यमस्तीति विभागेऽनादितात्पर्यग्रहो भ्रम एवेत्युक्तम्—तात्पर्य-भ्रमसहकृतशक्तिप्रमयेति। स्वमतेन नियमस्वरूपमाह—विनेति, लक्षणाज्ञानेन वा शक्तिभ्रमेण वा तात्पर्यभ्रमेण वैव गम्यादिधातुतो विभागादिरूपफलविशेषविशेषितस्पन्दादिबोधो जायते नान्यथेत्येव नियमोस्तीत्यर्थः। स च=उक्तनियमः। ननु यदुक्तम्—'लक्षणाग्रहं विना गमिप्रभृ-तिधातुभ्यो विभागादिरूपफलविशेषविशेषितस्पन्दादिरूपव्यापारबोधस्तात्पर्यभ्रमेणैव जायते' इति नियम इति, स नियमो न संभवति यतः—यस्य पुंसो गम्धातोर्विभागाद्यर्थे पूर्वपूर्वेषां तात्पर्य-मस्तीति तात्पर्यभ्रमो जातस्तेन पुंसा यत्र=यदा स्वकीयतात्पर्येण=विभागादिविषयकस्वीयतात्पर्येण 'ग्रामं गच्छति' इत्यादिप्रयोगः कृतस्तत्र=तदा श्रोतुर्गम्धातोर्विभागाद्यर्थे पूर्वपूर्वेषां तात्पर्य-मस्तीत्याकारकस्यानादितात्पर्यभ्रमस्याभावेप्युक्तवक्तुर्विभागादितात्पर्येण 'ग्रामं गच्छति'

संभवतीत्येव नियमः, स च तात्पर्यभ्रमेणैव निर्वहति । विभागाद्यर्थे पूर्वपूर्वेषामनादितात्पर्यभ्रमवतो वक्तुः स्वकीयतात्पर्येण 'ग्रामं गच्छति' इत्यादिप्रयोगो यत्र तत्र श्रोतुस्तात्पर्यभ्रमासंभवेपि वक्तृतात्पर्यानादित्वभ्रम एव प्रयोगसंपादनद्वारा तदर्थशाब्दबोधप्रयोजक इति न तादृशनियमक्षतिरिति प्राचीनपथपरिष्कारप्रकारः ।

नव्यास्तु—संयोगादिरूपफलविशेषावच्छिन्नस्पन्दो गम्याद्यर्थः । तद्धात्वर्थतावच्छेदकफलशालित्वमेव तद्धातुकर्मत्वं नातो गम्यादिकर्मत्वस्य पूर्वदेशादौ प्रस-

---

प्रयोगात् श्रोतुर्विभागादिविषयकशाब्दबोधो जायते एवेत्युक्तनियमस्य व्यभिचारः प्राप्त इत्याशङ्क्याह—विभागाद्यर्थेति, तत्र श्रोतुः पूर्वपूर्वेषामनादितात्पर्यभ्रमासंभवेपि उक्तवक्तृतात्पर्ये त्वनादित्वभ्रमोस्त्येव तेनैव वक्तृतात्पर्यानादित्वभ्रमेण श्रोतापि विभागादितात्पर्येण 'ग्रामं गच्छति' इतिप्रयोगं संपादयति ( करोति ) एतादृशवाक्याद्विभागादिरूपफलविषयकबोधोपि श्रोतुर्जायते इत्यनादितात्पर्यभ्रमाभावेपि वक्तृतात्पर्यभ्रम एव 'ग्रामं गच्छति' इतिप्रयोगसंपादनद्वारा तादृशार्थबोधस्य=विभागादिविषयकशाब्दबोधस्य प्रयोजको भवति, वक्तृतात्पर्यभ्रमोपि च तात्पर्यभ्रम एवेति तादृशनियमस्य=तात्पर्यभ्रमेणैव गम्यादिना विभागादिरूपफलविशेषविशेषितस्पन्दादिबोधो जायते नान्यथेति नियमस्य क्षतिः=व्यभिचारो नास्त्येव—उक्तस्थलेपि श्रोतुस्तात्पर्यभ्रमस्य सत्त्वादेवेत्यर्थः ।

नवीनमतमाह—नव्यास्त्विति, नवीनमते न केवलव्यापारवाचकत्वं धातूनां किं तु "फलव्यापारयोर्धातुः" इतिवैयाकरणमतवत् संयोगादिरूपफलविशेषावच्छिन्नस्पन्दादिव्यापारवाचकत्वमेव गम्यादिधातूनाम्, जनकत्वसंबन्धेन संयोगादिरूपफलविशिष्टत्वमेव फलविशेषावच्छिन्नत्वम्. तथा च गम्धातोः संयोगरूपफलावच्छिन्नस्पन्दे एव शक्तिर्न स्पन्दमात्रे इति न विभागादितात्पर्येण 'ग्रामं गच्छति' इति प्रयोगापत्तिः । एवं विभागरूपफलावच्छिन्नस्पन्दे एव त्यज्धातोः शक्तिरिति न संयोगादितात्पर्येण 'ग्रामं त्यजति' इति प्रयोगापत्तिरित्यर्थः । कर्मत्वस्वरूपमाह—तद्धात्वर्थेति । यदि प्रकृतधात्वर्थफलशालित्वं कर्मत्वमित्युच्येत तदा गमनेन यथोत्तरदेशसंयोग उत्पद्यते इत्युत्तरदेशसंयोगस्य फलत्वं तथा पूर्वदेशविभागोप्युत्पद्यते एवेति पूर्वदेशविभागस्यापि गमनफलत्वं स्यादेव तथा च गमनजन्यसंयोगवत्त्वाद् यथोत्तरदेशस्य गम्यादिकर्मत्वं तथा गमनजन्यविभागरूपफलवत्त्वात् पूर्वदेशस्यापि गम्यादिकर्मत्वं स्यादेव न चैतदिष्टमिति तद्धात्वर्थतावच्छेदकफलशालित्वमेव तद्धातुकर्मत्वमित्युच्यते एवं च 'ग्रामं गच्छति' इत्यत्र गम्धात्वर्थतावच्छेदकं फलं संयोग एवेति तादृशसंयोगाश्रयत्वमेव गम्धातुकर्मत्वमिति लब्धम्, गमनजन्यसंयोगाश्रयत्वं तूत्तरदेशस्यैवास्तीत्युत्तरदेशस्यैव गम्धातुकर्मत्वं प्राप्तं न तु पूर्वदेशस्यापि—पूर्वदेशस्य गमनजन्यसंयोगरूपफलाश्रयत्वाभावात् । पूर्वदेशस्य विभागाश्रयत्वात् त्यज् धातुकर्मत्वमेव, एवम् 'ग्रामं त्यजति' इत्यत्र धात्वर्थतावच्छेदकं फलं विभाग एवेति तादृश-

ङ्गः। न वा स्पन्दे: सकर्मकत्वम्–तत्र फलस्य धात्वर्थताऽनवच्छेदकत्वात्। एवं च धातोरेव फलविशेषलाभात् फलान्वयिनी वृत्तिरेव द्वितीयार्थः। न च "कर्मणि द्वितीया" इत्यनुशासनविरोधः-तस्य कर्मणि=फलनिष्ठाधेयत्वान्वयिनि प्रकृति-तात्पर्ये तदुत्तरं द्वितीयेत्यर्थकत्वात्। न चैवं तस्य शक्तिग्राहकत्वानुपपत्तिः- अनादितात्पर्यग्रहसंपादकत्वेन परम्परया शक्तिग्राहकत्वसंभवात्। न च फलस्य पदार्थैकदेशतया तत्र द्वितीयार्थवृत्तेरन्वयासंभवः- व्युत्पत्तिवाचव्येण प्रकृते एक-देशान्वयस्वीकारात्।

---

विभागाश्रयस्यैव त्यजधातुकर्मत्वं ज्ञेयम्। एवंरीत्या कर्मत्वलक्षणेन स्पन्दे:=स्पन्द्यादिधातो सकर्मकत्वापत्तिरपि नास्ति तत्र फलस्य धात्वर्थतावच्छेदकत्वाभावादित्याह–न वेति। एवं च धातोः फलावच्छिन्नव्यापारवाचकत्वेन फलविशेषवाचकत्वमपि धातोरेव प्राप्तं न द्वितीयाया इति फलान्वयिनी=संयोगादिरूपफलनिष्ठा या वृत्तिः=आधेयता सैव द्वितीयार्थः, संयोगस्य ग्रामनि-ष्ठत्वाद् ग्रामनिरूपिताऽऽधेयता संयोगेऽस्त्येव, 'ग्रामं गच्छति' इत्यत्र 'ग्रामनिरूपिताधेयतावत्सं-योगजनकव्यापारवान्' इतिबोधोदयादित्याह–एवमिति। ननु द्वितीयाया आधेयतार्थकत्वे "कर्मणि द्वितीया" इतिसूत्रविरोधः स्यात्–अनेन सूत्रेण कर्मत्वे द्वितीया विधीयते नत्वाधेयतायामित्याशङ्-क्याह–न चेति। परिहारहेतुमाह–तस्येति, तस्य="कर्मणि द्वितीया" इति सूत्रस्य 'यदा प्रकृतिभूत-ग्रामादिपदस्य संयोगादिरूपफलनिष्ठा याऽऽधेयता तादृशाधेयतान्वयिनि=तादृशाधेयतानिरूपके ग्रामादिपदार्थे तात्पर्यं भवति तदा तदुत्तरम् ग्रामादिपदोत्तरं द्वितीया भवति' इत्यर्थो न तु 'कर्मत्वे द्वितीया भवति' इत्यर्थ इति नास्माकं "कर्मणि द्वितीया" इत्यनुशासनविरोध इ-त्यर्थः। सूत्रघटकस्य "कर्मणि" इतिपदस्यार्थमाह– फलनिष्ठाधेयत्वान्वयिनीति। ननु सूत्रघटककर्मपदस्य कर्मपदार्थे कर्मत्वे वा शक्तिः संभवति न तु फलनिष्ठाधेयत्वान्वयिनि किं तु तत्र तात्पर्यमात्रमेव स्यात् त्वयापि सूत्रतात्पर्यस्यैव वर्णितत्वादिति तस्य="कर्मणि द्वितीया" इति सूत्रस्य त्वदुक्तार्थपरत्वे शक्तिग्राहकत्वं न स्यादस्ति च व्याकरणस्यापि शक्ति-ग्राहकत्वम् "शक्तिग्रहं व्याकरणोपमान" इति प्रमाणादित्याशङ्क्याह– न चैवमिति। अनादितात्पर्यग्राहकत्वमपि शक्तिग्राहकत्वमेवास्ति किं वाऽनादितात्पर्यग्राहकत्वपरम्परया शक्ति-ग्राहकत्वं सूत्रस्य ज्ञेयं सूत्रघटककर्मपदस्य च फलनिष्ठाऽऽधेयत्वाऽन्वयिन्येवानादितात्पर्यमस्ति तादृशस्यैव बोधस्य जायमानत्वादित्यभिप्रायेण परिहारहेतुमाह– अनादीति। ननु फलाव-च्छिन्नव्यापारस्य धात्वर्थत्वे फलस्य पदार्थैकदेशत्वं प्राप्तं तत्र च द्वितीयार्थस्य वृत्ते=आधे-ताया अन्वयो न संभवति–"पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेन" इति व्युत्पत्तिविरोधा-दित्याशङ्क्याह– न चेति। परिहारहेतुमाह– व्युत्पत्तीति। धात्वर्थादन्यत्र पदार्थस्य पदार्थैक-देशेऽन्वयो न भवति धात्वर्थस्थले तु धात्वर्थैकदेशेपि पदार्थान्तरस्यान्वयो भवतीत्येतादृशव्युत्प-त्तिवैचित्र्येण पदार्थैकदेशेपि फले द्वितीयार्थाधेयत्वान्वये न कोपि विरोध इत्यर्थः।

अथ 'गमनं न स्पन्दः' इत्यादितो धात्वर्थतावच्छेदकफले स्पन्दभेदान्वयबोधसंभवेनैतादृशप्रयोगस्य वारणाय फलविशेष्यकान्वयबोधे तद्विशेष्यकवृत्तिज्ञानजन्यफलोपस्थितित्वेन हेतुत्वकल्पनस्यावश्यकत्वात् तादृशकारणबाधेन धात्वर्थतावच्छेदकफले द्वितीयार्थान्वयासंभवः ।

न च यादृशपदसमभिव्याहारज्ञानात् फलविशेष्यकस्पन्दभेदान्वयबोधः प्रसिद्धस्तादृशपदसमभिव्याहारज्ञानतादृशपदज्ञानजन्यफलाद्युपस्थितिघटितसामग्र्यास्तादृशान्वयबोधोत्पादप्रयोजिकाया असत्त्वेनोक्तस्थले तदापत्त्यसंभव इति वाच्यम्, यत्र गमनादिपदादेव लक्षणया शक्तिभ्रमेण वा स्वातन्त्र्येण फलो-

---

ननु यद्युक्तरीत्या द्वितीयार्थाधेयात्वस्य धात्वर्थैकदेशेपि संयोगादिरूपफलेऽन्वयो भवति तदा 'गमनं न स्पन्दः' इत्यत्रापि गमनपदादुपस्थितो यः संयोगरूपफलावच्छिन्नव्यापारस्तादृशव्यापारैकदेशभूतसंयोगे स्पन्दभेदस्यान्वयसंभवेन 'गमनं न स्पन्दः' इत्यपि प्रयोगः स्यादेव, न चैवं प्रयोगो भवति धात्वर्थस्य स्पन्दरूपत्वेन तत्र स्पन्दभेदासंभवादित्येतादृशप्रयोगस्य='गमनं न स्पन्दः' इति प्रयोगस्य वारणाय फलविशेष्यकबोधं प्रति तद्विशेष्यक=फलविशेष्यकवृत्तिज्ञानजन्यफलोपस्थितेर्हेतुत्वं वक्तव्यं यथा 'संयोगो न स्पन्दः' इत्यत्र संयोगविशेष्यकवृत्तिज्ञानात्संयोगोपस्थितिरस्तीति स्पन्दभेदप्रकारकसंयोगविशेष्यकशाब्दबोधो जायते तथा च 'गमनं न स्पन्दः' इत्यत्र गमनपदेन विशेष्यतयोपस्थितिस्तु गमनरूपस्पन्दस्यैव भवति न फलस्येति न संयोगरूपफले स्पन्दभेदस्यान्वयः संभवति विशेष्यतयोपस्थितं गमनं तु स्पन्दरूपमेवेति न तत्रापि स्पन्दभेदान्वयः संभवतीति 'गमनं न स्पन्दः' इतिप्रयोगो न भवति, तथा च 'ग्रामं गच्छति' इत्यत्रापि संयोगरूपफलस्य विशेष्यतयोपस्थितिर्नास्तीति तादृशकारणबाधेन=फलविशेष्यकबोधसपादिकायाः फलस्य विशेष्यतयोपस्थितेर्बाधेन=असत्त्वान्नात्र धात्वर्थतावच्छेदकफले संयोगे द्वितीयार्थस्याधेयत्वस्यान्वयः संभवतीत्याशङ्कते— अथेति । अथेत्यत्र 'अथैवम्' इतियुक्तः पाठः । किं वा ''बोधसंभवेन'' इत्यत्र 'बोधासंभवेन' इतिपठितव्यम् ।

ननु यादृशपदसमभिव्याहारज्ञानात्='संयोगः स्पन्दो न' इत्यत्र संयोगपदसमभिव्याहारज्ञानात् संयोगरूपफले स्पन्दभेदान्वयबोधो जायते इति तादृशपद=संयोगपदसमभिव्याहारेण संयोगपदजन्यसंयोगरूपफलोपस्थित्या च घटितायाः तादृशान्वयबोधोत्पादप्रयोजिकायाः=स्पन्दभेदप्रकारकसंयोगरूपफलविशेष्यकबोधोत्पत्तिप्रयोजिकायाः सामग्र्या उक्तस्थले— 'गमनं न स्पन्दः' इत्यत्रासत्त्वेन तदापत्त्यसंभवः=गमनपदोपस्थितसंयोगरूपफलावच्छिन्नव्यापारैकदेशे संयोगरूपफले स्पन्दभेदान्वयस्यापत्तिर्नास्ति, संयोगस्य विशेष्यतयोपस्थापकसामग्रीसत्त्वे एव विशेष्यतयोपस्थितसंयोगे पदार्थान्तरान्वयसंभवादिति न 'गमनं न स्पन्दः' इति प्रयोगापत्तिरित्याशङ्क्याह— न चेति । परिहरति— यत्रेति, यदा हि 'गमनं न स्पन्दः' इत्यत्र गमनपदेन लक्षणया शक्तिभ्रमेण वा केवलसंयोगरूपफलस्यैवोपस्थितिर्भवति तत्र स्वातन्त्र्येण=विशेष्यतया

पस्थितिस्तत्र फलविशेष्यकस्पन्दभेदान्वयबोधप्रसिद्ध्या गमनपदसमभिव्याहार-तज्जन्यफलोपस्थितिघटितसामग्र्याः फलविशेष्यकस्पन्दत्वाद्यवच्छिन्नभेदान्वयबोधप्रयोजकताया आवश्यकत्वात् तद्बलेन शक्तिप्रमाधीनबोधेपि फलांशे स्पन्दभेदादिभानप्रसङ्गात् ।

एवं च फलव्यापारयोः पृथक् शक्तिस्वीकारपक्षेपि न निस्तारः— तथात्वेपि हि 'गमनं न स्पन्दः' इत्यादौ फलांशे शक्तिप्रमया स्पन्दभेदान्वयबोधसंभवेन तादृशप्रयोगापत्तेर्दुर्वारत्वादिति चेत् ?,

न, तद्विशेष्यकवृत्तिज्ञानजन्यतदुपस्थितिजन्यतावच्छेदककोटौ तादृशोपस्थि-

---

फलोपस्थितेः सत्त्वात् फले संयोगे स्पन्दभेदस्यान्वयः संभवत्येवेति तत्र फलविशेष्यकस्पन्दभेदप्रकारकशाब्दबोधस्य प्रसिद्ध्या गमनपदसमभिव्याहारेण गमनपदजन्यसंयोगरूपफलोपस्थित्या च घटितायाः सामग्र्याः फलविशेष्यकस्पन्दभेदप्रकारकशाब्दबोधं प्रति प्रयोजकतायाः=हेतुतायाः स्वीकारस्यावश्यकत्वात् तद्बलेन=उक्ततादृशसामग्रीबलेन शक्तिप्रमाधीनबोधेपि=यत्र 'गमनं न स्पन्दः' इतिवाक्यघटकगमनपदाच्छक्तिप्रमया संयोगावच्छिन्नव्यापारस्योपस्थितिर्जाता तयोपस्थित्या च शाब्दबोधो जायते तत्रापि फले संयोगे स्पन्दभेदान्वयप्रयोजिकाया उक्ताया गमनपदसमभिव्याहारगमनपदजन्यसंयोगरूपफलोपस्थितिघटितसामग्र्याः सत्त्वादेव फलांशे= गमनपदोपस्थितफलावच्छिन्नव्यापारैकदेशभूतेपि फले स्पन्दभेदस्यान्वयबोधः स्यादेवेति 'गमनं न स्पन्दः' इतिप्रयोगोपि स्यादेव संयोगे स्पन्दभेदस्य सत्त्वादेव. न चैवं प्रयोग इष्ट इति तद्वारणाय संयोगे स्पन्दभेदान्वयबोधं प्रति शक्तिप्रमया विशेष्यतया संयोगोपस्थितेः कारणत्वं वक्तव्यं. सा च 'गमनं न स्पन्दः' इत्यत्र नास्तीति न संयोगे स्पन्दभेदान्वयापत्तिस्तथा चैवमेव 'ग्रामं गच्छति' इत्यत्रापि संयोगस्य विशेष्यतयोपस्थित्यभावात्तत्रसंयोगे द्वितीयार्थाधेयत्वान्वयासंभव इत्यर्थः ।

ननु गम्यादिधातोः फलव्यापारयोः पृथक् पृथक् खण्डशः शक्तिं स्वीकरिष्यामस्तथा च 'ग्रामं गच्छति' इत्यत्र गम्धातुना संयोगरूपफलस्यापि व्यापारवत् स्वतन्त्रैव विशेष्यतयोपस्थितिर्भविष्यति न व्यापारविशेषणत्वेन येनात्र संयोगरूपफले द्वितीयार्थाधेयत्वस्यान्वयानुपपत्तिः स्यादित्याशङ्कयाह— एवं चेति । एवं च=एवमेव । परिहारहेतुमाह— तथात्वेपीति । तथात्वे=फलव्यापारयोः पृथक् शक्तिस्वीकारपक्षेपि 'गमनं न स्पन्दः' इत्यत्रापि गमनपदाद् व्यापारवत् संयोगरूपफलस्यापि पृथक् शक्त्या विशेष्यतयोपस्थितिः स्यादेवेति विशेष्यतयोपस्थितसंयोगे स्पन्दभेदस्यान्वयसंभवेन तादृशप्रयोगस्य=' गमनं न स्पन्दः ' इति प्रयोगस्याऽऽपत्तिर्दुर्वारैव स्यादिति न फलव्यापारयोर्धातूनां खण्डशक्तिस्वीकारपक्षेपि निस्तार इत्यर्थः ।

अथेत्यादिना शङ्कितं परिहरति— नेति, यत्रैकविधशाब्दबोधं प्रत्यनेकविधोपस्थित्यादीनां कारणत्वं प्राप्नोति तत्र कार्यतावच्छेदककोटौ कारणाव्यवहितोत्तरत्वनिवेशस्य मर्यादास्तीति

त्यव्यवहितोत्तरत्वनिवेशनमावश्यकम्, विशिष्य तत्तत्पदमन्तर्भाव्यैव पदार्थोपस्थितेरेकैकविधबोधे नानाहेतुताया व्यवस्थापितत्वाद् एकपदाधीनतद्विषयकशाब्दबोधे पदान्तरवृत्तिज्ञानजन्यतदुपस्थितेर्व्यभिचारस्य प्रकारान्तरेण वारणासंभवात् । एवं च धात्वर्थतावच्छेदकफले द्वितीयार्थान्वयबोधेऽपि क्षतिविरहः– तत्रैतादृशकारणस्य व्यभिचाराप्रसक्तेरिति वदन्ति ।

---

बहुधा प्रतिपादितम्, एतदेवाह– तद्विशेष्यकेति । यथा घटविशेष्यकबोधं प्रति घटपदजन्योपस्थितेः कारणत्वं तथा कलशपदजन्योपस्थितेरपि कारणत्वमस्त्येव किं तु घटपदजन्योपस्थितिजन्यशाब्दबोधकाले कलशपदजन्योपस्थितेरसत्त्वेन कारणत्वव्यभिचारः स्यादिति तादृशव्यभिचारस्य कार्यतावच्छेदककोटौ कारणाव्यवहितोत्तरत्वनिवेशं विना प्रकारान्तरेण वारणासंभवादित्याह– एकपदेति, तथा च घटपदजन्योपस्थित्यव्यवहितोत्तरजायमानघटविशेष्यकशाब्दबोधं प्रति घटपदजन्योपस्थितिः कारणमित्येवं विशेषरूपेण तत्तत्पदमन्तर्भाव्यैव पदार्थोपस्थितेः कारणत्वं वक्तव्यम्, एकप्रकारकबोधे घटकलशादिपदजन्यनानाविधोपस्थितीनां या नानाहेतुता तस्याः प्रकारान्तरेण व्यवस्थाया असंभवादित्याह– विशिष्येति । तथा च प्रकृतेऽपि संयोगविशेष्यकवृत्तिज्ञानजन्यसंयोगोपस्थित्यव्यवहितोत्तरजायमानसंयोगविशेष्यकशाब्दबोधं प्रति संयोगविशेष्यकवृत्तिज्ञानजन्यसंयोगोपस्थितेः कारणत्वमित्येवं विशेषरूपेणैव कार्यकारणभावो वक्तव्यः=तत्तच्छाब्दबोधं प्रति तत्तद्विशेष्यकोपस्थितेरेव कारणत्वमिति यावत् तथा च यदा 'गमनं न स्पन्दः' इत्यत्र गमनपदाल्लक्षणया विशेष्यत्वेन संयोगोपस्थितिः स्यात्तदा तत्र विशेष्यत्वेनोपस्थितसंयोगे स्पन्दभेदान्वयस्य न काप्यनुपपत्तिः– एतादृशबोधं प्रति संयोगविशेष्यकोपस्थितेः कारणत्वात् तस्याश्चात्र सत्त्वात्– गमनपदेन लक्षणया संयोगस्य विशेष्यतयैवोपस्थितत्वात्, यदा च गमनपदात्संयोगावच्छिन्नव्यापारस्यैवोपस्थितिस्तदा तस्याः संयोगविशेष्यकशाब्दबोधं प्रति कारणत्वाभावान्न व्यापारैकदेशे संयोगे स्पन्दभेदान्वयापत्तिः–संयोगस्य विशेष्यतयोपस्थित्यभावादिति न 'गमनं न स्पन्दः' इतिप्रयोगापत्तिः । एवं च तत्तच्छाब्दबोधं प्रति तत्तद्विशेष्यकोपस्थितेः कारणत्वे स्वीकृते 'ग्रामं गच्छति' इत्यत्र द्वितीयार्थाधेयताया व्यापारैकदेशेऽपि संयोगेऽन्वयोपगमे संयोगविशेष्यकद्वितीयार्थाधेयत्वप्रकारकशाब्दबोधं प्रति द्वितीयासमभिव्याहृतगम्धातुजन्यसंयोगोपस्थितेः कारणत्वं प्राप्तमित्येतादृशकारणसत्त्वात् 'ग्रामं गच्छति' इत्यत्र व्यापारैकदेशेऽपि संयोगे द्वितीयार्थाधेयत्वस्यान्वये न काप्यनुपपत्तिः । स्पन्दभेदप्रकारकसंयोगविशेष्यकशाब्दबोधं प्रति च संयोगविशेष्यकोपस्थितेरेव कारणत्वात् तस्याश्च 'गमनं न स्पन्दः' इत्यत्राभावान्न व्यापारैकदेशे संयोगे स्पन्दभेदान्वयापत्तिरिति न 'गमनं न स्पन्दः' इतिप्रयोगापत्तिरित्याशयेनाह– एवं चेति । क्षतिविरहः='गमनं न स्पन्दः' इतिप्रयोगापत्तिरूपा क्षतिर्नास्तीत्यर्थः । उक्ते हेतुमाह– तत्रेति, तत्र=स्पन्दभेदप्रकारकसंयोगविशेष्यकशाब्दबोधे एतादृशकारणस्य=गम्धातुजन्याया व्यापारैकदेशत्वेन संयोगस्योपस्थितेः कारणत्वमेव नास्ति ( संयोगविशे

अत्रेदं चिन्त्यते- व्यापारमात्रस्य धात्वर्थतायामपि सर्वानुपपत्तीनामुद्धृतत्वात् फलावच्छिन्नव्यापारस्य गुरुतया तथात्वमनुचितम् ।

अथ फले द्वितीयादेः शक्त्यन्तरकल्पनामपेक्ष्य धातोर्विशिष्टे शक्तिकल्पनमेवोचितम् । न च भवन्मतेप्याधेयत्वे द्वितीयादेः शक्त्यन्तरस्य कल्पनीयत्वात्तदंशे साम्यमिति वाच्यम्, 'ग्राममध्यास्ते' 'ग्राममधिशेते' 'ग्रामं संयुनक्ति' इत्यादौ द्वितीयायाः सर्वमते एवाधेयत्वबोधकतया द्वितीयादेः फलवाचकत्वम-

व्यकोपस्थितेरेव कारणत्वात्) येन 'गमनं न स्पन्दः' इत्यत्र गम्धातुना व्यापारैकदेशत्वेनाप्युपस्थिते संयोगे स्पन्दभेदान्वयः आपद्येत ? यदि स्पन्दभेदप्रकारकसंयोगविशेष्यकशाब्दबोधं प्रति गम्धातुजन्याया व्यापारैकदेशत्वेन संयोगस्योपस्थितेः कारणत्वं स्यात्तदा 'गमनं न स्पन्दः' इत्यत्र स्पन्दभेदप्रकारकसंयोगविशेष्यकशाब्दबोधस्याऽजायमानत्वेप्येतादृशकारणस्य सत्त्वेन व्यभिचारः स्यात् ? न चैवमस्ति । किं वा तत्र=आधेयत्वप्रकारकसंयोगविशेष्यकशाब्दबोधे एतादृशकारणस्य=गम्धातुजन्यसंयोगविशेष्यकोपस्थितेः कारणत्वमेव नास्ति येन 'ग्रामं गच्छति' इत्यत्र संयोगविशेष्यकोपस्थितिं विनाप्याधेयत्वप्रकारकसंयोगविशेष्यकशाब्दबोधस्य जायमानत्वेन एतादृशकारणस्य=संयोगविशेष्यकोपस्थितेर्व्यभिचारः स्यादित्यर्थः प्रतीयते ।

इत्येवं प्राचीननवीनयोर्मतमुपपाद्य तयोः समीक्षामारभते- अत्रेदमित्यादिना, प्राचीनमतानुसारेण व्यापारमात्रस्यापि धात्वर्थत्वे न कोपि दोषः, ये च नवीनेन दोषाः प्रदर्शितास्तेप्युद्धृतास्तथा च फलावच्छिन्नव्यापारस्य गुरुतया तथात्वम्=धात्वर्थत्वं नोचितमित्यर्थः । व्यापारमात्रस्य धात्वर्थत्वे ये दोषा यथा प्रदर्शिता यथा चोद्धृतास्तत्सर्वं पूर्वं द्वितीयाकारकग्रन्थमारभ्य द्रष्टव्यमित्यलमत्र पुनस्तत्प्रदर्शनेन ।

ननु प्राचीनमतानुसारेण फले संयोगादौ द्वितीयादेः शक्तिकल्पनापेक्षया धातोरेव विशिष्टे=फलावच्छिन्नव्यापारे शक्तिकल्पनमुचितं लाघवात्. फले द्वितीयायाः पृथक् शक्तिकल्पने गौरवादित्याशङ्कते- अथेति । ननु भवन्मते=नवीनमतेपि धातोरेव फलावच्छिन्नव्यापारे शक्तिस्वीकारेण फले द्वितीयायाः शक्त्यभावेप्याधेयत्वे तु शक्तिः स्वीक्रियते एवेति यथा मया प्राचीनेन फले द्वितीयायाः शक्तिः स्वीक्रियते तथा त्वया नवीनेनाधेयत्वे शक्तिः स्वीक्रियते एवेति साम्यमेव प्रत्युत धातोः फलावच्छिन्नव्यापारे शक्त्या गौरवमधिकमित्याशङ्क्याह- न चेति । परिहारमाह- ग्राममिति, 'ग्राममध्यास्ते' इत्यत्र स्थितिरूपफलं तु धात्वर्थ एव द्वितीया च सप्तम्यर्थे जातास्तीति द्वितीयाया आधेयत्वमेवार्थः-ग्रामनिरूपिताधेयतावती स्थितिरितिबोधः, 'ग्राममधिशेते' इत्यत्र शयनरूपफलं तु धात्वर्थ एव द्वितीयार्थ आधेयत्वमेव 'ग्रामं संयुनक्ति' इत्यत्र संयोगरूपफलं तु धात्वर्थ एव द्वितीयार्थ आधेयत्वमेव भवतीत्युक्तोदाहरणस्थलेषु सर्वमतेष्वेव द्वितीयाया आधेयत्वरूपार्थबोधकत्वात् प्राचीनमते द्वितीयायाः फलवाचकत्वस्वीकारेप्याधेयत्ववाचकत्वमावश्यकमेव तथा च प्राचीनमते द्वितीयायाः फलवाचकत्वमप्याधेयत्ववाचकत्व-

तेष्वाधेयत्ववाचकताया आवश्यकत्वात् । न च द्वितीयायाः संयोगादिवाचकत्वमते आधेयत्वे तस्या लक्षणैव न तु शक्तिरिति वाच्यम्, आधेयतात्वस्याऽखण्डतया संयोगत्वादिसमशरीरत्वात् संयोगत्वाद्यवच्छिन्ने तदवच्छिन्ने वा शक्तिः कल्प्यते इत्यत्र विनिगमकासंभवात् ।

अस्तु वा ममाप्याधेयत्वे लक्षणैव शक्तिस्तु संख्यायामेव । यदि च द्वितीयादेः फलबोधकतामते फलेऽपि तस्या लक्षणैव न तु शक्तिः, शक्तिस्तु संख्यायामेव– संयोगविभागादिरूपप्रत्येकफलापेक्षया संख्यायां तत्प्रयोगप्राचुर्यस्य विनिगमकत्वादित्युच्यते ? । तथापि तन्मते धातुजन्यशुद्धव्यापारोपस्थितेः शाब्दबोधहेतुताकल्पनमधिकम्–द्वितीयाद्यसमभिव्याहारस्थलानुरोधेन फलविशेषावच्छि-

---

मपीति गौरवं नवीनमते केवलाधेयत्ववाचकत्वमेवेति लाघवमित्यर्थः । ननु प्राचीनमते द्वितीयायाः संयोगादिरूपफले एव शक्तिः आधेयत्वे तु तस्याः=द्वितीयाया लक्षणैवेति न फलाऽऽधेयत्वोभयवाचकत्वापत्त्या गौरवमित्याशङ्क्याह– न चेति । परिहारमाह– आधेयतात्वस्येति, यथा संयोगत्वमखण्डो धर्मस्तथाऽऽधेयतात्वमप्यखण्ड एव धर्म इत्याऽऽधेयतात्वस्य संयोगत्वसमानत्वेन विशेषाभावात् संयोगत्वाद्यवच्छिन्ने संयोगादौ फले द्वितीयायाः शक्तिरुचिता वा तदवच्छिन्ने=आधेयतात्वावच्छिन्ने आधेयत्वे वा द्वितीयायाः शक्तिरुचितेत्यत्र विनिगमकाभावाद् द्वितीयायाः फले एव शक्तिरिति नियमो न संभवति, तस्माद् द्वितीयाया आधेयत्वे एव शक्तिः– उक्तोदाहरणस्थलेषु द्वितीयाया आधेयत्वबोधकतायाः सर्वमतसिद्धत्वादित्यर्थः । अखण्डेति– बहुपदार्थाऽघटितत्वमेवाऽखण्डत्वम् ।

नवीन आह– अस्तु वेति, आधेयत्वे द्वितीयाया लक्षणास्वीकारेऽपि फले तु द्वितीयायाः शक्तिर्नास्त्येव किं तु संख्यायामेव शक्तिः– द्वितीयान्तप्रयोगेषु सर्वत्र द्वितीयाया एव संख्याबोधकत्वात्, फलं तु धातुलभ्यमेव– फलावच्छिन्नव्यापारे एव धातुशक्तिस्वीकारादित्यर्थः । ननु प्राचीनमतेऽपि द्वितीयाया यत्फलबोधकत्वं तल्लक्षणयैव न शक्त्येति फलेऽपि द्वितीयाया लक्षणैवोच्यते न शक्तिः शक्तिस्तु द्वितीयायाः संख्यायामेव स्वीक्रियते– 'ग्रामं गच्छति' इत्यत्र संयोग एव फलम् 'ग्रामं त्यजति' इत्यत्र विभाग एव फलं नत्वेकं फलं सर्वत्रास्ति यस्मिन् द्वितीयायाः शक्तिः स्वीक्रियेत संख्या तु सर्वत्रैव शाब्दबोधविषयो भवतीति संख्यायां तत्प्रयोगप्राचुर्यस्य=द्वितीयाप्रयोगप्राचुर्यस्यैव संख्यायां शक्तिकल्पने विनिगमकत्वादिति फले द्वितीयाया लक्षणया द्वितीयाया एव फलबोधकत्वं न धातोरित्याशङ्क्याह–यदि चेति । उत्तरमाह–तथापीति, तथापि=फले द्वितीयाया लक्षणास्वीकारेण शक्त्यऽस्वीकारेऽपि तन्मते=प्राचीनमते धातुना फलानवच्छिन्नस्य शुद्धस्य=केवलस्य व्यापारस्योपस्थितिर्या भवति तस्या यच्छाब्दबोधहेतुत्वं तदधिकमेव स्याद् यतः–'त्यजति' 'गच्छति' इत्यादौ द्वितीयासमभिव्याहाररहितस्थले फलबोधिकाया द्वितीयाया अभावाद् धातोरेव फलावच्छिन्नव्यापारे लक्षणा स्वीकर्तव्या तथा च धातु-

न्व्यापारे धातोर्लक्षणाया भवतामप्यावश्यकत्वाद् धातुजन्यतादृशव्यापारोपस्थितिहेतुताया उभयसिद्धत्वात् ।

यदि च 'स्पन्दते' इत्यादित इव शक्तिभ्रमात् 'गच्छति' इत्यादितोपि शुद्धव्यापारबोध आनुभविक इति मन्यते ? तथापि तन्मते शाब्दबुद्धौ द्वितीयादिजन्यफलोपस्थितेः कारणतायाः कल्पनाधिक्यं तज्जन्याधेयत्वोपस्थितिहेतुत्वकल्पनस्य चोक्तस्थलानुरोधेनोभयमत एवावश्यकत्वादितिचेत् ?, अस्तु तन्मते तादृशकारणताया आधिक्यम् ।

नव्यमते तु 'ग्रामं गच्छति' इत्यादिवाक्यज्ञानघटितशाब्दसामग्र्याः

---

जन्यफलावच्छिन्नव्यापारोपस्थितेरपि शाब्दबोधहेतुत्वं स्वीकर्तव्यमेवेति गौरवम् । 'गच्छति' इत्यत्रापि संयोगानुकूलव्यापारस्य प्रतीयमानत्वेन धातुजन्यायास्तादृशव्यापारोपस्थितेः=फलावच्छिन्नव्यापारोपस्थितेः शाब्दबोधहेतुता तव मम चेत्युभयमतसिद्धास्तीति प्राचीनमते धातुजन्योभयविधोपस्थितेः शाब्दबोधहेतुत्वकल्पनं प्राप्तमिति गौरवम्, नवीनमते तु धातुजन्यफलावच्छिन्नव्यापारोपस्थितेरेकाया एव शाब्दबोधहेतुत्वकल्पनापत्तिरिति लाघवमित्यर्थः ।

ननु यथा 'स्पन्दते' इत्यत्र न किंचित्फलावच्छिन्नव्यापारस्य बोधो जायते किं तु शुद्धव्यापारस्यैव तथा शक्तिभ्रमात् 'गच्छति' इत्यत्रापि द्वितीयारहितस्थले शुद्धव्यापारबोध एव जायते न फलावच्छिन्नव्यापारबोध इति धातुजन्यशुद्धव्यापारोपस्थितेरेवैकायाः प्राचीनमतेपि शाब्दबोधहेतुत्वमस्ति नोक्तधातुजन्यद्विविधोपस्थितेरिति नोक्तगौरवमित्याशङ्क्याह—यदि चेति । उत्तरमाह—तथापीति, तथापि=धातुजन्योक्तद्विविधव्यापारोपस्थितेः शाब्दबोधहेतुत्वकल्पनाप्रत्यभावेपि तन्मते=प्राचीनमते 'ग्रामं गच्छति' इत्यत्र शाब्दबोधं प्रति यद् द्वितीयाजन्यफलोपस्थितेः कारणत्वकल्पनं ( कारणत्वं ) तदधिकमेव, यतः—उक्तस्थलानुरोधेन='ग्राममध्यास्ते' इत्यादौ स्थित्यादिरूपफलस्य धातुनैव लभ्यत्वाद् धातोः स्थित्यर्थकत्वाद् द्वितीयाया आधेयत्वार्थकत्वमुभय ( तव मम ) मतसिद्धमेवेति तज्जन्य=द्वितीयाजन्याधेयत्वोपस्थितेस्तु शाब्दबोधहेतुत्वकल्पनमुभयमतसिद्धत्वादावश्यकमेवेति द्वितीयाजन्यफलोपस्थितेः कारणत्वकल्पनमधिकमेवेतिगौरवम् । नवीनमते त्वाधेयत्वमेव द्वितीयार्थ इति सर्वत्र द्वितीयाजन्याधेयत्वोपस्थितेरेकाया एव शाब्दबोधकारणत्वकल्पनापत्तिरिति लाघवमित्यर्थः । अथेत्यादिनारब्धामाशङ्कां परिसमापयति—इति चेदिति । उत्तरमाह—अस्त्विति, तन्मते=द्वितीयायाः फलबोधकत्ववादिप्राचीनमते तादृशकारणतायाः=उक्तरीत्या शाब्दबोधं प्रति द्वितीयाजन्यफलोपस्थितेः कारणताया आधिक्यमस्तु तन्न दोषावहं नवीनमतस्यैव तदपेक्षयाधिकप्रदर्शयिष्यमाणगौरवग्रस्तत्वादित्यर्थः ।

नव्यमते स्वाभिप्रेतं गौरवं प्रदर्शयति— नव्यमते इति, शाब्दबोधसामग्र्याः समानविषयकानुमितिं प्रति प्रतिबन्धकत्वं सर्वमतसिद्धमेव, नवीनमते धातोः फलावच्छिन्नव्यापारे शक्तिरस्ति तत्र

समानविषयकानुमित्यादिप्रतिबन्धकतायां फलप्रकारतानिरूपितव्यापारविशेष्यताशालित्वेन धातुजन्योपस्थितेर्निवेशनीयतया तस्यास्तादृशविशेष्यताशालित्वेन व्यापारविशेष्यतानिरूपितफलप्रकारताशालित्वेन वा निवेश इत्यत्र विनिगमनाविरहात् सामग्रीप्रतिबन्धकताधिक्यमऽवच्छेदकगौरवं च । प्राचीनमते द्वितीयाजन्यफलोपस्थितेः सामग्र्यन्तर्निवेशस्तु नव्यमतसिद्धतज्जन्याधेयत्वोपस्थितिनिवेशस्थलीय इति । नव्यमते तादृशस्थले शाब्दबोधस्याधिकविषयतया तात्पर्यज्ञानादिकमप्यधिकविषयकमेव शाब्दधीहेतुर्भविष्यति प्रतिबन्धकसामग्र्यामप्यन्तर्भविष्यतीति च गौरवम् ।

---

'ग्रामं गच्छति' इत्यादिवाक्यज्ञानघटितसामग्र्या या समानविषयकानुमित्यादिप्रतिबन्धकता तच्छरीरे धातुजन्योपस्थितेः फलनिष्ठप्रकारतानिरूपितव्यापारनिष्ठविशेष्यताशालित्वेन रूपेण निवेशनीयतया तत्र तस्याः=धातुजन्योपस्थितेः तादृशविशेष्यताशालित्वेन=फलप्रकारतानिरूपितव्यापारविशेष्यताशालित्वेन वा निवेशः कर्तव्यः व्यापारविशेष्यतानिरूपितफलप्रकारताशालित्वेन रूपेण वा निवेशः कर्तव्य इत्यत्र विनिगमनाविरहात् द्विविधरूपेणैव निवेशः स्यादिति सामग्र्या द्वैविध्येन सामग्रीनिष्ठप्रतिबन्धकताया अपि द्वैविध्यं स्यादेवेतिगौरवाधिक्यम्, अवच्छेदकगौरवं च=फलावच्छिन्नव्यापारस्य धात्वर्थत्वे धात्वर्थतावच्छेदकं फलावच्छिन्नव्यापारत्वं स्यात्तच गुरु इत्यवच्छेदकगौरवम् । प्राचीनमते तु शुद्धव्यापार एव धात्वर्थ इति नोक्तरीत्या समानविषयकानुमित्यादिकं प्रति शाब्दसामग्र्या द्विविधप्रतिबन्धकत्वं न वाऽवच्छेदकगौरवं व्यापारत्वमात्रस्यैव धात्वर्थतावच्छेदकत्वादित्यर्थः । ननु प्राचीनमतेपि द्वितीयाजन्यफलोपस्थितेरपि शाब्दसामग्र्यामन्तर्भावात् तादृशोपस्थितेः प्रतिबन्धकत्वेन गौरवं स्यादित्याशङ्क्याह—प्राचीनमत इति, नवीनमते यथा तज्जन्य=द्वितीयाजन्याधेयत्वोपस्थितेः शाब्दसामग्र्यामन्तर्भावस्तथा प्राचीनमते द्वितीयाजन्यफलोपस्थितेः शाब्दसामग्र्यामन्तर्भाव इति साम्यमेवेत्यर्थः । स्थलीयः=स्थानीयः । नवीनमते पुनर्गौरवमाह—नव्यमते इति, नवीनमते तादृशस्थले='ग्रामं गच्छति' इत्यादिस्थले शाब्दबोधे व्यापारस्य फलस्याऽऽधेयत्वस्य च विषयतया भासमानत्वेन शाब्दबोधकारणीभूततात्पर्यज्ञानादिकमपि शाब्दबोधसमानविषयकत्वादधिकविषयकमेव शाब्दबोधकारणं स्यात्, तादृशमेवाधिकविषयकं तात्पर्यज्ञानादिकं समानविषयकानुमित्यादिप्रतिबन्धकीभूतायां शाब्दसामग्र्यामन्तर्भूतं च स्यात् तेन च प्रतिबन्धकतास्वरूपाधिक्यं स्यादिति गौरवम् ।

ननु 'ग्रामं गच्छति' इत्यादौ संयोगादिरूपफलस्य द्वितीयार्थत्वे तस्य फलस्य जनकत्वसंबन्धेन धात्वर्थव्यापारेऽन्वयो भवति—ग्रामवृत्तिसंयोगजनकव्यापारवानितिबोधोदयात्, इत्येवं स्थिते 'भूमिं गच्छति न महीरुहम् ( जलमितिशेषः )' इत्यत्र महीरुहवृत्तिसंयोगस्य जनकत्वसंबन्धेन गमनव्यापारेऽभावो वक्तव्य इत्यत्र जनकत्वसंबन्धावच्छिन्नप्रतियोगिताको महीरुह-

अथ फलस्य द्वितीयार्थत्वे ‘ भूमिं गच्छति न महीरुहम् ’ इत्यादौ महीरुहवृत्तिसंयोगादेर्जनकतासंबन्धावच्छिन्नाभाव एव नञर्थो वाच्यः स च वृत्त्यनियामकसंबन्धस्याऽभावप्रतियोगितानवच्छेदकतया अप्रसिद्धः । नव्यमते तु द्वितीयार्थस्याधेयत्वस्य फलनिष्ठोऽभाव एव तथेति नानुपपत्तिः । न च भूमिकर्मकगमनकर्त्रादौ महीरुहकर्मकगमनकर्तृत्वाद्यभावः प्रतीयते इति वाच्यम्, कर्तृवाचकपदाऽसमभिव्याहारस्थले तदसंभवात् ।

न च तत्राप्याख्यातार्थान्वयबोधानुरोधेन कर्तृवाचकपदाध्याहारस्यावश्यकतयाऽध्याहृतपदोपस्थाप्यकर्तर्येव तादृशाभावो नञा बोधयिष्यते इति वाच्यम्, आख्यातार्थविशेष्यकस्याप्यन्वयबोधस्य संभवेनाऽध्याहारस्याऽनावश्यकत्वात् ।

---

वृत्तिसंयोगस्याभावो नञर्थो वक्तव्यः स च=जनकत्वसंबन्धावच्छिन्नप्रतियोगिताकोऽभावोऽप्रसिद्ध एव वृत्त्यऽनियामकस्य जनकत्वसंबन्धस्याऽभावप्रतियोगितावच्छेदकत्वाभावात्, वृत्तिनियामकस्यैव संबन्धस्याभावप्रतियोगितावच्छेदकत्वात्, अप्रसिद्धस्य च बोधो न संभवतीति प्राचीनमते ‘ भूमिं गच्छति न महीरुहम् ’ इत्यत्र वाक्यार्थबोधानुपपत्तिर्दोष इत्याशङ्कतेऽथेति । नन्वत्र नवीनमते कथं वाक्यार्थबोधोपपत्तिः स्यादित्याशङ्क्य नवीनमतेनात्र वाक्यार्थबोधमुपपादयति– नव्यमते इति, नवीनमते तु द्वितीयार्थ आधेयत्वमेवेति तस्याधेयत्वस्य संयोगादिरूपफलनिष्ठोऽभाव एव तथा=नञर्थ इति नात्र वाक्यार्थानुपपत्तिः– संयोगादावाऽऽधेयत्वस्याश्रयतासंबन्धेनान्वयसंभवादाऽऽश्रयतासंबन्धस्य वृत्तिनियामकत्वेनाऽभावप्रतियोगितावच्छेदकत्वात् संयोगे आश्रयत्वसंबन्धावच्छिन्नप्रतियोगिताकाधेयत्वाभावस्यात्र प्रतीयमानत्वादित्यर्थः । ननु ‘ भूमिं गच्छति न महीरुहम् ’ इत्यत्र न जनकतासंबन्धेन संयोगाद्यभावो नञर्थ उच्यते येनोक्तानुपपत्तिः स्यात् किं तु भूमिकर्मकगमनकर्तरि समवायेन महीरुहकर्मकगमनव्यापारकर्तृत्वाभाव एव नञा प्रतीयते स एवात्र नञर्थ इत्युच्यते समवायस्य च वृत्तिनियामकत्वेनाभावप्रतियोगितावच्छेदकत्वसंभवादित्याशङ्क्याह– न चेति । परिहारमाह– कर्तृवाचकेति, कर्तृवाचकपदसत्त्वेनोपस्थितकर्तरि उक्तकर्तृत्वाभावबोधनसंभवेपि कर्तृवाचकपदाभावे तदसंभवात्=उक्तगमनकर्तृत्वाभावबोधनासंभवात्, अनुयोगिसत्त्वे ह्यभावप्रतीतेः संभवादित्यर्थः ।

ननु तत्रापि=कर्तृवाचकपदाऽसमभिव्याहारस्थलेप्याख्यातार्थस्य व्यापारस्यवान्वयबोधोपपत्त्यै कर्तृवाचकपदस्याध्याहारः कर्तव्य एव येनाऽध्याहृतपदोपस्थितकर्तरि व्यापारादेरन्वयः स्यात् तत्र चाध्याहृतपदोपस्थितकर्तर्येव नञा तादृशाभावः=उक्तमहीरुहकर्मकगमनकर्तृत्वाभावो बोधयिष्यते इति नात्र वाक्यार्थानुपपत्तिरित्याशङ्क्याह– न चेति । परिहारमाह– आख्यातार्थेति, ‘भूमेर्गमनं न महीरुहस्य’ इत्यादौ प्रथमान्तगमनपदवाच्यव्यापारविशेष्यकोपि शाब्दबोधो जायते एवेति कर्तृवाचकपदाऽसमभिव्याहारस्थले सर्वत्र कर्तृवाचकपदाध्याहारनियमस्यासंभवात्, अनुपस्थितकर्तरि चोक्तकर्तृत्वाभावान्वयासंभवात्, तथा च महीरुहवृत्तिसंयोगस्य जनकत्वसंबन्धावच्छिन्न

'भूमेर्गमनं न महीरुहस्य' इत्यादौ द्वितीयासमानार्थकषष्ठ्यर्थाभावबोधकताया आवश्यकत्वाच्च, न हि तत्राप्याश्रयतासंबन्धावच्छिन्नप्रतियोगिताकगमनाभाव एव प्रतीयते इतिसम्यक्- अनुयोग्यनुपस्थितेः, नञोऽनुयोगिविनिर्मोकेणाभावबोधकताया अव्युत्पन्नत्वादितिचेत् ?, न, वृत्त्यनियामकसंबन्धस्याभावप्रतियोगितावच्छेदकत्वे दोषः कः ? ।

अथ जनकतादिसंबन्धावच्छिन्नप्रतियोगिताकसंयोगाद्यभावस्यातिरिक्तस्य कल्पने गौरवमितिचेत् ?, न, तादृशाभावस्य संयोगजनकत्वाद्यभावसमनियत-

भाव एव नञर्थ उक्तस्थले वाच्यः स चाप्रसिद्ध एवेत्यर्थः । किं च 'भूमेर्गमनं न महीरुहस्य' इत्यत्र कृद्योगे कर्मणि षष्ठी जातेति षष्ठ्या द्वितीयासमानार्थकत्वात् तादृशषष्ठ्यर्थस्याऽभावोऽवश्यं बोधनीयस्तत्र यदि द्वितीयार्थः संयोगादिरूपफलमेव तदात्र संयोगाभावस्य व्यापारे जनकत्वसंबन्धेनान्वये उक्तानुपपत्तिस्तदवस्थैव जनकत्वसंबन्धस्य वृत्त्यनियामकत्वेनाऽभावीयप्रतियोगितानवच्छेदकत्वादित्यत्र षष्ठ्यर्थस्याधेयत्वस्यैवाभावो वक्तव्य इति द्वितीयार्थोऽप्याधेयत्वमेव स्यान्न फलमित्याह- भूमेरिति । ननु तत्र= 'भूमेर्गमनं न महीरुहस्य' इत्यत्रापि नञा गमनव्यापाराभाव एव प्रतीयते न षष्ठ्यर्थाभाव इत्याशङ्क्याह- न हीति । उक्ते हेतुमाह—अनुयोगीति, उक्तस्थलेऽनुयोगिनो व्यापारकर्तुरुपस्थितिरेव नास्ति यत्र गमनाभावस्यान्वयः स्यादित्यर्थः । अत्र विनिगमकमाह- नञ इति, अनुयोगिविनिर्मोकेण=अनुयोगिनं विना । कस्मिंश्चिदधिकरणे एव पदार्थान्वयबोधसंभवादिति भावः । 'गच्छति' इत्यादिकर्तृवाचकपदशून्यस्थले आख्यातार्थकृतेविशेष्यत्वविवक्षायाम् 'गमनानुकूलाकृतिः' इत्येवमाख्यातार्थविशेष्यकान्वयबोधोनुसन्धेयः । अथेत्यादिनाशङ्कितं परिहरति- नेति । तथा च वृत्त्यनियामकस्यापि जनकत्वसंबन्धस्याभावप्रतियोगितावच्छेदकत्वेन 'भूमिं गच्छति न महीरुहम्' इत्यत्रोक्तजनकत्वसंबन्धावच्छिन्नप्रतियोगिताकसंयोगाभावप्रतीतौ न काचिदनुपपत्तिरिति प्राचीनमतेन फलस्य द्वितीयार्थत्वेपि न कोपि दोष इत्यर्थः ।

ननु वृत्त्यनियामकस्य जनकत्वसंबन्धस्याभावप्रतियोगितावच्छेदकत्वस्वीकारे उक्तस्थले उक्तरीत्या जनकत्वसंबन्धावच्छिन्नप्रतियोगिताकसंयोगाभावस्यातिरिक्तस्य स्वीकारेण गौरवमेव दोष इत्याशङ्कते- अथेति । परिहरति- नेति, यत्र संयोगजनकत्वाभावस्तत्र तादृशाभावस्य=जनकत्वसंबन्धावच्छिन्नप्रतियोगिताकसंयोगाभावस्य समनियतत्वेन=सत्त्वेन जनकत्वसंबन्धावच्छिन्नसंयोगाभावस्य तत्स्वरूपत्वात्=संयोगजनकत्वाभावस्वरूपत्वात् तस्य=संयोगजनकत्वाभावस्य चोभयवादिसिद्धत्वात् संयोगजनकत्वाभावस्वरूपस्य जनकत्वसंबन्धावच्छिन्नसंयोगाभावस्याप्युभयवादिसिद्धत्वप्राप्तौ नातिरिक्तकल्पनास्वरूपमुक्तगौरवमित्यर्थः । ननु जनकत्वसंबन्धावच्छिन्नप्रतियोगिताकसंयोगाभावस्य संयोगजनकत्वाभावस्वरूपत्वेनाऽतिरिक्तत्वाभावेपि संयोगजनकत्वाभावीयप्रतियोगितातो जनकत्वसंबन्धावच्छिन्नप्रतियोगिताकसंयोगाभावीयप्रतियोगिताया एवातिरि-

१५

त्वेन तत्स्वरूपत्वात् तस्य चोभयवादिसिद्धत्वात् । अतिरिक्तप्रतियोगिताकल्पने गौरवमितिचत् ?, अस्त्वेतद् गौरवम्– उपदर्शितबहुविधलाघवेनेदृशगौरवस्याऽकिंचित्करत्वात् ।

अथ फलस्य द्वितीयार्थत्वे वृत्त्यनियामकसंबन्धस्याभावप्रतियोगितावच्छेदकत्वेपि 'द्रव्यं गच्छति न गुणम्' इत्यादौ गुणादिनिष्ठस्य संयोगादिरूपफलस्याप्रसिद्धया नञर्थान्वयबोधानुपपत्तिरितिचेत् ?, न, तत्राधेयतासंबन्धावच्छिन्नप्रतियोगिताकप्रकृत्यर्थाभावस्यैव द्वितीयार्थे फले नञा बोधनोपगमात् । 'गुणो

---

कायाः कल्पने=स्वीकारेण गौरवं स्यात् प्राचीनमते इत्याशङ्कते– अतिरिक्तेति । यथा संयोगेन घटाभावस्य घटसंयोगाभावस्य चैकरूपत्वेपि संबन्धभेदात्तयोः प्रतियोगिता भिन्नैव भवति– संयोगेन घटाभावीयप्रतियोगितायाः संयोगसंबन्धस्यावच्छेदकत्वाद् घटसंयोगाभावीयप्रतियोगितायाः समवायस्यावच्छेदकत्वात्तथात्राप्युक्ताभावयोः प्रतियोगितयोरवच्छेदकीभूतसंबन्धभेदेन भेदो ज्ञेयः– संयोगाभावीयप्रतियोगितावच्छेदकः, जनकत्वसंबन्धः, संयोगजनकत्वाभावीयप्रतियोगितावच्छेदकः स्वरूपसंबन्धः इति ध्येयम् । अभ्युपगम्याह– अस्त्वेतदिति । आधेयत्वस्य द्वितीयार्थत्वं फलावच्छिन्नव्यापारस्य च धात्वर्थत्वमिति नवीनमते ये दोषाः ( २२३ पृ. ) प्रदर्शितास्ते प्राचीनमते न सन्तीति प्राचीनमते प्रदर्शितबहुविधलाघवेन तुलनायामीदृशस्य= अतिरिक्तप्रतियोगितास्वीकाररूपगौरवस्य तुच्छत्व दित्यर्थः ।

ननु प्राचीनमतेन फलस्य संयोगादेर्द्वितीयार्थत्वे वृत्त्यनियामकस्य जनकत्वसंबन्धस्याभावीयप्रतियोगितावच्छेदकत्वे च स्वीकृतेपि तेन च 'भूमिं गच्छति न महीरुहम्' इत्यत्र 'जनकत्वसंबन्धावच्छिन्नप्रतियोगिताको यो महीरुहानुयोगिकसंयोगस्याभावस्तद्वद्व्यापारवज्जलम्' इत्याकारकान्वयबोधोपपादनेपि 'द्रव्यं गच्छति न गुणम्' इत्यादौ शाब्दबोधानुपपत्तिर्दोषोऽस्त्येव यतोऽत्र 'गुणम्' इतिद्वितीयार्थः फलरूपः संयोग एव प्राप्त इति 'जनकत्वसंबन्धावच्छिन्नप्रतियोगिताको यो गुणवृत्तिसंयोगस्याभावस्तद्वद्व्यापारवांश्चैत्रः' इत्येव शाब्दबोधो वक्तव्यः स च न संभवति गुणे संयोगरूपगुणस्य बाधाद् गुणवृत्तिसंयोगरूपफलाभावस्य नञर्थत्वासंभवेन चान्वयबोधासंभवादित्याशङ्कते– अथेति । परिहरति– नेति, तत्र='द्रव्यं गच्छति न गुणम्' इत्यत्र द्वितीयार्थे=गुणपदोत्तरद्वितीयार्थे फले=संयोगे आधेयत्वसंबन्धावच्छिन्नप्रतियोगिताकः प्रकृत्यर्थस्य=गुणस्याभावो नञा बोध्यते संयोगे चाधेयतासंबन्धेन गुणो नास्त्येव 'आधेयत्वसंबन्धावच्छिन्नप्रतियोगिताको यो गुणाभावस्तद्वान् यः संयोगस्तज्जनकगमनव्यापारवांश्चैत्रः' इति च शाब्दबोधः, आधेयत्वसंबन्धावच्छिन्नप्रतियोगिताकगुणाभाववत्संयोगजनकगमनव्यापारश्चात्र द्रव्यकर्मक एव गमनव्यापारः संभवति न गुणकर्मक इति नात्रान्वयबोधानुपपत्तिरित्यर्थः । गुणवृत्तिगुणत्वादौ गुणस्याधेयतासंबन्धेन वृत्तेः प्रसिद्धत्वादत्र संयोगे गुणस्याधेयतासंबन्धेनाभावो नानुपपन्नः, किं वा समवायेनैव गुणे गुणानङ्गीकारात् समवायातिरिक्ताधेयता-

न गुणं गच्छति ' इत्यादिवाक्यस्योभयमत एवाप्रमाणत्वात् । अस्तु वा तत्राभावस्य द्विधाभानोपगमेन गुणाभाववत्फलानुकूलस्पन्दाश्रयत्वाभाववान् गुण इत्याकारक एवान्वयबोधः ।

परे तु वृत्त्यनियामकसंबन्धस्याऽभावप्रतियोगितानवच्छेदकत्वे तु नव्यमतेपि ' द्रव्यं गच्छति नाभावम् ' इत्यादौ गतिविरहः, तथा हि– समवायसंबन्धावच्छिन्नाधेयतैव द्वितीयार्थो वाच्यः, अन्यथा कालिकादिसंबन्धावच्छिन्नग्रामादिवृत्ति-

---

दिसंबन्धेन गुणे गुणवृत्तित्वविरोधाभावादत्राधेयतासंबन्धेन संयोगे गुणाभावो नानुपपन्नः, पूर्वत्र तु द्वितीयार्थसंयोगस्य गुणे समवायेनैव वृत्तित्वं वक्तव्यं तत्तु न संभवतीति "गुणादिनिष्ठस्य संयोगादिरूपफलस्याप्रसिद्ध्या" इत्यनेन शाब्दबोधानुपपत्तिः प्रदर्शितेतिभावः । ननु ' द्रव्यं गच्छति न गुणम् ' इत्यत्राधेयत्वसंबन्धावच्छिन्नप्रतियोगिताकगुणाभाववत्संयोगजनकगमनव्यापारस्य चैत्रे संभवेन शाब्दबोधे उपपन्नेपि प्राचीनमते ' गुणो न गुणं गच्छति ' इत्यत्र तु शाब्दबोधानुपपत्तिरस्त्येव यतोत्रोक्तरीत्या ' आधेयत्वसंबन्धावच्छिन्नप्रतियोगिताकगुणाभाववत्संयोगजनकगमनव्यापारवान् गुणः ' इत्येव शाब्दबोधो वक्तव्यः स च न संभवति गुणे व्यापाराऽसंभवात् "गुणादिर्निर्गुणक्रियः" इतिसिद्धान्तादित्याशङ्क्याह– ' गुणो न गुणं गच्छति ' इत्यादिवाक्यस्येति, एतद्वाक्यार्थस्य बाधितत्वादेतद्वाक्यस्याऽप्रामाण्यमेव– नवीनमतेनाप्यत्रान्वयबोधोपपत्तेरसंभवादित्यर्थः । पक्षान्तरमाह– अस्तु वेति, तत्र='गुणो न गुणं गच्छति ' इत्यत्र नञर्थाभावस्य द्विधा=द्विवारं भानोपगमेन ' आधेयत्वसंबन्धेन गुणाभाववद्यत्संयोगरूपं फलं तदनुकूलव्यापाराश्रयत्वाभाववान् गुणः ' इत्याकारकशाब्दबोधसंभवात्, गुणे व्यापाराश्रयत्वाभावस्याऽबाधादित्यर्थः । एकस्यैव च नञोत्र गुणाभावबोधकत्वं स्पन्दाश्रयत्वाभावबोधकत्वं चेति नञर्थाभावस्य द्विधा भानं जातम् ।

नवीनमते दोषमाह– परे त्विति, वृत्त्यनियामकस्य जनकत्वादिसंबन्धस्याभावीयप्रतियोगितावच्छेदकत्वास्वीकारे तु नव्यमतेपि ' द्रव्यं गच्छति नाभावम् ' इत्यत्रान्वयबोधानुपपत्तिरेव । गतिविरहमुपपादयति–तथा हीति, नव्यमतेप्याधेयता समवायसंबन्धावच्छिन्नैव द्वितीयार्थ इति स्वीकार्यं यथा ' ग्रामं गच्छति ' इत्यत्र संयोगस्य समवायेन ग्रामवृत्तित्वात्तादृशसंयोगे ग्रामनिरूपिताऽऽधेयताप्यस्ति ग्रामानुयोगिकः समवायोप्यस्त्येवेति संयोगरूपफलनिष्ठाऽऽधेयता समवायसंबन्धावच्छिन्नास्ति । विपक्षे बाधकमाह– अन्यथेति, यदि समवायातिरिक्तकालिकादिसंबन्धावच्छिन्नाप्याधेयता द्वितीयार्थः स्यात्तदा ग्रामं त्यजत्यपि चैत्रे ग्रामत्यागकाले समवायेन चैत्रसंयोगस्य ग्रामाऽवृत्तित्वेपि कालिकसंबन्धेन ग्रामे संभवादेव तादृशं कालिकसंबन्धावच्छिन्नग्रामवृत्तिसंयोगमादाय ' ग्रामं गच्छति चैत्रः ' इतिप्रयोगापत्तिरूपोतिप्रसङ्गः स्यादेव तन्निवारणार्थं समवायसंबन्धावच्छिन्नाऽऽधेयता द्वितीयार्थ इतिवक्तव्यं तथा च ग्रामत्यागकाले समवायेन चैत्रसंयोगस्य ग्रामेऽसंभवात् कालिकसंबन्धावच्छिन्नग्रामवृत्तिसंयोगवृत्त्याधेयतायाः कालिकसंबन्धावच्छिन्नत्वेन सम-

संयोगादिकमादायातिप्रसङ्गात्, तथा चाभावादिनिरूपिततथाविधाधेयत्वाद्यप्रसिद्ध्या तदभावबोधासंभवः । निरूपितत्वसंबन्धस्य च वृत्त्यनियामकतया समवायसंबन्धावच्छिन्नाधेयतायां तत्संबन्धावच्छिन्नप्रतियोगिताकप्रकृत्यर्थाभावबोधो न संभवत्येवेत्याहुरिति ।

अत्रोच्यते- वृत्त्यनियामकसंबन्धस्याभावप्रतियोगितावच्छेदकत्वे आधेयत्वं

---

वायसंबन्धावच्छिन्नत्वाभावात् समवायानवच्छिन्नाधेयताया द्वितीयार्थत्वाभावाच्च 'ग्रामं गच्छति' इति प्रयोगापत्तिर्नास्त्येव, एवं स्थिते 'द्रव्यं गच्छति नाभावम्' इत्यत्राप्यभावपदोत्तरद्वितीयार्थः समवायावच्छिन्नैवाधेयतेति वक्तव्यं तत्र यदि कोपि पदार्थोऽभावे समवायसंबन्धेन स्यात्तदा तस्मिन्नभावानुयोगिकसमवायस्य सत्त्वेन तन्निष्ठा साऽभावनिरूपिताऽऽधेयता समवायसंबन्धावच्छिन्ना स्यादपि न चैवमस्ति- अभावे कस्यापि समवायेन वृत्तित्वाभावादिति अभावनिरूपितस्य तथाविधाधेयत्वस्य=समवायसंबन्धावच्छिन्नाधेयत्वस्याऽप्रसिद्ध्या तदभावबोधासंभवः=अभावनिरूपितसमवायावच्छिन्नाधेयत्वस्य नञाऽभावबोधासंभवः-अप्रसिद्धप्रतियोगिकाभावबोधस्यास्वीकारादित्याह- तथा चेति । ननु 'द्रव्यं गच्छति नाभावम्' इत्यत्र नाभावनिरूपितायाः समवायसंबन्धावच्छिन्नाधेयतायाः फलेऽभाव उच्यते येन तादृशाधेयताया अप्रसिद्धत्वात्तदभावबोधासंभवः स्यात्, किं तु समवायसंबन्धावच्छिन्नाधेयतायाम् 'अभावम्' इति प्रकृत्यर्थाभावस्य निरूपितत्वसंबन्धेनाऽभावान्वयबोध उच्यते इति नाभावबोधासंभवः-अभावपदोत्तरद्वितीयार्थाधेयताया अभावनिरूपितत्वेन तस्यां निरूपितत्वसंबन्धेनाभावस्याऽभावाभावस्य चान्वयेऽनुपपत्त्यभावादित्याशङ्क्याह- निरूपितत्वेति, स्यादेवं यदि नव्यमते वृत्त्यनियामकसंबन्धस्याप्यभावीयप्रतियोगितावच्छेदकत्वं स्यात्, न चैवमस्ति, तथा च निरूपितत्वसंबन्धस्य वृत्त्यनियामकतया समवायसंबन्धावच्छिन्नाधेयतायां तत्संबन्धावच्छिन्नप्रतियोगिताकस्य=निरूपितत्वसंबन्धावच्छिन्नप्रतियोगिताकस्य (निरूपितत्वसंबन्धेनेतियावत्) प्रकृत्यर्थाभावस्य=अभावाभावस्यान्वयबोधोपि नैवात्र संभवतीत्यर्थः । यदि तु वृत्त्यनियामकसंबन्धस्याभावीयप्रतियोगितावच्छेदकत्वं स्वीकृतं स्यात्तदा त्वत्र वृत्त्यनियामकस्यापि निरूपितत्वसंबन्धस्याभावप्रतियोगितावच्छेदकत्वे प्राप्ते अभावनिरूपितायां समवायसंबन्धावच्छिन्नाधेयतायां तेन निरूपितत्वसंबन्धेनापि प्रकृत्यर्थाभावस्य=अभावाभावस्य बोधः स्यादेव तत्र-निरूपितत्वसंबन्धावच्छिन्नप्रतियोगिताकाभावाभावविशिष्टाधेयताविशिष्टसंयोगजनकगमनव्यापारवांश्चैत्र इति च बोधाकारः, एतादृशसंयोगजनकगमनव्यापारश्चात्र द्रव्यकर्मकगमनव्यापार एव भवतीति ध्येयम् ।

अत्रोच्यते इति, वृत्त्यनियामकसंबन्धस्याभावीयप्रतियोगितानवच्छेदकत्वे हि (२२४ पृ०) अयेत्यादिनोक्तरीत्या 'भूमिं गच्छति न महीरुहम्' इत्यत्र महीरुहवृत्तिसंयोगस्य जनकतासंबन्धावच्छिन्नप्रतियोगिताकाभावबोधो न संभवति जनकत्वसंबन्धस्य वृत्त्यनियामकत्वादित्याऽऽधेयत्वस्यैताऽऽश्रयत्वादिसंबन्धावच्छिन्नप्रतियोगिताकफलनिष्ठाभावबोध उपपद्यते तदर्थं चाधे-

**संसर्गो विभक्तेः संख्यामात्रमर्थः फलावच्छिन्नो व्यापारो धात्वर्थ इत्येवोचितम् । अस्तु च व्युत्पत्तिवैचित्र्येण नामार्थधात्वर्थयोरपि साक्षादन्वयबोधस्तथा सत्यऽतिप्रसङ्गस्य प्रागुपदर्शितप्रकारेण वारणसंभवात् । न चैतत्कल्पे लाघवानवकाशः– फले स्वतन्त्रशक्त्यऽकल्पनेन सामग्रीप्रतिबन्धकतायां द्वितीयादिजन्यफलोपस्थितिधातुजन्यव्यापारोपस्थितिरित्युभयोपस्थित्यपेक्षया धातुजन्यविशिष्टविषयकोपस्थितेरेकस्या निवेशेन लाघवात् ।**

---

धेयत्वस्य द्वितीयार्थत्वमावश्यकमेव केन चित्पदेनोपस्थितिं विना नञा तदभावबोधासंभवात् यदा तु वृत्त्यनियामकस्य जनकत्वादिसंबन्धस्याप्यभावीयप्रतियोगितावच्छेदकत्वं स्वीकृतं तदा तु 'भूमिं गच्छति न महीरुहम्' 'ग्रामं न गच्छति' इत्यादौ महीरुहग्रामादिवृत्तिसंयोगादेर्जनकत्वसंबन्धेन व्यापारे नञाऽभावबोधनसंभवादाधेयत्वस्य द्वितीयार्थत्वस्वीकारापेक्षा नास्ति संसर्गविधयापि भाने दोषाभावात् प्रत्युत तत्र द्वितीयायाः शक्तिकल्पने एव गौरवादित्यभिप्रायेणाह–वृत्त्यनियामकेति । विभक्तेः संख्यार्थकत्वं तु सर्वावस्थायां सर्वसंमतमेव । ननु पूर्वम् "क्रियातादृशप्रातिपदिकार्थयोः ( ६८ पृ. )" इत्यादिना निपातातिरिक्तनामार्थधात्वर्थयोः भेदेन साक्षादन्वयः प्रतिषिद्धस्तत्राधेयत्वस्य द्वितीयार्थत्वे ग्रामस्याधेयत्वे आधेयत्वस्य च धात्वर्थीभूतसंयोगेऽन्वयो भवतीत्युक्तनियमपरिपालनं संभवति आधेयत्वस्य संसर्गत्वे तु ग्रामस्य नामार्थस्याधेयत्वसंबन्धेन धात्वर्थीभूतसंयोगे ( संयोगावच्छिन्नव्यापारस्य धात्वर्थत्वेन संयोगस्य धात्वर्थत्वात् ) साक्षादेवान्वयः स्यादित्युक्तनियमभङ्गः स्यात् इत्याशङ्क्याह–अस्तु चेति । व्युत्पत्तिवैचित्र्येण=' ग्रामं गच्छति ' इत्यादिवाक्यजन्यबोधवैचित्र्येण, किं वा वृत्त्यनियामकसंबन्धस्याभावप्रतियोगितावच्छेदकत्वस्वीकारवैचित्र्येण । ननु यदि 'ग्रामं गच्छति' इत्यत्राधेयतासंबन्धेन धात्वर्थीभूतसंयोगे साक्षादेव ग्रामान्वयः स्यात्तदा 'ग्रामो गच्छति' इत्यपि प्रयोगः स्यात्–अत्रापि संसर्गविधयाभासमानाधेयतासंबन्धेन ग्रामस्य धात्वर्थीभूतसंयोगेऽन्वयसंभवाद् आधेयत्वस्य संसर्गत्वेन पदेन तदुपस्थित्यपेक्षाभावात्, मन्मते तु आधेयत्वं न संसर्गः किं तु प्रकार एवेति 'ग्रामो गच्छति' इत्यत्राधेयत्वोपस्थापिकाया द्वितीयाया अभावादेव नाधेयत्वसंबन्धेन ग्रामस्य धात्वर्थीभूतसंयोगेऽन्वयः संभवतीति न 'ग्रामो गच्छति' इत्यतिप्रसङ्गस्यापत्तिरित्याशङ्क्याह–तथा सतीति, तथा सति=आधेयत्वसंसर्गेण ग्रामस्य धात्वर्थीभूतसंयोगे साक्षादन्वयस्वीकारे सति, अतिप्रसङ्गस्य=' ग्रामो गच्छति ' इतिप्रयोगापत्तेः, प्रागुपदर्शितप्रकारेण=ग्रामकर्मकसंयोगानुकूलव्यापारविषयकशाब्दबोधं प्रति किं वा आधेयतासंसर्गेण ग्रामादेः धात्वर्थीभूतसंयोगेऽन्वयबोधं प्रति द्वितीयान्तग्रामादिपदसमभिव्याहृतगच्छतीत्यादिपदसमभिव्याहारज्ञानस्य कारणत्वान्न तादृशशाब्दबोधार्थम्–' ग्रामो गच्छति ' इत्यादिप्रयोगापत्तिरित्यर्थः । ननु द्वितीयायाः फले शक्तिस्वीकारपक्षापेक्षयाऽस्मिन् मते किं नाम लाघवमित्याशङ्क्याह–न चेति । लाघवमाह–फले इति, फले द्वितीयाशक्तिस्वीकारे द्वितीयाज-

वस्तुतस्तु शाब्दबुद्धेरधिकविषयकत्वे 'राज्ञः पुरुषः' इत्यादौ स्वत्वादेः संसर्गतानिराकरणावसरे सामग्रीप्रतिबन्धकतायां लाघवस्य दर्शितत्वाद् द्वितीयादेराधेयत्वमर्थः फलावच्छिन्नव्यापारश्च धातोरित्येव युक्तम् ।

कर्माख्यातस्य फलमर्थः, अन्यथा 'ग्रामो गम्यते' इत्यादौ ग्रामादेर्व्यापारजन्यफलाश्रयत्वरूपकर्मत्वप्रतीत्यनुपपत्तेः, यादृशविशेष्यविशेषणभावापन्नयोः पदशक्यता तादृशविशेष्यविशेषणभावापन्नयोरेव शाब्दबोधे भानसंभवात्. न तु विपरीतविशेष्यविशेषणभावापन्नयोः ।

---

न्यफलोपस्थितेः धातुजन्यव्यापारोपस्थितेश्च कारणत्वं प्रतिबन्धकत्वं च स्यादिति गौरवम्, फलविशिष्टव्यापारे धातुशक्तिस्वीकारे चोपस्थितिद्वयस्थाने धातुजन्यफलविशिष्टव्यापारोपस्थितेरेकस्या एव कारणत्वं प्रतिबन्धकत्वं चेत्यस्मिन्मते लाघवमित्यर्थः ।

विभिन्नविषयकप्रत्यक्षं प्रति शाब्दसामग्र्याः प्रतिबन्धकत्वात् तादृशप्रतिबन्धकतायां लाघवप्राप्त्यर्थं पक्षान्तरमाह—वस्तुतस्त्विति । शाब्दबुद्धेरधिकविषयकत्वे प्रत्यक्षस्य तदपेक्षया विभिन्नविषयकत्वमल्पमेव स्यादितिप्रतिबन्धकत्वमप्यऽल्पं स्यादिति लाघवम् । शाब्दबुद्धेरधिकविषयकत्वसंपादनार्थं चाधेयत्वस्य द्वितीयार्थत्वं मन्तव्यं शेषं पूर्ववदेवेत्यर्थः ।

संप्रति कर्मवाचकाख्यातप्रत्ययस्यार्थमाह—कर्मेति, 'ग्रामो गम्यते' इत्यत्राख्यातस्य संयोगादिरूपं फलमाश्रयत्वं चार्थः धातोश्च पूर्ववदेव संयोगादिरूपफलावच्छिन्नव्यापार एवार्थ इति फलस्य द्वेधा भानं भवति—संयोगानुकूलव्यापारजन्यसंयोगाश्रयो ग्राम इतिबोधात् । विपक्षे बाधकमाह—अन्यथेति, यदि कर्माख्यातस्य फलमर्थो न स्यात्तदा 'ग्रामो गम्यते' इत्यत्र ग्रामे यत्संयोगरूपफलाश्रयत्वं प्रतीयते तन्न प्रतीयेत धातूपस्थितफलस्य व्यापारे विशेषणत्वेन ग्रामविशेषणत्वासंभवात् "एकत्र विशेषणत्वेनान्वितस्यान्यत्रविशेषणत्वेनान्वयाभावात्" इतिन्यायादिति ग्रामविशेषणीभूतसंयोगादिरूपफलोपस्थापकमाख्यातमेवेत्यर्थः । स्वाभिप्रायं प्रकटयति—यादृशेति, ग्रामवृत्तिसंयोगो ह्यत्र व्यापारविशेष्यतयैव भासते धातूपस्थितसंयोगश्च व्यापारविशेषणतया भासते इति व्यापारविशेषणत्वेन धातुपदशक्यस्य संयोगादिरूपफलस्य शाब्दबोधेपि व्यापारविशेषणत्वेनैव भानं संभवति न तु व्यापारविशेष्यत्वेनेति व्यापारविशेष्यभूतसंयोगस्याख्यातेनोपस्थितिः स्वीकार्येत्यर्थः । संयोगानुकूलव्यापारजन्यसंयोगाश्रयो ग्राम इत्यत्र पूर्वपूर्वस्य विशेषणत्वादुत्तरोत्तरस्य विशेष्यत्वादितिभावः ।

ननु व्युत्पत्तिवैचित्र्येणैकत्र विशेषणतया भासमानस्याप्यन्यत्र विशेष्यतया भानं संभवत्येव तथा च धातोः फले व्यापारे च खण्डशः शक्तिं स्वीकरिष्याम इति धातोः फले पृथक् शक्तिस्वीकारात् 'ग्रामं गच्छति' इत्यादौ कर्त्राख्यातसमभिव्याहारस्थले व्यापारविशेषणतया भासमानस्य संयोगादिरूपफलस्य कर्माख्यातस्थले तद्विशेष्यतया=व्यापारविशेष्यतया भानं व्युत्पत्तिवैचित्र्यात्=बोधवैचित्र्यान्नानुपपन्नमिति फलस्य कर्माख्यातार्थत्वाभावेपि 'ग्रामो

यत्तु फले धातोः पृथक् शक्त्युपगमाद् व्युत्पत्तिवैचित्र्येण कर्त्राख्यातसमभिव्याहारस्थले व्यापारविशेषणतया भासमानस्य फलस्य कर्माख्यातस्थले तद्विशेष्यतया भानमिति, तन्न, पृथक् शक्तिस्वीकारे शाब्दसामग्र्याः प्रतिबन्धकतायां विशिष्टविषयकोपस्थितिस्थले उपस्थितिद्वयनिवेशे गौरवात् । गम्यादेः संपूर्वयुजिप्रभृतिसमानार्थकताभ्रमवतामिव विशेषदर्शिनामपि 'गमनं न स्पन्दः' इत्यादिवाक्यात् संयोगादौ स्पन्दभेदान्वयबोधापत्तेर्दर्शितताया दुर्वारत्वाच्च संयोगादिविशेष्यकवृत्तिज्ञानजन्यतदुपस्थितिघटितायास्तथाविधान्वयबोधसामग्र्या अक्षतत्वात्, तत्तद्धातूपस्थाप्यव्यापारांशे तत्तद्विशेषणकबोधतात्पर्यज्ञानस्य तादृशान्वयबोधप्रतिबन्धकताकल्पने गौरवादिति ।

---

गम्यते' इत्यादौ ग्रामादेर्व्यापारजन्यफलाश्रयत्वरूपकर्मत्वप्रतीत्यनुपपत्तिर्नास्त्येव धातुनैवोपस्थितस्य फलस्य व्यापारविशेष्यतया ग्रामविशेषणतया चात्र भानसंभवादित्याशङ्कते—यत्त्विति । परिहरति—तन्नेति, एवं हि धातुजन्यफलोपस्थितिधातुजन्यव्यापारोपस्थितिद्वयस्य कारणत्वेन प्रतिबन्धकत्वेन च गौरवं स्यादित्याह—पृथगिति । पृथक्शक्तिस्वीकारे=धातोः फलेपृथक्शक्तिस्वीकारे । विशिष्टविषयकोपस्थितिः=फलावच्छिन्नव्यापारोपस्थितिः । किं च 'संयोगो न स्पन्दः' इत्यत्र संयोगपदेनोपस्थितसंयोगे स्पन्दभेदान्वयो भवत्येवेति येषां गम्धातावपि संपूर्वकयुज्धातुसमानार्थकताभ्रमो जातस्तेषां दृष्ट्या 'गमनं न स्पन्दः' इत्यत्रापि गमनपदेन विशेष्यतया संयोगोपस्थितेः संभवात् तादृशसंयोगे स्पन्दभेदान्वयानुपपत्त्यभावाद् यथा 'गमनं न स्पन्दः' इति प्रयोगः स्यात्तथा विशेषदर्शिनाम्=उक्तभ्रमरहितानामपि संप्रति धातुना पृथगुपस्थिते संयोगरूपफले स्पन्दभेदान्वयसंभवात् 'गमनं न स्पन्दः' इति प्रयोगापत्तिः स्यादेव. न चैतदिष्टमिति न धातोः फले पृथक्शक्तिस्वीकारपक्षः सम्यगित्याह—गम्यादेरिति । उक्तविशेषदर्शिनां दृष्ट्या 'गमनं न स्पन्दः' इतिप्रयोगापत्तौ हेतुमाह—संयोगेति, धातोः फले पृथक् शक्तिस्वीकारे धातुना फलस्य पृथग् विशेष्यतयैवोपस्थितिः स्यादिति 'गमनं न स्पन्दः' इत्यत्र स्पन्दभेदप्रकारकसंयोगविशेष्यकशाब्दबोधकारणीभूतायाः संयोगविशेष्यकशक्तिज्ञानजन्यसंयोगोपस्थितिघटितायाः सामग्र्याः सत्त्वादेव तत्कार्यभूतस्य स्पन्दभेदप्रकारकसंयोगविशेष्यकशाब्दबोधस्य संभवात् 'गमनं न स्पन्दः' इतिप्रयोगः स्यादेवेत्यर्थः । ननु 'गमनं न स्पन्दः' इत्यत्र धातूपस्थितव्यापारे तत्तद्विशेषणक=स्पन्दभेदादीनां विशेषणत्वबोधविषयकतात्पर्यज्ञानस्य धातूपस्थितसंयोगे स्पन्दभेदादीनां विशेषणत्वेनान्वयबोधं प्रति प्रतिबन्धकत्वं कल्पयिष्यामस्तथा चैतादृशप्रतिबन्धकस्य सत्त्वान्नात्र संयोगादौ स्पन्दभेदान्वयो भविष्यति व्यापारे च स्पन्दभेदो बाधित एवेति न 'गमनं न स्पन्दः' इतिप्रयोगापत्तिरित्याशङ्क्याह—तत्तद्धातूपस्थाप्येति, एवं हि प्रतिबध्यप्रतिबन्धकभावकल्पने गौरवं स्यादित्यर्थः । तादृशान्वयबोधे=स्पन्दभेदप्रकारकसंयोगविशेष्यकशाब्दबोधे ।

फलस्य द्विधा भानं चेदनुभवविरुद्धं तदा पुनरनायत्या फलव्यापारयोः खण्डशः शक्तिद्वयमेव धातोः स्वीकरणीयम्, आख्यातस्याश्रयत्वमेव तत्रार्थः। अधिकमग्रे वक्ष्यते।

अथ द्वितीयाया आधेयत्वार्थकत्वे व्यापारे तदन्वयतात्पर्येण सप्तम्या इव द्वितीयाया अपि प्रयोगापत्तिः, 'न हि गृहे पचति' इत्यादिवत् 'गृहं पचति' इति कश्चित् प्रयुङ्क्ते। मैवम्- धात्वर्थतावच्छेदकफलांशे आधेयत्वान्वये एव तादृशद्वितीयायाः साकाङ्क्षत्वकल्पनाद् व्यापारे तदुपस्थापिताधेयत्वान्वयाऽसंभवात्। सप्तम्यधीनाधेयत्वोपस्थितिसप्तमीसमभिव्याहारज्ञानघटिताया एव सामग्र्यास्तादृशान्वयबोधनियामकत्वात्। द्वितीयासप्तम्योः समानार्थकत्वेपि व्युत्पत्तिभेदज्ञापनायैव पृथक् पृथक् सूत्रेणैव तयोर्विधानात्।

---

ननु कर्माख्यातस्य फले शक्तिस्वीकारे हि 'ग्रामो गम्यते' इत्यत्र 'संयोगानुकूलव्यापारजन्यसंयोगाश्रयो ग्रामः' इति बोधापत्त्या फलस्य द्विधा=द्विवारं भानं स्यादेव न चैकस्मिन् बोधे फलस्य द्विधा भानमनुभवसिद्धमित्याशङ्क्याह—फलस्येति। अनायत्या=अगत्या। तत्र=कर्माख्यातस्थले। तथा च फलव्यापारयोर्धातोः खण्डशक्तिस्वीकारे फलस्य व्यापारविशेषणत्वेनोपस्थित्यभावात्तादृशसंयोगादिरूपफलस्य पृथगुपस्थितस्य ग्रामे विशेषणत्वे न काप्यनुपपत्तिरितिभावः। अग्रे=धातुप्रकृतिकप्रत्ययार्थनिरूपणस्थले।

ननु यदि द्वितीयाया आधेयत्वमर्थः स्यात्तदा तादृशाऽऽधेयत्वस्य व्यापारेऽन्वयतात्पर्येण यथा 'गृहे पचति' इतिप्रयोगो भवति तथा 'गृहं पचति' इत्यपि प्रयोगः स्यात्— आधेयत्वार्थकत्वेन द्वितीयासप्तम्योः समानार्थकत्वापत्तेः, न चैतदिष्टमित्याशङ्कते— अथेति। 'गृहे पचति' इत्यत्र गृहनिरूपिताधेयतावान् पाक इति बोधोदयात् सप्तम्यर्थाधेयत्वस्य व्यापारेऽन्वयो ज्ञेयः। परिहरति= मैवमिति, यदा हि धात्वर्थतावच्छेदकफले एवाधेयत्वस्यान्वयो भवति तदैव तादृशद्वितीयायाः=आधेयत्वार्थकद्वितीयायाः प्रयोगो भवति यथा 'ग्रामं गच्छति', 'तण्डुलं पचति' इति, तस्माद् द्वितीयोपस्थिताधेयत्वस्य व्यापारेऽन्वयासंभवात् 'गृहं पचति' इतिप्रयोगापत्तिर्नास्त्येवेत्यर्थः। सप्तम्यर्थाधेयत्वस्यैव सप्तम्योपस्थितस्य व्यापारेऽन्वयो भवतीति 'गृहे पचति' इत्येव प्रयोगो भवतीत्याह—सप्तम्यधीनेति। तादृशान्वयबोधनियामकत्वात्=व्यापारविशेष्यकाधेयत्वप्रकारकशाब्दबोधनियामकत्वात्। यद्यपि द्वितीयासप्तम्योरुभयोराधेयत्वमेवार्थस्तथापि व्युत्पत्तिभेदज्ञापनायैव=शाब्दबोधविशेषस्वरूपज्ञापनायैव तयोः=द्वितीयासप्तम्योः पृथक् पृथक् सूत्रेण="कर्मणि द्वितीया" "सप्तम्यधिकरणे च" इति सूत्राभ्यां विधानं कृतं तथा च यदाऽऽधेयत्वस्य धात्वर्थतावच्छेदके फलेऽन्वयो भवति तदा द्वितीया भवति यथा 'ग्रामं गच्छति' 'तण्डुलं पचति' इति, अत्राधेयत्वस्य धात्वर्थतावच्छेदकीभूतसंयोगविक्लित्यादावन्वयात्, यदा चाधेयत्वस्य व्यापारे एवान्वयो भवति तदा सप्तमी भवति यथा 'गृहे

अथाधःसंयोगावच्छिन्नस्पन्दस्य पतधात्वर्थत्वाद् धात्वर्थतावच्छेदकीभूतफले आधेयत्वान्वयतात्पर्येण 'भूमिं पतति' इति प्रयोगापत्तिः । न च द्वितीयोपस्थिताधेयत्वप्रकारकफलविशेष्यकान्वयबोधे गम्यादिजन्यफलोपस्थितितत्समभिव्याहारज्ञानघटितसामग्र्येव प्रयोजिका न तु पतधातुजन्यतदुपस्थितिघटिता सामग्रीति नातिप्रसङ्ग इतिवाच्यम्, पतधातुनैव यत्र संयोगावच्छिन्नगमनं लक्षणादिनोपस्थापितं तत्र संयोगे द्वितीयार्थाधेयत्वान्वयात् ।

अत्राहुः— धातुजन्यशुद्धसंयोगावच्छिन्नस्पन्दोपस्थितेः शाब्दबोधकारणतायामऽवच्छेदकघटकसंयोगविषयतायामऽधिकरणानवच्छिन्नत्वं विशेषणं देयं

---

पचति' इत्याह— द्वितीयासप्तम्योरिति । एवकारो भिन्नक्रम इति 'पृथक् पृथगेव' इत्यन्वयः । 'ग्रामं गच्छति' इत्यत्र 'ग्रामवृत्तिसंयोगानुकूलव्यापारवान्' इतिबोधः, 'तण्डुलं पचति' इत्यत्र 'तण्डुलवृत्तिविक्लित्यनुकूलव्यापारवान्' इतिबोधः । वृत्तिरेव चाधेयत्वम् ।

ननु यदुक्तरीत्या धात्वर्थतावच्छेदके फले आधेयत्वान्वयतात्पर्ये द्वितीया भवति तदाऽधःसंयोगावच्छिन्नस्पन्द एव पतधात्वर्थोऽस्तीति तत्राधेयत्वस्य धात्वर्थतावच्छेदकीभूतफलेऽधःसंयोगे तात्पर्येण द्वितीयाप्राप्त्या 'भूमिं पतति' इत्यपि प्रयोगः स्यात्, न चैतदिष्टमित्याशङ्कते— अथेति । ननु द्वितीयोपस्थिताधेयत्वप्रकारकफलविशेष्यकशाब्दबोधं प्रति गम्यादिधातुजन्यफलोपस्थितिघटितायास्तथा गम्यादिसमभिव्याहारघटिताया एव सामग्र्या हेतुत्वमस्तीति 'ग्रामं गच्छति' इत्यादिप्रयोगो भवति, द्वितीयोपस्थिताधेयत्वप्रकारकफलविशेष्यकशाब्दबोधं प्रति पतधातुजन्यफलोपस्थितिघटितसामग्र्याः कारणत्वं नास्तीति नातिप्रसङ्गः= 'भूमिं पतति' इतिप्रयोगापत्तिर्नास्त्येव अर्थात्— गम्यादिधात्वर्थतावच्छेदकीभूतफले आधेयत्वान्वयतात्पर्ये सत्येव द्वितीया भवति पतधात्वर्थतावच्छेदकीभूतफले आधेयत्वान्वयतात्पर्ये सत्यपि द्वितीया न भवतीति न 'भूमिं पतति' इति प्रयोगापत्तिरित्याशङ्क्याह— न चेति । परिहारमाह— पतधातुनेति, एवं नियमे कृते हि यत्र पतधातोः संयोगावच्छिन्नगमनव्यापारे लक्षणा भवति तत्र लक्षणयोपस्थिते धात्वर्थतावच्छेदकीभूतसंयोगरूपफले द्वितीयार्थाधेयत्वान्वयेऽनुपपत्त्यभावात् 'भूमिं पतति' इतिप्रयोग इष्ट एव स च न स्यात्, तदानीं पतधात्वर्थतावच्छेदकीभूतफले एवाधेयत्वान्वयतात्पर्यस्य सत्त्वादित्यर्थः ।

समाधत्ते— अत्राहुरित्यादिना । धातुजन्यशुद्धसंयोगावच्छिन्नस्पन्दोपस्थितिनिष्ठायां शाब्दबोधकारणतायाम् अवच्छेदकघटकसंयोगविषयतायाम्=धात्वर्थतावच्छेदकीभूतसंयोगनिष्ठविषयतायामधिकरणानवच्छिन्नत्वं विशेषणं देयम्, अर्थाद् धात्वर्थतावच्छेदकीभूतसंयोगो यत्राधिकरणानवच्छिन्नो भवति तत्र तादृशसंयोगे आधेयत्वान्वयतात्पर्ये सति द्वितीया भवति यत्र च धात्वर्थतावच्छेदकीभूतसंयोगोऽधिकरणविशेषावच्छिन्नो भवति तत्र द्वितीया न भवति तथा च 'ग्रामं गच्छति' इत्यत्र धात्वर्थतावच्छेदकीभूतसंयोगः केनाप्यधिकरणेनावच्छिन्नो नास्तीत्ये-

तथा च तादृशविषयताशालिसंयोगोपस्थित्यादिघटितसामग्र्या एव संयोगविशेष्यकद्वितीयोपस्थाप्याधेयत्वान्वयबोधप्रयोजकत्वोपगमान्नातिप्रसङ्गः ।

न चैवमपि फलावच्छिन्नव्यापारबोधकतया पतेः सकर्मकत्वव्यवहारापत्तिर्दुर्वारैवेति वाच्यम्, आश्रयानवच्छिन्नफलावच्छिन्नव्यापारबोधकत्वस्यैव तादृशव्यवहारनियामकत्वात् । उत्तरदेशानवच्छिन्नमेव संयोगः फलं गम्यर्थतावच्छेदकमिति नानुपपत्तिः, अत एवाग्निसंयोगावच्छिन्नक्रियानुकूलव्यापारस्य जुहोत्यर्थतया धात्वर्थतावच्छेदकसंयोगाश्रयस्याप्यग्नेर्न तत्कर्मता— आश्रयानवच्छिन्ना-

---

तादृशसंयोगे आधेयत्वान्वयतात्पर्येण द्वितीया जाता, पतधात्वर्थस्तु अधःसंयोगावच्छिन्न एव स्पन्द इति तत्र धात्वर्थतावच्छेदकीभूतसंयोगस्याऽधोदेशरूपाधिकरणेनावच्छिन्नत्वात् तत्र द्वितीया न भवतीति न 'भूमिं पतति' इतिप्रयोगापत्तिरित्यर्थः । संयोगस्यावच्छिन्नत्वे संयोगनिष्ठशाब्दबोधविषयताया अप्यवच्छिन्नत्वं भवति— शाब्दबोधविषयताया अधोदेशावच्छिन्नत्वस्य न संयोगे सत्त्वेन तयोः सामानाधिकरण्यादवच्छेद्यावच्छेदकभावस्य संभवात्, संयोगस्यानवच्छिन्नत्वे संयोगनिष्ठविषयताया अप्यनवच्छिन्नत्वं ज्ञेयम् । तादृशविषयताशालि=अधिकरणानवच्छिन्नविषयताशालिसंयोगस्य योपस्थितिस्तद्घटितसामग्र्या एव द्वितीयार्थाधेयत्वप्रकारकसंयोगविशेष्यकशाब्दबोधकारणत्वमस्तीति नातिप्रसङ्गः= 'भूमिं पतति' इति प्रयोगापत्तिर्नास्त्येव, पतधात्वर्थतावच्छेदकीभूतसंयोगनिष्ठविषयताया अधोदेशावच्छिन्नत्वादित्याह— तथा चेति ।

नन्वेवमपि फलावच्छिन्नव्यापारबोधकत्वमेव सकर्मकत्वमित्युक्तमिति पतधातोरप्यऽधःसंयोगावच्छिन्नव्यापारबोधकत्वात्सकर्मकत्वं स्यादेव तथा च पतधात्वर्थनिरूपितकर्मत्वाश्रयबोधकपदाद् द्वितीया स्यादेवेति ' भूमिं पतति ' इति प्रयोगापत्तिस्तदवस्थैवेत्याशङ्क्याह— न चेति । परिहारमाह— आश्रयानवच्छिन्नेति, आश्रयविशेषानवच्छिन्नं यत् फलं तादृशफलावच्छिन्नव्यापारबोधकत्वमेव तादृशव्यवहारस्य=सकर्मकत्वव्यवहारस्य नियामकमस्तीति गम्यादिधात्वर्थतावच्छेदकफलस्य संयोगस्याधिकरणविशेषेणाऽनवच्छिन्नत्वात्तादृशाधिकरणानवच्छिन्नफलावच्छिन्नव्यापारबोधकत्वाद् गम्यादेः सकर्मकत्वमस्ति, पतधात्वर्थतावच्छदकीभूतसंयोगरूपफलस्याऽधोदेशावच्छिन्नत्वेनाश्रयावच्छिन्नफलावच्छिन्नव्यापारबोधकत्वात् पतधातोः सकर्मकत्वापत्तिर्नास्तीत्यर्थः । ननु ' ग्रामं गच्छति ' इत्यादौ गम्धात्वर्थतावच्छेदकीभूतफलरूपसंयोगोऽप्युत्तरदेशावच्छिन्न एवास्ति— उत्तरदेशसंयोगानुकूलव्यापारस्यैव गम्धात्वर्थत्वादित्याशङ्क्याह— उत्तरदेशेति, गम्धात्वर्थतावच्छेदकीभूतः संयोगः शुद्धसंयोग एव नोत्तरदेशावच्छिन्नसंयोग इति न गम्यादेः सकर्मकत्वानुपपत्तिरित्यर्थः । अत एव=आश्रयानवच्छिन्नफलावच्छिन्नव्यापारबोधकस्यैव धातोः सकर्मकत्वाद् आश्रयानवच्छिन्नफलाश्रयस्यैव कर्मत्वव्यपदेशाच्च, अग्निरूपाश्रयेणावच्छिन्नो यः संयोगो घृताग्निसंयोगस्तादृशसंयोगावच्छिन्ना=तादृशसंयोगानुकूला या घृतनिष्ठा क्षरणरूपा क्रिया तादृशक्रियानुकूलो यो हवनकर्तृनिष्ठो घृतत्यागरूपो व्यापार स एव हुधात्वर्थ इति हुधात्वर्थतावच्छेदकसंयोगाश्रयत्वं यद्यप्यग्नेरस्ति तथाप्यग्नेर्न तत्कर्मता=जुहोतिकर्मता— अग्न्याश्रितस्य धात्व-

वच्छेदकताश्रयफलवत्त्वविरहात्. संयोगनिष्ठाया धात्वर्थतावच्छेदकताया आश्रयेणाग्निनाऽवच्छिन्नत्वात् ।

न चाग्निविशेषितसंयोगस्य धात्वर्थतावच्छेदकत्वे 'अग्नौ घृतं जुहोति' इत्यत्रानन्वयप्रसङ्गः- उद्देश्यतावच्छेदकविधेययोरैक्यादिति वाच्यम्, तत्र संयोगनिष्ठायामुद्देश्यतायां वह्नेराधेयतासंसर्गेणावच्छेदकतया सप्तम्यर्थस्याग्निवृत्तित्वस्य च विधेयतया उद्देश्यतावच्छेदकविधेययोरैक्यानवकाशात् । वस्तुतस्तु तत्र वह्नेरनन्वयेपि न क्षतिः- व्युत्पन्नानां तादृशप्रयोगस्याऽप्रामाणिकत्वात् । 'संस्कृते वह्नौ जुहुयात्' इत्यादिस्थले च विधेयांशेऽधिकावगाहनान्नास्त्येवा-

---

र्थतावच्छेदकीभूतसंयोगस्याश्रयानवच्छिन्नत्वाभावात्- आश्रयानवच्छिन्ना या संयोगनिष्ठा धात्वर्थतावच्छेदकता तादृशावच्छेदकताश्रयीभूतं यत् फलं संयोगस्तद्वत्त्वविरहादग्नेरित्याह- अत एवेत्यादिना । संयोगस्यात्राश्रयानवच्छिन्नत्वाभावे हेतुमाह-संयोगनिष्ठाया इति । न चैवं जुहोतेः सकर्मकत्वानुपपत्तिरितिशङ्क्यम्- जुहोतिधात्वर्थतावच्छेदकीभूतायाः क्षरणरूपक्रियाया आश्रयविशेषानवच्छिन्नत्वेनैव प्रतीयमानत्वात्, एतादृशक्रियाश्रयत्वेन घृतस्य जुहोतिकर्मत्वमपि नानुपपन्नमितिज्ञेयम्, तस्मात् 'घृतं जुहोति' इतिप्रयोगो भवति 'अग्निं जुहोति' इतिप्रयोगस्तु न भवति ।

ननु यद्यग्निविशेषितः=अग्न्यवच्छिन्न एव संयोगो हुधात्वर्थतावच्छेदकस्तदा 'अग्नौ घृतं जुहोति' इत्यत्राग्निसंयोगस्योद्देश्यत्वादुद्देश्यतावच्छेदकत्वमग्नेरेव प्राप्तम् 'अग्नौ' इति पदेनाग्नेरेव च विधेयत्वमस्ति घृतादीनां प्राप्तत्वादित्युद्देश्यतावच्छेदकस्य विधेयस्य चैक्ये प्राप्ते शाब्दबोधो न जायते इति पूर्वमेव ( ६४ पृ. ) प्रतिपादितमित्याशङ्कते- न चेति । अनन्वये हेतुमाह- उद्देश्येति । परिहरति- तत्रेति । तत्र='अग्नौ घृतं जुहोति' इत्यत्र यद्यप्यग्निसंयोगस्यैवोद्देश्यत्वादग्नेरेवाऽऽधेयतासंबन्धेन तादृशसंयोगे वर्तमानस्याऽऽधेयतासंसर्गेणोद्देश्यतावच्छेदकत्वं तथापि विधेयत्वमग्नेर्नास्ति किं तु 'अग्नौ' इतिसप्तम्यर्थस्य वृत्तित्वस्य=अग्निनिरूपिताधेयत्वस्यैव विधेयत्वमस्तीत्युद्देश्यतावच्छेदकस्य विधेयस्य च भेदान्नात्र शाब्दबोधानुपपत्तिरित्यर्थः । स्वमतमाह- वस्तुतस्त्विति, तत्र='अग्नौ घृतं जुहोति' इत्यत्रैकस्य वह्नेरुद्देश्यतावच्छेदकत्वेन विधेयत्वेन चाऽनन्वयेपि क्षतिर्नास्ति- तादृशप्रयोगस्य='अग्नौ घृतं जुहोति' इति प्रयोगस्यैवाऽप्रामाणिकत्वादित्यर्थः । मीमांसकमतेन चात्र "अप्सु जुहोति" "पाणौ जुहोति" "पदे जुहोति" इत्येवं होमाधिकरणानां विविधानां प्रतीयमानत्वाद् हुधात्वर्थतावच्छेदकीभूतसंयोगावच्छेदकत्वं वह्नेर्नास्त्येव- उक्तोदाहरणेषु व्यभिचारादिति अधिकरणसामान्यस्यैव तादृशसंयोगावच्छेदकत्वं स्वीक्रियते इति नाग्नेरुद्देश्यतावच्छेदकत्वं येन शाब्दबोधानुपपत्तिः स्यादिति ज्ञेयम् । नन्वेवम् 'संस्कृते वह्नौ जुहुयात्' इत्यत्राप्युक्तरीत्याऽग्नेरेवोद्देश्यतावच्छेदकत्वाद् विधेयत्वाच्च शाब्दबोधानुपपत्तिः स्यादित्याशङ्क्याह- संस्कृते इति, यथा 'घटो नीलघटः' इत्यत्र विधेयांशेऽधिकावगाहि-

नुपपत्तिः । घृतादेश्चाश्रयानवच्छिन्नधात्वर्थतावच्छेदकतावत्क्रियारूपफलाश्रयत्वात् कर्मत्वोपपत्तिः ।

यत्तु धात्वर्थतावच्छेदकत्वं धातुवृत्तिग्रहविशेष्यांशे साक्षात्प्रकारत्वं तच्च क्रियायामेव न संयोगांशेऽपीति नाग्नेर्जुहोतिकर्मतापत्तिरिति, तदसत्— 'अजां ग्रामं नयति' इत्यादौ संयोगावच्छिन्नक्रियानुकूलव्यापारादिरूपे धात्वर्थे संयोगादेः साक्षादप्रकारतया तदाश्रयीभूतग्रामादेः कर्मत्वानुपपत्त्या नीवहादेर्द्विकर्मकत्वव्याघातात् ।

---

शाब्दबोधस्वीकारान्नानुपपत्तिरित्युक्तम् ( ४१ पृ. ) तथात्राप्युद्देश्यतावच्छेदकः ( हुधात्वर्थतावच्छेदकसंयोगावच्छेदकः ) अग्निरेव विधेयश्च संस्कृतोऽग्निरिति विधेयांशे संस्कृतत्वस्याधिकस्यावगाहनान्नात्र शाब्दबोधानुपपत्तिरित्यर्थः । 'अग्नौ घृतं जुहोति', इत्यादौ घृतादेः कर्मत्वमुपपादयति— घृतादेरिति, आश्रयविशेषेणाऽनवच्छिन्ना या हुधात्वर्थतावच्छेदकतावती घृतनिष्ठक्षरणरूपा क्रिया तादृशक्रियारूपफलस्याश्रयत्वाद् घृतादेः कर्मत्वम् । यद्यप्यत्रैषा क्रियाग्निघृतरूपाश्रयेणावच्छिन्नैव तथापि यथा 'ग्रामं गच्छति' इत्यत्र धात्वर्थतावच्छेदकसंयोगस्योत्तरदेशेनावच्छिन्नत्वेपि नोत्तरदेशावच्छिन्नत्वेन प्रतीतिः किं तु शुद्धसंयोगस्यैव धात्वर्थतावच्छेदकत्वं तथाऽत्राप्याश्रयानवच्छिन्नाया एव क्रियाया धात्वर्थतावच्छेदकत्वमितिभावः । क्षरणानुकूलव्यापारस्य हुधात्वर्थत्वात् क्षरणक्रियाया धात्वर्थतावच्छेदकत्वं प्राप्तम् ।

ननु धात्वर्थतावच्छेदकं तदेव भवति यद् धातुविषयकशक्तिज्ञाने विशेष्यतया भासमानधात्वर्थस्य साक्षात् प्रकारः स्यात्तथा च 'अग्नौ घृतं जुहोति' इत्यत्र अग्न्याश्रितः संयोगो न साक्षाद्धात्वर्थतावच्छेदको येन तदाश्रयस्याग्नेः कर्मत्वं स्यात्— अग्न्याश्रितसंयोगस्य धात्वर्थतावच्छेदकीभूतक्रियावच्छेदकत्वात्, साक्षाद्धात्वर्थतावच्छेदकत्वं तु घृताश्रितक्रियाया एवेति घृतस्यैव कर्मत्वमित्याशङ्कते— यत्त्विति । परिहरति— तदसदिति, यदि धात्वर्थे साक्षात्प्रकारत्वमेव धात्वर्थतावच्छेदकत्वं स्यात् तादृशसाक्षाद्धात्वर्थतावच्छेदकीभूतफलाश्रयस्यैव च कर्मत्वं स्यात्तदा 'अजां ग्रामं नयति' इत्यत्र ग्रामवृत्तिसंयोगावच्छिन्ना ( जनकीभूता ) याऽऽजानिष्ठा क्रिया तादृशक्रियानुकूल ( जनक ) व्यापार एव नीधात्वर्थोऽस्तीति नीधात्वर्थे ग्रामवृत्तिसंयोगस्य साक्षात्प्रकारत्वं नास्तीति तादृशसंयोगाश्रयीभूतग्रामस्य कर्मत्वं न स्यादिति नीवहादेर्द्विकर्मकत्वं न स्यादित्यर्थः । अत्र ग्रामवृत्तिसंयोगस्य धात्वर्थतावच्छेदकीभूता याऽजानिष्ठा क्रिया तदवच्छेदकत्वम्, तादृशक्रियाया एव च धात्वर्थतावच्छेदकत्वम् ।

ननु धात्वर्थे साक्षात्प्रकारत्वमेव धात्वर्थतावच्छेदकत्वं तादृशधात्वर्थतावच्छेदकीभूतफलाश्रयस्यैव च प्रधानकर्मत्वं भवति यथा 'ग्रामं गच्छति' इत्यत्र ग्रामस्य 'अजां ग्रामं नयति' इत्यत्र चाऽजाया इति, तथा चात्र साक्षाद्धात्वर्थतावच्छेदकीभूतफलाश्रयत्वाभावाद् ग्रामस्य

अथात्र ग्रामादेः प्रधानकर्मत्वं नास्त्येवाऽपि तु गौणकर्मत्वमेव, अत एव तादृशकर्मत्वमाख्यातेन नाभिधीयते "प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्" इत्यनुशासनादिति 'अजां ग्रामो नीयते' इत्यादिको न प्रयोग इतिचेत् ?, तर्हि तत्र ग्रामादेरिवात्रापि हुधात्वर्थतावच्छेदकतावच्छेदकफलशालित्वेन गौणकर्मतापत्त्या 'वह्निं घृतं जुहोति' इतिप्रयोगापत्तिर्दुर्वारैवेति । अस्मन्मते चाश्रयानवच्छिन्नसंयोगविषयताशालिधातुजन्योपस्थितिघटितसामग्र्या एव संयोगे द्वितीयार्थान्वयबोधप्रयोजकतया नैतादृशप्रयोगापत्तिरिति ।

---

प्रधानकर्मत्वं नास्त्येव किं तु गौणकर्मत्वमेव, अत एव=साक्षाद्धात्वर्थतावच्छेदकीभूतफलाश्रयत्वाभावादेव तादृशकर्मत्वम्=गौणकर्मत्वमाख्यातेन नाभिधीयते=आख्यातस्य गौणकर्मत्वे शक्तिर्नास्तीत्याशङ्कते—अथेति । उक्ते प्रमाणमाह—प्रधानेति, अत्र धातूनामितिशेषः । द्विकर्मणां धातूनां द्वयोः कर्मणोर्मध्ये प्रधानकर्मण्याख्येये= बोध्ये लादीनाहुः= लादयः ( आख्यातादयः ) प्रधानकर्मणि शक्ताः=प्रधानकर्मबोधका एवेत्यर्थः । न चैवं ह्यत्र ग्रामपदाद् द्वितीयापि न स्यादित्याशङ्क्यम्—ग्रामस्यापि कर्मत्वं त्वस्त्येव तद् गौणं वा स्यात् प्रधानं वा स्यादित्यन्यदेतत् "कर्मणि द्वितीया" इत्यनेन कर्मत्वमात्रे द्वितीयाभिधानात् । नन्वेवम् 'अजां ग्रामो नीयते' इत्येवमपि प्रयोगः स्यात्—प्रधानकर्मत्वमजाया एवेति तद्वाचकाजाशब्दाद् द्वितीयापत्त्या ग्रामस्य च गौणकर्मत्वात्तद्वाचकग्रामपदाद् द्वितीयाऽनापत्त्येत्याशङ्क्याह—अजामिति, 'अजां ग्रामो नीयते' इति प्रयोगो न भवति—अत्र प्रधानकर्मत्वस्याख्यातेनाभिहितत्वात् प्रधानकर्मवाचकाजापदाद् द्वितीयाया अप्राप्तेः, गौणकर्मत्वस्याख्यातेनाऽनभिहितत्वाद् गौणकर्मवाचकग्रामपदाद् द्वितीयायाः प्राप्तेरित्यर्थः । तथा च 'अजा ग्रामं नीयते' इत्येव प्रयोगो भवति । किं वात्र 'अत एव' इत्येत्रावतरणं ज्ञेयम् । परिहरति—तर्हीति, यदि तत्र='अजां ग्रामं नयति' इत्यत्र नीधात्वर्थतावच्छेदकतावच्छेदकफलशालित्वेन ( नीधात्वर्थतावच्छेदिकायाऽजावृत्तिः क्रिया तदवच्छेदकस्संयोगस्तदाश्रयत्वेन ) ग्रामस्य गौणकर्मत्वं तदा तादृशग्रामादेरिवात्र='वह्नौ घृतं जुहोति' इत्यत्रापि वह्नेर्हुधात्वर्थतावच्छेदकतावच्छेदकफलशालित्वेन ( हुधात्वर्थतावच्छेदिका या घृतनिष्ठा क्षरणक्रिया तदवच्छेदको यो वह्निसंयोगस्तदाश्रयत्वेन ) गौणकर्मतापत्त्या द्वितीयाप्राप्तेः 'वह्निं घृतं जुहोति' इत्येवं प्रयोगापत्तिः स्यादेव, न चैतदिष्टमिति न धात्वर्थतावच्छेदकतावच्छेदकफलशालित्वेन गौणकर्मत्वं युक्तमित्यर्थः । स्वमतेन समाधत्ते—अस्मदिति, मम मते तु संयोगे द्वितीयार्थाऽऽधेयत्वान्वयं प्रति धातुजन्याया आश्रयानवच्छिन्नसंयोगविषयकाया उपस्थितेः कारणत्वमस्ति अत्र च वह्न्याश्रितसंयोगस्य वह्निरूपाश्रयेणाऽवच्छिन्नत्वमेवास्तीति न तत्र द्वितीयार्थाधेयत्वान्वयः संभवतीति न तादृशसंयोगाश्रयीभूतवह्निवाचकवह्निपदाद् द्वितीयापत्तिरिति नैतादृशप्रयोगापत्तिः='वह्निं घृतं जुहोति' इतिप्रयोगापत्तिरित्यर्थः ।

यत्तु अधःसंयोगावच्छिन्नस्पन्दो न पतत्यर्थः, अपि तु गुरुत्वजन्यतावच्छेदकजातिविशेषावच्छिन्न एव, अत एव फलावच्छिन्नव्यापाराऽबोधकत्वान्न सकर्मकत्वमिति, तन्न—फलस्य धात्वर्थाघटकत्वे स्पन्दे एव सप्तम्यर्थान्वयस्योपगन्तव्यतया पर्णादिनिष्ठस्य तस्य भूतलाद्यऽवृत्तितया 'भूतले पतति' इति प्रयोगानुपपत्तेः । पर्णादिगतस्पन्दस्य परम्परया भूतलादिवृत्तित्वमितिचेत् ? तार्ह 'वृक्षात् पतति' इतिवत् 'वृक्षे पतति' इत्यपि स्यात् । अस्मन्मते चान्यत्र व्यापारे सप्तम्यर्थान्वयेप्यऽत्र व्युत्पत्तिवैचित्र्यादऽधःसंयोगरूपधात्वर्थतावच्छेदके एव तदन्वय इत्यदोषः ।

---

ननु यद्यऽधस्संयोगावच्छिन्नस्पन्दः पतत्यर्थः स्यात्तदा फलावच्छिन्नव्यापारबोधकत्वसंभवात् सकर्मकत्वापत्तिशङ्का स्यादपि न चैवमस्ति किं तु गुरुत्वजन्यतावच्छेदिका या पतनत्वजातिस्तादृशजातिविशेषावच्छिन्नस्पन्दः ( पतनानुकूलस्पन्दः ) एव पतधात्वर्थोस्तीति फलावच्छिन्नव्यापाराऽबोधकत्वान्न सकर्मकत्वापत्तिः—धात्वर्थव्यापारावच्छेदिकाया गुरुत्वजन्यतावच्छेदकजातेः फलरूपत्वाभावादित्याशङ्कते—यत्त्विति । आद्यपतनं गुरुत्वजन्यमेव भवतीति पतनत्वजातिर्गुरुत्वजन्यतावच्छेदिका । परिहरति—तन्नेति, यद्यऽधस्संयोगावच्छिन्नस्पन्दः पतत्यर्थो न स्यात्तदा फलस्य=अधः—संयोगरूपफलस्य धात्वर्थाऽघटकत्वे=धात्वर्थे प्रवेशाभावात् सप्तम्यर्थाधेयत्वस्याऽधःसंयोगेऽन्वयाऽसंभवात् स्पन्दे एव धात्वर्थेऽन्वयः स्वीकर्तव्यः, पतधात्वर्थस्पन्दश्च स पर्णनिष्ठ एव न भूतलनिष्ठो येन सप्तम्यर्थाधेयत्वान्वयिस्पन्दाश्रयत्वात् तादृशभूतलवाचकभूतलपदात् सप्तमी स्यात्—यस्मिन् विभक्त्यर्थान्वयस्तदाश्रयीभूतपदार्थवाचकपदादेव तादृशविभक्तेर्जायमानत्वादिति 'भूतले पतति' इतिप्रयोगो न स्यादित्यर्थः । ननु पर्णगतस्यापि स्पन्दस्य परम्परया=पर्णद्वारा भूतलवृत्तित्वमस्त्येवेति भूतलपदात् सप्तमीप्राप्तेः 'भूतले पतति' इति प्रयोगानुपपत्तिर्नास्तीत्याशङ्कते—पर्णादिगतस्येति । उत्तरमाह—तर्हीति, एवं हि पर्णगतस्य स्पन्दस्य परम्परया वृक्षेपि संभवात् वृक्षपदादपि सप्तम्यापत्त्या 'वृक्षे पतति' इत्यपि प्रयोगः स्यात् न चैतदिष्टं तस्मादधःसंयोगावच्छिन्न एव स्पन्दो पतधात्वर्थो न तु गुरुत्वजन्यतावच्छेदकजातिविशेषावच्छिन्न इत्यर्थः । स्वमतेन समाधत्ते—अस्मदिति, अन्यत्र='गृहे पचति' इत्यादौ सप्तम्यर्थाधेयत्वस्य व्यापारेऽन्वयो भवति तादृशव्यापाराश्रयीभूतवाचकगृहपदात् सप्तमी भवति—गृहवृत्तिर्व्यापार इति बोधोदयात्, अत्र='भूतले पतति' इत्यादौ पतधातुसमभिव्याहारस्थले तु सप्तम्यर्थाधेयत्वस्य धात्वर्थतावच्छेदकेऽधःसंयोगरूपफले-एवान्वयो भवतीति तादृशाधस्संयोगरूपफलाश्रयीभूतभूतलवाचकभूतलपदात् सप्तमी भवति, वृक्षपदाच्च सप्तमी न संभवति वृक्षस्य तादृशाधःसंयोगरूपफलाश्रयत्वाभावादिति न 'वृक्षे पतति' इति प्रयोगापत्तिः । किं च भूतलाश्रितीभूताधःसंयोगरूपफलस्याऽधोदेशरूपाश्रयेणावच्छिन्नत्वाद् भूतलपदाद् द्वितीयाऽऽपत्तिरपि नास्त्येव— आश्रयानवच्छिन्नफलाश्रयीभूतपदार्थवाचकपदादेव द्वितीयाप्राप्तेरित्यदोषः ।

अन्ये तु भूम्यादेः कर्मत्वविवक्षायाम् 'भूमिं पतति' इतिप्रयोग इष्ट एव, अत एव "द्वितीयाश्रित" इत्यादिसूत्रेण 'नरकं पतितः' इत्यादिस्थले द्वितीया-समासविधानमप्युपपद्यते । धात्वर्थतावच्छेदकतावच्छेदकफले द्वितीयार्थान्वये एवाश्रयानवच्छिन्नफलोपस्थितेरपेक्षा 'अग्निं जुहोति' इतिवारणाय स्वीक्रियते इति वदन्ति । तदपि न शोभनम्— तथा सति भूम्यादिपदोत्तरं कदाचित् सप्तमी कदाचिद् द्वितीयेत्यत्र नियामकाभावप्रसङ्गात् । व्यापारांशे आधेयत्वविवक्षायां सप्तमी फलांशे तद्विवक्षायां द्वितीयेत्यस्योक्तयुक्त्या फलांश एव सप्तम्यर्थान्वयस्या-वश्यं स्वीकरणीयतया वक्तुमशक्यत्वादिति ।

---

अस्मन्मते कोपि दोषो नास्ति='भूमिं पतति' 'वृक्षे पतति' इतिप्रयोगयोरापत्तिरपि नास्ति 'भूतले पतति' इतिप्रयोगस्यानुपपत्तिरपि नास्तीत्यर्थः । तदन्वयः= सप्तम्यर्थाधेयत्वान्वयः ।

मतान्तरमाह— अन्ये त्विति । अत एव=भूमेः कर्मत्वविवक्षायाम् 'भूमिं पतति' इतिप्रयोगस्येष्टत्वादेव । यदि पतधातुसमभिव्याहारस्थले कर्मत्वविवक्षायामपि भूम्यादीनां कर्मत्वं न स्यात्तदा 'नरकं पतितो नरकपतितः' इति समासविधानमपि नोपपद्येत नरकस्य कर्मत्वानुपपत्तेः । नन्वेवं द्वितीयार्थान्वयं प्रति धातुजन्याश्रयानवच्छिन्नफलोपस्थितेः कारणत्वमस्तीति नियमव्याघातः स्यात्, अर्थात् धात्वर्थतावच्छेदकीभूतं यदाश्रयानवच्छिन्नं संयोगादिरूपं फलं तदाश्रयीभूतपदार्थवाचकपदादेव द्वितीया भवतीति नियमोस्ति 'भूमिं पतति' इत्यत्र च भूम्याश्रितसंयोगस्याऽधोदेशरूपाश्रयेणावच्छिन्नत्वात् तदाश्रयीभूतभूमिवाचकभूमिपदाद् द्वितीया कथं स्यादित्याशङ्क्याह— धात्वर्थेतेति, 'अग्निं जुहोति' इतिप्रयोगवारणाय धात्वर्थतावच्छेदकतावच्छेदकस्यैव फलस्याश्रयानवच्छिन्नत्वेनोपस्थितेरपेक्षास्ति न तु धात्वर्थतावच्छेदकस्यापि, अन्यथा धात्वर्थतावच्छेदिका या क्रिया तदवच्छेदको योग्निनिष्ठः संयोगस्तस्याग्निरूपाश्रयेणावच्छिन्नत्वेप्यग्निपदाद् द्वितीया स्यादेव, धात्वर्थतावच्छेदकीभूतक्रियाया आश्रयानवच्छिन्नत्वात्, धात्वर्थतावच्छेदकतावच्छेदकफलस्याश्रयानवच्छिन्नत्वेनोपस्थितेर्द्वितीयार्थान्वयं प्रति कारणत्वे तु 'अग्निं जुहोति' इति प्रयोगस्यापत्तिर्नास्त्येव, धात्वर्थतावच्छेदकतावच्छेदकस्याग्निसंयोगरूपफलस्याग्निरूपाश्रयेणावच्छिन्नस्यैवोपस्थितेर्जायमानत्वात् 'भूमिं पतति' इत्यत्र तु धात्वर्थतावच्छेदकमेवाधस्संयोगरूपफलमधोदेशरूपाश्रयेणावच्छिन्नमस्तीति न तद् द्वितीयाप्राप्तिप्रतिबन्धकमिति न 'भूमिं पतति' इतिप्रयोगे काचिदनुपपत्तिः—धात्वर्थतावच्छेदकतावच्छेदकफलस्यैवाश्रयावच्छिन्नत्वेनोपस्थितस्य द्वितीयाप्रतिबन्धकत्वादित्यर्थः । परिहरति— तदपि नेति । तव मतेन 'भूमिं पतति' 'भूमौ पतति' इत्युभयविधस्यैव प्रयोगस्येष्टत्वाद् भूम्यादिपदोत्तरं यत् कदाचिद् द्वितीया भवति कदाचिच्च सप्तमी भवति तत्र नियामकं न स्यादेव । यदि व्यापारांशे आधेयत्वविवक्षायां सप्तमी भवतीति 'भूमौ पतति' इतिप्रयोगः स्यात् फलांशे आधेयत्वविवक्षायां द्वितीया

'ब्राह्मणाय धनं ददाति' इत्यादौ स्वस्वत्वध्वंसविशिष्टपरस्वत्वानुकूला इच्छा धात्वर्थः, तादृशस्वत्वरूपधात्वर्थतावच्छेदकफले एव द्वितीयार्थान्वयः। उपेक्षायामतिप्रसङ्गवारणाय परस्वत्वनिवेशः। दानं च न संप्रदानस्वत्वजनकम्. अपि तु तत्स्वीकार एवेति मते तु स्वस्वत्वध्वंसानुकूलपरस्वत्वप्रकारकेच्छैव ददात्यर्थः, तत्र स्वस्वत्वध्वंसरूपफलाश्रयत्वाद् धनस्य कर्मता।

'धनं प्रतिगृह्णाति' इत्यादौ स्वस्वत्वजनकेच्छारूपस्वीकारविशेषो धातोरर्थः स्वस्वत्वरूपफले च द्वितीयार्थाधेयत्वान्वयः।

'तण्डुलं पचति' इत्यादौ रूपपरावृत्तिजनकतेजःसंयोगो धातोरर्थः। रूपादिपरावृत्तिरूपफले च तण्डुलादिवृत्तित्वान्वयः। 'ओदनं पचति' इत्यादावो-

---

भवतीति 'भूमिं पतति' इतिप्रयोगः स्यादित्येव नियामकमित्युच्यते तदपि न संभवति उक्तयुक्त्या=( २३८ पृ० ) फलस्य "धात्वर्थघटकत्वे" इत्याद्युक्तयुक्त्या, अर्थात् पर्णादिनिष्ठव्यापारस्य भूतलाद्यवृत्तित्वेन 'भूतले पतति' 'भूमौ पतति' इत्यादिः प्रयोगो स्यादेवेति तत्रोक्तयुक्त्या सप्तम्यर्थाधेयत्वस्यापि फलांशे एवान्वयः स्वीकर्तव्यो न व्यापार इत्याह— व्यापारांशे इत्यादिना।

दाधात्वर्थमाह— ब्राह्मणायेति, स्वस्वत्वध्वंसपूर्वकपरस्वत्वजनिकेच्छा दाधात्वर्थः, तादृश=स्वस्वत्वध्वंसविशिष्टपरस्वत्वमेव धात्वर्थतावच्छेदकं फलं च तत्रैव धनपदोत्तरद्वितीयार्थाधेयत्वस्यान्वयः धने परस्वत्वं दानेनोत्पन्नं वर्तते इति परस्वत्वे आधेयत्वं जातमिति तादृशाधेयत्वसंबन्धेन परस्वे धनं वर्तते। स्वस्वत्वाभाववस्तूपेक्षायामपि भवतीति तद्वारणाय परस्वत्वनिवेश इत्याह— उपेक्षायामिति, उपेक्षायां परस्वत्वोत्पादिकेच्छा न भवतीत्यर्थः। मतान्तरमाह— दानं चेति, स्वस्वत्वध्वंसविशिष्टपरस्वत्वोत्पादिकेच्छा न दाधात्वर्थः किं तु स्वस्वत्वध्वंसविशिष्टपरस्वत्वस्य स्वीकार एव दाधात्वर्थः— इष्टं धनमितः परं मैत्रस्य न ममेति। पूर्वोक्तमते धात्वर्थीभूतेच्छा परस्वत्वजनिकास्ति, अस्मिन्मते च परस्वत्वविषयकैवेच्छेति परस्परं भेद इत्याह— इतिमते त्विति। पूर्वमते उत्पद्यमानपरस्वत्वरूपफलाश्रयत्वाद् धनस्य कर्मत्वम्, अस्मिन्मते तदसंभवात् स्वस्वत्वध्वंस एव फलं तदाश्रयत्वादेव धनस्य कर्मत्वमित्याह— तत्रेति।

प्रतिग्रहधातोरर्थमाह— धनमिति, स्वस्वत्वोत्पादिका येच्छा तादृशेच्छारूपो यः स्वीकारः एव प्रतिग्रहधातोरर्थः। धनादावुत्पद्यमानं स्वस्वत्वमेव धात्वर्थतावच्छेदकं फलं च तत्रैव द्वितीयार्थाधेयत्वस्यान्वयः, स्वस्वत्वं धनवृत्ति, तादृशफलाश्रयत्वादेव धनस्य कर्मत्वमिति।

पचधात्वर्थमाह— तण्डुलमिति, रूपपरावृत्तिरत्र विक्लित्तिरेव। सा रूपपरावृत्तिरेव धात्वर्थतावच्छेदकं फलं च, तत्रैव द्वितीयार्थस्य तण्डुलवृत्तित्वस्यान्वयः। तादृशफलाश्रयत्वादेव तण्डुलस्य कर्मत्वम्। ननु पाकसंपन्नमेव तण्डुलमोदनपदवाच्यं भवतीत्योदनस्य पाकासंभवात् 'ओदनं पचति' इतिप्रयोगस्य का गतिरित्याशङ्क्याह— ओदनमिति। अत्रौदनपदं लक्षणावृत्त्या तण्डु-

दनादिपदस्य तन्निष्पादकतण्डुलादौ लक्षणा । अवयविनि पाकानभ्युपगमे च 'तण्डुलं पचति' इत्यादौ तण्डुलादिपदस्य तदारम्भकपरमाणुषु लक्षणा ।

'ओदनं भुङ्क्ते' इत्यादौ गलाधोनयनं धात्वर्थः, तच्च गलाधःसंयोगावच्छिन्नक्रियानुकूलव्यापारः, तादृशक्रियारूपफले एव ओदनवृत्तित्वान्वयः । उक्तयुक्त्या गलाधोदेशस्य न कर्मत्वम् । एवमन्यसकर्मकधातूनामप्यर्थाः स्वयमूह्याः ।

'गां दोग्धि पयः' इत्यादौ द्विकर्मकधातुसमभिव्याहृतगवादिपदोत्तरद्वितीया क्रियाजन्यफलशालित्वादन्यदेव कर्मत्वं बोधयति । कारकाधिकारीयेण 'अकथितं

---

पदार्थबोधकमेवेत्यर्थः । तन्निष्पादक=ओदननिष्पादक । ननु वैशेषिकैस्त्ववयवेष्वेव पाक उच्यते इत्यऽवयविनि तण्डुले पाकासंभवात् 'तण्डुलं पचति' इत्यपि प्रयोगः कथं स्यादित्याशङ्कयाह— अवयविनीति । तत्र तण्डुलपदं लक्षणावृत्त्या तण्डुलावयवबोधकमेव विज्ञेयमित्यर्थः । तदारम्भक= तण्डुलारम्भक ।

भुजधात्वर्थमाह— ओदनमिति, गलाधोनयन ( प्रापण ) मेव भुजधात्वर्थः । ननु गलाधोनयनं हि गलाधःसंयोगावच्छिन्नव्यापार एव तत्र धात्वर्थतावच्छेदकसंयोगस्य गलाधोदेशेनावच्छिन्नत्वादाश्रयावच्छिन्नफलावच्छिन्नव्यापारबोधकत्वात् पतधातोरिव भुजधातोरपि सकर्मकत्वं न स्यादित्याशङ्क्य गलाधोनयनपदार्थं परिष्करोति— तच्चेति, तत्=गलाधोनयनं हि, गलाधःसंयोगावच्छिन्ना=गलाधःसंयोगजनिका या ग्रासनिष्ठा क्रिया तादृशक्रियानुकूलः ( जनकः ) भोजनकर्तृनिष्ठो व्यापार एव तथा च धात्वर्थतावच्छेदकतावच्छेदकस्य संयोगस्य गलाधोदेशरूपाश्रयेणावच्छिन्नत्वेपि धात्वर्थतावच्छेदिकाया ग्रासनिष्ठक्रियायास्त्वाऽऽश्रयावच्छिन्नत्वं नास्त्येवेति न सकर्मकत्वानुपपत्तिः । तादृशक्रियारूपफले एवौदनवृत्तित्वस्य द्वितीयार्थस्यान्वयः । तादृशक्रियारूपफलाश्रयत्वादेवौदनस्य कर्मत्वम् । गलाधोदेशस्य चात्रोक्तयुक्त्या=( २३४पृ. )" आश्रयानवच्छिन्नावच्छेदकताश्रयफलवत्त्वविरहात् " इत्याद्युक्तयुक्त्या न कर्मत्वम्, अर्थात् गलाधोदेशाश्रितसंयोगस्य गलाधोदेशरूपाश्रयेणावच्छिन्नत्वात् तादृशाश्रयावच्छिन्नसंयोगरूपफलाश्रयत्वादेव गलाधोदेशस्य नात्र कर्मत्वम्—आश्रयविशेषानवच्छिन्नफलाश्रयस्यैव कर्मत्वनियमादिति । उपसंहरति—एवमिति ।

द्विकर्मधातूनामर्थं वक्तुमुपक्रमते—गामित्यादिना । अत्र क्षरणानुकूलव्यापारो दुहधात्वर्थो विज्ञेयः । एककर्मकधातुसमभिव्याहारस्थले तु क्रियाजन्यफलशालित्वमेव कर्मत्वं द्वितीयया बोध्यते द्विकर्मकधातुसमभिव्याहारस्थले 'गां पयो दोग्धि' इत्यादावपि प्रधानकर्मणः क्षीरादेस्तु क्रियाजन्यफलशालित्वरूपमेव कर्मत्वं यथात्र क्षरणरूपफलाश्रयत्वम्, अप्रधानकर्मणो गवादेस्तु "अकथितं च" इतिसूत्रप्रतिपाद्यं क्रियाजन्यफलशालित्वादन्यदेव कर्मत्वं भवतीत्यर्थः। स्वाभिप्रायं प्रकटयति—कारकेति, यथा 'गां दोग्धि पयः' इत्यत्र धातुप्रतिपाद्यं यत् क्षरणं तादृशक्षरणान्वयि ( क्षरणजन्य ) धर्मान्तरो विभाग एव तादृशविभागावच्छिन्नस्य ( आश्रयस्य )

च " इतिसूत्रेणाऽपादानत्वादिभिन्नधातुप्रतिपाद्यान्वयिधर्मान्तरावच्छिन्नस्यापि कर्मसंज्ञाऽभिधानात् । 'गवां पयो दोग्धि' इत्यादौ धातुप्रतिपाद्यान्वयिगवादिसंबन्धो न विवक्षितः, अपि तु क्षीराद्यन्वयी स इति कर्मत्वाऽविवक्षया द्वितीयानवकाशः किं तु शैषिकी षष्ठ्येवेति ।

अत्र धातुप्रतिपाद्यत्वं तदर्थतावच्छेदककोटिप्रविष्टसाधारणम्–'गां दोग्धि' इत्यादौ धात्वर्थतावच्छेदककोटिप्रविष्टे एव द्वितीयार्थान्वयात्, तथा हि–क्षरणानुकूलव्यापारो दुहेरर्थः, द्वितीयार्थश्च जनकत्वसंबन्धेन क्षरणान्वयी विभागः, विभागे चाधेयतया प्रकृत्यर्थगवादेरन्वयः, एवं च धात्वर्थतावच्छेदकक्षरणरूपफले प्रधानकर्मक्षीराद्यन्वितद्वितीयार्थवृत्त्यत्वस्याऽन्वय इति गोनिष्ठविभागानुकूलपयो-

गोः कर्मत्वं ज्ञेयम्, स च विभागोऽपादानत्वादिभिन्न एवास्ति विभागस्य क्षरणे तु जनकत्वसंबन्धेनान्वयो ज्ञेयः पयोविभागस्य क्षरणजन्यत्वात् क्षरणजन्यपयोविभागश्च गवि समवायेन ज्ञेयः दोहनेन गोक्षीरयोर्विभागस्य जायमानत्वात् । तादृशविभागाश्रयत्वेन गोः कर्मत्वात्तद्वाचकपदादत्र द्वितीया जाता । 'गवां पयो दोग्धि' इत्यत्र तु धातुप्रतिपाद्यं यत् क्षरणं तादृशक्षरणान्वयिना=विभागेन सह गोः संबन्धो न विवक्षितो येन तादृशविभागाश्रयत्वेन गोः कर्मत्वं स्यात्तद्वाचकगोपदाच्चात्र द्वितीया स्यात्, किं तु सः=धातुप्रतिपाद्यान्वयिधर्मो विभागः क्षीरान्वयी एव–क्षरणजन्यविभागस्य क्षीरे एवान्वयो विवक्षित इति क्षीरस्यैव कर्मत्वं क्षीरवाचकपयःपदादेव च द्वितीया जाता, तादृशविभागस्य गव्यन्वयाऽविवक्षणेन गोः कर्मत्वाविवक्षया न गोपदाद् द्वितीयापत्तिः किं तु षष्ठ्येव जातेत्याह– गवामिति ।

धातुप्रतिपाद्यान्वयिधर्मान्तरेतिवाक्यार्थं स्पष्टयति–अत्रेति । तदर्थता=धात्वर्थता । यद्यपि धातुप्रतिपाद्यत्वं प्राधान्येन व्यापारस्यैव भवति न धात्वर्थतावच्छेदकस्य क्षरणादेस्तथापि 'गां दोग्धि पयः' इत्यादौ धात्वर्थतावच्छेदके क्षरणे द्वितीयार्थविभागस्यान्वयो भवतीत्यत्र धातुप्रतिपाद्यत्वं यथा धात्वर्थस्य व्यापारस्य तथा धात्वर्थतावच्छेदकस्य क्षरणादेरपि धातुप्रतिपाद्यत्वं ज्ञेयम्, अन्यथा क्षरणस्य धातुप्रतिपाद्यत्वाभावे क्षरणान्वयी यो विभागस्तदाश्रयस्य गोरुक्तरीत्या कर्मत्वं न स्यात् । धात्वर्थतावच्छेदककोटिप्रविष्टसाधारणधातुप्रतिपाद्यत्वग्रहणस्य फलमाह–गामित्यादिना । धात्वर्थतावच्छेदककोटिप्रविष्टे=क्षरणे एव गोपदोत्तरद्वितीयार्थस्य विभागस्य जनकत्वसंबन्धेनान्वयः । उपपादयति–तथा हीति । क्षरणानुकूलव्यापारः=क्षीरनिष्ठं यत् क्षरणं तदनुकूलस्तज्जनको व्यापारः । क्षरणजन्यो यो गोक्षीरयोर्विभागः स जनकत्वसंबन्धेन क्षरणे वर्तते स एव विभागो गोपदोत्तरद्वितीयाविभक्त्यर्थः, तादृशविभागे चाधेयतया प्रकृत्यर्थस्य गोपदार्थस्यान्वयः स विभागो गवि वर्तते इति गोराधेयतासंबन्धेन विभागे वर्तते इत्यर्थः । पयःपदोत्तरद्वितीयार्थं तदन्वयं चाह–एवं चेति, प्रधानकर्म यत् क्षीरं तदन्वितद्वितीयार्थवृत्तेः=वृत्तित्वस्य ( आधेयत्वस्य ) धात्वर्थतावच्छेदकक्षरणरूपफलेऽन्वयो भवति–क्षरणस्य क्षीरवृत्तित्वात्तादृशक्षरणे आधेयतासंबन्धेन क्षीरं वर्तते इत्यर्थः ।

निष्ठक्षरणानुकूलव्यापारकर्ता मैत्र इति 'गां पयो दोग्धि मैत्रः' इति वाक्याधीनो बोधः।

न च विभागोऽपादानत्वमेवेति तद्विवक्षायां द्वितीयाऽनवकाशेति वाच्यम्, धातुवृत्तिग्रहविशेष्यान्वयिनो विभागस्यैवापादानत्वरूपत्वात्, 'वृक्षात् पर्णं पतति' इत्यादौ स्पन्दरूपविशेष्यांशे एव पञ्चम्यर्थविभागान्वयात्।

वस्तुतस्तु विभागावच्छिन्नक्षरणानुकूलो व्यापारो दुह्यर्थः, गोपदोत्तरद्वितीयार्थश्च विभागान्वयिनी वृत्तिरेव। न चैवं धात्वर्थतावच्छेदकफलशालित्वरूपं कर्मत्वमेवात्रापि प्रतीयते इति न "अकथितं च" इत्यस्य विषय इतिवाच्यम्, धात्वर्थतावच्छेदकत्वस्य धातुवृत्तिग्रहविशेष्यांशे साक्षाद्विशेषणत्व-

---

एवं हि 'गां पयो दोग्धि मैत्रः' इत्यस्य संपन्नं वाक्यार्थबोधस्वरूपमाह—गोनिष्ठेति, गोनिष्ठो यो गोक्षीरयोर्विभागस्तादृशविभागजनकं यत् पयोनिष्ठं क्षरणं तादृशक्षरणजनकव्यापारकर्ता मैत्र इति वाक्यार्थबोधः।

ननु 'गां पयो दोग्धि' इत्यत्र विभागाश्रयत्वं गोरुक्तं विभागश्चापादानत्वमेव अपादानत्वाश्रयवाचकपदाच्च "अपादाने पञ्चमी" इतिसूत्रेण पञ्चमी भवति न द्वितीयेति 'गाम्' इति कथं स्यादित्याशङ्क्याह—न चेति। परिहारमाह—धात्विति, धातुवृत्तिज्ञाने यो विशेष्यतया भासते व्यापारस्तदन्वयी यो विभागः स एव ( व्यापारान्वितविभाग एव ) अपादानरूपो भवति यथा 'वृक्षात्पर्णं पतति' इत्यत्र विशेष्यभूतो यः पतनरूपो व्यापारस्तत्रैव जनकत्वसंबन्धेन पञ्चम्यर्थभूतविभागस्यान्वयोस्तीति तादृशविभागाश्रयवाचकवृक्षपदात् पञ्चमी जाता। यस्तु विभागो व्यापारान्वयी न भवति किं तु धात्वर्थतावच्छेदकान्वयी भवति सोऽपादानत्वरूपो न भवति 'गां दोग्धि' इत्यत्र च विभागो धात्वर्थतावच्छेदकक्षरणान्वय्येव न धात्वर्थभूतव्यापारान्वयीति नाऽपादानत्वरूप इति न गोपदाद् द्वितीयानुपपत्तिरित्यर्थः।

स्वमतमाह—वस्तुतस्त्विति, गोक्षीरयोर्विभागजनकं यत् क्षरणं तादृशक्षरणजनकव्यापारो दुहधात्वर्थ इति विभागोपि धात्वर्थकोटिप्रविष्ट एव न गोपदोत्तरद्वितीयार्थः, गोपदोत्तरद्वितीयार्थस्तु विभागान्वयि आधेयत्वमेव, विभागस्य गोवृत्तित्वादाधेयत्वसंबन्धेन विभागे गोर्वर्तमानत्वात्। वाक्यार्थबोधस्तु पूर्ववदेव। ननु धात्वर्थतावच्छेदकफलशालित्वमेव प्रधानकर्मत्वमस्ति 'गां पयो दोग्धि' इत्यत्र गोरपि धात्वर्थतावच्छेदकीभूतं यद् विभागरूपं फलं तादृशविभागाश्रयत्वात् प्रधानकर्मत्वमेव प्राप्तमिति "अकथितं च" इत्यनेनाऽप्रधानकर्मत्वं कथमुच्यते इत्याशङ्क्याह—न चेति। अत्रैवकारो भिन्नक्रमः—"धात्वर्थतावच्छेदकफलशालित्वरूपमेव कर्मत्वम्" इत्यन्वयः। अत्र='गां पयो दोग्धि' इत्यत्र। परिहारमाह—धात्वर्थतेति, धात्वर्थतावच्छेदकफलशालित्वं प्रधानकर्मत्वमित्यत्र धातुपदशक्तिज्ञाने विशेष्यतया भासमानव्यापारे यत् साक्षाद्विशेषणं तदेव धात्वर्थतावच्छेदकं ग्राह्यम्, 'गां पयो दोग्धि' इत्यत्र च गवाश्रितविभागस्य न

रूपत्वात् । यत्र च क्षरणानुकूलव्यापारमात्रं धात्वर्थतया विवक्षितं क्षरणान्वयिविभागश्च विभक्त्यर्थतया तत्राऽपादानत्वबोधिका पञ्चमी । एतेन कदाचित् ‘ गां दोग्धि पयः ’ कदाचिच्च ‘ गोभ्यो दोग्धि पयः ’ इत्यत्र नाऽनियमः ।

अथ वा ‘ गोभ्यो दोग्धि पयः ’ इत्यत्रापि विभागो धात्वर्थतावच्छेदककोटिप्रविष्ट एव ‘ वृक्षाद्विभजते ’ इत्यत्रेवाऽवधित्वरूपाऽपादानत्वविवक्षायां पञ्चमी, आश्रयत्वविवक्षायां च द्वितीया । अवधित्वं चाश्रयत्वादन्यदेव स्वरूपसंबन्धविशेषः । अत्र क्षरणान्वयिनः परसमवेतत्वस्य द्वितीयार्थत्वात् पयोनिष्ठक्षरणस्य

साक्षाद् व्यापारे विशेषणत्वं किं तु व्यापारविशेषणीभूतक्षरणविशेषणत्वमिति न गोः प्रधानकर्मत्वं किं तु पयस एवेत्यर्थः । ननु कदाचित् ‘ गां दोग्धि पयः ’ इतिप्रयोगो भवति कदाचित् ‘ गोभ्यो दोग्धि पयः ’ इतिप्रयोगो भवति तत्र किं नियामकमित्याशङ्क्याह– यत्र चेति, तथा चोक्तरीत्या यत्र विभागावच्छिन्नक्षरणानुकूलव्यापारो दुह्यर्थो विवक्षितो गोपदोत्तरद्वितीयार्थश्च विभागान्वयि आधेयत्वं तत्र पञ्चम्या आधेयत्वबोधकत्वासंभवाद् तद्बोधिका गोपदाद् द्वितीया भवति यथा ‘ गां पयो दोग्धि ’ इति । यत्र च क्षरणानुकूलव्यापारमात्रं धात्वर्थः क्षरणान्वयिविभागश्च गोपदोत्तरविभक्त्यर्थो विवक्षितस्तत्र द्वितीयाया विभागरूपापादानत्वबोधकत्वासंभवात् तद्बोधिका गोपदात् पञ्चमी भवति यथा ‘गोभ्यो दोग्धि पयः’ इतीत्यर्थः । उपसंहरन् स्वाभिप्रायं प्रकटयति– एतेनेति, उक्तविवक्षाया एव प्रयोगभेदनियामकत्वादित्यर्थः ।

पक्षान्तरमाह– अथ वेति, ‘ गोभ्यो दोग्धि पयः ’ इत्यत्रापि न क्षरणानुकूलव्यापारमात्रं धात्वर्थः किं तु विभागावच्छिन्नक्षरणानुकूलव्यापार एव धात्वर्थः, तथा च यथा ‘ वृक्षाद् विभजते ’ इत्यत्र वृक्षस्यावधित्वरूपाऽपादानत्वाद् वृक्षपदात् पञ्चमी भवति तथा गोरवधित्वरूपाऽपादानत्वविवक्षायां गोपदात् पञ्चमी भवति ‘ गोभ्यो दोग्धि पयः ’ इति, गोर्विभागाश्रयत्वविवक्षायां गोपदाद् द्वितीया भवति– ‘ गां पयो दोग्धि ’ इति विवेक इत्यर्थः । नन्ववधित्वं हि विभागाश्रयत्वमेवेति विभागाश्रयत्वविवक्षायां गोपदाद् द्वितीया अवधित्वरूपाऽपादानत्वविवक्षायां पञ्चमीति भेदः कथमुपपद्येतेत्याशङ्क्याश्रयत्वापेक्षयाऽवधित्वस्य विशेषस्वरूपमाह– अवधित्वं चेति, पञ्चम्या बोध्यमानस्वरूपमेवावधित्वमिति यावत् । यथा ‘ ग्रामं गच्छति चैत्रः ’ इत्यत्र क्रियाजन्यसंयोगरूपफलस्य ग्रामे इव चैत्रेऽपि सत्त्वेन चैत्रस्य क्रियाजन्यफलशालित्वेपि ‘ चैत्रश्चैत्रं गच्छति ’ इति प्रयोगो न भवति किं तु ‘ ग्रामं गच्छति ’ इत्येव प्रयोगो भवति तत्कस्य हेतोः? परसमवेतक्रियाफलशालित्वस्यैव कर्मत्वनियमात् चैत्रस्य च चैत्रापेक्षया परत्वाऽभावात् तथा पयोनिष्ठक्षरणजन्यविभागरूपफलस्य गवीव पयस्यपि सत्त्वेन पयोनिष्ठक्षरणस्य गोनिष्ठविभागजनकत्वमिव पयोनिष्ठविभागजनकत्वमपि यद्यप्यस्ति तथापि ‘ पयः पयो दोग्धि ’ इति प्रयोगो न भवति तत्कस्य हेतोः? परसमवेतक्रियाफलशालित्वस्यैव कर्मत्वनियमात्–अत्र च पयसः पयोपेक्षया परत्वाभावात् पयोनिष्ठक्षरणक्रियाजन्यविभागाश्रयस्य पयस एव प्रधानाप्रधानोभयक

पयोनिष्ठविभागजनकत्वेपि न 'पयः पयो दोग्धि' इति प्रयोगः । परत्वं च विभागान्वयितावच्छेदकावच्छिन्नापेक्षया बोध्यम् ।

'दुह्यते गौः क्षीरम्' इत्यादौ क्षरणजन्यविभागाश्रयत्वरूपगवादिनिष्ठमऽप्रधानकर्मत्वमाऽऽख्यातार्थः- "अप्रधाने दुहादीनाम्" इत्यनुशासनात् । क्षीरवृत्तित्वस्य धात्वर्थक्षरणे एवान्वयः, आख्यातार्थक्षरणे च धात्वर्थव्यापारान्वयः, तथा च- विभागावच्छिन्नक्षीरनिष्ठक्षरणानुकूलव्यापारजन्यक्षरणजन्यविभागाश्रयो गौरित्याकारको बोधः ।

अथ वा विभागक्षरणव्यापारेषु विशकलितेषु धातोः शक्तित्रयम्, विशिष्टलाभोऽन्वयबलात् । कर्माख्यातस्थले चाकाङ्क्षावैचित्र्येण तेषां विशेष्यविशेषणभाव-

---

मेत्वासंभवात् कर्तृत्वकर्मत्वोभयासंभवाच्चेत्यर्थः । क्षरणान्वयिनः परसमवेतविभागस्य द्वितीयार्थत्वेन तदेकदेशपरसमवेतत्वस्यापि द्वितीयार्थत्वमेवेति ज्ञेयम् । परत्वमाह- परत्वं चेति, विभागस्यान्वयितावच्छेदकं यत् पयस्त्वादिकं तदवच्छिन्नं यत् पयआदि तदपेक्षया परत्वं ग्राह्यमित्यर्थः ।

कर्माख्यातान्तप्रयोगमुदाहरति- दुह्यते इति, अत्रापि विभागावच्छिन्नक्षरणानुकूलो व्यापारो दुह्यर्थः, क्षरणजन्यो यो विभागस्तादृशविभागाश्रयत्वरूपं गोनिष्ठं यदप्रधानकर्मत्वं तत् कर्माख्यातस्यार्थः, गोनिष्ठाप्रधानकर्मत्वमेवात्राख्यातार्थो न क्षीरादिनिष्ठप्रधानकर्मत्वमित्यत्र प्रमाणमाह- अप्रधानेति, द्विकर्मकधातूनां मध्ये दुहादिधातूनामप्रधानकर्मण्येव लादयः ( आख्यातप्रत्ययाः ) भवन्तीत्यर्थः, क्षीरपदोत्तरद्वितीयाया अर्थस्य वृत्तित्वस्य ( आधेयत्वस्य ) अन्वयमाह- क्षीरवृत्तित्वस्येति, धात्वर्थकोटिप्रविष्टं यत् क्षरणं तत् क्षीरे वर्तते इति क्षीरवृत्तित्वं धात्वर्थक्षरणेऽन्वेति, उक्ताख्यातार्थकोटिप्रविष्टं च यत् क्षरणं तादृशक्षरणे एव जन्यत्वसंबन्धेन धात्वर्थव्यापारस्यान्वयः-उक्तक्षरणस्य उक्तव्यापारजन्यत्वात्, एवं च 'दुह्यते गौः क्षीरम्' इत्यस्य परिनिष्पन्नवाक्यार्थबोधस्वरूपमाह- तथा चेति, विभागावच्छिन्नम्=विभागजनकं यत् क्षीरनिष्ठं क्षरणं तादृशक्षरणानुकूलः=क्षरणजनको यो व्यापारस्तादृशव्यापारजन्यं यत् क्षरणं तादृशक्षरणजन्यो यो विभागस्तादृशविभागाश्रयो गौरितिबोधः-कर्माख्यातस्य कर्मवाचकत्वेन कर्मविशेष्यकबोधस्यैव कर्माख्यातस्थले इष्टत्वादित्यर्थः ।

उक्तरीत्या-" विभागावच्छिन्नक्षीरनिष्ठक्षरणानुकूलव्यापारजन्यक्षरणजन्यविभागाश्रयो गौः " इत्यत्र क्षरणविभागयोर्द्वेधा भानेन गौरवमसहमानः पक्षान्तरमाह- अथ वेति, दुहधातोर्विभागे क्षरणे व्यापारे च पृथक् पृथगेव=खण्डशः शक्तित्रयम्, विशिष्टलाभः=विभागावच्छिन्नक्षरणानुकूलव्यापार इत्येवं विशेष्यविशेषणभावेन विशिष्टप्रतीतिस्त्वन्वयबलात्=आकाङ्क्षाबलाज्जायते-यादृश्याऽऽकाङ्क्षा भवति तादृश एव विशेष्यविशेषणभावोपि भवतीत्यर्थः । तथा च कर्त्राख्यातस्थले व्यापाराश्रयस्य कर्तुरेव प्राधान्याद् विभागावच्छिन्नक्षरणानुकूलव्यापारवान् इत्येवं विशेष्य-

वैपरीत्यात्, व्यापारजन्यक्षरणजन्यविभागपर्यन्तस्य धातुत एव लाभः, आश्रयत्वमेवाख्यातार्थः, एवं च क्षरणविभागयोर्न द्विधा भानम्। गौणकर्माऽसमभिव्याहृते 'दुह्यन्ते क्षीराणि' इत्यादावात्मनेपदेन केवलेन धातुसहितेन वा विभागावच्छिन्नक्षरणाश्रयत्वरूपप्रधानकर्मत्वस्य बोधनेप्येकदोभयविधकर्मत्वबोधनस्याऽव्युत्पन्नतया 'दुह्यन्ते क्षीराणि गौः' इत्यादयो न प्रयोगाः।

'पौरवं गां याचते विप्रः' इत्यादौ स्वोद्देश्यकदानेच्छा याचत्यर्थः, प्रधानकर्मगवान्वितद्वितीयार्थो विषयित्वं धात्वर्थतावच्छेदकदानेऽन्वेति। सविषयकज्ञानादिरूपविषयोपहितेच्छाबोधकधातुस्थले इच्छाविषयविषयत्वमेव प्रधानकर्मत्वम्, अत एव 'घटो जिज्ञास्यते' इत्यादौ घटादेः सन्नन्तकर्मता।

---

विशेषणभावः, कर्माख्यातस्थले 'दुह्यते गौः क्षीरम्' इत्यादौ तेषाम्=विभागक्षरणव्यापाराणां विशेष्यविशेषणभाववैपरीत्यं भवति यथा व्यापारजन्यक्षरणजन्यविभागाश्रयो गौरिति विभागस्यैव विशेष्यत्वम्, व्यापारजन्यक्षरणजन्यविभागाश्रयो गौरित्यत्र विभागपर्यन्तस्तु धात्वर्थ एव, आख्यातार्थ आश्रयत्वमात्रमेव। विभागक्षरणव्यापारेषु विशकलितशक्तिस्वीकारस्य फलमाह- एवं चेति। यत्र च 'दुह्यन्ते क्षीराणि' इत्यादौ प्रधानकर्मवाचकक्षीरादिपदमेव भवति अप्रधानकर्मवाचकगवादिपदं च न भवति तत्र केवलेन धातुसहितेन वात्मनेपदेन क्षीरनिष्ठं यद् विभागावच्छिन्न ( जनक ) क्षरणाश्रयत्वरूपं प्रधानकर्मत्वं तस्य बोधनेपि "सकृत्प्रयुक्तः शब्दः सकृदर्थं गमयति" इतिन्यायात् प्रधानाऽप्रधानोभयविधकर्मत्वस्यैकदा बोधनाऽसंभवात् प्रधानकर्मवाचकपदसमभिव्याहारेऽप्रधानकर्मवाचकगवादिपदं न प्रयुज्यत इति 'दुह्यन्ते क्षीराणि गौः' इतिप्रयोगो न भवतीत्याह- गौणकर्मेति।

याचधात्वर्थमाह- गौरवमिति, पौरवो मदुद्देश्यकं दानं करोत्वितीच्छैव याचत्यर्थः, तत्र प्रधानकर्मभूतगोपदार्थस्य दाननिष्ठविषयितानिरूपकत्वात् तादृशविषयित्वस्य द्वितीयार्थस्य निरूपकत्वसंबन्धेन गवान्वितस्याऽऽश्रयत्वसंबन्धेन धात्वर्थतावच्छेदके=याचधात्वर्थीभूतेच्छावच्छेदके दानेऽन्वयः- दानस्य प्रधानकर्मभूतगोपदार्थविषयकत्वात्। नन्विच्छाबोधकधात्वर्थस्थले साक्षादिच्छाविषयस्यैव प्रधानकर्मत्वं युक्तं नत्विच्छावच्छेदकदानादिविषयस्येत्याशङ्क्याह- सविषयकेति, सविषयको यो ज्ञानादिरूपो विषयस्तदुपहितेच्छाबोधकधातुस्थले= तद्विषयकेच्छाबोधकधातुस्थले इच्छाविषयविषयत्वमेव प्रधानकर्मत्वं भवति अत एव 'घटो जिज्ञास्यते' इत्यत्र सन्नन्तार्थेच्छाया विषयो यज्ज्ञानं तादृशज्ञानविषयत्वाद् घटस्य प्रधानं सन्नन्तकर्मत्वं तथा 'पौरवं गां याचते' इत्यत्रापि धात्वर्थीभूतेच्छाया विषयो यद् दानं तादृशदानविषयत्वाद् गोः प्रधानकर्मत्वमित्यर्थः। अत्र च स्वोद्देश्यकगोविषयकदानेच्छावान् विप्र इतिबोधः।

ननु दानयोग्यगवादिपदार्थविषयकं दानं संभवतीति तादृशदानविषयेच्छापि याचत्यर्थः

अथैवं यद्वस्तुविषयकं दानमप्रसिद्धं तद्वस्तुरूपकर्मसमभिव्याहृतधातुघटितवचसः का गतिः ? इति चेत् ?, या गतिः 'गगनं दिदृक्षते' इत्यादिकस्य भ्रान्तपुरुषीयगगनादिप्रकारकदर्शनेच्छाबोधकवाक्यस्य। गगनविषयकत्वप्रकारकदर्शनेच्छाबोधस्तत्रेति चेत् ?इहापि गोविषयिताप्रकारतानिरूपितस्वत्वेच्छानिष्ठविषयताशालीच्छाबोधः, तद्वाक्यस्य विशेषादर्शिमात्रविषयता च समा । विवेचनीयं चेदमग्रे । पौरवपदोत्तरद्वितीयायास्तु वृत्तिरेवार्थः, तस्याश्च दानेऽन्वयः, पौरवस्य तादृशदानाश्रयत्वमेवाऽप्रधानकर्मत्वम् ।

---

संभवति परकीयगवादिपदार्थविषयकं तु दानमेव न संभवतीति तद्वस्तुरूपकर्मसमभिव्याहृतधातुघटितवचसः= 'परकीयां गां याचते' इत्यादिवचनस्य का गतिः=कथं वाक्यार्थबोधः स्यात्—परकीयवस्तुविषयकदानेच्छाया असंभवादित्याशङ्कते— अथेति । उत्तरमाह— या गतिरिति । गगनादिप्रकारक=गगनादिविषयक । यथा गगनदर्शनासंभवेन तदिच्छाया असंभवात् 'गगनं दिदृक्षते' इत्यपार्थक एव प्रयोगस्तथा 'परकीयां गां याचते'इत्यप्यऽपार्थक एव प्रयोग इत्यर्थः । ननु 'गगनं दिदृक्षते' इत्यत्र न दर्शनप्रकारत्वं गगनस्य येनासंभवः स्यात् किं तु गगनविषयकत्वस्यैव प्रकारत्वं गगनविषयकत्वं तु गगनविषयकानुमित्यादौ प्रसिद्धमेवेत्याशङ्कते— गगनेति । उत्तमाह— इहापीति, इह=' परकीयां गां याचते ' इत्यत्रापि न परकीयगोदानेच्छाविषयत्वं येनासंभवः स्यात् किं तु गोविषयताप्रकारतानिरूपितस्वत्वेच्छानिष्ठविषयताशालीच्छाबोधो जायते तत्र स्वत्वेच्छानिष्ठविषयताशालीच्छा ह्युक्तरीत्या याचत्यर्थ एव यतः—' गवि मदीयं स्वत्वमुत्पद्येत ' इत्याकारा याचकाभीष्टा या पौरवेच्छा तादृशेच्छानिष्ठविषयताशालिनी=तादृशेच्छानिष्ठविषयितानिरूपितविषयतावती ( तादृशेच्छाविषया )या इच्छा सा स्वोद्देश्यकदानेच्छैवेति तस्या धात्वर्थत्वं विज्ञेयम्, गोविषयिताप्रकारतानिरूपितेत्यस्य हि गोविषयकत्वप्रकारकेत्यर्थः उक्तरीत्या गोनिष्ठा या द्वितीयार्थभूता विषयिता तादृशविषयितानिष्ठप्रकारतानिरूपिता या स्वत्वेच्छानिष्ठा विषयिता तन्निरूपितविषयतावतीच्छेति लब्धम् ) तथा च परकीयगोविषयकत्वमपि तद्विषयकप्रत्यक्षादौ प्रसिद्धमेवेति तस्य याचत्यर्थभूतेच्छायां प्रकारत्वं संभवतीति न काचिदनुपपत्तिः, गोविषयकत्वप्रकारकस्वोद्देश्यकदानेच्छाश्रयो विप्र इति निर्गलितः शाब्दबोधस्याकारः । अद्य यथा 'गगनं दिदृक्षते ' इतिवाक्यं विशेषदर्शी विद्वान्न प्रयुङ्क्ते तथा ' परकीयां गां याचते ' इत्यादिवाक्यमपि विशेषदर्शी न प्रयुङ्क्ते इति विशेषाऽदर्शिविषयता समा । विवेचनीयमिति— एतस्य प्रथमखण्डस्यावसाने एतद्विवेचनं द्रष्टव्यम् । ' पौरवं गां याचते ' इत्यत्र पौरवपदोत्तरद्वितीयार्थमाह— पौरवेति, वृत्तिः=आधेयत्वम् । तस्याः=वृत्तेः । तथा च गोविषयकं पौरववृत्ति यद् दानं तादृशदानविषयकेच्छावान् विप्र इतिबोधः । गोकर्मकपौरववृत्तिदानाश्रयत्वादेव पौरवस्याऽप्रधानकर्मत्वमिति ।

नचैवमिच्छाविशेषरूपदानस्याश्रयत्वं कर्तृत्वमेवेति वाच्यम्, धातुजन्यप्रतिपत्तिविशेष्यीभूतदानाश्रयत्वस्यैव तत्कर्तृत्वरूपत्वात् । अत्र च दानस्य तादृशप्रतिपत्ताविच्छारूपधात्वर्थविशेषणत्वात् । 'चैत्रेण पौरवो गां याच्यते' इत्यादावप्युक्तक्रमेण चैत्रवृत्तीच्छाविषयगोकर्मकदानाश्रय इत्यन्वयबोधो बोध्यः ।

यद्यपि निरुक्तयाच्ञा भिक्षैवेति "दुहियाचिरुधिप्रच्छिभिक्षिचिञाम्" इत्यत्रार्थपरभिक्ष्युपादानेनैव चरितार्थतया याचेरुपादानमनर्थकम्, तथापि 'याचमानः शिवं सुरान्' इत्यादौ याचतेर्न निरुक्तभिक्षार्थकतेति तदुपादानम् । तत्र हि व्यापारजन्यत्वप्रकारकेच्छा धात्वर्थः, इच्छायां प्रधानकर्मकल्याणान्वितद्वितीयार्थविषयिताया अन्वयः, व्यापारे च सुरान्वितवृत्तित्वस्य द्वितीयार्थस्यान्वयः, तथा च सुरवृत्तिव्यापारजन्यत्वप्रकारककल्याणेच्छाश्रय इत्यन्वयबोधः ।

---

ननु पौरवस्योक्तेच्छाविशेषरूपदानाश्रयत्वाद् दानकर्तृत्वमेव स्यान्न तु दानकर्मत्वमित्याशङ्क्याह– न चेति, पूर्वोक्तरीत्या याचकाभीष्टेच्छाश्रयत्वं पौरवस्यास्त्येव तादृशेच्छैव च दानपदार्थ इच्छाश्रयस्य च 'इच्छति' इत्यत्र कर्तृत्वं प्रसिद्धमेव । परिहारमाह– धातुजन्येति, धातुजन्यज्ञाने (शाब्दबोधे) विशेष्यतया भासमानं यद् दानं तादृशदानाश्रयत्वमेव दानकर्तृत्वं भवति यथा 'विप्राय गां ददाति' इत्यत्र दाधातुजन्यज्ञाने उक्तेच्छारूपं दानं विशेष्यतया भासते इति तादृशदानाश्रयस्यैव दानकर्तृत्वं भवति, अत्र=' पौरवं गां याचते' इत्यत्र तु तादृशप्रतिपत्तौ=याचधातुजन्यज्ञाने (शाब्दबोधे) विशेष्यतया भासमानेच्छारूपधात्वर्थे दानं विशेषणमेवेति तादृशविशेषणीभूतेच्छारूपदानाश्रयस्य पौरवस्य न दानकर्तृत्वं संभवतीति दानकर्मत्वमेवेत्यर्थः । कर्माख्यातमुदाहरति– चैत्रेणेति, उक्तक्रमेण=( २४१ पृ० ) 'दुह्यते गौः क्षीरम्' इत्यत्रोक्तकर्मविशेष्यकबोध इवात्रापि चैत्रवृत्तीच्छाविषया या गौस्तादृशगोकर्मकदानस्याश्रयः पौरव इत्यन्वयबोधो विज्ञेय इत्यर्थः ।

यद्यपीति– दुह्यादीनामपादानादिविशेषैरविवक्षितस्य गवादेरकथितकर्मसंज्ञाविधानार्थं यः "दुहियाचि" इत्यादिसंग्रहः कृतस्तत्र दुह्यादीनामर्थपरत्वेनैव तत्पर्यायभूतधात्वन्तरसंग्रहस्योपपन्नत्वाद् याचधातोर्भिक्षार्थकत्वेन भिक्षधातूपादानेनैव चरितार्थतया=याचधातोर्ग्रहणसंभवेन यद्यपि याचेः पृथगुपादानमनर्थकमेव तथापि 'याचमानः शिवं ( कल्याणम् ) सुरान्' इत्यत्र याचधातोर्भिक्षार्थकत्वाभावात् पृथगुपादानमस्ति, 'याचमानः शिवं सुरान्' इत्यत्र याच्यमानकल्याणस्यान्नादिवद्धस्तेन सुरैर्दातुमशक्यत्वान्न याचेर्भिक्षार्थकत्वमित्यर्थः । अत्र शिवपदं कल्याणपरं तदेव प्रधानं कर्म सुराश्चाऽप्रधानं कर्म । अत्रत्ययाचधात्वर्थमाह– तत्रेति, याचमानपुरुषीयकल्याणविधानानुकूलो यः सुरवृत्तिव्यापारस्तादृशव्यापारजन्यत्वं कल्याणेस्तीति सुरवृत्तिव्यापारजन्यकल्याणविषयकेच्छैवात्र धात्वर्थ इति धात्वर्थीभूतेच्छा व्यापारजन्यत्वप्रकारिका ज्ञेया, इच्छा कल्याणविषयास्तीति निरूपितत्वसंबन्धेन कल्याणान्वितायाः कल्याणवाचकशिवप-

'गां व्रजं रुणद्धि' इत्यादौ देशान्तरसंचारविरोधिव्यापारो धात्वर्थः, संचारविरोधित्वं संचारानुत्पादप्रयोजकत्वम्, अनुत्पादे प्रधानकर्मगोवृत्तित्वान्वयः, देशविशेषणे भेदे च 'व्रजम्' इति द्वितीयान्तार्थव्रजप्रतियोगित्वान्वयः । 'रुध्यते गां व्रजः' इत्यादावन्वयबोधः स्वयमूहनीयः ।

'गुरुं धर्मं पृच्छति' इत्यादौ जिज्ञासाबोधकव्यापारो धात्वर्थः, बोधे गुरुवृत्तित्वस्य. जिज्ञासायां धर्मविषयकत्वस्यान्वयः । 'शिष्यं धर्मं ब्रूते' इत्यत्र ज्ञानानुकूलशब्दप्रयोगो धात्वर्थः, ज्ञाने धर्मविषयकत्वस्य शिष्यवृत्तित्वस्य-

---

दोत्तरद्वितीयार्थभूताया विषयिताया इच्छायामन्वयः, कल्याणजनकव्यापारस्य गुरुवृत्तित्वात् गुरुपदोत्तरद्वितीयार्थस्य वृत्तित्वस्य ( आधेयत्वस्य ) व्यापारेऽन्वय इत्यर्थः । वाक्यार्थबोधस्वरूपमाह—तथा चेति । आश्रयत्वं याचमानपुरुषस्य ज्ञेयम् ।

रुधधात्वर्थमाह—गामित्यादिना, देशान्तरसंचाराऽनुत्पत्तिप्रयोजकत्वमेव देशान्तरसंचारविरोधित्वम् । देशान्तरसंचारानुत्पादो गव्येवेति गोपदोत्तरद्वितीयार्थस्य गोवृत्तित्वस्यानुत्पादेऽन्वयः, व्रजादितद्देशभिन्न एव देशो देशान्तरमिति देशान्तरेत्यत्र भेदो देशविशेषणं तादृशभेदे च व्रजपदोत्तरद्वितीयार्थस्य प्रतियोगित्वस्यान्वय इति व्रजप्रतियोगिकभेदविशिष्टदेशस्य यो गोवृत्तिः संचारानुत्पादस्तदनुकूलव्यापारवान् गोप इतिबोध इत्यर्थः । कर्माख्यातमुदाहरति—रुध्यते इति । स्वयमिति—तथा च गोपवृत्तिव्यापारप्रयोज्यो यो गोवृत्तिदेशान्तरसंचारानुत्पादस्तदेकदेशदेशान्तरनिष्ठो यो भेदस्तत्प्रतियोगित्वाश्रयो व्रज इत्यन्वयबोधः, आश्रयत्वं कर्माख्यातार्थः, कर्माख्यातप्रयोगस्थले प्रथमान्तपदार्थे फलाश्रयत्वं भवति तच्चात्राप्यस्त्येव—व्रजप्रतियोगिकभेदाश्रयीभूतदेशान्तरसंचारविरोधिव्यापारस्यात्र धात्वर्थत्वेन देशान्तरनिष्ठभेदप्रतियोगित्वस्य धात्वर्थतावच्छेदकत्वेन फलत्वात् तादृशफलीभूतप्रतियोगित्वाश्रयत्वस्य व्रजे स्वीकारादिति विज्ञेयम् । किं च "अप्रधाने दुहादीनां ण्यन्ते कर्तुश्च कर्मणाम्" इतिनियमेन 'रुध्यते गां व्रजः' इत्यत्र लकारस्याऽप्रधानकर्मबोधकत्वादप्रधानकर्मभूतव्रजवाचकव्रजपदादेव प्रथमा जाता न तु प्रधानकर्मवाचकगोपदात् प्रधानकर्मत्वस्यानुक्तत्वादित्यनुसंधेयम् ।

पृच्छत्यर्थमाह—गुरुमिति, येन प्रश्नरूपेण व्यापारेण गुरोः स्वकीयजिज्ञासाया बोधः स्यात्तादृशो जिज्ञासाबोधको व्यापारः पृच्छत्यर्थः । जिज्ञासाविषयकबोधो गुरौ जायते इति गुरुपदोत्तरद्वितीयार्थस्य गुरुवृत्तित्वस्य बोधेऽन्वयः, जिज्ञासा चात्र धर्मविषयास्तीति जिज्ञासायां धर्मविषयकत्वस्यान्वयः, तथा च धर्मविषयकजिज्ञासाविषयकगुरुवृत्तिबोधोत्पत्त्यनुकूलव्यापारवान् शिष्य इति वाक्यार्थः । ब्रूधात्वर्थमाह—शिष्यमिति, येन शब्दप्रयोगेण शिष्यस्य धर्मविषयकज्ञानं जायेत तादृशशब्दप्रयोगो ब्रूधात्वर्थः । शिष्ये एव धर्मविषयकमेव च ज्ञानमुत्पादनीयमिति ज्ञाने धर्मपदोत्तरद्वितीयार्थस्य विषयितायाः=धर्मविषयकत्वस्यान्वयस्तथा शिष्यपदोत्तरद्वितीयार्थस्य शिष्यवृत्तित्वस्यान्वयः, तथा च धर्मविषयकशिष्यवृत्तिज्ञानोत्पत्तिप्रयोजकशब्दप्रयोगरूपव्यापारवान् गुरु-

चान्वय इति । तत्र चारुतरम्-तथा सति यत्र जिज्ञासाविषयकचैत्रज्ञानेच्छया प्रश्नस्तादृशशब्दाच्च सामग्रीबलेन मैत्रस्यापि पृच्छकजिज्ञासाज्ञानं तत्र 'मैत्रं पृच्छति' इतिप्रयोगस्य. एवं यत्र चैत्रज्ञानेच्छया ब्रूते दैववशाच्च मैत्रस्यापि ज्ञानं तत्र 'मैत्रं ब्रूते' इतिप्रयोगस्य चापत्तेः । साक्षाद्धात्वर्थविशेषणज्ञानरूपफलाश्रयतया तत्र गुर्वादीनां प्रधानकर्मतया "अप्रधाने दुहादीनाम्" इत्यनुशासनविरोधेन. 'पृच्छ्यते गुरुर्धर्मम्' 'शिष्य उच्यते धर्मम्' इत्यादिस्थले च लकारादिना तत्कर्मत्वाभिधानानुपपत्तेश्च ।

परं तु जिज्ञासाज्ञानोद्देश्यकप्रवृत्त्यधीनशब्दः पृच्छतेरर्थः, ज्ञाने गुरुवृत्तित्वस्यान्वयः, शब्दे च धर्मविषयकत्वस्यान्वयः, शब्दस्य च विषयता व्यापारानुव-

---

त्यन्वयबोध इत्यर्थः । एतन्मतं दूषयति-तत्रेत्यादिना, तथा सति=यदि जिज्ञासाबोधकव्यापार एव पृच्छत्यर्थस्तदा यत्र जिज्ञासाविषयज्ञानं चैत्रनामकगुरोः स्यादितीच्छया प्रश्नः कृतस्तादृशप्रश्नेन शक्तिज्ञानादिसामग्रीबलेन चैत्रसमीपस्थमैत्रस्यापि धर्मादिविषयकपृच्छकजिज्ञासाज्ञानं जातं तत्र मैत्रसमवेतजिज्ञासाबोधजनकव्यापारस्यापि जातत्वाद् 'चैत्रं धर्मं पृच्छति' इतिवत् 'मैत्रं धर्मं पृच्छति' इत्यपि प्रयोगः स्यादेवेति न जिज्ञासाबोधकव्यापारो पृच्छत्यर्थो युक्त इत्यर्थः । एवं यदि ज्ञानानुकूलशब्दप्रयोगो ब्रूधात्वर्थस्तदा यत्र गुरुश्चैत्रस्य ज्ञानं जायेतेतीच्छया ब्रूतेऽथ च तत्रस्थमैत्रस्यापि गुरुवाक्येन ज्ञानं जातं तत्र मैत्रसमवेतज्ञानजनकशब्दप्रयोगरूपव्यापारस्यापि जातत्वात् 'चैत्रं ब्रूते' इतिवत् 'मैत्रं ब्रूते' इत्यपि प्रयोगः स्यादेव न चैतदिष्टमिति न ज्ञानानुकूलशब्दप्रयोगो ब्रूधात्वर्थो युक्त इत्यर्थः । उक्तमतेन कर्माख्यातस्थले दोषमाह-साक्षादिति, तत्र='पृच्छ्यते गुरुर्धर्मम्' इत्यत्र बोधे गुरुवृत्तित्वमस्ति स च बोधः साक्षाद्धात्वर्थविशेषणं चास्ति साक्षाद्धात्वर्थविशेषणाश्रयस्य च प्रधानकर्मत्वमेव भवतीति साक्षाद्धात्वर्थविशेषणीभूतज्ञान ( बोध ) रूपफलाश्रयतया गुरोः प्रधानकर्मत्वं प्राप्तं तत्र "अप्रधाने दुहादीनाम्"=दुहादीनामप्रधानकर्मणि लादयो भवन्तीत्यनुशासनविरोधेन लादिना गुरोः तत्कर्मत्वाभिधानानुपपत्तेः=प्रधानकर्मत्वाभिधानं नोपपद्यते, 'शिष्य उच्यते धर्मम्' इत्यादौ च शिष्यस्य साक्षाद्धात्वर्थविशेषणीभूतज्ञानरूपफलाश्रयतया प्रधानकर्मत्वमुक्तरीत्या प्राप्तं तत्रापि "अप्रधाने दुहादीनाम्" इत्यनुशासनविरोधेन लादिना प्रधानकर्मत्वाभिधानं नोपपद्यते इति नोक्तपृच्छत्यादिधात्वर्थनिरूपणं युक्तमित्यर्थः ।

स्वमतेन पृच्छत्यर्थमाह-परं त्वित्यादिना, तुपदं पूर्वपक्षव्यावर्तकमिति "परं तु" इत्यस्योक्तेन "तत्र शोभनम्" इत्यनेनान्वयः । जिज्ञासेति-जिज्ञासाविषयकज्ञानोद्देश्यका या प्रवृत्तिस्तादृशप्रवृत्त्यधीनशब्दः प्रश्नादिरूपः पृच्छत्यर्थः । तथा च यं प्रति प्रवृत्तिर्भविष्यति तस्यैव चैत्रादिनामकगुरोरप्रधानकर्मत्वं भविष्यति न तु तत्रस्थमैत्रादेरपीति मदीयजिज्ञासायाश्चैत्रस्य ज्ञानं जायतामितीच्छया प्रश्ने कृते दैववशात् तत्रस्थमैत्रस्य पृच्छकजिज्ञासाज्ञाने जातेपि न 'मैत्रं पृच्छति' इति प्रयोगापत्तिः-मैत्रं प्रति जिज्ञासाज्ञानोद्देश्यकप्रवृत्तेरभावात् । 'गुरुं धर्मं पृच्छति' इत्यत्र

न्धिनी, ज्ञानस्य परम्पर शब्दरूपधात्वर्थविशेषणत्वात् तदाश्रयीभूतगुरोर्गौण-कर्मता, धर्मस्य च धात्वर्थविषयतया प्रधानकर्मता । ब्रूञश्च ज्ञानोद्देश्यकप्रवृत्त्यधीनशब्दोर्थः, ज्ञाने शिष्यवृत्तित्वस्य शब्दे च धर्मविषयकत्वस्यान्वयः ।

'अजां ग्रामं नयति' इत्यादौ 'ग्रामं भारं वहति' इत्यादौ चोत्तरदेशसंयोगावच्छिन्नक्रियानुकूलव्यापाररूपं प्रापणं धातोरर्थः, तत्रोत्तरदेशसंयोगे ग्रामस्य गौणकर्मणः, क्रियारूपे च फलेऽजादिप्रधानकर्मणोऽन्वयः, तथा च ग्रामवृत्तिसंयोगजनकाऽजादिवृत्तिक्रियानुकूलव्यापारानुकूलकृतिमानित्यन्वयबोधः ।

'अजा ग्रामं नीयते' 'उह्यते भारो ग्रामं चैत्रेण' इत्यादावुत्तरदेशसंयोगावच्छिन्नक्रियारूपं फलं कमाख्यातार्थः, तत्र च धात्वर्थस्य तादृशव्यापारस्य

---

जिज्ञासाविषयीभूतज्ञानं गुराविष्टमिति गुरुपदोत्तरद्वितीयार्थस्य वृत्तित्वस्य ज्ञानेऽन्वयः । शब्दस्यैव धात्वर्थत्वात् धर्मपदोत्तरद्वितीयार्थस्य विषयितायाः=धर्मविषयकत्वस्य धात्वर्थीभूतशब्देऽन्वयः । ज्ञानादिवच्छब्दस्य सविषयकपदार्थत्वाभावाद् धर्मे या शब्दविषयता सा शब्दानुकूलव्यापारमूलिका क्रिया कृतिरूपव्यापारस्य सविषयकपदार्थत्वात् शब्दोच्चारणानुकूलकृतेः शब्दद्वाराधर्मविषयकत्वसंभवादित्याह–शब्दस्येति । अत्र गुरौ जायमानस्य जिज्ञासाज्ञानस्य शब्दरूपधात्वर्थविशेषणीभूतप्रवृत्तिविशेषणीभूतोद्देश्यकत्वे विशेषणत्वमस्ति न तु साक्षाद्धात्वर्थीभूतशब्दे इति तादृशज्ञानाश्रयीभूतगुरोरप्रधानकर्मतेत्याह–ज्ञानस्येति । धात्वर्थीभूतशब्दस्य धर्मविषयकत्वेन धर्मस्य साक्षाच्छब्दविषयत्वाद् द्वितीयार्थद्वारा धर्मस्य साक्षाद्धात्वर्थे शब्दे एवान्वयाद्धर्मस्य प्रधानकर्मतेत्याह–धर्मस्येति । धात्वर्थमाह–ब्रूञश्चेति । 'शिष्यं धर्मं ब्रूते' इत्यत्रापि ज्ञानोद्देश्यकप्रवृत्तेर्धात्वर्थे प्रवेशाद् यं शिष्यं प्रति गुरुर्वक्ति तस्यैवाप्रधानकर्मत्वं स्यान्न तु तत्रस्थान्यस्यापीति चैत्रं प्रति उपदेशे 'मैत्रं ब्रूते' इति प्रयोगापत्तिर्नास्तीत्यर्थः । अत्र ज्ञानं शिष्ये इष्टमिति शिष्यपदोत्तरद्वितीयार्थवृत्तित्वस्य ज्ञानेऽन्वयः । अस्मिंश्च पक्षे 'पृच्छयते गुरुर्धर्मम्' 'शिष्य उच्यते धर्मम्' इत्यादिकर्माख्यातस्थले गुरुशिष्यादिवृत्तित्वेन विवक्षितोक्तज्ञानस्य साक्षाद्धाधात्वर्थविशेषणत्वाभावात् तादृशज्ञानरूपफलाश्रयस्य गुरुशिष्यादेरप्रधानकर्मत्वात् तद्वृत्त्यऽप्रधानकर्मत्वस्य लादिनाऽभिधानानुपपत्तिः पूर्वत्र प्रदर्शिता नास्तीति न काचिदनुपपत्तिः–साक्षाद् धात्वर्थविशेषणीभूतफलाश्रयस्यैव प्रधानकर्मत्वादिति भावः ।

नीवहधात्वोरर्थमाह–अजामित्यादिना । अत्रोत्तरदेशसंयोगानुकूलक्रियायाः साक्षाद् धात्वर्थतावच्छेदकत्वं फलत्वं च व्यापारापेक्षयाऽस्तीति तदाश्रयीभूताऽजादेः प्रधानकर्मत्वम् । ग्रामस्य संयोगरूपे अजादेश्च क्रियारूपे फले आधेयत्वसंबन्धेनान्वयः । वाक्यार्थस्वरूपमाह–तथा चेति । अजादिवृत्तिक्रिया ग्रामप्राप्त्यनुकूला क्रिया, व्यापारश्च प्रापणरूपो व्यापारः । अन्यत्सर्वम् ।

कर्माख्यातान्तं नीधातुं वहधातुं चोदाहरति– अजेत्यादिना । अत्र चाजाभारादिवृत्तिः

जन्यतासंवन्धेन. तस्य चाश्रयतासंवन्धेनाऽजाभारादिरूपप्रधानकर्मण्यऽन्वयः, ग्रामादिवृत्तित्वान्वयस्तु संयोगे एव, एवं च चैत्रकृतिजन्यो यः संयोगावच्छिन्न-क्रियानुकूलव्यापारस्तज्जन्यग्रामवृत्तिसंयोगानुकूलकर्मवानऽजादिरित्यन्वयबोधः ।

न च कारकविभक्त्यर्थस्य धात्वर्थे एवान्वयनियमात् प्रत्ययोपस्थाप्यसंयोगे कथं ग्रामादिवृत्तित्वान्वय इति वाच्यम्, 'भूतले घटः' इत्यादौ घटादिपदार्थे-ष्यऽधिकरणसप्तम्यर्थान्वयात् तादृशनियमाऽसिद्धेः । अस्तु वा धात्वर्थतावच्छेद-कतावच्छेदकतया भासमाने संयोगे एव तदन्वयः ।

फलव्यापारयोः पृथक् शक्तिमते चाश्रयत्वमेवात्मनेपदार्थः, संयोगावच्छिन्न-

प्राप्त्यनुकूला क्रियैव फलम् । तत्र=उक्तक्रियारूपफले धात्वर्थस्य तादृशव्यापारस्य=उक्तक्रियारू-पफलजनकस्य प्रापणरूपव्यापारस्य जन्यतासंवन्धेनान्वयः–क्रियारूपफलस्य धात्वर्थीभूतव्यापा-जन्यत्वात् । तस्य=क्रियारूपफलस्य चाश्रयतासंवन्धेन प्रधानकर्मभूताजादावन्वयः । ग्रामपदो-त्तरद्वितीयार्थस्य ग्रामवृत्तित्वस्य संयोगे एवान्वय इति धात्वर्थतावच्छेदकतावच्छेदकीभूतसंयोगरू-पफलाश्रयत्वाद् ग्रामस्य गौणकर्मत्वम्, संयोगस्याऽजादावप्यन्वयविवक्षायामऽजादेरपि गौणक-र्मत्वं स्यान्न तु प्रधानकर्मत्वमित्यर्थः । वाक्यार्थस्वरूपमाह– एवं चेति । संयोगावच्छिन्नक्रियानु-कूलव्यापारश्चैत्रवृत्तिप्रापणव्यापारः । कर्म=क्रिया । स्पष्टमन्यत् ।

ननु ग्रामपदोत्तरद्वितीया कारकविभक्तिरस्ति कारकविभक्त्यर्थस्य च धात्वर्थे एवान्वयो भव-तीत्यत्र कथं कर्माख्यातप्रत्ययोपस्थाप्ये संयोगे ग्रामपदोत्तरद्वितीयार्थस्य ग्रामवृत्तित्वस्यान्वयः कृत इत्याशङ्कते– न चेति । उत्तरदेशसंयोगावच्छिन्नक्रियारूपं फलं कर्माख्यातार्थ इत्यु-तत्रोत्तरदेशसंयोगावच्छिन्नक्रियायाः कर्माख्यातप्रत्ययार्थत्वे तदेकदेशस्य संयोगस्यापि कर्माख्या-तप्रत्ययार्थत्वं ज्ञेयम् । 'वाणेन हतः' इत्यादौ तृतीयार्थकरणत्वादेर्धात्वर्थे व्यापारे एवान्वयो भवतीति दृष्टान्तः । परिहारमाह– भूतले इति, 'भूतले घटः' इत्यत्र भूतलपदोत्तराधिकरणस-प्तम्यपि कारकविभक्तिरेव अथापि तादृशसप्तम्या अर्थस्य वृत्तित्वस्य घटे एवान्वयो भवतीति कारक-विभक्त्यर्थस्य धात्वर्थे एवान्वयो भवतीति नियमो नास्तीति 'अजा ग्रामं नीयते' इत्यत्र ग्रामपदोत्तरद्वितीयार्थवृत्तित्वस्य प्रत्ययोपस्थाप्यसंयोगेऽन्वये न काचिदनुपपत्तिरित्यर्थः । कारक-विभक्त्यर्थस्य धात्वर्थे एवान्वयनियममभ्युपगम्याह– अस्तु वेति, 'अजा ग्रामं नीयते' इत्यत्रो-क्तवाक्यार्थानुसारेण संयोगस्य धात्वर्थतावच्छेदकतावच्छेदकतया धात्वर्थत्वमस्त्येवेति तादृशसं-योगे एव ग्रामपदोत्तरद्वितीयार्थस्य ग्रामवृत्तित्वस्यान्वयो ज्ञेय इत्यर्थः । कारकत्वं हि क्रियानिरू-पितमेव भवतीति कारकविभक्त्यर्थस्य कारकस्य धात्वर्थव्यापारे एवान्वयो युक्त इति भावः । एवकारो भिन्नक्रम इति 'धात्वर्थतावच्छेदकतावच्छेदकतयैव' इत्यन्वयः ।

'अजा ग्रामं नीयते' इत्यत्र मतान्तरमाह– फलेति, फले व्यापारे चोक्ते यदा धातोः पृथक् पृथगेव खण्डशः शक्तिस्तदाऽऽश्रयत्वमेवाख्यातार्थो न तु फलं फलस्य धातुनैवोपस्थि-

क्रियारूपधात्वर्थ एव व्यापाररूपधात्वर्थविशेष्यतया आश्रयत्वविशेषणतया चान्वेति, तदेकदेशे संयोगे एव ग्रामादिवृत्तित्वान्वयः, चैत्रीयकृतिजन्यव्यापारजन्यग्रामवृत्तिसंयोगानुकूलक्रियाश्रयोऽजादिरित्याकारको बोधः ।

ज्ञानानुकूलशब्दश्च 'द्रव्यं निरूपयति' इत्यादौ धातोरर्थः, तादृशविशिष्टैकार्थस्यैकदेशे ज्ञानांशे आधेयत्वान्वयबोधने न द्वितीयायाः साकाङ्क्षता स्वीक्रियते अपि तु विषयतयाऽन्वयबोधे एवेति 'शिष्यं द्रव्यं निरूपयति' इत्यादिर्न प्रयोगः ।

यत्तु धात्वर्थो ज्ञानमेव तदनुकूलव्यापारश्च णिजर्थ इति, तदसत्– धातोश्चुराद्यन्तर्गततया स्वार्थे एव णिचो विधानात्, अन्यथा 'निरूपयति' इत्यस्य

संभवादित्यर्थः । अत्र च मते पूर्वोक्तं संयोगावच्छिन्नक्रियारूपं फलमजादिवृत्ति धात्वर्थ एव– तादृशफलेऽपि धातोरेव शक्तिस्वीकारात् स च संयोगावच्छिन्नक्रियारूपं फलं धात्वर्थो व्यापाररूपधात्वर्थे विशेष्यतयान्वेति–व्यापाररूपधात्वर्थस्य विशेषणत्वात् तत्रैतादृशफलीभूतक्रियारूपधात्वर्थस्य विशेष्यत्वात्, आख्यातार्थश्चाश्रयत्वं तत्र धात्वर्थीभूतसंयोगावच्छिन्नक्रियारूपफलं विशेषणमस्तीति स फलीभूतः संयोगावच्छिन्नक्रियारूपधात्वर्थ आश्रयत्वे विशेषणतयाऽन्वेतीत्यर्थः । वक्ष्यमाणशाब्दबोधेन पूर्वपूर्वपदार्थस्य व्यापारादेर्विशेषणत्वमवधार्यम् । "व्यापाररूपधात्वर्थविशेष्यतया" "आश्रयत्वविशेषणतया" इति सप्तमीसमासौ । तदेकदेशे=संयोगावच्छिन्नक्रियारूपधात्वर्थैकदेशे संयोगे ग्रामपदोत्तरद्वितीयार्थस्य ग्रामवृत्तित्वस्यान्वयः । अत्रत्यवाक्यार्थस्वरूपमाह– चैत्रीयेति । चैत्रीयकृतिजन्यव्यापारः प्रापणरूपव्यापारः, ग्रामवृत्तिसंयोगानुकूलक्रिया ह्यजादिवृत्तिः क्रिया ।

निपूर्वकरूपधात्वर्थमाह– ज्ञानेति, येन शब्देन शिष्यस्य द्रव्यादिविषयकं ज्ञानं स्यात् तादृशशब्दो धात्वर्थः । अत्र तादृशविशिष्टैकार्थः=ज्ञानानुकूल ( ज्ञानोत्पादक ) शब्दस्तस्यैकदेशो ज्ञानं तत्र द्वितीयाया यः खल्वाधेयत्वमर्थस्तस्यान्वयो न भवति– अर्थादत्राधेयत्वं द्वितीयार्थो नास्ति. अन्यथा ज्ञानं शिष्ये एवोत्पद्यते इति ज्ञानस्य शिष्यवृत्तित्वात् शिष्यपदोत्तरद्वितीयार्थस्य शिष्यवृत्तित्वस्य ( शिष्याधेयत्वस्य ) ज्ञानेऽन्वयसंभवात् शिष्यपदोत्तरमपि द्वितीयापत्त्या 'शिष्यं द्रव्यं निरूपयति' इत्यपि प्रयोगः स्याद् न चैतदिष्टं तस्मादत्र न द्वितीयाया आधेयत्वान्वये साकाङ्क्षत्वम् ( नात्र द्वितीयाया आधेयत्वमर्थः ) अपि तु विषयतयान्वयबोधे एवात्र द्वितीयायाः साकाङ्क्षत्वम् ( अत्र विषयत्वमेव द्वितीयार्थः ) तथा च ज्ञानविषयत्वं तु द्रव्ये एवास्ति न तु शिष्ये इति द्रव्यपदादेव द्वितीया प्राप्ता न शिष्यपदादपीति न 'शिष्यं द्रव्यं निरूपयति' इति प्रयोगापत्तिरित्यर्थः । द्रव्यविषयकज्ञानजनकवाक्यप्रयोगं करोतीतिशाब्दबोधः ।

ननु 'निरूपयति' इत्यत्र ज्ञानमात्रं धात्वर्थो ज्ञानानुकूलव्यापारस्तु णिजर्थ इति नोक्तविशिष्टं धात्वर्थ इत्याशङ्कते– यत्त्विति । परिहरति– तदसदिति, णिचः स्वार्थे एवात्रजातत्वान्न पृथग् व्यापारार्थत्वं संभवतीत्यर्थः । विपक्षे बाधकमाह– अन्यथेति, यदि निपूर्वकरूपधात्वर्थो

'ज्ञापयति' इत्यादिसमशीलतया 'शिष्यं ज्ञापयति' इत्यादिवत् 'शिष्यं निरूपयति' इतिप्रयोगस्य दुर्वारत्वात् ।

'अजां ग्रामं यापयति' 'शिष्यं शास्त्रं ज्ञापयति' 'ब्राह्मणमन्नं भोजयति' 'यजमानं मन्त्रं पाठयति' 'घटं जनयति नाशयति' इत्यादौ णिच्प्रत्ययप्रकृतिभूतधात्वर्थकर्तृवाचकाऽजादिपदोत्तरद्वितीयाया मुख्यभाक्तसाधारणं कर्तृत्वमेवार्थः-"गतिबुद्धि" इत्यादिसूत्रेण कर्तुः कर्मसंज्ञाविधानात् । गतिज्ञानोत्पत्त्यादिनिरूपितं कर्तृत्वं चाश्रयत्वमेव, गलाधःसंयोगानुकूलक्रियानुकूलव्यापाररूपभोजन-कण्ठताल्वाद्यभिघातरूपपाठ-निरूपितं च तदनुकूलकृतिमत्त्वम्, नाशनिरूपितं च प्रतियोगित्वम्, तस्य च निरूपकतासंबन्धेन धात्वर्थेऽन्वयः।

---

ज्ञानमात्रं स्यात्तदा 'शिष्यं ज्ञापयति' इतिवत् 'शिष्यं निरूपयति' इत्यपि प्रयोगः स्याद् चैतदिष्टमिति न ज्ञानमात्रं निपूर्वकरूपधात्वर्थः किं तु ज्ञानानुकूलशब्द एव, ज्ञानानुकूलशब्दाश्रयत्वं च द्रव्यादावेव न शिष्यादाविति न 'शिष्यं निरूपयति' इतिप्रयोगापत्तिरित्यर्थः समशीलतया=तुल्यतया, अत्र च तुल्यतापत्त्येत्यर्थः ।

अजामिति-"गतिबुद्धि०" इत्यादिसूत्रेण गमनादिकर्तुरेव ण्यन्तावस्थायां कर्मसंज्ञाविधानादत्र णिच्प्रत्ययस्य प्रकृतिभूतो यो यादिधातुस्तदर्थो यो गमनादिव्यापारस्तत्कर्तृवाचकं यदऽजादिपदं तादृशाजादिपदोत्तरद्वितीयाया मुख्यगौणसाधारणं कर्तृत्वमेवार्थः-अजादीनामत्र गमनादिक्रियानिरूपितकर्तृत्वस्यैव सत्त्वात् । 'अजां ग्रामं नयति' इत्यादौ तु धातोर्द्विकर्मकत्वादजादीनां कर्मत्वमेवेति विवेकः । तत्र धात्वर्थानुकूलकृतिमत्त्वं मुख्यं कर्तृत्वम्, धात्वर्थाश्रयत्वं गौणं कर्तृत्वमिति विवेकः । स्वयमुदाहरति- गतीत्यादिना, 'अजां ग्रामं यापयति' इत्यत्राजाया गत्यनुकूलकृतिमत्त्वमेव मुख्यं कर्तृत्वम्, 'शिष्यं शास्त्रं ज्ञापयति' इत्यत्र शिष्ये ज्ञानाश्रयत्वमेव ज्ञानकर्तृत्वम्-शिष्यो जानाति तं शिष्यं गुरुः ज्ञापयति इतिबोधात्, 'ब्राह्मणमन्नं भोजयति' इत्यत्र गलाधःसंयोगानुकूला या ग्रासनिष्ठा क्रिया तादृशक्रियानुकूलव्यापाररूपं यद् भोजनं तादृशभोजनानुकूलकृतिमत्त्वमेव ब्राह्मणे भोजनकर्तृत्वम्, एतदपि कर्तृत्वं मुख्यम्, 'यजमानं मन्त्रं पाठयति' इत्यत्र कण्ठताल्वाद्यभिघातजन्यो यः पाठस्तादृशपाठानुकूलकृतिमत्त्वमेव यजमानस्य कर्तृत्वम्, 'घटं जनयति' इत्यत्रोत्पत्त्याश्रयत्वमेव घटस्य कर्तृत्वम्, 'घटं नाशयति' इत्यत्र नाशनिरूपितप्रतियोगित्वमेव घटस्य नाशक्रियाकर्तृत्वम्, घटो नश्यति तं नश्यन्तं नाशयतीति बोधोदयादित्यन्वयः । कर्तृत्वं हि धात्वर्थीभूतव्यापारनिरूपितमेव भवतीति धात्वर्थे यत्कर्तृत्वनिरूपकत्वं तादृशसंबन्धेनोक्तकर्तृत्वानां धात्वर्थेऽन्वय इत्याह-तस्येति । तस्य=उक्तरूपकर्तृत्वस्य ।

नवीनमतमाह- नव्येति, 'शिष्यं शास्त्रं ज्ञापयति' इत्यत्र ज्ञानाश्रयत्वमेव शिष्यस्य कर्तृत्वमस्तीति शिष्यपदोत्तरद्वितीयार्थ आधेयत्वम्-ज्ञानस्य शिष्यवृत्तित्वात्, 'ब्राह्मणमन्नं भोज-

नव्यमते च यत्राश्रयत्वं कर्तृत्वं तत्राधेयत्वं द्वितीयार्थः, यत्रानुकूलकृतिमत्त्वं तत्र कृतिजन्यत्वम्, यत्र प्रतियोगित्वम् तत्रानुयोगित्वम्, तेषां चाश्रयतासंबन्धेनैव धात्वर्थेऽन्वयः । गत्यर्थादिभ्योऽन्यत्र णिच्प्रत्ययप्रकृतिधात्वर्थकर्तृवाचकपदान्न द्वितीया–तादृशकर्तुः कर्मातिदेशाऽविषयत्वात्, तेन 'पाचयत्योदनं सहायेन' इत्यादय एव प्रयोगाः न तु 'पाचयत्योदनं सहायम्' इत्यादयः ।

केचित्तु–पाकादिकर्त्तुः पाकादिकर्मत्वविरहेऽपि ण्यन्तसमुदायस्यापि धातुत्वेन तत्कर्मतया सहायादेः 'पाचयत्योदनं सहायम्' इत्यादयः प्रयोगा अपि साधवः, अत एव "अजिग्रहत्तं जनको धनुस्तत्" इत्यादयो भट्टिप्रयोगाः । "गतिबु-

---

यति' इत्यत्रोक्तभोजनानुकूलकृतिमत्त्वमेव ब्राह्मणस्य कर्तृत्वमस्तीति ब्राह्मणपदोत्तरद्वितीयार्थः कृतिजन्यत्वमेव– भोजनव्यापारस्य ब्राह्मणकृतिजन्यत्वात्, 'घटं नाशयति' इत्यत्र नाशप्रतियोगित्वमेव घटस्य नाशकर्तृत्वमस्तीति घटपदोत्तरद्वितीयाया अनुयोगित्वमर्थस्तस्य च स्वरूपसंबन्धरूपाश्रयतासंबन्धेन धात्वर्थे नाशेऽन्वयः– नाशस्यैवात्र घटनिष्ठप्रतियोगित्वनिरूपकत्वादित्यऽनुयोगितासंबन्धेन घटविशिष्टो यो नाशस्तादृशनाशानुकूलव्यापारवानितिशाब्दबोध इत्यन्वयः । तेषाम्=आधेयत्वादिद्वितीयार्थानाम् । उक्तस्थलेषु ज्ञापयतीत्यत्र शिष्यनिरूपिता द्वितीयार्थभूताधेयताऽऽश्रयतासंबन्धेन धात्वर्थे ज्ञानेस्ति, भोजयतीत्यत्र द्वितीयार्थभूतं कृतिजन्यत्वमाश्रयतासंबन्धेन भोजनव्यापारे धात्वर्थे विज्ञेयम्, नाशयतीत्यत्रानुयोगिता धात्वर्थे नाशे विज्ञेया । गत्यर्थादिधातूनामेव ण्यन्तावस्थायां गत्यादिकर्तृवाचकाजादिपदेभ्यो द्वितीया भवति नान्यत्रेत्याह–गत्यर्थेति । तादृशकर्तुः=ण्यन्तगत्यर्थादिधातुभिन्नपचादिधात्वर्थकर्तुः कर्मत्वविधायकानुशासनाभावाद् न तादृशकर्तृवाचकपदाद् द्वितीयापत्तिरिति न 'पाचयत्यन्नं सहायम्' इत्यादयः प्रयोगाः– सहायादिपदादत्र द्वितीयाविधायकसूत्राभावात् किं तु 'पाचयत्यन्नं साहायेन' इत्येवमेव प्रयोग इत्यर्थः ।

मतान्तरमाह– केचित्त्विति, 'पाचयत्योदनं सहायम्' इत्यादौ पाककर्तुः सहायस्य पाकादिनिरूपितकर्मत्वाभावेपि ण्यन्तसमुदायस्यापि 'पाचयति' इत्यादेर्धातुत्वेन ण्यन्तधात्वर्थनिरूपितं तु सहायादेरपि कर्मत्वमस्त्येवेति तादृशकर्मत्वमाश्रित्य द्वितीयापत्त्या 'पाचयत्योदनं सहायम्' इत्यादयोपि प्रयोगाः साधव एवेत्यर्थः । अत्र प्रमाणमाह–अत एवेति, अत एव=अण्यन्तावास्थायाः सहायादेः कर्तुर्ण्यन्तावस्थायां कर्मत्वस्य सर्वत्र साधुत्वादेव "अजिग्रहत्तं जनको धनुस्तत्" इत्यत्र भट्टिकारेणाऽण्यन्तावस्थायाः कर्तुस्तत्पदवाच्यस्य ण्यन्तावस्थायां कर्मत्वमाश्रित्य "तम्" इति द्वितीयान्तप्रयोगः कृतः, अन्यथा 'तेन' इति प्रयुक्तं स्यादित्यर्थः । ननु यदि सर्वत्रैवाऽण्यन्तावस्थायाः कर्तुर्ण्यन्तावस्थायां कर्मत्वं स्यात्तदा "गतिबुद्धि" इत्यादिसूत्रस्य किं फलमित्याशङ्क्याह– गतिबुद्धीति, "गतिबुद्धि" इतिसूत्रम् 'गत्यर्थादिधातुयोगेऽण्यन्ता-

द्धि० " इत्यादिसूत्रं च नियमपरतया गत्यर्थधातुयोगे कर्तृप्रत्ययाऽसाधुत्वज्ञापकम्, तेन 'पाचयत्योदनं सहायेन' इत्यादिवत् 'अजया ग्रामं गमयति' इत्यादयो न प्रयोगा इत्याहुः ।

एषामयमाशयः-" हेतुमति च " इत्यनुशासनाद् णिजर्थो हेतुकर्तृत्वं तच्च स्वतन्त्रकर्तृप्रेरणा अन्यनिष्ठकर्तृत्वनिर्वाहकव्यापाररूपा, कर्तृत्वं क्वचित् प्रयत्नः क्वचिदाश्रयत्वादिकम् । यादृशधातूत्तराख्यातेन यादृशं कर्तृत्वं बोध्यते तदुत्तरणिच्प्रत्ययेन तादृशकर्तृत्वनिर्वाहकव्यापारो बोध्यते, अत एव 'पाचयति' इत्यादौ पाकादिकृतिनिर्वाहकः, 'ज्ञापयति' इत्यादौ ज्ञानाश्रयत्वनिर्वाहकः, 'नाशयति' इत्यादौ नाशप्रतियोगित्वनिर्वाहको व्यापारः प्रतीयते । निर्वाहकत्वं च स्वरूप-

वस्थायाः कर्तुर्ण्यन्तावस्थायां कर्मत्वमेव भवति तेन च तद्वाचकपदात् तृतीयादिः कर्तृप्रत्ययो न भवति कर्मप्रत्ययो द्वितीयैव भवति' इति नियमपरमस्ति तस्मात् 'अजया ग्रामं गमयति' इति प्रयोगो नैव भवति किं तु 'अजां ग्रामं नयति' इत्येव प्रयोगो भवति, गत्यर्थादिधातुभिन्नधातुयोगे त्वऽण्यन्तावस्थायाः कर्तुर्ण्यन्तावस्थायां कर्तृत्वमपि भवति कर्मत्वमपि भवति तेन 'पाचयत्योदनं सहायम्' इत्यपि प्रयोगो भवति 'पाचयत्योदनं सहायेन' इत्यपि प्रयोगो भवतीत्यर्थः ।

उक्तमतावलम्बिनामभिप्रायं वर्णयति-एषामित्यादिना, " हेतुमति च " इतिसूत्रेण णिजर्थो हेतुकर्तृत्वम्=प्रयोजककर्तृत्वमिति प्रतिपाद्यते तच्च हेतुकर्तृत्वमन्यनिष्ठ=प्रयोज्यवृद्धनिष्ठकर्तृत्वनिर्वाहिका व्यापाररूपा स्वतन्त्रकर्तुः=प्रयोजकवृद्धस्य या प्रेरणा तद्रूपमेव, कर्तृत्वं च क्वचित् प्रयत्नः=कृतिरेव यथा 'भोजयति' इत्यादौ भोजनानुकूलकृतिमत्त्वमेव कर्तृत्वम्, क्वचिच्च कर्तृत्वं धात्वर्थाश्रयत्वमेव यथा 'ज्ञापयति' इत्यादौ ज्ञानाश्रयत्वमेव कर्तृत्वम्, आदिपदात् प्रतियोगित्वमपि कर्तृत्वं यथा नाशयतीत्यत्र, तथा च प्रयोज्यवृद्धनिष्ठकर्तृत्वनिर्वाहको यः प्रयोजकवृद्धनिष्ठव्यापारः स एव हेतुकर्तृत्वं तदेव च णिजर्थ इति, यादृशधातूत्तराख्यातेन यादृशं कर्तृत्वं बोध्यते तदुत्तरणिच्प्रत्ययेन तादृशकर्तृत्वनिर्वाहकव्यापारो बोध्यते यथा 'भोजयति' इत्यत्र भुजधातूत्तराख्यातेन भोजनानुकूलकृतिमत्त्वरूपं कर्तृत्वं बोध्यते इति तदुत्तर=तादृशधातूत्तरणिच्प्रत्ययेनापि भोजनानुकूलकृतिमत्त्वरूपकर्तृत्वस्यैव निर्वाहको व्यापारो बोध्यते 'ज्ञापयति' इत्यत्र च ज्ञाधातूत्तराख्यातेन ज्ञानाश्रयत्वरूपमेव कर्तृत्वं बोध्यते इति तदुत्तरणिच्प्रत्ययेनापि ज्ञानाश्रयत्वरूपकर्तृत्वस्यैव निर्वाहको व्यापारो बोध्यते एवमेव युक्तत्वादित्याह- यादृशेति । उक्तं स्वयमेवोदाहरति- अत एवेति, अत एव=उक्तयादृशेत्यादिनियमादेव । व्यापारः=णिजर्थव्यापारः । 'नाशयति' इत्यत्र नाशप्रतियोगित्वमेव नाशकर्तृत्वमिति पूर्वमेव (२५४पृ०) उक्तम् । "तादृशकर्तृत्वनिर्वाहकव्यापारः" इत्यनेन यत् प्रयोजकवृद्धव्यापारस्य प्रयोज्यवृद्धनिष्ठकर्तृत्वनिर्वाहकत्वमुक्तं तत्र निर्वाहकत्वस्वरूपमाह- निर्वाहकत्वं चेति

संबन्धविशेषो न तु जनकत्वम्. अतो न 'नाशयति' इत्यादावन्वयानुपपत्तिः एवं च ण्यन्तधातुप्रतिपाद्यतावच्छेदकं फलं कर्तृत्वमेव— निर्वाह्यस्यैव फलत्वात्, तदाश्रयतयाऽस्वतन्त्रस्य कर्तुः कर्मता. तादृशफलविशेषणतयाऽस्वतन्त्रकर्तृवृत्तित्व-विवक्षायाम् 'पाचयत्योदनं सहायम्' इत्यादयः प्रयोगाः । यदा तु पाकादिविशे-षणतया सहायादिकर्तृत्वं विवक्षितं तदा 'पाचयत्योदनं सहायेन' इत्यादयः ।

अथ यत्र चैत्रमैत्रोभयकर्तृक एक एव पाकस्तत्र चैत्रमात्रं प्रयोजयति यज्ञदत्ते 'मैत्रेणान्नं पाचयति' इतिप्रयोगापत्तिरिति तत्रापि ण्यर्थकृतावेव तृतीयान्ता-

---

तच्च निर्वाहकत्वं स्वरूपसंबन्धविशेष एव न तु कर्तृत्वजनकत्वं निर्वाहकत्वमित्यर्थः । अस्य फल-माह— अत इति, यदि जनकत्वमेव निर्वाहकत्वं स्यात्तदा 'नाशयति' इत्यत्र नाशप्रतियोगि-त्वमेव कर्तृत्वमस्ति न च नाशप्रतियोगित्वं णिजन्तकर्तृव्यापारजन्यमस्ति तस्य घटे स्वतः सत्त्-त्वादेवेत्यत्र णिजन्तकर्तृव्यापारस्य नाशप्रतियोगित्वरूपकर्तृत्वनिर्वाहकत्वं न स्यादिति निर्वाहकत्वं न जनकत्वं किं तु स्वरूपसंबन्धविशेष एव तस्य तु 'नाशयति' इत्यादावप्यनुपपत्तिर्नास्त्येवे-त्यर्थः । उपसंहरति— एवं चेति, यदेव निर्वाह्यं तदेव फलं भवति निर्वाह्यं चात्र ण्यन्तधात्वर्थता-वच्छेदकं प्रयोज्यवृद्धनिष्ठं कर्तृत्वमेवेति तदेवात्र फलमस्ति, फलाश्रयस्य च कर्मत्वं भवतीति तदाश्रयतया=फलभूतकर्तृत्वाश्रयतयाऽस्वतन्त्रस्य कर्तुः=प्रयोज्यवृद्धस्य कर्मत्वं प्राप्तं तथा च यदाऽस्वतन्त्रकर्तृवृत्तित्वं तादृश ( कर्तृत्वरूप ) फलविशेषणं भवति अर्थात् यदा सहायवृत्तिपाका-नुकूलकृत्यनुकूलव्यापारवानित्येवं कर्तृत्वरूपफलस्य प्रयोज्यवृद्धवृत्तित्वेन विवक्षा भवति तदा कर्तृत्वरूपफलाश्रयत्वेन द्वितीयापत्त्या 'पाचयत्योदनं सहायम्' इत्येवं प्रयोगो भवति, यदा च सहायकर्तृकपाकानुकूलकृत्यनुकूलव्यापारवानित्येवं सहायादिरूपप्रयोज्यवृद्धनिष्ठं कर्तृत्वं पाका-दिविशेषणं भवति तदा पाकादिव्यापारविशेषणीभूतस्य कर्तृत्वस्य फलत्वासंभवात् तदाश्रयीभूतवा-चकसहायपदात् तृतीयैव स्यान्न द्वितीयेति 'पाचयत्योदनं सहायेन' इति प्रयोगो भवती-त्यर्थः । "अस्वतन्त्रकर्तृवृत्तित्वविवक्षायाम्" इति षष्ठीतत्पुरुषः— अस्वतन्त्रकर्तृवृत्तित्वस्य तादृ-शफलविशेषणतया विवक्षायामित्यर्थः ।

ननु यदुक्तम् "यदा तु पाकादिविशेषणतया सहायादिकर्तृत्वं विवक्षितं तदा 'पाचयत्यो-दनं सहायेन' इत्यादयः" इति. तत्र यत्र चैत्रमैत्रोभयकर्तृक एक एव पाकस्तत्रोभयकर्तृकपाके उभयनिष्ठकर्तृत्वस्य विशेषणत्वं स्यादेव निरूपकतासंबन्धेन (पाकस्य कर्तृत्वनिरूपकत्वात्). तथा च तत्र चैत्रमात्रं प्रयोजयति यज्ञदत्ते 'मैत्रेणान्नं पाचयति' इत्यपि प्रयोगः स्यादेव— मैत्रनिष्ठ-कर्तृत्वस्यापि पाके विशेषणत्वाद् यन्निष्ठकर्तृत्वस्य पाके विशेषणत्वं तद्वाचकपदात्तृतीयायास्त्वया व्यवस्थापितत्वाद् न च चैत्रमात्रं प्रयोजयति यज्ञदत्ते 'मैत्रेणान्नं पाचयति' इति प्रयोग इष्ट इत्यभिप्रायेणाशङ्कते— अथेति । किं च "तादृशफलविशेषणतयाऽस्वतन्त्रकर्तृवृत्तित्वविवक्षायाम् 'पाचयत्योदनं सहायम्' इत्यादयः प्रयोगाः" इत्युक्तदिशा यथा 'मैत्रमन्नं पाचयति'

र्थमैत्रादिवृत्तित्वस्याऽन्वयो वाच्य एवं च 'मैत्रं पाचयति' इत्यादिवाक्यजन्य-बोधाऽवैलक्षण्याद् द्वितीयातृतीययोस्तात्पर्यभेदेन व्यवस्थाया न संगतिरिति चेत्, न, अगत्या तत्र पाकादिविशेषणकृतेः पारतन्त्र्येण व्यापारविशेषणीभूतणिज-र्थकृतावऽभेदान्वयमुपगम्योक्तातिप्रसङ्गस्य वारणीयत्वात्, पदार्थैकदेशे कृतौ

इत्यत्र फलभूतं यत् ण्यर्थकर्तृत्वं तस्य मैत्रवृत्तित्वेन तादृशकर्तृत्वे मैत्रवृत्तित्वस्यान्वयः प्राप्तस्तथैव तत्रापि='मैत्रेणान्नं पाचयति' इत्यत्रापि ण्यर्थकृतिः ( ण्यर्थकर्तृत्वम् ) मैत्रे वर्तते एवेति ण्य-र्थकृतौ तृतीयान्तपदार्थमैत्रवृत्तित्वस्यान्वयेनोभयोरप्युक्तवाक्ययोः समानबोधजनकत्वात् 'मैत्रमन्नं पाचयति' इतिवाक्यजन्यबोधापेक्षया 'मैत्रेणान्नं पाचयति' इतिवाक्यजन्यबोधस्य वैलक्षण्याभावाद् द्वितीयातृतीययोर्या तात्पर्यभेदेन=विवक्षाभेदेन व्यवस्थोक्ता तस्याः संगतिर्न संभवतीत्या-शयेनाह—तत्रापीति । ण्यर्थकृतावेवेति—अन्यनिष्ठकर्तृत्वनिर्वाहकव्यापारो णिजर्थ इत्युक्तं तत्र यज्ञदत्तादिनिष्ठण्यर्थ... निर्वाह्यं यदन्य ( मैत्रादि ) निष्ठं कर्तृत्वं तस्यापि ण्यर्थकोटिप्रविष्टत्वात् ण्यर्थत्वमेव कर्तृत्वं च कृतिरेव ण्यर्थभूतेऽन्यनिष्ठकर्तृत्वं चात्र मैत्रनिष्ठमेव मैत्रस्यात्र ण्यर्थव्यापारकर्तृयज्ञदत्तापेक्षयाऽन्यत्वादिति ण्यर्थकृतौ तृतीयान्तार्थमैत्रवृत्तित्वस्यान्वयो ज्ञेय इत्यर्थः । परिहरति— नेति, अगत्येति, पाकविशेषणीभूतकृतेः णिजर्थव्यापारविशेषणीभूतकृतावभेदान्वयस्वीकारेण उक्तातिप्रसङ्गस्य=यत्रोभयकर्तृक एक एव पाकस्तत्र चैत्रमात्रं प्रयोजयति सति यज्ञदत्ते 'मैत्रेणान्नं पाचयति' इतिप्रयोगापत्तिर्निवार्यते तथा हि— यत्रोभयकर्तृक एक एव पाकस्तत्र पाकविशेषणीभूता कृतिः ( कर्तृत्वम् ) तु यद्यप्युभयोरपि चैत्रमैत्रयोर्वर्तते तथापि प्रेरकेण यज्ञदत्तेन प्रेरणा तु चैत्रमात्रं प्रत्येव क्रियते न तु मैत्रं प्रत्यपि तथा च णिजर्थो योऽन्यनिष्ठकर्तृत्वनिर्वाहकप्रेरणारूपव्यापारस्तादृशव्यापारविशेषणीभूता या णिजर्थकृतिः सा तु चैत्रे एव वर्तते न मैत्रे तथा च चैत्रवृत्तिणिजर्थकृतावेव पाकविशेषणीभूतकृतेरऽभेदान्वयः संभवतीति 'चैत्रेणान्नं पाचयति' इत्येव प्रयोगो भवति, मैत्रे तु तादृशदशायां णिजर्थकृतिरेव नास्ति येन तस्यां पाकविशेषणीभूतकृतेरभेदान्वयः स्यादिति न चैत्रमात्रं प्रयोजयति यज्ञदत्ते 'मैत्रेणान्नं पाचयति' इति प्रयोगापत्तिरित्यर्थः । यन्निष्ठणिजर्थव्यापारविशेषणीभूतकृतौ पाकादिकृतेरभेदान्वयः स्यात्तद्वाचकचैत्रादिपदादेव तृतीया भवत्यऽन्यत्रद्वितीयेति यावत् । अत्र च कृतिः कर्तृत्वमेव पाकविशेषणीभूता कृतिर्हि पाकप्रयोजिकैव कृतिरस्ति तादृशकृतेरेव णिजर्थव्यापारो निर्वाहक इति णिजर्थव्यापारविशेषणीभूतकृतेः पाकादिविशेषणीभूतकृतेश्चाभेदो जात इत्यभेदान्वय उक्तः ननु "पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेन" इतिनियमात् णिजर्थव्यापारविशेषणीभूतोक्तणिजर्थकृतिः पदार्थैकदेश एवेति तत्र पाकविशेषणीभूतकृतेः कथमन्वयः स्यादित्याशङ्क्याह— पदार्थैकदेशेति, पारतन्त्र्येण=धर्मिभूतपाकद्वारा पाककृतेरपि पदार्थैकदेशभूतणिजर्थव्यापारविशेषणीभूतकृतावन्वये न कोपि दोषः— 'पाचयति' इत्यत्र पाकानुकूला या कृतिस्तादृशकृतिनिर्वाहकव्यापारवान् इति बोधोदयात् पाकानुकूला कृतिः पाके पाको णिजर्थकृतौ स

पाकादेरिव कृतेरप्यन्वयो व्युत्पत्तिवैचित्र्यात् । वस्तुतः कर्तृत्वं व्यापारश्च पृथगेव णिजर्थः, विशिष्टलाभोऽन्वयबलात् ।

केचित्तु— अनुकूलव्यापार एव णिजर्थः, तदन्वयिनी गमनज्ञानभोजनादिक्रियैव धात्वर्थतावच्छेदकं फलम्, तत्संबन्धिनस्तादृशक्रियाकर्तुर्ण्यन्तकर्मता, तादृशक्रियासंबन्धश्चाऽऽश्रयत्वकृतिमत्त्वाद्यन्यतमो ग्राह्यः. अतो गमनादिसंबन्धिकालादौ नातिप्रसङ्ग इत्याहुः । अत्र च तादृशकर्मतावाचकपदात् कदाचिद् द्वितीया कदाचिद् तृतीयेत्यत्र नियामकाभावः—तादृशपदोत्तरयोस्तयोस्तुल्यार्थकतया विवक्षाभेदरूपनियामकाभावादिति तु चिन्तनीयम् ।

---

च णिजर्थव्यापारे विशेषणमितिपरम्परा । धर्मिपारतन्त्र्येणापि पदार्थैकदेशेऽन्वयानङ्गीकारे पक्षान्तरमाह— वस्तुत इति, विशिष्टस्याऽन्यनिष्ठकर्तृत्वनिर्वाहकव्यापारस्य णिजर्थत्वं यदुक्तं तन्नास्ति किं तु कर्तृत्वं ( कृतिः ) व्यापारश्च पृथगेव णिजर्थ इति णिजर्थकृतेः पदार्थत्वमेव प्राप्तं न पदार्थैकदेशत्वं येन तत्र पाकविशेषणीभूतकृतेरभेदान्वये उक्ते कोपि दोषः स्यादित्यर्थः । शाब्दबोधे तादृशकर्तृत्वविशिष्टव्यापारस्य प्रतीतिस्त्वन्वयबलात्=आकाङ्क्षाबलादपि संभवत्येवेति न कर्तृत्वविशिष्टव्यापारस्य ( विशिष्टस्यान्यनिष्ठकर्तृत्वनिर्वाहकव्यापारस्य ) णिजर्थत्वं वक्तव्यमित्याह—विशिष्टेति । द्वितीयातृतीययोर्नियमस्त्विदानीं पूर्वोक्तया "तादृशफलविशेषणतया" इतिरीत्यैव ज्ञेयः ।

णिजर्थे मतान्तरमाह—केचित्त्विति, अनुकूलव्यापारः=' गमयति ' इत्यादौ गमनाद्यनुकूलव्यापारो णिजर्थस्तत्र गमनादिव्यापारस्तु धात्वर्थ एव पारिशेष्यादनुकूलव्यापार एव णिजर्थः, तदन्वयिनी=णिजर्थव्यापारान्वयिनी । धात्वर्थतावच्छेदकं च फलं भवति अत्र च णिजन्तधात्वर्थो गमनाद्यनुकूलव्यापार एवेति गमनादिक्रियाया धात्वर्थतावच्छेदकत्वम्=णिजन्तधात्वर्थविशेषणत्वं प्राप्तमिति ' गमयति ' इत्यादौ णिजन्तस्य गमनादिक्रियैव फलं तत्संबन्धिनः=तादृशक्रियारूपफलसंबन्धिनः ( समवायिनः ) तादृशक्रियाकर्तुः=गमनादिक्रियाकर्तुः ' अजां ग्रामं गमयति ' इत्यादावजादिपदार्थस्य ण्यन्तकर्मत्वं प्राप्तम्, तादृशक्रियासंबन्धः=फलीभूतगमनादिक्रियायाः संबन्धश्चाश्रयत्वादिरेव ग्राह्यः—अर्थात् अजादौकृतिमत्त्वसंबन्धेन फलीभूतगमनादिक्रियाया अन्वयो ज्ञेयः, अजादौ गमनाद्यनुकूलकृतिमत्त्वमस्त्येव, अन्यथा गमनादिरूपं फलं कालिकसंबन्धेन गवादावप्यस्त्येवेति गवादेरपि णिजन्तकर्मत्वं स्यात्, कृतिमत्त्वादिसंबन्धेन तु गमनादिरूपं फलं गवादौ कालादौ वा नास्तीति नातिप्रसङ्गः=कालादेर्गवादेर्वा कर्मत्वापत्तिर्नास्तीत्यर्थः । 'ज्ञापयति' इत्यादौ ज्ञानादेराश्रयत्वं संबन्धः शिष्यादौ ज्ञेयः । अस्मिन् मते दोषमाह—अत्र चेति, 'पाचयति' इति णिजन्तधात्वर्थनिरूपितकर्मत्वं प्रयोज्यस्य मैत्रस्य प्राप्तं तत्र ' मैत्रमन्नं पाचयति ' इत्येवं तादृशकर्मतावाचकपदात्=ण्यन्तधात्वर्थनिरूपितकर्मताविशिष्टवाचकमैत्रादिपदात् कदाचिद् द्वितीया भवति कदाचिच्च 'मैत्रेणान्नं पाचयति' इत्येवं तृतीया भवतीति तादृशद्वितीयातृतीययोर्नियामकं किमपि नास्त्येवेति दोषः, उक्ते हेतुमाह—तादृशपदोत्तरेति, तादृशपदोत्तरयोः=ण्यन्तधात्वर्थनि-

'अजा ग्रामं याप्यते चैत्रेण' इत्यादौ चैत्रकर्तृकव्यापारनिर्वाह्य यद् ग्रामवृत्तिसंयोगानुकूलक्रियाकर्तृत्वं तदाश्रयोऽजा इतिबोधः, तत्र संयोगावच्छिन्नक्रिया धातुलभ्या, संयोगे 'ग्रामम्' इत्यादिद्वितीयान्तार्थग्रामादिवृत्तित्वान्वयबलाद् ग्रामादिवृत्तिसंयोगावच्छिन्नक्रिया लभ्यते, तादृश्या णिजर्थकर्तृत्वेऽन्वयः। कर्माख्यातादिसमभिव्याहारनियन्त्रितव्युत्पत्तिबलाच्च तादृशक्रियान्वितकर्तृत्वं तृतीयान्तार्थचैत्रादिकर्तृत्वविशेषितव्यापाररूपाऽपरणिजर्थेन निर्वाह्यत्वसंबन्धेन विशेषितम् अजादिरूपकर्मीभूतकर्तरि तद् विशेषणीभवदाख्यातार्थाश्रयत्वे विशेषणतया भासते।

---

रूपितकर्मताविशिष्टवाचकमैत्रादिपदोत्तरं वर्तमानयोस्तयोः=द्वितीयातृतीययोस्तुल्यार्थकतया विवक्षाभेदस्यापि नियामकत्वं न संभवति, यदि तुल्यार्थकत्वं न स्यात्तदा विवक्षाभेदस्य नियामकं स्यादपि न चैवमस्तीत्यर्थः। अत्र केचित्तु मते यः खलु "अत्र च" इत्यादिना दोषः प्रदर्शितस्तमुद्दिश्याह भट्टाचार्यः-इति तु चिन्तनीयमिति, तथा च यथा समानार्थकयोरपि घटकलशादयोर्विवक्षाभेदेन प्रयोगव्यवस्था तथात्रापि समानार्थकत्वेपि द्वितीयातृतीययोः प्रयोगव्यवस्था संभवत्येवेत्यर्थः।

यगन्तप्रयोगमुदाहरति-अजेति, अत्र प्राप्त्यनुकूलगमनकर्तृत्वमजायाः प्रापणकर्तृत्वं चैत्रस्य, तच्चाऽजानिष्ठं प्राप्त्यनुकूलक्रियाकर्तृत्वं चैत्रनिष्ठप्रापणव्यापारनिर्वाह्यमस्ति, तदाश्रयः तादृशकर्तृत्वाश्रयोऽजेतिवाक्यार्थबोधः। नन्वत्र कर्माख्यातस्याश्रयत्वार्थकत्वादजायाः क्रियाकर्तृत्वाश्रयत्वसंभवेपि ग्रामवृत्तिसंयोगानुकूलक्रियाकर्तृत्वाश्रयत्वं कथं प्राप्तमित्याशङ्क्याह-तत्रेति, अत्र संयोगानुकूलक्रिया तु याधात्वर्थ एवेति धातुलभ्यैव 'ग्रामम्' इतिद्वितीयान्तपदसमभिव्याहाराच्च संयोगे ग्रामवृत्तित्वस्यान्वयो जात इत्येवंरीत्या ग्रामवृत्तिसंयोगावच्छिन्नक्रिया लभ्यते तादृश्याः=ग्रामवृत्तिसंयोगानुकूलक्रियायाः णिजर्थकर्तृत्वे=चैत्रनिष्ठकर्तृत्वे निर्वाहकत्वसंबन्धेनान्वयः कर्तृत्वं कृतिरेव चैत्रनिष्ठकृतेरेवाऽजानिष्ठतादृशक्रियानिर्वाहकत्वात्, अजायां चाश्रयत्वसंबन्धेनान्वयः, अजानिष्ठकर्तृत्वे ( कृतौ ) च जनकत्वसंबन्धेनान्वय इत्यर्थः। उक्तवाक्यार्थघटकपदार्थं प्रतिपादयति-कर्मेति, कर्माख्यातसमभिव्याहारव्युत्पत्तिबलात्=प्रथमान्तकर्मपदार्थविशेष्यकबोधबलात्, तादृशक्रियान्वितकर्तृत्वम्=ग्रामवृत्तिसंयोगावच्छिन्न ( जनक ) क्रियया निरूपितत्वसंबन्धेनान्वितं कर्तृत्वं तृतीयान्तार्थो यच्चैत्रनिष्ठं कर्तृत्वं तादृशकर्तृत्वविशेषितः=निरूपकत्वसंबन्धेन चैत्रनिष्ठकर्तृत्वविशिष्टो यश्चैत्रनिष्ठोऽपरणिजर्थः प्रापणरूपव्यापारस्तेन व्यापारेण च निर्वाह्यत्वसंबन्धेन विशेषितम्=विशिष्टम् ( एतद्व्यापारस्यैवोक्तकर्तृत्वनिर्वाहकत्वात् ) अजादिरूपकर्मीभूतकर्तरि=कर्माख्यातकर्मीभूते धात्वर्थकर्तरि चाऽजापदार्थे तत्=उक्तविशिष्टकर्तृत्वं विशेषणीभवत् कर्माख्यातार्थभूते आश्रयत्वे विशेषणतया भासते-एतत्कर्तृत्वविशिष्टाश्रयत्वस्याजायां सत्त्वात्, आश्रयत्वे कर्तृत्वं निरूपितत्वसंबन्धेन विशेषणमित्यर्थः। अत्र च पूर्वम् "अ

ये तु " गतिबुद्धि " इत्यादिसूत्रस्य संज्ञाविधायकत्वं वर्णयन्ति तेषामयमाशयः—व्यापार एव णिजर्थस्तत्र धात्वर्थक्रियायाः स्वकर्तृत्वनिर्वाहकत्वं संसर्गः, अतो न कर्तुः कर्मत्वं सूत्रान्तरप्राप्तम् ।

' याप्यते ग्राममजा ' इत्यादौ च स्वनिर्वाह्यकर्तृतानिरूपकत्वसंबन्धेन व्यापारविशेषितो धात्वर्थः कर्तृत्वेऽन्वेति. तच्चाश्रयत्वसंबन्धेनाऽजादौ विशेषणतया भासते, तादृशव्यापारे तृतीयान्तार्थस्य चैत्रादिकर्तृत्वस्य धात्वर्थैकदेशे संयोगादिरूपफले च द्वितीयान्तार्थस्य ग्रामवृत्तित्वस्य विशेषणतया भानम् ।

---

व्यापारश्च पृथगेव णिजर्थः" इत्युक्तत्वाद् व्यापारस्याऽपरणिजर्थत्वं ज्ञेयं कर्तृत्वस्यापि णिजर्थत्वादिति । चैत्रनिष्ठप्रापणव्यापारनिर्वाह्या या ग्रामवृत्तिसंयोगानुकूला क्रिया तादृशक्रियानुकूलकर्तृत्वाश्रयत्ववती अजेतिशाब्दबोधः ।

" गतिबुद्धि " इतिसूत्रस्य केचिद् द्वितीयाविधायकत्वं वदन्ति, केचिच्च कर्मसंज्ञाविधायकत्वमेव वदन्ति कर्मसंज्ञायां प्राप्तायाम् " कर्मणि द्वितीया " इत्यनेन द्वितीया स्वयमेव प्राप्स्यतीति, तत्र द्वितीयमतं व्याख्यातुमुपक्रमते—ये त्विति । तत्र=णिजर्थव्यापारे । ' यापयति ' इत्यादौ धात्वर्थक्रियायाः=प्राप्त्याद्यनुकूलक्रियायाः,: स्वेति—स्वं प्राप्त्याद्यनुकूलक्रिया तादृशक्रियानिरूपितकर्तृत्वनिर्वाहकत्वं णिजर्थव्यापारेऽस्तीति तेन संबन्धेन णिजर्थव्यापारे तादृशक्रियाया अन्वय इत्यर्थः । अत इति—यतो व्यापारमात्रं णिजर्थोऽतो धात्वर्थक्रियाकर्तुरजादेः कर्मत्वं न सूत्रान्तरप्राप्तमिति " गतिबुद्धि " इति सूत्रेण विधीयते इत्यर्थः । यदि धात्वर्थक्रियानुकूलव्यापारो णिजर्थः स्यात्तदा धात्वर्थक्रियाया व्यापारावच्छेदकत्वेन फलत्वं स्यात् तादृशफलीभूतक्रियाश्रयत्वेनैवाजादीनां कर्मत्वं प्राप्नुयात् फलाश्रयस्यैव कर्मत्वादिति " गतिबुद्धि " इतिसूत्रेण कर्मसंज्ञाविधानं न स्यात्, यदा च व्यापारमात्रं णिजर्थस्तदा धात्वर्थक्रियाया णिजर्थव्यापारावच्छेदकत्वाभावेन फलत्वाभावात्तादृशक्रियाश्रयत्वेनाऽजादीनां कर्मत्वं न संभवतीति "गतिबुद्धि" इतिसूत्रेण तत् कर्मत्वं विधीयते इतिभावः ।

उक्तमतेन ' अजा ग्रामं याप्यते ' इत्यस्य पदार्थानाह—याप्यत इत्यादिना, स्वं णिजर्थव्यापारस्तादृशव्यापारनिर्वाह्यं यदऽजानिष्ठं कर्तृत्वं तादृशकर्तृत्वनिरूपकत्वं संबन्धभूतं धात्वर्थे=अजानिष्ठप्राप्त्यनुकूलक्रियायामस्तीति स्वनिर्वाह्यकर्तृतानिरूपकत्वसंबन्धेन णिजर्थव्यापारो धात्वर्थे वर्तते व्यापारविशिष्टैतादृशधात्वर्थस्य चाजानिष्ठकर्तृत्वे निरूपितत्वसंबन्धेनान्वयः कर्तृत्वस्यैतादृशधात्वर्थनिरूपितत्वात्, तच्च=उक्तविशिष्टकर्तृत्वमाश्रयतासंबन्धेनाऽजायां विशेषणमित्यन्वयः । तादृशेति— तादृशव्यापारे=उक्तधात्वर्थविशेषणीभूतणिजर्थव्यापारे तृतीयान्तार्थचैत्रनिष्ठकर्तृत्वं निरूपकत्वसंबन्धेन विशेषणमस्ति, धात्वर्थैकदेशे संयोगरूपफले च द्वितीयान्तार्थग्रामवृत्तित्वमाश्रयतासंबन्धेन विशेषणमस्तीत्यन्वयः, याधात्वर्थस्य संयोगानुकूलक्रियारूपत्वात्संयोगस्य धात्वर्थैकदेशत्वं विज्ञेयम् । नन्वजादावाश्रयत्वसंबन्धेन यत् कर्तृत्वं भासते तत् कस्यार्थ इत्याशङ्क्याह—

ण्यन्तोत्तराख्यातस्यापि कर्तृत्वमेवार्थः, तत्र च तस्य वृत्तिः क्लृप्तैव, तच्चोक्तस्य धात्वर्थस्य विशेष्यतया प्रथमान्तपदार्थस्य च विशेषणतया भासते ।

न च यक्समभिव्याहृताख्यातोपस्थाप्यकर्तृत्वस्यान्वयबोधोपगमे 'गम्यते चैत्रः' इत्यतोपि गमनकर्ता चैत्र इत्यन्वयबोधः स्यादिति वाच्यम्, ण्यन्तोत्तरयक्समभिव्याहृताख्यातस्यैव कर्तृत्वान्वयबोधनियामकत्वात् ।

अथैवमपि 'अजा याप्यते' इत्यादौ कर्तृत्वस्याख्यातबोध्यत्वे "कर्तरि शप्", इत्यपवादविषयतया यकोऽसाधुतापत्तिः । न च यादृशधातूत्तरं यत् सार्वधातुकं विहितं तादृशधात्वर्थनिरूपितकर्तृत्वस्य तेन विवक्षायामेव "कर्तरि

---

ण्यन्तोत्तरेति, ण्यतोत्तराख्यातस्यापि कर्तृत्वमेवार्थस्तदेवाख्यातार्थभूतं कर्तृत्वमत्राऽजायामाश्रयतासंबन्धेन विशेषणतया भासते, याप्यते इति च णिजन्तयगन्तप्रयोगः । तत्र=कर्तृत्वे । तस्य=ण्यन्तोत्तराख्यातस्य । तत्=कर्तृत्वं चोक्तस्य=णिजर्थव्यापारविशेषितस्य धात्वर्थस्य विशेष्यतया भासते—णिजर्थव्यापारविशिष्टधात्वर्थस्य कर्तृत्वेन्वयस्योक्तत्वात्, तदेव कर्तृत्वं प्रथमान्ताऽजादिपदार्थस्य विशेषणतया भासते—आश्रयत्वसंबन्धेन कर्तृत्वस्याजादावन्वयस्योक्तत्वात्, 'चैत्रवृत्तिकर्तृत्वनिरूपको यो णिजर्थव्यापारस्तादृशव्यापारेण स्वनिर्वाह्यकर्तृतानिरूपकत्वसंबन्धेन विशिष्टो यो ग्रामवृत्तिसंयोगानुकूलगमनव्यापारस्तदनुकूलकृतिमती अजा' इतिशाब्दबोधोदयात्, चैत्रवृत्तिकर्तृत्वनिरूपकप्रापणव्यापारविशिष्टग्रामसंयोगानुकूलगमनानुकूलकृतिमती अजेति यावत् । अपिशब्दाचैत्रादिपदोत्तरतृतीयाया अपि कर्तृत्वमेवार्थस्तस्य च निरूपकत्वसंबन्धेन णिजर्थव्यापारेऽन्वय उक्त एवेत्यर्थः ।

ननु यदि त्वदुक्तरीत्या 'याप्यते ग्राममजा' इत्यत्र यक्समभिव्याहृताख्यातोपस्थाप्यकर्तृत्वस्याजादावाश्रयत्वसंबन्धेनान्वयः स्यात्तदा 'गम्यते चैत्रः' इत्यत्रापि यक्समभिव्याहृताख्यातोपस्थाप्यकर्तृत्वस्याश्रयत्वसंबन्धेन चैत्रेऽन्वयापत्त्या 'गम्यते चैत्रः' इत्यनेन 'गमनकर्ता चैत्रः' इति शाब्दबोधः स्यात् समत्वादित्याशङ्क्याह—न चेति, परिहारमाह—ण्यन्तोत्तरेति, ण्यन्तोत्तरयक्समभिव्याहृताख्यातस्थले एवाऽजादौ कर्तृत्वस्याश्रयत्वसंबन्धेनाऽन्वयो भवतीति नियमाद् न 'गम्यते चैत्रः' इत्यत्र चैत्रे कर्तृत्वान्वयापत्तिः—अत्र णिचोऽभावादित्यर्थः । अत्र तु चैत्रस्य कर्मत्वमेव ।

ननु ( २६२ पृ० ) यदुक्तम्— "ण्यन्तोत्तराख्यातस्यापि कर्तृत्वमेवार्थः" इति तत्र 'अजा याप्यते' इत्यत्रापि यगन्तण्यन्तोत्तराख्यातस्य कर्तृत्वमेवार्थः स्यात्तथा चाख्यातस्य कर्तृत्वार्थकत्वे "कर्तरि शप्" इत्यनेन शबेव स्याद् न तु यगिति तथा चात्र वर्तमानस्य यकोऽसाधुत्वं स्यादित्याशङ्कते—अथेति । ननु यादृशयादिधातूत्तरं यत्=तिङादि सार्वधातुकं ( प्रत्ययः ) विहितं स्यात् तादृशधात्वर्थनिरूपितकर्तृत्वस्य=तिङादिप्रकृतिभूतधात्वर्थनिरूपितकर्तृत्वस्य तेन=तिङादिना विवक्षायामेव शबादिर्भवति यथा 'भवति' इत्यत्र

शप् " इत्यादेः शबादिविधायकत्वात्. प्रकृते ण्यन्तसमुदायोत्तरमेवाख्यातं तेन तदर्थनिरूपितकर्तृत्वं च न बोध्यते. अपि तु ण्यर्थविशेषितधात्वर्थान्वितकर्तृत्वमेवेति न तादृशापवादविषयतेति वाच्यम्, कर्माख्यातस्थले विशेष्यविशेषणभाववैपरीत्येन व्यापारविशेषितक्रियाया अपि ण्यन्तधात्वर्थत्वात् ।

मैवम्— लकारसामान्यवृत्त्या यत्र कर्तृत्वं प्रतीयते तत्रैव " कर्तरि शप् " इत्यस्य शब्विधायकता, अत्र ( च ) कर्मत्वसमशीले कर्तृत्वे आत्मनेपदत्वेन शक्तिः । वस्तुतः— फलव्यापारयोः पृथग् धात्वर्थतामते ' गच्छति ' इत्यादाविव ' गम्यते ' इत्यादावपि लकारेणाश्रयत्वरूपकर्तृत्वाभिधाने यगऽनुपपत्त्ति

तिङ्प्रकृतिभूतभूधात्वर्थनिरूपितकर्तृत्वस्य विवक्षायां शप् भवति, प्रकृते=' अजा याप्यते ' इत्यत्र तु ण्यन्तसमुदायोत्तरमेवाख्यातमस्ति न तु केवलधातूत्तरमिति न तेन=आख्यातेन तिङा तदर्थनिरूपितकर्तृत्वम्=धात्वर्थनिरूपितकर्तृत्वं बोध्यते किं तु स्वनिर्वाह्यकर्तृतानिरूपकत्वसंबन्धेन ण्यर्थव्यापारविशिष्टो यो धात्वर्थस्तादृशधात्वर्थेन निरूपितत्वसंबन्धेन विशिष्टं यत् कर्तृत्वं तदेव बोध्यते इति नात्र तादृशापवादविषयता=" कर्तरि शप् " इत्याद्यपवादविषयता, अत्रोक्तरीत्या शपः प्राप्तिरेव नास्ति येन यकोऽसाधुत्वं स्यादिति यावदित्याशङ्क्याह— न चेति । परिहारमाह—कर्मेति, कर्त्राख्यातस्थले णिजर्थव्यापारस्यैव विशेष्यत्वं भवति कर्तर्यऽन्वयित्वात् कर्माख्यातस्थले च धात्वर्थस्यैव विशेष्यत्वं भवति कर्मण्यऽन्वयित्वादिति विशेष्यविशेषणभाववैपरीत्याद् विशेष्यभूतस्यैव समुदायार्थत्वाच्च स्वनिर्वाह्यकर्तृतानिरूपकत्वसंबन्धेन णिजर्थव्यापारविशिष्टायाः क्रियायाः=धात्वर्थस्य ण्यन्तधात्वर्थत्वं प्राप्तं तथा च ' याप्यते ' इत्यत्राख्यातेन यदि ण्यर्थविशेषितधात्वर्थान्वितकर्तृत्वं बोध्यते तदा धात्वर्थक्रियानिरूपितकर्तृत्वमपि बोध्यते एवेति प्राप्तं धात्वर्थक्रियाया ण्यन्तधात्वर्थत्वादेव तथा चाख्यातप्रकृतिभूतधात्वर्थनिरूपितकर्तृत्वबोधनस्य शप्प्राप्तिकारणस्य सत्त्वात् शप्प्राप्त्यात्र यकोऽसाधुत्वं तदवस्थमेवेत्यर्थः ।

परिहरति— मैवमिति, यथा ' भवति ' ' एधते ' इत्यादौ लकारसामान्यवृत्त्यैव कर्तृत्वं प्रतीयते न त्वत्र लकारस्य परस्मैपदत्वेनात्मनेपदत्वेन रूपेण वा कर्तरि शक्तिरित्यत्र शब् भवति, अत्र=' याप्यते ' इत्यत्र तु कर्मणि यगस्तीत्यऽजावृत्तिकर्तृत्वं कर्मत्वस्वरूपमेवास्तीति तादृशकर्तरि " भावकर्मणोः " इतिसूत्रेणात्मनेपदस्य प्राप्तत्वेनात्मनेपदत्वेनैव रूपेण लकारस्य कर्तृत्वे शक्तिरस्ति न तु लत्वेन रूपेणेति नायं शब्विषयो येन यकोऽसाधुत्वं स्यादित्यर्थः । स्वाभिप्रायमाह— वस्तुत इति, फलव्यापारयोर्धातोरेव शक्तिस्वीकारे लकारस्य कर्तृत्वमेवार्थः स्यादिति यथा ' गच्छति ' इत्यत्र लकारं कर्तृत्वाभिधायकमिति शबेव भवति न तु यक् तथा ' गम्यते ' ' याप्यते ' इत्यादावपि लकारस्य कर्तृत्वाभिधायकत्वाच्छबेव स्यादिति यगऽनुपपत्तिः स्यात् तस्मात् ' गच्छति ' इत्यादौ परस्मैपदसमभिव्याहृतधातुना यादृशः=ग्रामादिवृत्तिसंयोगाद्यनुकूलचैत्रादिवृत्तिव्यापाररूपो विशिष्टोर्थः प्रतिपाद्यते तादृशविशिष्टार्थेन=ग्रामादिवृत्तिसंयोगाद्य-

इति परस्मैपदसमभिव्याहृतधातुना यादृशविशिष्टोर्थः प्रत्याय्यते तादृशविशिष्टार्थान्वितकर्तृत्वाभिधानमेव शब्विषयः एवं च प्रकृतेपि नानुपपत्तिरिति ध्येयम्।

'ग्रामो याप्यते' 'अर्थो बोध्यते' इत्यादौ भावनाविशेष्यतया ग्रामादेर्भानेपि गमनादिकर्तुः कर्मत्वविवक्षायां तस्यैवाख्यातार्थविशेष्यतया बोधो व्युत्पन्नः- "ण्यन्ते कर्तुश्च कर्मणः" इत्यनुशासनात्, अतो 'अजां ग्रामो याप्यते' 'शिष्यमर्थो बोध्यते' इत्यादयो न प्रयोगाः। 'ग्रामो याप्यते' 'अर्थो बोध्यते' इत्यादौ फलं विषयत्वादिरूपं च मुख्यभाक्तसाधारणं कर्मत्वमेवाख्यातार्थः।

फलव्यापारयोः पृथग् धात्वर्थतामते आश्रयत्वमेवाख्यातार्थः, धात्वर्थव्यापारनुकूलव्यापारेण धात्वर्थेन निरूपितत्वसंबन्धेन विशिष्टं यत् कर्तृत्वं तादृशकर्तृत्वस्याख्यातेनाभिधाने एव शब् भवतीति प्रकृते=' याप्यते ' ' गम्यते ' इत्यादौ चाख्यातेन 'गच्छति' इत्यादिपरस्मैपदस्थलीयकर्तृत्वसदृशकर्तृत्वं नाभिधीयते इति न शपः प्राप्तिरिति न यकोऽनुपपत्तिरित्यर्थः।

'अजां ग्रामो याप्यते' 'शिष्यमर्थो बोध्यते' इत्यादयः प्रयोगा न भवन्तीति प्रतिपादनार्थमाह- ग्राम इति, 'ग्रामो याप्यते' इत्यादौ कर्माख्यातस्थले कर्मण एव ग्रामादेर्यद्यपि भावनाविशेष्यत्वमस्ति तथापि यदि गमनादिकर्तृवाचकमजादिपदं प्रयुक्तं स्यात्तदा तस्यैव=गमनादिकर्तुरेव "ण्यन्ते कर्तुश्च कर्मणः" इत्यनुशासनबलादाख्यातार्थविशेष्यत्वं स्यात्- तत्रैव लादीनां जायमानत्वात्। ण्यन्ते=ण्यन्तावस्थायां कर्तृभूते कर्मणि किं वा कर्मभूते कर्तरि लादयो भवन्तीत्यनुशासनार्थः। न च 'अजां ग्रामो याप्यते' इत्यादौ गमनकर्तृभूताऽजाया आख्यातार्थविशेष्यत्वं संभवति तद्वाचकाऽजापदस्य प्रथमान्तत्वाभावादिति 'अजां ग्रामो याप्यते' इत्यादयः प्रयोगा न भवन्ति किं तु 'अजा ग्रामं याप्यते' इति, तथा च 'अजा याप्यते' 'ग्रामो याप्यते' 'अजा ग्रामं याप्यते' इत्येवं प्रयोगास्तु भवन्ति, 'अजां ग्रामो याप्यते' 'अजा ग्रामो याप्यते' इत्यादयस्तु प्रयोगा न भवन्ति। एवमन्यत्रापि बोध्यम्। 'ग्रामो याप्यते' इत्यादिस्थलीयाख्यातार्थमाह- ग्रामेति, विषयत्वादीत्यादिपदात् संयोगाद्याश्रयत्वं ग्राह्यं तथा च 'ग्रामो गम्यते' इत्यत्र संयोगाश्रयत्वरूपं यत् फलम् अर्थो 'बोध्यते' इत्यत्र विषयत्वरूपं यत् फलं तत् कर्मत्वरूपमेव तदेवाख्यातार्थस्तदाश्रयत्वं ग्रामादौ ज्ञेयम्, मुख्यभाक्तसाधारणं विषयत्वादिरूपं कर्मत्वं फलमेवाख्यातार्थ इत्यन्वयः। परसमवेतक्रियाफल( संयोगादि ) शालित्वाद् ग्रामादीनां मुख्यं कर्मत्वम्, अर्थादीनां च भाक्तम्=औपचारिकं कर्म क्रियाजन्यफलशालित्वासंभवादित्यर्थः।

फलव्यापारयोरुभयोरपि पृथग् धात्वर्थतामते फलस्य धात्वर्थत्वमेव प्राप्तमिति पारिशेष्यादाश्रयत्वमेव 'ग्रामो याप्यते' इत्यादावाख्यातार्थ इत्याह- फलव्यापारयोरिति। 'ग्रामो याप्यते

विशेष्यतया तादृशाश्रयत्वविशेषणतया च धात्वर्थफलस्य भानम् । ण्यर्थव्यापारस्य जन्यतासंबन्धेनैव धात्वर्थक्रियाज्ञानादिविशेषणत्वं पूर्ववदेव । 'अजां ग्रामो याप्यते' इत्यादिकस्तु न प्रयोगः– द्वितीयया कर्मत्वबोधने धात्वर्थव्यापारविशेष्यतया ण्यर्थबोधसामग्र्याः प्रयोजकत्वात्, यगादिसमभिव्याहारस्थले च धात्वर्थविशेषणतयैव ण्यर्थस्य बोधात् । ण्यन्तधातोः सकर्मकत्वे तदुत्तरभावाख्यातस्य "भावे चाकर्मकेभ्यः" इत्यनुशासनेनाऽसाधुत्वाच्च न तादृशप्रयोगः । 'ग्रामो याप्यते' इतिभावाख्यातप्रयोगस्त्विष्ट एव–ण्यन्तस्य

---

इत्यादौ यानादिव्यापारजन्यसंयोगाश्रयो ग्राम इति बोधोदयाद् व्यापारः संयोगे संयोगश्चाश्रयत्वे विशेषणविधया भासते इति धात्वर्थीभूतस्य संयोगादिरूपफलस्य व्यापारविशेष्यत्वमाख्यातार्थाऽऽश्रयत्वविशेषणत्वं च प्राप्तमित्याह– धात्वर्थेति । धात्वर्थीभूता गमनज्ञानादिरूपा यात्र क्रियास्ति सा णिजर्थव्यापारजन्यास्तीति जन्यतासंबन्धेन धात्वर्थक्रियायां णिजर्थव्यापारस्यान्वयो ज्ञेय इत्याह– ण्यर्थेति । पूर्ववदेव= ( २६१ पृ० ) स्वनिर्वाह्येत्यादिनोक्तरीत्यैव । 'अर्थो बोध्यते' इत्यत्र च ण्यर्थव्यापारजन्यज्ञानजन्यविषयत्वाश्रयोऽर्थ इतिशाब्दबोधः । पूर्वोक्तं पुनः स्मारयति– 'अजां ग्रामो याप्यते' इत्यादिकस्तु न प्रयोग इति । अत्र हेतुमाह– द्वितीययेति, यत्र णिजर्थव्यापारस्य धात्वर्थव्यापारविशेष्यतया बोधकसामग्री भवति तत्रैव द्वितीयया कर्मत्वबोधो भवति ( कर्मवाचकपदाद् द्वितीया भवति ) यथा 'अजां ग्रामं यापयति चैत्रः' इत्यत्राजावृत्तिव्यापारानुकूलव्यापारवांश्चैत्र इति बोधोदयाद् अजावृत्तिधात्वर्थव्यापारविशेष्यतया चैत्रवृत्तिणिजर्थव्यापारस्य भानं भवतीत्यत्र द्वितीयया कर्मत्वबोधो भवति ( कर्मवाचकाजापदाद् द्वितीया भवति ) । 'अजां ग्रामो याप्यते' इत्यत्र तु ( २६१ पृ० ) उक्तरीत्या प्रत्युत णिजर्थव्यापारस्य धात्वर्थव्यापारे विशेषणत्वमेवास्ति न तु धात्वर्थव्यापारविशेष्यत्वमिति द्वितीयया कर्मत्वबोधनासंभवान्न द्वितीयाप्राप्तिरिति न 'अजां ग्रामो याप्यते' इत्यादिप्रयोगापत्तिरित्याह– यगादीति । 'अजां ग्रामो याप्यते' इत्यस्याऽसाधुत्वे व्याकरणं प्रमाणयति–ण्यन्तधातोरिति, "लः कर्मणि च भावे चाकर्मकेभ्यः" इतिसूत्रेण लकाराः सकर्मकधातुभ्यः कर्मणि कर्तरि च भवन्ति. अकर्मकधातुभ्यश्च भावे कर्तरि च भवन्तीति प्रतिपाद्यते इति सकर्मकधातुभ्यो भावे लकारा न भवन्तीति ण्यन्तसकर्मकधातुभ्योपि भावे लकारस्याऽसाधुत्वं प्राप्तम्, 'अजां ग्रामो याप्यते' इत्यत्र च धातुः सकर्मक एव ण्यन्त इति तदुत्तरभावाख्यातस्याप्यसाधुत्वं प्राप्तमेवेति तादृशप्रयोगः=' अजां ग्रामो याप्यते ' इति प्रयोगो न भवतीत्यर्थः । ण्यन्तकर्मणो ह्यविवक्षायां तु सकर्मकण्यन्तधातूत्तरमपि भावाख्यातस्य साधुत्वमेवेत्याह– ग्राम इति, 'ग्रामो याप्यते' इत्यत्र ण्यन्तकर्मवाचकाऽजापदस्याऽसमभिव्याहारात् सकर्मकण्यन्तयाधातूत्तरवर्तमानस्यापि भावाख्यातस्य साधुत्वमेव, ग्रामस्य तु न ण्यन्तकर्मता किं तु धात्वर्थकर्मतैव ण्यन्तकर्म-

कर्मासमभिव्याहारात्। एकदा कर्तृत्वकर्मत्वबोधकतया आख्यातस्याऽव्युत्पन्नतया 'अजा ग्रामो याप्यते' इत्यादयो न प्रयोगाः। एवम्-' तण्डुलः सहायेन पाच्यते चैत्रेण ' इत्यादौ धात्वर्थे सहायादिकर्तृकत्वस्य तद्विशेषणण्यर्थव्यापारे विशेषणतया च चैत्रादिकर्तृकत्वस्य तृतीयान्तार्थस्य बोधः, शेषं पूर्ववदिति दिक्।

' ग्रामं गच्छति ' इतिवत् ' स्वं गच्छति ' इतिप्रयोगवारणाय परसमवेतत्वमपि द्वितीयार्थ इष्यते तस्य च धात्वर्थेऽन्वयः, परत्वे चैकदेशेप्याऽऽकाङ्क्षावैचित्र्यात् प्रकृत्यर्थस्य प्रतियोगितयाऽन्वयः, एवं च 'ग्रामं गच्छति चैत्रः'

---

त्वं त्वजादीनामेव धात्वर्थकर्तृभूतानां स्यादित्यर्थः। ' अजा ग्रामो याप्यते ' इत्यस्याऽसाधुत्वे हेतुमाह- एकदेति, ' अजा ग्रामो याप्यते ' इत्यत्राख्यातेनैवैकदाऽजायाः कर्तृत्वं ग्रामस्य च कर्मत्वं बोधनीयं कर्मत्वबोधकद्वितीयाया अभावात् न चैकदैकप्रत्ययेनाख्यातादिनोभयार्थस्य कर्तृत्वकर्मत्वादिरूपस्य बोधनं संभवति- " सकृदुच्चरितः शब्दः सकृदर्थं गमयति " इतिनियमादित्यर्थः। ' अजा ग्रामं याप्यते ' इत्यत्र तु ग्रामस्य कर्मत्वं द्वितीयया बोध्यते इति नैकप्रत्ययस्य कर्मत्वकर्तृत्वोभयबोधकत्वापत्तिर्येनाऽसाधुत्वं स्यादित्यर्थः। ' तण्डुलः सहायेन पाच्यते चैत्रेण ' इत्यत्रत्यपदार्थानाह- एवमिति, अत्राख्यातस्य कर्मणि जातत्वात्तण्डुलविशेष्यक एव बोधः, आख्यातार्थश्चाश्रयत्वं तथा च- ' चैत्रकर्तृकणिजर्थव्यापारप्रयोज्यो यः सहायकर्तृकपाकात्मकव्यापारस्तादृशव्यापारजन्यविक्लित्त्याश्रयस्तण्डुलः ' इति बोधोदयात् पूर्वपूर्वपदार्थस्योत्तरोत्तरपदार्थे विशेषणत्वाच्च धात्वर्थव्यापारे सहायकर्तृकत्वस्य विशेषणतया बोधः तद्विशेषणण्यर्थव्यापारे= धात्वर्थविशेषणीभूतणिजर्थव्यापारे च तृतीयान्तार्थस्य चैत्रकर्तृकत्वस्य विशेषणतया बोधो भवति। शेषम्=आश्रयत्वमाख्यातार्थ इत्यादि सर्वं पूर्ववदेव विज्ञेयमित्यर्थः।

ग्रामनिष्ठसंयोगस्य चैत्रेपि सत्त्वात् ' ग्रामं गच्छति ' इतिवत् ' चैत्रश्चैत्रं गच्छति ' ' चैत्रः स्वं गच्छति ' इत्यादिप्रयोगः स्यादेवेति तद्वारणाय परसमवेतत्वमपि द्वितीयार्थः, अर्थात् परसमवेतक्रियाफलशालित्वं कर्मत्वमिति वक्तव्यं तथा च ग्रामनिष्ठसंयोगजनकक्रियाया ग्रामान्यचैत्रसमवेतत्वेन ग्रामस्य कर्मत्वापत्त्या ' ग्रामं गच्छति ' इति प्रयोगो भवति चैत्रनिष्ठतादृशसंयोगजनकक्रियायाश्चैत्रे एव समवेतत्वेन चैत्रान्यसमवेतत्वाभावात् चैत्रस्य कर्मत्वानापत्त्या ' चैत्रः स्वं गच्छति ' इत्यादयः प्रयोगा न भवन्तीत्याह- ग्राममिति। तस्य=परसमवेतत्वस्य धात्वर्थे= संयोगादिफलजनकक्रियायामन्वयः। तादृशपरत्वे च प्रकृत्यर्थस्य=द्वितीयाप्रकृत्यर्थस्य ग्रामादेः प्रतियोगितया=प्रतियोगित्वरूपेण स्वप्रतियोगिकत्वसंबन्धेन चान्वयः- परत्वस्य भेदरूपत्वात् अभावे च प्रतियोगिनः स्वप्रतियोगिकत्वसंबन्धेनान्वयस्य प्रतिपादितत्वादित्याह- परत्वेचेति। ननु " पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेन " इति नियमादत्र द्वितीयार्थैकदेशे परत्वे प्रकृत्यर्थस्य कथमन्वयः स्यादित्याशङ्क्याह- एकदेशेपीति, आकाङ्क्षावैचित्र्यात्= बोधवैचित्र्यादेकदेशेपि पदार्थान्तरान्वय इष्ट एवेति पूर्वं प्रतिपादितमित्यर्थः। ' ग्रामं गच्छति चैत्रः

इत्यादौ ग्रामभिन्नसमवेता ग्रामनिष्ठसंयोगजनिका या क्रिया तदाश्रयतावांश्चैत्र इत्यन्वयबोधः । स्वनिष्ठसंयोगजनकक्रियायां स्वभिन्नसमवेतत्वस्य बाधात् 'स्वमात्मानं गच्छति' इति न प्रयोगः । यत्र चोभयकर्मभ्यां मल्लयोः संयोगस्तत्र मल्लान्तरसमवेतक्रियायाः स्वनिष्ठसंयोगजनिकायाः स्वभिन्नसमवेतत्वेपि तादृशक्रियाश्रयतायाः स्वस्मिन् बाधात् 'मल्लः स्वं गच्छति' इति न प्रयोगः ।

न च स्वनिष्ठसंयोगजनकस्वसमवेतक्रियायां स्वभिन्नसमवेतत्वस्याऽयोग्यतया तदऽभानेप्यऽबाधितं स्वनिष्ठसंयोगजनकत्वं विषयीकृत्य शाब्दबोधसंभवात् तदर्थमात्रतात्पर्येण 'स्वं गच्छति' इतिप्रयोगो दुर्वार एवेति वाच्यम्, परसमवेतत्वांशाविषयकस्य द्वितीयाधीनफलजनकत्वबोधस्य कुत्राप्यनभ्युपगमेन तादृशबोधे तद्भासकसामग्र्या अप्यपेक्षणीयत्वात् ।

---

इत्यस्य वाक्यार्थमाह— एवं चेति । संयोगस्य द्विष्ठत्वेन ग्रामनिष्ठसंयोगस्य स्वनिष्ठत्वेपि तादृशस्वनिष्ठसंयोगजनकक्रियायां स्वान्यसमवेतत्वं नास्ति कर्मत्वं च स्वान्यसमवेतक्रियाजन्यसंयोगादिफलशालित्वे एव भवतीति 'स्वमात्मानं गच्छति' इति प्रयोगापत्तिर्नास्तीत्युपसंहरन्नाह— स्वनिष्ठेति । एककर्मजसंयोगस्थलीयातिप्रसङ्गं निवार्योभयकर्मजसंयोगस्थलीयातिप्रसङ्गनिवारणायाह— यत्रेति, मल्लान्तरसमवेतक्रियायाः स्वनिष्ठसंयोगजनिकायाः स्वभिन्नसमवेतत्वेन तादृशक्रियाश्रयतायाः=स्वनिष्ठसंयोगजनकक्रियाश्रयतायाः स्वस्मिन् बाधात् 'मल्लः स्वं गच्छति' इति प्रयोगो न भवति— संयोगस्योभयकर्मजत्वे स्वनिष्ठसंयोगजनकक्रियाश्रयत्वं यस्मिन् स्यात् तस्यैव स्वापेक्षया कर्मत्वसंभवाद् यथा चैत्रमैत्रोभयकर्मजसंयोगस्थले चैत्रनिष्ठसंयोगस्य मैत्रसमवेतक्रियाजन्यत्वे तादृशक्रियाश्रयत्वं मैत्रे एव स्यादिति मैत्रस्य कर्मत्वापत्त्या 'चैत्रो मैत्रं गच्छति' इति प्रयोगः संभवति, तथा 'मैत्रश्चैत्रं गच्छति' इत्यपि । "स्वभिन्नसमवेतत्वेपि" इत्यत्र 'स्वभिन्नसमवेतत्वेन' इति पाठो युक्तः ।

ननु स्वनिष्ठसंयोगजनिकायाः स्वसमवेतायाः क्रियायाः स्वस्मिन्नेव समवेतत्वेन परसमवेतत्वं न संभवतीति तत्र परसमवेतत्वस्याऽयोग्यतया=बाधात् तदभानेपि=परसमवेतत्वांशस्याभानेप्यऽबाधितं यत् स्वनिष्ठसंयोगजनकत्वं तावन्मात्रं विषयीकृत्यापि स्वनिष्ठसंयोगजनकक्रियाश्रयतावांश्चैत्र इति शाब्दबोधसंभवात् तदर्थमात्रतात्पर्येण=स्वनिष्ठसंयोगजनकत्वमात्रतात्पर्येण 'स्वं गच्छति' इति प्रयोगः स्यादेव— स्वसमवेतक्रियायाः स्वस्मिन्नपि संयोगजनकत्वात् तादृशसंयोगरूपफलशालित्वेन स्वस्यापि कर्मत्वसंभवादित्याशङ्क्याह— न चेति । परिहारमाह— परसमवेतत्वेति, परसमवेतत्वांशमविषयीकृत्य द्वितीयया क्वचिदपि धात्वर्थनिष्ठफलजनकत्वस्य बोधो न भवतीति तादृशबोधे=द्वितीयाधीनफलजनकत्वबोधे तद्भासकसामग्र्याः=परसमवेतत्वांशभासकसामग्र्या अपेक्षा भवत्येव तथा च तादृशसामग्र्या परसमवेतत्वांशभाने जाते स्वस्य च स्वस्मात् परत्वाभावात् कर्मत्वानापत्त्या 'स्वं गच्छति' इति प्रयोगापत्तिर्नास्तीत्यर्थः ।

अथ स्वस्यापि द्वित्वावच्छिन्नस्वभेदवत्त्वात् ' स्वं गच्छति ' इतिप्रयोगस्य दुर्वारतया द्वितीयाप्रकृत्यर्थस्य प्रकृत्यर्थतावच्छेदकावच्छिन्नप्रतियोगिताकत्वसंबन्धेनैव भेदेऽन्वयो वाच्यस्तथा च ' चैत्रो द्रव्यं गच्छति ' ' मल्लो मल्लं गच्छति ' इत्यादिवाक्यस्याऽप्रमाणतापत्तिः—चैत्रमल्लादिनिष्ठक्रियायाः प्रकृत्यर्थतावच्छेदकीभूतद्रव्यत्वमल्लत्वाद्यवच्छिन्नभिन्नाऽसमवेतत्वात्, तत्तद्व्यक्तित्वानुपस्थितावपि शाब्दबोधोदयेन तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगितासंबन्धेनाऽन्वयोपग-

द्वित्वावच्छिन्नप्रतियोगिताकभेदमादाय शङ्कते—अथेति, स्वस्य चैत्रस्य चैत्रप्रतियोगिकभेदवत्त्वविरहेपि द्वित्वावच्छिन्नस्वभेदवत्त्वात्=चैत्रघटोभयभेदवत्त्वात् स्वस्मिन्नपि स्वभेदः प्राप्त इति स्वनिष्ठसंयोगजनकक्रियायाः स्वभिन्नस्वसमवेतत्वे प्राप्ते तादृशक्रियाजन्यसंयोगवत्त्वेन स्वस्यापि कर्मत्वापत्त्या ' स्वं गच्छति' इतिप्रयोगः स्यादेव तथा च द्वित्वावच्छिन्नस्वभेदमादाय प्राप्तस्य 'स्वं गच्छति' इतिप्रयोगस्य वारणाय परत्वरूपभेदे द्वितीयाप्रकृत्यर्थस्य ग्रामादेः प्रकृत्यर्थतावच्छेदकावच्छिन्नप्रतियोगिताकत्वसंबन्धेनान्वयो वाच्यः यथा 'ग्रामं गच्छति' इत्यत्र प्रकृत्यर्थतावच्छेदकं यद् ग्रामत्वं तादृशग्रामत्वावच्छिन्ना या ग्रामनिष्ठा भेदप्रतियोगिता तादृशप्रतियोगिताकत्वं भेदेस्तीति तादृशप्रतियोगिताकत्वसंबन्धेन ( ग्रामस्य ) भेदेऽन्वयो वक्तव्यस्तथा च स्वनिष्ठे द्वित्वावच्छिन्नस्वभेदे द्वित्वावच्छिन्नप्रतियोगिताकत्वसंबन्धेन स्वान्वयसंभवेपि ' स्वं गच्छति ' इत्यत्र प्रकृत्यर्थतावच्छेदकं यत् स्वत्वं तादृशस्वत्वावच्छिन्नप्रतियोगिताकत्वसंबन्धेन भेदे स्वाऽन्वयस्तु न संभवति भेदस्य चात्र प्रकृत्यर्थतावच्छेदकावच्छिन्नप्रतियोगिताकत्वसंबन्धेनैव प्रकृत्यर्थविशिष्टस्य ग्राह्यत्वमिति ' स्वं गच्छति ' इतिप्रयोगस्य वारणे कृते ' चैत्रो द्रव्यं गच्छति ' ' मल्लो मल्लं गच्छति ' इत्यादीष्टस्य प्रयोगस्याऽप्रामाण्यं स्यादित्याह—तथा चेति । अप्रामाण्ये हेतुमाह—चैत्रमल्लादीति, उक्तरीत्या संयोगादिरूपफलजनकक्रियाया द्वितीयाप्रकृत्यर्थतावच्छेदकावच्छिन्नभिन्नसमवेतत्वमपेक्ष्यते तादृशक्रियाजन्यफलशालिन एव च कर्मत्वमिष्टम् 'चैत्रो द्रव्यं गच्छति' इत्यत्र च प्रकृत्यर्थतावच्छेदकं द्रव्यत्वं द्रव्यत्वावच्छिन्नभिन्नसमवेतत्वं च द्रव्यनिष्ठसंयोगजनकक्रियायां नास्ति—तादृशक्रियायाश्चैत्रे सत्त्वात् तत्र चैत्रे द्रव्यत्वस्यापि सत्त्वादिति 'चैत्रो द्रव्यं गच्छति' इति प्रयोगो न स्यादेव तथा मल्लनिष्ठसंयोगजनकक्रियायां मल्लत्वावच्छिन्नभिन्नसमवेतत्वं नास्ति तादृशक्रियाश्रये मल्लान्तरेपि मल्लत्वस्य सत्त्वादेवेति ' मल्लो मल्लं गच्छति ' इत्यपि प्रयोगो न स्यादित्यर्थः । ननु चैत्रे द्रव्यत्वावच्छिन्नप्रतियोगिताकभेदाभावेपि मल्ले च मल्लत्वावच्छिन्नप्रतियोगिताकभेदाभावेपि तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदस्य सत्त्वेन भेदे प्रकृत्यर्थद्रव्यादेस्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकत्वसंबन्धेनान्वयं वक्ष्याम इति ' चैत्रो द्रव्यं गच्छति ' इत्यादिप्रयोगस्य नानुपपत्तिरित्याशङ्क्याह—तत्तद्व्यक्तित्वेति, द्रव्यादीनां प्रकृत्यर्थानां तद्व्यक्तित्वेन रूपेणोपस्थित्यभावेपि ' चैत्रो द्रव्यं गच्छति ' इत्यत्र शाब्दबोधो जायते एवेति भेदे द्रव्यादीनां तद्व्यक्तित्वावच्छिन्नप्रयोगिताकत्वसंबन्धेनान्वयो न संभवति किं तु द्रव्यत्वाद्यवच्छिन्नप्रतियोगिताकत्वसंब-

मासंभवात्, उक्तयुक्त्या संबन्धघटकोपस्थितेरपि शाब्दबोधेऽपेक्षितत्वात्, एकधर्मावच्छिन्नप्रतियोगिताया अन्यधर्मावच्छिन्नसंसर्गत्वे मानाभावाच्च, प्रतियोगिविशेषिताभावबुद्धेर्विशिष्टवैशिष्ट्यावगाहित्वनियमात्, अन्वयिताऽनवच्छेदकावच्छिन्नप्रतियोगितायाः संबन्धत्वासंभवाच्चेति चेत् ?, तर्हि क्रियान्वयिभेदप्रतियोगितावच्छेदकत्वमेव द्वितीयार्थोऽस्तु भेदे प्रकृत्यर्थस्याधेयतासंबन्धेनान्वय इति न काचिदनुपपत्तिः ।

---

न्वेनैवेत्युक्तमप्रामाण्यं तदवस्थमेवेत्यर्थः । ननु द्रव्यादीनां तद्व्यक्तित्वेन रूपेणोपस्थित्यभावेपि शाब्दबोधो भविष्यति—तद्व्यक्तित्वस्य संबन्धघटकत्वेन तदुपस्थित्यपेक्षाभावादित्याशङ्क्याह—उक्तेति, उक्तयुक्त्या=( १६२ पृ० ) तत्संसर्गावच्छिन्नेत्याद्युक्तयुक्त्या, संसर्गतात्पर्यज्ञानानुरोधेन संसर्गघटकपदार्थोपस्थितेरपि शाब्दबोधेऽपेक्षा भवत्येवेति तद्व्यक्तित्वानुपस्थितौ शाब्दबोधासंभवादित्यर्थः । तद्व्यक्तित्वेन ग्रहणासंभवे हेत्वन्तरमाह—एकेति, एकपदमन्यपरं ज्ञेयम्, अत्र हि भेदे द्रव्यत्वावच्छिन्नस्यान्वये प्रतियोगितेव संसर्गस्तत्रान्यधर्मावच्छिन्ना प्रतियोगिता अन्यधर्मावच्छिन्नस्य संसर्गो न भवतीति तद्व्यक्तित्वावच्छिन्नप्रतियोगितासंबन्धेन द्रव्यत्वावच्छिन्नस्य भेदेऽन्वयो न संभवतीत्यर्थः । अत्र प्रमाणमाह—प्रतियोगिविशेषितेति, पूर्वमेव ( २९पृ० ) इदं वाक्यं व्याख्यातं तथा चात्र द्रव्यत्वावच्छिन्नभेदबोधे द्रव्यत्वस्यैव भेदप्रतियोगितावच्छेदकत्वेन भानं संभवति न तु तद्व्यक्तित्वस्येत्यर्थः । उक्तमुपसंहरन्नाह—अन्वयितेति, 'चैत्रो द्रव्यं गच्छति' इत्यत्र द्वितीयार्थभेदे परत्वस्वरूपे द्रव्यस्यान्वयः प्रतियोगितासंबन्धेन कर्तव्य इति अन्वयितावच्छेदकं यद्द्रव्यत्वं तदवच्छिन्नप्रतियोगिताया एव संबन्धत्वं संभवति न तु अन्वयितानवच्छेदकं यत् तद्व्यक्तित्वं तदवच्छिन्नाया अपि, तथा च 'चैत्रो द्रव्यं गच्छति' इत्यत्र तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदग्रहणासंभवाद् द्रव्यत्वावच्छिन्नप्रतियोगिताकभेद एव ग्राह्यस्तादृशभेदस्तु चैत्रे नास्तीत्यप्रामाण्यं स्यादेव, एवमेव 'मल्लो मल्लं गच्छति' इत्यस्याप्रामाण्यं विज्ञेयमित्यर्थः। इत्येवमाशङ्क्य परिहरति—तर्हीति, क्रियान्वयिभेदप्रतियोगितावच्छेदकत्वं द्वितीयार्थो न तु परत्वम्, क्रियान्वयिनः क्रियाश्रयस्य चैत्रादेर्भेदः क्रियान्वयिभेदः, क्रियान्वयिभेदप्रतियोगितावच्छेदकत्वस्य द्वितीयार्थभूतस्यात्र क्रियायामेवान्वयो ज्ञेयः । भेदश्च स्वनिष्ठसंयोगजनकक्रियावान्न इत्याकारको ग्राह्य एतादृशभेदप्रतियोगितावच्छेदिका च क्रियैव एतादृशभेदश्च ग्रामादौ फलशालिनि कर्मभूतपदार्थे वर्तते इति भेदे प्रकृत्यर्थस्य ग्रामादेराधेयतासंबन्धेनान्वय इत्यर्थः, परसमवेतक्रियाफलशालित्वं कर्मत्वमिति न वक्तव्यं किं तु स्वनिष्ठभेदप्रतियोगितावच्छेदकक्रियाफलशालित्वं कर्मत्वमिति वक्तव्यमिति यावत्, तथा च 'ग्रामं गच्छति चैत्रः' इत्यत्र स्वनिष्ठसंयोगजनकक्रियावान्न इत्याकारकभेदश्चैत्रे तु नास्त्येव चैत्रस्य ग्रामनिष्ठसंयोगजनकक्रियाश्रयत्वादेव किं तु तादृशभेदो ग्रामे वर्तते ग्रामस्य क्रियाश्रयत्वाभावादिति ग्रामवृत्तितादृशभेदप्रतियोगी क्रियावान् चैत्र एव चैत्रनिष्ठाया भेदप्रतियोगिताया अवच्छेदिका च चैत्रनिष्ठा ग्रामवृत्तिसंयोगज-

न चैवमपि 'विहगो भूमिं प्रयाति' इतिवत् 'विहगो विहगं गच्छति' इतिप्रयोगो दुर्वारः—विहगनिष्ठभूमिसंयोगजनकतक्रियाया विहगान्तरनिष्ठभेदप्रतियोगितावच्छेदकतया विहगे विहगनिष्ठभेदप्रतियोगितावच्छेदकविहगवृत्तिसंयोगजनकक्रियाश्रयत्वस्याऽबाधितत्वादिति वाच्यम्, 'विहगो विहगं गच्छति' इत्यादौ विहगादिप्रकृत्यर्थवृत्तित्वविशिष्टसंयोगस्य क्रियायां स्वजनकत्वस्वाश्रय-

---

निका सा क्रियैव तादृशक्रियाजन्यसंयोगाश्रयत्वेन ग्रामस्य कर्मत्वसंभवात् 'ग्रामं गच्छति चैत्रः' इति प्रयोग उपपन्नः। एवं द्रव्यनिष्ठो यः स्वनिष्ठसंयोगजनकक्रियावान्न इत्याकारकभेदस्तत्प्रतियोगितावच्छेदिका या चैत्रनिष्ठा क्रिया तज्जन्यसंयोगाश्रयत्वेन द्रव्यस्य कर्मत्वात् 'चैत्रो द्रव्यं गच्छति' इति प्रयोगोऽप्युपपन्नः। एवं १मल्लान्तरनिष्ठसंयोगस्य २मल्लान्तरनिष्ठक्रियाजन्यत्वेन १मल्लान्तरनिष्ठो यः स्वनिष्ठसंयोगजनकक्रियावान्न इत्याकारको भेदस्तत्प्रतियोगी २मल्लान्तर एवेति तादृशभेदप्रतियोगितावच्छेदिका या प्रतियोगिभूत२मल्लान्तरनिष्ठा क्रिया तज्जन्यसंयोगाश्रयत्वेन भेदानुयोगिभूत१मल्लान्तरस्य कर्मत्वसंभवात् 'मल्लो मल्लं गच्छति' इत्यपि प्रयोग उपपन्नः। स्वनिष्ठसंयोगजनकक्रियावान्न इत्याकारकभेदश्चैत्रे तु न संभवति चैत्रस्य स्वनिष्ठसंयोगजनकक्रियाश्रयत्वादेवेति स्वनिष्ठभेदप्रतियोगितावच्छेदकक्रियाजन्यफलशालित्वविरहेण चैत्रस्य कर्मत्वासंभवात् 'चैत्रश्चैत्रं गच्छति', 'चैत्रः स्वं गच्छति', 'चैत्रः स्वमात्मानं गच्छति' इत्यादिप्रयोगापत्तिरपि नास्तीत्याह— न काचिदिति।

ननु स्वनिष्ठसंयोगजनकक्रियावान्न इत्याकारको यो भूमिनिष्ठो भेदस्तत्प्रतियोगितावच्छेदिका या संयोगजनकक्रियाश्रयीभूतविहगनिष्ठा क्रिया तज्जन्यसंयोगाश्रयत्वेन भूमेः कर्मत्वसंभवाद् यथा 'विहगो भूमिं प्रयाति' इति प्रयोगो भवति तथा 'विहगो विहगं (स्वम्) गच्छति' इत्यपि प्रयोगः स्यादेव, विहगनिष्ठक्रियायां विहगनिष्ठो यो भूमिसंयोगस्तज्जनकत्वमप्यस्ति विहगान्तरनिष्ठो यो भेदस्तादृशभेदप्रतियोग्ययमेव विहग इति विहगान्तरनिष्ठभेदप्रतियोगितावच्छेदकत्वमप्यस्त्येव तथा च विहगे स्वनिष्ठभेदप्रतियोगितावच्छेदकीभूतक्रियायाः फलस्य संयोगस्य सत्त्वात् कर्मत्वमपि प्राप्तं विहगनिष्ठभेदप्रतियोगितावच्छेदिकाया विहगवृत्तिसंयोग (भूमिसंयोग) जनिकायाः क्रियाया आश्रयत्वमप्यस्त्येवेति विहगकर्मकगमनानुकूलव्यापारकर्तृत्वमपि प्राप्तम् उक्तक्रियाश्रयस्यैव गमनकर्तृत्वादिति एकस्यैव विहगस्य कर्तृत्वकर्मत्वोभयतात्पर्येणापि 'विहगो विहगं गच्छति' इति प्रयोगो दुर्वार एवेत्याशङ्क्याह— न चैवमिति। परिहारमाह— विहग इति। 'ग्रामं गच्छति', 'विहगो भूमिं गच्छति' इत्यादौ भूम्यादिप्रकृत्यर्थनिष्ठसंयोगस्य तादृशसंयोगजनकक्रियायां न केवलं स्वजनकत्वसंबन्धेनान्वय इष्टो येन 'विहगो विहगं गच्छति'. इतिप्रयोगापत्तिः स्यात् किं तु स्वजनकत्वस्वाश्रयनिष्ठभेदप्रतियोगितावच्छेदकत्वैतदुभयसंबन्धेनान्वयो भवति, स्वं संयोगः, अत्र संयोगजनकचैत्रविहगादिनिष्ठक्रियायां संयोगजनकत्वमप्यस्ति संयोगाश्रयीभूतभूम्यादिनिष्ठभेदप्रतियोगितावच्छेदकत्वमप्युक्तरीत्याऽस्त्येवेत्येतादृशोभयसंबन्धेन भूम्यादिवृत्तित्वविशिष्टसंयोगस्य

निष्ठभेदप्रतियोगितावच्छेदकत्वोभयसंबन्धेनान्वयोपगमात्, विहगनिष्ठक्रियायास्तद्विहगनिष्ठसंयोगजनकत्वेन तज्जनकतासंबन्धेन तत्संयोगवत्त्वेऽपि विहगवृत्तित्वविशिष्टतत्संयोगाश्रयतद्विहगनिष्ठभेदप्रतियोगितावच्छेदकत्वाभावान्नोक्तोभयसंबन्धेन विशिष्टसंयोगवत्त्वमित्यनतिप्रसङ्गात् । एवं सति परसमवेतत्वं संबन्धघटकमेव न तु द्वितीयार्थ इति चेत् ?, का क्षतिः ।

'विहगो विहगेन गम्यते' इत्यादावपि स्वजन्यत्वस्वावच्छिन्नभेदसामानाधिकरण्योभयसंबन्धेन क्रियायाः संयोगेऽन्वय इष्यते तत्तत्क्रियावच्छिन्नभेदवति

---

विहगादिनिष्ठायां संयोगजनकक्रियायामन्वय इति तत्संभवात् । 'विहगो भूमिं गच्छति' 'चैत्रो ग्रामं गच्छति' इत्यादयः प्रयोगा भवन्ति, :'विहगो विहगं (स्वं) गच्छति' इत्यत्र विहगनिष्ठक्रियायास्तद्विहगनिष्ठसंयोगजनकत्वमस्त्येवेति तज्जनकतासंबन्धेन=स्व (संयोग) जनकत्वसंबन्धेन तत्संयोगवत्त्वेऽपि (संयोगस्य स्वजनकत्वसंबन्धेन क्रियायामन्वयसंभवेऽपि) तस्याः क्रियाया विहगवृत्तित्वविशिष्टो यस्तत्संयोगस्तदाश्रयीभूतो यस्तद्विहगस्तन्निष्ठो यो भेदस्तादृशभेदप्रतियोगितावच्छेदकत्वं नास्त्येव यतस्तन्निष्ठभेदस्य प्रतियोगितावच्छेदकस्तद्वृत्तिधर्मो न भवति किं तु तद्भिन्नप्रतियोगिवृत्तिधर्म एव भवतीति तद्विहगनिष्ठभेदस्य प्रतियोगितावच्छेदिका तद्विहगनिष्ठा क्रिया कथं स्यादिति तद्विहगनिष्ठसंयोगजनकतद्विहगवृत्तिक्रियायां तद्विहगनिष्ठभेदप्रतियोगितावच्छेदकत्वं नास्तीति न तादृशसंयोगस्य तत्क्रियायां स्वाश्रयनिष्ठभेदप्रतियोगितावच्छेदकत्वसंबन्धेनान्वयः संभवतीत्युक्तोभयसंबन्धेन संयोगविशिष्टक्रियाया अलाभाद् उक्तोभयसंबन्धेन सयोगविशिष्टक्रियाजन्यसंयोगाश्रयत्वमत्र विहगस्य नास्तीति न विहगस्य कर्मत्वं किं चोक्तोभयसंबन्धेन संयोगविशिष्टक्रियाश्रयत्वं विहगस्य नास्तीति न विहगस्य कर्तृत्वमिति 'विहगो विहगं गच्छति' इत्यादिप्रयोगापत्तिरूपोऽतिप्रसङ्गो नास्तीत्यर्थः । विशिष्टसंयोगवत्त्वम्=विहगादिप्रकृत्यर्थवृत्तित्वविशिष्टसंयोगवत्त्वम् (क्रियायां नास्तीत्यन्वयः) । ननु फलजनिका या स्वनिष्ठभेदप्रतियोगितावच्छेदिका क्रिया सा परसमवेतक्रियैव भवति तादृशक्रियैकदेशपरसमवेतत्वस्य द्वितीयार्थत्वं यदुक्तं तदिदानीं न स्यात् स्वनिष्ठभेदप्रतियोगितावच्छेदकत्वस्योक्तरीत्या संबन्धत्वाश्रयणेन तद्घटकपरसमवेतत्वस्यापि संबन्धकोटिप्रविष्टत्वादित्याशङ्कते— एवं सतीति । परिहरति— का क्षतिरिति, परसमवेतत्वस्य द्वितीयार्थत्वाभावे क्षतिर्नास्तीत्यर्थः । अन्येन विहगेन विहगान्तरं प्रत्यनुधावने तु 'विहगो विहगं गच्छति' इति प्रयोग इष्ट एव ।

कर्माख्यातान्तप्रयोगमुदाहरति— विहग इति । 'भूमिर्विहगेन गम्यते' इत्यादावाश्रयत्वमाख्यातार्थः, विहगकर्तृकव्यापारजन्यसंयोगाश्रयो भूमिरितिबोधोदयाद् विहगनिष्ठक्रियायाः स्वजन्यत्वस्वावच्छिन्नभेदसामानाधिकरण्यैतदुभयसंबन्धेन संयोगेऽन्वयः, स्वं क्रिया, संयोगे क्रियाजन्यत्वमप्यस्ति क्रियावच्छिन्नप्रतियोगिताकभेदसामानाधिकरण्यमप्यस्तीति तदुभयसंबन्धेन संयोगे क्रियान्वयः, स्वावच्छिन्नभेदपदेन पूर्वोक्त एव भूम्यादिनिष्ठः क्रियावान्न इत्याकारकः क्रियावच्छि-

भूम्यादावेव तादृशभेदसामानाधिकरण्यसंबन्धेन तत्तत्क्रियाविशिष्टसंयोगादि-मत्त्वोपगमात् तत्र तत्क्रियाश्रयविहगे तद्बाधेन नातिप्रसङ्ग इतिध्येयम् ।

ज्ञानादिरूपसविषयकवस्त्वभिधायकधातुसमभिव्याहृताद्वितीयायाः प्राचीनमते निरूपकतासंबन्धेन धात्वर्थान्वयि विषयत्वमर्थः, तत्र प्रकृत्यर्थस्याधेयतासंबन्धेनान्वयः । वृत्त्यनियामकसंबन्धस्याभावप्रतियोगितानवच्छेदकतया ' घटं जानाति पटं न ' इत्यादावनुपपत्तेस्तत्र विषयित्वार्थकत्वमेव नवीना उपवर्णयन्ति तत्र च प्रकृत्यर्थस्य निरूपितत्वसंबन्धेन तस्य च धात्वर्थे आश्रयतासंबन्धेनान्वयः,

---

न्नप्रतियोगिताकभेदो ग्राह्यः स च भेदः संयोगश्च भूम्यादावस्तीति संयोगे तादृशभेदसामानाधिकरण्यमप्यस्त्येव, तत्तत्क्रियावच्छिन्नभेदवति=संयोगादिरूपफलजनकक्रियावच्छिन्नप्रतियोगिताकभेदवति ; भूम्यादावेव तादृशभेदसामानाधिकरण्यसंबन्धेन=क्रियावच्छिन्नप्रतियोगिताकभेदसामानाधिकरण्यरूपसंबन्धेन तत्तत्क्रियाविशिष्टोक्तसंयोगादिमत्त्वोपगमात् ' भूमिर्विहगेन गम्यते ' इत्यादिप्रयोगो भवतीत्यर्थः । तत्क्रियाश्रयविहगे=संयोगजनकक्रियाश्रयविहगे तु तद्बाधेन=उक्ततादृशभेदसामानाधिकरण्यसंबन्धेन तत्क्रियाविशिष्टसंयोगादिमत्त्वबाधेन नातिप्रसङ्गः=' विहगो विहगेन गम्यते ' इत्यादिप्रयोगापत्तिर्नास्ति— विहगस्योक्ततादृशभेदप्रतियोगित्वाद् भेदाश्रयत्वमेव नास्ति येन तादृशभेदसामानाधिकरण्यसंबन्धेन क्रियाविशिष्टत्वं विहगनिष्ठसंयोगस्य स्यात् तेन च ' विहगो विहगेन गम्यते ' इत्यादिप्रयोगापत्तिः स्यादित्याह— तत्रेति । तत्र=' विहगो विहगेन गम्यते ' इत्यत्र । विहगेन स्वभिन्नविहगं प्रत्यनुधावने तु ' विहगो विहगेन गम्यते ' इति प्रयोग इष्ट एव ।

प्राचीनमतेन ज्ञादिधात्वर्थमाह— ज्ञानादीति, ज्ञानादिरूपं यत्सविषयकं वस्तु=अर्थस्तदभिधायको यो ज्ञादिधातुस्तत्समभिव्याहृतायाः ' घटं जानाति ' इत्यादौ द्वितीयायाः प्राचीनमते विषयत्वमर्थः तस्य च विषयत्वस्य निरूपकतासंबन्धेन धात्वर्थज्ञानादावन्वयः— घटादिनिष्ठविषयत्वस्य ज्ञाननिरूपितत्वेन तन्निरूपकत्वं ज्ञानेऽस्ति, तत्र=द्वितीयार्थविषयत्वे प्रकृत्यर्थस्य घटादेराधेयतासंबन्धेनान्वयः, आश्रयत्वं चाख्यातार्थ इति घटवृत्तिविषयतानिरूपकज्ञानाश्रयश्चैत्र इति शाब्दबोधाकार इत्यर्थः । नवीनमतमाह— वृत्त्यनियामकेति, विषयत्वस्य द्वितीयार्थत्वे तस्योक्तरीत्या निरूपकतासंबन्धेनैव धात्वर्थज्ञानेऽन्वयो वक्तव्यस्तथा च ' घटं जानाति पटं न ' इत्यत्र पटपदोत्तरद्वितीयार्थविषयत्वस्य निरूपकतासंबन्धेनैव धात्वर्थज्ञानेऽभावो वक्तव्यः— निरूपकतासंबन्धेन पटवृत्तिविषयत्वाभाववज्ज्ञानाश्रयश्चैत्र इति, तत्र निरूपकतासंबन्धस्य वृत्त्यनियामकतयाऽभावीयप्रतियोगितावच्छेदकत्वं न संभवतीति न विषयत्वं द्वितीयार्थः किं तु विषयित्वमेव तत्र=विषयित्वे प्रकृत्यर्थघटादेर्निरूपितत्वसंबन्धेनान्वयः— ज्ञानादिनिष्ठविषयित्वस्य ज्ञानादिविषयीभूतघटादिनिरूपितत्वात्, तस्य=विषयित्वस्य च धात्वर्थे ज्ञानादावाश्रयत्वसंबन्धेनान्वयस्तथा चाश्रयतासंबन्धस्य वृत्तिनियामकत्वेनाभावीयप्रतियोगितावच्छेदकत्वादाश्रयतासं

घटादिनिष्ठं ज्ञानादिकर्मत्वं च ज्ञानादिविषयित्वमेव, विषयित्वादौ च द्वितीयाया लक्षणैव न तु शक्तिरिति सांप्रदायिकाः ।

वस्तुतस्तु विषयितात्वस्य संयोगत्वाद्यपेक्षयाऽऽधेयत्वाद्यपेक्षया चाऽगुरुतया किंधर्मावच्छिन्ने शक्तिः कल्प्यते इत्यत्र विनिगमकं दुर्लभम् । एकस्मिन् प्रयोगभूयस्त्वमप्यऽशक्यनिर्णयमिति तत्रापि शक्तिः सिध्यतीत्यवधेयम् ।

'चैत्रेण ज्ञायते घटः' इत्यादौ कर्माख्यातस्थले आख्यातेन घटादौ धात्वर्थनिरूपितविषयत्वं बोध्यते ।

चाक्षुषत्वाद्यवच्छिन्नवाचकदृश्यादिसमभिव्याहृतद्वितीयाया लौकिकविषयित्वं तादृशकर्माख्यातस्य लौकिकविषयत्वमर्थः– उपनीतसौरभादिविषयकसुरभिचन्दनमित्याद्याकारकचाक्षुषादिदशायाम् 'सौरभं पश्यति' इति 'सौरभं दृश्यते' इत्याद्यऽप्रयोगात् ।

---

त्वेन ज्ञाने द्वितीयार्थविषयित्वस्याभाव उपपद्यते एवेति 'घटं जानाति पटं न' इत्यत्र नोक्तानुपपत्तिः– आश्रयतासंबन्धेन पटनिरूपितविषयित्वाभाववज्ज्ञानाश्रयश्चैत्र इति बोधस्याकार इत्यर्थः । ननु घटादिनिष्ठं यज्ज्ञानादिकर्मत्वम् (विषयत्वं) तदेव द्वितीयार्थो युक्तो न तु ज्ञानादिनिष्ठविषयित्वस्य घटादिपदोत्तरद्वितीयार्थत्वं युक्तं वैयधिकरण्यादित्याशङ्क्याह– घटादीति, विषयित्वमपि निरूपकतासंबन्धेन घटादौ वर्तते एवेति घटादिनिष्ठं यज्ज्ञानादिकर्मत्वं तदिदानीं ज्ञानादिविषयित्वरूपमेव विज्ञेयमित्यर्थः । द्वितीयाया विषयत्वादावेव शक्तिरिति विषयित्वादौ लक्षणैवेत्याह– विषयित्वादाविति ।

स्वाभिप्रायमाह– वस्तुतस्त्विति, किंधर्मावच्छिन्ने=विषयितात्वादिकिंधर्मावच्छिन्ने । तथा च विषयित्वेपि द्वितीयायाः शक्तिरेवेत्यर्थः । यदि संयोगत्वाद्यपेक्षया विषयितात्वं गुरु स्यात्तदा गुरुधर्मावच्छिन्नविषयित्वापेक्षया संयोगादौ द्वितीयायाः शक्तिस्वीकारे लाघवेन विषयित्वे शक्तेरनुपपत्तिः स्यादपि न चैवमस्तीतिभावः । एकस्मिन्=संयोगादौ, विषयित्वसंयोगाद्यर्थेषु द्वितीयायाः समान एव प्रयोग इत्यर्थः । अशक्यो निर्णयोऽनेनेत्यशक्यनिर्णयम् । तत्र=विषयित्वेपि ।

कर्माख्यातप्रयोगमुदाहरति– चैत्रेणेति, घटादौ धात्वर्थज्ञानादिनिरूपितं यद् विषयत्वं तदेव कर्माख्यातार्थ इत्यर्थः, 'चैत्रवृत्तिज्ञानविषयो घटः' इतिबोधः ।

'घटं पश्यति' इत्यत्र द्वितीयाया लौकिकविषयित्वमर्थः,आख्यातस्याश्रयत्वमर्थ इति घटनिरूपितविषयिताश्रयचाक्षुषलौकिकप्रत्यक्षाश्रयश्चैत्र इतिबोधः । ज्ञानस्य लौकिकालौकिकरूपत्वेन द्वैविध्यमन्यत्र प्रतिपादितं ज्ञेयम् । 'घटो दृश्यते' इत्यत्र च तादृशकर्माख्यातस्य=चाक्षुषत्वाद्यवच्छिन्नवाचकदृश्यादिसमभिव्याहृतकर्माख्यातस्य लौकिकविषयत्वमर्थ इति– लौकिकचाक्षुषप्रत्यक्षनिरूपितविषयत्वाश्रयो घट इतिबोधः– विषयत्वस्य घटे आश्रयतासंबन्धेनान्वयात् । विषयित्वविषयत्वयोर्लौकिकत्वविशेषणस्य फलमाह– उपनीतेति, 'सुरभि चन्दनम्' इत्याकारकोपनी-

**अथैवम् ' पुष्पं जिघ्रति ' इत्यादि प्रयोगानुपपत्तिः—घ्राणजप्रत्यक्षस्य पुष्पाद्यंशे लौकिकत्वविरहात्, तादृशधातुयोगे विषयित्वादिसामान्यस्य कर्मप्रत्ययार्थत्वे गन्धसाक्षात्कारे उपनयमर्यादयाऽऽकाशादिभाने ' आकाशं जिघ्रति ' इति-प्रयोगप्रसङ्गेन तत्रापि लौकिकविषयिताया एव कर्मप्रत्ययार्थतयोपगन्तव्यता-**

---

तत्सौरभादिविषयकचाक्षुषप्रत्यक्षदशायां सौरभस्य ज्ञानलक्षणप्रत्यासत्त्यैव भानं भवति न लौकिकप्रत्यक्षेण— सौरभस्य चाक्षुषप्रत्यक्षाऽविषयत्वादिति ' सौरभं पश्यति ' ' सौरभं दृश्यते ' इत्यादि प्रयोगो न भवति— अत्र द्वितीयायाश्चाक्षुषप्रत्यक्षनिष्ठलौकिकविषयित्वार्थकत्वासंभवात् कर्माख्यातस्य च चाक्षुषप्रत्यक्षनिरूपितलौकिकविषयत्वार्थकत्वासंभवादित्यर्थः । अयं भावः यदि ' घटं पश्यति ' इत्यत्र लौकिकविषयित्वं द्वितीयार्थो नोच्येत किं तु विषयित्वमेव द्वितीयार्थ उच्येत तदा ' सुरभि चन्दनखण्डम् ' इत्याकारकोपनीतसौरभविषयकचाक्षुषप्रत्यक्षदशायां तादृशप्रत्यक्षेपि विषयितायाः सत्त्वात् ' सौरभं पश्यति ' इतिप्रयोगः स्यादेव चैतदिष्टमिति द्वितीयार्थविषयितायां लौकिकत्वविशेषणं प्रक्षिप्तं तथा च ' सुरभि चन्दनखण्डम् ' इत्याकारकप्रत्यक्षेऽलौकिकविषयितायाः सत्त्वेन लौकिकविषयिताया असत्त्वात् ' सौरभं पश्यति ' इतिप्रयोगो न भवति— प्रत्यक्षे द्वितीयार्थभूताया लौकिकविषयिताया बाधात् । एवमेव ' सौरभं दृश्यते ' इतिप्रयोगस्योक्तदशायां वारणार्थं लौकिकविषयत्वं कर्माख्यातार्थ इत्युक्तम्, ' सुरभि चन्दनखण्डम् ' इत्याकारकोपनीतभानदशायां सौरभेऽलौकिकविषयतायाः सत्त्वेन लौकिकविषयताया बाधादिति ।

ननु यदि चाक्षुषत्वाद्यवच्छिन्नवाचकदृश्यादिधातुसमभिव्याहृतद्वितीयाया लौकिकविषयित्वमर्थस्तदा ' पुष्पं जिघ्रति ' इति प्रयोगो न स्यात्— घ्राणजप्रत्यक्षविषयता हि गन्धे वर्तते न द्रव्यरूपे पुष्पेपीति पुष्पनिरूपितलौकिकविषयिताया घ्राणजप्रत्यक्षे बाधादित्याशङ्कते— अथेति । ननु तादृशधातुयोगे=चाक्षुषत्वाद्यवच्छिन्नवाचकघ्रादिधातुयोगे ' पुष्पं जिघ्रति ' इत्यादौ लौकिकालौकिकसाधारणमेव सामान्यतो विषयित्वं द्वितीयादिकर्मप्रत्ययार्थ इति ' पुष्पं जिघ्रति ' इत्यत्र पुष्पपदोत्तरद्वितीयाया अलौकिकविषयित्वमेवार्थ इति नानुपपत्तिरित्याशङ्क्याह— तादृशेति, एवं हि ' अत्राकाशे गन्धः ' इत्याकारकगन्धप्रत्यक्षे उपनयमर्यादया=ज्ञानलक्षणप्रत्यासत्त्याऽऽकाशस्यापि भानं भवतीति ' आकाशं जिघ्रति ' इतिप्रयोगापत्तिः स्यात्— आकाशपदोत्तरद्वितीयाया अलौकिकविषयित्वार्थकत्वेनाकाशविषयकाऽलौकिकविषयिताश्रयघ्राणजप्रत्यक्षसंभवात्, न च ' आकाशं जिघ्रति ' इतिप्रयोगो भवतीति तद्वारणाय लौकिकविषयितैव द्वितीयार्थ इत्युपगन्तव्यं तथा चाकाशनिरूपितलौकिकविषयिताया घ्राणजप्रत्यक्षे बाधात् ' आकाशं जिघ्रति ' इति प्रयोगस्तु न भविष्यति किं त्वेवं तत्रापि=' पुष्पं जिघ्रति ' इत्यत्रापि लौकिकविषयितैव द्वितीयार्थः स्यादिति पुष्पनिरूपितलौकिकविषयिताया घ्राणजप्रत्यक्षे बाधात् ' पु

दिति चेत्?, न- घ्राधातोर्हि गन्धलौकिकप्रत्यक्षत्वं शक्यतावच्छेदकम्- "घ्रा गन्धोपादाने" इत्यनुशासनात्, तत्समभिव्याहृतद्वितीयायाश्चाधेयत्वमेवार्थस्तस्य च व्युत्पत्तिवैचित्र्येण गन्धादिरूपधात्वर्थैकदेशेनान्वयः. एवं च 'पुष्पं जिघ्रति' इत्यादितः पुष्पवृत्तिगन्धलौकिकप्रत्यक्षाश्रयतावानित्याकारक एव शाब्दबोधो न तु पुष्पनिरूपितलौकिकविषयिताशालिप्रत्यक्षाश्रय इत्याकारक इति नानुपपत्तिः।

न चैवं सविषयार्थबोधकधातुसमभिव्याहृतकर्मप्रत्ययस्य विषयितार्थकत्वनियमभङ्गप्रसङ्ग इति वाच्यम्, विषयानवच्छिन्नतादृशवस्त्वभिधायकधातुसमभिव्याहृतकर्मप्रत्ययस्यैव तदर्थकत्वनियमात्, अस्य च गन्धात्मकविषयावच्छिन्नप्रत्यक्षवाचकतया तादृशनियमस्याऽबाधितत्वात्।

---

जिघ्रति ' इतिप्रयोगानुपपत्तिरित्युभयतः पाशारज्जुरित्यर्थः। परिहरति- नेति, "घ्रा गन्धोपादाने" इत्यनुशासनाद् घ्राधातोर्गन्धविषयकलौकिकप्रत्यक्षं हि शक्यमस्ति, घ्राधातुसमभिव्याहृतद्वितीयायाश्चाऽऽधेयत्वमेवार्थस्तस्य=द्वितीयार्थाधेयत्वस्य च धात्वर्थैकदेशे गन्धेऽन्वयः, तथा च 'पुष्पे गन्धो वर्तते' इति पुष्पस्य गन्धे आधेयत्वसंबन्धेनान्वयसंभवात् 'पुष्पं जिघ्रति' इतिप्रयोग उपपद्यते, आकाशे च समवायेन गन्धासंभवात् ' आकाशं जिघ्रति ' इतिप्रयोगापत्तिर्नास्त्येव- आकाशनिरूपिताधेयत्वस्य द्वितीयार्थस्य गन्धेऽसंभवादित्यर्थः। ' पुष्पं जिघ्रति ' इत्यस्य स्वाभीष्टबोधस्य स्वरूपमाह- एवं चेति, पुष्पवृत्तिर्यो गन्धस्तद्विषयकलौकिकप्रत्यक्षाश्रयश्चैत्र इत्यर्थः। स्वानभीष्टबोधं परिहरति- न त्विति, यदि ' पुष्पनिरूपितलौकिकविषयिताशालिप्रत्यक्षाश्रयः ' इत्याकारकबोधः ' पुष्पं जिघ्रति ' इत्यत्रेष्टः स्यात्तदोक्तरीत्या पुष्पनिरूपिता लौकिकविषयिता घ्राणजप्रत्यक्षे नास्तीति ' पुष्पं जिघ्रति ' इतिप्रयोगानुपपत्तिः स्यादपि न चैवमस्तीत्यर्थः। घ्राधातोर्गन्धलौकिकप्रत्यक्षमेव शक्यमिति गन्धस्यापि धात्वर्थे प्रवेशाद् धात्वर्थैकदेशत्वमुक्तमिति।

ननु यदि घ्राधातुसमभिव्याहृतद्वितीयाया आधेयत्वमर्थस्तदा सविषयकार्थबोधकधातुसमभिव्याहृतद्वितीयादिकर्मप्रत्ययस्य विषयितैवार्थो भवतीति नियमस्य भङ्गः स्याद् घ्राधातोरपि सविषयकार्थकत्वादित्याशङ्क्याह- न चेति। परिहारमाह- विषयेति, विषयानवच्छिन्नं यत् तादृशवस्तु=सविषयकार्थस्तदभिधायकधातुसमभिव्याहृतस्यैव कर्मप्रत्ययस्य तदर्थकत्वनियमात्=विषयितार्थकत्वनियमाद् यथा- ' घटं जानाति ' इत्यत्र ज्ञाधातुर्विषयानवच्छिन्नसविषयकार्थ ( ज्ञान ) बोधकोस्ति-ज्ञाधात्वर्थज्ञानस्य सविषयकपदार्थत्वाद् रूपगन्धादिविषयैरनवच्छिन्नत्वाच्चेत्यत्र घटपदोत्तरद्वितीयाया विषयित्वमर्थः- घटनिरूपितविषयिताश्रयज्ञानवानिति बोधोदयादित्यर्थः। अस्य=घ्राधातोस्तु "घ्रा गन्धोपादाने" इत्यनुशासनाद् गन्धलक्षणविषयावच्छिन्नसविषयकप्रत्यक्षार्थवाचकतया ' पुष्पं जिघ्रति ' इत्यादौ पुष्पादिपदोत्तरद्वितीयाया आधेयतार्थकत्वेपि तादृशनियमस्य=सविषयकार्थबोधकधातुसमभिव्याहृतस्य कर्मप्रत्ययस्य द्वितीयादेर्विषयितार्थकत्वनियमस्य अबाधितत्वात्=भङ्गासंभवात्, तादृशनियमस्यात्राऽप्राप्तेरित्यर्थः।

न च घ्राधातुसमभिव्याहृतद्वितीयाया गन्धान्विताधेयत्वार्थकत्वे 'आमोदमुपजिघ्रति' इत्यादेरनुपपत्तिः- गन्धविशेषरूपामोदपदार्थाऽऽधेयत्वस्य गन्धे बाधादिति वाच्यम्, विषयावच्छिन्नप्रत्यक्षार्थकघ्राधातुसमभिव्याहृतद्वितीयाया एवाधेयतार्थकत्वनियमात्, तत्र विषयानवच्छिन्नस्यैव प्रत्यक्षविशेषस्य लक्षणया घ्राधात्वर्थतोपगमेन विषयिताया एव तदर्थत्वात्।

वस्तुतस्तु 'पुष्पं जिघ्रति' इत्यादौ समवायसंबन्धावच्छिन्नाधेयत्वसंसर्गावच्छिन्नविषयतानिरूपितप्रकारतैव द्वितीयार्थः, तस्याश्च गन्धनिरूपितलौकिकविषयिताशालिप्रत्यक्षात्मकधात्वर्थैकदेशे विषयितायां निरूपितत्वसंबन्धेनान्वयः,तेन 'इदानींतनपुष्पे गन्धः' इत्यादिप्रत्ययस्याधेयतासंसर्गेण कालादिप्रकारकत्वेपि

---

ननु यदि 'पुष्पं जिघ्रति' इत्यादौ पुष्पपदोत्तरद्वितीयाया घ्राधातुसमभिव्याहृताया आधेयतासंबन्धेन गन्धान्वितम् ( गन्धे वर्तमानम् ) आधेयत्वमर्थस्तदा 'आमोदमुपजिघ्रति' इत्यादि प्रयोगो नोपपद्येत- यथा 'पुष्पं जिघ्रति' इत्यत्र गन्धे पुष्पवृत्तित्वम् ( पुष्पाधेयत्वम् ) अस्ति तथात्र गन्धस्यामोदवृत्तित्वं नोपपद्यते- आमोदस्य गन्धविशेषरूपत्वेन गन्धे गन्धासंभवाद् गुणे गुणानङ्गीकारादित्याशङ्कते- न चेति। परिहरति- विषयावच्छिन्नेति, 'पुष्पं जिघ्रति' इत्यत्र घ्राधातोर्गन्धात्मकविषयावच्छिन्नघ्राणजप्रत्यक्षवाचकत्वमस्तीत्यत्राधेयत्वमेव द्वितीयार्थः, तत्र- 'आमोदमुपजिघ्रति' इत्यत्र तु घ्राधातोर्गन्धाद्यात्मकविषयैरनवच्छिन्न एव घ्राणजप्रत्यक्षे लक्षणास्तीति नात्र द्वितीयाया आधेयत्वार्थकत्वापत्तिः किं त्वत्र द्वितीयाया विषयित्वमेवार्थस्तथा चामोदनिरूपितविषयितायाः प्रत्यक्षे संभवान्नात्र काचिदनुपपत्तिः- आमोदनिरूपितविषयिताश्रयज्ञानवानिति बोध इत्यर्थः। तदर्थत्वात्=द्वितीयार्थत्वात्।

स्वाभिप्रायं प्रकटयति- वस्तुतस्त्विति। समवायेति- द्वितीयार्थभूता चैषा प्रकारता पुष्पे विज्ञेया सा च प्रकारता गन्धे विषयतां विनाऽनुपपन्नत्वाद् गन्धनिष्ठविषयतानिरूपितास्ति. गन्धनिष्ठा च विषयता आधेयतासंबन्धावच्छिन्ना विज्ञेया "घ्रा गन्धोपादाने" इत्यनुशासनाद्धात्वर्थैकदेशभूतगन्धस्य पुष्पवृत्तित्वेन गन्धे आधेयताया घ्राणजप्रत्यक्षविषयतायाश्च सत्त्वात् तयोरवच्छेद्यावच्छेदकभावस्य सुस्पष्टत्वात्. आधेयताप्येषा समवायसंबन्धावच्छिन्ना ग्राह्या गन्धे आधेयतायाः पुष्पानुयोगिकसमवायस्यापि च सत्त्वेन तयोरवच्छेद्यावच्छेदकभावस्यापि विस्पष्टत्वादितीन्वयः, समवायसंबन्धावच्छिन्नाधेयतानिवेशेन यत्र पुष्पादौ गन्धः समवायेन भवति तादृशपुष्पादिकमुद्दिश्य 'पुष्पं जिघ्रति' इत्यादिः प्रयोगो भवति यत्र च कालादौ गन्धः समवायेन न वर्तते तादृशकालादिकमुद्दिश्य 'कालं जिघ्रति' इत्यादिप्रयोगो न भवतीति भावः। तस्याः=द्वितीयार्थभूतप्रकारतायाश्च गन्धनिरूपिता या गन्धप्रत्यक्षनिष्ठा लौकिकविषयिता तादृशविषयिताशालि यद् घ्राधात्वर्थभूतं प्रत्यक्षं तदेकदेशभूतायां विषयितायां निरूपितत्वसंबन्धेनान्वयः विषयिताविशिष्टप्रत्यक्षस्य धात्वर्थत्वेन विषयिताया धात्वर्थैकदेशत्वं प्राप्तं तादृशविषयिता

तादृशप्रत्यक्षदशायां न 'कालं जिघ्रति' इत्यादिप्रयोगः—तादृशज्ञानीयगन्धादिविषयितायां कालादिप्रकारतानिरूपितत्वविरहात्, अत एव "तदाननं मृत्सुरभि क्षितीश्वरो रहः समाघ्राय न तृप्तिमाययौ" इत्यादौ "आघ्रातवान् गन्धवहं सुगन्धम्" इत्यादौ चोपाधिनिष्ठगन्धग्रहतात्पर्येणैव जिघ्रतेः प्रयोगात् तादृशगन्धे चाऽऽननगन्धवहादिवृत्तित्वस्य बाधेऽपि न क्षतिः—तादृशगन्धस्याऽऽननाद्यवृत्तित्वेऽपि 'आनने गन्धः' इत्याकारकबोधीयगन्धविषयिताया आननादिप्रका-

---

पुष्पनिष्ठप्रकारतानिरूपितत्वस्य सत्त्वेन तेन संबन्धेन पुष्पनिष्ठप्रकारताया अन्वयः, तथा च यन्निष्ठप्रकारतानिरूपितत्वं घ्राधात्वर्थप्रत्यक्षनिष्ठविषयितायां संभवति तद्घ्राणनविषयकप्रयोगो भवति यथा 'पुष्पं जिघ्रति' 'गन्धं जिघ्रति' इत्यादिः, 'कालं जिघ्रति' इत्यादिश्च प्रयोगो न भवतीति सिद्धम् । अत्र च यद्यपि 'इदानींतनपुष्पे गन्धः' इत्यत्र 'इदानींतनकालवृत्तिः पुष्पवृत्तिश्च गन्धः' 'इदानींतनकालवृत्तिपुष्पवृत्तिर्गन्धः' इत्याकारकद्विविधबोधस्य यथेच्छं स्वीकारात् कालनिष्ठाधारतानिरूपिताधेयताया अपि गन्धे साक्षादपि पुष्पद्वारापि च सत्त्वात् 'इदानींतनपुष्पे गन्धः' इत्याकारकप्रत्यक्षे गन्धे यथाऽऽधेयतासंसर्गेण पुष्पं प्रकारस्तथाऽऽधेयतासंसर्गेण कालोऽपि प्रकारोऽस्त्येवेति 'इदानींतनपुष्पे गन्धः' इत्याकारकप्रत्यक्षदशायाम् 'पुष्पं जिघ्रति' इतिवत् 'कालं जिघ्रति' इत्यपि प्रयोगः संभवति तथापि तादृशप्रत्यक्षदशायाम्='इदानींतनपुष्पे गन्धः' इत्याकारकप्रत्यक्षदशायाम् 'कालं जिघ्रति' इतिप्रयोगापत्तिर्नास्ति—तादृशज्ञानीयगन्धादिविषयितायाम्=घ्राधात्वर्थप्रत्यक्षनिष्ठगन्धनिरूपितलौकिकविषयितायां कालादिनिष्ठप्रकारतानिरूपितत्वाभावाद्. यन्निष्ठप्रकारतानिरूपितत्वं घ्राधात्वर्थप्रत्यक्षनिष्ठविषयितायां भवति तत्कर्मकस्यैव जिघ्रतिप्रयोगस्य संभवादित्याह—तेनेति, तेन=द्वितीयार्थप्रकारताया उक्तरीत्या प्रत्यक्षीयविषयितायामन्वयेन, किं वा समवायनिवेशेन तथा चात्र कालनिष्ठाधारतानिरूपिताधेयता गन्धनिष्ठा समवायसंबन्धावच्छिन्ना न भवति कालिकसंबन्धावच्छिन्नत्वाद् गन्धस्य काले कालिकसंबन्धेन वृत्तित्वात्, पुष्पनिष्ठाधारतानिरूपिताधेयता तु समवायावच्छिन्ना भवति समवायेनैव गन्धस्य पुष्पवृत्तित्वादित्यर्थः । नन्वेवं नियमे स्वीकृते "तदाननम्" इत्यादिप्रयोगा नोपपद्येरन्—घ्राधात्वर्थप्रत्यक्षनिष्ठविषयितायामाननगन्धवहादिनिष्ठप्रकारतानिरूपितत्वाऽभावात्—गन्धाश्रयीभूतपुष्पमृत्तिकादिनिष्ठप्रकारतानिरूपितत्वस्यैव संभवादित्याशङ्क्याह—अत एवेति, अत एव=उक्तनियमस्वीकारादेव "तदाननम्" इत्यादिस्थलेषु गन्धोपाधिनिष्ठस्यैव=गन्धाश्रयीभूतमृत्तिकादिनिष्ठस्यैव गन्धस्य ग्रहणतात्पर्येण जिघ्रतिप्रयोगोऽस्ति तादृशगन्धे=अत्रत्यगृह्यमाणगन्धे चाननगन्धवहादिवृत्तित्वस्य बाधेऽपि क्षतिः=जिघ्रतिप्रयोगानुपपत्तिर्नास्ति— तादृशगन्धस्य=अत्रत्यगृह्यमाणगन्धस्य मृत्तिकादिवृत्तित्वेनाऽऽननाद्यवृत्तित्वेऽपि "आननं समाघ्राय" इत्यत्र 'आनने गन्धः' इत्येव बोधः स्यात् तादृशबोधीयगन्धविषयितायाः=घ्राधात्वर्थप्रत्यक्षनिष्ठगन्धनिरूपितविषयिताया आननादिनिष्ठप्रकारतानिरूपि-

रतानिरूपितत्वेन वाक्यार्थाऽबाधात् । वाय्वानीतचम्पकगन्धस्य यत्र वाय्वादिवृत्तित्वेनैव ग्रहस्तत्र ' चम्पकं जिघ्रति ' इत्यादिप्रयोगो नेष्यत एव ।

यत्तु आधेयतामात्रं द्वितीयार्थो न तु समवायावच्छिन्नत्वविशेषितमाधेयत्वम्, तथा च मुखादिसंसृष्टमृत्तिकादिगन्धे परम्परासंबन्धेन मुखादिवृत्तित्वस्य सत्त्वान्न तादृशस्थलेऽनुपपत्तिरिति । तदसत्- तथा सति ' कालं जिघ्रति ' इतिप्रयोगस्य दुर्वारत्वात् ।

---

तत्वेन रूपेण वाक्यार्थस्याऽबाधात्-तादृशविषयितायामाननादिनिष्ठप्रकारतानिरूपितत्वस्यासंभवान्नात्र जिघ्रतिप्रयोगानुपपत्तिरित्यर्थः । अत्र च " तदाननम् " इत्यत्र यद्यपि मुखस्यापार्थिवत्वेन तस्मिन्नपि समवायेन गन्धः संभवति तथापि " मृत्सुरभि " इत्युक्त्या गृह्यमाणगन्धो मृत्समवेत एव नाननसमवेत इत्यनुपपत्तिरासीत्, " आघ्रातवान् " इत्यत्र तु वायौ समवायेन गन्धो न भवतीत्यनुपपत्तिरासीत् सैवात्रोद्धृतेति विज्ञेयम् । किं च वाय्वानीतचम्पकगन्धस्य यत्र वायुवृत्तित्वेनैव ग्रहस्तत्र ' चम्पकं जिघ्रति ' इति प्रयोगो न भवति किं तु ' वायुं जिघ्रति ' इत्येव प्रयोगो भवतीत्याह-वाय्वानीतेति, यथाज्ञानमेव प्रयोगसंभवादित्यर्थः ' पुष्पं जिघ्रति ' इत्यत्र ' समवायसंबन्धावच्छिन्नाधेयत्वसंसर्गावच्छिन्नगन्धनिष्ठविषयतानिरूपिता या पुष्पनिष्ठा प्रकारता तन्निरूपिता या गन्धनिरूपितलौकिकविषयिता तादृशविषयिताशालिप्रत्यक्षाश्रयश्चैत्रः ' इतिशाब्दबोधः । यद्यपि काले इव वायावपि समवायेन गन्धो न वर्तते तथापि वायौ सुगन्धत्वाद्यारोपो भवतीति सुगन्धादिपदसान्निध्ये सति " आघ्रातवान् गन्धवहं सुगन्धम् " इत्यादिप्रयोगो भवति काले च सुगन्धत्वाद्यारोपाभावात् ' कालं जिघ्रति ' इति प्रयोगो न भवतीति परमार्थः । ' आघ्रातवान् गन्धवहम् ' इत्यत्र स्वसमवायिसंयुक्तत्वसंबन्धावच्छिन्नाधेयत्वसंसर्गावच्छिन्नविषयतानिरूपितप्रकारता द्वितीयार्थः-गन्धस्य स्वसमवायिसंयुक्तत्वसंबन्धेन वायौ सत्त्वात् तादृशसंबन्धावच्छिन्नाधेयत्वं वायुनिरूपितं गन्धे वर्तते एवं तादृशाधेयत्वसंसर्गावच्छिन्नविषयता च गन्धे प्राप्ता तन्निरूपितप्रकारता च पूर्वोक्तदिशा वायौ प्राप्ता शेषं पूर्ववदेव । स्वं गन्धस्तत्समवायी पार्थिवपरमाणुः पुष्परेणुर्वा तत्संयुक्तत्वं वायावस्तीति तेन संबन्धेन वायावपि गन्धो वर्तते इति चिन्त्यम् ।

ननु ' पुष्पं जिघ्रति ' इत्यादौ समवायसंबन्धावच्छिन्नाधेयत्वं न द्वितीयार्थो वक्तव्यः अर्थात् गन्धादीनां समवायेन यत्पुष्पादिवृत्तित्वं तस्योक्तद्वितीयार्थे प्रवेशो न कर्तव्यः द्वितीयार्थप्रविष्टाधेयत्वं समवायावच्छिन्नं न ग्राह्यमिति यावत् येन "तदाननं मृत्सुरभि" इत्यादौ गन्धस्य समवायेन मृत्तिकावृत्तित्वेन मुखवृत्तित्वाभावादन्वयबोधानुपपत्तिः स्यात् किं तु आधेयत्वमात्रमेव द्वितीयार्थस्तथा च "तदाननं मृत्सुरभि" इत्यादौ परम्परासंबन्धेन=स्वाश्रयाश्रयत्वसंबन्धेन (स्वंगन्धस्तदाश्रयो मृत् तदाश्रयत्वं मुखे ) मृत्तिकानिष्ठगन्धस्यापि मुखादौ वर्तमानत्वेन तादृशस्थले=" तदाननं मृत्सुरभि " इत्यादिस्थले न काचिदन्वयानुपपत्तिः । 'पुष्पं जिघ्रति' इत्यादौ च गन्धस्य

'पुष्पमाघ्रायते' इत्यादौ च निरुक्तप्रकारत्वमाख्यातार्थः, आश्रयतासंबन्धेन पुष्पाद्यन्विते तस्मिन् धात्वर्थप्रत्यक्षस्य निरूपितत्वसंबन्धेन तद्विशेषणतापन्नगन्धविषयितायाश्च निरूपितत्वसंबन्धेनान्वयः । एकधर्मिविशेषणतयोपस्थितस्य स्वातन्त्र्येणान्यविशेषणतयाऽन्वयबुद्धेरेवाऽव्युत्पन्नत्वात्, अत्र च प्रत्यक्षपारतन्त्र्येणैव गन्धविषयिताया आख्यातार्थेऽन्वयेन व्युत्पत्तिविरोधविरहात् ।

अस्तु वा गन्धो लौकिकविषयिता प्रत्यक्षं च विशकलितमेव धातोरर्थः । कर्त्राख्यातादिसमभिव्याहारे गन्धविषयितायाः प्रत्यक्षविशेषणतया कर्माख्यात-

---

साक्षात्संबन्धेनैव पुष्पवृत्तित्वमस्तीत्याशङ्कते—यत्त्विति । परिहरति—तदसदिति, तथा सति= यदि "तदाननम्" इत्यत्र मृत्तिकाद्वारा गन्धस्य मुखवृत्तित्वमाश्रित्य तादृशपारम्परिकवृत्तित्वस्य च द्वितीयार्थत्वमाश्रित्यानुपपत्तिः परिह्रियते तदा गन्धस्य कालिकसंबन्धेन कालेपि वर्तमानत्वेन तादृशकालिकवृत्तित्वस्य द्वितीयार्थत्वाश्रयणेन 'कालं जिघ्रति' इत्यपि प्रयोगापत्तिः स्यादेव न चैतदिष्टमिति समवायावच्छिन्नमेवाधेयत्वं द्वितीयार्थो वक्तव्यस्तथा च गन्धस्य समवायेन कालवृत्तित्वाभावान्न 'कालं जिघ्रति' इति प्रयोगापत्तिः । "तदाननम्" इत्यादिस्थलीयान्वयबोधविचारस्त्वनुपदमेव कृतः ।

कर्माख्यातप्रयोगमुदाहरति—पुष्पमिति, 'पुष्पमाघ्रायते' इत्यत्र निरुक्तम्=गन्धविषयितानिरूपकं प्रकारत्वम्=विषयत्वं कर्माख्यातार्थः, तस्य प्रकारत्वस्याश्रयत्वसंबन्धेन पुष्पेऽन्वयात्, आश्रयतासंबन्धेन पुष्पादावन्विते तस्मिन्=आख्यातार्थप्रकारत्वे धात्वर्थप्रत्यक्षस्य निरूपितत्वसंबन्धेनान्वयः—प्रकारत्वस्य प्रत्यक्षनिरूपितत्वात्, तथा धात्वर्थप्रत्यक्षविशेषणीभूतगन्धविषयिताया अपि तादृशप्रकारत्वे एव निरूपितत्वसंबन्धेनान्वय इति प्रत्यक्षादिनिरूपितप्रकारता (विषयता) श्रयः पुष्पमिति शाब्दबोधः । ननु गन्धविषयिता हि गन्धनिरूपिता प्रत्यक्षनिष्ठा विषयितैव सा च प्रत्यक्षे विशेषणमस्तीति प्रत्यक्षविशेषणत्वेनोपस्थिताया विषयिताया निरूपितत्वसंबन्धेनाख्यातार्थप्रकारत्वे कथमन्वयः स्यात्—"एकत्र विशेषणत्वेनोपस्थितस्यान्यत्र विशेषणत्वासंभवात्" इति नियमादित्याशङ्क्याह— एकेति, एकत्र विशेषणत्वेनोपस्थितस्य स्वातन्त्र्येणान्यविशेषणत्वं न भवतीति पारतन्त्र्येणान्यविशेषणत्वे न कोपि दोषः 'धनी सुखी' इतिवत्, उक्तस्थले च प्रत्यक्षद्वारैव गन्धनिरूपितविषयिताया आख्यातार्थेऽन्वयोस्ति न स्वातन्त्र्येणेति न कोपि दोष इत्यर्थः ।

धर्मिपारतन्त्र्येणाप्येकत्र विशेषणस्यान्यविशेषणत्वास्वीकारे पक्षान्तरमाह—अस्तु वेति, पूर्वं घ्राधातोर्विशिष्टे गन्धनिरूपितलौकिकविषयिताशालिप्रत्यक्षे शक्तिरुक्ता, इदानीं पदार्थत्रये खण्डशः शक्तिरुच्यते इत्यर्थः । एवं च 'पुष्पं जिघ्रति' इत्यादिकर्त्राख्यातस्थले गन्धनिरूपितविषयितायाः प्रत्यक्षविशेषणत्वं भवति— पुष्पवृत्तिगन्धनिरूपितविषयिताश्रयप्रत्यक्षवांश्चैत्र इतिबोधात् पूर्वपूर्वस्य विशेषणत्वादिति न कश्चिद् दोषः ।'पुष्पमाघ्रायते' इत्यादिकर्माख्यातस्थले च गन्धनि-

समभिव्याहारस्थले च प्रत्यक्षविशेष्यतयाऽन्वय इति न कश्चिद् दोषः । जिघ्रत्यर्थगन्धविषयितानिरूपकत्वमेव पुष्पादिनिष्ठं जिघ्रतिकर्मत्वमिति दिक् ।

अथ दृश्यादिसमभिव्याहृतद्वितीयाया लौकिकविषयितार्थकत्वे 'सौरभं न पश्यति' इत्यादौ सौरभादिनिरूपितलौकिकविषयिताशालिचाक्षुषाद्यप्रसिद्धया 'आकाशं न पश्यति' इत्यादौ चाऽऽकाशादिनिरूपितलौकिकविषयिताया एवाप्रसिद्धया तादृशविषयिताशालिचाक्षुषाश्रयत्वाद्यभावरूपवाक्यार्थाऽप्रसिद्धिः । न च 'सौरभं न पश्यति' इत्यादौ सौरभादिनिरूपितलौकिकविषयित्वाभावश्चाक्षुषादौ प्रतीयते इति वाच्यम्, एवमप्याकाशादिनिरूपितलौकिकविषयित्वाऽप्रसिद्धया 'आकाशं न पश्यति' इत्यादावप्रतीकारात् ।

---

रूपितविषयितायाः प्रत्यक्षविशेष्यत्वं भवति— प्रत्यक्षनिष्ठगन्धनिरूपितविषयितानिरूपितविषयताश्रयः पुष्पमितिबोधात् उत्तरोत्तरस्य विशेष्यत्वात् । तथा च गन्धादौ धातोः खण्डशक्तिस्वीकारेण धातुना गन्धनिरूपितविषयितायाः प्रत्यक्षविशेषणत्वेनोपस्थितिरेव न भवति येन प्रत्यक्षविशेषणीभूतविषयिताया उक्तरीत्या निरूपितत्वसंबन्धेनाख्यातार्थप्रकारत्वेऽन्वये विरोधः स्यात्, किं तु विषयिताया धातुना स्वातन्त्र्येणैवोपस्थितिरिति तस्या आख्यातार्थेऽन्वये न कोपि विरोध इत्यर्थः । पुष्पनिष्ठजिघ्रतिकर्मत्वस्य स्वरूपमाह— जिघ्रतीति, प्रत्यक्षकर्मभूतपुष्पादिपदार्थे प्रत्यक्षनिष्ठविषयितानिरूपकत्वं यदस्ति तदेव जिघ्रतिकर्मत्वमस्ति, जिघ्रत्यर्थभूता या गन्धनिरूपितप्रत्यक्षनिष्ठविषयिता तन्निरूपकत्वमित्यर्थः । एवमेवान्यत्रापि कर्मत्वस्वरूपमूह्यम् ।

ननु यदि ( २७३ पृ० ) "चाक्षुषत्वाद्यवच्छिन्नवाचकदृश्यादि" इत्युक्तप्रकारेण 'घटं पश्यति' इत्यादौ दृश्यादिधातुसमभिव्याहृतद्वितीयाया लौकिकविषयित्वमर्थस्तदा सौरभस्य घ्राणजप्रत्यक्षविषयत्वेन चाक्षुषप्रत्यक्षविषयत्वाभावात् सौरभनिरूपिता या लौकिकविषयिता तद्विशिष्टचाक्षुषप्रत्यक्षमेव प्रसिद्धं नास्तीति 'सौरभं न पश्यति चैत्रः' इत्यत्र चैत्रे सौरभनिरूपितलौकिकविषयिताशालिचाक्षुषप्रत्यक्षाश्रयत्वाभावस्याप्यऽप्रसिद्धत्वाद् बोधनं न संभवतीत्यनुपपत्तिः, तथाऽऽकाशस्य तु केनापीन्द्रियेण लौकिकप्रत्यक्षं न भवतीत्याऽऽकाशनिरूपितलौकिकविषयितैव क्वचिदपि प्रत्यक्षे नास्तीत्याकाशनिरूपितलौकिकविषयिताया एवाप्रसिद्धत्वात् 'आकाशं न पश्यति चैत्रः' इत्यत्राप्याकाशनिरूपितलौकिकविषयिताशालिचाक्षुषप्रत्यक्षाश्रयत्वाभावस्याऽप्रसिद्धया चैत्रे बोधनं न संभवतीत्यनुपपत्तिरित्याशङ्कते— अथेति । ननु सौरभस्य घ्राणजप्रत्यक्षविषयत्वात् सौरभनिरूपितलौकिकविषयिता या घ्राणजप्रत्यक्षे प्रसिद्धास्ति तस्या एव 'सौरभं न पश्यति' इत्यत्र चाक्षुषप्रत्यक्षेऽभावः प्रतीयते इति वक्ष्याम इति न वाक्यार्थबोधानुपपत्तिरित्याशङ्क्याह— न चेति । परिहारमाह— एवमपीति, एवंरीत्या 'सौरभं न पश्यति' इत्यत्र वाक्यार्थबोधोपपादनेपि 'आकाशं न पश्यति' इत्यत्र तु वाक्यार्थबोधोपपादनं नैव संभवति— उक्तरीत्याऽऽकाश-

न च लौकिकविषयितायां निरूपितत्वसंबन्धावच्छिन्नप्रतियोगिताकाऽऽकाशाभावः प्रतीयते इति वाच्यम्, वृत्त्यनियामकसंबन्धस्य संसर्गाभावप्रतियोगितानवच्छेदकतया तादृशाभावस्याऽप्रसिद्धेः । एतेन निरूपकतासंबन्धेन चाक्षुषादिनिष्ठलौकिकविषयिताया अभावस्तत्राकाशादौ प्रतीयते इत्यपि निरस्तम् । अन्वयबोधस्य प्रथमान्तार्थमुख्यविशेष्यकतायाः सर्वानुभवसिद्धाया भङ्गप्रसङ्गाच्च, चाक्षुषादिनिष्ठलौकिकविषयितात्वावच्छिन्नस्य पदाद्वाक्याच्चानुपस्थितत्वेन तदाभावस्याकाशादौ भानासंभवाच्च । भावान्वयबोधे च लौकिकविषयिताप्रकारेण चाक्षुषादेर्भानान्नाऽभावान्वयबोधे चाक्षुषप्रकारेण तस्या भानम् ।

निरूपितलौकिकविषयितैव क्वचित्प्रत्यक्षे प्रसिद्धा नास्ति यस्याश्चाक्षुषप्रत्यक्षेऽभावबोधनेन वाक्यार्थबोध उपपद्येतेत्यर्थः ।

ननु घटादिप्रत्यक्षस्थले लौकिकविषयितापि प्रसिद्धास्त्याकाशमपि प्रसिद्धमेवेति 'आकाशं न पश्यति' इत्यत्र लौकिकविषयितायां निरूपितत्वसंबन्धेनाकाशाभावः प्रतीयते इति वक्ष्याम इति न वाक्यार्थबोधानुपपत्तिरित्याशङ्क्याह— न चेति । परिहारमाह— वृत्त्यनियामकेति, निरूपितत्वसंबन्धस्य वृत्त्यनियामकत्वात् संसर्गाभावीयप्रतियोगितावच्छेदकत्वमेव न संभवति येन निरूपितत्वसंबन्धेन लौकिकविषयितायामाकाशाभावप्रतीतिः स्यादित्यर्थः । एवमेव निरूपकत्वसंबन्धस्यापि वृत्त्यनियामकतया निरूपकत्वसंबन्धेन चाक्षुषप्रत्यक्षनिष्ठलौकिकविषयिताया अप्याकाशादावभावस्तत्र='आकाशं न पश्यति' इत्यादौ प्रतीयते इत्यपि वक्तुं न शक्यते इत्यभिप्रायेणाह— एतेनेति । दोषान्तरमाह— अन्वयबोधस्येति, सर्वत्र प्रथमान्तार्थमुख्यविशेष्यक एव बोधो भवतीति नियमः अत्र यदि लौकिकविषयितायामाकाशाभावस्यान्वयः स्यात्तदा लौकिकविषयिताविशेष्यक एव बोधः स्यात् न च लौकिकविषयिता प्रथमान्तपदार्थः, एवमेव यद्यत्राकाशे चाक्षुषलौकिकविषयित्वाभावस्यान्वयः स्यात्तदाऽऽकाशविशेष्यक एव बोधः स्याद् न चाकाशः प्रथमान्तपदार्थ इत्यर्थः । दोषान्तरमाह— चाक्षुषेति, 'आकाशं न पश्यति' इत्यत्र लौकिकविषयित्वमात्रं द्वितीयार्थः प्रत्यक्षमात्रं च धात्वर्थ इति चाक्षुषप्रत्यक्षनिष्ठलौकिकविषयितायास्तु केनापि पदेन वाक्येन वोपस्थितिरेव नास्ति येनाऽऽकाशे चाक्षुषादिनिष्ठलौकिकविषयिताया अभावस्य भानं स्यात्— उपस्थितस्यैवाभावभानसंभवादित्यर्थः । दोषान्तरमाह— भावान्वयेति, 'आकाशं पश्यति' इत्यत्राकाशनिरूपितलौकिकविषयिताशालिप्रत्यक्षाश्रयश्चैत्र इति भावान्वयबोधे लौकिकविषयिताप्रकारेण चाक्षुषादेर्भानात्=चाक्षुषप्रत्यक्षे लौकिकविषयिता प्रकारतया या भासते तस्या अभावान्वयबोधेपि चाक्षुषप्रत्यक्षप्रकारत्वेनैव भानं युक्तं न तु प्रत्यक्षविशेष्यतयेति 'आकाशं न पश्यति' इत्यत्रोक्तरीत्या चाक्षुषप्रत्यक्षनिष्ठलौकिकविषयिताभाववानाकाश इत्याकारकाऽभावान्वयबोधे न चाक्षुषप्रकारेण तस्या भानम्=तस्या लौकिकविषयिताया विशेष्यतया चाक्षुषप्रत्यक्षस्य च प्रकारतया भानं न संभवति—" प्रतियोग्य-

अस्तु वा वृत्त्यनियामकोपि संबन्धोऽभावप्रतियोगितावच्छेदकस्तथापि निरूपितत्वसंबन्धावच्छिन्नप्रतियोगिताकस्य विषयिताविशेषनिष्ठाकाशाद्यभावस्य भानोपगमो न संभवति– तथा सति 'आकाशं पश्यति चैत्रः' इत्याकारकवाक्यजन्यबोधदशायाम् 'आकाशं न पश्यति चैत्रः' इत्यादिवाक्याच्छाब्दबोधप्रसङ्गात्। 'आकाशं पश्यति मैत्रः' इत्यादिभ्रमदशायाम् 'आकाशं न पश्यति चैत्रः' इत्यादिवाक्याच्छाब्दबोधस्य दुरपन्हवतया लौकिकविषयितात्वसामानाधिकरण्येनैव तादृशाभावबोधकं तद्वाक्यमुपगन्तव्यम्, तादृशबोधश्च लौकिकविषयितात्वसामानाधिकरण्यमात्रेणैवाऽऽकाशादिनिरूपितत्वावगाहिदर्शितयोग्यताज्ञानाऽप्रतिबध्य एव।

---

भावान्वयौ तुल्ययोगक्षेमौ " इतिनियमादित्यर्थः । अत्र च ' भावान्वयबोधे लौकिकविषयितायाश्चाक्षुषादिप्रकारत्वेन भानाऽभावान्वयबोधे तस्याः ( लौकिकविषयितायाः ) चाक्षुषादिविशेष्यत्वेन किं वा चाक्षुषादेर्लौकिकविषयिताप्रकारत्वेन भानं युक्तम् ' इत्येवं पाठो युक्तः ।

वृत्त्यनियामकस्यापि निरूपितत्वादिसंबन्धस्याभावीयप्रतियोगितावच्छेदकत्वमभ्युपगम्य दोषमाह– अस्तु वेति, विषयिताविशेषः=लौकिकविषयिता, "न च लौकिकविषयितायाम (२८१पृ०)" इत्याद्युक्तं नोपपद्यते इत्यर्थः । उक्तमुपपादयति– तथा सतीति, तथा सति= यदि ' आकाशं न पश्यति ' इत्यत्र लौकिकविषयितायां निरूपितत्वसंबन्धेनाऽऽकाशाभावस्य भानं स्यात्तदा ' आकाशं पश्यति चैत्रः ' इत्याकारकवाक्यजन्यबोधदशायामपि ' आकाशं न पश्यति चैत्रः ' इत्याकारकवाक्यादुक्ताभावविषयकः शाब्दबोधः प्रसज्येतैव=' आकाशं पश्यति चैत्रः ' ' आकाशं न पश्यति चैत्रः ' इत्येतद्वाक्यद्वयजन्ययोः शाब्दबोधयोः परस्परमिष्टः प्रतिबध्यप्रतिबन्धकभावो नोपपद्येतेत्यर्थः । प्रतिबध्यप्रतिबन्धकभावानुपपत्तिमुपपादयति– ' आकाशं पश्यति मैत्रः ' इत्यादिना, ' आकाशं पश्यति मैत्रः ' इत्याकारकभ्रमदशायामपि ' आकाशं न पश्यति चैत्रः ' इत्याकारकवाक्यान्निरूपितत्वसंबन्धावच्छिन्नप्रतियोगिताकलौकिकविषयितानिष्ठोक्ताकाशाभावविषयकशाब्दबोधोत्पत्तौ किमपि प्रतिबन्धकं नास्तीति तादृशशाब्दबोधस्य दुरपन्हवतया लौकिकविषयितात्वसामानाधिकरण्येनैव= कस्यांचिल्लौकिकविषयितायामेव तादृशाभावबोधकम्=निरूपितत्वसंबन्धेनाकाशाभावबोधकं तद्वाक्यम्= ' आकाशं न पश्यति चैत्रः ' इतिवाक्यमुपगन्तव्यम्=चैत्रीयप्रत्यक्षमात्रनिष्ठलौकिकविषयितायामेव निरूपितत्वसंबन्धेनाकाशाभावान्वयबोधकत्वात्. मैत्रीयप्रत्यक्षनिष्ठलौकिकविषयितायां निरूपितत्वसंबन्धेनाकाशाभावान्वयाऽसंभवात्– मैत्रस्याकाशकर्मकप्रत्यक्षस्यैव भ्रमेण प्रतिपन्नत्वादिति न लौकिकविषयितात्वावच्छेदेन निरूपितत्वसंबन्धावच्छिन्नप्रतियोगिताकाऽऽकाशाभावान्वयबोधः संभवतीत्यर्थः । ' आकाशं न पश्यति चैत्रः ' इत्याकारकवाक्यजन्यबोधस्योक्तदुरपन्हवत्वे हेतुमाह–. तादृशबोधश्चेति, तादृशबोधः=' आकाशं न पश्यति चैत्रः ' इत्याकारकवाक्यजन्यो निरूपितत्वसंबन्धावच्छिन्नप्रतियोगिताकलौकिकविषयितानिष्ठाकाशाभावान्वयबोधश्च लौकिकविषयितात्वसामानाधिकरण्यमात्रेण=

न च चैत्रीयचाक्षुषादिनिष्ठलौकिकविषयितात्वावच्छेदेनैव तादृशाभावो दर्शितवाक्येन प्रत्याय्यते इति चैत्रीयचाक्षुषादिनिष्ठलौकिकविषयितायामाऽऽकाशीयत्वाद्यवगाही 'चैत्र आकाशं पश्यति' इतिवाक्यजन्यबोधः प्रतिबध्नात्येव तादृशवाक्यजन्यधियमिति वाच्यम्, तादृशविषयितात्वेन विषयिताया अनुपस्थितेस्तदवच्छेदेनाभावप्रत्यायनाऽसंभवात् । 'चैत्र आकाशं पश्यति' इतिवाक्यजन्य-

---

किंचिल्लौकिकविषयितायामेवाऽऽकाशनिरूपितत्वावगाहि यद् दर्शितयोग्यताज्ञानम्='आकाशं पश्यति मैत्रः'' आकाशं पश्यति चैत्रः ' इत्याकारकभावान्वयबोधकवाक्यजन्यं योग्यताज्ञानं तादृशयोग्यताज्ञानेनाऽप्रतिबध्य एव अर्थात् समानविषयकयोरेव प्रतिबध्यप्रतिबन्धकभावो भवति अत्र च ' आकाशं पश्यति चैत्रः ' इत्यनेन कस्यांचिल्लौकिकविषयितायामाकाशनिरूपितत्वं प्रतिपाद्यते ' आकाशं न पश्यति चैत्रः ' इत्यनेनापि कस्यांचिल्लौकिकविषयितायामाकाशाभावान्वयः प्रतिपाद्यते इति समानविषयकत्वाभावान्न प्रतिबध्यप्रतिबन्धकभावस्तथा च ' आकाशं पश्यति चैत्रः ' इत्याकारकवाक्यजन्यबोधदशायामपि ' आकाशं न पश्यति चैत्रः ' इत्याकारकवाक्यजन्यबोधप्रसङ्गो दुर्वार एवेत्यर्थः । ' आकाशं पश्यति ' इत्यत्र प्रत्यक्षनिष्ठा विषयिताऽऽकाशनिरूपितेत्युक्तम्— "आकाशादिनिरूपितत्वावगाहि" इति । यदि "आकाशादिनिरूपितत्वाभावावगाही" इत्येवमत्र प्रथमान्तपाठस्तदासौ "तादृशबोधः" इत्यस्य विशेषणमिति विज्ञेयम् ।

ननु यद्यपि 'आकाशं न पश्यति चैत्रः' इतिवाक्येन लौकिकविषयितात्वावच्छेदेनाकाशाभावो न प्रत्याय्यते तथापि दर्शितवाक्येन चैत्रीयचाक्षुषप्रत्यक्षनिष्ठलौकिकविषयितात्वावच्छेदेन तु तादृशाभावः=निरूपितत्वसंबन्धावच्छिन्नप्रतियोगिताकाऽऽकाशाभावः प्रत्याय्यते इति चैत्रीयचाक्षुषादिनिष्ठलौकिकविषयितायामाकाशनिरूपितत्वावगाही ' आकाशं पश्यति चैत्रः ' इतिवाक्यजन्यबोधः तादृशवाक्यजन्यधियम्= ' आकाशं न पश्यति चैत्रः ' इतिवाक्यजन्यं निरूपितत्वसंबन्धावच्छिन्नप्रतियोगिताकचैत्रीयप्रत्यक्षनिष्ठलौकिकविषयितानुयोगिकाकाशाभावान्वयबोधं प्रतिबध्नात्येव— समानविषयकत्वात् तथा च ' आकाशं पश्यति चैत्रः ' इतिवाक्यजन्यबोधदशायाम् 'आकाशं न पश्यति चैत्रः' इतिवाक्यजन्यबोधस्यापत्तिर्नास्त्येवेत्याशङ्क्याह— न चेति । परिहारमाह— तादृशेति, अत्र लौकिकविषयितायाश्चैत्रीयचाक्षुषादिनिष्ठलौकिकविषयितात्वेन रूपेणोपस्थितिरेव नास्ति येन तदवच्छेदेन=चैत्रीयचाक्षुषादिनिष्ठलौकिकविषयितात्वावच्छेदेनाकाशाभावप्रत्यायनं संभवेत् तथा चात्र लौकिकविषयितात्वसामानाधिकरण्येनैवाकाशाभावान्वयबोधो वक्तव्यः. अन्यथा 'आकाशं पश्यति मैत्रः' इतिवाक्यजन्यबोधदशायामपि 'आकाशं न पश्यति चैत्रः' इतिवाक्यजन्यबोधो नोपपद्येत, यदा च लौकिकविषयितात्वसामानाधिकरण्येनैवाकाशाभावप्रतिपादनं प्राप्तं तदा समानविषयकत्वाभावेनोक्तरीत्या प्रतिबन्ध्यप्रतिबन्धकाभावस्याऽभावात् ' आकाशं पश्यति चैत्रः ' इतिवाक्यजन्यबोधदशायामपि ' आकाशं न पश्यति चैत्रः ' इतिवाक्यजन्यबोधप्रसङ्गः स्यादेवेति न लौकिकविषयितायां निरूपितत्वसंबन्धेनाकाशाभावान्वयः संभवतीत्यर्थः । ' आ-

बोधे चैत्रांशे दर्शनाश्रयत्वं विशेषणं दर्शनांशे लौकिकविषयिता विशेषणमितिरीत्यैव पदार्थानां भानात्, चैत्रीयचाक्षुषादिनिष्ठविषयितात्वं नाकाशादिधर्मितावच्छेदकं किं तु शुद्धलौकिकविषयितात्वमेवेति तस्य शुद्धलौकिकविषयितात्वावच्छेदेनाकाशाद्यभावावगाहिज्ञानं प्रत्येव प्रतिबन्धकतया निरुक्तधर्मावच्छेदेनाकाशाद्यभावावगाहिज्ञानस्य तदऽप्रतिबध्यत्वाच्च ।

एतेन तत्राकाशादिपदस्याऽऽकाशादिनिरूपितत्वार्थकतां स्वीकृत्य लौकिकविषयितायामाश्रयतासंबन्धावच्छिन्नप्रतियोगिताकतदभावोपगमेनापि न निस्तारः । 'घट आकाशं न पश्यति ' इत्यादौ नितरामेवाऽगतिः ।

---

काशं न पश्यति चैत्रः ' इतिवाक्येन चैत्रीयचाक्षुषादिनिष्ठलौकिकविषयितायामेवाकाशाभावान्वयबोधमभ्युपगम्यापि प्रतिबन्ध्यप्रतिबन्धकभावाऽभावमुपपादयति– चैत्र इत्यादिना, 'चैत्र आकाशं पश्यति ' इत्यत्राऽऽकाशनिरूपितलौकिकविषयिताविशिष्टदर्शनाश्रयत्ववांश्चैत्र इति बोधस्तथा चात्र लौकिकविषयिता एवाकाशनिरूपितास्तीति लौकिकविषयितायामेव भासमानायां निरूपितत्वसंबन्धेनाकाशं विशेषणमस्तीत्याकाशादिधर्मितावच्छेदकम्= आकाशस्य धर्मितावच्छेदकं शुद्धम्=चैत्रीयादिचाक्षुषादिनिष्ठत्वविशेषणरहितमेव लौकिकविषयितात्वम् ( धर्मितावच्छेदकम् ) अस्ति न तु चैत्रीयचाक्षुषादिनिष्ठलौकिकविषयितात्वं तथा च तस्य='आकाशं पश्यति चैत्रः' इतिवाक्यजन्यबोधस्य शुद्धलौकिकविषयितायामेवाऽऽकाशाभावावगाहिज्ञानं प्रति प्रतिबन्धकत्वं संभवति–समानविषयकत्वात् न तु चैत्रीयचाक्षुषादिनिष्ठलौकिकविषतायामाकाशाभावावगाहिज्ञानं प्रत्यपि– भिन्नविषयत्वादिति तत्=तेन='आकाशं पश्यति चैत्रः ' इतिवाक्यजन्यबोधेन निरुक्तधर्मावच्छेदेन=चैत्रीयचाक्षुषादिनिष्ठलौकिकविषयितात्वावच्छेदेनाकाशाभावावगाहिज्ञानस्याऽप्रतिबध्यत्वात् ' आकाशं पश्यति चैत्रः ' इतिवाक्यजन्यबोधदशायाम् ' आकाशं न पश्यति चैत्रः ' इतिवाक्यजन्यबोधः प्रसज्येतैवेत्यर्थः ।

उक्तदोषं प्रकारान्तरेण समर्थनेऽप्यतिदिशति– एतेनेति, यदि तत्र='आकाशं न पश्यति चैत्रः' इत्यत्राकाशपदस्याकाशनिरूपितत्वमर्थ इति स्वीकृत्य लौकिकविषयितायामाश्रयतासंबन्धेन तदभावः=आकाशनिरूपितत्वाभावः प्रतीयते इत्युच्येत तदापि न निस्तारः–यत एवमप्युक्तरीत्या लौकिकविषयितात्वसामानाधिकरण्यमात्रेणैवाऽऽश्रयतासंबन्धेनाऽऽकाशनिरूपितत्वाभावान्वयो वक्तव्यो न तु लौकिकविषयितात्वावच्छेदेन तथा सति ' चैत्र आकाशं न पश्यति ' इतिवाक्यजन्यबोधदशायां लौकिकविषयितात्वावच्छेदेनाकाशनिरूपितत्वाभावान्वयबोधे प्रतिबन्धकरूपे जाते लौकिकविषयितायामाकाशनिरूपितत्वावगाही ' मैत्र आकाशं पश्यति ' इतिवाक्यजन्यबोधोपि नोपपद्येत तस्मात् ' चैत्र आकाशं न पश्यति ' इत्यत्र लौकिकविषयितात्वसामानाधिकरण्येनैवाश्रयतासंबन्धेनाकाशनिरूपितत्वाभावस्यान्वयबोधो वाच्य इति ' चैत्र आकाशं न पश्यति ' इत्यनेन किंचिल्लौकिकविषयितायामाकाशनिरूपितत्वाभावान्वयबोधनेपि ' चैत्र आकाशं पश्यति ' इति-

यत्तु नञर्थस्य द्विधा भानोपगमेनाऽऽकाशादिनिरूपितत्वाभाववल्लौकिकविषयिताशालिचाक्षुषाश्रयत्वाभाववान् घट इत्याकारकस्तत्रान्वयबोध इति, तदपि न—तथा सति 'चैत्रो घटं न पश्यति' 'चैत्र आकाशं न पश्यति' इत्यादिवाक्यजन्यशाब्दबोधादविलक्षणबोधस्य सर्वानुभवसिद्धस्य तादृशवाक्यादनुपपत्तेः, न हि तत्रापि तादृश एव शाब्दबोधः, तथा सति चैत्रो यदा घटादिकं न पश्यत्यपि तु पटादिकमेव तदा घटाद्यनिरूपितलौकिकविषयिताशालिचाक्षुषाश्रयत्वा-

---

वाक्येन किंचिल्लौकिकविषयितायामाकाशनिरूपितत्वबोधने विरोधाभावेन प्रतिबध्यप्रतिबन्धकभावाभावात् 'आकाशं पश्यति चैत्रः' इतिवाक्यजन्यबोधदशायामपि 'आकाशं न पश्यति चैत्रः' इतिवाक्यजन्यबोधप्रसङ्गरूपो दोषस्तदवस्थ एवेत्यर्थः । 'आकाशं न पश्यति चैत्रः' इतिवाक्यजन्यबोधस्य कथंचित्समर्थनसंभवेपि दुरुद्धरं दोषान्तरमाह—घट इति, नितरामेवागतिरिति—घटे लौकिकविषयिताशालिप्रत्यक्षाश्रयत्वमेव न संभवति जडत्वादिति तादृशप्रत्यक्षाश्रयत्वाभावो नितरामेवासंभवीत्यर्थः । आकाशनिरूपितलौकिकविषयिताशालिप्रत्यक्षाश्रयत्वमप्यन्यत्र प्रसिद्धं नास्ति येन घटे तदभावबोधनमुपपद्येतेत्यर्थः ।

ननु 'घट आकाशं न पश्यति' इत्यत्र नञर्थस्याभावस्य द्विधा भानं वक्ष्यामस्तत्रैकस्याकाशनिरूपितत्वेन सहान्वयो द्वितीयस्य चाक्षुषाश्रयत्वेनान्वयस्तथा चाकाशनिरूपितत्वाभाववल्लौकिकविषयिताशालिचाक्षुषाश्रयत्वाभाववान् घट इति वाक्यार्थबोधः संपन्नस्तत्राऽऽकाशनिरूपितत्वाभाववती या लौकिकविषयिता तादृशविषयिताशालिचाक्षुषप्रत्यक्षाश्रयत्वम् 'घटं पश्यति चैत्रः' इत्यादौ चैत्रादौ प्रसिद्धमेव तस्यात्र घटेऽभावो बोध्यते इति न काचिदनुपपत्तिरित्याशङ्कते—यत्तु इति । परिहरति—तदपि नेति, तथा सति=उक्तस्थले नञर्थस्य द्विधा भानोपगमे सति, यथा 'चैत्रो घटं न पश्यति' 'चैत्र आकाशं न पश्यति' इत्यादौ नञर्थस्यैकदैव भानोपगमेन घटनिरूपितलौकिकविषयिताशालिचाक्षुषाश्रयत्वाभावविषयक आकाशनिरूपितलौकिकविषयिताशालिचाक्षुषाश्रयत्वाभावविषयकश्च बोधो भवति तादृश एव तादृशवाक्यात्='घट आकाशं न पश्यति' इतिवाक्याद् नञर्थस्यैकदैव भानपूर्वक आकाशनिरूपितलौकिकविषयिताशालिचाक्षुषाश्रयत्वाभावविषयको बोधः सर्वानुभवसिद्धोस्ति तन्नोपपद्येत त्वया नञर्थभानस्य द्विधा स्वीकृतत्वादित्यर्थः । तत्रापि='चैत्रो घटं न पश्यति' इत्यादिस्थले तु तादृशः=नञर्थस्य द्विधाभानपूर्वकः शाब्दबोधो नैव भवति येनोक्तशाब्दबोधानां नञर्थस्य द्विधाभानेन साम्यं स्यादित्याह—न हीति । विपक्षे बाधकमाह—तथा सतीति, यदि 'चैत्रो घटं न पश्यति' इत्यत्र नञर्थस्य द्विधा भानं स्यात् तदा यदा चैत्रो घटं न पश्यति पटं च पश्यति तदा घटाद्यनिरूपित=घटनिरूपितत्वाभाववल्लौकिकविषयिताशालि यत् पटविषयकचाक्षुषं तदाश्रयत्वस्यैव तत्र=चैत्रे सत्त्वेन तदऽभावस्याऽसंभवात् 'चैत्रो घटं न पश्यति' इतिप्रयोगो नोपपद्येत—एतद्वाक्येन नञर्थस्य द्विधा भाने घटनिरूपितत्वाभाववल्लौकिकविषयिताशालिचाक्षुषाश्रय-

भावस्य तत्र बाधात् ‘ चैत्रो घटं न पश्यति ’ इतिप्रयोगानुपपत्तेः, यदा च भावमात्रं पश्यति तदा भावानिरूपितलौकिकविषयिताशालिचाक्षुषाश्रयत्वाभावसत्त्वात् ‘ भावं न पश्यति चैत्रः ’ इत्यादिप्रयोगापत्तेश्च ।

एवम् ‘ आकाशं न पश्यति घटः ’ इत्यादावाऽऽकाशाद्यनिरूपितलौकिकविषयिताशालिचाक्षुषाश्रयत्वाभावस्य वाक्यार्थत्वे यदाऽऽकाशाद्यतिरिक्तपदार्थविषयकचाक्षुषाश्रयत्वभ्रमो घटादौ तदाऽऽकाशाद्यनिरूपितलौकिकविषयिताशालिचाक्षुषाश्रयत्वनिश्चयरूपप्रतिबन्धकसत्त्वेन तादृशवाक्यजन्यशाब्दबोधानुपपत्तिः । यथा ‘ चैत्रो घटं पश्यति ’ इत्यादिनिश्चयदशायाम् ‘ पटं न पश्यति

---

त्वाभाव एव चैत्रे बोधनीयस्तत्तु न संभवति—घटनिरूपितत्वाभाववल्लौकिकविषयिताशालिपटविषयकचाक्षुषप्रत्यक्षाश्रयत्वस्यैव चैत्रे सत्त्वादिति ‘ चैत्रो घटं न पश्यति ’ इति प्रयोगानुपपत्तिरित्यर्थः । नञर्थस्य द्विधाभाने दोषान्तरमाह—यदा चेति, नञर्थस्य द्विधा भाने ‘ भावं न पश्यति चैत्रः ’ इत्यनेनापि भावानिरूपित=भावनिरूपितत्वाभाववल्लौकिकविषयिताशालिचाक्षुषाश्रयत्वाभाववांश्चैत्र इत्येव बोधः स्यादिति यदा चैत्रो भावमात्रं पश्यति तदा चैत्रे भावनिरूपितलौकिकविषयिताशालिचाक्षुषाश्रयत्वस्य सत्त्वेन भावानिरूपितलौकिकविषयिताशालिचाक्षुषाश्रयत्वस्याऽसत्त्वात् भावानिरूपितलौकिकविषयिताशालिचाक्षुषाश्रयत्वाभावबोधकस्य ‘भावं न पश्यति चैत्रः ’ इति वाक्यस्य प्रयोगापत्तिः स्यादेव न चैतदिष्टम्, तस्मादुक्तस्थले नञर्थस्य द्विधाभानोपगमो न संभवतीति ‘ घट आकाशं न पश्यति ’ इत्यत्र वाक्यार्थबोधानुपपत्तिस्तदवस्थैवेत्यर्थः ।

नञर्थस्य द्विधाभाने दोषान्तरमाह—एवमिति, यदि नञर्थस्य द्विधा भानेन ‘ घट आकाशं न पश्यति ’ इति वाक्येनाकाशनिरूपितत्वाभाववल्लौकिकविषयिताशालिचाक्षुषाश्रयत्वाभाव एव बोध्यते तदा यदाऽऽकाशाद्यतिरिक्तपदार्थ ( पटादि ) विषयकचाक्षुषाश्रयत्वभ्रमो घटे जातस्तदाऽऽकाशानिरूपितलौकिकविषयिताशालि यदाऽऽकाशाद्यतिरिक्तपटादिपदार्थविषयकं चाक्षुषप्रत्यक्षं तदाश्रयत्वस्य घटे निश्चये जाते तादृशनिश्चयस्य चाकाशानिरूपितलौकिकविषयिताशालिचाक्षुषाश्रयत्वाभावबोधं प्रति प्रतिबन्धकत्वेन तादृशवाक्यजन्यः=‘घट आकाशं न पश्यति’ इतिवाक्यजन्य आकाशानिरूपितलौकिकविषयिताशालिचाक्षुषाश्रयत्वाभावविषयकः शाब्दबोधो नोपपद्येतेति घटे आकाशाद्यतिरिक्तपदार्थविषयकचाक्षुषाश्रयत्वभ्रमदशायाम् ( काले ) ‘ घट आकाशं न पश्यति ’ इतिप्रयोग इष्टोपि नोपपद्येतेत्यर्थः । ननूक्तभ्रमकाले उक्तप्रयोगस्तज्जन्यबोधश्च नोपपद्यतां को दोष इत्याशङ्क्याह—यथेति, यथा ‘ चैत्रो घटं पश्यति ’ इतिवाक्यजन्यशाब्दबोधविषयस्य चैत्रवृत्तिघटविषयकप्रत्यक्षस्य निश्चयदशायाम् ‘ पटं न पश्यति चैत्रः ’ इतिवाक्यजन्यशाब्दबोधोत्पत्तिः सर्वानुभवसिद्धा—‘ चैत्रो घटं पश्यति ’ ‘ चैत्रः पटं न पश्यति ’

चैत्रः ' इत्यादिवाक्यजन्यशाब्दबोधोत्पादोऽनुभवसिद्धस्तथैवोक्तभ्रमदशायाम् ' आकाशं न पश्यति घटः ' इत्यादिवाक्यजन्यबोधोत्पादोपीति न तत्रेष्टापत्तिः ( अपि ) संभवति ।

यच्चाऽलौकिकविषयिताशून्यचाक्षुषत्वाद्यवच्छेदेनाकाशादिविषयकत्वघटादिवृत्तित्वोभयाऽभाव एव ' आकाशं न पश्यति ' इतिवाक्यात् प्रतीयते, उपनीताकाशादिविषयकचाक्षुषे आकाशादिविषयकत्वचैत्रादिवृत्तित्वोभयसत्त्वेन ' चैत्र आकाशं न पश्यति ' इत्यादिप्रयोगानुपपत्तिः. घटादौ तादृशचाक्षुषाद्याश्रयत्वभ्रमदशायाम् ' घट आकाशं न पश्यति ' इत्यादिवाक्याच्छाब्दबोधानुपपत्ति-

इतिवाक्ययोस्तज्जन्यशाब्दबोधयोश्च परस्परं विरोधाभावात् तथैवोक्तभ्रमदशायाम्=घटे आकाशातिरिक्तपदार्थविषयकचाक्षुषाश्रयत्वभ्रमदशायाम् ' आकाशं न पश्यति घटः ' इतिवाक्यजन्यशाब्दबोधोत्पत्तिरपि सर्वानुभवसिद्धास्ति—' पटं पश्यति घटः ' ' आकाशं न पश्यति घटः ' इतिवाक्यजन्यबोधयोः परस्परं विरोधाभावादिति तत्र=' आकाशं न पश्यति घटः ' इतिवाक्यजन्यशाब्दबोधानुपपत्ताविष्टापत्तिरपि न संभवतीत्यर्थः ।

नन्वऽलौकिकविषयिताशून्यचाक्षुषत्वाद्यवच्छेदेन=अलौकिकविषयिताशून्यं यच्चाक्षुषप्रत्यक्षं तस्मिन्नाऽऽकाशविषयकत्वस्य घटवृत्तित्वस्य चाऽभाव एव ' आकाशं न पश्यति घटः ' इतिवाक्येन बोध्यते— अलौकिकविषयिताशून्यचाक्षुषप्रत्यक्षमाकाशविषयकमपि न भवति घटवृत्त्यपि न भवति— आकाशस्यालौकिकविषयिताशालिचाक्षुषप्रत्यक्षविषयत्वाभ्युपगमात्, एवं चात्र पक्षे नञर्थस्य द्विधाभानाभावाद् नञर्थस्य द्विधाभानप्रयुक्तोक्तदोषापत्तिर्नास्तीतिप्रतिपादकमतमनुवदति— यच्चेति । अत्राभावद्वयस्य भानेप्यभावस्य द्विधा भानं तु नास्तीत्यवधार्यम् । चाक्षुषप्रत्यक्षेऽत्रालौकिकविषयिताशून्यत्वविशेषणप्रदानस्य फलमाह— उपनीतेति, यदि ' घट आकाशं न पश्यति ' इत्यत्रालौकिकविषयिताशून्यत्वविशेषणं परित्यज्य प्रत्यक्षमात्रे आकाशविषयकत्वघटवृत्तित्वोभयाभावान्वयबोध उच्येत तदोपनीताकाशादिविषयकचाक्षुषे=' तत्राकाशे पक्षी ' इत्याकारके चैत्रवृत्त्याकाशविषयकालौकिकचाक्षुषप्रत्यक्षे आकाशविषयकत्वस्य चैत्रवृत्तित्वस्य च सत्त्वेनाऽऽकाशविषयकत्वचैत्रवृत्तित्वोभयाभावबोधकम् ' चैत्र आकाशं न पश्यति ' इतिवाक्यं नोपपद्येत, अलौकिकविषयिताशून्यत्वविशेषणसत्त्वे तूक्तोपनीताकाशादिविषयकचाक्षुषप्रत्यक्षस्याऽलौकिकविषयिताशालित्वेन तस्मिन्नाऽऽकाशविषयकत्वाभावस्यासंभवेपि अलौकिकविषयिताशून्यचाक्षुषप्रत्यक्षे त्वाकाशविषयकत्वचैत्रवृत्तित्वोभयाभावस्यान्वयसंभवात् ' चैत्र आकाशं न पश्यति ' इति प्रयोगानुपपत्तिर्नास्ति, तथा यद्यऽलौकिकविषयिताशून्यत्वं विशेषणं न स्यात्तदा यदा घटे तादृशचाक्षुषाद्याश्रयत्वभ्रमः=आकाशविषयकालौकिक ( उपनीत ) चाक्षुषप्रत्यक्षाश्रयत्वभ्रमो जातस्तदा ' घट आकाशं न पश्यति ' इतिवाक्यजन्यस्याकाशविषयकत्वघटवृत्तित्वोभयाभावविशिष्टप्रत्यक्षविषयकशाब्दबोधस्यानुपपत्तिः स्यात्— घटे आकाशविष-

श्चेत्यऽलौकिकविषयिताशून्यत्वेन चाक्षुषादिकं विशेषितम् । आकाशविषयकः चाक्षुषाद्युपनीतभानस्यापीतरांशे लौकिकत्वात् तादृशानुपपत्तितादवस्थ्यमऽतो लौकिकत्वविशेषणमुपेक्षितम् । अत्राऽलौकिकविषयिताशून्यचाक्षुषत्वाद्यवच्छिन्नस्य 'घट आकाशं न पश्यति' इत्यादौ शक्त्या धात्वर्थत्वासंभवेपि प्रकृते तस्यैव लक्षणया धात्वर्थत्वमुपेयते । विषयितासामान्यमेव च द्वितीयार्थः, आश्रयत्वं द्वित्वं निरूपकत्वं चाख्यातार्थः, आश्रयत्वे व्युत्पत्तिवैचित्र्यात् प्रथमान्त-

---

यकालौकिकप्रत्यक्षाश्रयत्वस्यैव ज्ञानस्य सत्त्वात्, अलौकिकविषयिताशून्यत्वविशेषणसत्त्वे तु घटे 'आकाशविषयकालौकिकचाक्षुषप्रत्यक्षाश्रयत्वभ्रमदशायामपि ( घटवृत्त्यलौकिकविषयिताशालिप्रत्यक्षे आकाशविषयकत्वसत्त्वेपि) अलौकिकविषयिताशून्यचाक्षुषप्रत्यक्षे त्वाऽऽकाशविषयकत्वं नास्तीत्याऽऽकाशविषयकत्वघटवृत्तित्वोभयाभावस्यान्वयसंभवात् तद्विषयकस्य 'घट आकाशं न पश्यति' इतिवाक्यजन्यशाब्दबोधस्यानुपपत्तिर्नास्तीत्यलौकिकविषयिताशून्यत्वं प्रत्यक्षविशेषणमुपन्यस्तमित्यर्थः । नन्वेवं लौकिकत्वमेव विशेषणमुपन्यस्यताम् अलौकिकविषयिताशून्यं हि प्रत्यक्षं लौकिकमेव भवतीति लौकिकत्वविशेषणसत्त्वेप्युक्तरीत्यैव 'चैत्र आकाशं न पश्यति' 'घट आकाशं न पश्यति' इतिप्रयोगयोरनुपपत्तिर्नास्तीत्याशङ्क्याह— आकाशविषयकेति, उक्तस्य 'तत्राकाशे पक्षी' इत्याद्याकारकस्यालौकिकस्याप्युपनीताकाशादिविषयकचाक्षुषस्येतरांशे=पक्ष्याद्यंशे लौकिकत्वात् तादृशलौकिकप्रत्यक्षे आकाशविषयकत्वं घटचैत्रादिवृत्तित्वमपि चास्त्येवेति तादृशलौकिकप्रत्यक्षे आकाशविषयकत्वचैत्रादिवृत्तित्वोभयाभावान्वयस्य बाधात् तादृशानुपपत्तिः=आकाशविषयकत्वचैत्रादिवृत्तित्वोभयाभावविशिष्टप्रत्यक्षबोधकत्वेनाभिमतस्य 'चैत्र आकाशं न पश्यति' इत्यादिवाक्यस्य प्रयोगानुपपत्तिस्तदवस्थैव स्यादिति लौकिकत्वविशेषणं नोपन्यस्तं किन्त्वऽलौकिकविषयिताशून्यत्वमेव विशेषणमुपन्यस्तम्. अलौकिकविषयिताशून्यप्रत्यक्षे चाकाशविषयकत्वघटवृत्तित्वोभयाभावान्वये उक्तरीत्या न कोपि दोष इत्यर्थः । ननु यद्यलौकिकविषयिताशून्यस्य चाक्षुषप्रत्यक्षस्य दृश्धात्वर्थत्वं स्यात्तदा दृश्धातुनाऽलौकिकविषयिताशून्यचाक्षुषप्रत्यक्षस्योपस्थितौ सत्यां तत्राकाशविषयकत्वघटवृत्तित्वोभयाभावस्यान्वयः संभवेदपि न चैवमस्ति दृश्धातोश्चाक्षुषप्रत्यक्षमात्रार्थकत्वाद् अनुपस्थितपदार्थे च पदार्थान्तरान्वयासंभवादित्याशङ्क्याह— अत्रेति । अत्र=अस्मिन्मते। प्रकृते='घट आकाशं न पश्यति' इत्यत्र अस्मिन् प्रकरणे वा। तस्यैव='अलौकिकविषयिताशून्यचाक्षुषप्रत्यक्षस्यैव । धात्वर्थत्वम्=दृश्धात्वर्थत्वम् । 'घट आकाशं न पश्यति' इत्यत्रत्यधात्वर्थमुक्त्वा इतरपदार्थानाह— विषयितेति, विषयितासामान्यस्य द्वितीयार्थत्वे यत्र लौकिकविषयिता प्रत्यक्षे संभवेत्तत्र लौकिकविषयितया अन्वयः, यत्र चालौकिकविषयिता संभवेत्तत्रालौकिकविषयिताया अन्वय इति लाभः ।' घटः पश्यति' इत्यादौ प्रत्यक्षनिरूपितस्याऽऽश्रयत्वस्य घटेऽन्वयस्तादृशाश्रयत्वनिरूपकं चाधेयत्वमेव पदार्थान्तरनिष्ठं भवतीत्याऽऽश्रयत्वनिरूपकत्वं वृत्तित्वमेवेति प्राप्तम् । 'घट आकाशं न पश्यति' इत्यत्र च घटस्य स्वनिष्ठत्वसंबन्धेना-

पदार्थघटादेस्तस्य निरूपकत्वे विशेषणतयान्वयः, तादृशनिरूपकत्वद्वितीयान्तार्थाकाशादिविषयकत्वयोश्च प्रकारतया द्वित्वान्वयः, द्वित्वाद्यवच्छिन्नप्रतियोगिताकत्वसंबन्धेन तादृशोभयस्य नञर्थाभावे तस्यान्वयितावच्छेदकनिरुक्तधर्मावच्छेदेन धात्वर्थेऽन्वयः, धात्वर्थस्य प्रकृते मुख्यविशेष्यतयैव भानम् ।

अथ वा स्वनिष्ठान्योन्याभावप्रतियोगितानवच्छेदकत्वरूपव्यापकतासंबन्धेन धात्वर्थस्य तादृशोभयाभावेऽन्वयः, तस्य चाख्यातार्थनिरूपकत्वे, तस्य प्रथमान्तार्थपदार्थे घटादौ, घटादेः प्रतियोगितावच्छेदकघटकतया तादृशाभावनिरूपकत्वात्, एवं चान्वयबोधस्य प्रथमान्तपदार्थमुख्यविशेष्यकत्वनियमस्यापि न क्षतिरिति ।

---

त्वसंबन्धेन वाऽऽश्रयत्वे तस्य=आश्रयत्वस्य च प्रत्यक्षनिष्ठे निरूपकत्वे तादृशनिरूपकत्वे=घटविशिष्टाश्रयत्वनिरूपकत्वे घटवृत्तित्वरूपे आकाशविषयकत्वे च मिलित्वा द्वित्वस्य प्रकारतयान्वयस्तादृशोभयस्य=द्वित्वावच्छिन्नस्योक्तनिरूपकत्वाकाशादिविषयकत्वेतिद्वयस्य च द्वित्वावच्छिन्नप्रतियोगिताकत्वसंबन्धेन नञर्थाऽभावे तस्य=अभावस्य च अन्वयितावच्छेदकनिरुक्तधर्मावच्छेदेन=अलौकिकविषयिताशून्यचाक्षुषत्वावच्छेदेन धात्वर्थे=चाक्षुषप्रत्यक्षेऽन्वयः, तादृशचाक्षुषप्रत्यक्षस्य च न कुत्राप्यन्वय इति मुख्यविशेष्यतयैव भानम्, तथा च घटवृत्तित्वाकाशविषयकत्वोभयाभावविशिष्टम् अलौकिकविषयिताशून्यचाक्षुषप्रत्यक्षमिति बोधस्याकारः किं वा यद् घटविशिष्टाश्रयत्वनिरूपकत्वमाकाशविषयकत्वं चैतद्द्वयं तदभावविशिष्टम् अलौकिकविषयिताशून्यचाक्षुषप्रत्यक्षमिति बोधस्याकार इत्यर्थः ।

ननु धात्वर्थस्य मुख्यविशेष्यतया भानस्वीकारे प्रथमान्तार्थमुख्यविशेष्यकबोधनियमस्य भङ्गः स्यादित्याशङ्क्य प्रकारान्तरेण 'घट आकाशं न पश्यति' इत्यत्र प्रथमान्तार्थमुख्यविशेष्यकबोधमुपपादयति— अथ वेति, तथा च धात्वर्थस्य=अलौकिकविषयिताशून्यचाक्षुषप्रत्यक्षस्य तादृशोभयाभावे=घटवृत्तित्वाकाशविषयकत्वोभयाभावे व्यापकतासंबन्धेनान्वयः तस्य=उक्तोभयाभावस्य चाख्यातार्थीभूतनिरूपकत्वे तस्य=निरूपकत्वस्य प्रथमान्तपदार्थघटेऽन्वयस्तथा चात्र अलौकिकविषयिताशून्यचाक्षुषप्रत्यक्षविशिष्टोक्तोभयाभावनिरूपको घट इत्येवं प्रथमान्तार्थमुख्यविशेष्यक एव बोधो जात इति न काचिदनुपपत्तिरित्यर्थः । उक्तोभयाभावनिरूपकत्वं घटे कथमित्याशङ्क्योक्तम्— घटादेरिति, उभयाभावस्य प्रतियोगि उभयं तन्निष्ठप्रतियोगिताया अवच्छेदककोटौ=घटवृत्तित्वाकाशविषयकत्वेत्यत्र घटस्यापि प्रवेशात् तादृशप्रतियोगितावच्छेदकघटकतया घटस्योक्तोभयाभावनिरूपकत्वं प्राप्तं प्रतियोग्यादीनामेवाऽभावनिरूपकत्वात् । अलौकिकविषयिताशून्यचाक्षुषप्रत्यक्षमात्रे घटवृत्तित्वाकाशविषयकत्वयोरभावो भवत्येवेत्युभयाभावे यद् व्यापकत्वं प्राप्तं तस्य स्वरूपमाह— स्वनिष्ठेति, स्वं धात्वर्थः, अलौकिकविषयिताशून्यचाक्षुषप्रत्यक्षं घटवृत्तित्वाकाशविषयकत्वोभयाभावविशिष्टं न इत्याकारकस्तु घटवृत्तित्वाकाशविषयकत्वो-

तदपि न— घटादिविषयकचाक्षुषादेः कालिकादिसंबन्धेन घटादिवृत्तित्वया 'घटो घटं न पश्यति' इतिप्रयोगानुपपत्तेः आकाशादिविषयकत्वावच्छिन्ने चाक्षुषे कालिकादिसंबन्धेन घटादिवृत्तित्वनिश्चयदशायाम् 'घट आकाशं न पश्यति' इतिवाक्याच्छाब्दबोधानुपपत्तेश्च समवायेन घटादिवृत्तित्वाकाशादिविषयकत्वो-भयाभावभानस्यैव स्वीकरणीयतया 'अभाव आकाशं न पश्यति' इत्यादावऽभा-वसमवेतत्वाऽप्रसिद्ध्या वाक्यार्थाप्रसिद्धेर्दुर्वारत्वात् ।

चैत्रादेरतीतचाक्षुषस्य घटादिविषयकत्वेपि समयविशेषे 'चैत्रो घटं न पश्य-ति' इतिप्रयोगाद्द् वर्तमानताहशचाक्षुषत्वाद्यवच्छेदेनोभयाभावभानस्य. प्रतियो-

---

भयाभावविशिष्टभेद उक्तप्रत्यक्षे नास्त्येव— उक्तप्रत्यक्षस्य घटवृत्तित्वाकाशविषयकत्वोभयाभाव-विशिष्टरूपत्वादेव किं त्वऽलौकिकविषयिताशून्यप्रत्यक्षं द्रव्यविशिष्टं न इत्याकारक एव स्वस्मिन् धात्वर्थप्रत्यक्षेऽन्योन्याभावः स्यात् तादृशान्योन्याभावप्रतियोगितायाः द्रव्यविशिष्टनिष्ठाया अव-च्छेदकं द्रव्यादिकमेव स्यान्न तूक्तोभयाभाव इत्युक्तोभयाभावे यत् प्रत्यक्षनिष्ठान्योन्याभावप्रतियोगि-तानवच्छेदकत्वं तदेव धात्वर्थीभूतोक्तप्रत्यक्षनिरूपितव्यापकत्वं तादृशव्यापकतासंबन्धेनोक्तो-भयाभावे धात्वर्थस्योक्तस्यान्वय इत्यर्थः । उपसंहरति— एवं चेति ।

परिहरति— तदपि नेति, उक्तरीत्या यत् प्रत्यक्षे घटवृत्तित्वाभाव उक्तस्तत्र यदि यत् समवाय-संबन्धेन प्रत्यक्षस्य घटे वृत्तित्वं तदभावो नोच्येत तदा घटविषयकचाक्षुषप्रत्यक्षस्य घटे समवायसं-बन्धेनाऽसत्त्वेपि कालिकसंबन्धेन तु सत्त्वमस्त्येवेति 'घटो घटं पश्यति' इत्येव स्यात् 'घटो घटं न पश्यति' इतिप्रयोगो नोपपद्येत, एवमाकाशविषयकचाक्षुषप्रत्यक्षस्यापि घटे समवायसंबन्धेन निश्चयासंभवेपि कालिकसंबन्धेन तु निश्चयः संभवत्येवेति कालिकसंबन्धेनाकाशविषयकचाक्षुषप्र-त्यक्षे घटवृत्तित्वनिश्चयदशायाम् 'घट आकाशं पश्यति' इत्येव स्यात् 'घट आकाशं न पश्यति' इतिप्रयोगस्तज्जन्यशाब्दबोधश्च नोपपद्येत इति हेतोः प्रत्यक्षस्य घटे समवायेन वृत्तित्वाभावो वक्तव्यः ( समवायेन घटवृत्तित्वाभावस्य भानं स्वीकार्यम् ) तथा च घटे समवायेन प्रत्यक्षं नैव संभवतीति 'घटो घटं न पश्यति' 'घट आकाशं न पश्यति' इत्यादिप्रयोगस्तूपपद्येत यद्यपि तथापि 'अभाव आकाशं न पश्यति' इतिप्रयोगो नोपपद्येत— अभावे समवायसंबन्धेन कस्यचित् वृत्तिरेवाप्रसिद्धा नास्ति येनाभावे समवायेन प्रत्यक्षाभाव उपपद्येतेत्यर्थः । घटे तु गुणादीनां समवा-येन वृत्तिः प्रसिद्धास्तीति समवायसंबन्धावच्छिन्नप्रतियोगिताकोऽभाव उपपद्यते । तस्मात् 'घट आकाशं न पश्यति' इत्यत्रालौकिकविषयिताशून्यप्रत्यक्षे घटवृत्तित्वाऽऽकाशविषयकत्वोभयाभाव एव प्रतीयते इति यदुक्तं तदपि न संभवतीति भावः ।

चैत्रादेरिति— यदि 'घट आकाशं न पश्यति' इत्यत्र प्रत्यक्षे घटवृत्तित्वाकाशविषयकत्वो-भयाभावभानं स्वीक्रियते तदा 'चैत्रो घटं न पश्यति' इत्यत्रापि प्रत्यक्षे चैत्रवृत्तित्वघटविषयक-त्वोभयाभावभानं स्वीकार्यं तत्र चैत्रवृत्त्यऽतीतचाक्षुषप्रत्यक्षस्य घटविषयकत्वसंभवेपि 'चैत्रो घटं

गिकोटौ वर्तमानत्वमन्तर्भाव्य त्रित्वावच्छिन्नाभावभानस्य वा स्वीकरणीयतया यदा किंचिदंशेऽलौकिकमेव घटादिचाक्षुषं तस्य वर्तते तदा 'चैत्रो घटं न पश्यति' इत्यादिप्रयोगापत्तेर्दुर्वारत्वात्— वर्तमानाऽलौकिकविषयिताशून्यचाक्षुषत्वाद्यव-च्छेदेन चैत्रवृत्तित्वघटविषयकत्वोभयाभावसत्त्वात् ।

समानेन्द्रियजन्योपनीतभानादौ लौकिकप्रत्यक्षसामग्र्या विरोधित्वस्य निष्प्रा-माणिकतया लौकिकविषयितानियामकोपनायकज्ञानादिसमवहितलौकिकसंनिक-

न पश्यति ' इत्यपि प्रयोगः समयविशेषे=वर्तमानकाले संभवतीति वर्तमाने एवालौकिकविषयिता-शून्यप्रत्यक्षे चैत्रवृत्तित्वघटविषयकत्वोभयाभावभानं स्वीकार्यं न तु प्रत्यक्षमात्रे ' पश्यति ' इत्यस्य वर्तमानकालिकत्वात्, किं वात्र वर्तमानत्वं प्रतियोगिकोटौ निवेश्य त्रित्वावच्छिन्नाभावभानम्= अलौकिकविषयिताशून्यप्रत्यक्षे वर्तमानत्वचैत्रवृत्तित्वघटविषयकत्वैतत्त्रितयाऽभावभानं स्वीकार्यम्- एवं प्राप्ते यदा तस्य=चैत्रस्य किंचिदंशे=आकाशाद्यंशेऽलौकिकमपि घटादिविषयकम् ' अत्रा-काशे घटोऽस्ति ' इत्याद्याकारकं चाक्षुषप्रत्यक्षं जायेत तदा ' चैत्रो घटं न पश्यति ' इति प्रयो-गो यद्यपि नेष्टस्तथापि वर्तमानालौकिकविषयिताशून्यचाक्षुषप्रत्यक्षे चैत्रवृत्तित्वघटविषयकत्वोभया-भावस्य सत्त्वात् 'चैत्रो घटं न पश्यति' इतिप्रयोग आपद्येतैवेति दोषः । 'चैत्रो घटं न पश्यति ' इत्यत्रोक्तरीत्या वर्तमानालौकिकविषयिताशून्यचाक्षुषप्रत्यक्षे चैत्रवृत्तित्वघटविषयकत्वोभयाभावभान-स्वीकारेणाऽलौकिकविषयिताशालिघटविषयकचाक्षुषप्रत्यक्षस्य चैत्रे सत्त्वेपि वर्तमानालौकिकवि-षयिताशून्यघटविषयकप्रत्यक्षाभावस्यापि चैत्रे संभवात् तत्प्रतिपादकस्य ' चैत्रो घटं न पश्यति ' इतिप्रयोगस्यापत्तिर्दुर्वारैव स्यात्, न च ' अत्राकाशे घटः ' इत्याद्याकारकाऽलौकिकविषयताशा-लिघटविषयकचाक्षुषप्रत्यक्षस्य चैत्रे सत्त्वे ' चैत्रो घटं न पश्यति ' इतिप्रयोग इष्टः— अत्र धातुना लौकिकालौकिकत्वविशेषणशून्यचाक्षुषप्रत्यक्षोपस्थितेर्जायमानत्वाद् घटविषयककिंचित्प्रत्यक्षस्य सत्त्वाचेति ' चैत्रो घटं न पश्यति ' इत्यत्र प्रत्यक्षे उक्तोभयाभावभानस्वीकारो न युक्त इत्यर्थः ।

' चैत्रो घटं न पश्यति ' इत्यत्रालौकिकविषयिताशून्यचाक्षुषप्रत्यक्षे चैत्रवृत्तित्वघटविषयक-त्वोभयाभावभानस्वीकारे दोषान्तरमाह— समानेन्द्रियेति, यथा 'सुरभि चन्दनखण्डम्' इति समा-नेन्द्रियजन्योपनीतभानम्— चक्षुषैव चन्दनखण्डविषयकस्य सौरभविषयकस्य च प्रत्यक्षस्य जाय-मानत्वात्, तथा ' सुरभिर्घटः ' इत्यपि समानेन्द्रियजन्योपनीतभानम्— चक्षुषैव घटविषयकस्य पूर्वदिने घ्राणेन प्रत्यक्षीकृतसौरभविषयकस्य च प्रत्यक्षस्य जायमानत्वात्, तत्र यथा ' सुरभि-चन्दनखण्डम् ' इत्यत्र चन्दनखण्डस्य लौकिकसंनिकर्षादिरूपलौकिकप्रत्यक्षसामग्र्या लौकिकं प्रत्यक्षं भवति सौरभस्य च स्मरणादिरूपाऽलौकिकप्रत्यक्षसामग्र्याऽलौकिकं प्रत्यक्षं भवतीत्यऽलौ-किकोपनीतभानं प्रति लौकिकप्रत्यक्षसामग्र्या विरोधो नास्तीति लौकिकालौकिकोभयविषयिता-शालि ' सुरभि चन्दनखण्डम् ' इति चाक्षुषप्रत्यक्षं जायते तथैव ' सुरभिर्घटः ' इत्यत्राप्युप-नायक ( उपनीतापादक ) ज्ञानसहकृतो यो लौकिकविषयितानियामको लौकिकसंनिकर्षस्तादृ-

र्षाद् घटादिनिरूपितलौकिकाऽलौकिकोभयविषयिताशालिचाक्षुषादेरुत्पत्त्या तादृशचाक्षुषादिदशायामुक्तप्रयोगापत्तेः ।

आकाशादिनिरूपितालौकिकविषयिताशालिवर्तमानचाक्षुषाद्यंशे घटादिवृत्तित्वस्य आकाशीयत्वादिना लौकिकविषयितायाश्च भ्रमदशायाम् 'घट आकाशं न पश्यति' इत्यादिवाक्याच्छाब्दबोधापत्तेर्दुर्वारत्वाच्च । घटादिनिरूपिताऽलौकिकविषयिताशून्यचाक्षुषत्वाद्यवच्छेदेन घटादिविषयत्वघटितोभयाभावभानोपगमेऽप्यनिस्तारात् ।

---

शसंनिकर्षाद् घटनिरूपितलौकिकालौकिकोभयविषयिताशालि चाक्षुषप्रत्यक्षं जायते तथा च तादृशचाक्षुषादिदशायाम्= घटनिरूपितलौकिकालौकिकोभयविषयिताशालिचाक्षुषप्रत्यक्षकाले उक्तप्रयोगापत्तेः= 'चैत्रो घटं न पश्यति' इतिप्रयोग आपद्येतैव. यतः- 'चैत्रो घटं न पश्यति' इत्यत्र त्वऽलौकिकविषयिताशून्यचाक्षुषप्रत्यक्षे हि चैत्रवृत्तित्वघटविषयकत्वोभयाभावभानमुच्यते न तु लौकिकालौकिकोभयविषयिताशालिचाक्षुषप्रत्यक्षे तथा च 'सुरभिर्घटः' इत्याकारकस्य लौकिकालौकिकोभयविषयिताशालिचाक्षुषप्रत्यक्षस्य घटविषयकस्य चैत्रे सत्त्वेपि घटविषयकालौकिकविषयिताशालिचाक्षुषप्रत्यक्षाभावस्य चैत्रे बाधाभावात् तादृशप्रत्यक्षाभावप्रतिपादकस्य 'चैत्रो घटं न पश्यति' इतिप्रयोगस्यापत्तिः स्यादेव- 'सुरभिर्घटः' 'चैत्रो घटं न पश्यति' इतिवाक्ययोरुक्तरीत्या विभिन्नविषयत्वेनैककाले ताभ्यां जायमानशाब्दबोधयोर्विरोधासंभावात्, न च 'सुरभिर्घटः' इत्याकारकप्रत्यक्षकाले 'चैत्रो घटं न पश्यति' इतिप्रयोग इष्टः- चैत्रे घटप्रत्यक्षस्य सत्त्वादेवेत्युक्तोभयाभावभानस्वीकारे दोष इत्यर्थः ।

'घट आकाशं न पश्यति' इत्यत्रालौकिकविषयिताशून्यचाक्षुषप्रत्यक्षे घटवृत्तित्वाऽऽकाशविषयकत्वोभयाभावभानस्वीकारे दोषान्तरमाह-आकाशादीति । आकाशीयत्वादिना आकाशीयत्वेन रूपेण लौकिकविषयितायाः=आकाशनिरूपितलौकिकविषयितायाः । यदाऽऽकाशनिरूपिताऽलौकिकविषयिताशालिवर्तमानचाक्षुषप्रत्यक्षे घटवृत्तित्वस्याकाशनिरूपितलौकिकविषयिताशालित्वस्य च भ्रमो जातस्तदापि 'घट आकाशं न पश्यति' इतिवाक्यजन्यशाब्दबोध आपद्येतैव यतः-'घट आकाशं न पश्यति' इत्यत्रोक्तरीत्या वर्तमानालौकिकविषयिताशून्यचाक्षुषप्रत्यक्षे घटवृत्तित्वाकाशविषयकत्वोभयाभावभानस्वीकारे ह्याकाशनिरूपितलौकिकविषयिताशाल्याकाशविषयकचाक्षुषप्रत्यक्षभ्रमस्य घटे सत्त्वेप्याऽऽकाशविषयकाऽलौकिकविषयिताशालिवर्तमानचाक्षुषप्रत्यक्षाभावस्य घटे बाधाभावात् तादृशप्रत्यक्षाभावप्रतिपादकस्य 'घट आकाशं न पश्यति' इतिप्रयोगस्य तज्जन्यशाब्दबोधस्य चापत्तिः स्यादेव-उक्तभ्रमस्यैतद्वाक्यजन्यशाब्दबोधस्य विभिन्नविषयत्वात् । न चाकाशनिरूपितलौकिकविषयिताशाल्याकाशविषयकचाक्षुषप्रत्यक्षस्य घटवृत्तित्वभ्रमदशायाम् 'घट आकाशं न पश्यति' इतिप्रयोग इष्टः-घटे आकाशविषयकप्रत्यक्षभ्रमस्य सत्त्वादित्यर्थः । इत्येवमनिष्टप्रयोगप्राप्तिरूपदोषनिकरं प्रदर्श्य तस्य फलमाह

**एतेनाख्यातार्थवर्तमानत्वाद्यवच्छिन्नसमवायावच्छिन्नाश्रयत्वत्वाद्यवच्छिन्ने आकाशादिविषयकप्रतियोगिकत्वलौकिकान्यविषयिताशून्यचाक्षुषप्रतियोगिकत्वघटाद्यनुयोगिकत्वेतत्त्रितयत्वावच्छिन्नाभावो भासते. अतः ' अभाव आकाशं**

घटादिनिरूपितेति, ' चैत्रो घटं न पश्यति ' इत्यत्र घटनिरूपितालौकिकविषयिताशून्यचाक्षुषप्रत्यक्षे घटादिविषयत्वघटितोभयाभावभानोपगमेपि=घटविषयकत्वचैत्रवृत्तित्वोभयाभावभानस्वीकारेऽप्युक्तदोषाणामापत्त्या न निस्तार इत्यर्थः । एवमेव ' घट आकाशं न पश्यति ' इत्यत्राप्याकाशनिरूपितालौकिकविषयिताशालिचाक्षुषप्रत्यक्षे घटवृत्तित्वाकाशविषयकत्वोभयाभावभानस्वीकारेऽप्यनिस्तारो ज्ञेयः । अथ वेत्यादिना ' घट आकाशं न पश्यति ' इत्यत्र यः खलु धात्वर्थीभूतोक्तप्रत्यक्षस्योक्तोभयाभावेऽन्वयः प्रदर्शितस्तत्राप्युक्तप्रयोगापत्त्यादिरूपदोषवृन्दं विज्ञेयम्, तथा हि–चैत्रादावुक्तोपनीतभानादिसत्त्वे ह्युक्तोपनीतभानरूपाऽलौकिकविषयिताशालिचाक्षुषप्रत्यक्षस्य चैत्रादिवृत्तित्वाकाशविषयकत्वोभयस्मिन्नन्वयसत्त्वेप्यऽलौकिकविषयिताशून्यचाक्षुषप्रत्यक्षस्य चैत्रादिवृत्तित्वाकाशविषयकत्वोभयाभावेऽन्वये बाधकाभावात् तत्प्रतिपादकस्य ' चैत्र आकाशं न पश्यति ' इत्यादिप्रयोगस्यापत्तिः स्यादेव, एवमेव ' घट आकाशं न पश्यति ' इत्यादावप्येतद्दोषप्रसक्तिर्विज्ञेया ।

उक्तदोषं प्रकारान्तरेणाप्युपपादनेऽतिदिशति–एतेनेति, यथा ' भूतले घटः ' इत्यत्र घटसंयोगो घटप्रतियोगिको भूतलानुयोगिकश्चेति भूतलवृत्तिघटाश्रयत्वे घटप्रतियोगिकत्वं भूतलानुयोगिकत्वं च भासते तथैव ' चैत्रो घटं पश्यति ' इत्यत्र चैत्रवृत्ति यद् घटविषयकप्रत्यक्षाश्रयत्वं तादृशाश्रयत्वे चैत्रानुयोगिकत्वं लौकिकविषयिताशालिप्रत्यक्षप्रतियोगिकत्वं प्राप्तं प्रत्यक्षप्रतियोगिकत्वे च प्राप्ते प्रत्यक्षं घटविषयकमेवेति घटविषयकप्रतियोगिकत्वं चापि प्राप्तं भासते, एवमेव ' घट आकाशं पश्यति ' इत्यत्रापि ( घटे आकाशप्रत्यक्षमभ्युपगम्यैतत्प्रतिपादनमिति विज्ञेयम् ) घटनिष्ठं यद् वर्तमानत्वावच्छिन्नम्= तथा समवायसंबन्धावच्छिन्नम्=समवायसंबन्धेन वर्तमानकालिकमाऽऽकाशविषयकप्रत्यक्षाश्रयत्वं तादृशाश्रयत्वे घटानुयोगिकत्वमऽलौकिकविषयिताशून्यप्रत्यक्षप्रतियोगिकत्वं प्रत्यक्षं चाकाशविषयकमेवेत्याऽऽकाशविषयकप्रतियोगिकत्वं चाभ्युपगन्तव्यमिति ' घट आकाशं न पश्यति ' इत्यत्र आख्यातार्थीभूतवर्तमानत्वावच्छिन्ने समवायसंबन्धावच्छिन्ने आश्रयत्वत्वावच्छिन्ने= आश्रयत्वे एवाऽऽकाशविषयकप्रतियोगिकत्वस्य लौकिकान्य ( अलौकिक ) विषयिताशून्यचाक्षुषप्रत्यक्षप्रतियोगिकत्वस्य घटानुयोगिकत्वस्य चाभावो भासते इत्युच्यते, एवं च ' अभाव आकाशं न पश्यति ' इत्यत्राप्युक्तानुपपत्तिर्नास्त्येव. अर्थात्–प्रत्यक्षे समवायेनाभाववृत्तित्वाभावविवक्षायामभावे समवायेन वृत्तित्वाप्रसिद्धया यः खलु ( २९० पृ. ) उपालम्भः प्रदर्शितस्तस्येदानीमवकाशो नास्ति–प्रत्यक्षे समवायेनाभाववृत्तित्वाभावस्याऽविवक्षणाद् उक्ताश्रयत्वे एवोक्तत्रितयाभावभानस्वीकारात् तत्र च बाधकाभावान्न काचिदनुपपत्तिरित्यर्थः । अत्र च तटस्थे एवाख्यातेन भासमाने

न पश्यति ' इत्यादौ नानुपपत्तिः, तत्र विषयितावत् प्रतियोगिकत्वं द्वितीयार्थः, निरुक्तचाक्षुषप्रतियोगिकत्वं त्रित्वं च धातोरर्थः. घटाद्यनुयोगिकत्वं च प्रथमान्तार्थः. इत्यपि निरस्तम्,

इतिचेत् ? अगत्या ' घट आकाशं न पश्यति ' इत्यादिवाक्यानामप्रामाण्यमुपगन्तव्यमिति ॥

॥ इति द्वितीयाकारकप्रथमखण्डः ॥

---

आश्रयत्वे त्रितयाभावान्वयो विज्ञेयः-चैत्रादिवृत्तिकिंचिन्निरूपिताश्रयत्वे चैत्राद्यनुयोगिकत्वस्यैव सत्त्वेन तदभावान्वयासंभवात् । तथा चाख्यातार्थभूतं वर्तमानत्वावच्छिन्नसमवायसंबन्धावच्छिन्नाश्रयत्वम् आकाशविषयकप्रतियोगिकत्वलौकिकान्यविषयिताशून्यचाक्षुषप्रत्यक्षप्रतियोगिकत्वघटानुयोगिकत्वैतत्त्रितयाभावविशिष्टमिति वाक्यार्थबोधः । अत्रत्यपदार्थानाह-तत्रेति, यथा विषयिता द्वितीयार्थस्तथात्र प्रतियोगिकत्वमेवाऽऽकाशादिपदोत्तरद्वितीयार्थः, लौकिकान्यविषयिताशून्यचाक्षुषप्रतियोगिकत्वं त्रित्वं च धात्वर्थः, घटाद्यनुयोगिकत्वं प्रथमान्तार्थ इत्यर्थः । उक्तानिष्टप्रयोगापत्तिरूपदोषप्रदर्शनेनेदमपि निरस्तमित्याह-इत्यपि निरस्तमिति, एवमपि चैत्रादिनिष्ठे उक्ताऽलौकिकविषयिताशाल्युपनीतभानाद्याश्रयत्वे घटादिप्रतियोगिकत्वादिसत्त्वेपि अलौकिकविषयिताशून्यचाक्षुषप्रत्यक्षस्य वर्तमानत्वावच्छिन्नसमवायावच्छिन्नाश्रयत्वे उक्तत्रितयाभावभाने बाधकाभावादुक्तरीत्या चैत्रादौ घटादिप्रत्यक्षदशायामपि ' चैत्रो घटं न पश्यति ' इत्यादिप्रयोगापत्तिर्दुर्वारैवेत्यर्थः ।

इत्येवम् " अथ दृश्यादिसमभिव्याहृतद्वितीयायाः २८० पृ० " इत्यादिना यः खलु पूर्वपक्षः सवादः प्रतिपादितस्तमुद्दिश्याह- इतिचेदिति । अगत्येति- ' घट आकाशं न पश्यति ' इत्यादिस्थले वाक्यार्थोपपादनं न संभवतीत्यगत्यैतादृशवाक्यानामप्रामाण्यमेव स्वीकार्यमित्यर्थः ॥

॥ इति व्युत्पत्तिवादादर्शे द्वितीयाकारकप्रथमखण्डः ॥

**अनुमित्याद्यर्थकधातुयोगे विधेयत्वं विधेयित्वं वा द्वितीयार्थः, तेन वह्न्यादिपक्षकानुमितिपरस्य 'वह्निमनुमिनोमि' इत्यादिवाक्यस्य न प्रामाण्यम्। यदि च वह्निसाध्यकपर्वतपक्षकानुमितिपरस्य 'वह्निमत्त्वेन पर्वतमनुमिनोमि' इत्यादिवाक्यस्यापि प्रामाण्यं मन्यते तदा तादृशे धातुयोगे उद्देश्यत्वमुद्देश्यित्वं वा द्वितीयार्थः, तस्य तृतीयान्तोपस्थाप्यसाध्यविधेयकत्वविशिष्टेऽन्वयः, अतो 'वह्निमत्त्वेन' इत्याद्यसमभिव्याहारे तत्र 'पर्वतमनुमिनोमि' इत्यादयो न प्रयोगाः।**

---

प्रत्यक्षार्थकधातुसमभिव्याहृतद्वितीयाया अर्थं प्रतिपाद्य संप्रत्यनुमित्याद्यर्थकधातुसमभिव्याहृतद्वितीयाया अर्थं प्रतिपादयतुं द्वितीयखण्डमारभते— अनुमित्यादीति, 'पर्वते वह्निमनुमिनोति चैत्रः' इत्यत्र प्राचीनमते विधेयत्वं द्वितीयार्थस्तत्र प्रकृत्यर्थस्याधेयतासंबन्धेनान्वयः, तस्य प्रकृत्यर्थे निष्ठत्व ( आश्रयत्व ) संबन्धेनान्वयः, द्वितीयार्थविधेयत्वस्य धात्वर्थेऽनुमितौ च निरूपकत्वसंबन्धेनान्वय आख्यातस्याश्रयत्वमर्थस्तथा चात्र वह्निनिष्ठविधेयतानिरूपकानुमित्याश्रयश्चैत्र इतिशाब्दबोधः। पूर्वम् ( पृ० २७२ ) उक्तरीत्या 'वह्निमनुमिनोति जलं न' इत्यत्रानुमितौ जलनिष्ठविधेयताया निरूपकत्वसंबन्धेनाभावो वाच्यस्तत्तु न संभवति निरूपकत्वसंबन्धस्य वृत्त्यनियामकत्वादिति विधेयित्वं द्वितीयार्थ इति नवीना वदन्ति, विधेयित्वं तु विषयित्ववज्ज्ञानधर्म एवेति तस्यानुमितावाऽऽश्रयतासंबन्धेनान्वय आश्रयतासंबन्धस्य च वृत्तिनियामकत्वेनाऽभावीयप्रतियोगितावच्छेदकत्वादाश्रयतासंबन्धावच्छिन्नप्रतियोगिताकस्य च जलनिरूपितविधेयित्वाभावस्याऽनुमितावन्वये न काचिदनुपपत्तिरित्यर्थः, एवमेवाग्रेपि बोध्यम्। उक्तस्य फलमाह— तेनेति, वह्न्यादिपक्षकानुमितिपरस्य='वह्नावुष्णत्वमनुमिनोमि' इत्यनुमितिपरस्य 'वह्निमनुमिनोमि' इत्यादिवाक्यस्य न प्रामाण्यापत्तिः यतः 'वह्निमनुमिनोमि' इत्यत्र वह्नौ विधेयत्वमभिमतं नास्ति किं तूष्णत्वादावेव एवं वह्निनिरूपितविधेयित्वमनुमिताविष्टं नास्ति किं तूष्णत्वादिनिरूपितविधेयित्वमेव न च तादृशार्थबोधकत्वम् 'वह्निमनुमिनोमि' इत्यस्य संभवतीत्यप्रामाण्यमित्यर्थः। एवम् 'पर्वतमनुमिनोमि' इत्यस्य वह्निविधेयकानुमितिप्रतिपादकत्वासंभवादप्रामाण्येपि 'वह्निमत्त्वेन पर्वतमनुमिनोमि' इतिवाक्यस्य तु प्रामाण्यमिष्टमेवेत्याह— यदि चेति। 'वह्निमत्त्वेन पर्वतमनुमिनोमि' इत्यत्र तादृशधातुयोगे=अनुमित्यर्थकधातुसमभिव्याहारे पूर्ववत्— प्राचीनमते उद्देश्यत्वं द्वितीयार्थस्तस्य निरूपकतासंबन्धेन वह्निमत्त्वेनेति तृतीयान्तोपस्थाप्यं यत्साध्य ( वह्नि ) विधेयकत्वं तद्विशिष्टे धात्वर्थेऽन्वयस्तथा च पर्वतनिष्ठोद्देश्यतानिरूपकवह्निविधेयकानुमितिवानिति बोधः। नवीनमते निरूपकत्वसंबन्धस्य वृत्त्यनियामकत्वात् 'वह्निमत्त्वेन पर्वतमनुमिनोति न जलवत्त्वेन' इत्यत्र निरूपकत्वसंबन्धावच्छिन्नप्रतियोगिताकोद्देश्यत्वाभावस्यानुमितौ भानासंभवाद् उद्देश्यित्वं द्वितीयार्थः, अत्र च— पर्वतनिरूपितोद्देश्यित्वाश्रयानुमित्याश्रयश्चैत्र इतिबोधाकारः। तृतीयान्तोपस्थाप्यसाध्यविधेयकत्वविशिष्टे धात्वर्थे द्वितीयार्थान्वयस्वीकारस्य फलमाह— अत इति, 'वह्निमत्त्वेन' इत्यस्याऽसमभिव्याहारे तदर्थस्य साध्यविधेयक-

विधेयत्वाद्यर्थे तृतीयानुशासनविरहात् तृतीयान्तेन वह्न्यादिविधेयकत्वं कथमुपस्थापनीयमिति तु न शङ्क्यम्, वैशिष्ट्यरूपार्थे तृतीयानुशासनसत्त्वाद् विधेयतादेरपि वैशिष्ट्यरूपत्वात्, अत एव 'रजतत्वेन शुक्तिं जानाति' इत्यादौ ज्ञाने रजतत्वादिप्रकारकत्वस्य 'घटत्वेन वह्निर्नास्ति' इत्यादौ सौंदडमतेऽभावे घटत्वावच्छिन्नप्रतियोगिताकत्वस्य तृतीयान्ततो बोधः। तृतीयान्तार्थरजतादिप्रकारकत्वद्वितीयान्तार्थशुक्त्यादिविषयकत्वयोर्विशिष्टवैशिष्ट्यबोधमर्यादयाऽवच्छेद्यावच्छेदकभावभानम् 'रजतत्वेन शुक्तिं जानाति' इत्यादौ नियतम्- केवलमेकत्र द्वयमितिरीत्या तदुभयबोधस्य तत्राऽव्युत्पन्नत्वात्, अतः 'इमे रङ्गरजते' इत्यादिप्रमापरस्य तादृशवाक्यस्य न प्रामाण्यम्।

---

त्वस्योपस्थित्यऽसंभवेन धात्वर्थस्य तद्वैशिष्ट्यासंभवात् तत्र=उक्तस्थले (उक्तप्रयोगस्थाने) केवलम् 'पर्वतमनुमिनोमि' इति प्रयोगो न भवतीत्यर्थः।

ननु विधेयत्वार्थे तृतीयाया अनुशासनेन विधानमेव न कृतमिति 'वह्निमत्त्वेन' इति तृतीयान्तेन वह्निविधेयकत्वस्योपस्थितिरेव न संभवति येन तद्वैशिष्ट्यं धात्वर्थे प्राप्नुयादित्याशङ्क्याह- विधेयत्वाद्यर्थेति। उत्तरमाह- वैशिष्ट्येति, "इत्थंभूतलक्षणे" इतिसूत्रेण वैशिष्ट्यार्थे तृतीया विधीयते एव विधेयत्वमप्यत्र वैशिष्ट्यरूपमेवेति 'वह्निमत्त्वेन' इतितृतीयान्तेन वह्निविधेयकत्वोपस्थितेर्नानुपपत्तिरित्यर्थः। तृतीयाया वैशिष्ट्यरूपार्थबोधकत्वे प्रमाणमाह- अत एवेति, अत एव= तृतीयाया वैशिष्ट्यरूपार्थबोधकत्वादेव 'रजतत्वेन शुक्तिं जानाति' इत्यत्र रजतत्वप्रकारकशुक्तिविशेष्यकज्ञाने रजतत्वप्रकारकत्ववैशिष्ट्यम् 'रजतत्वेन' इतितृतीयान्तेन प्रत्याय्यते, 'घटत्वेन वह्निर्नास्ति' इत्यत्र च वह्न्यभावे घटत्वावच्छिन्नप्रतियोगिताकत्ववैशिष्ट्यम् 'घटत्वेन' इति तृतीयान्तेन प्रत्याय्यते तथा च तत्र= 'रजतत्वेन शुक्तिं जानाति' इत्यत्र केवलमेकत्रद्वयमितिरीत्या=यथा समूहालम्बनबोधविषययोः पदार्थयोः परस्परमऽवच्छेद्यावच्छेदकभावराहित्येन (विशेष्यविशेषणभावराहित्येन) भानं भवति तथात्र तदुभयबोधस्य=रजतत्वप्रकारकत्वशुक्तिविशेष्यकत्वयोर्बोधस्याऽव्युत्पन्नत्वात् तृतीयान्तार्थं यद्रजतत्वप्रकारकत्वं द्वितीयान्तार्थं यच्छुक्तिविषयकत्वम्=शुक्तिविशेष्यकत्वं च ज्ञाने भासते तयोर्विशिष्टवैशिष्ट्यबोधमर्यादया परस्परमवच्छेद्यावच्छेदकभावस्य नियमेन भानं भवति तत्र रजतत्वप्रकारकत्वमवच्छेदकं शुक्तिविशेष्यकत्वमवच्छेद्यमित्याह- तृतीयान्तार्थेति। अवच्छेद्यावच्छेदकभावभानस्य फलमाह- अत इति, 'इमे रङ्गरजते' इत्यत्र समूहालम्बनबोधे रङ्गविषयकत्वरजतविषयकत्वयोः परस्परमवच्छेद्यावच्छेदकभावभानं न भवति 'रङ्गत्वेन रजतं जानाति' इत्यत्र तु रङ्गत्वप्रकारकत्वरजतविशेष्यकत्वयोः परस्परमवच्छेद्यावच्छेदकभावभानं भवतीति 'रङ्गत्वेन रजतं जानाति' इत्यादिवाक्यस्य रङ्गत्वप्रकारकत्वरजतविशेष्यकत्वयोरवच्छेद्यावच्छेदकभावपुरस्सरशाब्दबोधं प्रत्येव प्रामाण्यमस्ति न तु 'इमे रङ्गरजते' इत्यादिसमूहालम्बनशाब्दबोधं प्रत्यपीति यदि समूहालम्बनशाब्दबोधार्थं तादृशवाक्यम्=' रङ्गत्वेन रजतं जानाति', 'रजतत्वेन शुक्तिं जानाति' इत्यादिवाक्यं प्रयु-

घटत्वाद्यवच्छिन्नवह्न्याद्यभावनिष्ठेन वह्न्यादिनिरूपितानुयोगिताविशेषरूपवह्न्याद्यभावत्वेन तदभावनिष्ठघटत्वाद्यवच्छिन्नप्रतियोगिताकत्वस्याऽवच्छेद्यावच्छेदकभावः स्वीक्रियते । 'घटत्वेन वह्निर्नास्ति' इत्यादौ च तद्बोधस्योक्तरीत्याऽवश्यकत्वमिति घटत्वावच्छिन्नवह्न्याद्यभावस्य वह्नित्वावच्छिन्नघटाद्यभावसमनियतत्वेन तदभिन्नतया तत्र घटत्वाद्यवच्छिन्नप्रतियोगिताकत्वघटाद्यभावत्वसत्त्वेपि तादृशाभावपरस्य 'घटत्वेन घटो नास्ति' 'वह्नित्वेन वह्निर्नास्ति' इत्यादिवाक्यस्य न प्रामाण्यम् ।

उक्तस्थलेषु तृतीयान्ताद्यर्थस्य द्वितीयान्ताद्यर्थेऽवच्छेद्यावच्छेदकभावसंबन्धेनाऽ-

---

न्वये तदा तस्य प्रामाण्यं न भवतीत्यर्थः । एवमेव 'वह्निमत्त्वेन पर्वतमनुमिनोमि' इत्यत्राऽनुमितौ भासमानयोः पर्वतोद्देश्यकत्ववह्निविधेयकत्वयोः परस्परमवच्छेद्यावच्छेदकभावो विज्ञेयः ।

'घटत्वेन वह्निर्नास्ति' इत्यत्रत्यावच्छेद्यावच्छेदकभावमाह– घटत्वाद्यवच्छिन्नेति, घटत्वाद्यवच्छिन्नवह्न्याद्यभाव:=घटत्वावच्छिन्नप्रतियोगिताकवह्न्यभावस्तस्मिन् स्वप्रतियोगिकत्वसंबन्धेन वह्निर्वर्तते इति वह्निनिरूपितानुयोगिता वह्न्यभावे प्राप्ता सा चानुयोगिता वह्न्यभावत्वस्वरूपैवास्तीति वह्निनिरूपितानियोगिताविशेषरूपं यद् वह्न्यभावत्वं तथा तदभावनिष्ठम्=वह्न्यभावनिष्ठं यद् घटत्वावच्छिन्नप्रतियोगिताकत्वं च तयोः परस्परमवच्छेद्यावच्छेदकभावः स्वीक्रियते, तथा च 'घटत्वेन वह्निर्नास्ति' इत्यत्र तद्बोधस्य=उक्तावच्छेद्यावच्छेदकभावपुरस्सरशाब्दबोधस्यावश्यकत्वम्, व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावस्य केवलान्वयित्वाद् यत्र घटत्वावच्छिन्नप्रतियोगिताकवह्न्यभावो वर्तते तत्र वह्नित्वावच्छिन्नप्रतियोगिताकघटाभावोपि वर्तत एवेति तयोः समनियतत्वेनाऽभिन्नत्वात् तत्र=तादृशाभावे यद्यपि घटत्वावच्छिन्नप्रतियोगिताकत्वं घटाभावत्वं च वर्तते एव तथा वह्नित्वावच्छिन्नप्रतियोगिताकत्वं वह्न्यभावत्वं च वर्तत एव तथापि तादृशाभावपरस्य=उक्तव्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावपरत्वेन 'घटत्वेन घटो नास्ति' 'वह्नित्वेन वह्निर्नास्ति' इत्यादिवाक्यस्य प्रामाण्यं न भवति विभिन्नविषयत्वात्, यतः– उक्तव्यधिकरणधर्मावच्छिन्नवह्न्यभावस्थले वह्न्यभावत्वघटत्वावच्छिन्नप्रतियोगिताकत्वयोरवच्छेद्यावच्छेदकभावः प्रतीयते 'घटत्वेन घटो नास्ति' इत्यत्र तु घटाभावत्वघटत्वावच्छिन्नप्रतियोगिताकत्वयोः 'वह्नित्वेन वह्निर्नास्ति' इत्यत्र च वह्न्यभावत्ववह्नित्वावच्छिन्नप्रतियोगिताकत्वयोरवच्छेद्यावच्छेदकभावः प्रतीयते इत्यर्थः । तथा च व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावपरस्य 'घटत्वेन घटो नास्ति' इत्यादिवाक्यस्य प्रामाण्यपरिहाराय 'घटत्वेन वह्निर्नास्ति' इत्यादौ तद्बोधस्य=अवच्छेद्यावच्छेदकभावबोधस्यावश्यकत्वमित्यन्वयः, अन्यथा 'घटत्वेन घटो नास्ति' इत्यादिवाक्यस्याप्युक्तव्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावविषयकशाब्दबोधं प्रति प्रामाण्यापत्तिः स्यादेव ।

परिहाराय प्राचीनैकदेशिमतमनुवदति– उक्तस्थलेष्विति, यथा 'रजतत्वेन शुक्तिं जानाति' इत्यत्र तृतीयान्तार्थस्य=रजतत्वप्रकारकत्वस्य द्वितीयान्तार्थे= शुक्तिविशेष्यकत्वे अवच्छेद्यावच्छेद-

न्वय इत्यपि केचित्, तन्न—विभक्त्यर्थे विभक्त्यर्थान्वयस्याव्युत्पन्नत्वात् । न च 'रजतत्वेनेदं ज्ञायते' इत्यादावाऽऽख्यातार्थविषयतायां तृतीयान्तार्थप्रकारताया निरूपितत्वसंबन्धेनाऽन्वयान्नोक्तव्युत्पत्तिकल्पनमिति वाच्यम्, तत्र रजतत्वादिप्रकारकत्वविशिष्टधात्वर्थज्ञाननिरूपितत्वस्याख्यातार्थे भानस्वीकारेणैवातिप्रसङ्गभङ्गात् ।

न च 'तस्मात् पचति' 'तस्मात् चैत्रस्य' इत्यादौ विभक्त्यर्थे कृतिसंबन्धादौ हेतुविभक्त्यर्थान्वयदर्शनान्नास्त्युक्ताव्युत्पत्तिरिति वाच्यम्, हेतुविभक्त्यतिरिक्तविभक्त्यर्थस्य विभक्त्यर्थानन्वयनियमात् ।

---

कभावसंबन्धेनान्वय उभयोरपि ज्ञानस्थत्वेन समानाधिकरणत्वात् तथा च रजतत्वप्रकारकत्वावच्छिन्नवत् शुक्तिविशेष्यकत्वं तद्विशिष्टज्ञानाश्रयश्चैत्र इति बोधः । एवम् 'वह्निमत्त्वेन पर्वतमनुमिनोमि' इत्यत्र वह्निविधेयकत्वस्य पर्वतोद्देश्यकत्वेऽन्वय इत्यर्थः । परिहरति— तन्नेति, विभक्त्यर्थस्य विभक्त्यर्थेऽन्वयो न भवतीति तृतीयान्तार्थस्य रजतत्वप्रकारकत्वादेः द्वितीयान्तार्थे शुक्तिविशेष्यकत्वादावन्वयो न संभवतीत्यर्थः । यथा प्राचीनमते स्वस्वामिभावः संबन्धस्तथात्रावच्छेद्यावच्छेदकभावस्य संबन्धत्वमुक्तम् । ननु 'रजतत्वेनेदं ज्ञायते' इत्यत्र रजतत्वप्रकारतानिरूपितज्ञानीयविशेष्यता ( विषयता ) वदिदमिति बोधोदयादाख्यातार्थभूतायां विषयतायाम्=विशेष्यतारूपविषयतायां निरूपितत्वसंबन्धेन तृतीयान्तार्थप्रकारतायाः=रजतत्वप्रकारताया अन्वयो भवति तत्राख्यातस्यापि विभक्तित्वेन विभक्त्यर्थे एव विभक्त्यर्थस्यान्वयो भवतीति उक्तव्युत्पत्तिकल्पनम्=विभक्त्यर्थस्य विभक्त्यर्थेऽन्वयो न भवतीति नियमकल्पनं न संभवतीत्याशङ्क्याह— न चेति, परिहारमाह— तत्रेति, तत्र= 'रजतत्वेनेदं ज्ञायते' इत्यत्र रजतत्वप्रकारकत्वस्य तृतीयान्तार्थस्याऽऽख्यातरूपविभक्त्यर्थेऽन्वयो न भवति किं तु धात्वर्थज्ञाने. तादृशविशिष्टज्ञाननिरूपितत्वमेवाख्यातार्थविषयतायां भासते इति विभक्त्यर्थस्य विभक्त्यर्थेऽन्वयरूपातिप्रसङ्गस्यापत्तिर्नास्तीत्यर्थस्तथा च रजतत्वप्रकारकज्ञाननिरूपितविशेष्यतावदिदमित्यत्र शाब्दबोधः ।

ननु 'तस्मात् पचति' इत्यस्य यस्मात् क्षुधितस्तस्मात् पचतीत्यर्थस्तथा च क्षुद्धेतुकपाकानुकूला कृतिरिति शाब्दबोधोदयाद् हेत्वर्थकपञ्चमीविभक्त्यर्थस्य हेतुकत्वस्याऽऽख्यातरूपविभक्त्यर्थे कृतावन्वयो दृश्यते ( आश्रयतासंबन्धेन ) तथा 'तस्माच्चैत्रस्य' इत्यस्य यस्माच्चैत्रेण क्रीतं गृहीतं वा तस्माच्चैत्रस्येत्यर्थस्तथा चात्र क्रयादिहेतुकं चैत्रस्वत्वमिति बोधोदयात् पञ्चम्यर्थस्य हेतुकत्वस्य षष्ठ्यर्थस्वत्वेऽन्वयो दृश्यते इति उक्ता व्युत्पत्तिः=विभक्त्यर्थस्य विभक्त्यर्थेऽन्वयो न भवतीति नियमो नास्तीत्याशङ्क्याह— न चेति । परिहारमाह— हेतुविभक्तीति, हेत्वर्थकविभक्त्यर्थस्य तूक्तरीत्या विभक्त्यन्तरार्थेऽन्वयो भवत्येवेति हेतुविभक्त्यतिरिक्तविभक्त्यर्थस्य विभक्त्यर्थेऽन्वयो न भवतीति नियमोऽस्तीति तृतीयान्तार्थरजतत्वप्रकारकत्वस्य द्वितीयान्तार्थशुक्तिविशेष्यकत्वे नान्वयः संभवतीत्यर्थः ।

न च 'रजतत्वेनेदं जानाति' इत्यादौ तृतीयायाः कारकविभक्तित्वाभावान्न तदर्थस्य क्रियायामन्वयसंभव इत्यगत्या द्वितीयार्थं एव तदन्वय उपगन्तव्य इति-वाच्यम्, मणिकारमते 'तस्माज्जानाति' इत्यादौ ज्ञानादिरूपधात्वर्थे एव हेतुविभक्त्यर्थस्य. 'तस्मात् स्थीयते' इत्यादौ च सर्वमत एव धात्वर्थस्थित्यादौ तस्यान्वयेन. षष्ठ्यर्थसंबन्धस्यापि "गुरुविप्रतपस्विदुर्गतानां प्रतिकुर्वीत भिषक् स्वभेषजैः" इत्यादौ धात्वर्थेऽन्वयेन. कर्मासमभिव्याहृते 'रजतत्वेन जानाति' इत्यादौ धात्वर्थे तृतीयार्थान्वयस्यावश्यकत्वेन. कारकविभक्तिभिन्नविभक्त्यर्थस्य क्रियायामऽनन्वय इत्यनियमात् ।

---

ननु यदुक्तम् 'रजतत्वेनेदं जानाति— ज्ञायते' इत्यादौ तृतीयान्तार्थरजतत्वप्रकारकत्वस्य धात्वर्थज्ञानेऽन्वयो न त्वाख्यातार्थविषयतायां वा द्वितीयार्थविषयतायां वान्वय इति तन्न युक्तं कारकविभक्त्यर्थस्यैव धात्वर्थेऽन्वयनियमात् 'रजतत्वेन' इतीत्थंभूतलक्षणतृतीयायाश्च कारक-विभक्तित्वाभावान्न तदर्थस्य=रजतत्वप्रकारकत्वस्य धात्वर्थेऽन्वयः संभवतीत्यगत्या द्वितीयार्थे= द्वितीयार्थविषयतायामेव तदन्वयः=तृतीयार्थरजतत्वप्रकारकत्वस्यान्वयः स्वीकार्य इत्याशङ्क्याह— न चेति । परिहारमाह— मणिकारेति, 'तस्माज्जानाति' इत्यस्य यस्मादधीतं दृष्टं वा तस्मा-ज्जानातीत्यर्थस्तथा चाऽध्ययनदर्शनादिहेतुकज्ञानवानिति बोधोदयादत्र हेतुविभक्तेः कारकविभक्ति-त्वाभावेपि तदर्थस्य हेतुकत्वस्य धात्वर्थीभूतज्ञानरूपक्रियायामेव मणिकारमतेऽन्वयो भवति-एवम् 'तस्मात् स्थीयते' ( यस्मादाह्वानं कृतं तस्मात् स्थीयते ) इत्यत्र च सर्वमते एव धात्वर्थस्थितौ तस्य= हेतुविभक्त्यर्थस्य हेतुकत्वस्यान्वयो भवति, एवम् "गुरुविप्र" इत्यत्र भिषक् गुर्वादिसंबन्धिनीं प्रतिक्रियाम् ( चिकित्साम् ) स्वभेषजैः कुर्यादितिबोधोदयादऽकारक-विभक्तिषष्ठ्या अर्थस्य गुर्वादिसंबन्धित्वस्य धात्वर्थप्रतिक्रियायामेवान्वयो भवति, कर्मासमभिव्या-हृते=इदमित्यादिकर्मवाचकपदसमभिव्याहाररहिते 'रजतत्वेन जानाति' इत्यादौ च तृतीयान्ता-र्थस्य रजतत्वादिप्रकारकत्वस्य धात्वर्थे एवान्वयोऽवश्यं स्वीकार्यः— अन्यत्रान्वयासंभवाद् न चात्र द्वितीयाविभक्तिरस्ति येन तदुपस्थितार्थे तृतीयार्थस्यान्वयः स्यादिति कारकविभक्तिभिन्न-विभक्त्यर्थस्य धात्वर्थक्रियायामन्वयो न भवतीति नियमो न संभवति— उक्तोदाहरणेषु कार-कविभक्तिभिन्नषष्ठीपञ्चम्यादिविभक्त्यर्थस्य धात्वर्थेऽन्वयस्य प्रदर्शितत्वात् किं तु कारकविभक्तेः क्रियायामेवान्वयो भवतीत्ययमेव नियम इति 'रजतत्वेनेदं जानाति' इत्यत्रापि तृतीयार्थस्य रजतत्वप्रकारकत्वस्य धात्वर्थज्ञाने एवान्वयो न तु द्वितीयार्थशुक्तिविशेष्यकत्वे इति हेतुविभक्त्य-तिरिक्तविभक्त्यर्थस्य विभक्त्यर्थेऽन्वयो न भवतीति नियमः सिद्ध इत्यर्थः । इदमित्यादिकर्मवा-चकपदसमभिव्याहारे तु कदाचित् तदर्थविशेष्यतायां तृतीयार्थस्य प्रकारत्वस्यान्वयः स्यादपि कर्मा-समभिव्याहारे त्वगत्या धात्वर्थे एव तृतीयार्थान्वयः स्वीकार्य इत्युक्तम्—कर्मासमभिव्याहारे इति

एवम् ' घटत्वेन वह्निर्नास्ति ' इत्यादौ प्रथमार्थो नानुयोगित्वम्- प्रथमाया संख्यातिरिक्तार्थाऽबोधकत्वनियमात्, अतो नञर्थाभावे संबन्ध एव तत्, तत्र च न तृतीयार्थान्वयसंभवः ।

मम त्वऽनुयोगितासंबन्धेन वह्न्यादिविशिष्टाभावे तृतीयान्तार्थघटत्वावच्छिन्न प्रतियोगिताकत्ववैशिष्ट्यभानाद् विशिष्टवैशिष्ट्यबोधमर्यादया वह्न्याद्यनुयोगिकत्वस्थलीयस्यानुयोगितया संबद्धवह्न्यादेस्तादृशप्रतियोगिताकत्वेनावच्छेद्याव च्छेदकभावभानोपगमेन सामञ्जस्यात् । अनुयोगिताया नञर्थतावच्छेदकत्वे तत्रैव वह्न्यादेः प्रतियोगिनोऽन्वयः, अतस्तत्र तृतीयान्तार्थघटत्वावच्छिन्नप्रतियोगिताया निरूपकत्वेनान्वयं स्वीकृत्याऽतिप्रसङ्गवारणं सम्यक् प्रतिभाति ।

---

यथा विभक्त्यर्थस्य विभक्त्यन्तरार्थेऽन्वयो न भवति तथा संबन्धभूतपदार्थेऽप्यन्वयो भवतीति ' घटत्वेन वह्निर्नास्ति ' इत्यत्र घटत्वेनेतितृतीयान्तार्थस्य घटत्वावच्छिन्नप्रतियोगिताकत्वस्य न संबन्धभूतेऽनुयोगित्वेऽन्वयः किं तु नञर्थाभावे एवेत्याह—एवमिति । नन्वऽनुयोगित्वस्य प्रथमार्थत्वसंभवात् संबन्धत्वं कथमित्याशङ्क्याह—प्रथमार्थ इति, प्रथमायाः संख्यातिरिक्तार्थबोधकत्वाभावान्नानुयोगित्वस्य प्रथमार्थत्वं संभवतीति तत्=अनुयोगित्वं नञर्थाभावे प्रतियोगिभूतवह्न्यादीनामऽन्वये संबन्ध एव प्रतियोगिभूतवह्न्यादीनां स्वाभावेऽनुयोगित्वसंबन्धेनान्वयो भवतीति यावत् तस्मात् तत्र=अनुयोगित्वे तृतीयार्थस्य घटत्वाद्यवच्छिन्नप्रतियोगिताकत्वस्यान्वयो न संभवति—अनुयोगित्वस्य संबन्धरूपत्वादित्यर्थः ।

स्वमतमाह—मम त्विति, वह्न्यभावे वह्निरपि वर्तते एवेति वह्न्यभावे यानुयोगिता प्रतादृशानुयोगितासंबन्धेन वह्निविशिष्टाभावे घटत्वेनेति तृतीयान्तार्थो घटत्वावच्छिन्नप्रतियोगिताकत्वमपि वर्तते एवेति ' घटत्वेन वह्निर्नास्ति ' इत्यत्र विशिष्टवैशिष्ट्यबोधमर्यादया=अनुयोगितासंबन्धेन वह्निविशिष्टेऽभावे घटत्वावच्छिन्नप्रतियोगिताकत्वस्यापि वैशिष्ट्यमस्तीति नञर्थेऽनुयोगितासंबन्धेन संबद्धो यो वह्निस्तस्यैव तादृशप्रतियोगिताकत्वेन=घटत्वावच्छिन्नप्रतियोगिताकत्वेन सहावच्छेद्यावच्छेदकभावो मम मतेऽस्तीति न कोपि दोषः, वह्नेरेवावच्छेद्यत्वस्वीकारात् तृतीयान्तार्थस्य घटत्वावच्छिन्नप्रतियोगिताकत्वस्य च नञर्थाभावेऽन्वयस्वीकारे विभक्त्यर्थेऽन्वयाऽस्वीकारादित्यर्थः । वह्न्यभावे वह्न्यनुयोगिकत्वं नान्वीयते किं तु वह्न्यनुयोगिकत्वस्य स्थाने वह्निरेवानुयोगितासंबन्धेनान्वीयते इत्यभिप्रायेणोक्तम्—वह्न्याद्यनुयोगिकत्वस्थलीयस्येति, इदं च वह्न्यादेरित्यस्य विशेषणम् । यद्यनुयोगिताया उक्तरीत्या संबन्धत्वं न स्वीक्रियते किं तु नञर्थाऽभावावच्छेदकत्वं स्वीक्रियते तदा तत्रैव=अनुयोगितायामेव प्रतियोगिनो वह्नेः स्वनिरूपितत्वसंबन्धेनान्वयः स्वीकार्यः ( अनुयोगिताया वह्निनिरूपितत्वात् ) अतः यतोऽनुयोगितायामेव वह्नेरन्वयोऽतस्तत्र=अनुयोगितायां तृतीयान्तार्थभूताया घटत्वावच्छिन्नप्रतियोगिताया निरूपकत्वसंबन्धेनान्वयः स्वीकार्यो न तु घटत्वावच्छिन्नप्रतियोगिताक-

रङ्गेऽभेदेन रजतारोपस्थले 'रङ्गं रजतेन जानाति' इत्यप्रयोगात् तादात्म्यभिन्नसंबन्धावच्छिन्नप्रकारतैव तृतीयार्थः । तत्र च 'रङ्गं रजतं जानाति' इतिप्रयोगात् तादात्म्यसंबन्धावच्छिन्नप्रकारता कर्मत्वानुशिष्टद्वितीयादेरेवार्थः, तस्याश्च तादृशप्रकारवाचिपदसमानविभक्तिकपदोपस्थाप्यविशेष्यताविशिष्टायामेव ज्ञानरूपक्रियायामन्वयः तेन भेदारोपस्थले 'रङ्गे रजतत्वं जानाति' इतिवदऽभेदारोपस्थले 'रङ्गे रजतं जानाति' इति न प्रयोगः । उक्तस्थले च रङ्गरजताद्योः समानविभक्तिकपदोपस्थाप्ययोरभेदान्वये साकाङ्क्षत्वेपि नायोग्यतया तादृशान्वयः ।

---

तादृशानुयोगितायां घटत्वावच्छिन्नप्रतियोगितानिरूपकत्वात् । अनुयोगितायामेव च तृतीयार्थप्रतियोगिताया अन्वयस्वीकारादतिप्रसङ्गस्य=विभक्त्यर्थस्य विभक्त्यर्थेऽन्वयरूपातिप्रसङ्गस्यापत्तिर्नास्ति किं तु वारणमेव जातम्, तथा चानुयोगितायां वर्तमानयोर्वह्निघटत्वावच्छिन्नप्रतियोगित्वयोरेवावच्छेद्यावच्छेदकभाव इत्यर्थः ।

रङ्गेऽभेदेनेति—रङ्गरजतयोर्भेदारोपस्थले तादात्म्यसंबन्धभिन्नो यः समवायादिसंबन्धस्तदवच्छिन्नप्रकारता तृतीयार्थो भवतीति 'रङ्गं रजतत्वेन जानाति' इति प्रयोगो भवति—अत्र समवायसंबन्धावच्छिन्ना रजतत्वनिष्ठा या प्रकारता तस्यास्तृतीयार्थत्वात्, तादात्म्यसंबन्धावच्छिन्नप्रकारता तु तृतीयार्थो न भवतीत्यऽभेदारोपाऽभिप्रायेण 'रङ्गं रजतेन जानाति' इति प्रयोगो न भवति—अभेदारोपस्थलेप्यभेदान्वयस्थले इव तादात्म्यसंबन्धावच्छिन्नप्रकारताया अपेक्षितत्वात्तस्याश्च तृतीयार्थत्वासंभवादित्यर्थः । तत्र=रङ्गेऽभेदेन रजतारोपस्थले ( अभिप्रायेण ) 'रङ्गं रजतं जानाति' इति प्रयोगस्तु भवतीति तादात्म्यसंबन्धावच्छिन्नप्रकारता "कर्मणि द्वितीया" इत्याद्यनुशासनेन कर्मत्वेऽनुशिष्टाया द्वितीयाया अर्थो भवति अत्र रङ्गे रजतस्य तादात्म्यसंबन्धेन प्रकारत्वात् तथा च तादात्म्यसंबन्धावच्छिन्नरजतनिष्ठप्रकारताकं रङ्गनिष्ठविशेष्यताकं च यज्ज्ञानं तादृशज्ञानाश्रय इतिबोधः । तस्याः=तादात्म्यसंबन्धावच्छिन्नप्रकारतायाश्च तादृशप्रकारवाचिपदं यद्रजतपदं तत्समानविभक्तिकं यद् द्वितीयान्तं रङ्गपदं तदुपस्थाप्या=रङ्गपदोत्तरद्वितीयोपस्थाप्या या रङ्गनिष्ठा विशेष्यता तादृशविशेष्यताविशिष्टायां ज्ञानक्रियायामन्वयः—रङ्गनिष्ठविशेष्यताया रजतनिष्ठप्रकारतायाश्च निरूपकत्वसंबन्धेन ज्ञानेपि सत्त्वादेवेत्यर्थः । अस्य फलमाह—तेनेति, भेदारोपस्थले यथा 'रङ्गे रजतत्वं जानाति' इति प्रयोगो भवति तथाऽभेदारोपस्थले 'रङ्गे रजतं जानाति' इतिप्रयोगो न भवति—अभेदारोपस्थले प्रकारवाचिरजतादिपदसमानविभक्तिकरङ्गादिपदोपस्थाप्यविशेष्यताविशिष्टायामेव ज्ञानादिक्रियायां द्वितीयार्थप्रकारताया अन्वयस्येष्टत्वात् 'रङ्गे रजतं जानाति' इत्यत्र च रङ्गपदरजतपदयोः समानविभक्तिकत्वाभावेनोक्तान्वयासंभवादित्यर्थः । ननूक्तस्थले='रङ्गे रजतं जानाति' इत्यत्र रङ्गरजतयोरभेदान्वय एव 'नीलो घटः' इत्यत्रेव कथं न स्वीक्रियते ? इत्याशङ्क्याह—उक्तस्थले चेति,

नन्वेवं सति रङ्गरजतादिपदयोः सामानाधिकरण्यानुपपत्तिरिति चेत् ? का क्षतिः । न चैवं रजतगतैकत्वबहुत्वाऽविवक्षायाम् 'रङ्गाणि रजतं जानाति' इतिप्रयोगस्य 'स्त्रियं पांसुला जानाति' इति प्रयोगस्य च प्रसङ्गः-सामानाधिकरण्यस्यैव समानवचनलिङ्गकत्वनियतत्वादिति वाच्यम्, समानाधिकरणयोरिव यत्पदार्थविशेष्यकत्वविशिष्टेऽभेदसंबन्धावच्छिन्नयत्पदार्थप्रकारकत्वस्यान्वयस्तयोरपि समानलिङ्गवचनत्वनियमात् ।

---

'रङ्गं रजतं जानाति' इत्यत्र समानविभक्तिकपदोपस्थाप्यत्वेन रङ्गरजतयोरभेदान्वयानुकूलाकाङ्क्षावत्त्वेपि परस्परं भिन्नव्यक्तिकत्वेनाभेदान्वयस्याऽयोगतया=बाधात् तादृशान्वयः=अभेदान्वयो न भवतीत्यर्थः । 'नीलो घटः' इत्यत्र तु नीलपदघटपदयोरेकार्थबोधकत्वान्नीलपदार्थघटपदार्थयोर्भेदाभावादऽभेदान्वयो भवति, न चैवमत्रास्तीत्यऽभेदारोपो भवति न त्वऽभेदान्वय इतिभावः ।

ननु यदि रङ्गपदरजतपदयोर्विभिन्नपदार्थबोधकत्वेनैकपदार्थबोधकत्वं नास्ति तदा सामानाधिकरण्यं न भविष्यति भिन्नप्रवृत्तिनिमित्तयोः पदयोरेकार्थबोधकत्वस्यैव सामानाधिकरण्यनियामकत्वादित्याशङ्कते—नन्वेवमिति । 'रङ्गं रजतं जानाति' इत्यत्र सामानाधिकरण्याभावं स्वीकरोति—का क्षतिरिति । ननु यदि 'रङ्गं रजतं जानाति' इत्यादौ रङ्गपदरजतपदयोः सामानाधिकरण्यमिष्टं नास्ति तदा सामानाधिकरण्यस्यैव समानवचनलिङ्गकत्वनियतत्वात्= सामानाधिकरण्ये सत्येव समानवचनलिङ्गकत्वनियमात् रजतगतैकत्वाऽविवक्षायाम् 'रङ्गाणि रजतं जानाति' इत्यसमानवचनकः पांसुलागतबहुत्वाविवक्षायाम् 'स्त्रियं पांसुलाः जानाति' इत्यऽसमानवचनकश्च प्रयोगः स्यादेव— अत्र समानवचनलिङ्गकत्वनियामकस्य सामानाधिकरण्यस्याऽनभिप्रेतत्वादित्याशङ्क्याह— न चैवमिति । किं वा रजतगतस्य स्त्रीगतस्य चैकत्वस्य रङ्गगतस्य पांसुलागतस्य च बहुत्वस्याविवक्षायामित्येवमन्वयः । रजतगतैकत्वविवक्षायां तु 'रङ्गाणि रजतम्' इति प्रयोग इष्ट एव तथा पांसुलागतबहुत्वविवक्षायाम् 'स्त्रियं पांसुलाः' इति प्रयोग इष्ट एवेत्युक्तम्-रजतादिगतैकत्वबहुत्वाविवक्षायामिति । परिहारमाह— समानाधिकरणयोरिति, यथा समानाधिकरणयोः 'नीलो घटः' इत्यत्र नीलपदघटपदयोः समानलिङ्गवचनकत्वनियमोस्ति तथा यत्पदार्थविशेष्यकत्वविशिष्टेऽभेदसंबन्धावच्छिन्नयत्पदार्थप्रकारकत्वस्यान्वयो भवति तयोरपि=तादृशविशेष्यवाचकतादृशप्रकारवाचकपदयोरपि समानलिङ्गवचनत्वनियमोस्ति तथा च 'रङ्गं रजतं जानाति' इत्यत्रोक्तरीत्या रङ्गविशेष्यकत्वविशिष्टे एव ज्ञाने तादात्म्यसंबन्धेन रजतप्रकारकत्वस्यान्वयो भवतीति सामानाधिकरण्याभावेपि रङ्गपदरजतपदयोः समानलिङ्गवचनत्वनियमप्राप्त इति न 'रङ्गाणि रजतं जानाति' इत्यादिप्रयोगापत्तिरित्यर्थः । "नियतत्वात्" इत्यत्र 'नियामकत्वात्' इत्येवं पाठो युक्तः ।

यज्ञपतिमतानुयायिनस्तु ' रङ्गं रजतं जानाति ' इत्यादौ सामानाधिकरण्यानुरोधाद् रजतादिपदस्य रजताभेदज्ञानविषये लक्षणा, अत एव भ्रान्तिज्ञविशेषदर्शिना प्रयुक्तस्य ' लोहितवह्निं जानाति ' इत्यादिवाक्यस्यापि प्रामाण्यनिर्वाहः । न ह्यसमासस्थले इव लोहितवह्न्योरभेदाऽविवक्षा— ज्ञानांशे लोहितादेः स्वातन्त्र्येणान्वयो वा संभवति— कर्मधारयस्य साधुतानुपपत्तेः. लोहितपदोत्तरं प्रकारतावोधकविभक्तेरभावात्, धात्वर्थे साक्षान्नामार्थस्य भेदाऽन्वयेऽव्युत्पत्तेः । द्वन्द्वस्थलवत् कर्मधारयोत्तरविभक्तेः पूर्वपदप्रकृतिकत्वाभावात् तस्याः पूर्वपदार्था-

---

' रङ्गं रजतं जानाति ' इत्यत्र सामानाधिकरण्योपपादकस्य यज्ञपतेर्मतमाह— यज्ञपतीति, अत्र रजतपदस्य रजताभेदज्ञानविषये लक्षणास्ति तथा च रङ्गस्य रजताभेदज्ञानविषयत्वेन रङ्गपदार्थरजताभेदज्ञानविषयपदार्थयोरभेदात् सामानाधिकरण्ये न काचिदनुपपत्तिः, रङ्गविशेष्यकरजताभेदज्ञानविषयत्वप्रकारकज्ञानवानिति बोधाकार इत्यर्थः । एवं लक्षणया सामानाधिकरण्योपपादनस्य फलान्तरमाह— अत एवेति, ' लोहितवह्निं जानाति ' इत्यत्र वह्नेः शुक्लत्वेन लोहितत्वाभावेपि लोहिताभेदज्ञानविषयत्वेन प्रामाण्यं निर्वहति । लोहितपदस्य लोहिताभेदज्ञानविषये लक्षणाया अस्वीकारे बाधकमाह— न हीति, ' रङ्गं रजतं जानाति ' इत्यत्र यथा रङ्गरजतयोरभेदविवक्षा नास्ति किं तु रजतप्रकारकत्वस्य ज्ञाने एवान्वयः स्वीकृतस्तथाऽसमासस्थले= ' लोहितं वह्निं जानाति ' इत्यत्र त्वन्वयसंभवेप्यत्रैव ' लोहितवह्निं जानाति ' इत्यत्र तु समासे लोहितवह्न्योरभेदाऽविवक्षापि न संभवति— अभेदाविवक्षायाम् ' लोहितवह्निम् ' इति कर्मधारयस्य साधुत्वं न स्यात्— अभेदविवक्षायामेव कर्मधारयस्य साधुत्वात् यथा— ' नीलोत्पलम् ' इति, लोहितपदार्थस्य स्वातन्त्र्येण ज्ञानेप्यन्वयो न संभवति लोहितपदोत्तरं प्रकारतावोधकद्वितीयाविभक्तेरभावादिति लोहितपदार्थस्य धात्वर्थज्ञाने साक्षाद्भेदान्वय एव कर्तव्यः— अभेदान्वयासंभवात् तदपि न संभवति— धात्वर्थे नामार्थस्य साक्षाद् भेदान्वयस्याऽस्वीकारात्, द्वारीभूतार्थप्रतिपादकविभक्तेरभावाच्चेत्यगत्या प्रामाण्यप्रतिपादनाय ' लोहितवह्निम् ' इत्यत्र लोहितपदस्य लोहिताभेदज्ञानविषये लक्षणा स्वीकार्या तथा च सामानाधिकरण्यसत्त्वात् कर्मधारय उपपद्यते, एवमेवासमासस्थलेपि ' रङ्गं रजतं जानाति ' इत्यादौ रजतादिपदस्य रजताद्यऽभेदज्ञानविषये लक्षणा स्वीकार्या तथा च रङ्गस्य रजताभेदज्ञानविषयेणाऽभेदात् सामानाधिकरण्यमुपपन्नमित्यर्थः । ननु यथा ' धवखदिरौ छिन्नत्ति ' इत्यत्र धवपदोत्तरं विभक्तेरभावेपि धवखदिरोभयपदोत्तरविभक्तिरेव धवपदार्थान्वितप्रकारतां बोधयति तादृशप्रकारतायाश्च धात्वर्थेऽन्वयो भवति तथा ' लोहितवह्निम् '. इतिकर्मधारयोत्तरविभक्तिरपि लोहितपदार्थान्वितप्रकारतां बोधयिष्यति तस्याश्च ज्ञानेऽन्वयो भविष्यतीत्याशङ्क्याह— द्वन्द्वस्थलवदिति, द्वन्द्वस्थले तूभयपदोत्तरं विभक्तेः प्राप्तत्वादुभयपदार्थान्वितप्रकारतावोधकत्वं संभवति कर्मधारयस्थले तूभयपदोत्तरविभक्तेः प्राप्तिरेव नास्तीति कर्मधारयोत्तरविभक्तेः पूर्वपदप्रकृतिकत्वाभावात् तस्याः=कर्मधारयो-

न्वितप्रकारताबोधकत्वायोगात् । न च द्वन्द्वसमास एवासौ- अल्पाचो वह्निपदस्य पूर्वनिपातप्रसङ्गात् । समाहारपक्षे पुंलिङ्गताया इतरेतरपक्षे चैकवचनस्यानुपपत्तेः ।

एतन्मते 'शुक्लो वह्निः' इत्यादिप्रमाया लोहिताभेदारोपविषयवह्निविषयकत्वेपि 'शुक्लो वह्निर्लोहिता जपा' इतिसमूहालम्बनप्रमाया लोहिताभेदावगाहिस्वविषयवह्निविषयकत्वेपि च तद्दशायाम् 'लोहितवह्निं लोहितं वह्निं वा जानाति' इति न प्रयोगः- तादृशपदोपस्थाप्यविषयताया धर्मिपारतन्त्र्येण द्वितीयार्थविषयतायामभेदसंबन्धेन विशेषणताया नियमोपगमात् ।

अथ वा लोहिताभेदविषयतानिरूपितविषयतापन्नस्य वह्न्यादेर्ज्ञानान्वयिवि-

---

तरविभक्तेर्लोहितादिरूपपूर्वपदार्थान्वितप्रकारताबोधकत्वं न संभवति । ननु 'लोहितवह्निम्' इत्यपि द्वन्द्वसमासो भवतु ? इत्याशङ्क्याह- न चेति । तस्माल्लोहितपदस्यागत्या लोहिताभेदज्ञानविषये लक्षणा स्वीकार्यैवेत्यर्थः । समाहारो नपुंसको भवतीति पुंलिङ्गत्वानुपपत्तेः 'लोहितवह्निम्' इति पुंलिङ्गस्य समाहारद्वन्द्वत्वमपि न संभवति, इतरेतरद्वन्द्वसमास एकवचनान्तो न भवतीत्येकवचनत्वानुपपत्तेरितरेतरद्वन्द्वत्वमपि न संभवतीत्याह- समाहारपक्षेति ।

ननु यदि यज्ञपतिमते लोहितपदस्य लोहिताभेदज्ञानविषये लक्षणा तदा 'शुक्लो वह्निः' इत्यादिप्रमाकालेपि 'लोहितवह्निम्' 'लोहितं वह्निं' इत्यादिवाक्यस्य प्रयोगः स्यादित्याशङ्क्याह- एतन्मते इति, यद्यपि उक्ते 'लोहितवह्निम्' इतिवाक्ये य एव लोहिताभेदारोपविषयो वह्निविषयः स एव वह्निः 'शुक्लो वह्निः' इति प्रमायां विषयोस्ति वह्नेरेकत्वादिति 'शुक्लो वह्निः' इतिप्रमाया लोहिताभेदारोपविषयवह्निविषयकत्वात् तथा 'शुक्लो वह्निर्लोहिता जपा' इति प्रमाया लोहिताभेदावगाहित्वात् ( अत्र लोहितस्यापि विषयत्वात् ) वह्निविषयकत्वाचास्या समूहालम्बनप्रमाया लोहिताभेदावगाहि यत् स्वं तद्विषयो यो वह्निस्तादृशवह्निविषयकत्वं प्राप्तं तस्माद् एतदुभयप्रमादशायां वह्नेर्लोहिताभेदावगाहिज्ञानविषयत्वेन 'लोहितवह्निम्, लोहितं वह्निम्' इत्यादिप्रयोगः स्यादेवेति प्राप्तं तथापि 'शुक्लो वह्निः', इत्याकारकप्रमात्मकज्ञानकाले उक्तसमूहालम्बनात्मकप्रमाकाले च 'लोहितवह्निम्, लोहितं वह्निम्' इत्यादिः प्रयोगो न भवति यज्ञपतिना तादृशपदोपस्थाप्यविषयतायाः=आरोप्यवाचकलोहितादिपदोपस्थाप्यविषयताया धर्मिपारतन्त्र्येण=लोहितादिपदार्थद्वारा द्वितीयार्थविषयतायामऽभेदेन विशेषणत्वं स्वीक्रियते न चैवमऽभेदेन विशेषणत्वं तद्दशायां संभवति वह्नेः शुक्लपदार्थेनैवाऽभेदस्योक्तोभयप्रमाविषयत्वाद् शुक्लत्वावरुद्धे च वह्नौ लोहितत्वान्वयासंभवात्, उक्तोभयप्रमाया असत्त्वे तु 'लोहितवह्निम्, लोहितं वह्निम् जानाति' इति प्रयोगः संभवत्येवेत्यर्थः ।

पक्षान्तरमाह-अथ वेति, 'लोहितवह्निम्, लोहितं वह्निम्' इत्यत्र वह्नौ लोहिताभेदविषयताप्यस्ति वह्निविषयकज्ञानविषयताप्यस्ति तयोश्च विषयतयोः परस्परं निरूप्यनिरूपकभावे

षयितानिरूपकत्वं भासते । समूहालम्बनादौ च तादृशविषयतानापन्नस्यैव विषयिता-निरूपकत्वमिति नातिप्रसङ्गः । विषयतापन्नस्य निरूपकत्वमित्यस्य च विषयतावच्छिन्नं निरूपकत्वमित्यर्थः । एतच्च विलक्षणं विषयितानिरूपकतावच्छेदकत्वमऽविषयस्यापि विषयत्वस्योपेयते 'रक्तदण्डवान्' इत्यादौ दण्डादिरूपप्रकारांशेऽप्रकारेणापि रक्तत्वादिप्रकारतानिरूपितविशेष्यत्वेन दण्डादिप्रकारताया अवच्छेद्यावच्छेदकभाववदित्याहुः । तन्न शोभनम्–उक्तरीत्या विनैव लक्षणामुपपत्तौ तस्या अन्याय्यत्वात् ।

---

विज्ञेय इति 'लोहितवह्निम्' इत्यादौ लोहिताभेदविषयतानिरूपितविषयता( वह्निज्ञानीयविषयता )पन्नस्य वह्नेर्ज्ञाननिष्ठविषयिताया निरूपकत्वं भासते 'शुक्लो वह्निः' 'शुक्लो वह्निर्लोहिता जपा' इत्यादौ च वह्नौ लोहिताभेदविषयताया अभावात् तादृशविषयतानापन्नस्य=लोहिताभेदविषयतानिरूपितविषयतानापन्नस्यैव वह्नेर्ज्ञाननिष्ठविषयितानिरूपकत्वं भासते इति 'लोहितवह्निम्' इत्यादौ लोहिताभेदविषयतानिरूपितविषयतापन्नस्य वह्नेर्विषयत्वात् 'शुक्लो वह्निः' इत्यादौ च लोहिताभेदविषयतानिरूपितविषयतानापन्नस्यैव वह्नेर्विषयत्वाद् विषयभेदेन समानार्थकत्वाभावात् नातिप्रसङ्गः=' शुक्लो वह्निः' इत्यादिप्रमाकाले 'लोहितवह्निम्' इत्यादिप्रयोगापत्तिर्नास्तीत्यर्थः । वह्निनिष्ठाया लोहिताभेदविषयतानिरूपितविषयताया वह्निनिष्ठस्य ज्ञानीयविषयितानिरूपकत्वस्य च परस्परमवच्छेद्यावच्छेदकभावसूचनार्थमाह–विषयतापन्नस्येति, वह्नावुक्तविषयताऽस्त्युक्तनिरूपकत्वमप्यस्तीत्युक्तनिरूपकत्वमुक्तविषयतावच्छिन्नं जातमिति विषयताया अवच्छेदकत्वं निरूपकत्वस्य चावच्छेद्यत्वं प्राप्तम्, अयं चावच्छेद्यावच्छेदकभावः 'लोहितवह्निम्' इत्यादिवाक्यजन्यबोधे भासते 'शुक्लो वह्निः' 'शुक्लो वह्निर्लोहिता जपा' इत्यादिवाक्यजन्यबोधे च न भासते इति समानार्थकत्वाभावात् 'शुक्लो वह्निः' इत्यादिप्रमाकाले 'लोहितवह्निम्' इत्यादिप्रयोगापत्तिर्नास्तीत्यर्थः । ननु विषयतायां ज्ञानविषयत्वस्वीकारेऽनवस्थाप्रसङ्गादविषयस्यैव वह्निनिष्ठविषयत्वस्योक्तविषयितानिरूपकतावच्छेदकत्वं वक्तव्यं तच्च कथं स्यात् ? ज्ञानविषयीभूतस्यैवावच्छेदकत्वस्वीकारादित्याशङ्क्याह–एतच्चेति, यथा 'रक्तदण्डवान्' इत्यत्र दण्डवति दण्डो दण्डे रक्तं रक्ते च रक्तत्वं विशेषणं न तु दण्डे इति रक्तत्वनिष्ठप्रकारतानिरूपितविशेष्यता रक्ते एव भासते न तु दण्डे इति दण्डाभिन्नप्रकारेऽप्रकारेण=प्रकारतयाऽभासमानेनापि रक्तत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वेन दण्डनिष्ठा प्रकारताऽवच्छिन्ना भवति तथैवात्राप्यविषयस्यापि वह्निनिष्ठविषयत्वस्य विषयितानिरूपकतावच्छेदकत्वं स्वीक्रियते इत्यर्थः । दृष्टान्ते "अप्रकारेणापि" इति यदुक्तं तेन रक्तत्वादिप्रकारतानिरूपितविशेष्यत्वस्याऽविषयत्वमेव प्राप्तं प्रकारीभूतपदार्थस्य ज्ञानविषयत्वनियमात्, रक्तत्वप्रकारतानिरूपितविशेष्यत्वस्य रक्तवृत्तित्वेन ज्ञानविषयत्वेपि दण्डवृत्तित्वेन ज्ञानाविषयत्वमस्त्येव–रक्तपदार्थदण्डपदार्थयोरभेदेपि शब्दभेदेनार्थभेदस्वीकारात् तदुक्तम्–" प्रतिशब्दमर्थो भिद्यते " इति । वस्तुतो रक्तपदार्थदण्डपदार्थयोरभेदाद् रक्तनिष्ठं रक्त-

अथोक्तस्थले आरोप्यारोपविषयबोधकपदयोर्ज्ञानान्वितार्थकत्वे कर्मप्रत्यय-स्थले 'लोहितो वह्निर्ज्ञायते ' इत्यादौ विशेष्यभेदाद्वाक्यभेदापत्तिः । न च लोहिताभेदज्ञानविषयो वह्निरित्येव शाब्दधीरुपगम्यते न तु ज्ञाने प्रकारो लोहितो विशेष्यश्च वह्निरिति समूहालम्बनं तथा सति ' शुक्लो वह्निर्लोहिता जपा ' इत्यादावपि तथाप्रयोगप्रसङ्गात्, दर्शितविशिष्टवैशिष्ट्यबोधस्वीकारे लोहितादिप्रकारकत्वविशिष्टनिरूपितविशेष्यतायाः शुक्लवह्न्यादौ बाधितत्वेन तादृशप्रयोगा-

---

त्वप्रकारतानिरूपितविशेष्यत्वं दण्डनिष्ठमेवेति दण्डनिष्ठप्रकारताया अवच्छेदकं भवत्येवेति भावः। परिहरति–तन्नेति, यज्ञपतिमतानुयायिनः ' रङ्गं रजतं जानाति ' इत्यादौ रङ्गपदरजतपदयो सामानाधिकरण्योपपत्त्यर्थमेत्र रजतादिपदस्य रजताद्यभेदज्ञानविषये लक्षणां स्वीकुर्वन्ति तत्र सामानाधिकरण्यं लक्षणां विनाप्युक्तरीत्या=" यत्पदार्थविशेष्यकत्वविशिष्टे ३०२ पृ० "इत्याद्युक्तरीत्योपपद्यत एवेति लक्षणाश्रयणं न युक्तमित्यर्थः । तस्याः=लक्षणायाः ।

ननु ' रङ्गं रजतं जानाति ' उक्तरीत्येत्यत्रैवोक्तस्थले=' लोहितं वह्निं जानाति ' इत्यत्रारोप्यबोधकस्य लोहितपदस्यारोपविषयबोधकस्य च वह्निपदस्य ज्ञानान्वितार्थकत्वे अर्थादत्र यदि स्वोत्तरद्वितीयार्थद्वारा लोहितवह्निपदार्थयोर्ज्ञाने एव ' लोहितप्रकारकं वह्निविशेष्यकं च यज्ज्ञानं तादृशज्ञानाश्रयश्चैत्रः ' इत्येवमन्वयः स्यात्तदा ' लोहितो वह्निर्ज्ञायते ' इत्यादिकर्मप्रत्ययस्थले ज्ञानीयविषयताश्रयत्वेन लोहितवह्निपदार्थयोर्विशेष्यत्वात् परस्परं भिन्नत्वाच्च विशेष्यभेदात् ' ज्ञानीयविषयताश्रयो लोहितः, ज्ञानीयविषयताश्रयो वह्निश्च' इत्येवं वाक्यभेदः स्यादेव. न चैतदिष्टमित्याशङ्कते–अथेति । ननु ' लोहितो वह्निर्ज्ञायते ' इत्यत्र ' लोहिताभेदज्ञानविषयो वह्निः ' इत्येवमेकवाक्यतां कृत्वा शाब्दबोधः स्वीक्रियते न तु ' ज्ञाने लोहितः प्रकारः वह्निर्विशेष्यः=ज्ञानीयविषयताश्रयो लोहितो वह्निश्च ' इत्येवं समूहालम्बनात्मको येनोक्तरीत्या विषयताश्रयीभूतवह्निलोहितयोर्भेदाद्वाक्यभेदः स्यात्, विपक्षे बाधकमाह–तथा सतीति, तथा सति यदि ' लोहितो वह्निर्ज्ञायते ' इत्यत्रापि ' ज्ञाने प्रकारो लोहितो वह्निश्च विशेष्यः ' इत्येवं समूहालम्बनात्मक एव बोधः स्यात् तदोक्तसमूहालम्बनात्मकबोधजनकस्य ' शुक्लो वह्निर्लोहिता जपा ज्ञायते ' इतिवाक्यस्यापि स्थाने तथा=' लोहितो वन्हिर्ज्ञायते ' इत्येवं प्रयोगः स्यादेव-उभयोरपि वाक्ययोरुक्तसमूहालम्बनात्मकबोधजनकत्वेन साम्यस्य प्राप्तत्वाद् न चैतदिष्टम् तस्मात् ' लोहितो वह्निर्ज्ञायते ' इत्यत्र ' लोहिताभेदज्ञानविषयो वह्निः ' इत्येतादृशो दर्शितविशिष्टवैशिष्ट्यबोध एव स्वीकार्यस्तथा च लोहितप्रकारकत्वविशिष्टं यज्ज्ञानं तादृशज्ञाननिरूपितविशेष्यताया लोहितवह्नावेव सत्त्वेन शुक्लवह्नौ बाधितत्वात् ' शुक्लो वह्निर्लोहिता जपा ' इत्याकारकबोधतात्पर्येण तादृशप्रयोगस्य=' लोहितो वह्निः ' इत्याकारकप्रयोगस्यापत्तिर्नास्तीत्याशङ्क्याह–न चेति । ' लोहिताभेदज्ञानविषयो वह्निर्ज्ञायते ' इत्यत्र लोहिताभेदज्ञानविषयत

पत्तिविरहादिति वाच्यम्, तत्र लोहितादिपदोत्तरप्रकारतार्थकद्वितीयादिविभक्तिविरहेण लोहितादिप्रकारकत्वेन ज्ञानभानासंभवात्, नामार्थधात्वर्थयोः साक्षादन्वयस्याव्युत्पन्नतया प्रकारितायाः संसर्गतया भानासंभवादिति चेत् ?,

न–यथा हि 'घटो नीलो भवति' 'वृक्षो नौका भवति' 'काष्ठं भस्म भवति' इत्यादौ धात्वर्थेऽसाधारणधर्मरूपे भावे व्युत्पत्तिवैचित्र्येण नीलनौकाभस्मादेः साक्षादेवान्वयः–प्रथमाया अन्तरा भासमानार्थकत्वाभावात्, नौकादिपदस्य स्वारम्भकावयवारभ्यनौकाद्यर्थलाक्षणिकतया प्रकृतिविकृत्योर्भेदमतेऽपि 'वृक्षो नौका भवति' इत्यादौ योग्यताया उपपत्तिस्तथा धात्वर्थे प्रकृतेऽपि प्रकारितासंबन्धेन लोहितादेः साक्षादन्वयस्यागत्योपगमात् ।

यथा प्रकृतिविकृतिभावस्थले 'वृक्षः पञ्च नौका भवति' इत्यादौ प्रकृतिभूत-

---

विशिष्टे वह्नौ वह्निविषयकज्ञानीयविषयताया वैशिष्ट्यमस्तीत्यस्य विशिष्टवैशिष्ट्यबोधत्वम् । परिहारमाह–तत्रेति, 'लोहिताभेदज्ञानविषयो वह्निः' इति बोधेऽपि लोहितप्रकारकत्वं ज्ञाने स्वीकार्यं तच्च न संभवति–लोहितपदोत्तरं प्रकारतावाचकद्वितीयाविभक्तेरभावाद् तथा लोहितप्रकारकत्वविशिष्टज्ञानभाने ज्ञाने लोहितस्य ज्ञाननिष्ठप्रकारितारूपसंसर्गेणान्वयो वक्तव्य इति प्रकारितायाः संसर्गत्वेन भानं प्राप्तं तदपि न संभवति–नामार्थस्य लोहितस्य धात्वर्थज्ञाने साक्षाद् भेदान्वयस्याऽव्युत्पन्नत्वेन प्रकारितायाः संसर्गत्वासंभवात्, तथा चागत्योक्तरीत्या 'ज्ञानीयविषयताश्रयो लोहितो वह्निश्च ज्ञायते' इत्येव शाब्दबोधः स्वीकार्यस्तत्र च विशेष्यभेदाद्वाक्यभेदापत्तिरित्यर्थः ।

अथेत्यादिनाशङ्कितं परिहरति–नेति, यथा 'घटो नीलो भवति' इत्यत्र नीलपदार्थस्य नामार्थस्याप्यऽसाधारणधर्मरूपे भावे=भवनरूपे धात्वर्थे साक्षादेवान्वयो भवति–नीलपदोत्तरप्रथमाया नीलपदार्थधात्वर्थयोर्मध्ये द्वारीभूतार्थप्रतिपादकत्वाभावात् तथा प्रकृतेऽपि='लोहितो वह्निर्ज्ञायते' इत्यत्रापि धात्वर्थे ज्ञाने प्रकारितासंबन्धेन लोहितपदार्थस्यागत्या साक्षादेवान्वय उपगम्यते तथा च 'प्रकारितासंबन्धेन लोहितविशिष्टज्ञानविषयताश्रयो वह्निः' इतिशाब्दबोधोदयाद्वाक्यभेदापत्तिर्नास्तीत्यर्थः । 'घटो नीलो भवति' इत्यत्र सिद्धे घटे नीलोत्पत्तिरिष्टास्तीति धात्वर्थे नीलस्यैवान्वय अत एव भवनानुकूलव्यापारो धात्वर्थो नीले एव न घटेपीति नीलस्याऽसाधारणो धर्म इत्युक्तम्–असाधारणेति । ननु प्रकृतिविकृत्योर्भेद एवास्तीति स्वभिन्नपदार्थान्तररूपत्वप्राप्तेरसंभवाद् वृक्षः प्रकृतिभूतः कथं विकृतिभूतनौका भवेदित्याशङ्क्योक्तम्–नौकादिपदस्येति, एवं वृक्षः वृक्षारम्भकावयवानामेव नौकारम्भकत्वात् नौकापदस्य वृक्षारम्भकावयवारभ्यनौकापदार्थे लक्षणा तथा च वृक्षारम्भकावयवारभ्यनौकापदार्थरूपत्वं वृक्षे बाधितं नास्तीति वृक्षे नौकारूपत्वेन भवनव्यापारस्य योग्यताया उपपत्तिरित्यर्थः ।

संप्रत्याख्यातवचननियामकमाह– यथेति 'वृक्षः पञ्च नौका भवति' इत्यादिप्रकृतिविकृतिभावस्थले प्रकृतिभूतवृक्षस्य विशेष्यत्वेन धात्वर्थभावनायामन्वयोऽस्तीति तद्गत= वृक्षगतसं-

वृक्षादेर्विशेष्यतया भावनान्वयित्वात् तद्गतसंख्याबोधकतया प्रकृतिवाचकपद-समानवचनत्वमाख्यातस्य तथा 'एको द्वौ ज्ञायते' इत्याद्युभयाभेदारोपस्थलीयवाक्ये एकादिपदार्थस्यारोपविशेष्यस्याख्यातार्थविशेष्यत्वान्वयविशेष्यतया तत्पदसमानवचनत्वमाख्यातस्य ।

न चैवम् "अमानि तत्तेन निजाऽयशोयुगं द्विफालबद्धाश्चिकुराः शिरस्थितम्" इत्यत्र कथमारोपविशेष्यवाचकपदविरुद्धवचनत्वम् "अमानि" इतिक्रियापदस्येति वाच्यम्, तत्राऽयशोद्वयस्य वास्तवत्वेन चिकुरभागद्वयस्य राज्ञ आरोप्यत्वेन कवेरुत्प्रेक्षितत्वात्, आख्यातार्थविशेष्यतान्वयविशेष्यत्वेनाऽयशोयुगस्यैव विवक्षितत्वात् ।

इच्छार्थकधातुस्थले मुख्यविशेष्यत्वरूपं कर्मत्वं द्वितीयार्थः, अतो 'वृष्टिसाध्यं सुखं भवतु' इत्यादीच्छास्थले 'सुखमिच्छति' इत्यादिवत् 'वृष्टिमिच्छति' इत्यादयो न प्रयोगाः ।

---

ख्याबोधकतया प्रकृतिभूतवृक्षवाचकवृक्षपदसमानवचनत्वमेवाख्यातस्येति 'भवति' इत्येकवचनान्तं क्रियापदं वृक्षपदस्यैकवचनान्तत्वात्, तथैवैकस्मिन् चन्द्रादौ द्वित्वस्य चन्द्रद्वयस्य वाऽऽरोपस्थले 'एको द्वौ ज्ञायते' इत्यत्रोभयाभेदारोपस्थलीयवाक्येऽप्येकपदार्थस्यारोपविषयस्यैवाऽऽख्यातार्थविशेष्यतान्वये विशेष्यत्वात् ( आख्यातार्थस्य विषयत्वस्य विशेष्यत्वरूपत्वादेकपदार्थे एवान्वयाच्चैकपदार्थस्याख्यातार्थविशेष्यतान्वयविशेष्यत्वं प्राप्तमिति विज्ञेयम् ) तत्पद=एकपदसमानवचनत्वमाख्यातस्य प्राप्तमित्येकवचनान्तत्वमित्यर्थः । अत्र "उभय" इत्यत्र "उभयार्थ" इत्यपि पाठः ।

ननु यद्यारोपविषयस्यैव प्राधान्यादारोपविषयवाचकपदसमानवचनत्वमाख्यातस्योच्यते तदा "अमानि तत्तेन" इत्यत्र चिकुराणामेवारोपविषयत्वात् तादृशचिकुरवाचकपदस्य बहुवचनान्तत्वेपि तद्विरुद्धम् 'अमानि' इत्येकवचनत्वमाख्यातस्य कथं संगच्छेत बहुवचनस्यापेक्षितत्वादित्याशङ्क्याह- न चेति । परिहारमाह- तत्रेति, तत्र= "अमानि तत्तेन" इत्यत्रारोपविषयत्वं चिकुराणां नास्ति किं त्वऽयशोयुगस्यैव तथा चाऽयशोयुगे द्विफालबद्धचिकुरभागद्वयत्वमारोप्यते कविनेत्याऽऽरोपविषयस्याऽयशोयुगस्यैवाख्यातार्थविशेष्यतान्वये विशेष्यत्वेन विवक्षितत्वात् तद्वाचकाऽयशोयुगपदस्य चैकवचनान्तत्वात् 'अमानि' इति क्रियापदस्याप्येकवचनान्तत्वं युक्तमेवेत्यर्थः ।

इच्छार्थकधातुस्थले 'सुखमिच्छति' 'सुखमभिलषति' इत्यादौ मुख्यविशेष्यत्वरूपं कर्मत्वं द्वितीयार्थस्तथा च सुखविशेष्यकेच्छाश्रयश्चैत्र इतिशाब्दबोधः । मुख्यविशेष्यत्वरूपकर्मत्वस्य द्वितीयार्थत्वस्वीकारस्य फलमाह- अत इति, 'वृष्टिसाध्यं सुखं भवतु' इत्यत्र सुखस्यैवेच्छाविषयत्वेन मुख्यविशेष्यत्वात् 'सुखमिच्छति' इतिप्रयोगस्तु भवति, वृष्टेः सुखविशेषणत्वेन मुख्यविशेष्यत्वाभावात् 'वृष्टिमिच्छति' इति प्रयोगो न भवतीत्यर्थः ।

अथ 'अहं सुखी स्याम्' इत्यादीच्छायाः सुखादिविशेषणकतया तत्र 'सुखमिच्छति' इत्यादिप्रयोगानुपपत्तिरिति चेत्?, न- 'मम सुखं भवतु' इत्यादिसुखविशेष्यकेच्छाया एव कदाचित् सुखादिविशिष्टात्मबोधकशब्देन विषयाभिलापात्, स्वकृत्यऽधीनसिद्धिकत्वरूपस्वकृतिसाध्यत्वप्रकारकपाकविशेष्यकेच्छाया एव 'पाकं कृत्या साधयामि' इतिपाकसिद्ध्यनुकूलकृत्यऽभिन्नव्यापारविशिष्टस्वबोधकशब्देन विषयाभिलापवत् ।

यदि चोद्देश्यसुखादेर्विशेषणतयापि क्वचिद् भानमानुभविकं तदोद्देश्यादिव्यवहारनियामकः काचित्कविशेषणसाधारणो विषयताविशेषोऽभ्युपेयः । अनु-

---

ननु यदीच्छार्थकधातुयोगे मुख्यविशेष्यत्वरूपं कर्मत्वं द्वितीयार्थस्तदा 'अहं सुखी स्याम्' इत्यादीच्छायां सुखस्यात्मविशेषणत्वेन भासमानत्वाद् मुख्यविशेष्यत्वाभावेन तत्रान्यप्रयुक्तः 'सुखमिच्छति' इतिप्रयोगो नोपपद्येतेत्याशङ्कते- अथेति । परिहरति- नेति, 'मम सुखं भवतु' इत्याकारकसुखविशेष्यकेच्छाया एव विषयाभिलापात्= विषयस्य ( सुखस्य ) कदाचित्= 'अहं सुखी स्याम्' इत्यत्र सुखविशिष्टात्मबोधकशब्देन= अहं पदेनाभिलापात् 'अहं सुखी स्याम्', 'मम सुखं भवतु' इतीच्छयोः समानविषयकत्वेन 'मम सुखं भवतु' इतीच्छायाः सुखविशेष्यकत्वमस्तीति 'अहं सुखी स्याम्' इतीच्छाया अपि सुखविशेष्यकत्वं प्राप्तमिति तादृशेच्छामुद्दिश्य 'सुखमिच्छति' इति सुखविशेष्यकेच्छाबोधकप्रयोगस्यानुपपत्तिर्नास्तीत्यर्थः । अत्र दृष्टान्तमाह-स्वकृत्येति, स्वकृत्यऽधीनसिद्धिकत्वरूपं यत् स्वकृतिसाध्यत्वं तत्प्रकारकपाकविशेष्यकेच्छायाः 'पाकं चिकीर्षामि' इत्याकारकाया एव विषयस्य यथा 'पाकं कृत्या साधयामि' इत्यत्र पाकसिद्ध्यनुकूलो यः करोत्यर्थभूतकृत्यऽभिन्नो व्यापारस्तादृशव्यापारविशिष्टं यत्स्वं तद्बोधकशब्देन 'साधयामि' इतिपदेनाभिलापो भवति तथैव 'मम सुखं भवतु' इत्याकारकेच्छाविषयस्यैव 'अहं सुखी स्याम्' इत्यत्र सुखविशिष्टात्मबोधकेन अहमितिपदेनाभिलापो भवति तत्रापि अत्राऽहंपदार्थस्य सिद्धत्वेनासिद्धस्य सुखस्यैवेच्छाविषयत्वेन मुख्यविशेष्यत्वात् 'अहं सुखी स्याम्' इत्याकारकेच्छामुद्दिश्य 'सुखमिच्छति' इति प्रयोगस्य न काचिदनुपपत्तिरित्यर्थः ।

ननु 'अहं सुखी स्याम्' इत्यादौ सुखस्यात्मविशेषणत्वेनैव भानं भवतीति मुख्यविशेष्यत्वाभावादुक्तेच्छामुद्दिश्य 'सुखमिच्छति' इतिप्रयोगस्योक्ताऽनुपपत्तिरस्त्येव 'सुखमिच्छति' इत्यनेन सुखविशेष्यकेच्छायाः प्रतिपादनात् 'अहं सुखी स्याम्' इत्यनेन चात्मविशेष्यकेच्छायाः प्रतिपादनादित्याशङ्क्य पक्षान्तरमाह- यदीति, यद्युद्देश्यभूतस्य सुखस्य विशेषणतयैव भानं भवति तदा काचित्कविशेषणसाधारणः=विशेष्यविशेषणसाधारण उद्देश्यत्वव्यवहारनियामक एको विषयताविशेषः स्वीकार्यः स एव च द्वितीयार्थस्तथा च 'अहं सुखी स्याम्' इत्यत्र विशेषणीभूतेपि सुखे द्वितीयार्थभूतस्य तादृशविषयताविशेषस्य सत्त्वेन 'अहं सुखी-

मितौ विशेष्यतया क्वाचित्कभानविषयसाध्यनिष्ठविधेयताख्यविषयतावत् । स एव च 'सुखमिच्छति' इत्यादौ द्वितीयाद्यर्थः ।

'ग्राममिच्छति' इत्यादौ ग्रामादिपदं ग्रामस्वत्वादिपरम् । अत एव च सिद्धस्य ग्रामादेर्मुख्यविशेष्यतया उपदर्शितविलक्षणविषयतया वा विरहेऽपि न क्षतिः । ग्रामादेः सिद्धत्वेऽपि स्वत्वाद्यऽसिद्धोपरक्तस्येच्छायां प्राधान्येन क्वचिद् भानम्- विशिष्टस्यासिद्धत्वात्. तत्रैव च 'ग्राममिच्छति' इत्यादिप्रयोग इत्यपि वदन्ति ।

'पाकं चिकीर्षति' इत्यादौ द्वितीयाया विशेष्यतारूपकर्मत्वार्थकतया कृतिप्रकारकपाकविशेष्यकेच्छा प्रतीयते सा च 'पाकं कृत्या साधयामि'

---

स्याम्' इतीच्छामुद्दिश्य 'सुखमिच्छति' इति प्रयोगस्यानुपपत्तिर्नास्तीत्यर्थः । विशेष्यविशेषणसाधारणस्य विषयताविशेषस्य स्वीकारे दृष्टान्तमाह- अनुमिताविति, 'पर्वतो वह्निमान् धूमात्' इत्यनुमितौ वह्निः पर्वतविशेषणतया भासते 'पर्वते वह्निर्धूमात्' इत्यनुमितौ च वह्निः विशेष्यतया भासते इति विशेष्यतया भानविषयो यो वह्निरूपः साध्यस्तन्निष्ठा विधेयताख्या विषयता यथा विशेष्यविशेषणसाधारणा स्वीक्रियते तथा च 'पर्वतो वह्निमान्' इत्यत्र वह्नेर्विशेषणत्वेऽपि विधेयताख्यविषयता वह्नावेव 'पर्वते वह्निः' इत्यत्रापि वह्नेर्विशेष्यत्वेन विधेयताख्यविषयता वह्नावेवास्ति एवमेव 'मम सुखं भवतु' इत्यत्राप्युद्देश्यत्वव्यवहारनियामकविषयता सुखे एव 'अहं सुखी स्याम्' इत्यत्राप्युद्देश्यत्वव्यवहारनियामकविषयता सुखे एवेत्युद्देश्यत्वव्यवहारनियामिका विशेष्यविशेषणसाधारणा एका विषयता कल्प्यते सैव द्वितीयार्थ इत्यर्थः ।

'ग्राममिच्छति' इत्यत्र सिद्धस्य ग्रामस्येच्छाविषयत्वासंभवादऽसिद्धस्य ग्रामस्वत्वस्य चेच्छाविषयत्वसंभवाद् ग्रामपदं ग्रामस्वत्वपरं तथा च ग्रामस्वत्वविशेष्यकेच्छाश्रयश्चैत्र इति बोधाकारः । अत एव=ग्रामपदस्य ग्रामस्वत्वपरत्वादेव, ग्रामस्वत्वस्यैवेच्छाविषयत्वेन मुख्यविशेष्यत्वमस्तीति ग्रामस्य मुख्यविशेष्यत्वाभावेऽपि तथोपदर्शितविशेष्यविशेषणसाधारणविषयत्वाभावेऽपि क्षतिः=ग्रामपदाद् द्वितीयानुपपत्तिर्नास्ति । क्वचित्तु ग्रामस्य शुद्धस्य सिद्धत्वेऽपि स्वत्वाद्यसिद्धोपरक्तस्य=असिद्ध यत् स्वत्वं तद्विशिष्टस्यासिद्धत्वादिच्छायां प्राधान्येन=विशेष्यत्वेन भानं भवति- इच्छाया असिद्धपदार्थविशेष्यकत्वनियमात् तत्रैव=यत्र स्वत्वविशिष्टग्रामस्याऽसिद्धत्वं भवति तत्रैव 'ग्राममिच्छति' इति प्रयोगो भवति न तु स्वत्वविशिष्टग्रामसिद्धावपीति पक्षान्तरमाह- ग्रामादेरिति । तथा च ग्रामपदस्य न ग्रामस्वत्वेत्र लक्षणा किं तु ग्रामपदमऽसिद्धस्वत्वविशिष्टग्रामपरमेति भावः ।

सन्नन्तधातुसमभिव्याहृतद्वितीयाया अथ निरूपयति- पाकमिति, 'पाकं चिकीर्षति' इत्यत्र विशेष्यतारूपं कर्मत्वं द्वितीयार्थः, द्वितीयार्थविशेष्यतायाश्च पाकपदस्यात्र द्वितीयान्तत्वेन पाकेऽन्वय इति सन्नर्थेच्छानिरूपितविशेष्यतायाः पाके प्राप्तत्वात् सन्प्रकृतिभूतकरोत्यर्थकृतौ प्रकारतैव प्राप्ता- एकस्यैव विशेष्यत्वसंभवादित्यत्र कृतिप्रकारिका पाकविशेष्यकेच्छा प्रतीयते इत्यर्थः ।

इतीच्छा । अथ वा सनो धात्वर्थविशेष्यकेच्छावाचित्वात् कृतिविशेष्यकेच्छा चिकीर्षापदार्थः सा च 'पाककृतिर्भवतु' इतीच्छैव, प्रवर्तिका च सा भवतु मा वेत्यन्यदेतत् । पाकादेश्च कृतिकर्मत्वमेव द्वितीयया प्रत्याय्यते न त्विच्छाया विषयत्वरूपं कर्मत्वम्, गृहस्थितीच्छामादाय 'गृहं तिष्ठासति' इत्यादिप्रयोगापत्तेः । युक्तं चैतत्– सनो धात्वर्थप्रकारकेच्छावाचित्वे ओदनभोजनेच्छादशायाम् 'ओदनं बुभुक्षते' इतिप्रयोगो न स्यात्– तत्र भोजनस्याऽप्रकारत्वात् ।

---

तस्याः स्वरूपमाह– सा चेति, सा=कृतिप्रकारकपाकविशेष्यकेच्छा । तथा च पाकं कृत्या=करोत्यर्थव्यापारेण साधयामीत्याकारकेच्छाश्रयश्चैत्र इति शाब्दबोधाकारः । पक्षान्तरमाह– अथ वेति, कर्तुमिच्छा हि चिकीर्षापदार्थ इति सन्नर्थेच्छानिरूपितविशेष्यता सन्प्रकृतिभूतधात्वर्थे कृत्यादावेव प्रतीयते न तु पाके इति सनो धात्वर्थ= सन्प्रकृतिभूतधात्वर्थविशेष्यकेच्छावाचकत्वं प्राप्तमिति करोत्यर्थकृतिविशेष्यकैवेच्छा चिकीर्षापदार्थ इत्यर्थः । एतस्या इच्छायाः स्वरूपमाह– सा चेति, सा=प्रकृतिभूतधात्वर्थकृतिविशेष्यकेच्छा । तथा चात्र पाककृतिर्भवत्वित्याकारकेच्छाश्रयश्चैत्र इति शाब्दबोधाकारः । पूर्वोक्तायाः 'पाकं कृत्या साधयामि' इतीच्छायाः प्रवर्तकत्वेपि 'पाककृतिर्भवतु' इतीच्छाया नियमेन प्रवर्तकत्वं न प्रतीयते इत्याह– प्रवर्तिकेति । अस्मिन् पक्षे 'पाकं चिकीर्षति' इत्यत्रेच्छानिरूपितविशेष्यतायाः करोत्यर्थकृतावेव सत्त्वेन पाकेऽभावात् पाके करोत्यर्थकृतिनिरूपितविशेष्यतारूपं कर्मत्वं द्वितीयया प्रत्याय्यते इति तदेव द्वितीयार्थो नत्विच्छानिरूपितविषयता ( विशेष्यता ) रूपं कर्मत्वमित्याह– पाकादेश्चेति । विपक्षे बाधकमाह– गृहस्थितीति, यदि सन्नर्थेच्छानिरूपितविशेष्यत्वं सन्प्रकृतिभूतधात्वर्थादन्यस्मिन् पाकादावपि स्यात् तदा गृहस्थितीच्छानिरूपितविषयताया गृहे प्राप्त्या 'पाकं चिकीर्षति' इतिवत् 'गृहं तिष्ठासति' इत्यपि प्रयोगः स्यादेव न चैतदिष्टं यदा च सन्नर्थेच्छानिरूपितविषयत्वं सन्प्रकृतिभूतधात्वर्थे एव स्वीक्रियते तदा तु 'तिष्ठासति' इत्यत्रेच्छानिरूपितविषयत्वं प्रकृतिभूतधात्वर्थस्थितावेव प्राप्तं न गृहे स्थाधातोश्चाऽकर्मकत्वाद् धात्वर्थस्थितिनिरूपितकर्मत्वमपि गृहे न प्राप्तमिति न गृहपदाद् द्वितीयापत्तिरित्यर्थः । अस्मिन् पक्षे स्वसम्मतिमाह– युक्तमिति, एतत्=सनः प्रकृतिभूतधात्वर्थविशेष्यकेच्छावाचकत्वमेव युक्तम् । प्रथमोक्तमते बाधकमाह– सन इति, यदि सनः प्रकृतिभूतधात्वर्थप्रकारकेच्छावाचकत्वं प्रथमोक्तं स्यात्तदा भोजनस्य प्रकारत्वसत्त्वे एव 'बुभुक्षते' इति प्रयोगः स्यादिति ओदनभोजनेच्छादशायाम् 'ओदनं बुभुक्षते' इति प्रयोगो न स्यात्– अत्र भोजनस्य विशेष्यत्वेन प्रतीयमानत्वेन प्रकारत्वेनाऽप्रतीयमानत्वादित्यर्थः ।

ननु कर्मतासंबन्धेन भोजनविशिष्टो य ओदनस्तद्विशेष्यकैव यदेच्छा भवति तदैव एतादृशः= 'ओदनं बुभुक्षते' इति प्रयोगो भवतीति न सनः स्वप्रकृतिभूतधात्वर्थभोजनादिविशेष्यके-

न च कर्मतासंबन्धेन भोजनप्रकारिका यदौदनविशेष्यिकेच्छा तत्रैवेतादृशप्रयोगः, सा चेच्छा भोजनधर्मिकेष्टसाधनताज्ञानाद् भोजनविशिष्टौदनधर्मिकेष्टसाधनताज्ञानाद् वा, ओदनस्य सिद्धतादशायामपि विशिष्टधर्मिकेष्टसाधनताज्ञानाद् विशिष्टधर्मिकाऽसिद्धत्वज्ञानसहिताद् विशिष्टेच्छासंभवात् । यत्र भोजनसिद्धतादशायां भोजनोत्तरकालीनगमनत्वादिप्रकारिका भुक्तौदनजन्यपुष्टित्वादिप्रकारिका वेच्छा तत्र 'बुभुक्षते' इतिप्रयोगस्य न प्रसङ्गः- मुख्यविशेष्यविशेषणतापन्नकर्मत्वांशे इच्छाप्रकारताया एव सन्प्रत्ययप्रकृत्यर्थे भानोपगमादिति वाच्यम्,

---

च्छावाचकत्वकल्पनाया अपेक्षेत्याशङ्कते- न चेति । सा=ओदनविशेष्यकापीच्छा भोजनविषयकेष्टसाधनताज्ञानाद्वा कर्मतासंबन्धेन भोजनविशिष्टौदनविषयकेष्टसाधनताज्ञानाद्वा भवतीत्यन्यदेतदित्याह- सेति । ननु सिद्धेरिच्छां प्रति प्रतिबन्धकत्वादोदनसिद्धतादशायामोदनविशेष्यकेच्छा कथं स्यादित्याशङ्क्याह- ओदनस्येति, ओदनस्य सिद्धत्वेपि भोजनविशिष्टौदनस्याऽसिद्धत्वेन भोजनविशिष्टौदनविषयकाऽसिद्धत्वज्ञानसहकृताद् भोजनविशिष्टौदनविषयकेष्टसाधनताज्ञानाद् विशिष्टेच्छाया:=भोजनप्रकारकौदनविशेष्यकेच्छायाः संभवान्न कोपि दोषः ( इच्छाप्रतिबन्धो न संभवति ) इत्यर्थः । ननु यदि सनः स्वप्रकृतिभूतधात्वर्थप्रकारकेच्छावाचकत्वं स्यात्तदा 'भोजनोत्तरकालिकं गमनं भवतु' इत्यत्रापि भोजनस्य गमने विशेषणत्वाद् भोजनप्रकारकगमनविशेष्यकेच्छायाः सत्त्वाद् भोजनप्रकारकेच्छाबोधकः 'बुभुक्षते' इतिप्रयोगः स्यादेव, एवं भुक्तौदनजन्यपुष्टिविशेष्यकेच्छाया अपि भोजनप्रकारकेच्छारूपत्वात् 'भुक्तौदनजन्या पुष्टिर्भवतु' इत्यत्रापि 'बुभुक्षते' इतिप्रयोगः स्यादेव, सनः प्रकृतिभूतधात्वर्थविशेष्यकेच्छावाचकत्वे तूक्तस्थलयोः प्रकृत्यर्थभोजनविशेष्यकेच्छाया अभावादेव 'बुभुक्षते' इतिप्रयोगापत्तिर्नास्तीति सनः प्रकृतिभूतधात्वर्थविशेष्यकेच्छावाचकत्वमेव युक्तं न तु प्रकृतिभूतधात्वर्थप्रकारकेच्छावाचकत्वमित्याशङ्क्याह- यत्रेति । भोजनसिद्धतादशायाम्= भोजने कृते सति । भोजनोत्तरकालीनगमनत्वादिप्रकारिका=भोजनप्रकारिका गमनत्वनिष्ठप्रकारतानिरूपितगमनविशेष्यिका 'भोजनोत्तरकालिकं गमनं भवतु' इत्याकारिका । भुक्तौदनजन्यपुष्टित्वप्रकारिका=भोजनप्रकारिका पुष्टित्वनिष्ठप्रकारतानिरूपितपुष्टिविशेष्यिका 'भुक्तौदनजन्या पुष्टिर्भवतु' इत्याकारिका वेच्छा भवति यत्र तत्रास्मन्मतेपि 'बुभुक्षते' इतिप्रयोगापत्तिर्नास्तीत्यर्थः । उक्ते प्रयोगप्रसङ्गाभावे हेतुमाह- मुख्येति, भोक्तुमिच्छा हि बुभुक्षापदार्थ इति भुजधातूत्तरवर्तिसन्वाच्येच्छाया मुख्यं विशेष्यं भोजनमेव तादृशभोजनरूपमुख्यविशेष्ये विशेषणतापन्नं यत् कर्मत्वं तादृशकर्मत्वांशे= तादृशकर्मत्वनिरूपिका येच्छा तादृशेच्छानिरूपितप्रकारतैव सन्प्रत्ययप्रकृतिभूतधात्वर्थे स्वीक्रियते तथा चौदनभोजनेच्छादशायामेव 'बुभुक्षते' इतिप्रयोगः संभवति- मुख्यविशेष्यभूतभोजने विशेषणतापन्नं यत् कर्मत्वं तन्निरूपिका येच्छा तादृशेच्छानिरूपितप्रकारतायाः सन्प्रत्ययप्रकृत्यर्थभूतभोजने भासमानत्वाद् भोजनप्रकारकौदनविशेष्यकेच्छायाः अत्र प्रतीयमानत्वात् । 'भोज-

**'भोजनं भवतु' इत्यादिभोजनविशेष्यकेच्छादशायामपि 'बुभुक्षते' इतिप्रयोगस्य सर्वसिद्धत्वेन धात्वर्थविशेष्यकेच्छाबोधकतायाः सन्प्रत्ययस्यावश्यमुपेयत्वात् ।**

**न च द्वयी व्युत्पत्तिरेवोपेयते— एकव्युत्पत्त्यैव निर्वाहे व्युत्पत्तिद्वयकल्पने गौरवात्, अत एव च स्थित्यादिगोचरेच्छाया गृहादिविशेष्यकत्वस्योक्तरीत्या संभवेऽपि 'गृहं तिष्ठासति' इत्यादयो न प्रयोगाः । भोजनप्रकारकौदनविशेष्यकेच्छाविशेषदशायाम् 'बुभुक्षते' इतिप्रयोगसत्त्वे तूद्देश्यताख्यविषयताया एव धात्वर्थे भानोपगमेन तस्य निर्वाहात् ।**

---

नोत्तरकालिकं गमनं भवतु' इत्याद्याकारकेच्छादशायां च 'बुभुक्षते' इति प्रयोगापत्तिर्नास्ति— 'भोजनोत्तरकालिकं गमनं भवतु' इत्याकारकेच्छायां मुख्यविशेष्यं गमनमेव तादृशगमने विशेषणतापन्नकर्मत्वस्य निरूपिका येच्छा तादृशेच्छानिरूपितप्रकारता भुजधात्वर्थे न संभवति किन्तु गमधात्वर्थे एव संभवतीति तत्र 'जिगमिषति' इत्येव प्रयोगो भवति न तु 'बुभुक्षते' इतिप्रयोग इत्यर्थः प्रतिभाति । परिहारमाह— भोजनमिति, 'भोजनं भवतु' इत्याकारकभोजनविशेष्यकेच्छादशायामपि 'बुभुक्षते' इति प्रयोगः सर्वमते भवतीति सन्प्रत्ययस्य सन्प्रकृतिभूतधात्वर्थभोजनादिविशेष्यकेच्छाबोधकत्वमावश्यकमेवास्तीति सनः स्वप्रकृतिभूतधात्वर्थविशेष्यकेच्छावाचकत्वमेव युक्तं न तु प्रकृतिभूतधात्वर्थप्रकारकपाकौदनादिविशेष्यकेच्छावाचकत्वं प्रथममतोक्तं युक्तमित्यर्थः ।

ननु 'भोजनं भवतु' इत्याकारकेच्छादशायां सनः स्वप्रकृतिभूतधात्वर्थविशेष्यकेच्छावाचकत्वमप्यस्तु 'भोजनविशिष्ट ओदनो भवतु' इत्याकारकेच्छादशायां प्रकृतिभूतधात्वर्थप्रकारकेच्छावाचकत्वमप्यस्त्विति द्वय्येव व्युत्पत्तिरस्त्वित्याशङ्क्याह— न चेति । परिहारमाह— एकेति । एकव्युत्पत्त्या=प्रकृतिभूतधात्वर्थविशेष्यकेच्छावाचकत्वव्युत्पत्त्या । अत एव=सनः स्वप्रकृतिभूतधात्वर्थविशेष्यकेच्छावाचकत्वादेव, गृहस्थितीच्छायां गृहस्य विशेष्यत्वसंभवेऽपि सनो गृहादिविशेष्यकेच्छावाचकत्वमेव नास्ति येन गृहविशेष्यकेच्छामादाय 'गृहं तिष्ठासति' इतिप्रयोगापत्तिः स्यात् । शेषं पूर्वमेव प्रतिपादितम् । 'भोजनविशिष्ट ओदनो भवतु' इत्याकारिकाया भोजनप्रकारकौदनविशेष्यकेच्छाया दशायामपि यदि 'ओदनं बुभुक्षते' इति प्रयोगो भवति तदा सन्प्रकृतिभूतधात्वर्थे भोजनादौ कर्मताख्यविशेष्यताया असत्त्वेऽप्युद्देश्यताख्यविशेष्यतारूपाया विषयतायाः संभवेन तस्य='ओदनं बुभुक्षते' इतिप्रयोगस्य निर्वाहो विज्ञेयः— भोजनप्रकारकौदनविशेष्यकेच्छाया भोजनोद्देश्यकौदनविशेष्यकेच्छारूपत्वात्— भोजनमुद्दिश्यौदनस्येष्यमाणत्वात्-धात्वर्थभोजने उद्देश्यताख्यविषयताया भासमानत्वादित्यर्थः ।

ननु सनः स्वप्रकृतिभूतधात्वर्थभोजनादिविशेष्यके( भोजनादिविषयके )च्छावाचकत्वमते 'पाकं चिकीर्षति' इत्यत्र पाकस्य करोत्यर्थकृतिकर्मत्वप्रत्यायनं द्वितीयया संभवति— द्वितीयायाः

न च धात्वर्थविशेष्यकेच्छायाः सन्प्रत्ययार्थत्वे ‘ पाकं चिकीर्षति ’ ‘ ओदनं बुभुक्षते ’ इत्यादौ पाकौदनादेर्द्वितीयया कृतिभोजनादिकर्मत्वप्रत्यायनसंभवेपि ‘पाकश्चिकीर्ष्यते’ ‘ ओदनो बुभुक्ष्यते ’ इत्यादौ कर्माख्यातेन तत्प्रत्यायनासंभवः-तत्प्रकृतिभूतसन्नन्तधात्वर्थकृतिभोजनेच्छाकर्मत्वस्यैव तत्प्रत्यायनयोग्यत्वात्, प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वाद् इच्छाविषयत्वविशेषितकृतिभोजनादेश्च प्रकृत्याऽप्रतिपादनादिति वाच्यम्, कर्तृप्रत्ययस्थले सन्प्रत्ययार्थेच्छाया धात्वर्थविशेष्यतया भानेपि कर्मप्रत्ययस्थले तस्या धात्वर्थविशेषणतया भानोपगमात् ‘ चिकीर्ष्यते पाकः ’ इत्यादाविच्छाविशेषितकृत्यादेरेव सन्नन्तेन प्रतिपादनात्

---

कर्मत्ववाचकत्वात् ‘ ओदनं बुभुक्षते ’ इत्यत्र चौदनस्य भोजनकर्मत्वप्रत्यायनं द्वितीयया संभवति यद्यपि तथापि ‘ पाकश्चिकीर्ष्यते ’ ‘ ओदनो बुभुक्ष्यते ’ इत्यादिकर्माख्यातस्थले तु पाकौदनादेः कर्माख्यातेन कृञाद्यर्थकृतिभोजनादिकर्मत्वप्रत्यायनं न संभवति- कर्माख्यातप्रकृतिभूतो यः सन्नन्तधातुस्तदर्थभूता या कृतीच्छा भोजनेच्छा च तादृशकृतिभोजनादीच्छानिरूपितकर्मत्वस्यैव पाकौदनादौ तत्=तेन कर्माख्यातेन प्रत्यायनयोग्यत्वात्=प्रत्यायनसंभवात्, प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वनियमेनात्रापि कर्माख्यातस्य प्रकृत्यर्थभूता या कृतिभोजनादीच्छा तदन्वितकर्मत्वबोधकत्वसंभवात् ( पाकौदनादेः कृतिभोजनेच्छाकर्मत्वमेव प्राप्तं न तु कृतिभोजनादिकर्मत्वम् ) प्रकृत्या=कर्माख्यातप्रकृतिभूतसन्नन्तधातुना च कृतिभोजनादीच्छैव प्रतिपादयितुं शक्यते- प्रकृतावपि सन्प्रत्ययभागार्थेच्छाया एव प्रधानत्वात् न तु इच्छाविषयत्वविशिष्टं कृतिभोजनादिकं येन कृतिभोजनादिकर्मत्वं कर्माख्यातेन पाकौदनादौ प्रतिपादयितुं शक्येतेत्यर्थः, यदि ‘ पाकश्चिकीर्ष्यते ’ ‘ओदनं बुभुक्ष्यते’ इत्यादौ कर्माख्यातप्रकृतिभूतसन्नन्तधातुना इच्छाविषयत्वविशिष्टकृतिभोजनादिकं प्रतिपाद्येत तदा कृतिभोजनादेरेव प्रकृत्यर्थत्वेन कृतिभोजनादिकर्मत्वं कर्माख्यातेन पाकौदनादौ प्रतिपादयितुं शक्येतापि न चैवमस्ति कृतिभोजनादीच्छाया एव प्रकृत्यर्थत्वात् तादृशकृतिभोजनादीच्छाकर्मत्वमेव पाकौदनादौ प्रतिपादयितुं शक्यते न कृतिभोजनादिकर्मत्वं कृतिभोजनादेः प्रकृत्यर्थत्वाभावात् प्रत्ययानां च प्रकृत्यर्थान्वितस्वार्थबोधकत्वनियमादिति भाव इत्येवमाशङ्क्याह- न चेति । परिहारमाह- कर्तृप्रत्ययेति, ‘पाकं चिकीर्षति’ इत्यादिकर्तृप्रत्ययस्थले पाकादिकर्मककृत्यादिविषयकेच्छाश्रयः इत्याकारकबोधोदयात् सन्प्रत्ययार्थेच्छायाः सन्प्रकृतिभूतधात्वर्थविशेष्यतया भानेपि ( तत्रेच्छाविषयत्वं धात्वर्थकृत्यादेरेव कृत्यादिकर्मत्वं च पाकादेर्द्वितीयया प्रत्याय्यते ) ‘ पाकश्चिकीर्ष्यते ’ इत्यादिकर्मप्रत्ययस्थले तु तस्याः=सन्नर्थेच्छायाः सन्प्रकृतिभूतधात्वर्थविशेषणतयैव भानं स्वीक्रियते इच्छाविषयीभूतकृतिविषयः पाक इत्याकारकबोधोदयात् तथा चात्रेच्छाया विशेषणत्वेनेच्छाविशेषितकृतिभोजनादिकमेव कर्माख्यातप्रकृतिभूतसन्नन्तधातुना प्रतिपाद्यते इति कृतिभोजनादेरेव प्रकृत्यर्थत्वात् तादृशकृतिभोजनादिकर्मत्वं पाकौदनादावात्मनेपदेन=कर्माख्यातेन प्रतिपादयितुं शक्यते एव, एवं च प्रत्ययानां

तादृशकृत्यादिकर्मताया आत्मनेपदादिना प्रत्यायनसंभवात् । आख्यातायुपस्थितवर्तमानत्वादेश्च कृत्यादिविषयकेच्छा यत्र प्रकृत्यर्थो यत्र वेच्छाविषयकृतिस्तत्रोभयत्रैवेच्छायामन्वयः, प्रकृत्यर्थैकदेशेपि 'नीलतरो घटः' इत्यादिस्थले नीलरूपादौ तरबाद्यर्थातिशयान्वयानुरोधात् ।

न चैवं कर्मप्रत्ययस्थलेपि कृतिविशेषितैवेच्छा सना प्रत्याय्यतां विशेषणीभवन्ती कृतिरेव कर्मत्वेनाऽन्वीयताम्, भवन्मते विशेषणीभूतेच्छायां वर्तमानत्वाद्यपराख्यातार्थान्वयवदिति वाच्यम्, एकत्र विशेषणतयोपस्थितस्यान्यत्र विशेषणतयान्वयोऽव्युत्पन्न इति प्रथमान्तार्थविशेषणकर्मत्वे इच्छायां विशेषणतयोप-

---

प्रकृत्यर्थान्वितस्वार्थबोधकत्वनियमस्यापि न भङ्ग इत्यर्थः । नन्वाख्यातोपस्थितवर्तमानत्वस्य कुत्रान्वय इत्याशङ्क्याह—आख्यातेति, सन्नन्तधातोराख्यातस्य प्राप्तत्वेन सन्नन्तस्यैव प्रकृतित्वमितीच्छायाः प्रकृत्यर्थत्वं तथा च यत्र='पाकं चिकीर्षति' इत्यादाविच्छाया धात्वर्थविशेष्यत्वेन करोत्यर्थकृत्यादिविषयकेच्छा प्रकृत्यर्थस्तथा यत्र='पाकश्चिकीर्ष्यते' इत्यादिकर्माख्यातस्थले इच्छायाः सन्प्रकृतिभूतधात्वर्थविशेषणत्वेनेच्छाविषयकृत्यादिः प्रकृत्यर्थस्तत्रोभयत्रैवाख्यातोपस्थितवर्तमानत्वादेरिच्छायामेवान्वयो न तु धात्वर्थकृत्यादौ वा पाकादौ वेत्यर्थस्तथा च 'चिकीर्षति' इत्यत्र कृतिविषयकवर्तमानेच्छाश्रयश्चैत्र इतिबोधः, 'चिकीर्ष्यते' इत्यत्र वर्तमानेच्छाविषयीभूतकृतिविषयः पाक इतिबोधः । ननु कर्माख्यातस्थले सन्नन्तधात्वर्थस्यैकदेशभूतायामिच्छायां वर्तमानत्वादेः कथमन्वयः स्यात्—"पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेन" इतिनियमादित्याशङ्क्याह—प्रकृत्यर्थेति, यथा 'नीलतरो घटः' इत्यत्र तरप्प्रत्ययार्थस्यातिशयस्य पदार्थैकदेशे नीले एवान्वयो भवति तथात्रापि ज्ञेयमित्यर्थः । अत्र सन्प्रत्ययार्थेच्छायाः प्रकृतिभूतधात्वर्थविशेष्यकत्वं प्रतिज्ञाय धात्वर्थविशेष्यतया भानस्वीकारे पूर्वापरविरोधो नाशङ्कनीयः—'चिकीर्षति' इत्यादौ कृत्यादिविषयकेच्छा सन्प्रत्ययार्थोस्ति सा चेच्छात्र धात्वर्थकृतेर्विशेष्यभूतास्ति अथ च तादृशेच्छायां विशेष्यतया ( विषयतया ) धात्वर्थकृतेरेव भानं भवति न तु पाकादेरिति धात्वर्थविशेष्यकाप्यस्तीति धात्वर्थविशेष्यकत्वधात्वर्थविशेष्यत्वयोः पदयोरनतिरिक्तार्थकत्वात् ।

ननु कर्तृप्रत्ययस्थले इव कर्मप्रत्ययस्थलेपि कृतिविशेषितैवेच्छायाः=धात्वर्थविशेष्यतयैवेच्छायाः सना भानं स्वीक्रियतां न तु करोत्यादिधात्वर्थविशेषणतया तथा च यथा तव मते 'पाकश्चिकीर्ष्यते' इत्यादिकर्मप्रत्ययस्थले धात्वर्थे विशेषणीभूतायामपीच्छायामाख्यातप्रत्ययार्थस्य वर्तमानत्वस्यान्वयो भवति तथेच्छाविशेषणीभूतकृतेरेव प्रथमान्तार्थविशेषणीभूताख्यातार्थकर्मत्वेऽन्वयो भविष्यति. एवं चेच्छाया विशेष्यत्वप्राप्त्या विशेष्यभूतायामिच्छायामाख्यातार्थवर्तमानत्वस्यान्वयोपि युक्त एव स्यादित्याशङ्क्याह—न चेति । परिहारमाह—एकत्रेति, "एकत्र विशेषणतयोपस्थितस्यान्यत्र विशेषणतयान्वयोऽव्युत्पन्नः" इतिनियमात् कर्मप्रत्ययस्थले इच्छाया

स्थितस्य धात्वर्थस्य विशेषणतयाऽन्वयायोगात्, विशेष्यतया चान्वयस्याप्रसक्तत्वात्। धात्वर्थविशेषणतया इच्छाभानेपि तस्या वर्तमानत्वादिविशेष्यतयैव भानेनोक्तव्युत्पत्तिविरोधविरहात्।

एवं धात्वर्थस्येतरविशेषणतयोपस्थितस्य स्वातन्त्र्येण कर्मतादिविशेषणत्वमयुक्ततममेव। प्रकृत्यर्थस्यैकदेशेपि प्रकृत्यर्थान्तर्गततया भासमाने एव प्रत्ययार्थान्वयदर्शनात्, न तु स्वातन्त्र्येण भासमाने। इच्छारूपविशेष्यपारतन्त्र्येण कर्मत्वान्वयोपि इच्छायाः कर्मत्वानन्वये दुर्घटः-विशेष्यान्वयिन्येव विशेषणस्य

---

धात्वर्थविशेष्यत्वस्वीकारे तादृशेच्छायां विशेषणीभूतस्य धात्वर्थस्य=कृतेः प्रथमान्तार्थे पाकादौ विशेषणीभूतकर्मत्वे विशेषणतयाऽन्वयो न संभवति. धात्वर्थकृतेः कर्माख्यातार्थभूतकर्मत्वे विशेष्यतयाप्यन्वयो न संभवति-कर्मत्वे विशेष्यतया ( विशेष्यतारूपेण ) प्रथमान्तार्थान्वयस्यैव प्रसक्तत्वात् तस्मात् कर्मप्रत्ययस्थले इच्छाया धात्वर्थविशेषणत्वमेव स्वीकार्यं धात्वर्थविशेषणीभूताया अपीच्छायाः प्रत्ययार्थत्वेन प्राधान्याद् वर्तमानत्वादौ विशेष्यतयैवान्वयो भवति न तु विशेषणतयेति उक्तव्युत्पत्तेः="एकत्र विशेषणतयोपस्थितस्यान्यत्र विशेषणतयान्वयोऽव्युत्पन्नः" इति व्युत्पत्तेरपि विरोधो नास्त्येव-धात्वर्थे विशेषणीभूतेच्छाया वर्तमानत्वे विशेष्यतयैवान्वयस्वीकारात्। तस्याः=इच्छायाः। कृतिश्चात्र कर्मप्रत्ययस्थले इच्छायां न विशेषणं किं त्विच्छाविशेष्यमेवेतीच्छायां विशेष्यत्वेनान्वितायाः कृतेः प्रथमान्तार्थविशेषणीभूतकर्माख्यातार्थकर्मत्वे विशेषणत्वेनान्वयोपि न विरुद्ध इत्यर्थः।

उपसंहरति-एवमिति, "एवम्" इत्यत्र 'एवं च' इति पाठो युक्तः। तथा च यदि कर्मप्रत्ययस्थले इच्छाया धात्वर्थविशेष्यत्वं स्यात्तदा इतरविशेषणतया=इच्छाविशेषणतया उपस्थितस्य धात्वर्थस्य=करोत्याद्यर्थस्य कृत्यादेः स्वातन्त्र्येणाख्यातार्थकर्मत्वे विशेषणत्वमयुक्तमेव-"एकत्र विशेषणतया" इतिव्युत्पत्तिविरोधात्। प्रकृत्यर्थैकदेशेपि प्रत्ययार्थान्वयस्तत्र भवति यत्र प्रकृत्यर्थैकदेशस्य प्रकृत्यर्थान्तर्गततया भानं भवति न तु स्वातन्त्र्येण भासमाने यथा 'नीलतरो घटः' इत्यत्र तरप्प्रत्ययप्रकृतिभूतनीलपदस्यापि नीलत्वेन रूपेण घटवाचकत्वात् प्रकृत्यर्थभूतो यो घटस्तदन्तर्गततयैव नीलरूपस्य भानं भवतीति प्रकृत्यर्थैकदेशेपि तादृशनीलरूपे तरप्प्रत्ययार्थस्यातिशयस्याऽन्वयो भवति तथा चात्र प्रत्ययार्थकर्मत्वस्यापि धात्वर्थकृतौ विशेषणतयान्वयो न संभवति-'चिकीर्ष्यते' इत्यत्र कृतेः प्रकृत्यर्थैकदेशत्वेपि स्वातन्त्र्येण भासमानत्वादित्याह-प्रकृत्यर्थस्येति। इच्छाया धात्वर्थविशेष्यत्वस्वीकारे कृतिविशिष्टेच्छाया एवाख्यातप्रकृत्यर्थत्वेन कृतेः प्रकृत्यर्थैकदेशत्वं ज्ञेयम्। एकत्र विशेषणतयोपस्थितस्याप्यन्यत्र धर्मिपारतन्त्र्येण विशेषणतयान्वयो भवति तदप्यत्र न संभवति-कृतिविशेष्यभूताया इच्छायाः कर्मत्वेऽन्वयाभावेनेच्छाद्वारापीच्छाविशेषणीभूतकृतेः कर्मत्वेऽन्वयासंभवादित्याह-इच्छारूपेति। अत्र नियामक-

पारतन्त्र्येणान्वयस्य विशिष्टान्वयस्थले व्युत्पत्तिसिद्धत्वाद् न तु विशेष्यानन्वयिनि ।

अथास्तु विषयतारूपकर्मत्वे 'चिकीर्ष्यते पाकः' इत्यादाविच्छायास्तत्परतन्त्रकृतेश्चान्वयः– उभयत्रैव पाकादेर्विषयत्वात्, स्थित्यादिकर्मत्वाऽप्रसिद्ध्या च 'गृहं तिष्ठास्यते' इत्यादेरप्रसङ्गादिति चेत्?, 'ओदनो बुभुक्ष्यते' इत्यादौ का गतिः?– तत्रेच्छाकर्मताया विषयतारूपत्वाद् भोजनादिकर्मतायाश्च तदन्यत्वात्, विशेष्यीभवदिच्छान्वयिनि कर्मत्वे भोजनाद्यन्वयायोग्यत्वेन विशिष्टान्वयासंभवात् ।

---

माह–विशेष्यान्वयिन्येवेति, विशिष्टान्वयस्थले=यत्र विशेषणविशिष्टस्यैव विशेष्यस्य क्वचिदन्वयो भवति तत्र ( यत्र विशेषणस्य धर्मिपारतन्त्र्येणान्वयो भवति तत्र ) विशेष्यान्वयिन्येव विशेष्यपारतन्त्र्येण विशेषणस्यान्वयो व्युत्पत्तिसिद्धोऽस्ति न तु विशेष्यानन्वयिन्यपि, विशेष्यानन्वयिनि विशेष्यद्वारा विशेषणान्वयासंभवादित्यर्थः । पाकादिनिष्ठं कर्मत्वं हि करोत्याद्यर्थकृत्यादिमात्रनिरूपितमस्ति न तु सन्नर्थेच्छानिरूपितमिति तादृशकर्मत्वे इच्छाया अन्वयासंभवादिच्छाद्वारापि कृत्यन्वयो न संभवतीत्यर्थः ।

ननु 'पाकश्चिकीर्ष्यते' इत्यत्र पाकनिष्ठं यत् कर्माख्यातार्थभूतं कर्मत्वं तद् विषयतारूपमेव पाकस्य चोभयत्रैव=कृताविच्छायां च विषयत्वात् कर्मत्वे इच्छाया अन्वयो युक्त एव तथा चेच्छाद्वारा इच्छान्वयिनि कर्मत्वे कृतेरप्यन्वयस्य नानुपपत्तिरित्याशङ्कते– अथेति । नन्वेवमिच्छाद्वारा धात्वर्थस्थितेर्गृहनिष्ठकर्मत्वेऽन्वयापत्त्या 'गृहं तिष्ठास्यते' इत्यपि प्रयोगः स्यादित्याशङ्क्याह– स्थित्यादीति, कृत्यादीनां सकर्मकत्वात् पाकादिनिष्ठकर्मत्वेऽन्वयः संभवति स्थितेश्चाऽकर्मकत्वेन गृहादिनिष्ठकर्मत्वेऽन्वयासंभवात् 'गृहं तिष्ठास्यते' इत्यादिप्रयोगस्यापत्तिर्नास्ति तथा च कर्मप्रत्ययस्थलेपि सन्नर्थेच्छाया धात्वर्थकृत्यादिविशेष्यत्वमेव स्वीकार्यं न तु धात्वर्थविशेषणत्वमित्यर्थः । परिहारमाह– ओदन इति, 'पाकश्चिकीर्ष्यते' इत्यत्र कृतिकर्मत्वमिच्छाकर्मत्वं च विषयतारूपत्वादेकस्वरूपमेवेति तत्रेच्छाकृत्योरुभयोरप्यन्वयसंभवेनेच्छाद्वारा इच्छाविशेषणीभूतकृतेरप्यन्वयः संभवति, 'ओदनो बुभुक्ष्यते' इत्यत्रेच्छाकर्मत्वं तु विषयतारूपमस्ति भोजनकर्मत्वं च तदन्यत्=गलाधस्संयोगरूपमेवास्ति न तु विषयतारूपम्– असंभवादिति विशेष्यभूतेच्छान्वयिनि कर्मत्वे=विषयतारूपकर्मत्वे धात्वर्थस्य भोजनस्यान्वयो न संभवति भोजनस्य गलाधस्संयोगरूपकर्मत्वे एवान्वयसंभवादिति विषयतारूपे इच्छाकर्मत्वे विशिष्टस्य=भोजनविशिष्टेच्छाया अन्वयासंभवात् 'ओदनो बुभुक्ष्यते' इत्यत्रागतिरेव स्यात्, तथा चात्र सन्नर्थेच्छाया धात्वर्थविशेषणत्वमेव स्वीकार्यं तथा च धात्वर्थस्य भोजनस्य विशेष्यत्वमेव स्यात् विशेष्यभूतस्य तु भोजनस्य स्वातन्त्र्येणाप्योदननिष्ठे आख्यातार्थभूते कर्मत्वेऽन्वयः संभवत्येवेति कर्माख्यातस्थले इच्छाया धात्वर्थविशेषणत्वमेवेत्यर्थः ।

वस्तुतः 'पाकश्चिकीर्ष्यते' इत्यत्राप्यगतिरेव- कृत्यविशेषगतया पाकनिष्ठेच्छाविषयतायाः कृतिविशेषणतया तन्निष्ठकृतिविषयताया भिन्नतया इच्छान्वयिनो विषयत्वरूपकर्मत्वस्य कृत्यऽन्वयायोग्यत्वात् ।

यदि च विशेष्यान्वयिव्यक्तावेव तत्पारतन्त्र्येण विशेषणान्वय इति न नियमः, अपि तु तदन्वयितावच्छेदकावच्छिन्ने एवेति तथा च विषयतात्वावच्छिन्नस्योभयान्वययोग्यतया न प्रकृतेप्यन्वयानुपपत्तिः, अत एव "अरुणया" इत्यादावाऽऽरुण्यनिरूपितसाध्यताया गोनिरूपितसाध्यताभिन्नत्वेपि न तृतीयार्थे

---

सन्नर्थेच्छायाः कर्माख्यातस्थलेपि धात्वर्थकृत्यादिविशेष्यत्वस्वीकारे यथा भोजनस्येच्छाविशेषणत्वे ह्युक्तरीत्या कर्मत्वेऽन्वयो न संभवति तथा 'पाकश्चिकीर्ष्यते' इत्यत्रापीच्छाविशेषणीभूतकृतेः कर्मत्वेऽन्वयो न संभवतीत्याह- वस्तुत इति, यद्यपि पाके इच्छाविषयताप्यस्ति धात्वर्थकृतिविषयताप्यस्ति तथापि पाकनिष्ठा या इच्छाविषयता सा इच्छायामेव विशेषणं भवति न तु कृतौ विशेषणं तन्निष्ठा=पाकनिष्ठा कृतिविषयता च कृतौ विशेषणं भवति न त्विच्छायामिति कृतौ विशेषणत्वाऽविशेषणत्वाभ्यां विषयतयोः परस्परं भिन्नतया इच्छान्वयिनः कृत्यऽविशेषणीभूतस्य विषयत्वरूपकर्मत्वस्य कृतावन्वयो न संभवति किं वा कृतिप्रतियोगिकान्वयायोग्यत्वात् ( इच्छान्वयि कर्मत्वे कृतेरन्वयो न संभवति ) इति 'पाकश्चिकीर्ष्यते' इत्यत्राप्यगतिरेवेत्यर्थः । तस्मात् कर्माख्यातस्थले इच्छाया धात्वर्थविशेषणत्वमेव स्वीकार्यं तथा च विशेष्यभूतस्य कृतिरूपधात्वर्थस्य पाकनिष्ठकर्मत्वे स्वातन्त्र्येणान्वयसंभवान्न काचिदनुपपत्तिः स्यादिति शेषः । "तन्निष्ठकृतिविषयतायाः" इति पञ्चम्यन्तम् ।

ननु विशेष्यविशेषणस्य विशेष्यपारतन्त्र्येण योन्वयो भवति स विशेष्यान्वयितद्व्यक्तावेव भवतीति नियमो नास्ति किं तु तदन्वयितावच्छेदकावच्छिन्ने=विशेष्यान्वयितावच्छेदकावच्छिन्ने एव भवति न तु विशेष्यान्वयितावच्छेदकानवच्छिन्नेपीत्ययमेव नियमस्तथा च 'पाकश्चिकीर्ष्यते' इत्यत्र पाकनिष्ठेच्छाविषयतायाः पाकनिष्ठकृतिविषयतायाश्चोक्तरीत्या परस्परं भिन्नत्वेप्युभयोरपि विषयतयोरन्वयितावच्छेदकेन विषयतात्वेनावच्छिन्नत्वं त्वऽस्त्येवेति विषयतात्वावच्छिन्नाया विषयताया विषयतात्वेन रूपेणोभयान्वययोग्यतया=इच्छाकृत्युभयान्वययोग्यतया विषयतात्वावच्छिन्ने पाकनिष्ठे इच्छायाः कृतेश्च धात्वर्थस्याऽन्वयसंभवान्न काचिदनुपपत्तिः । एवम् 'ओदनो बुभुक्ष्यते' इत्यत्राप्योदननिष्ठाया इच्छाविषयताया भोजनविषयतायाश्चोक्तरीत्या भोजने विशेषणत्वाविशेषणत्वाभ्यां च भिन्नत्वेपि विषयतात्वावच्छिन्नाया विषयताया विषयतात्वेन रूपेणेच्छयादिच्छाभोजनोभयान्वययोग्यत्वात्त तादृशविषयतात्वावच्छिन्नायामिच्छाया भोजनस्य चान्वयसंभवान्न काचिदनुपपत्तिः । अत एव= यतो विशेष्यान्वयितावच्छेदकावच्छिन्ने एव विशेष्यपारतन्त्र्येण तद्विशेषणस्यान्वयः स्वीक्रियते अत एव "अरुणया पिङ्गाक्ष्यैकहायन्या ( गवा ) सोमं क्रीणाति" इति श्रुतावाऽऽरुण्यनिरूपितसाध्यताया गोनिरूपितसाध्यतायाश्च ( क्रयनिष्ठायाः ) परस्परं भिन्नत्वेपि ( गोः साक्षा-

विशिष्टान्वयानुपपत्तिः, तत्र परम्परया विशेष्यान्वयिसोमक्रयव्यक्तेः परम्परया विशेषणान्वयिव्यक्त्यभेदवत् प्रकृतेपि परम्परयोभयान्वयिकर्मव्यक्त्यभेदोऽक्षत एवेत्युच्यते ?, तदा 'भोजनकृतिर्भवतु' 'पाकश्च भवतु' इतिसमूहालम्बनेच्छामादाय 'पाकश्चिकीर्ष्यते' इति प्रयोगस्य कालान्तरीयकृतिविषयतामादाय दुर्वारतैव ।

विषयितासंबन्धेनेच्छाविशेषणीभवत्कृतिव्यक्तिकर्मत्वस्यैव तदिच्छान्वयिनि कर्मण्यन्वयान्नायमतिप्रसङ्ग इति चेत् ?, तथापि तदिच्छाकाले 'पाक इदानीं न

---

क्रयहेतुत्वाद् आरुण्यस्य च गोपरिच्छेदकत्वेन गोद्वारा क्रयहेतुत्वात् ) विशेष्यान्वयितावच्छेदकावच्छिन्ने=साध्यतात्वावच्छिन्ने साध्यतात्वरूपेण साध्यतारूपे तृतीयार्थे विशिष्टान्वयस्य—आरुण्यविशिष्टाया गोः किं वा गोद्वाराऽऽरुण्यस्य ( गवारुण्ययोरुभयोः ) अन्वयानुपपत्तिर्नास्ति—उभयोरपि साध्यतयोः साध्यतात्वावच्छिन्नत्वात् साध्यतात्वेन रूपेणैक्याच्च, तत्र गोः साध्यतायां साध्यतायाः सोमक्रयेऽन्वयः, आरुण्यस्य च गवि गोः साध्यतायां साध्यतायाः सोमक्रयेऽन्वयः किंवाऽऽरुण्यस्य परिच्छेदे परिच्छेदस्य गवि गोः सोमक्रयेऽन्वयः इत्येवं परम्परयाऽन्वये सत्यपि विशेष्यान्वयि=गवान्वयि सोमक्रयव्यक्तेः विशेषणान्वयि=आरुण्यान्वयिसोमक्रयव्यक्तेश्चाभेदवत् प्रकृते='पाकश्चिकीर्ष्यते' इत्यत्रापि कृतेः स्वनिरूपितविषयतायां तस्याश्च पाकेऽन्वय इच्छायाश्च स्वनिरूपितविषयतायां तस्या अपि पाके एवाश्रयतासंबन्धेनान्वय इत्येवं परम्परासंबन्धेनेच्छाकृत्युभयान्वयिकर्मव्यक्तेः=पाकव्यक्तेरभेदोस्त्येवेति तत्रेच्छायास्तत्परतन्त्रकृतेश्चान्वयसंभवान्न काचिदनुपपत्तिरित्याशयेनाशङ्कते— यदि चेति । शिष्टम् "अथास्तु" इत्यत्र ज्ञेयम् । परिहारमाह— तदेति, यदि परम्परयोभयान्वयिपाकव्यक्तेरेकत्वमुच्यते तदा 'भोजनकृतिर्भवतु' 'पाकश्च भवतु' इतिसमूहालम्बनज्ञाने कृतिविषयत्वं भोजनेस्ति पाके तु केवलमिच्छाविषयत्वमेवास्ति तथापि कालान्तरीयपाकविषयककृतिविषयतामादाय तादृशकालान्तरीयकृतेर्विषये वर्तमानेच्छाविषये च पाके कयाचित्परम्परया कृतीच्छयोरुभयोरप्यन्वयसंभवेनोक्तसमूहालम्बनेच्छादशायामपि 'पाकश्चिकीर्ष्यते' इतिप्रयोगापत्तिः स्यादेव न चैतदिष्टम्— कृतीच्छयोरुभयोरपि पाकविषयकयोर्वर्तमानतादशायामेव 'पाकश्चिकीर्ष्यते' इतिप्रयोगस्येष्टत्वादित्यर्थः ।

ननु 'पाकश्चिकीर्ष्यते' इत्यत्रेच्छाया धात्वर्थविशेष्यत्वमते विषयितासंबन्धेनेच्छायां विशेषणीभूता या कृतिस्तादृशकृतिकर्मत्वस्यैव तदिच्छान्वयिनि=कृतीच्छान्वयिनि कर्मणि=पाकेन्वय इष्टोऽस्ति न त्विच्छायामविशेषणीभूतकृतिकर्मत्वस्यापि तथा च कृतेरवर्तमानत्वे ह्यवर्तमानकृतेर्वर्तमानेच्छायां विषयितासंबन्धेन विशेषणत्वासंभवादेवोक्तसमूहालम्बनेच्छादशायां पाकविषयककृत्यभावे 'पाकश्चिकीर्ष्यते' इतिप्रयोगस्यापत्तिर्नास्ति, वर्तमानैव च कृतिर्वर्तमानेच्छायां विशेषणं स्यादिति पाकविषयकयोः कृतीच्छयोर्वर्तमानत्वे तु 'पाकश्चिकीर्ष्यते' इतिप्रयोग इष्ट एवेत्याशङ्कते— विषयितेति । अत्रापि दोषमुद्घाटयति— तथापीति, तदिच्छाकाले=उक्तसमूहालम्बनेच्छादशायां पाकविषयकेच्छायाः सत्त्वेपि पाकविषयककृतेरसत्त्वात् 'पाक इदानीं न चिकीर्ष्यते'

चिकीर्ष्यते' इति प्रयोगानुपपत्तिः- अन्वयितावच्छेदककृतिविषयतात्वकृतिगोचरवर्तमानेच्छाविषयतात्वावच्छिन्नाभावयोस्तदा पाकेऽसत्त्वात् ।

न च वर्तमानकालावच्छिन्नकृतिविषयतात्वावच्छिन्नाभाव एव तत्र प्रतीयते स पाकेऽबाधित इति वाच्यम्, यदाऽतीतेच्छाधीनपाककृतिरपि तत्र वर्तते तदा तादृशाभावस्यापि तत्र बाधात् । पाककृतीच्छायामसत्त्यामुक्तेच्छासत्त्वेपि च तथा प्रयोगात्, कृत्यसत्त्वेपि पाककृतीच्छासत्त्वे तथाप्रयोगविरहात्, कृति-

---

इतीष्टेपि प्रयोगो नोपपद्येत- 'पाक इदानीं न चिकीर्ष्यते' इत्यत्र पाकेऽन्वयितावच्छेदकं यत् कृतिविषयतात्वं तदवच्छिन्नप्रतियोगिताकोऽभावः ( कृतिविषयकत्वाभावः ) अन्वयितावच्छेदकं यत् कृतिगोचर ( कृतिविषयक ) वर्तमानेच्छाविषयतात्वं तदवच्छिन्नप्रतियोगिताकश्चाभावः ( इच्छाविषयत्वाभावः ) बोध्यते उक्तसमूहालम्बनेच्छादशायां च पाकविषयककृतेरसत्त्वेन पाके कृतिविषयत्वाभावस्य सत्त्वेपीच्छाविषयत्वाभावो नास्त्येव-पाकविषयकेच्छायाः सत्त्वादित्युक्तप्रयोगानुपपत्तिरित्यर्थः । अस्मन्मते तु कर्माख्यातस्थले इच्छाया धात्वर्थविशेषणत्वस्वीकारात् 'पाक इदानीं न चिकीर्ष्यते' इतिवाक्यस्य पाके इच्छाविषयीभूतकृतिविषयत्वाभावबोधकत्वं स्वीक्रियते उक्तसमूहालम्बनेच्छाकाले च पाके इच्छाविषयत्वसत्त्वेपि कृतिविषयत्वस्याऽसत्त्वेनेच्छाविषयीभूतकृतिविषयत्वाभावस्य सत्त्वात् तद्बोधकस्योक्तप्रयोगस्यानुपपत्तिर्नास्त्येव । त्वया तु कर्माख्यातस्थलेपि सन्नर्थेच्छाया धात्वर्थविशेष्यत्वस्वीकारेण 'पाक इदानीं न चिकीर्ष्यते' इति वाक्यस्य पाके कृतिविषयकेच्छाविषयत्वाभावबोधकत्वं वक्तव्यमुक्तसमूहालम्बनेच्छाकाले च पाके इच्छाविषयत्वस्यैव सत्त्वादिच्छाविषयत्वाभावो नास्त्येवेति त्वन्मते प्रयोगानुपपत्तिरस्त्येवेत्यर्थः ।

ननु तत्र='पाक इदानीं न चिकीर्ष्यते' इत्यत्र वर्तमानकालावच्छिन्नकृतिविषयतात्वावच्छिन्नप्रतियोगिताकोऽभावः ( वर्तमानकृतिविषयत्वाभावः ) एव प्रतीयते स च कृतिविषयत्वाभावः पाके उक्तसमूहालम्बनेच्छादशायामबाधितः=अस्त्येव-पाकविषयककृतेरभावादित्युक्तसमूहालम्बनेच्छादशायाम् 'पाक इदानीं न चिकीर्ष्यते' इति प्रयोगस्यानुपपत्तिर्नास्तीत्याशङ्क्याह- न चेति । परिहारमाह-यदेति, यदा तत्र=उक्तसमूहालम्बनेच्छादशायां वर्तमानेच्छाधीनपाककृतेरसत्त्वेप्यतीतेच्छाधीनपाककृतेः संभवादतीतेच्छाधीनपाककृतिर्वर्तते ( स्यात् ) तदा तत्र=पाके तादृशवर्तमानकृतिविषयत्वस्यैव प्राप्त्या तादृशवर्तमानकृतिविषयत्वाभावस्य बाधात् 'पाक इदानीं न चिकीर्ष्यते' इतिप्रयोगस्यानुपपत्तिस्तदवस्थैवेत्यर्थः । 'पाक इदानीं न चिकीर्ष्यते' इत्यत्र पाके कृतिविषयत्वाभावमात्रबोधे दोषान्तरं प्रदर्शयति-पाककृतीच्छायामिति, उक्तेच्छायाः=उक्तसमूहालम्बनेच्छायाः ( पाकेच्छायाः ) सत्त्वेपि पाककृतीच्छायामसत्यां पाकविषयककृतेरप्यसत्त्वं प्राप्तमिति पाके इच्छाविषयीभूतकृतिविषयत्वाभावबोधकस्य 'पाक इदानीं न चिकीर्ष्यते' इतिवाक्यस्य प्रयोगो भवत्येव, यद्यत्र त्वदुक्तरीत्या पाके केवलं कृतिविषयत्वाभावस्यैव बोधः

विषयत्वाभावमात्रबोधस्य तत्राभ्युपगमाऽसंभवाच्चेति कर्मप्रत्ययस्थले इच्छा धात्वर्थविशेषणमेव ।

इदं तु तत्त्वम्—कर्मप्रत्ययस्थलेपि धात्वर्थविशेष्यतयैवेच्छा सन्प्रत्ययेन प्रत्याय्यते, तत्कर्मत्वमेव कर्माख्यातार्थः, तच्च धात्वर्थकर्मतया तद्विषयत्वम् । 'ओदनकर्मकभोजनं भवतु' 'पाकविषयककृतिर्भवतु' इत्यादीच्छायां च पाकौदनादीनां तथेच्छाविषयतया तत्कर्मत्वमक्षतम् । गृहस्थित्यादीच्छायां च गृहादेः

---

स्यात्तदोक्तरीत्या पाकेऽतीतेच्छाधीनकृतिविषयत्वस्य संभवादुक्तसमूहालम्बनेच्छाकाले 'पाक इदानीं न चिकीर्ष्यते' इतिप्रयोगो न स्यादेवेत्यर्थः । 'पाक इदानीं न चिकीर्ष्यते' इत्यस्य पाके कृतिविषयत्वाभावमात्रबोधकत्वस्वीकारे दोषान्तरं प्रदर्शयति—कृत्यसत्त्वेपीति, पाकविषयकृत्यसत्त्वेपि पाकविषयककृतिविषयकेच्छासत्त्वे तथाप्रयोगविरहात्='पाक इदानीं न चिकीर्ष्यते' इति प्रयोगो न भवति—पाककृतीच्छासत्त्वे पाके इच्छाविषयीभूतकृतिविषयत्वमेव प्राप्तमितीच्छाविषयीभूतकृतिविषयत्वाभावबोधकस्य 'पाक इदानीं न चिकीर्ष्यते' इतिवाक्यस्य प्रयोगापत्तिर्नास्त्येव, यद्यस्य वाक्यस्य पाके कृतिविषयत्वाभावमात्रबोधकत्वं स्यात्तदा पाके वर्तमानेच्छाधीनकृतिविषयत्वसत्त्वेपि पाकविषयककृत्यन्तरस्याऽसत्त्वादेव 'पाक इदानीं न चिकीर्ष्यते' इति प्रयोग आपद्येतैव न चैतदिष्टमिति 'पाक इदानीं न चिकीर्ष्यते' इत्यत्र कृतिविषयत्वाभावमात्रबोधस्वीकारो न संभवतीत्याह—कृतिविषयत्वाभावमात्रेति । कर्मप्रत्ययस्थले सन्नर्थेच्छाया धात्वर्थविशेष्यत्वस्वीकारे उक्तदोषवृन्दप्रसङ्गाद् धात्वर्थविशेषणत्वमेव युक्तमित्याह—इतिकर्मप्रत्ययस्थले इति, तथा च 'पाक इदानीं न चिकीर्ष्यते' इति वाक्यस्य पाके इच्छाविषयीभूतकृतिविषयत्वाभावबोधकत्वादुक्तसमूहालम्बनेच्छादशायां प्रयोगानुपपत्तिरपि नास्ति पाककृतीच्छासत्त्वे प्रयोगापत्तिरपि दर्शितदिशा नास्तीति सर्वं सुस्थमिति भावः । अत्र "यदा" इत्यस्य स्थाने "यदि" इत्यपि पाठ उपलभ्यते ।

उक्तरीत्या कर्मप्रत्ययस्थले इच्छाया धात्वर्थविशेष्यत्वं पराकृत्यापि तदेव संस्थापयितुमारभते—इदं तु तत्त्वमित्यादिना । तत्कर्मत्वम्=इच्छाकर्मत्वम् । तच्च=इच्छाकर्मत्वं च धात्वर्थकर्मतया=धात्वर्थकर्मत्वेन रूपेण तद्विषयत्वम्=इच्छाविषयत्वं विज्ञेयम् । अनेन हि धात्वर्थकर्मत्वप्रकारकेच्छाविषयत्वमेवेच्छाकर्मत्वमिति सिद्धम् । तथा च 'ओदनकर्मकभोजनं भवतु' इतीच्छायां सत्यामोदनस्य तथेच्छाविषयतया= भोजनरूपधात्वर्थकर्मत्वेनेच्छाविषयतया तत्कर्मत्वम्=इच्छाकर्मत्वमस्त्येवेति तत्र 'ओदनो बुभुक्ष्यते' इति प्रयोगानुपपत्तिर्नास्ति, एवम् 'पाकविषयककृतिर्भवतु' इतीच्छायां सत्यां पाकस्य तथेच्छाविषयतया=कृतिरूपधात्वर्थकर्मत्वेनेच्छाविषयतया इच्छाकर्मत्वमस्त्येवेति तत्र 'पाकश्चिकीर्ष्यते' इति प्रयोगस्यानुपपत्तिर्नास्ति, धात्वर्थकृतिकर्मपाकविषयकेच्छाविषयत्वाश्रयः पाक इति वा धात्वर्थकर्मत्वप्रकारकेच्छाविषयत्वाश्रयः पाक इति वा शाब्दबोधाकारः । गृहस्थितीच्छायां सत्यां गृहस्येच्छाविषयत्वेपि धात्वर्थभूतस्थितिकर्मत्वेनेच्छाविषयत्वं न

स्थित्याधारत्वादिनैव विषयत्वमिति न गृहादेस्तिष्ठासादिकर्मत्वम् । अत एव यदोदनव्यक्तिकर्मकभोजनमप्रसिद्धम्. अथ च भोजनकर्मतया तदिष्टं तत्र 'अयमोदनो बुभुक्ष्यते' इत्यादेः. दर्शनादिविषयत्वेन गगनादिगोचरेच्छास्थले च 'गगनं दिदृक्ष्यते' इत्यादेश्च प्रयोगस्य नानुपपत्तिः, न वा ओदनादिरूपकर्ममात्रोपरागेण यत्र भोजनादीच्छा दैववशेन च तद्भोजनादिकं विषादिकर्मकमपि तत्र 'विषं बुभुक्ष्यते' इत्यादयः प्रयोगाः ।

कर्तृप्रत्ययस्थलेपि च तादृशविषयतारूपं कर्मत्वमेवेच्छाविशेषणतया भासते न तु धात्वर्थकर्मत्वम् । धात्वर्थविशेषणतया तत्तत्पदार्थकर्मत्वविशिष्टभोजनादि-

---

भवति ष्ठाधातोरकर्मकत्वात् किं तु स्थित्याधारत्वेनैवेच्छाविषयत्वं भवतीति 'गृहं तिष्ठास्यते, गृहं तिष्ठासति' इत्यादिप्रयोगापत्तिरपि नास्ति किं तु 'गृहे तिष्ठास्यते' इत्येव प्रयोगो भवति गृहस्याधारत्वेन सप्तमीप्राप्तेरित्याह—गृहस्थित्यादीच्छायामिति । अत एवेति—यतो धात्वर्थकर्मण इच्छाविषयत्वे सति सन् भवति किं वा यतो धात्वर्थकर्मतया इच्छाविषयत्वमेवेच्छाकर्मत्वमऽत एव यदोदनव्यक्तिकर्मकं भोजनमप्रसिद्धं स्यात् ( तदोदनस्य भोक्तुमशक्यत्वात् ) अथ च तदोदनं भोजनकर्मत्वेनेष्टं स्यात् ( तदोदनकर्मकभोजनेच्छायाः संभवात् ) तत्र=तादृशदशायामपि 'अयमोदनो बुभुक्ष्यते' इति प्रयोगस्यानुपपत्तिर्नास्ति—उक्तोदनस्य भोजनासंभवेपि भोजनकर्मत्वेनेच्छाविषयत्वसंभवात् तत्र सनः साधुत्वात् । एवं यद्यपि गगनकर्मकदर्शनमप्रसिद्धमेव तथापि यदि गगनगोचरदर्शनेच्छा स्यात्तदा 'गगनं दिदृक्ष्यते' इतिप्रयोगस्यानुपपत्तिर्नास्ति—गगने दर्शनकर्मत्वासंभवेपि दर्शनेच्छाविषयत्वस्य संभवाद् दर्शनेच्छाविषयत्वं च दर्शनकर्मत्वेनेच्छाविषयत्वमेवेत्यर्थः । इत्येवमनुपपत्तिं परिहृत्याऽनिष्टापत्तिं परिहरति—न वेति, यत्रौदनादिरूपकर्ममात्रस्योपरागेण=विषयकत्वेन भोजनादीच्छा=ओदनमात्रकर्मकत्वविशिष्टभोजनेच्छा ( ओदनमात्रकर्मकभोजनेच्छा न तु विषादिकर्मकभोजनेच्छापि ) तादृशभोजनकर्मभूतौदनेऽज्ञातविषस्य सत्त्वाद् दैववशेन तद्भोजनं विषकर्मकमपि जातम् ओदनेन सहाज्ञातविषस्यापि भोजनकर्मत्वप्राप्तेस्तत्र 'विषं बुभुक्ष्यते' इति प्रयोगस्यापत्तिर्नास्ति—विषस्य भोजनकर्मत्वेपि भोजनकर्मत्वेनेच्छाविषयत्वाभावात् ( विषभोजनेच्छाया असत्त्वात् ) सन्प्रत्ययश्च तत्रैव भवति यत्र सन्प्रकृतिभूतधात्वर्थकर्मण इच्छाविषयत्वमपि स्यादित्यर्थः ।

'पाकं चिकीर्षति' 'ओदनं बुभुक्षते चैत्रः' इत्यादिकर्तृप्रत्ययस्थलेपि 'पाकनिष्ठतादृशविषयतानिरूपिका या धात्वर्थभूतकृतिभोजनादिप्रकारकेच्छा तादृशेच्छाश्रयश्चैत्रः' इत्याकारकशाब्दबोधोदयात् तादृशविषयतारूपम्=सन्प्रकृतिभूतधात्वर्थकर्मत्वेनेच्छाविषयत्वरूपमेवेच्छाकर्मत्वं निरूपकत्वसंबन्धेनेच्छाविशेषणतया भासते न त्विच्छाविषयत्वासमानाधिकरणं केवलं धात्वर्थनिरूपितकर्मत्वमिच्छाविशेषणतया भासते इत्याह—कर्तृप्रत्ययेति । विपक्षे बाधकमाह—धात्वर्थविशेषणतयेति, यदि इच्छाविषयत्वासमानाधिकरणमपि धात्वर्थकर्मत्वमिच्छाविशे-

निरूपितविषयिताया नियमत इच्छायां भानोपगमेनोक्तस्थले ' विषं बुभुक्षते चैत्रः ' इत्यादिप्रयोगवारणेपि ' गगनं दिदृक्षते चैत्रः ' इत्यादिप्रयोगस्य दुरुपपादत्वात् ।

इदं तु बोध्यम्— सन्प्रतिपाद्येच्छायां धात्वर्थकृतिभोजनादेः केवलविशेष्यतासंबन्धेन न विशेषणत्वं तथा सति परकर्तृककृतिभोजनादिगोचरेच्छावति ' अयं चिकीर्षति. बुभुक्षते ' इतिप्रयोगप्रसङ्गात् किं तु विशेष्यतासमानकर्तृकत्वोभय-

---

पगतया भासेत तदा धात्वर्थविशेषगतया=धात्वर्थविशेषणीभूतं यत् तत्तत्पदार्थकर्मत्वम्=ओदनादिपदार्थकर्मत्वं निरूपकत्वसंबन्धेन तद्विशिष्टं यद् भोजनादिकं तादृशभोजनादिनिरूपितविषयिताया इच्छायां भानं भवत्येवेति नियमेन विषकर्मकभोजनेच्छायामसत्याम् ' विषं बुभुक्षते ' इति प्रयोगापत्तिवारणं यद्यपि संभवति— भोजनेच्छायां विषकर्मत्वविशिष्टभोजननिरूपितविषयिताया भानासंभवाद् विषभोजनेच्छाया अभावात् तत्पदार्थकर्मत्वविशिष्टभोजनादिनिरूपितविषयिताया इच्छायां भानसंभवे एव सन्प्रत्ययप्राप्तिसंभवात्, तथापि ' गगनं दिदृक्षते चैत्रः ' इतिप्रयोगस्योपपादनं न संभवति— गगनकर्मत्वविशिष्टदर्शननिरूपितविषयिताया इच्छायां भानासंभवात्— दर्शने गगनकर्मत्ववैशिष्ट्यासंभवात्— गगनस्य दर्शनयोग्यत्वाभावात्, गगने धात्वर्थभूतदर्शनकर्मत्वाभावाद् गगननिष्ठधात्वर्थनिरूपितकर्मत्वस्येच्छाविशेषणत्वासंभवादित्यर्थः । यदा च धात्वर्थकर्मत्वेनेच्छाविषयत्वरूपमेव कर्मत्वमिच्छाविशेषणं तदा तु ' गगनं दिदृक्षते ' इत्यत्र घटादिषु प्रसिद्धं यद् धात्वर्थीभूतदर्शनकर्मत्वं तादृशदर्शनकर्मत्वेनेच्छाविषयत्वं गगनेपि संभवतीति ' गगनं दिदृक्षते ' इति प्रयोगोपपत्तिः संभवति— दर्शनकर्मत्वासंभवेपि दर्शनकर्मत्वेनेच्छाविषयत्वस्याकाशेपि संभवादित्यर्थः ।

सन्प्रतिपाद्येच्छायां सन्प्रकृतिभूतधात्वर्थकृतिभोजनादेर्येन संबन्धेनान्वय इष्टस्तत्प्रतिपादयितुमारभते— इदं तु बोध्यमित्यादिना, यदि सन्नर्थेच्छायां धात्वर्थकृतिभोजनादेः केवलविशेष्यतासंबन्धेनान्वयः स्यात् तथा सति=तदा परकर्तृककृतिभोजनादिगोचरेच्छावति=चैत्रकर्तृककृतिभोजनादिविषयकेच्छावति मैत्रे 'अयं ( मैत्रः ) चिकीर्षति. अयं बुभुक्षते' इतिप्रयोगापत्तिः स्यादेव— मैत्रनिष्ठेच्छायास्तदा चैत्रकर्तृककृतिभोजनादिविषयकत्वात् चैत्रकर्तृककृतिभोजनादिनिरूपितविशेष्यतायाः ( विषयितायाः ) मैत्रनिष्ठेच्छायां सत्त्वात् तादृशविशेष्यतासंबन्धेन चैत्रकर्तृककृतिभोजनादेरपि मैत्रनिष्ठेच्छायामप्यऽन्वयित्वेन विशेषणत्वादित्यर्थः । तस्मात् सन्नर्थेच्छायां धात्वर्थकृतिभोजनादेर्विशेष्यता— समानकर्तृकत्वैतदुभयसंबन्धेन विशेषणत्वं भवतीत्याह— किं त्विति, तथा चोक्तस्थले मैत्रनिष्ठेच्छायां चैत्रकर्तृककृतिभोजनादिनिरूपितविशेष्यतायाः सत्त्वेपि चैत्रकर्तृककृतिभोजनादिसमानकर्तृकत्वस्याऽसत्त्वात्— कृतिभोजनादिकर्तृत्वस्य चैत्रे कृतिभोजनादिविषयकेच्छाकर्तृत्वस्य च मैत्रे सत्त्वादिति, तथा च विशेष्यतासमानकर्तृकत्वैतदुभयसंबन्धेन मैत्रनिष्ठेच्छायां चैत्रकर्तृककृतिभो—

संबन्धेनैव । उक्तातिप्रसङ्गवारणायेच्छासमानकर्तृकत्वेपि सन्प्रत्ययवाच्यतां स्वीकृत्य क्रियायां तदन्वयोपगमो न साधीयान्- इच्छान्तरसमानकर्तृकत्वमादाय दर्शितस्थलेतिप्रसङ्गतादवस्थ्यात् । स्वसमानकर्तृकत्वस्य वाच्यत्वे तत्तदिच्छारूपस्वपदार्थाननुगमेन व्युत्पत्त्यनुपपत्तिः ।

न च समानकर्तृकत्वस्य संबन्धत्वोपगमे तत्र शक्तिग्राहकानुशासनविरोधः, यतः- "धातोः कर्मणः समानकर्तृकादिच्छायां वा" इतिसन्विधायकसूत्रं

---

जनादेर्विशेषणत्वासंभवान्नोक्तस्थले 'अयं चिकीर्षति बुभुक्षते' इत्युक्तप्रयोगापत्तिरस्तीत्यर्थः । ननूक्तातिप्रसङ्गवारणायापि न धात्वर्थकृतिभोजनादीनां सन्नर्थेच्छायां विशेष्यतासमानकर्तृकत्वैतदुभयसंबन्धेन विशेषणत्वं स्वीकार्यं किं तु केवलविशेष्यतासंबन्धेनैव, इच्छासमानकर्तृकत्वस्य तु सन्प्रत्ययवाच्यत्वमेव स्वीकार्यं तादृशस्य सन्वाच्यस्येच्छासमानकर्तृकत्वस्य च क्रियायाम्=धात्वर्थकृतिभोजनादावन्वयः कर्तव्य इति कृत्यादीनां यत्रेच्छासमानकर्तृकत्वं स्यात् तत्रैव सन् भविष्यति. उक्तस्थले तु कृत्यादिकर्तृत्वं चैत्रे इच्छाकर्तृत्वं च मैत्रे इति कृत्यादीनामिच्छासमानकर्तृकत्वाभावादुक्तस्थले 'अयं ( मैत्रः ) चिकीर्षति' इत्यादिप्रयोगापत्तिर्नास्तीत्याशङ्क्याह- उक्तातिप्रसङ्गेति । परिहारहेतुमाह- इच्छान्तरेति, यद्यप्युक्तस्थले चैत्रकर्तृककृतिभोजनादिविषया या मैत्रनिष्ठेच्छा तादृशेच्छासमानकर्तृकत्वं चैत्रकर्तृककृतिभोजनादौ नास्ति- इच्छायां मैत्रकर्तृकत्वस्य कृतिभोजनादौ च चैत्रकर्तृकत्वस्य सत्त्वात् तथापि चैत्रनिष्ठं यदिच्छान्तरं दर्शनादिविषयकेच्छा तादृशेच्छासमानकर्तृकत्वं तु चैत्रकर्तृककृतिभोजनादावस्त्येवेत्युक्तस्थले कृतिभोजनादाविच्छासमानकर्तृकत्वस्य प्राप्त्या 'अयं चिकीर्षति' इतिप्रयोगापत्तिरूपोऽतिप्रसङ्गस्तदवस्थ एव स्यादित्यर्थः । ननु कृतिभोजनादौ धात्वर्थेऽन्वीयमानं यदिच्छासमानकर्तृकत्वं तत्रेच्छापदेनेच्छान्तरं न ग्राह्यं किं तु धात्वर्थीभूतकृतिभोजनादिविषयकैवेच्छा ग्राह्या तथा च तादृशेच्छाग्रहणार्थमिच्छापदस्थाने स्वपदं निवेश्य स्व ( इच्छा ) समानकर्तृकत्वस्य सन्प्रत्ययवाच्यत्वं कृतिभोजनादावन्वयं च वक्ष्यामस्तथा च नेच्छान्तरमादायोक्तातिप्रसङ्गः- स्वपदेन तदिच्छाव्यक्तिमात्रग्रहणाद् उक्तस्थले कृतिभोजनादिविषयकेच्छाकर्तृत्वं चैत्रे नास्ति कृतिभोजनादिकर्तृत्वं च चैत्रे एवेति न 'अयं चिकीर्षति' इतिप्रयोगापत्तिरपीत्याशङ्क्याह- स्वसमानेति, एवं हि तत्तदिच्छाव्यक्तिबोधकस्वपदबोध्यस्वपदार्थस्य तत्तदिच्छारूपस्यानुगमाऽसंभवाद् व्युत्पत्त्यनुपपत्तिः= सन्प्रत्ययस्य शक्तिग्रह एव न संभवति, तस्मात् समानकर्तृकत्वमप्युक्तरीत्या संबन्धकोटावेव निवेशनीयं न तु सन्प्रत्ययवाच्यकोटौ तथा चोक्तरीत्या न कोपि दोष इत्यर्थः ।

ननु यदि समानकर्तृकत्वमुक्तरीत्या संबन्धकोटौ निवेश्यते तदा शक्तिग्राहकानुशासनविरोधः= सन्विधायकसूत्रेणैव सन्प्रत्ययार्थो निरूप्यते इति तस्यैव शक्तिग्राहकत्वात् तद्विरोधः स्यात्- तेन सूत्रेण समानकर्तृकाद्धातोरिच्छायां सन् विधीयते इति समानकर्तृकत्वस्यापि सन्वाच्यत्वमेव युक्तमित्याशङ्क्याह- न चेति । परिहारमाह- यत इति, "धातोः कर्मणः" इति सन्वि-

सनः समानकर्तृकत्वार्थकतां न प्रतिपादयति तस्य हि– ' इच्छाकर्मत्वेन तत्समानकर्तृकत्वेन च स्वार्थपराद्धातोरिच्छारूपार्थे सन् भवति ' इत्येवार्थः । इच्छाधात्वर्थयोः संसर्गतया समानकर्तृकत्वविवक्षायामपि समानकर्तृकत्वोपरक्तार्थपरत्वं धातोर्निर्वहतीति इच्छामात्रे शक्तिग्राहकं तत्सूत्रमिति ।

सुबन्तोत्तरेच्छार्थविहितक्यच्काम्यजन्तस्य धातोरिच्छार्थकतया सन्प्रत्ययान्ताऽविशेषेपि सन्नन्तधातुवन्न सकर्मकता– तदन्तर्गतप्रातिपदिकस्यैवेच्छाकर्म-

---

धायकं सूत्रम् " समानकर्तृकात् " इति पदेन सन्प्रत्ययस्य समानकर्तृकत्ववाचकतां न प्रतिपादयतीत्यर्थः । सन्विधायकोक्तसूत्रस्य स्वयमर्थमाह– तस्येति, ' इच्छाकर्मत्वेन तत्समानकर्तृकत्वेन' इति च प्रकारत्वं तृतीयार्थस्तथा च ' इच्छाकर्मत्वप्रकारक इच्छासमानकर्तृकत्वप्रकारकश्च यः स्वार्थस्तादृशस्वार्थपराद्धातोरिच्छारूपार्थे सन् भवति ' इत्येव सूत्रार्थः— यस्य कृतिभोजनादिरूपधात्वर्थस्येच्छाकर्मत्वमपि स्यादिच्छासमानकर्तृकत्वमपि स्यात् तादृशधात्वर्थबोधकधातोः सन् भवतीति यावत्, तदुक्तं वृत्तिकारेण– " इषिकर्मण इषिणैककर्तृकाद्धातोः सन् प्रत्ययो वा स्यादिच्छायाम् " इतीच्छामात्रवाचकत्वं प्राप्तम् । ' चैत्रश्चिकीर्षति ' इत्यत्र च धात्वर्थकृतेरिच्छाकर्मत्वमिच्छासमानकर्तृकत्वं चास्तीति सन्प्रत्ययो जातः, इति न समानकर्तृकत्वस्य सन्वाच्यत्वम्, धात्वर्थविशेषणस्य च समानकर्तृकत्वस्य कथं हि सन्वाच्यत्वं स्यात् तस्य ( सनः ) इच्छावाचकत्वात् समानकर्तृकत्वस्येच्छाविशेषणत्वाभावाच्चेति भावः । ननु यदीच्छायां धात्वर्थस्य समानकर्तृकत्वसंबन्धेनान्वयो भवति तदा समानकर्तृकत्वस्य संसर्गत्वमेव प्राप्तं न तु धात्वर्थविशेषणत्वं तथा च सन्प्रकृतिभूतधातोः समानकर्तृकत्वविशिष्टस्वार्थबोधकत्वं कथं स्यात् सूत्रोक्तमित्याशङ्क्याह– इच्छाधात्वर्थयोरिति, असंबद्धपदार्थस्य संसर्गत्वासंभवात् समानकर्तृकत्वस्य संसर्गतया विवक्षायामपि धात्वर्थविशेषणत्वं प्राप्तमेवेति न सूत्रोक्तस्य " समानकर्तृकात् " इति पदस्य विरोध इति तत्सूत्रम्=उक्तसन्विधायकसूत्रं सन इच्छामात्रे शक्तिग्राहकं न तु समानकर्तृकत्वेपीत्यर्थः ।

संप्रति नामधातुप्रकरणमारभते– सुबन्तोत्तरेति, ' आत्मनः पुत्रमिच्छति– पुत्रीयति पुत्रकाम्यति ' इत्यादौ सुबन्त ( द्वितीयान्त ) पुत्रपदोत्तरमिच्छार्थे " सुप आत्मनः क्यच् " " काम्यच्च " इतिसूत्राभ्यां क्यच्काम्यच्प्रत्ययौ भवतस्तादृशप्रत्ययान्तस्य " सनाद्यन्ता धातवः " इत्यनेन धातुसंज्ञा भवति तदनन्तरमाख्यातप्रत्ययो भवतीति ' पुत्रीयति पुत्रकाम्यति ' इत्यादयः प्रयोगा भवन्ति, तत्र क्यच्काम्यच्प्रत्यययोर्यद्यपीच्छार्थकत्वेन सन्प्रत्ययतुल्यत्वात् सकर्मकत्वं स्यात्तथापि तदन्तर्गतस्य=क्यच्काम्यजन्तान्तर्गतस्य पुत्रादिप्रातिपदिकस्यैव क्यजादिप्रत्ययार्थेच्छायाः कर्मपदार्थबोधकतया ( क्यजाद्यर्थेच्छां प्रति प्रकृत्यर्थभूतपुत्रादिपदार्थस्यैव कर्मत्वात् ) क्यजादिप्रत्ययान्तस्य कर्माकाङ्क्षाया अभावात् सन्नन्तधातुवत् सकर्मकत्वं न भवतीति ' आत्मानं पुत्रीयति ' इत्यादिः कर्मपदयुक्तः प्रयोगो न भवति । सन्नन्तस्थले तु

बोधकतयेच्छायाः कर्माकाङ्क्षाविरहात्। न च 'पुत्रीयति' 'पुत्रकाम्यति' इत्यादौ क्यजादिप्रकृत्यर्थपुत्रादेः क्रियात्वाभावेनाऽकर्मकत्वेपि 'आत्मनः पाकमिच्छति पाकीयति' इत्यादौ प्रकृत्यर्थपाकादेः सकर्मकतया सन्नन्तसमुदायवद् क्यजाद्यन्तपाकादिसमुदायस्य सकर्मकताया दुर्वारतया 'तण्डुलं पाकीयति' इत्यादिप्रयोगापत्तिरिति वाच्यम्, कृधातुसमानार्थकयतेरिव सन्नन्तसमानार्थकस्य क्यजन्तादेरपि कर्मताबोधकसुप्साकाङ्क्षत्वानुपगमेन तथाप्रयोगाप्रसङ्गात्। कृदन्तकर्मत्वविवक्षायां तु षष्ठ्या बाधाद् द्वितीयाया अप्रसक्तिः।

न च धात्ववयवकृद्योगे "कर्तृकर्मणोः कृति" इत्यस्य द्वितीयाबाधकत्वे 'कंसकर्मकवधमाचष्टे कंसं घातयति' इत्यत्र द्वितीया न स्यात् कंसस्याख्यानकर्मत्वायोगेन वधकर्मतयैव तदुत्तरं द्वितीयासमर्थनादिति वाच्यम्, कृदन्तोत्तरं

---

सन्प्रत्ययार्थेच्छां प्रति सन्प्रकृतिभूतधात्वर्थस्य कर्मत्वेन सनः कर्माकाङ्क्षाविरहेपि प्रकृतिभूतधातोः कर्माकाङ्क्षया 'पाकं चिकीर्षति' इत्येवं सकर्मकः प्रयोगोपि भवत्येवेत्यर्थः। ननु 'पुत्रीयति' इत्यादौ प्रकृतिभूतपुत्रपदस्य सकर्मकत्वाभावेनास्य कर्माकाङ्क्षाविरहादकर्मकत्वेपि 'आत्मनः पाकमिच्छति- पाकीयति' इत्यादौ पाकपदार्थस्य सकर्मकत्वेन यथा 'पाकं चिकीर्षति' इति सकर्मकप्रयोगो भवति तथेच्छार्थकक्यजादिप्रत्ययस्थलेपि 'तण्डुलं पाकीयति' इत्येवं सकर्मकः प्रयोगो कथं न स्यादित्याशङ्क्याह- न चेति। परिहारमाह- कृधातुसमानेति, यथा यद्यपि यतिधातुः कृधातुसमानार्थक एव तथापि कृञः सकर्मकत्वमस्ति यतेश्च सकर्मकत्वं नास्ति तथैव सन्नन्तसमानार्थकस्यापि क्यजन्तादेः प्रयोगस्य धातोर्वा कर्मताबोधकं यत् सुप्=सुबन्तं तण्डुलमित्याद्युक्तपदं तत्साकाङ्क्षत्वाभावादेव तथा प्रयोगस्य='तण्डुलं पाकीयति' इत्येवं सकर्मकप्रयोगस्य प्रसङ्गः=आपत्तिर्नास्तीत्यर्थः। कृदन्तं यत्पाकादिपदं तत्कर्मत्वविवक्षायामपि तण्डुलादिपदात् षष्ठ्येव संभवति "कर्तृकर्मणोः कृति" इत्यनुशासनान्न तु द्वितीया तथा च 'तण्डुलस्य पाकीयति' इतिप्रयोगसंभवेपि 'तण्डुलं पाकीयति' इति न संभवतीत्याह- कृदन्तेति।

ननु यदि "कर्तृकर्मणोः कृति" इत्यनेन द्वितीयाबाधः स्यात्तदा 'कंसं घातयति' इत्यत्र कंसस्य 'कंसवधमाचष्टे' इत्याख्यानकर्मत्वं तु नास्त्येव वधस्यैवाख्यानकर्मत्वादिति वधकर्मत्वमेव कंसस्य वक्तव्यं तादृशवधकर्मतयैव कंसपदाद् द्वितीयासमर्थनं च कर्तव्यं तत्र वधपदस्य कृदन्तत्वेन तत्कर्मवाचककंसपदात् षष्ठ्येव स्यान्न तु द्वितीयेति 'कंसं घातयति' इति प्रयोगो न स्यादित्याशङ्क्याह- न चेति। तदुत्तरम्=कंसपदोत्तरम्। आचष्टे इत्यस्याख्यानार्थकत्वं विज्ञेयम्। परिहारमाह- कृदन्तोत्तरमिति, 'कंसवधमाचष्टे- कंसं घातयति' इत्यादौ यत्र कृदन्तवधादिपदोत्तरं णिच्प्रत्ययो भवति तत्र "आख्यानात् कृतस्तदाचष्टे कृल्लुक् प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकम्" इत्यनुशासनेन चुरादिगणपठितेन कृदन्तका-

यत्राख्यानार्थे णिच् तत्र " प्रकृतिवच्च कारकम् " इत्यनेन कृदन्तकारकस्य ण्यन्तप्रकृतिप्रतिपाद्यक्रियाकारकतुल्यत्वातिदेशाद् 'राजानं गमयति' 'सूर्यमुद्गमयति' इत्यादौ ण्यन्तधातुयोगे यथा प्रकृत्यर्थक्रियाकर्तुः कर्मत्वं तथा कृदन्तोत्तरणिच्योगेपीति=आख्येयगत्युद्गत्यादिकर्तुः कर्मतया तदुत्तरं द्वितीयेति ण्यन्त्यधातुयोगे यथा प्रकृतेः कर्मणो द्वितीयान्तता तथा णिच्प्रत्ययान्तकृदन्तकर्मणोपीति लाभात् कृदन्तकर्मणः कंसादेर्द्वितीयोपपत्तिः । तथाविवक्षायाम् 'तण्डुलस्य पाकीयति' इतिप्रयोग इष्यते एव-कारकविभक्त्यर्थस्य वृत्त्येकदेशेनाप्यन्वयस्य व्युत्पन्नत्वात् । संबन्धविवक्षायां च न तथा प्रयोगः ।

वस्तुतः संबन्धविवक्षायामपि तथा प्रयोग इष्यत एव । न च तत्र वृत्त्येकदे·

---

रकस्य 'गमयति' इत्यादिण्यन्तप्रकृतिभूतधातुप्रतिपाद्या या गमनादिक्रिया तादृशक्रियाकारकतुल्यत्वमतिदिश्यते इति यथा 'राजानं गमयति' इत्यादौ ण्यन्तधातुयोगे प्रकृत्यर्थगमनक्रियाकर्तृ राजपदार्थस्य कर्मत्वं भवति तथा 'कंसवधमाचष्टे कंसं घातयति' इत्यादौ कृदन्तवधपदोत्तरणिच्योगेपि कृदन्तवधपदार्थकारकस्य कंसस्य कर्मत्वं संभवतीत्यर्थः । तथा च 'राजगतिमाचष्टे राजानं गमयति' 'सूर्योद्गतिं ( सूर्योदयम् ) आचष्टे— सूर्यमुद्गमयति' इत्यादावाख्येय ( व्याख्येय ) गत्यादिकर्तृ राजादिपदार्थस्य कर्मत्वेन तदुत्तरम्=राजादिपदोत्तरं द्वितीया भवतीति यथा ण्यन्तधातुयोगे प्रकृतिभूतगम्यादिकर्मणो द्वितीयान्तता भवति तथा णिच्प्रत्ययान्तकृदन्तवधादिकर्मणोपि द्वितीयान्तता भवतीत्युक्तानुशासनेन लाभादत्र कृदन्तवधकर्मभूतस्य कंसादेः=कंसार्थप्रतिपादककंसपदाद् द्वितीया युक्तैवेत्यर्थः । स्वोक्तवाक्यं स्वयं व्याचष्टे— आख्येयेत्यादिना । विषयश्चायं विस्पष्टप्रतिपत्त्यर्थं हन्तेर्वधादेशस्तस्य णिचि घातयतीतिरूपापत्तिश्चेत्यादिर्व्याकरणशास्त्रे द्रष्टव्यः । तथाविवक्षायाम्=तण्डुलस्य कृदन्तकर्मत्वविवक्षायां तु 'तण्डुलस्य पाकीयति' इति प्रयोगः " कर्तृकर्मणोः कृति " इत्यनुशासनेनेष्ट एवेत्याह— तथाविवक्षायामिति । उक्ते हेतुमाह— कारकेति, किं वा ननु 'तण्डुलस्य पाकीयति' इत्यत्र षष्ठ्यर्थस्य पदार्थस्य वृत्त्येकदेशेन=' पाकीयति ' इत्याकारकनामधातुवृत्तेरेकदेशेन पाकेनैवान्वयः कर्तव्यः स च न संभवति " पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेन " इति नियमादित्याशङ्क्याह— कारकेति, 'तण्डुलस्य पाकीयति' इत्यत्र तण्डुलपदोत्तरषष्ठ्याः कर्मत्वार्थकत्वेन कारकविभक्तित्वापत्त्या तादृशकारकविभक्तिभूतषष्ठ्यर्थस्य कर्मत्वस्य वृत्त्येकदेशेनापि पाकादिनाऽन्वयो भवत्येवेति 'तण्डुलस्य पाकीयति' इतिप्रयोगस्य नानुपपत्तिरित्यर्थः । संबन्धार्थकषष्ठ्यर्थभूतसंबन्धपदार्थस्य तु वृत्त्येकदेशेनान्वयो न भवतीति षष्ठ्या संबन्धविवक्षायां तथा=' तण्डुलस्य पाकीयति ' इति प्रयोगो न भवतीत्याह—संबन्धविवक्षायां चेति, तादृशसंबन्धषष्ठ्याः कारकविभक्तित्वाभावात् तदर्थस्योक्तरीत्या वृत्त्येकदेशपाकेन्वयासंभवादित्यर्थः ।

स्वमतमाह—वस्तुत इति, षष्ठ्यर्थभूतसंबन्धस्यापि विवक्षायां तथा=' तण्डुलस्य पाकीयति ' इति प्रयोग इष्ट एव—षष्ठ्यर्थकर्मत्वविवक्षायां स्यात् षष्ठ्यर्थसंबन्धविवक्षायां च न स्यादित्यत्र

शेन षष्ठ्यर्थान्वये " प्रतियोगिपदादन्यद् यदन्यत् कारकादपि " इतिव्युत्पत्ति-विरोध इतिवाच्यम्, तादृशव्युत्पत्तेरभेदान्वयस्थले एव स्वीकारात्, वृत्त्येकदेशेन भेदान्वये बाधकाभावात्। अत एव ' ऋद्धस्य राजमातङ्गाः ' इत्यादिप्रयोगो नेष्यते, इष्यते च ' पितुः स्वर्गकामः ' इत्यादिप्रयोगः। न च कारकपदप्रतियोगिपदयोर्भेदनिवेशनमऽफलमिति वाच्यम्, तन्निवेशस्य दृष्टान्तविधयोक्तत्त्वात्– यथा प्रतियोगिपदार्थस्य कुत्राप्यभेदान्वयो न भवति तथा वृत्त्येकदेशेनाऽन्यपदार्थस्येत्यर्थे तात्पर्यादिति ध्येयम्।

अभेदविवक्षायाम्–' पण्डितं पुत्रीयति ' ' प्रवीरं पुत्रकाम्यति ' इत्यादिप्रयोगाभाववत् परपुत्रादिगोचरेच्छावति पुंसि ' पुत्रीयति ' इत्यादयो न प्रयोगाः–

मानाभावादित्यर्थः। ननु तत्र=षष्ठ्यर्थसंबन्धविवक्षायां वृत्त्येकदेशेन पाकेन षष्ठ्यर्थसंबन्धस्यान्वये " प्रतियोगिपदादन्यत् " इतिनियमविरोधः स्यादित्याशङ्क्याह–न चेति। प्रतियोगिपदाविति–कारकस्यैव वृत्त्येकदेशेनान्वयः संभवति यथा ' तण्डुलस्य पाकीयति ' इत्यत्र षष्ठ्या कर्मत्वदिवक्षायां कर्मकारकस्य तण्डुलस्य वृत्त्येकदेशेन पाकेन, कारकादन्यस्य तु वृत्त्येकदेशेनान्वयो न संभवतीत्यत्र षष्ठ्या संबन्धविवक्षायां तण्डुलस्य कारकत्वाभावात्तदन्वयो वृत्त्येकदेशे पाके न संभवतीत्यर्थः। परिहारमाह–तादृशेति, " प्रतियोगिपदादन्यत् " इत्यस्य कारकपदार्थादन्यस्य वृत्त्येकदेशेनाऽभेदान्वयो न भवतीत्ययमेवार्थ इति कारकादन्यस्यापि वृत्त्येकदेशेन भेदान्वये बाधकाभावादत्र कारकादन्यस्यापि तण्डुलस्य भेदेन=स्वकर्मकत्वरूपभेदसंबन्धेन वृत्त्येकदेशे पाकेऽन्वये न कोपि दोष इत्यर्थः। उक्ते विनिगमनामाह–अत एवेति, यतः कारकादन्यस्य वृत्त्येकदेशेनाभेदान्वयो न भवतीत्ययमेवोक्तव्युत्पत्तेरभिप्रायोऽत एव ' ऋद्धस्य राजमातङ्गाः ' इत्यत्र कारकादन्यस्य ऋद्धस्य समासवृत्त्येकदेशेन राज्ञाऽभेदाऽन्वयो न भवतीति ' ऋद्धस्य राजमातङ्गाः ' इति प्रयोगोपि न भवति, भेदान्वये तु विरोधो नास्तीति ' पितुः स्वर्गकामः ' इति प्रयोगो भवति–अत्र कारकादन्यस्यापि पितृपदार्थस्य समासवृत्त्येकदेशेन स्वर्गेण भेदान्वयस्यैवेष्टत्वादित्यर्थः। ननु " प्रतियोगिपदात् " इत्यत्र प्रतियोगिपदकारकपदयोर्भेदेन निवेशनम्=प्रतियोगिपदकथनं व्यर्थमेव कारकपदेनैव तदर्थलाभात् कारकस्यैव प्रतियोगित्वादित्याशङ्क्याह–न चेति। परिहारमाह–तन्निवेशस्येति, तन्निवेशस्य=प्रतियोगिपदनिवेशस्य दृष्टान्तविधया सार्थकत्वादित्यर्थस्तथा चोक्तव्युत्पत्तेः–' यथा प्रतियोगिपदार्थस्य कुत्राप्यभेदान्वयो न भवति यथा–' चन्द्रवन्मुखम् ' इत्यादौ सादृश्यप्रतियोगिनः चन्द्रस्य सादृश्ये भेदान्वय एव भवति न त्वऽभेदान्वयस्तथाऽन्यपदार्थस्य=कारकादन्यपदार्थस्य वृत्त्येकदेशेनाऽभेदान्वयो न भवति ' इत्ययमेवार्थ इति षष्ठ्याः संबन्धार्थकत्वविवक्षायामपि कारकादन्यस्यापि तण्डुलस्य वृत्त्येकदेशेन पाकेन भेदान्वये विरोधाभावात् ' तण्डुलस्य पाकीयति ' इति प्रयोगो भवत्येवेत्यर्थः।

यथा ह्यऽभेदविवक्षायामपि ' पण्डितं पुत्रीयति ' इत्यादिप्रयोगो न भवति तथा परपुत्रविषयकेच्छायां सत्यामपि ' पुत्रीयति ' इत्यादि प्रयोगो न भवतीत्याह–अभेदेति। अत्र प्रमाण-

" सुप आत्मनः क्यच् " इत्यादिना इच्छाकर्तृसंबन्धि यदिच्छाकर्म तद्बोधकसुबन्तात् क्यच्काम्यचोर्विधानात् । संबन्धित्वं च संबन्धित्वेन भातत्वम्, अन्यथा यस्येच्छाकर्तुः पुत्रोऽसिद्धस्तस्यापि स्वीयत्वेन पुत्रेच्छादशायाम् ' पुत्रीयत्ययम् ' इत्यादिप्रयोगस्य सर्वसिद्धस्यानुपपत्तेः ।

उक्तस्थले ' पुत्रीयति ' इत्यादिवाक्यस्य प्रामाण्यवारणाय च क्यजाद्यर्थेच्छायां पुत्रादेर्विषयित्वमात्रं न संबन्धः किं तु स्वांशे भासमानसंबन्धस्य प्रतियोगितया यो विषयस्तादृशपुरुषवृत्तित्वसहितमित्युपेयम् । स्वसंबन्धस्य क्यजाद्यऽवाच्यत्वेऽप्युक्तसंबन्धेनैवेच्छायां सुबन्तार्थस्यान्वय इति व्युत्पत्तिप्रदर्श-

---

माह-सुप इति, इच्छाकर्तृसंबन्धिपदार्थ एव यदेच्छाकर्म भवति तदैवेच्छार्थे " सुप आत्मनः क्यच् " इत्यादिना क्यच्काम्यचोर्विधानादित्यर्थः । स्वकीयपुत्रादिविषयकेच्छायामेव सत्यां क्यजादिप्रत्ययो भवतीति यावत् । तदुक्तं वृत्तिकारेण-" इषिकर्मण इषितृसंबन्धिनः सुबन्तादिच्छायामर्थे क्यच् प्रत्ययो वा स्यात् " इति । कर्तृसंबन्धित्वं च कर्तृसंबन्धित्वेन भासमानत्वमेव ग्राह्यमऽन्यथा पुत्राभावे पुत्रे पुत्रेच्छाकर्तृसंबन्धित्वस्याऽसंभवात् पुत्रेच्छायां सत्यामपि ' पुत्रीयति ' इति प्रयोगो न स्यात्, वस्तुतः पुत्रे सत्यपीच्छाविषयीभूतपुत्रस्याऽसत्त्वात् ' पुत्रीयति ' इति प्रयोगो न स्यादित्याह-संबन्धित्वं चेति ।' ऋद्धस्य राजमातङ्गाः ' इत्यत्रेव ' पुत्रीयति ' इत्यत्र नामधातुवृत्त्येकदेशेन पुत्रपदार्थेन पण्डितादिपदार्थस्याभेदान्वयो न संभवतीति ' पण्डितं पुत्रीयति ' ' प्रवीरं पुत्रकाम्यति ' इत्यादयः प्रयोगा न भवन्तीत्यनुसंधेयम् ।

उक्तस्थले इति-उक्तस्थले=परपुत्रादिगोचरेच्छावति पुंसि ' पुत्रीयति ' इति प्रयोगो न भवतीति तादृशदशायाम् ' पुत्रीयति ' इत्यादिवाक्यस्य प्रामाण्यवारणाय क्यजादिप्रत्ययार्थेच्छायां पुत्रादेर्विषयित्वमात्रं न संबन्धः=विषयित्वमात्रसंबन्धेन नान्वयो भवति अन्यथा चैत्रसमवेतमैत्रपुत्रविषयकेच्छायामपि मैत्रपुत्रस्य विषयित्वसंबन्धेनान्वयसंभवाद् मैत्रपुत्रविषयकेच्छावत्यपि चैत्रे ' पुत्रीयति ' इति प्रयोगः स्यादेव, तस्मात् स्वांशे=पुत्रे भासमानो य इच्छाकर्तृपितुः स्वत्वसंबन्धस्तादृशसंबन्धस्य प्रतियोगितया य इच्छाकर्तृरूपपितृरूपो विषयश्चैत्रादिस्तादृशचैत्रादिरूपपितृपुरुषवृत्तित्वसहितविषयित्वसंबन्धेनैव क्यजाद्यर्थेच्छायां पुत्रादेरन्वयो भवति तथा च परपुत्रविषयकेच्छास्थले इच्छायामुक्तपितृरूपपुरुषवृत्तित्वं नास्तीति तादृशसंबन्धेनेच्छायां पुत्रान्वयासंभवात् ' पुत्रीयति ' इति प्रयोगापत्तिर्नास्तीत्यर्थः । उक्ते प्रमाणमाह-स्वसंबन्धस्येति, स्वम्=पुत्रः । क्यजादेरिच्छामात्रवाचकत्वेन उक्तस्येच्छानुयोगिकपुत्रसंबन्धस्य क्यजाद्यऽवाच्यत्वेऽप्युक्तेनैवोभयसंबन्धेन क्यजादिवाच्येच्छायां सुबन्तार्थस्य=पुत्रस्यान्वयो भवतीति व्युत्पत्तेः=नियमस्य प्रदर्शनायैव " सुप आत्मनः क्यच् " इति सूत्रे " आत्मनः " इति षष्ठ्यन्तपदमुपात्तम्, "आत्मनः" इत्यनेन स्वकीयपुत्रादिविषयकेच्छायामेव सत्यां क्यच् भवतीतिसूत्रार्थात् तादृशेच्छा-

नायैव सूत्रे " आत्मनः " इत्युपात्तम् । " आत्मनः " इति षष्ठ्यर्थसंबन्धश्च न " धातोः कर्मणः " इत्यादिसूत्रानुवृत्तायामिच्छायामन्वेति—अव्यावर्तकत्वादुक्तार्थलाभाऽप्रयोजकत्वात्, अपि तु सुप इत्यर्थे सुबन्तादित्यत्र । तच्चेच्छाकर्तृसंबन्धितयेच्छाविषयार्थकम् । एवं च "इच्छाकर्मणः सुबन्तादिच्छाकर्तुरिच्छायाम्" इति वृत्तावपि ' इच्छाकर्तुः सुबन्तात् ' इत्येव योजना कार्या— यथाश्रुते दर्शितानुपपत्तेरिति ध्येयम् ।

' भृत्यं पुत्रीयति ' इत्यादावाऽऽचारार्थविहितक्यजन्तस्य सकर्मकत्वं युज्यते

याः पितृवृत्तित्वमुक्तं प्राप्तमेव, पुत्रनिरूपितविषयित्वमपीच्छायामस्त्येवेत्यर्थः । ननु "आत्मनः" इत्यनेनोक्तसंबन्धनियमे लब्धेपि षष्ठ्यर्थसंबन्धस्य किमिच्छायामेवान्वयो भवत्यन्यत्र वेत्याह—आत्मन इति, अस्य षष्ठ्यर्थसंबन्धस्येच्छायामन्वयो न भवति—इच्छायामन्वये ह्यात्मविषयकेच्छायां क्यच् स्यादिति सूत्रार्थः स्यात् तत्र विनिगमनाविरहाद् यावदात्मविषयकेच्छायां क्यच् स्यादिति कस्या अपीच्छाया व्यावृत्तिर्न स्यादित्याह—अव्यावर्तकत्वादिति, तथोक्तषष्ठ्यर्थसंबन्धस्येच्छायामन्वय उक्तसूत्रार्थलाभस्य प्रयोजकोपि न भवतीत्याह—उक्तार्थेति । तस्मात् "आत्मनः" इति षष्ठ्यर्थसंबन्धस्य सूत्रोक्तस्य " सुपः " इत्यस्य योर्थः सुबन्तादिति तस्मिन्नन्वयो भवति पुत्रादिपदार्थेऽन्वयो भवतीति यावदित्याह—अपि त्विति । तच्चोक्तसुबन्तं पुत्रादिपदमिच्छाकर्तृसंबन्धितया य इच्छाविषयः पुत्रादिस्तदर्थकम्=तद्बोधकमेवेति परपुत्रादिविषयकेच्छायां क्यजादिर्न भवतीति प्राप्तमित्याह—तच्चेति । स चेति प्रामादिकः पाठः । " सुप आत्मनः क्यच् " इति सूत्रस्य या खलु केनचित् " इच्छाकर्मणः सुबन्तादिच्छाकर्तुरिच्छायां क्यच् " इत्येवं वृत्तिर्विनिर्मित तत्रापि ' इच्छाकर्तुः ' इतिषष्ठ्यर्थसंबन्धस्य सुबन्ते पुत्रपदार्थेऽन्वयलाभार्थम् ' इच्छाकर्तुः सुबन्तादिच्छाकर्मणः क्यच् स्यादिच्छायाम् ' इत्येवं योजना=अन्वयः कर्तव्यः, अन्यथा यथाश्रुते=" इच्छाकर्मणः सुबन्तादिच्छाकर्तुरिच्छायां क्यच् " इत्येवं यथाश्रुतान्वये स्वीकृते तु चैत्रपुत्रस्यापि मैत्रसमवेतेच्छाविषयत्वसंभवात् मैत्रस्य च चैत्रपुत्रविषयकेच्छाकर्तृत्वसंभवाद् परपुत्रविषयकेच्छायामपि क्यच् स्यादिति स्वपुत्रविषयकेच्छायामेव क्यजादिप्रत्ययो भवति नान्यपुत्रविषयकेच्छायामपीति प्रदर्शितस्य नियमस्यानुपपत्तिः स्यादेवेत्याह—एवं चेति । उक्तवृत्तिग्रन्थस्य ' इच्छाकर्तुः सुबन्तादिच्छाकर्मणः क्यच् स्यादिच्छायाम् ' इत्येवमन्वये तु सुबन्तपुत्रादिपदार्थस्य इच्छाकर्तृस्वत्ववत्त्वमिच्छाकर्मत्वं च प्राप्नोतीति स्वपुत्रविषयकेच्छायामेव क्यजादेः प्राप्तिः संभवति न तु परपुत्रविषयकेच्छायामपि—परपुत्रे पुत्रत्वेनेच्छाकर्तृस्वत्वासंभवादिति भावः ।

" उपमानादाचारे " इतिसूत्रसंपन्नप्रयोगमुदाहरति—भृत्यं पुत्रीयतीति, पुत्रवदाचरतीत्यर्थ उक्तेच्छार्थकक्यच उक्तरीत्याऽकर्मकत्वेप्याऽऽचारार्थकक्यचः सकर्मकत्वमेव—उपमानवाचकपदात् क्यचि जाते उपमेयस्यैव भृत्यादेः कर्मत्वसंभवात्—पुत्रमिव कमाचरतीति कर्माकाङ्क्षाया नि

एव, तथा हि— तमिवाचरतीत्यर्थे उपमानवाचिनः क्यच् विहितः, ' तमिवाचरति ' इत्यस्य ' तत्तुल्यं जानाति ' इत्यर्थः— आचारपदस्य व्यवहारमूलज्ञानपरत्वात् । तुल्यतया ज्ञानं च क्यजर्थस्तच्च सकर्मकमेव, तत्र तुल्यत्वे प्रतियोगितया पुत्रादेरन्वयः । पुत्रादिपदमेव वा गौण्या पुत्रादितुल्यपरम्. ज्ञानमात्रं क्यजर्थस्तत्र च स्वाभेदावगाहित्वसंबन्धेन पुत्रादितुल्यस्याऽन्वयः ।

न चैवं पुत्रादिपदमुपमेयार्थकमेव नतूपमानार्थकमिति कथम् " उपमानादाचारे " इत्यनेन तदुत्तरं क्यचो विधानं संगच्छते इति वाच्यम्, पुत्रादिपदस्य तुल्यार्थकत्वेपि तुल्यत्वप्रतियोगितयोपमानपुत्राद्यर्थकत्वात्, अत एव तस्य कर्मवाचकत्वं पुत्रादितुल्यस्याचारकर्मत्वात् सम्यगुपपद्यते । पूर्वमते उपमानपदस्य कर्मवाचकत्वमाऽऽचारकर्मविशेषणतुल्यताप्रतियोगिबोधकत्वरूपं बोध्यम् ।

---

सत्त्वादित्याह—आचारार्थेति । सकर्मकत्वं स्वयमेव प्रतिपादयति—तथा हीति । उपमानवाचिनः= उपमानवाचकपुत्रादिपदात् ( उपमानत्वेनाभीष्टो यः पुत्रादिस्तद्वाचकपुत्रादिपदात् ) । आचारपदस्य व्यवहारकारणीभूतज्ञाने लक्षणा । तच्च=ज्ञानं च । क्यजर्थज्ञानस्य सकर्मकत्वात् क्यजन्तस्यापि सकर्मकत्वं प्राप्तम् । तत्र='भृत्यं पुत्रीयति=पुत्रतुल्यं जानाति ' इत्यत्र तुल्यत्वे=सादृश्ये प्रतियोगितया पुत्रादेरन्वयः । पक्षान्तरमाह—पुत्रादिपदमेवेति । तत्र=क्यजर्थज्ञाने । स्वम्=पुत्रतुल्यपदार्थः । स्वे पुत्रतुल्यपदार्थ भृत्यादौ यः पुत्राभेदस्तदवगाहित्वमत्र क्यजर्थज्ञाने वर्तत एवेति तेन संबन्धेन क्यजर्थज्ञाने पुत्रतुल्यस्य ( पुत्रतुल्यपदार्थस्य ) अन्वय इति पुत्रतुल्यज्ञानस्य ( पुत्रतुल्यत्वविषयकज्ञानस्य ) लाभः । स्वस्मिन्नऽभेदः स्वाभेद इति सप्तमीसमासः, षष्ठीसमासे तु पुत्रतुल्यभृत्यादिपदार्थाभेदः पुत्रे एव भासेत न चैतद् युक्तं प्रतिभाति—भृत्यादावेव पुत्राभेदभानस्य युक्तत्वादित्यनुसंधेयम् । किं वा स्वपदं पुत्रपरं ज्ञेयम् ।

ननु यत्तुल्यं भवति तदुपमेयमेव भवति न तूपमानमिति पुत्रपदस्य पुत्रतुल्यार्थकत्वे. पुत्रस्योपमेयत्वमेव स्यादिति पुत्रपदात् कथं क्यच् स्यात् सूत्रेणोपमानवाचकपदादेव क्यज्विधानादित्याशङ्क्याह—न चेति । तदुत्तरम्=पुत्रपदोत्तरम् । परिहारमाह—पुत्रादिपदस्येति, तुल्यार्थकत्वेपि= पुत्रादितुल्यार्थकत्वेपि, सादृश्यप्रतियोगिन उपमानत्वनियमादत्रापि पुत्रस्य तुल्यत्वप्रतियोगित्वेन पुत्रपदस्योपमानभूतपुत्रार्थकत्वमक्षतमेवेति तदुत्तरं क्यच्प्राप्तौ न काचिदनुपपत्तिरित्यर्थः । अत एव=पुत्रपदस्योपमानवाचकत्वादेव, उपमानविषयकव्यवहारे उपमानस्यैव कर्मत्वात् ' पुत्रमिवाचरति ' इत्यत्र च पुत्रतुल्यस्यैवाचारकर्मत्वात् तस्य=पुत्रतुल्यार्थकपुत्रशब्दस्य कर्मवाचकत्वमुपपद्यते. अन्यथा पुत्रतुल्यस्याचारकर्मत्वेनाऽतदर्थकस्य ( पुत्रतुल्यार्थकत्वरहितस्य ) पुत्रशब्दस्य कर्मवाचकत्वं न स्यादित्याह—अत एवेति । ननु पूर्वमते=' तुल्यताज्ञानं क्यजर्थः ' इतिमते पुत्रतुल्यताज्ञानकर्मत्वं भृत्यादेरेव संभवति न तु पुत्रस्येति पुत्रशब्दस्य कथं कर्मवाचकत्वं स्यात् ? कर्मवाचकत्वाभावे च पुत्रपदात् कथं क्यच् स्यात्—उक्तसूत्रेण " उपमानात्

वस्तुतः 'पुत्रमिवाचरति' इत्यस्य पुत्रं यथा व्यवहरति तथा व्यवहरतीत्ये-वार्थः, व्यवहारश्च प्रतिपाल्यत्वादिना ज्ञान प्रतिपालनादिरूपो व्यापारो वा, एवं च 'पुत्रीयति' इत्यस्य पुत्रकर्मकव्यवहारतुल्यव्यवहारकर्तेत्यर्थः। मुखचन्द्रादे-र्यथा स्वजन्याह्लादस्य तुल्यतयोपमानोपमेयभावस्तथा पुत्रभृत्ययोरपि स्वकर्मक-व्यवहारतुल्यतया स इति पुत्रपदस्योपमानवाचिता आचारनिष्ठसादृश्यप्रतियो-ग्याचारकर्मवाचिता च। आचारसदृशाचार एव क्यचोऽर्थः, प्रथमाचारे कर्मता-संबन्धन पुत्रादेरन्वयः-अमाद्यन्तात् क्यच्प्रत्ययविधानेऽपि धात्ववयवतया लुप्तस्या-ऽमादेर्नियमेनानुपस्थितेः कर्मत्वस्य संबन्धतया भानमुपेयते, यथा 'राजपुरुषः'

---

कर्मगः सुबन्तादाचारेऽर्थे क्यच् स्यात् (वृत्तिः)" इत्येवं कर्मवाचकपदादेव क्यचो विधाना-दित्याशङ्क्य पुत्रपदस्य प्रथममते कर्मवाचकत्वमुपपादयति-पूर्वमते इति, 'पुत्रमिवाचरति पुत्री-यति' इत्यत्रोपमानपदस्य=पुत्रपदस्य यद् आचारकर्मवाचकत्वं तद् उपमेयभूतभृत्यादिविषय-काचारकर्मभूतं यद् भृत्यादि तद्विशेषणीभूता या तुल्यता (सादृश्यम्) तत्प्रतियोगिभूतो यः पुत्रादिस्तद्बोधकत्वरूपमेव बोध्यं न त्वाचारविषयबोधकत्वरूपम्-तदसंभवादित्यर्थः। अत्रा-चारपदेन तुल्यस्याचार एव ग्राह्य इति तादृशाचारे पुत्रस्य स्वकर्मकत्वसंबन्धेनान्वयासंभवेऽपि तादृ-शाचारैकदेशभूतायां तुल्यतायां तु स्वप्रतियोगिकत्वसंबन्धेनान्वयः संभवत्येवेति तावन्मात्रेणैवात्र पुत्रस्य कर्मत्वं पुत्रपदस्य च कर्मवाचकत्वं मन्तव्यमिति भावः।

स्वाभिप्रायमाह-वस्तुत इति, स्पष्टोयं ग्रन्थः। 'पुत्रीयति' इत्यस्य शाब्दबोधमाह-एवं चेति। पुत्रभृत्ययोरुपमानोपमेयभावं व्युत्पादयति-मुखेति। भृत्येन सह पुत्रविषयकव्यवहारसदृ-शव्यवहार इति स्वकर्मकव्यवहारतुल्यतया=पुत्रभृत्यकर्मकव्यवहारयोस्तुल्यतया पुत्रभृत्ययोरपि सः= उपमानोपमेयभावः सिद्धः। आचारनिष्ठेति-भृत्यकर्मकाचारनिष्ठं यत् सादृश्यं तत्प्रतियोगिभूतो यः पुत्रकर्मकाचारस्तत्कर्मवाचकत्वं पुत्रपदस्य प्राप्तम्। एवं परिनिष्पन्नं क्यजर्थमाह-आचारसदृ-शेति। प्रथमाचारे=पुत्रकर्मकाचारे। आचारनिरूपिता पुत्रनिष्ठापि कर्मता निरूपकत्वसंबन्धेना-चारे वर्तते तादृशकर्मतासंबन्धेन च पुत्रस्याचारेऽन्वयः। अमाद्यन्तादिति-'पुत्रमिवाचरति' इत्यत्र द्वितीयान्तपुत्रपदात् "उपमानादाचारे" इत्यनेन क्यच्प्रत्ययो जातस्तादृशक्यजन्तस्य द्वितीयान्तपुत्रपदस्य "सनाद्यन्ता धातवः" इत्यनेन धातुसंज्ञा जातेति द्वितीयाया धात्ववय-वतया "सुपो धातुप्रातिपदिकयोः" इत्यनेन लोपो जातो लुप्तायाश्च विभक्तेः समासादौ अनुप-स्थितेः=स्मरणाभावाद् द्वितीयार्थस्य कर्मत्वस्य प्रकारत्वासंभवेन संबन्धतया=संसर्गतया भानं स्वीक्रियते-अनुपस्थितस्यापि संसर्गत्वसंभवादिति कर्मतासंबन्धेन पुत्रस्य पुत्रविषयकाचारे-ऽन्वयः। अत्र लुप्तविभक्त्यनुसंधानाभावे दृष्टान्तमाह-यथेति। विभक्त्यन्तार्थविशिष्टे=राजसंबन्ध-विशिष्टे। पूर्वपदलक्षणा=राजपदस्य लक्षणा। यदि समासादावपि लुप्तविभक्तेः स्मरणं स्यात्तदा 'राजपुरुषः' इत्यत्र लुप्तषष्ठ्या अपि स्मरणं स्यात्तथा च स्मृतषष्ठ्यैव राजसंबन्धोपस्थितेः संभ-वाद् राजपदस्य राजसंबन्धविशिष्टे लक्षणाश्रयणं न स्यादेव, न च मा भवतु लक्षणाश्रयणं स्मृत-

इत्यादिसमासरूपप्रातिपदिकावयवतया लुप्तषष्ठ्यादिप्रतिसंधानाऽनियमाद् विभक्त्यन्तार्थविशिष्टे पूर्वपदलक्षणोपेयते । द्वितीये आचारे भृत्यस्य कर्मतया क्यजन्तस्य सकर्मकत्वमिति ।

'कुट्यां प्रासादयति' इत्यादावाऽऽधाररूपोपमानवाचिसप्तम्यन्तोत्तरविहितक्यजन्तस्य न सकर्मकता तत्र च प्रासादाधिकरणकाचारतुल्याचारः क्यजन्तार्थः स चावस्थानरूप एवेत्यकर्मक एवेति कुट्यास्तत्राधिकरणतया ततः सप्तम्येव । अवस्थानयोः साम्यं चैकजातीयसुखजनकत्वादिनाऽविशेषज्ञानविषयत्वेन वा ।

'हंस इवाचरति हंसायते- हंसति' इत्यादावुपमानवाचिकर्तृवाचकपदोत्तरविहितक्यङन्ताक्विबन्तधातुरप्यकर्मकः- तत्र हंसादिकर्तृकाचारतुल्याचारस्य गमनादिरूपस्य क्यङन्ताद्यर्थत्वेपि गम्यादिप्रतिपाद्यतावच्छेदकसंयोगादिरूपफ-

---

ष्ठ्या राजसंबन्धोपस्थितावपि दोषाभावादिति वाच्यम्, समासादौ लुप्तविभक्तिस्मरणस्वीकारे हि 'ऋद्धस्य राजमातङ्गाः' इत्यपि प्रयोगः स्यात्-स्मृतषष्ठीविशिष्टराजपदेन षष्ठ्यन्तऋद्धपदस्यान्वये बाधकाभावात्, न चैवं प्रयोगो भवतीति तन्निवारणार्थं समासादौ लुप्तविभक्तेः स्मरणाभावः स्वीकर्तव्यस्तथा च 'राजपुरुषः' इत्यत्र लुप्तषष्ठीस्मरणासंभवेन राजसंबन्धोपस्थितेरुपायाभावाद् राजपदस्य राजसंबन्धविशिष्टे ( राजसंबन्धिनि ) लक्षणा स्वीकार्या तथा च तयोरभेदान्वयेन राजसंबन्धविशिष्टाभिन्नः पुरुष इतिशाब्दबोधो जायते इति भावः । द्वितीये=भृत्यविषयके आचारे भृत्यस्य कर्मत्वमिति क्यजन्तस्य 'पुत्रीयति' इत्यस्य सकर्मकत्वं प्राप्तमिति 'भृत्यं पुत्रीयति' इति प्रयोगो भवतीत्यर्थः ।

"अधिकरणाच्चेति वक्तव्यम्" इति वार्तिकसंपन्नप्रयोगमुदाहरति-कुट्यामिति, 'कुट्यां प्रासादयति' इत्यत्र प्रासादस्याधिकरणरूपत्वेनैव प्रासादपदस्योपमानवाचकत्वं तादृशप्रासादपदाचाऽऽचारार्थे क्यच् जात इति कर्माकाङ्क्षाभावान्न सकर्मकत्वमित्यर्थः । अकर्मकत्वमुपपादयति-तत्रेति, तत्र='प्रासादयति' इत्यत्र । सः=आचारः । स्थितेरधिकरणसाकाङ्क्षत्वेन कर्माकाङ्क्षाभावात् स्थितिरूपाचारवाचकक्यचोप्यकर्मकत्वं प्राप्तमिति कुट्या अधिकरणत्वमेव । ततः=कुटीपदात् । कुट्यधिकरणकावस्थानस्य प्रासादाधिकरणकावस्थानस्य च परस्परं साम्यमाह- अवस्थानयोरिति । एतादृशसदृशावस्थानाधिकरणयोः कुटीप्रासादयोरुपमेयोपमानभावः सिद्ध इत्यर्थः ।

"कर्तुः क्यङ् सलोपश्च" इतिसूत्रसंपन्नप्रयोगमुदाहरति- हंसायते इति, अत्र क्यङन्तस्य हंसशब्दस्य "सनाद्यन्ता धातवः" इत्यनेन धातुत्वं प्राप्तस्य ङित्वात् "अनुदात्तङित आत्मनेपदम्" इत्यनेनात्मनेपदं प्राप्तम् । "सर्वप्रातिपदिकेभ्यः क्विब् वा वक्तव्यः" इतिवार्तिकसंपन्नप्रयोगं चोदाहरति- हंसतीति, हंसकर्तृकगमनादिरूपाचारसदृशाचारकर्तेत्यर्थः । अकर्मकत्वमुक्तमुपपादयति- तत्रेति, यद्यपि गमनम् 'ग्रामं गच्छति' इत्यादौ सकर्मकमेव तथाप्यत्र क्यङाद्यन्तार्थभूतस्य गमनादिरूपाचारस्य सकर्मकत्वं नास्त्येव, अत्र हेतुमाह- गम्यादीति, गम-

लानवच्छिन्नस्यैव तदर्थत्वोपगमात् । शब्दज्ञानादिरूपसविषयकव्यापारात्मव
स्याचारस्य क्वचित्तदर्थत्वेपि विषयरूपकर्माऽवरुद्धस्यैव तस्य तदर्थत्वोपगमात्
कर्मावरुद्धस्य च कर्मान्वयनिराकाङ्क्षत्वादित्यादिकं स्वयमूह्यम् ।

कृत्यर्थकधातुयोगे इष्टसाधनत्वादिज्ञानविशेष्यताप्रयोज्यसाध्यताख्यविषयता

धातुप्रतिपाद्यस्तु संयोगानुकूलव्यापार इति संयोगस्य प्रतिपाद्यतावच्छेदकत्वं प्राप्तं तादृशं गम्यादिप्रतिपाद्यता ( व्यापारता ) वच्छेदकीभूतं संयोगादिरूपं फलं तदनवच्छिन्नस्यैव=तत्र तस्यैव गमनादिरूपाचारस्य ( गत्याद्यनुकरणमात्रस्य ) तदर्थत्वोपगमात्=क्यङन्ताद्यर्थत्वोपग तस्याकर्मकत्वम्— फलावच्छिन्नव्यापारबोधकस्यैव धातोः सकर्मकत्वनियमादित्यर्थः । शब्द नेति— यत्र कोपि हंस इव शब्दं करोति तत्र 'हंसायते हंसति' इत्यादौ शब्दरूप एवाचा ग्राह्य इति तत्र शब्दरूपाचार एव क्यङन्ताद्यर्थो भवति शब्दस्य सविषयकत्वं च तादृशशब्द न्यज्ञानविषयविषयकत्वेन विज्ञेयं यथा घटशब्दजन्यज्ञाने घटो विषय इति घटशब्दस्यापि घटो विषय एव, यत्र पण्डितज्ञानमिव कोपि ज्ञानं करोति तत्र 'पण्डित इवाचरतीति पण्डित यते पण्डितति' इतिप्रयोगो भवति तत्र ज्ञानरूप एवाचारो ग्राह्यो ज्ञानस्य च सविषयकत्वं स्प मेव । शब्दज्ञानादयश्च व्यापारा यद्यपि सविषयकत्वेन सकर्मका एव संभवन्ति तथापि शब्दादि विषयरूपकर्मणाऽवरुद्धस्यैव=सहितस्यैव तस्य=शब्दज्ञानादिरूपव्यापारलक्षणाचारस्य तदर्थ त्वोपगमात्=क्यङन्ताद्यन्तार्थत्वोपगमात् शब्दादिविषयरूपकर्मण आचारकुक्षौ प्रवेशात् कर्माव रुद्धस्य च कर्माकाङ्क्षाया असंभवादकर्मकत्वं सिद्धम्, यथा— स्पर्धधातोः पराभवानुकूलेच्छार्थ कत्वात् फलभूतपराभवस्यापि धात्वर्थकुक्षौ प्रवेशादकर्मकत्वं भवति तथा प्रकृतेपि 'पण्डितायते 'विद्वायते विद्वस्यते' इत्यादौ पण्डितादिकर्तृकात्मादिविषयकज्ञानादिव्यापारस्य तथा पण्डिता दिकर्तृकस्य 'नित्यो जीवः' इत्याद्यात्मादिविषयकशब्दादिव्यापारस्य च क्यङ्ताद्यन्तार्थत्वाद् विषयरूपकर्मणश्च तादृशव्यापारे एव प्रवेशेन तस्य कर्माकाङ्क्षाया अभावादकर्मकत्वम्, 'गच्छ ति' इत्यादौ तु संयोगानुकूलव्यापारस्यैव धात्वर्थत्वेन ग्रामादिरूपकर्मणो धात्वर्थव्यापारे प्रवे शाभावात् तत्साकाङ्क्षत्वात् सकर्मकत्वमिति व्यतिरेकः । किं वा "शब्दज्ञानादि" इत्यत्र शब्द ज्ञानपदेन शब्दविषयकं ज्ञानं ग्राह्यम् 'पण्डितायते विद्वायते' इत्यादिस्थले पण्डितादितुल्याचा रकर्तुर्मैत्रादेः पण्डितोच्चारितशब्दसमुदायमात्रस्यैव ज्ञानं भवति न तु तदर्थस्यात्मादेः अत एव तादृशपण्डितत्वादिधर्मानाक्रान्तमेव मूर्खादिकमुद्दिश्य 'पण्डितायते' इत्यादि प्रयोगो भवति हंसातिरिक्तमेवोद्दिश्य च 'हंसायते' इत्यादि प्रयोगो भवति, शब्दविषयकज्ञानस्य तु सकर्मकत्वं स्पष्टमेव. अथाप्यत्र तादृशविषयरूपकर्मणः क्यङन्ताद्यन्तार्थव्यापारकुक्षौ प्रवेशात् तादृशव्याप रस्याकर्मकत्वम्. 'जानाति' इत्यादौ च व्यापारकुक्षौ विषयरूपकर्मणः प्रवेशाभावात् सकर्म कत्वमिति व्यतिरेक इति प्रतिभाति ।

'घटं करोति' इत्यादिप्रयोगमुदाहरति—कृत्यर्थकेति, 'घटं करोति' इत्यत्र घटो मदिष्ट साधनमित्याकारकेष्टसाधनत्वज्ञाननिरूपिता विशेष्यता घटेस्ति तादृशविशेष्यताप्रयोज्या साध्य-

विशेष एव कर्मत्वं द्वितीयादेरर्थः, न तु विषयतामात्रम्- यत्र ' घटं करोति ' इति प्रयुज्यते तत्र ' कपालं करोति ' ' जलाहरणं करोति ' इत्याद्यप्रयोगात् ।

अथैवम् ' काशान् कटं करोति ' ' काष्ठं भस्म करोति ' इत्यत्र काशकाष्ठादिपदोत्तरद्वितीयानुपपत्तिः- तत्र कृतिनिरूपितोक्तविषयताविरहादितिचेत् ?, उपादानीयविलक्षणविषयतापि द्वितीयार्थः, सा च द्वितीयान्तरोपस्थाप्यसाध्यीयविषयताविशिष्टायामेव कृतावऽन्वेति, अतः- कटादिरूपकर्मान्तराऽसमभिव्याहारे ' काशान् करोति ' इत्यादयो न प्रयोगाः ।

---

ताख्यविषयतापि घटे जायते साध्यताया इष्टसाधनताज्ञानप्रयुक्तत्वेनेष्टसाधनताज्ञाननिरूपितविशेष्यताप्रयोज्यत्वात्, तादृशसाध्यताख्यविषयतारूपं यत् कर्मत्वं तदेवात्र द्वितीयार्थः न तु विषयतामात्रम्=विषयतासामान्यम् । प्रतिषेधे हेतुमाह- यत्रेति, यदि विषयतासामान्यं द्वितीयार्थः स्यात्तदा घटो मदिष्टसाधनमित्याकारकेष्टसाधनताज्ञानकाले विषयतासामान्यं तु कपालेपि भवति कपालं विना घटोत्पत्तेरसंभवात् तथा जलाहरणेपि भवति जलाहरणार्थमेव घटापेक्षासत्त्वादिति 'घटं करोति' इति प्रयोगकाले 'कपालं करोति' 'जलाहरणं करोति' इत्यपि प्रयोगः स्यात्. न चैतदिष्टमिति. साध्यताख्यविषयतैव द्वितीयार्थस्तथा च घटो मदिष्टसाधनमितीष्टसाधनताज्ञानकाले साध्यता घटे एव प्रतीयते न कपालादाविति न 'कपालं करोति' इत्यादिप्रयोगापत्तिरित्यर्थः ।

ननु यदि कृत्यर्थकधातुयोगे साध्यताख्यविषयतैव द्वितीयार्थस्तदा ' काशान् कटं करोति ' इत्यादौ काशादेः सिद्धत्वेन तत्र=काशादौ साध्यताख्यविषयताया असंभवात् काशादिपदोत्तरं द्वितीया न स्यादित्याशङ्कते- अथैवमिति । उत्तरमाह- उपादानीयेति, उपादानताख्यविषयतापि द्वितीयार्थोस्तीति काशानां कटोपादानत्वेन तद्बोधकद्वितीयायाः प्राप्तौ न काचिदनुपपत्तिः, सा=उपादानताख्यविषयता च या द्वितीयान्तरोपस्थाप्या=कटादिपदोत्तरद्वितीयोपस्थाप्या साध्यीयविषयता=साध्यताख्यविषयता तद्विशिष्टायामेव कृतावन्वेति तथा च कटादिरूपकर्मान्तरस्याऽसमभिव्याहारे कृतौ साध्यताख्यविषयताया अन्वयाऽसंभवेनोपादानताख्यविषयताया अपि अन्वयासंभवात् ' काशान् करोति ' इति प्रयोगो न भवति काशानां सिद्धत्वात् । कृतौ विषयतोभयस्यैव निरूपकत्वसंबन्धेनान्वयो ज्ञेय इत्यर्थः ।

ननु यदि ' काशान् कटं करोति ' इत्यत्र काशानां कटोपादानत्वेन कारणत्वं काशपदोत्तरद्वितीयायाश्चोपादानताख्यविषयतार्थस्तदापि ' काष्ठं भस्म करोति ' इत्यादौ काष्ठादिपदोत्तरद्वितीयाया उपादानताख्यविषयतार्थकत्वं न स्यात् काष्ठादेश्च कर्मत्वमपि न स्यात्, उक्ते हेतुमाह- तस्येति, तस्य=काष्ठदुग्धादेः भस्मदध्यादिकं प्रत्युपादानत्वासंभवात्, उपादानत्वाभावे हेतुमाह- काष्ठेति, कार्यावस्थायामपि विद्यमानस्यैवोपादानत्वं भवति यथा काशानाम्. काशानां कार्यभूतकटावस्थायामपि विद्यमानत्वात्, काष्ठदुग्धादेस्तु कार्यभूतभस्मदध्याद्यवस्थायां सत्त्वं

अथैवमपि ' काष्ठं भस्म करोति ' ' दुग्धं दधि करोति ' इत्यादौ काष्ठदुग्धादेः कर्मत्वानुपपत्तिः- तस्य भस्मदध्याद्युपादानताविरहात्. काष्ठदुग्धादिनाशानन्तरमेव तदारम्भकपरमाणुभिर्भस्मदध्याद्यारम्भात्. उत्पत्त्याश्रयस्यैवोपादानत्वात्. विभिन्नकालीनयोश्चाधाराधेयभावविरहात्. कारणस्यैवोपादानत्वनियमाच्च । न च परिणामवादविद्वेषिणां नैयायिकानां काष्ठादेर्भस्मादिरूपद्रव्यान्तरकारणत्वम्. अपि तु प्रतिबन्धकत्वमेव-द्रव्यवति द्रव्यान्तरानुत्पत्तेरिति चेत् ?,

न-कर्म हि त्रिविधं भवति-प्राप्यं प्रकृतिविकृती च । तत्र प्राप्यं कर्म-क्रियाजन्यफलशालि गम्यादेर्ग्रामादि ज्ञानादेर्विषयश्च । क्रियानिष्पाद्यं यत् तद् विकृतिरूपं यथा-पाकादेरोदनादि यथा वा कृतेर्माल्यादि कटादि च । प्रथमे तण्डुलादिरूपपूर्वद्रव्यं विनाश्यौदनादेर्निर्वर्तनम्, द्वितीये पुष्पादिरूपपूर्वद्रव्यमविनाश्यैव संदर्भादिरूपविशेषनिष्पादनेन विशिष्टस्य माल्यादेर्निर्वर्तनम्, तृतीये च काशादिरूपपूर्वधर्मिणमविनाश्य तत्रैव कटादिरूपधर्मिनिष्पादनम्, ईदृशं च कर्म प्रकृतेरसमभिव्याहारस्थले निर्वर्त्यमुच्यते ।

---

न भवति प्रत्युत काष्ठदुग्धादिनाशानन्तरमेव तदारम्भकपरमाणुभिः= काष्ठदुग्धाद्यारम्भकपरमाणुभिर्भस्मदध्यादिकार्योत्पत्तिर्दृश्यते. उत्पत्त्याश्रयस्यैव चोपादानत्वं भवति विभिन्नकालयोश्चाधाराधेयभावो न संभवतीति विनष्टस्य काष्ठदुग्धादेर्भस्मदध्याद्युत्पत्त्याश्रयत्वासंभवात्, किं च कारणस्यैवोपादानत्वनियमाद् विनष्टस्य च काष्ठदुग्धादेर्भस्मदध्यादिकारणत्वासंभवाद् न काष्ठदुग्धादेरुपादानत्वं संभवतीति न कर्मत्वमपि संभवति तथा च काष्ठदुग्धादिपदोत्तरं द्वितीयानुपपत्तिरित्याशङ्कते- अथैवमपीति । ननु काष्ठदुग्धादेरुपादानत्वाभावेपि परिणामित्वरूपं कारणत्वं भविष्यतीत्याशङ्क्याह- न चेति, न्यायमते परिणामवादाऽस्वीकारात् काष्ठादेर्भस्मादिरूपद्रव्यान्तरं प्रति कारणत्वमेव न संभवति येन परिणामिकारणत्वं स्यात् प्रत्युत काष्ठादिसत्त्वे भस्माद्यऽसंभवाद् भस्मादिकं प्रति काष्ठादेः प्रतिबन्धकत्वमेव, उक्ते हेतुमाह-द्रव्यवतीति, काष्ठरूपद्रव्यवति काष्ठावयवभूतपरमाणुसमूहे भस्मरूपद्रव्यान्तरस्योत्पत्त्यऽसंभवादित्यर्थः ।

परिहरति-नेति । काष्ठदुग्धादीनां कर्मत्वप्रतिपादनार्थं कर्मभेदं निरूपयति-कर्मेति । प्राप्यकर्मस्वरूपमाह-तत्रेति, विषयः=घटादिः । तदुक्तम्-

" क्रियाकृतविशेषाणां सिद्धिर्यत्र न गम्यते ।
दर्शनादनुमानाद्वा तत्प्राप्यमिति कथ्यते ॥ " इति ॥

नहि ग्रामघटादौ गमनज्ञानादिना कश्चिद्विशेष उपलभ्यते इति प्राप्यकर्मत्वम् । विकृतिरूपकर्मस्वरूपमाह-क्रियानिष्पाद्यमिति, पाकादेः=पाकादिरूपक्रियायाः । प्रथमे=" पाकादेरोदनादि " इत्यत्र । तण्डुलनाशानन्तरमेवौदनोत्पत्तेः । निर्वर्तनम्=संपादनम् । द्वितीये=" कृतेर्माल्यादि " इत्यत्र । संदर्भः=प्रथनं मालाया आकारसंपादनम् । विशिष्टस्य=संदर्भादिविशिष्टस्य । तृतीये=

'तण्डुलानोदनं पचति' 'कुसुमानि स्रजं करोति' 'काशान् कटं करोति' इत्यादौ प्रकृतिसमभिव्याहारस्थलेऽपि निर्वर्त्यते निष्पाद्यते यदिति व्युत्पत्त्या यद्यप्योदनादेरपि निर्वर्त्यताऽस्ति तथापि तद्व्यावृत्तमेव पारिभाषिकं निर्वर्त्यत्वम्, तदुक्तमभियुक्तैः--

"सती वाऽविद्यमाना वा प्रकृतिः परिणामिनी ।
यस्य नाश्रीयते तस्य निर्वर्त्यत्वं प्रचक्षते ॥" इति ।

यस्य=विकृतिकर्मणः, नाश्रीयते=न प्रयुज्यते इत्यर्थः । एवं च तत्र तत्रौदनादेर्विकार्यकर्मण्येवान्तर्भावः, तदुक्तम्--

"यदसज्जायते पूर्वं जन्मना यत्प्रकाश्यते ।
तन्निर्वर्त्यम्, विकार्यं तु कर्म द्वेधा व्यवस्थितम्--॥
प्रकृत्युच्छेदसंभूतं किंचित् काष्ठादिभस्मवत् ।
किंचिद् गुणान्तरोत्पत्त्या सुवर्णादिविकारवत् ॥" इति ।

"कटादि च" इत्यत्र । द्वितीयतृतीयोदाहरणयोर्विशेषो नास्ति बुद्धिवैशद्यार्थमेव पृथक्प्रतिपादनम् । ईदृशम्=उक्तौदनमाल्यादिरूपमेव कर्म प्रकृतेः=तण्डुलपुष्पादेरसमभिव्याहारस्थले= 'ओदनं पचति' 'माल्यं करोति' 'कटं करोति' इत्यादिस्थले निर्वर्त्यमुच्यते--वक्ष्यमाणप्रमाणात् । वक्ष्यमाणेन "सती वा" इत्यादिप्रमाणेन प्रकृतेरसमभिव्याहारे एव निर्वर्त्यत्वप्रतिपादनात् ।

ननु यद्योदनादीनां निर्वर्त्यत्वमस्ति तदा तण्डुलादिरूपप्रकृतिसमभिव्याहारस्थलेऽपि निर्वर्त्यत्वं किं न स्यात् प्रकृतिसमभिव्याहारस्य प्रतिबन्धकत्वासंभवादित्याशङ्कायामाह--तण्डुलानिति, प्रकृतिसमभिव्याहारस्थले ओदनादेः व्युत्पत्तिसिद्धं निर्वर्त्यत्वमस्त्येव तथा च पूर्वोक्तं प्रकृत्यऽसमभिव्याहारस्थले एव यन्निर्वर्त्यत्वं तत् पारिभाषिकम्=सांकेतिकमेव निर्वर्त्यत्वमत एव तद्व्यावृत्तम्=भिन्नमेवेत्यर्थः । किं वा तद्व्यावृत्तं नामौदनादिव्यावृत्तं प्रकृतिसमभिव्याहारस्थले औदनाद्यनन्वयीत्यर्थः । अत्र प्रमाणमाह--सती वेति । श्लोकार्थमाह--यस्येति । न प्रयुज्यते=न समभिव्याह्रियते । 'कटं करोति' इत्यत्र कटप्रकृतिभूतकाशानां सत्त्वेपि तद्वाचककाशपदप्रयोगो न कृत इति कटस्य निर्वर्त्यत्वमिति 'सती प्रकृतिः परिणामिनी यस्य नाश्रीयते' इत्यस्योदाहरणम् । 'ओदनं पचति' इत्यत्रौदनप्रकृतिभूततण्डुलानां नाशानन्तरमेवौदनोत्पत्तेरुत्पत्तिकाले तण्डुलानामऽविद्यमानत्वं तद्वाचकतण्डुलपदप्रयोगश्च न कृत इत्योदनस्य निर्वर्त्यत्वमिति 'अविद्यमाना वा' इत्यस्योदाहरणम् । उपसंहरति--एवं चेति, ओदनादेः=निर्वर्त्यकर्मण इत्यर्थः । उक्ते प्रमाणमाह--यदसज्जायत इति, यत् पूर्वमसदेव जायते जन्मना च प्रकाश्यते तन्निर्वर्त्यं कर्म यथा पूर्वं तण्डुलावस्थायामसदेवौदनं स्वोत्पत्त्या प्रकटं भवतीति निर्वर्त्यम् । निर्वर्त्यकर्मणो विकार्यकर्मण्यन्तर्भावाय विकार्यस्वरूपमाह--विकार्यमिति, प्रकृतिभूतस्य काष्ठस्य नाशानन्तरं भस्मोत्पद्यते इति काष्ठभस्म विकार्यं कर्म एवमेवौदनमपि विकार्यं कर्म, सुवर्णकुण्डलादौ च

अत्र प्रकृतिरपि ग्राह्या, अन्यथा काष्ठसुवर्णादेस्तुरीयतापत्तेः । विकार्यपदेनै-कव्युत्पत्त्या प्रकृतिविकृत्युभयाऽबोधनेप्युभयसाधारणरूपावच्छिन्ने पारिभाषिकमेव विकार्यपदम् ।

प्रकृतिरूपं कर्म च क्रियया वस्त्वन्तरनिष्पत्तये पूर्वभावविशिष्टस्य यस्याऽसत्त्वरूपो विकारो निर्वाह्यते तद् यथा—पाकादेस्तण्डुलादि कृतेश्च पुष्पकाशादि, तत्र प्रथमस्थले तण्डुलादिरूपधर्मिनाशादेव पूर्वभावविशिष्टतदसत्त्वमोदनादिरूपकर्मान्तरनिष्पादकम्, इतरत्र धर्मिणः काशकुसुमादेः सत्त्वेपि कटसंदर्भादिविरहरूपपूर्वभावासत्त्वेन तद्विशिष्टस्यासत्त्वं कटसंदर्भादिनिष्पादकक्रियातो नि-

---

प्रकृतिभूतसुवर्णादेर्विनाशं विनैवाऽऽकारादिगुणान्तरमुत्पद्यते इति कुण्डलादिकं द्वितीयं विकार्यं कर्म, एवमेव कटादीनां माल्यादीनां च द्वितीयविकार्यकर्मत्वमेव विज्ञेयम्, एतद् विकार्यकर्मैव विकृतिकर्मेति च ज्ञेयम् । ननु काशादिरूपप्रकृतिकर्मणोपि सत्त्वाचातुर्विध्यमेव स्यादित्याशङ्कायामाह—अत्रेति, अत्र विकार्यकर्मणा प्रकृतिकर्मापि संग्राह्यमऽन्यथा काष्ठसुवर्णादिरूपप्रकृतिकर्मणस्तुरीयत्वं स्यात्, विकार्यपदेनैकव्युत्पत्त्या प्रकृतिविकृत्युभयबोधनासंभवेप्युभयसाधारणं यत् कर्मत्वं तदवच्छिन्ने विकार्यपदं पारिभाषिकमित्यर्थः । किं वा विकार्यते यत् तत् विकार्यं विकृतिः, विकार्यते यस्मिन् तद् विकार्यं प्रकृतिः, इत्येवं व्युत्पत्त्या विकार्यपदस्य प्रकृतिविकृत्युभयबोधकत्वमपि संभवत्येव । यद्यप्येतत्प्रतिपादनेन विकार्यकर्मणस्त्रैविध्यात्कर्मणश्चातुर्विध्यं प्राप्तं तथापि श्लोकोक्तविकार्यभेदद्वयस्यैकविधत्वमेव विज्ञेयमिति पूर्वोक्तकर्मत्रैविध्यप्रतिज्ञाविरोधो नास्तीति ध्येयम् ।

प्रकृतिकर्मणः स्वरूपमाह—प्रकृतिरूपमिति । क्रियया=पाकादिक्रियया । वस्त्वन्तरनिष्पत्तये=विकृतिरूपौदनादिवस्तुसिद्ध्यर्थम् । पूर्वभावविशिष्टस्य=पूर्वरूपविशिष्टस्य, पूर्वं प्रकृत्यवस्थाकालिकं यद्रूपं तण्डुलस्वरूपं तद्विशिष्टस्य तण्डुलस्येति यावत् । यस्य=प्रकृतिभूततण्डुलादेः । असत्त्वरूपः=ध्वंसरूपः । विकार इति—ध्वंसरूपासत्त्वस्यापि प्रकृतिविकाररूपत्वात् । निर्वाह्यते=ओदनादिविकारानुगुणतया संपाद्यते इत्यर्थः । तथा च यस्याऽसत्त्वरूपविकारेणौदनादिलक्षणविकारः ( कार्यं ) जायते तत् प्रकृतिकर्मेति लब्धम् । उदाहरति—यथेति । कर्मणि कर्मत्वस्य धात्वर्थमात्रनिरूपितत्वाद् धात्वर्थस्यैव कर्म भवतीति तण्डुलादिकं पाकस्यैव धात्वर्थस्य 'तण्डुलानोदनं पचति' इत्यत्र प्रकृतिकर्मेत्यभिप्रायेण षष्ठ्यन्तं पाकपदमाह—पाकादेरिति, एवमेव 'काशान् कटं करोति' इत्यादौ धात्वर्थकृतेरेव 'पुष्पकाशादिकं प्रकृतिकर्मेति षष्ठ्यन्तकृतिपदमाह—कृतेश्चेति । उक्तलक्षणसमन्वयमाह—तत्रेति, प्रथमस्थले=प्रथमे तण्डुलरूपप्रकृतिकर्मोदाहरणे । पूर्वभावविशिष्टतदऽसत्त्वम्= पूर्वभावविशिष्टस्य तण्डुलस्य तत्=पाकेन जायमानमसत्त्वमोदनादिकर्मान्तरस्य कार्यस्य निष्पादकं भवति । इतरत्र=द्वितीयोदाहरणे कटमाल्यादिकार्यावस्थायां प्रकृतिभूतकाशकुसुमादेः सत्त्वेन न तदसत्त्वं माल्यादिविकार्यकर्मसंपादकं भवति किं तु कटसंदर्भादिविरहरूपो यः पूर्वभावः ( प्रागभावः ) पुष्पादिविशेषणी

र्वहति, एवं च 'तण्डुलानोदनं पचति' इत्यादौ प्रकृतिकर्मोत्तरद्वितीयाया नाशकत्वमर्थः. तण्डुलाद्यन्वितं नाशकत्वं च पाकेऽन्वेति । विकृतिकर्मोत्तरद्वितीयायाश्चोत्पादकत्वमर्थ ओदनाद्यन्वितस्य तस्य नाशकत्वविशिष्टे पाकेऽन्वयः । नाशे चोत्पत्तेः प्रयोजकत्वमुद्देश्यतावच्छेदकविधेयभावमहिम्ना नियमतो भासते. अतः पाकस्य तण्डुलाद्यारम्भकसंयोगनाशजनकत्वेपि तन्नाशस्य द्रव्यान्तरोत्पत्तौ द्रव्यनाशेनाऽन्यथासिद्धतया प्रयोजकत्वबाधेन संयोगमोदनं 'पचति' इति न प्रयोगः ।

---

भूतं स्वरूपम् ( काशपुष्पाद्यवस्थायां कार्यभूतकटसंदर्भाद्यभावस्यैव सत्त्वात् ) तस्य पूर्वभावस्य कटसंदर्भाद्यभावरूपस्य कटसंदर्भाद्यवस्थायामसत्त्वेन कटसंदर्भादिनिष्पादकक्रियातः प्रकृतिभूतकाशकुसमादिविशेषणीभूतस्य कटसंदर्भाद्यभावस्याऽसत्त्वं जायते इति तद्विशिष्टस्य=कटसंदर्भाद्यभावविशिष्टस्य काशकुसुमादेरसत्त्वं क्रियातो निर्वहति=जायते एव विशेषणाभावेनापि विशिष्टाभावस्य सर्वसंमतत्वादिति तेनासत्त्वेन कटसंदर्भादिरूपं कार्यमुत्पद्यते इत्यर्थः । उपसंहरन् द्वितीयार्थमाह— एवं चेति । प्रकृतिकर्मोत्तरद्वितीयायाः=तण्डुलादिपदोत्तरद्वितीयायाः । प्रकृतिभूततण्डुलादेर्निरूपितत्वसंबन्धेन द्वितीयार्थनाशकत्वेऽन्वयस्तस्य चाश्रयतासंबन्धेन स्वरूपसंबन्धेन वा पाकेऽन्वयः । विकृतिकर्मोत्तरद्वितीयायाः=ओदनादिपदोत्तरद्वितीयायाः । विकृतिभूतौदनादेर्निरूपितत्वसंबन्धेन द्वितीयार्थोत्पादकत्वेऽन्वयस्तस्य चाश्रयतासंबन्धेन स्वरूपसंबन्धेन वा नाशकत्वविशिष्टे पाकेऽन्वयः । उत्पत्तेरितिषष्ठ्यर्थो निरूपितत्वमिति तण्डुलादिप्रकृतिनाशानन्तरमेवौदनादेर्जायमानत्वेन नाशे उत्पत्तिप्रयोजकत्वं यदस्ति तद् उद्देश्यतावच्छेदकविधेयभावमहिम्ना नियमतो भासते इत्याह— नाशे चेति, 'तण्डुलानोदनं पचति' इत्यत्र तण्डुलानुद्दिश्यौदनोत्पत्तिर्विधीयते तण्डुलेषु च नाशो विशेषणम्— नाशस्य तण्डुलवृत्तित्वादिति नाशोऽत्रोद्देश्यतावच्छेदको विधेया चौदनोत्पत्तिरिति नाशोत्पत्त्योरुद्देश्यतावच्छेदविधेयभावः प्राप्तस्तत्रोद्देश्यतावच्छेदकमेव विधेयप्रयोजकं भवति यथा 'ब्राह्मणः पूज्यः' इत्यत्र विधेयस्य पूजनस्योद्देश्यतावच्छेदकं ब्राह्मणत्वमेव प्रयोजकं तथात्राप्युद्देश्यतावच्छेदकस्य नाशस्योत्पत्तिप्रयोजकत्वं नियमेन भासते इत्यर्थः । उक्तस्य फलमाह— अत इति, अत्र पाकस्येत्यनन्तरम् 'तण्डुलनाशजनकत्ववत्' इति शेषः । तण्डुलाद्यारम्भकसंयोगनाशजनकत्वेपि=तण्डुलावयवसंयोगनाशजनकत्वेपि । तन्नाशस्य=तण्डुलावयवसंयोगनाशस्य । द्रव्यनाशेन=तण्डुलनाशेन ( तण्डुलावयवसंयोगनाशेन तण्डुलनाशो भवतीति ) अन्यथासिद्धतया=तण्डुलनाशे चरितार्थत्वाद् द्रव्यान्तरस्य=ओदनस्योत्पत्तौ प्रयोजकत्वं न संभवतीति 'संयोगमोदनं पचति' इति प्रयोगापत्तिर्नास्ति, यदि संयोगनाशस्य तण्डुलनाशेनाप्योदनोत्पत्तावन्यथासिद्धत्वं न स्यात्तदा तण्डुलनाशस्येव तण्डुलावयवसंयोगनाशस्याप्योदनोत्पत्तौ प्रयोजकत्वे 'तण्डुलानोदनं पचति' इतिवत् 'संयोगमोदनं पचति' इत्यपि प्रयोगः स्यादेव न चैतदिष्टमित्यर्थः ।

वस्तुतस्तु निर्वर्त्यकर्मासमभिव्याहारस्थले ‘ संयोगं पचति ’ इतिप्रयोगवारणाय संयोगनाशद्वारा नाशकत्वमेव द्वितीयार्थो वक्तव्य इति कृतं प्रयोज्यप्रयोजकभावबोधनेन ।

‘ तण्डुलमोदनं करोति ’ ‘ काष्ठं भस्म करोति ’ ‘दुग्धं दधि करोति’ इत्यादावपि प्रकृतिकर्मोत्तरद्वितीयया तन्नाशकत्वं कृतौ प्रत्याय्यते विकृतिकर्मोत्तरद्वितीयया च विषयताविशेष उत्पादकत्वं वा मिलितमुभयं वा कृतौ बोध्यते। ‘ काशान् कटं करोति ’ ‘ कुसुमानि मौक्तिकानि वा स्रजं करोति ’ इत्यादौ काशादिपदोत्तरद्वितीया कृतौ विषयताविशेषमेव बोधयति- काशाद्युच्छेदकतायास्तत्र बाधात् । ‘ कटम् ’ इत्यादौ द्वितीयार्थः पूर्ववत् । स्रगादिपदार्थविन्यासविशेषविशिष्टकुसुमादेर्न कुसुमाद्युपादानककृतिविषयता- अपि तु विन्यासादि-

वस्तुतस्तूक्तरीत्या ‘ संयोगमोदनं पचति ’ इतिप्रयोगापत्तिवारणे कृतेपि ‘ संयोगं पचति ’ इति प्रयोगस्यापत्तिस्त्वऽस्त्येव- पूर्ववदत्रौदनोत्पत्तेर्विधेयत्वमेव नास्ति येनौदनोत्पत्तिं प्रति तण्डुलावयवसंयोगनाशस्यान्यथासिद्धत्वात् ‘ संयोगं पचति ’ इति प्रयोगो न स्यादित्याशङ्क्याह- वस्तुतस्त्विति, निर्वर्त्यकर्मणः=ओदनादिकर्मणः । निर्वर्त्यकर्मसमभिव्याहाररहितस्य ‘ संयोगं पचति ’ इति प्रयोगस्य वारणाय संयोगनाशद्वारा नाशकत्वस्य द्वितीयार्थत्वं स्वीकाय तथा च गुणे गुणानङ्गीकारेण संयोगे संयोगान्तराभावात् संयोगपदोत्तरद्वितीयायाः संयोगनाशद्वारा नाशकत्वमर्थो न संभवतीति न ‘ संयोगं पचति ’ इति प्रयोगापत्तिरस्ति । एवमेव निर्वर्त्यकर्मसमभिव्याहारस्थलेपि द्वितीयायाः संयोगनाशद्वारा नाशकत्वार्थकत्वं स्वीकृत्य ‘ संयोगमोदनं पचति ’ इति प्रयोगस्यापत्तिनिवारणं संभवतीति कृतमुत्पत्तिनाशयोरुक्तप्रयोज्यप्रयोजकभावबोधनेनेत्यर्थः । यत्पदार्थावयवसंयोगस्य पाकेन नाशः संभवेत् तादृशतण्डुलादिपदार्थवाचकपदात् पचतीत्यादिसमभिव्याहारे द्वितीया भविष्यतीति भावः । ‘ तण्डुलानोदनं पचति ’ इत्यत्र हि तण्डुलावयवसंयोगनाशद्वारा तण्डुलनाशको य ओदनोत्पादको व्यापारस्तदनुकूलकृतिमानिति शाब्दबोधः । प्रयोगान्तरमुदाहरति- तण्डुलमोदनमिति, तन्नाशकत्वम्=प्रकृतिभूततण्डुलादिनाशकत्वम् । विकृतिः=ओदनादिः । विषयताविशेषः=साध्यताख्यविषयता तस्याः कृतौ निरूपकत्वसंबन्धेनान्वयः प्रयोगान्तरमुदाहरति-काशानिति, कटादिसंपादने तत्प्रकृतिभूतकाशादीनां नाशो न दृश्यते इति काशादिपदोत्तरद्वितीयाया नाशकत्वार्थकत्वासंभवाद् विषयताविशेषः=उपादानताख्यविषयतैवार्थस्तस्याः कृतौ निरूपकत्वसंबन्धेनान्वयः । तत्र=कृतौ । पूर्ववदिति- विकृतिवाचककटादिपदोत्तरद्वितीयायाः साध्यताख्यविषयता वा उत्पादकत्वं वार्थः । द्वितीयान्तस्रगादिपदार्थमाह- स्रगादीति, कुसुमाद्युपादानककृत्या स्रगादिपदार्थो यो विन्यासविशेषो माल्याकारता तद्विशिष्टकुसुमादेरुत्पत्तिर्न भवति पूर्वमेव सिद्धत्वात् किं तु ‘तादृशस्य विशेषणीभूतस्य विन्यासविशेषस्यैवेति तस्यैव कुसुमाद्युपादानककृतिविषयता ( कृतिसाध्यता ) अस्तीति ‘ स्रजम् ’

रूपविशेषणस्यैव तस्यैव कृत्यधीनोत्पत्तिरिति स्रजमित्यादिद्वितीयान्तस्य विशिष्टसत्त्वनिर्वाहकत्वमर्थः, विशेषणोत्पादकस्यापि स्वरूपसंबन्धविशेषरूपं विशिष्टसत्त्वनिर्वाहकत्वमक्षतमेव ।

'अग्निः श्यामं रक्तं करोति' इत्यादावचेतनकर्तृव्यापारबोधककरोतिसमभिव्याहृतश्यामादिपदोत्तरद्वितीयाया अपि नोपादानताख्यविलक्षणविषयतार्थकत्वसंभवः. अपि तु तादृशद्वितीयान्तेन श्यामरूपादिविशिष्टासत्त्वनिर्वाहकतारूपं विशिष्टोच्छेदकत्वं तादृशव्यापारे प्रत्याय्यते । 'घटं रक्तं करोति' इत्यादावपि घटादिपदस्याऽरक्तत्वविशिष्टघटादिलाक्षणिकतया विशिष्टघटाद्यसत्त्वनिर्वाहकत्वं प्रतीयते ।

प्रकृतिविकृतिभावस्थले कर्माख्यातेन प्रकृतेः कर्मत्वमेव प्रत्याय्यते. अतः 'काष्ठानि भस्मराशिः क्रियन्ते' इत्यादावाख्यातार्थविशेष्यकाष्ठादिवाचकपदसमानवचनत्वमाख्यातस्य न तु निर्वर्त्यभस्मादिरूपविकारवाचकपदसमानवचनता ।

---

इति द्वितीयान्तस्य विशिष्टसत्त्वनिर्वाहकत्वम्=विन्यासविशिष्टकुसुमादिसंपादकत्वमर्थस्तस्य चाश्रयतासंबन्धेन स्वरूपसंबन्धेन वा कृतावन्वयः । ननु कुसुमानां पूर्वमेव सिद्धत्वात् कथं तत्संपादकत्वं कृतौ स्यादित्याशङ्क्याह– विशेषणेति, विशेषणोत्पादकस्य व्यापारस्य । विशिष्टस्य पूर्वमसिद्धत्वेन तत्संपादनसंभवादित्यर्थः । कृतिविषयता तु विन्यासादेरेवेत्यर्थः । तादृशविशिष्टसत्त्वनिर्वाहकत्वं च व्यापारे स्वरूपसंबन्धेन वर्तत इत्युक्तम्–' स्वरूप इति ।

प्रयोगान्तरमुदाहरति– अग्निरिति । वैशेषिकनये श्यामघटनाशानन्तरमेव रक्तघटोत्पत्तेः स्वीकारेण श्यामघटस्योपादानत्वासंभवान्न श्यामपदोत्तरद्वितीयाया उपादानताख्यविषयतार्थकत्वं संभवतीति श्यामरूपादिविशिष्टस्य घटस्य यदऽसत्त्वं विनाशस्तन्निर्वाहकतारूपं विशिष्टोच्छेदकत्वम्=श्यामादिरूपविशिष्टघटाद्युच्छेदकत्वं द्वितीयान्तार्थस्तस्य तादृशव्यापारे=उक्ताचेतनकर्तृकव्यापारे आश्रयतासंबन्धेन स्वरूपसंबन्धेन वान्वय इत्यर्थः । 'घटं रक्तं करोति' इत्यत्र च घटपदस्याऽरक्तत्वविशिष्टघटे लक्षणा तथा चाऽरक्तत्वविशिष्टघटनाशकत्वं द्वितीयार्थस्तस्य कृतावन्वयः पूर्ववदिति कृतावऽरक्तत्वादिविशिष्टघटाद्यसत्त्वसंपादकत्वं प्रतीयत इत्याह– घटं रक्तमिति ।

'काष्ठानि भस्मराशिः क्रियन्ते' इत्यादिप्रकृतिविकृतिभावस्थले ( काष्ठं प्रकृतिः भस्म च विकृतिः ) कर्माख्यातेन प्रकृतेरेव कर्मत्वं प्रत्याय्यते इति आख्यातार्थविशेष्यता प्रकृतिभूतकाष्ठादावेवेति काष्ठादिपदसमानवचनत्वमेवाख्यातस्य प्राप्तं न तु निर्वर्त्यभस्मादिवाचकपदसमानवचनत्वं तत्कर्मत्वाबोधनादित्याह– प्रकृतीति । एवकारो भिन्नक्रम इति 'प्रकृतेरेव' इत्यन्वयः । एतच्चपूर्वमपि ( ३०८ पृ. ) प्रतिपादितम् ।

अथैवं निर्वर्त्यकर्मवाचकपदात् प्रथमा न स्यादपि तु द्वितीयैव—तत्कर्मताया लकारेणानभिधानात् ।

यत्तु उभयकर्मत्वमेव लकारेणाभिधीयते—प्रधानाऽप्रधानकर्मसमभिव्याहृतनीवहादिदुहादिरूपद्विकर्मकोत्तरकर्मप्रत्ययस्यैव कर्मत्वद्वयानभिधायकत्वानियमात्. प्रकृते च कर्मद्वयस्यैव तुल्यत्वात् । विकृतेराख्यातार्थविशेष्यत्वेप्याऽऽख्यातस्य तत्समानवचनत्वाऽनियमः "गृह्णाति वाचकः संख्यां प्रकृतेर्विकृतेर्न हि" इत्यनुशासनसिद्धप्रकृतिविकृतिसमभिव्याहृतलकारीयविकारसंख्याबोधकत्वाभावव्युत्पत्तिनिर्वाह्य इत्युक्तस्थले न क्रियापदस्यैकवचनान्तता, तदर्थान्वितसंख्याबोधकस्यैवाख्यातस्य तत्पदसमानवचनत्वानियमात्. न तु तद्विशेष्यकस्वार्थकर्मत्वादिबोधजनकाख्यातमात्रस्येति ।

---

ननु कर्माख्यातेन यत्कर्मत्वमभिधीयते तद्वाचकपदात् प्रथमा भवति द्वितीयाप्रतिपाद्यकर्मत्वस्याख्यातेनैव प्रतिप्रादितत्वादिति यदि 'काष्ठानि भस्मराशिः क्रियन्ते' इत्यत्र कर्माख्यातेन केवलं काष्ठकर्मत्वमेव प्रत्याय्यते न भस्मराशिकर्मत्वं तदा भस्मराशिपदात् प्रथमा न स्यात् किं तु भस्मराशिकर्मत्वाभिधानार्थं द्वितीयैव स्यादित्याशङ्कते— अथेति ।

परिहाराय मतान्तरमनुवदति—यत्त्विति, 'काष्ठानि भस्मराशिः क्रियन्ते' इत्यत्रोभयकर्मत्वम्=काष्ठकर्मत्वं भस्मराशिकर्मत्वं चाख्यातेनाभिधीयते एवेति न भस्मराशिपदाद् द्वितीयापेक्षेत्यर्थः । नन्वेकेन कर्माख्यातेनोभयकर्मत्वाभिधानं कथं स्यादित्याशङ्क्याह—प्रधानेति, 'अजा ग्रामं नीयते' इत्यादौ द्विकर्मकनीवहादिदुहादिधातूत्तरवर्तमानकर्माख्यातेन कर्मत्वद्वयाभिधानं न भवतीति नियमोस्ति न तु सर्वत्र तथा च प्रकृते='काष्ठानि भस्मराशिः क्रियन्ते' इत्यत्र कर्मद्वयस्यैव तुल्यत्वादुभयकर्मत्वमाख्यातेनाभिधीयते एवेति न प्रथमाऽनुपपत्तिरित्यर्थः । ननु यदि विकृतिभूतो यो भस्मराशिस्तत्कर्मत्वमप्याख्यातेनाभिधीयते तदा विकृतेः=भस्मराशेरप्याख्यातार्थविशेष्यत्वं प्राप्तमेव तथा चाख्यातस्य विकृतिवाचकपदसमानवचनत्वं किं न स्यादित्याशङ्क्याह—विकृतेरिति, विकृतेराख्यातार्थविशेष्यत्वेप्याख्यातस्य विकृतिवाचकपदसमानवचनत्वं न भवति किं तु प्रकृतिवाचकपदसमानवचनत्वमेव भवति, अत्र प्रमाणमाह—गृह्णातीति, वाचकः= कर्मत्ववाचक आख्यातप्रत्ययः । इत्यनुशासनेन सिद्धा या प्रकृतिविकृत्युभयसमभिव्याहृतलकारस्य=आख्यातस्य विकृतिसंख्याबोधकत्वाभावविषया व्युत्पत्तिस्तन्निर्वाह्यः=तत्प्रमाणक आख्यातस्य विकृतिवाचकपदसमानवचनत्वाऽनियमोस्तीत्युक्तस्थले='काष्ठानि भस्मराशिः क्रियन्ते' इत्यत्र न क्रियापदस्यैकवचनान्तता । आख्यातस्य यदर्थान्वितसंख्याबोधकत्वं भवति तद्वाचकपदसमानवचनत्वं भवति नत्वाख्यातार्थविशेष्यमात्रवाचकपदसमानवचनत्वमित्यत्राख्यातस्य काष्ठपदसमानवचनत्वमेव न भस्मराशिपदसमानवचनत्वमित्यर्थः । तद्विशेष्यकेति— यथा भस्मराशिविशेष्यको यः स्वार्थभूतः कर्मत्वादिस्तद्विषयकबोधजनकाख्यातमात्रस्य न तद्वाचकपदसमानव-

तदसत्– विकारविकारिणोर्द्वयोराख्यातार्थविशेष्यत्वे वाक्यभेदापत्तेः । 'घटपटौ स्तः' 'घटपटौ दृश्येते' इत्यादौ विशेष्यभेदेऽपि विशेष्यतावच्छेदकद्वित्वादेरेकधा भानान्न वाक्यभेदः, अत्र च न तादृशविशेष्यतावच्छेदकभानमस्ति येन तत्रेवाऽत्राप्येकवाक्यतानिर्वाहः ( स्यात्? ) । न चागत्येष्यते एवात्र वाक्यभेद इति वाच्यम्, तथा सत्येकवाक्यार्थपरस्य 'काष्ठं क्रियते' 'भस्म क्रियते' इत्येतादृशप्रयोगस्यापत्तेः । 'काष्ठं भस्म क्रियते' इति वाक्यजबोधस्य काष्ठविकृतिर्भस्माऽन्यविकृतिर्वेतिसंशयनिवर्तकत्वानुपपत्तेः– काष्ठभस्मनोः प्रकृतिविकारभावाऽभानात् । अस्मन्मते च काष्ठोच्छेदकत्वरूपकाष्ठकर्मकत्व–भस्मनिर्वर्तकत्वरूपतत्कर्मकत्वयोरेकविशिष्टेऽपरान्वये एव पूर्वोपदर्शितरीत्या काष्ठोच्छेदप्रयोज्योत्पत्तिकत्वरूपकाष्ठप्रकृतिकत्वस्य भस्मनि लाभसंभवादिति चेत् ?,

---

चनत्वं भवतीति विकृतेराख्यातार्थविशेष्यत्वेपि न तद्वाचकपदसमानवचनत्वमाख्यातस्येति प्राप्तम् ।

परिहरति– तदसदिति, विकारविकारिणोः=विकृतिप्रकृत्योरुभयोरप्याख्यातार्थविशेष्यत्वे प्रतिविशेष्यं वाक्यसमाप्तिनियमेन वाक्यभेदः स्याद् यथा–'काष्ठानि भस्मराशिः क्रियन्ते' इत्यत्र 'काष्ठानि क्रियन्ते' 'भस्मराशिः क्रियते' इति । ननु यथा 'घटपटौ स्तः' इत्यादौ घटपटयोरुभयोरप्याख्यातार्थविशेष्यत्वेपि न वाक्यभेदस्तथा प्रकृतिविकृत्योरुभयोरप्याख्यातार्थविशेष्यत्वेपि नोक्तस्थले वाक्यभेद इत्याशङ्क्याह–घटपटाविति, 'घटपटौ स्तः' इत्यादौ विशेष्यभेदेपि विशेष्यतावच्छेदकं द्वित्वमेकमेवेति 'घटपटौ द्वौ स्तः' इत्येवं शाब्दबोधस्वीकारान्न वाक्यभेदप्रसङ्गः । अत्र='काष्ठानि भस्मराशिः क्रियन्ते' इत्यत्र च न तादृशस्यैकस्य विशेष्यतावच्छेदकस्य भानमस्ति येन तत्रेव='घटपटौ स्तः' इत्यत्रेवात्रापि='काष्ठानि भस्मराशिः क्रियन्ते' इत्यत्राप्येकवाक्यतानिर्वाहः स्यादित्यर्थः, स्यादिति शेषः । ननु गत्यभावादिष्ट एव वाक्यभेद इत्याशङ्क्याह–न चेति, परिहारमाह– तथा सतीति, उक्तस्थले वाक्यभेदस्येष्टत्वे 'काष्ठानि भस्मराशिः क्रियन्ते' इत्यस्य स्थाने 'काष्ठं क्रियते' 'भस्म क्रियते' इतिवाक्यद्वयस्यापि प्रयोगः स्यात्. न चैतदिष्टम्– काष्ठस्य सिद्धत्वादिति न वाक्यभेदेष्टापत्तिः संभवति । किं च यदि 'काष्ठं भस्म क्रियते' इत्यादिप्रकृतिविकृतिसमभिव्याहारस्थले वाक्यभेद एव स्यात्तदा काष्ठभस्मनोः प्रकृतिविकृतिभावस्य भानासंभवात् काष्ठभस्मनोः पृथक् पृथग् वाक्यबोध्यत्वाद् भस्म काष्ठविकृतिर्वाऽन्यविकृतिर्वेति संशयोच्छेदकत्वमुक्तवाक्यजन्यबोधस्य न स्याद् अस्ति चैतत्संशयोच्छेदकत्वमिति न वाक्यभेदः स्वीकर्तुं शक्यते इत्यर्थः । ननु वाक्यभेदाभावेपि तव मते कथमेतत्संशयोच्छेदकत्वमुक्तवाक्यजन्यबोधस्य स्यादित्या शङ्क्याह–अस्मन्मते इति, अस्मन्मते तु 'काष्ठं भस्म क्रियते' इत्यादौ वाक्यभेदो नास्तीति काष्ठोच्छेदकत्वरूपं यत् काष्ठकर्मकत्वं तद्विशिष्टे एव करोत्यर्थव्यापारेऽपरस्य भस्मनिर्वर्तकत्वरूपस्य तत्=भस्मकर्मकत्वस्यान्वयो भवतीति पूर्वम् "एवं च तण्डुलान् ३३९ पृ." इत्यादिनोपदर्शितरीत्यैव काष्ठोच्छेद ( काष्ठनाश ) प्रयोज्योत्पत्तिकत्वरू-

सत्यम्–' काष्ठं भस्म क्रियते ' इत्यादौ भस्मादिनिर्वर्त्यकर्मताया लकारेणानभिधानेपि तत्कर्मताया धात्वर्थे संसर्गतया भानोपगमेन तादृशकर्मोत्तरं प्रथमायाः साधुता । प्रातिपदिकार्थविशेष्यतया कर्मत्वादिविवक्षायामेव द्वितीयादिविभक्तिसाधुत्वात् । यथा 'अर्घो नमः' इत्यादौ नमः पदार्थत्यागेऽर्घादिकर्मत्वबोधेप्यर्घादिपदात्प्रथमैव–निपातार्थे त्यागे कर्मतासंबन्धेनैव नामार्थस्यान्वयात्। एवम् 'भूतले न घटः' इत्यादावपि घटादिसंबन्धस्याभावे संसर्गतया भानात् षष्ठीविषयेपि प्रथमा ।

---

पस्य काष्ठप्रकृतिकत्वस्य भस्मनि लाभसंभवात् काष्ठभस्मनोः प्रकृतिविकृतिभावभानलाभेन ' काष्ठं भस्म क्रियते ' इतिवाक्यजबोधस्योक्तसंशयनिवर्तकत्वसंभवाद् भस्म काष्ठविकृतिरेवेति निश्चयोपि संभवत्येवेत्यर्थः । एवकारो भिन्नक्रम इति ' पूर्वोपदर्शितरीत्यैव ' इत्यन्वयः । "अपरान्वये" इत्यत्र ' अपरान्वयेन ' इति पाठो युक्तः ।

अथेत्यादिना कृतायाः शङ्काया उत्तरमाह–सत्यमिति, ' काष्ठं भस्म क्रियते ' इत्यादौ भस्मादिकर्मतायाः संसर्गत्वं स्वीक्रियते तथा च धात्वर्थे भस्मकर्मकत्वमस्तीति भस्मकर्मकत्वसंबन्धेन किं वा निरूपकतासंबन्धेन धात्वर्थे वर्तमानभस्मकर्मत्वसंबन्धेन काष्ठकर्मत्वस्यान्वयो भवतीति भस्मकर्मत्वस्य संसर्गत्वेन तदुपस्थित्यपेक्षाभावात् लकारेण=आख्यातेन भस्मकर्मत्वानभिधानेपि तादृशकर्मोत्तरम्=भस्मपदोत्तरं द्वितीयापेक्षा नास्तीति प्रथमायाः साधुता, प्रकारतया भासमानस्यैवोपस्थितेरपेक्षितत्वात् । अत्रापि यदि भस्मकर्मतायाः प्रकारत्वमिष्टं स्यात्तदा लकारेण तदनभिधाने तदुपस्थापकद्वितीयाया अपेक्षा स्यात्. न चैवमस्तीत्यर्थः । किं च यत्र कर्मत्वस्य प्रातिपदिकार्थविशेष्यत्वेन विवक्षा भवति तत्रैव तत्प्रातिपदिकाद् द्वितीया भवति न चात्र कर्मत्वस्य भस्मविशेष्यत्वेन विवक्षास्ति संसर्गत्वेनैव विवक्षितत्वादिति न भस्मपदादत्र द्वितीयापत्तिरित्याह–प्रातिपदिकार्थेति । उक्ते दृष्टान्तमाह– यथेति, अर्घप्रदानकाले यदुच्यते ' अर्घो नमः ' इतिवाक्यं तत्र नमःपदार्थभूतस्त्यागः ( प्रदानम् ) अर्घकर्मक एवेति त्यागेऽर्घकर्मत्व( कर्मकत्व )-बोधेप्यर्घपदादत्र प्रथमैवास्ति. तत्कस्य हेतोः ? नम इतिनिपातपदं तदर्थे त्यागे कर्मतासंबन्धेनैव नामार्थस्यार्घपदार्थस्यान्वयात् तथा च यथात्रार्घकर्मतायाः संसर्गतया भासमानत्वेन तदुपस्थापकद्वितीयापेक्षाभावादऽर्घपदात् प्रथमायाः साधुता. एवमुक्तस्थलेपि भस्मकर्मतायाः संसर्गतयैव भासमानत्वेन तदुपस्थापकद्वितीयापेक्षाभावाद् भस्मपदात् प्रथमायाः साधुतेत्यर्थः । एवमिति–यथा ' अर्घो नमः ' इत्यत्र निपातभूतनमःपदस्यार्थे त्यागेऽर्घकर्मत्वस्य संसर्गतयैव भानं भवतीत्यर्घपदात् प्रथमैव जाता. एवम् ' भूतले न घटः ' इत्यत्रापि नञर्थाभावे घटसंबन्धस्य घटप्रतियोगिकत्वस्य संसर्गतया भानात् तदुपस्थापकषष्ठ्यपेक्षाभावात् षष्ठ्याः स्थाने घटपदात् प्रथमैव जातेत्यर्थः ।

न च धात्वर्थे नामार्थस्य साक्षादन्वयोऽव्युत्पन्न इति प्रकृते कर्मतायाः संसर्गतया भानं न संभवतीति वाच्यम्, 'घटो नीलो भवति' 'काष्ठं भस्म भवति' इत्यादौ भवनादिक्रियायां नीलादेः कर्तृतासंबन्धेन साक्षादन्वयवदत्रापि व्युत्पत्तिवैचित्र्येण कर्मान्तरविशेषणतापन्नक्रियायामऽपरकर्मणः कर्मतासंबन्धेन साक्षादन्वयोपगमात् ।

न चैवमपि कर्मत्वस्य प्रकृत्यर्थविशेष्यत्वेन विवक्षया 'काष्ठं भस्मराशि क्रियते' इत्यादिप्रयोगापत्तिः, कर्मत्वान्तरविशेषणतानापन्नक्रियायामेव द्वितीयया कर्मत्वं बोध्यते इति व्युत्पत्तिकल्पने ? 'गौर्दुह्यते क्षीरम्' 'अजा नीयते ग्रामम्' इत्यादौ दोहननयनादिक्रियायां क्षीरग्रामादिकर्मकत्वानन्वयप्रसङ्ग इतिवाच्यम्, प्रकृतिविकृत्युभयकर्मकस्थले तथा व्युत्पत्तेः । यथोक्तातिप्रसङ्गवार-

---

ननु 'अर्घो नमः' इत्यत्र भवतु कर्मत्वस्य संसर्गतया भानम् तत्र नम इति निपातार्थत्यागे अर्घ इति नामपदार्थस्य कर्मतासंबन्धेन साक्षादन्वयेपि पूर्वोक्तव्युत्पत्तिविरोधाभावात् 'काष्ठं भस्म क्रियते' इत्यत्र तु भस्मकर्मतायाः संसर्गत्वमाश्रित्य तादृशकर्मतासंबन्धेनैव करोतिधात्वर्थे भस्मान्वयोपि कर्तव्यः स तु न संभवति धात्वर्थे साक्षान्नामार्थान्वयस्याऽव्युत्पन्नत्वादित्याशङ्क्याह—न चेति । परिहारमाह—घट इति, यथा पूर्वोक्तरीत्या 'घटो नीलो भवति' इत्यत्र नीलपदार्थस्य कर्तृतासंबन्धेन धात्वर्थे साक्षादेवान्वयस्तथा 'काष्ठं भस्म क्रियते' इत्यत्रापि काष्ठरूपकर्मान्तरविशेषणतापन्नकरोत्यर्थक्रियायां भस्मरूपाऽपरकर्मणः कर्मतासंबन्धेन साक्षादेवान्वय इत्यर्थः । अत्र च 'चैत्रादिवृत्तिव्यापारजन्यभस्मरूपविकाराश्रयः काष्ठम्' इति शाब्दबोधोदयात् क्रियायाः काष्ठरूपकर्मविशेषणत्वं विज्ञेयम् ।

ननु भस्मकर्मतायाः संसर्गत्वविवक्षायां भवतूक्तस्थले भस्मपदात् प्रथमा अथापि कर्मत्वस्य प्रकृत्यर्थविशेष्यत्वविवक्षायां विशेष्यभूतकर्मत्वस्योपस्थित्यपेक्षया तदुपस्थापकद्वितीयाया आवश्यकतया 'काष्ठं भस्मराशिं क्रियते' इति प्रयोगापत्तिः स्यादेव । यदि चैतद्दोषपरिहाराय कर्मान्तरविशेषणतानापन्नक्रियायामेव द्वितीयया कर्मत्वं बोध्यते=द्वितीयोपस्थापितकर्मताया अन्वयो भवतीति व्युत्पत्तिः कल्प्यते तथा च काष्ठरूपकर्मान्तरविशेषणतापन्नक्रियायां भस्मराशिकर्मत्वस्यान्वयो न संभवतीति न 'काष्ठं भस्मराशिं क्रियते' इति प्रयोगापत्तिरित्युच्यते ? तदाऽनया व्युत्पत्त्या 'गौर्दुह्यते क्षीरम्' 'अजा नीयते ग्रामम्' इत्यादौ गवाजादिकर्मान्तरविशेषणतापन्नायां दोहननयनादिक्रियायामपि क्षीरग्रामादिकर्मकत्वस्यान्वयो न भविष्यतीति क्षीरादिपदोत्तरं द्वितीयानुपपत्तिरित्याशङ्क्याह—न चेति । परिहारमाह—प्रकृतीति, गोक्षीरयोरजाग्रामयोश्च प्रकृतिविकृतिभावो नास्तीत्यत्र न सा व्युत्पत्तिः कल्प्यते इति नात्र गवाजादिकर्मान्तरविशेषणतापन्नोक्तक्रियायां क्षीरग्रामादिकर्मकत्वानन्वयप्रसङ्गः । प्रकृतिविकृतिभावस्थले च

णाय दर्शिता व्युत्पत्तिः कल्प्यते तथा कर्तृत्वविशेषणतयाऽभासमानाया-मेव क्रियायां तृतीयार्थकर्तृत्वान्वय इत्यपि व्युत्पत्तिः कल्प्या. अन्यथा प्रकृत्यर्थविशेष्यतया कर्तृत्वविवक्षया 'काष्ठं भस्मना भवति' इतिप्रयोगस्य दुर्वारत्वात् ।

उत्पत्तिप्रयोजकनाशप्रतियोगित्वरूपविकार एव 'काष्ठं भस्म भवति' इत्यादौ धात्वर्थः, आधेयत्वरूपं तत्कर्तृत्वमेव संबन्धमर्यादया भासते । 'काष्ठेन भस्मना भूयते' इत्यादौ भस्माद्याधेयत्वमुत्पत्तौ काष्ठाधेयत्वं च नाशप्रतियोगित्वे तृतीयोपस्थाप्यं प्रकारतया भासते । कर्तृत्वविशेषणतया भासमानस्य निरुक्तभवनस्यान्तर्गतायामेवोत्पत्तौ भस्मादेराधेयत्वं संबन्धतया भासते इति

---

' कर्मत्वान्तरविशेषणतानापन्नक्रियायां द्वितीयया कर्मकत्वं बोध्यते ' इतिव्युत्पत्तिः कल्प्यते-काष्ठभस्मनोश्च प्रकृतिविकृतिभाव एवेति काष्ठरूपकर्मान्तरविशेषणतापन्नक्रियायां द्वितीयोपस्थाप्यकर्मत्वस्यान्वयाऽस्वीकारात् 'काष्ठं भस्मराशिं क्रियते' इति प्रयोगापत्तिर्नास्तीत्यर्थः । यथैतदतिप्रसङ्गवारणायैषा व्युत्पत्तिः कल्प्यते तथा 'कर्तृत्वविशेषणतयाऽभासमानायामेव क्रियायां तृतीयार्थकर्तृत्वान्वयो भवति न तु कर्तृत्वविशेषणतया भासमानायामपि'इत्यपि व्युत्पत्तिः कल्प्यते तथाच काष्ठरूपकर्तृविशेषणतया भासमानायां भवनक्रियायां भस्मपदोत्तरतृतीयार्थकर्तृत्वस्यान्वयासंभवाद् भस्मपदात्तृतीयापत्त्यभावात् ' काष्ठं भस्मना भवति ' इत्यनिष्टप्रयोगनिवारणं भविष्यति. अन्यथा न भविष्यतीत्याह—यथोक्तेति । ' काष्ठं भस्म भवति' इत्येव प्रयोगो भवति अत्र ' भस्मानुकूलभवनव्यापाराश्रयः काष्ठम् ' इतिशाब्दबोधः । प्रकृत्यर्थविशेष्यतया=भस्मविशेष्यतया ।

उत्पत्तीति—' काष्ठं भस्म भवति ' इत्यत्र भस्मोत्पत्तिप्रयोजको यः काष्ठनाशस्तत्प्रतियोगित्वरूपो यः काष्ठे जायमानो विकारः स एव भूधात्वर्थः, स च काष्ठेस्तीति काष्ठाधेयत्वं यद् धात्वर्थेऽस्ति तत् संसर्गतया भासते तेनैवाधेयत्वसंसर्गेण धात्वर्थे काष्ठान्वयः, तच्चाधेयत्वं काष्ठनिष्ठमुक्तधात्वर्थनिरूपितकर्तृत्वरूपमेवेत्यर्थः । काष्ठेनेति—' काष्ठेन भस्मना भूयते ' इत्यत्रोत्पत्तौ यद् भस्माधेयत्वमस्ति तद् भस्मपदोत्तरतृतीयोपस्थाप्यमस्तीति प्रकारतया भासते. एवं नाशप्रतियोगित्वे यत् काष्ठाधेयत्वं तदपि काष्ठपदोत्तरतृतीयोपस्थाप्यमस्तीति प्रकारतया भासते न संसर्गतयेत्यर्थः । ननु ' काष्ठेन भस्म भूयते ' इति प्रयोगः किं न स्यादित्याशङ्क्याह—कर्तृत्वेति, उत्पत्त्यनुकूलव्यापारो हि भवनपदार्थ इत्युत्पत्तिर्भवनान्तर्गता ज्ञेया यत्र कर्तृत्वविशेषणतया धात्वर्थभवनस्य भानं भवति तादृशभवनान्तर्गतायामुत्पत्तौ भस्माद्याधेयत्वं संबन्धतया भासते यथा ' काष्ठं भस्म भवति ' इत्यत्राख्यातस्य कर्तरि जायमानत्वाद् धात्वर्थस्य कर्तृत्वविशेषणत्वमस्ति व्यापारकर्तृत्ववानिति बोधोदयादिति तत्र भस्माधेयत्वस्य संसर्गतया भानसंभवाद् भस्मपदोत्तरं तृतीयापेक्षा नास्ति, ' काष्ठेन भस्म भूयते ' इत्यत्र तु भावे आख्यातमस्ति तस्य

व्युत्पत्तेः ' काष्ठेन भस्म भूयते ' इत्यादयो न प्रयोगाः—भावाख्यातस्य कर्तृत्वाबोधकत्वात् । कर्मत्वान्तरविशेष्यतापन्नकृत्यादौ कर्मत्वस्य संसर्गतया भानमऽव्युत्पन्नमिति ' काष्ठं भस्मराशिः करोति ' इत्यादयो न प्रयोगाः ।

" अधिशीङ्स्थासां कर्म " इत्यादिना यत्राधारस्य कर्मसंज्ञा तत्राऽऽधारत्वमाधेयत्वं वा द्वितीयार्थः, ' स्थलीमधिशेते ' इत्यादौ तादृशार्थे द्वितीयायाः ' स्थल्या अधिशयिता ' इत्यादौ कृत्प्रयोगे षष्ठ्याश्च साधुत्वार्थमेव कर्मसंज्ञावि-

---

च कर्तृत्वाबोधकतया धात्वर्थस्य कर्तृत्वविशेषणत्वं नास्तीति न भस्माधेयत्वस्य संसर्गतया भानं स्वीक्रियते किं तु प्रकारतयैव तथा चाधेयत्वोपस्थापकतृतीयाया आवश्यकत्वात् ' काष्ठेन भस्मना भूयते ' इत्येव प्रयोगो भवति न तु ' काष्ठेन भस्म ' भूयते ' इत्यपीत्यर्थः । कर्मत्वान्तरविशेष्यतापन्नकृत्यादिधात्वर्थे कर्मत्वान्तरस्य संसर्गतया भानं न भवतीति ' काष्ठं भस्मराशिः करोति ' इतिप्रयोगो न भवति—अत्र काष्ठनिष्ठकर्मत्वविशेष्यतापन्नक्रियायां भस्मराशिनिष्ठकर्मत्वस्य संसर्गतयैव भानं संभवति—भस्मराशिपदोत्तरं कर्मत्वोपस्थापकद्वितीयाया अभावात्, कर्मत्वान्तरविशेष्यतापन्नकृत्यादौ च कर्मत्वान्तरस्य संसर्गतया भानं न स्वीक्रियते किं तु प्रकारतयैव प्रकारत्वं चानुपस्थितस्य न संभवतीति कर्मत्वोपस्थापकद्वितीयाया आवश्यकत्वात् ' काष्ठं भस्मराशिं करोति ' इत्येव प्रयोगो भवतीत्यर्थः । ' काष्ठनिष्ठकर्मत्वनिरूपको यो भस्मराशिकर्मको व्यापारस्तादृशव्यापारवान् ' इत्यत्र बोधोदयात् कृत्यादिव्यापारस्य कर्मत्वविशेष्यत्वं सुस्पष्टमेव ।

" अधिशीङ्स्थासां कर्म " इतिसूत्रसंपन्नप्रयोगमुदाहर्तुमारभते—अधिशीङिति, प्राचीनमते आधारत्वमर्थः, किं तु आधारत्वस्य धात्वर्थे निरूपकत्वसंबन्धेनान्वयः स्याद् निरूपकत्वसंबन्धस्य च वृत्त्यनियामकतया अभावीयप्रतियोगितानवच्छेदकत्वेन पूर्वोक्तरीत्या 'न स्थलीमधिशेते' इत्यत्र शाब्दबोधो न स्यादिति नवीनमतेनाधेयत्वं द्वितीयार्थस्तच्चाश्रयतासंबन्धेन वर्तते आश्रयतासंबन्धस्य च वृत्तिनियामकतया नोक्तदोष इत्यर्थः । कर्मसंज्ञाविधानप्रयोजनमाह— स्थलीमिति, शेते इत्यत्र भूपृष्ठादिसंयोगो धात्वर्थः । स्थलीपदार्थस्याधिकरणत्वेन तद्वाचकस्थलीपदोत्तरं सप्तम्या युक्तत्वेपि ' स्थलीमधिशेते' ' स्थल्या अधिशयिता ' इत्यादौ कर्मत्वबोधकद्वितीयाषष्ठ्योः साधुत्वाय सूत्रकारेण कर्मसंज्ञा विहितेत्यर्थः । तादृशार्थे=अधिकरणार्थे । ननु ' स्थलीमधिशेते ' इत्यस्य ' स्थल्यां शयनं करोति ' इत्ययमेवार्थस्तत्र करोतिपदवाच्यव्यापारस्य भूपृष्ठादिसंयोगरूपे धात्वर्थेऽन्तर्भावः कर्तव्य इत्युक्तवाक्यस्य ' भूपृष्ठादिसंयोगानुकूलकृतिमान् ' इत्यर्थः स्यात्, अत्र च भूपृष्ठादिसंयोगः फलमेवेति यथा संयोगादिरूपफलाश्रयतया ' ग्रामं गच्छति ' इत्यादौ ग्रामादेः कर्मसंज्ञा भवति तथैव भूपृष्ठादिसंयोगरूपफलाश्रयत्वात् स्थल्यादीनामपि कर्मसंज्ञा संभवत्येवेति पुनः " अधिशीङ् " इत्यादिसूत्रेण स्थल्यादीनां कर्मसंज्ञाविधानं विधाय-

धानात् । अथ कृञर्थव्यापारान्तरं धात्वर्थेऽन्तर्भाव्य शयनादिरूपफलावच्छिन्न-व्यापारार्थकसोपसर्गशीङ्प्रभृतिधात्वर्थतावच्छेदकशयनादिरूपफलाश्रयतयाऽऽधारस्य कर्मत्वोपपादनसंभवात् तादृशसूत्राणां वैयर्थ्यमेव, अध्याद्युपसृष्टशीङ्प्रभृतीनामेव च तादृशार्थे निरूढलक्षणा न त्वनुपसृष्टानामऽतो न 'स्थलीं शेते' इत्यादयः स्वारसिकाः प्रयोगा इति चेत् ?, न— धातोर्मुख्यार्थपरत्वेपि दर्शितप्रयोगनिर्वाहाय भगवता पाणिनिमुनिना तादृशसूत्रप्रणयनात् । तदप्रणीतवतां शर्ववर्मप्रभृतीनां मुख्यार्थपराणाम् 'स्थल्यामधिशेते' इत्यादिप्रयोगाणां साधुताया दुर्वारत्वाच्च ।

कालाध्वदेशानामऽकर्मकक्रियायोगे कैश्चित् कर्मप्रत्ययार्थं विभाषया कर्मत्वम-

---

कसूत्रं च व्यर्थमेवेत्याशङ्कते— अथेति । अत्र पक्षे भूपृष्ठादिसंयोगानुकूलव्यापारो धात्वर्थः । शयनादीति— शयनादिरूपं यत्फलं तदवच्छिन्नव्यापारार्थको यः सोपसर्गः=अध्युपसर्गसंयुक्तः शीङ्प्रभृतिधातुस्तदर्थतावच्छेदकं यच्छयनादिरूपं फलं तादृशफलाश्रयतयाप्याधारस्य=स्थल्यादेः कर्मत्वं संभवत्येवेत्यर्थः । क्रियाजन्यफलशालित्वं हि कर्मत्वमऽत्र च यच्छयनरूपं फलमुक्तं तत्तु शीङ्धात्वर्थ एव न तु धात्वर्थव्यापारजन्यमिति तादृशशयनाश्रयीभूतायाः स्थल्याः कर्मत्वं न स्यादित्युक्तम्— कृञर्थव्यापारेति, धात्वर्थशयने कृञर्थव्यापारस्यान्तर्भावे च कृते शयनस्य तादृशकृञर्थव्यापारजन्यत्वं प्राप्तमिति तादृशक्रियाजन्यशयनरूपफलाश्रयतया स्थल्यादीनां कर्मत्वं प्राप्नोतीति भावः । नन्वेवं शयनरूपफलाश्रयत्वात् स्थल्याः कर्मत्वापत्त्या 'स्थलीं शेते' इत्यपि प्रयोगः स्यादित्याशङ्क्याह— अध्याद्यपसृष्टेति, तादृशार्थे=अन्तर्भूतकृञर्थव्यापारे धात्वर्थे, अध्युपसर्गसंयोगे सत्येव कृञर्थव्यापारस्य धात्वर्थेऽन्तर्भावो भवति न त्वध्युपसर्गसंयोगाभावेपीति न 'स्थलीं शेते' इतिप्रयोगापत्तिरित्यर्थः । परिहरति— नेति, उक्तार्थे निरूढलक्षणास्वीकारे स्थल्यादीनां त्वदुक्तरीत्या कर्मत्वसंभवेपि निरूढलक्षणाभावपक्षे धातोर्मुख्यार्थपरत्वे तु स्थल्यादीनां क्रियाजन्यफलशालित्वाभावात् कर्मत्वं न संभवतीति मुख्यार्थपक्षे कर्मत्वाप्राप्त्या दर्शितप्रयोगस्य 'स्थलीमधिशेते' इत्यादिप्रयोगस्य निर्वाहाय "अधिशीङ्" इत्यादिसूत्रं प्रणीतमिति न वैयर्थ्यम् । यैरेतादृशकर्मसंज्ञाविधायकं सूत्रं न प्रणीतं तेषां व्याकरणमतेन मुख्यार्थपक्षे कर्मत्वप्राप्त्यभावात् सप्तम्या 'स्थल्यामधिशेते' इत्यादिप्रयोगाणामपि साधुत्वं प्राप्नुयात् न चैतदिष्टमित्यर्थः । कृञर्थव्यापारानन्तर्भावेन भूपृष्ठादिसंयोगमात्रस्य धात्वर्थत्वपक्षे 'शेते' इत्यस्य 'भूपृष्ठादिसंयोगाश्रयः' इत्येवार्थः ।

'मासमास्ते' इत्यादिप्रयोगानुदाहरति— कालाध्वेति । कैश्चित्=वार्तिककारादिभिः, तथा च वार्तिकम्— "अकर्मकधातुभिर्योगे देशः कालो भावो गन्तव्योऽध्वा च कर्मसंज्ञक इति वाच्यम्" इति, तत्र देशस्य कर्मत्वं यथा— 'कुरून् स्वपिति' इति, कालस्य कर्मत्वं यथा—'मासमास्ते' इति, भावस्य ( क्रियायाः ) कर्मत्वं यथा 'गोदोहमास्ते' इति, गन्तव्याध्वनः कर्मत्वं यथा—

नुशिष्यते । अन्ये तु क्रियान्तराऽन्तर्भावेनोक्तरीत्या तत्र पाक्षिकं कर्मप्रत्ययमुपपादयन्तस्तन्नानुशासति. उक्तं च तैः—

" कालभावाध्वदेशानामन्तर्भूतक्रियान्तरैः ।
सर्वैरकर्मकैर्योगे कर्मत्वमुपजायते ॥ " इति ।

तन्मते च ' मासमधीते ' ' मासमास्ते ' ' योजनं धावति ' इत्यादावभिव्याप्त्यर्थे " कालाध्वनोरत्यन्तसंयोगे " इत्यनेन द्वितीयाविधानं यद्यप्यनर्थकम्—धात्वर्थेऽध्ययनस्थित्यादिविशेषणतयाऽभिव्यापनात्मकक्रियाया अन्तर्भावेन तत्कर्मतया तत्र तत्र द्वितीयोपपत्तेः, तादृशधात्वर्थ व्याप्त्यनन्तर्भावे ' मासमास्ते ' इत्यादौ द्वितीयया तद्बोधनेपि ' आस्यते मासः ' इत्यादौ मासादौ स्थित्याद-

---

' क्रोशमास्ते ' इति । अन्ये=सूत्रकारादयस्तु कालादीनां कर्मसंज्ञाविधानं न कुर्वन्ति ' मासमास्ते' इत्यादावासनरूपधात्वर्थे क्रियान्तरस्य=अभिव्याप्तिरूपक्रियाया अन्तर्भावोस्ति— मासाद्यभिव्याप्तेरासनादौ सत्त्वे एव कालादीनां कर्मत्वस्येष्टत्वादिति तादृशाभिव्याप्त्यैव कर्मत्वस्य प्राप्तेः केवलं कर्मप्रत्ययम्= " कालाध्वनोरत्यन्तसंयोगे " इत्यनेन द्वितीयाविधानं कुर्वन्ति । अत्यन्तसंयोगे एव द्वितीया भवति नान्यत्र ' मासस्य द्विरधीते ' इत्यादावित्यभिप्रायेणोक्तम्— पाक्षिकमिति । तत्=कर्मत्वम् । कर्मत्वस्य स्वयं प्राप्तौ प्रमाणमाह— कालभावेति, अन्तर्भूता अभिव्याप्तिरूपा क्रिया येषामेतादृशैरकर्मकैर्धातुभिर्योगे कालभावाध्वदेशानामभिव्याप्तिनिरूपितं कर्मत्वमुपजायते एवाऽभिव्याप्तेः सकर्मकत्वादिति कालादीनामकर्मकधातुयोगे कर्मसंज्ञाविधानस्य प्रयोजनं नास्तीत्यर्थः । तन्मते चेति— तन्मते=कालादीनामुक्तरीत्या स्वयमेव कर्मत्वप्राप्तिमते ' मासमधीते ' इत्यादौ धात्वर्थभूताध्ययनस्थित्यादिविशेषणीभूताया अभिव्याप्तिक्रियाया धात्वर्थेऽन्तर्भावोस्तीति धात्वर्थस्याकर्मकत्वेप्यन्तर्भूताभिव्याप्तिक्रियायाः सकर्मकत्वेन कालादीनां तत्कर्मतया तत्र तत्र= कालादिबोधकमासादिपदोत्तरम् " कर्मणि द्वितीया " इत्यनेनैव द्वितीयाप्राप्तिः संभवतीति पुनर्द्वितीयाविधानं यद्यप्यनर्थकमेवेत्यर्थः । विशेषणस्यैवान्तर्भावसंभवादऽभिव्यापनात्मकक्रियाया अध्ययनादिविशेषणत्वमुक्तम्— अध्ययनस्थित्यादीति । नन्वेवं विनिगमनाविरहात् कर्मसंज्ञाविधानमेवानर्थकं किं न स्यात्— ' मासमास्ते ' इत्यादौ द्वितीययैव कर्मत्वबोधसंभवादित्याशङ्क्याह— तादृशधात्वर्थेति, तादृशधात्वर्थे=अकर्मकधात्वर्थेऽभिव्याप्त्यनन्तर्भावपक्षेपि 'मासमास्ते ' इत्यादौ द्वितीयया तद्बोधनेपि=कर्मत्वबोधनेपि तथाऽभिव्याप्तिबोधनेपि 'आस्यते मासः' इत्यत्र मासपदोत्तरद्वितीयाऽभावात् कर्मत्वबोधनं न संभवति तथा च मासस्य स्थितिव्याप्यत्वभानमपि न संभवति. आसधातोरकर्मकत्वेन तदुत्तरं कर्माख्यातमपि न स्यात्. कर्मसंज्ञाविधाने तु धातोरकर्मकत्वेपि मासादीनां संज्ञया कर्मत्वप्राप्तौ तत्र कर्माख्यातं संभवति मासादौ स्थित्यादिव्याप्यत्वभानमपि संभवति— कर्मत्वादिति कर्मसंज्ञाविधानं नानर्थकं किं तु द्वितीयाविधायक-

व्याप्यत्वलाभासंनिर्वाहात्, तथापि 'मासं रमणीया' 'क्रोशं कुटिला नदी' इत्यादौ भवतीत्यस्याऽनध्याहारेपि द्वितीयायाः साधुतानिर्वाहकत्वेन भाष्यकृतस्तत्सूत्रं सार्थकयन्ति. तत्र हि रमणीयत्वाभिव्याप्यत्वं मासादौ प्रतीयते न च तत्र क्रियासमभिव्याहारोस्ति यत्राभिव्याप्तिरन्तर्भविष्यति तत्कर्मतया द्वितीया च स्यात्। एवम् 'मासमासिता' इत्यादावभिव्याप्त्यन्तर्भावेन मासस्य कर्मत्वोपपादनेपि कृद्योगात् षष्ठ्येव स्यान्न द्वितीयेत्यतोपि तत्सूत्रं सार्थकम्।

अथ केयमभिव्याप्तिर्याऽत्यन्तसंयोग इत्युच्यते?, न तावद्— व्याप्यवृत्तिः

---

सूत्रमेवानर्थकमित्यर्थः। द्वितीयाविधायकसूत्रसार्थक्यमाह— तथापीति, 'वनराजिर्मासं रमणीया' इत्यादौ भवतीत्यादिक्रियाध्याहारे तत्राभिव्याप्तेश्चान्तर्भावे तादृशाभिव्याप्तिनिरूपितं मासादीनां कर्मत्वं संभवति. अनध्याहारपक्षे तु क्रियैव कापि नास्ति यदन्तर्भूताभिव्याप्तिनिरूपितं मासादीनां कर्मत्वं स्यादिति. कर्मत्वाप्राप्तौ च द्वितीयायाः साधुत्वं न स्यादित्यनध्याहारपक्षे द्वितीयायाः साधुत्वार्थं भाष्यकृतः=भाष्यकारा द्वितीयाविधायकसूत्रं सार्थकयन्ति। उपपादयति—तत्रेति, तत्र='मासं रमणीया' इत्यादौ। तत्कर्मतया=अभिव्याप्तिकर्मतया। सूत्रसार्थक्ये उदाहरणान्तरमाह— एवमिति, 'मासमासिता' इत्यत्र मासस्य धात्वर्थेऽन्तर्भूताभिव्याप्तिनिरूपितकर्मत्वप्राप्तावपि सूत्राभावे "कर्तृकर्मणोः कृति" इत्यनेन षष्ठ्येव मासपदोत्तरं स्यात्— कृद्योगात्. न तु द्वितीया न चात्र षष्ठीष्टेति द्वितीयाविधायकं सूत्रं सार्थकमेव सूत्रे सति षष्ठीं बाधित्वा सूत्रेण द्वितीयाप्राप्तिसंभवादित्यर्थः। 'आस्यते मासः' इत्यादौ कर्मसंज्ञाविधानमपि सार्थकम्।

"कालाध्वनोरत्यन्तसंयोगे" इत्यनेनाध्ययनादौ मासादिव्यापकत्वे द्वितीया स्यादिति प्रतिपादनादऽत्यन्तसंयोगपदेन याभिव्याप्तिरुच्यते तत्स्वरूपं पृच्छति— अथेति। न तावदित्यस्य इति युक्तमित्यनेनान्वयः। ननु व्याप्यवृत्तिः=व्यापको यः कालिकसंबन्धः स एवाभिव्याप्तिरस्ति 'मासमधीते' इत्यत्राध्ययनस्य कालिकसंबन्धेन संपूर्णमासवृत्तित्वाद् व्याप्यवृत्तित्वं कालिकसंबन्धस्य लभ्यते, कालिकसंबन्धस्य व्याप्यवृत्तित्वं च मासव्याप्यदिनादिकालेनाऽनवच्छिन्नत्वमेव, यत्र च मासादिनिष्ठोपि कालिकसंबन्धो दिवसादिमात्रवृत्तित्वाद् दिवसाद्यवच्छिन्न एव तत्र कालिकसंबन्धस्य मासे व्याप्यवृत्त्याऽभावात् 'मासमास्ते' इत्यादिः प्रयोगो न भवति, मासे व्याप्यवृत्त्या सत्त्वे च प्रयोगो भवतीति दोषाभावात् यत्कालिकसंबन्धस्य मासादिव्याप्यवृत्तित्वं तदेवाभिव्याप्तिपदार्थः। मासपदार्थश्च त्रिंशद्दिनमात्रस्थायी कश्चिदखण्डपदार्थ एव ग्राह्यो न तु क्रियाप्रचयः=सूर्यपरिस्पन्दसमूहः, तथा सति=क्रियाप्रचयस्य मासपदार्थत्वे हि एकदिनमात्रनिष्ठसंबन्धस्यापि कासुचित् क्रियासु व्याप्यवृत्तितया ( एकदिनमात्राध्ययनस्थित्यादेः सत्त्वाद् दिनादिसमूहस्यैव च मासपदार्थत्वात् ) तत्र=तादृशदशायामपि तथाव्यवहारापत्तेः='मासमास्ते' 'मासमधीते' इत्यादिप्रयोगः स्यादिति तद्वारणाय त्रिंशद्दिनस्थायी कश्चिदखण्डपदार्थ एव मास इति स्वीकार्यमित्याशङ्क्याह— न तावदिति, इति युक्तमित्यन्तं पूर्वपक्षः। युक्तत्वाभावे हेतुमाह—

कालिकः संबन्धः कालिकसंबन्धस्य व्याप्यवृत्तित्वं व्याप्यकालानवच्छिन्नत्वम्, दिवसादिमात्रवृत्तिर्मासादिनिष्ठसंबन्धो दिवसाद्यवच्छिन्न इति तत्र 'मासमास्ते' इति न प्रयोगः । मासपदार्थश्चात्र त्रिंशद्दिनमात्रस्थायी कश्चिदखण्डः पदार्थो न तु क्रियाप्रचयः– तथा सति दिनैकादिमात्रस्थायिनोपि संबन्धस्य कासुचित् क्रियासु व्याप्यवृत्तितया तत्र तथाऽव्यवहारापत्तेरिति युक्तम्–'चैत्रो मासं काश्यां तिष्ठति' इत्यादौ काशीसंयोगस्य मासव्यापकस्यैकस्याभावेऽप्रामाण्यप्रसङ्गात्– संयोगव्यक्तीनां मासनिष्ठकालिकसंबन्धस्यावान्तरदण्डाद्यात्मककालावच्छिन्नत्वात् ।

न च संयोगानां भेदेपि चैत्रीयसंयोगत्वाद्यवच्छिन्ननिरूपितकालिकसंबन्धावच्छिन्नाधारता मासव्यापिकैकैव सा च नावान्तरकालावच्छिन्नेति तत्र तदनवच्छिन्नत्वबोधकमुक्तवाक्यं भवेदेव प्रमाणमिति वाच्यम्, सामान्यघटितविशेषधर्मावच्छिन्नाधिकरणताकूटादेव सामान्यधर्मावच्छिन्नवत्ताप्रत्ययोपपत्तेः शुद्धसामा-

---

चैत्र इति । यदि त्रिंशद्दिनमात्रस्थाय्यखण्डपदार्थ ( काल ) संबन्ध एवाभिव्याप्तिः स्यात्तदा 'चैत्रो मासं काश्यां तिष्ठति' इत्यादिवाक्यस्य प्रामाण्यं न स्यात्–मासव्यापकस्यैकस्य काशीसयोगस्याऽसंभवाद् गमनादिना पूर्वपूर्वसंयोगस्य नाशात् तथा संयोगव्यक्तीनां यो मासनिष्ठकालिकसंबन्धस्तस्य मासावान्तरदण्डादिकालैरवच्छिन्नत्वात्– संयोगस्यैकत्वाभावादिति नोक्तनिरूपणं युक्तमित्यर्थः ।

ननु 'मासं काश्यां तिष्ठति' इत्यत्र संयोगव्यक्तीनां दण्डाद्यात्मककालभेदेन भेदेपि संयोगत्वेन सकलसंयोगानामेकत्वात् संयोगत्वावच्छिन्ननिरूपिता कालिकसंबन्धावच्छिन्ना काशीनिष्ठाऽऽधारता मासव्यापिकैकैव नाऽवान्तरदण्डाद्यात्मककालावच्छिन्नेति तदनवच्छिन्नत्वबोधकम्= अवान्तरदण्डाद्यनवच्छिन्नत्वबोधकम् 'मासं काश्याम्' इत्युक्तवाक्यं तत्र=मासव्यापकोक्ताधारतायां भवेदेव प्रमाणमिति नोक्ताऽप्रामाण्यापत्तिप्रसङ्ग इत्याशङ्क्याह–न चेति । तत्तद्विशेषव्यक्तिनिरूपिताधिकरणतास्वीकारेण निर्वाहः संभवतीति सैव स्वीक्रियते न तु सामान्यधर्मावच्छिन्ननिरूपिता सामान्यत एकाधिकरणतेति न संयोगत्वावच्छिन्ननिरूपिता मासव्यापिका काश्यामेकाधिकरणता संभवतीति संयोगव्यक्तिभेदादधिकरणताभेदे प्राप्ते कालभेदेन च संयोगानां भेदे प्राप्ते मासव्यापकैकसंयोगासंभवात् 'मासं काश्याम्' इत्यस्योक्तमप्रामाण्यं स्यादेवेत्यभिप्रायेण परिहरति– सामान्यघटितेति, विशेषधर्मोपि सामानाधिकरण्येन सामान्यधर्मघटित एव भवतीति सामान्य(संयोगत्व ) घटितविशेषधर्मस्तद्व्यक्तित्वं तत्तत्संयोगव्यक्तिनिष्ठतत्तद्व्यक्तित्वधर्मावच्छिन्ननिरूपिताधिकरणताकूटादेव=तत्तदधिकरणताभिरेव सामान्यधर्मो यः संयोगत्वं तदवच्छिन्नवत्ता=तदवच्छिन्ननिरूपिताधिकरणताप्रत्ययोपपत्तेः ( निर्वाहात् ) केवलं सामान्यधर्मावच्छिन्न=संयोगत्वावच्छिन्ननिरूपितायामतिरिक्तायामधिकरणतायां मानाभावात्, तत्तत्संयोगव्यक्तिनिरूपिताधिकरणता च

न्यधर्मावच्छिन्ननिरूपिताधिकरणतायामतिरिक्तायां मानाभावात् । यत्र त्रिंशद्दिनेषु कमपि कालमधीतं तत्र मासेऽध्ययनसंबन्धस्याऽव्याप्यवृत्तितया 'मासमधीते' इति प्रयोगानुपपत्तिरपि न शक्यते वारयितुम् ।

उच्यते—अभिव्याप्तिर्यावदवयवसंबन्धः, यत्समुदायो मासादिपदार्थस्त एव तदवयवाः, एवं च त्रिंशद्दिनानां मासपदार्थतया त्रिंशद्दिनेषु किंचित्किंचित्कालावच्छेदेनाध्ययनसंबन्धेपि 'मासमधीते' इतिप्रयोगोपपत्तिः । त्रिंशद्दिनसंबन्धश्च दिनपर्याप्तत्रिंशत्त्वव्यापकत्वम्, तादृशत्रिंशत्त्वादेश्च मासादिपदप्रवृत्तिनिमित्तस्य मासादिपदादेव लाभाद् व्यापकत्वमात्रं द्वितीयार्थः ।

व्यापकत्वं च व्याप्यविशेषाऽघटितमखण्डं दुर्वचमिति खण्डशोऽभावप्रतियोगितावच्छेदकत्वमभावश्च द्वितीयार्थः । प्रथमाभावे प्रकृत्यर्थो मासादिराधेय-

नैका संभवति दण्डादिभेदेन भेदादित्युक्तवाक्यस्याप्रामाण्यं तदवस्थमेवेत्यर्थः । किं च मासस्याऽखण्डपदार्थत्वे यत्र त्रिंशद्दिनेष्वपि किंचित् किंचित् कालमधीतं न तादृशाखण्डकालपर्यन्तं तत्र मासेऽध्ययनसंबन्धस्य व्याप्यवृत्तित्वाभावात् 'मासमधीते' इतिप्रयोगानुपपत्तिरेव, इष्टं च तत्रास्य वाक्यस्य प्रामाण्यमित्याह— यत्रेति । कमपीत्यस्य नित्यं प्रति कमपीत्यर्थः ।

पृष्टमभिव्याप्तिस्वरूपमाह— उच्यते इत्यादिना । यावत्=सकलः । यत्समुदायः=दिनादीनां समुदायः । ते=दिनादयः । तदवयवाः=मासावयवाः । उपसंहरति— एवं चेति, यावदवयवसंबन्ध एवाभिव्याप्तिर्मासावयवाश्च दिनान्येवेति प्रत्येकदिने किंचित्कालाध्ययनेपि त्रिंशद्भिदनरध्ययनसंबन्धस्य जातत्वेन तत्र 'मासमधीते' इतिप्रयोग उपपद्यते एवेत्यर्थः । त्रिंशद्दिनसंबन्धपदार्थमाह— त्रिंशद्दिनेति, त्रिंशद्दिनपर्याप्तं यत् त्रिंशत्त्वं तद् व्यापकत्वमेव त्रिंशद्दिनसंबन्धपदार्थः । त्रिंशद्दिनपर्याप्तत्रिंशत्त्वं च मासपदप्रवृत्तिनिमित्तत्वान्मासपदलभ्यमेवेति पारिशेष्याद् व्यापकत्वमात्रं द्वितीयार्थः । तथा च त्रिंशद्दिनव्यापकाध्ययनकर्ता चैत्र इति वाक्यार्थबोधः । एवम् 'मासं काश्याम्' इत्यत्रापि मासावयवदिनेषु काश्यावयवप्रदेशेषु च संयोगोऽस्त्येवेति भवेदेव प्रामाण्यमिति ध्येयम् ।

'मासमधीते' इत्यादौ द्वितीयार्थभूतं यदध्ययनादौ मासादिव्यापकत्वं तस्य स्वरूपमाह— व्यापकत्वं चेति, अखण्डं व्यापकत्वं व्याप्यविशेषाऽघटितं दुर्वचमेव तथाहि यथा 'धूमसमानाधिकरणात्यन्ताभावाऽप्रतियोगित्वं व्यापकत्वं वह्नौ' इत्यादौ धूमादिलक्षणव्याप्यघटितमेव व्यापकत्वं वक्तुं शक्यते तथात्रापि 'मासत्वसमानाधिकरणात्यन्ताभावाप्रतियोगित्वं व्यापकत्वमध्ययने' इत्येवं मासत्वलक्षणव्याप्यघटितमेवाऽखण्डं व्यापकत्वं वक्तुं शक्यते एतादृशाखण्डस्य व्याप्यघटितस्य व्यापकत्वस्य द्वितीयार्थत्वे तद्घटितस्य व्याप्यस्य मासत्वस्यापि द्वितीयार्थत्वं प्राप्नुयात् न च मासत्वस्य द्वितीयार्थत्वं युक्तं मासत्वस्य प्रकृतिभूतमासपदवाच्यत्वात् द्वितीयार्थत्वस्वीकारे च मासत्वस्य द्विधा भानप्रसङ्गाद्. व्याप्यानामनन्तत्वेन व्याप्यभेदेन व्यापकत्वभेदापत्त्या तदनुगमासंभवाच्च खण्डशोऽभावप्रतियोगितावच्छेदकत्वमभावश्च द्वितीयार्थ इत्युच्यते अर्थात्—व्याप्यस-

तासंबन्धेनान्वेति । मासादिनिष्ठाभावप्रतियोगितावच्छेदकत्वत्वावच्छिन्नस्य च प्रतियोगितयाऽभावान्तरेऽन्वयः, तस्य चान्वयितावच्छेदकचैत्रकर्तृकाध्ययनत्वादिरूपस्वाश्रयघटितपरम्परासंबन्धेनाऽध्ययनादावन्वयः ।

प्रथमाभावे च प्रतियोगिव्यधिकरणत्वं विशेषणमुपादेयम्, तेन त्रिंशद्दिनेष्वेव च यत्राधीतं तत्र दिनावान्तरदण्डादावऽध्ययनाभावेप्युक्तप्रयोगोपपत्तिः । मासपदं च त्रिंशद्दिनपरमेव न तु तावत्कालस्थाय्यऽखण्डवस्त्वन्तरपरम्—एकदिना-

---

मानाधिकरणो योऽत्यन्ताभावस्तादृशाभावप्रतियोगितावच्छेदकत्वाभाववत्त्वमत्र व्यापकत्वं ग्राह्यमस्ति तस्यैव खण्डद्वयं कृतम्—"अभावप्रतियोगितावच्छेदकत्वमऽभावश्च" इति एतादृशं खण्डशो व्यापकत्वं द्वितीयार्थः, अत्र मासत्वप्रवेशाभावान्नोक्तदोषप्रसङ्ग इति भावः । तत्र 'मासमधीते' इत्यत्र मासेऽध्ययनाभावस्तु नास्तीति नृत्याभावो ग्राह्य इति मासनिष्ठो यः 'मासे नृत्यं न' इत्याकारकोऽत्यन्ताभावस्तत्प्रतियोगि नृत्यं प्रतियोगितावच्छेदकत्वं नृत्यत्वे प्राप्तं प्रतियोगितावच्छेदकत्वाभाववत्त्वमध्ययनत्वे वक्ष्यमाणसंबन्धेन चाध्ययने प्राप्तं तदेव व्यापकत्वं तत्र प्रथमाभावो मासनिष्ठ एवेति प्रथमाभावे द्वितीयाप्रकृत्यर्थस्य मासस्याऽऽधेयतासंबन्धेनान्वय इत्याह—प्रथमाभावेति । द्वितीयाभावस्य=मासनिष्ठाभावप्रतियोगितावच्छेदकत्वाभावस्य प्रतियोगि मासनिष्ठाभावप्रतियोगितावच्छेदकत्वमेवेति तस्य तादृशद्वितीयाभावे प्रतियोगितया=प्रतियोगितारूपेण स्वप्रतियोगिकत्वसंबन्धेन चान्वय इत्याह—मासादिनिष्ठेति । अभावान्तरे=द्वितीयाभावे । तस्य=द्वितीयाभावस्य ( मासनिष्ठात्यन्ताभावप्रतियोगितावच्छेदकत्वाभावस्य ) चान्वयितावच्छेदकं यच्चैत्रकर्तृकाध्ययनत्वम् ( अध्ययनस्यैव विशेष्यत्वादन्वयित्वम् ) तद्रूपो यः स्वाश्रयस्तद्घटितेन परम्परासंबन्धेन=स्वाश्रयाध्ययनत्ववत्त्वसंबन्धेनाध्ययनेऽन्वयः तथा हि—स्वं द्वितीयाभावः, मासनिष्ठाभावप्रतियोगितावच्छेदकत्वस्याभावोऽध्ययनत्वे वर्तते— अध्ययनत्वस्य मासनिष्ठाभावप्रतियोगितानवच्छेदकत्वादिति स्वस्य द्वितीयाभावस्याश्रयो यदऽध्ययनत्वं तद् अध्ययने वर्तते एवेति तादृशस्वाश्रयीभूताध्ययनत्ववत्त्वसंबन्धेन द्वितीयाभावस्याध्ययनेऽन्वय इति द्वितीयाभाववत्त्वादऽध्ययनस्य मासव्यापकत्वं प्राप्तमेवेत्यर्थः । मासत्वस्य व्याप्यत्वेन मासत्वव्याप्यमासस्यापि व्याप्यत्वं सुग्रहमेवेति विज्ञेयम् ।

प्रथमाभावेति— प्रथमाभावः प्रतियोगिव्यधिकरणः=दिनादिनिष्ठेऽध्ययनव्यधिकरणो नृत्याद्यभाव एव ग्राह्यस्तेन त्रिंशद्दिनेष्वपि यदा नित्यं किंचित्किंचित्कालमधीतं तत्र दिनावान्तरदण्डेऽध्ययनाभावेपि 'मासमधीते' इति प्रयोगानुपपत्तिर्नास्ति एतादृशस्याऽध्ययनसमानाधिकरणस्याध्ययनाभावस्याभावपदेनाऽग्रहणात्, प्रतियोगिव्यधिकरणस्यैवाऽभावस्य ग्रहणात्, अन्यथा प्रत्येकदिनेष्वध्ययनवदऽध्ययनाभावस्यापि सत्त्वाद् मासनिष्ठाभावप्रतियोगित्वमेवाध्ययनस्य स्यादिति 'मासमधीते' इति प्रयोगो नोपपद्येतेत्यर्थः । "त्रिंशद्दिनेष्वेव" इत्यत्रत्य एवकारोऽयोगव्यवच्छेदपरः । मासपदार्थमाह—मासपदं चेति । यदि मासपदं त्रिंशद्दिनस्थाय्यऽखण्डपदार्थपरं स्यात्तदा

ध्ययनस्थलेपि तादृशाखण्डकाले प्रतियोगिव्यधिकरणाध्ययनाभावासत्त्वेन 'मासमधीते' इति प्रयोगापत्तेः। मासघटकं च दिनं सूर्योदयावधि सूर्योदयान्तरपर्यन्तावस्थाय्यखण्डवस्तुरूपं न तु क्रियादिप्रचयः-तथा सत्येकैकक्रियादिव्यक्तेरपि मासत्वाधिकरणतया तत्र प्रतियोगिव्यधिकरणाध्ययनाभावसत्त्वेन व्यापकत्वरूपद्वितीयार्थस्य बाधापत्तेः।

'दिवसं स्वपिति' इत्यादौ च दिवसादि दं सूर्योदयावधिसूर्योदयान्तरपर्यन्तक्षणकूटपरमेव अतो नैकदण्डादिमात्रस्वप्ने तथाप्रयोगः।

अथ व्यापकत्वस्य द्वितीयार्थत्वे एकमासादिव्यापकाध्ययनस्थलेपि मासान्तरेऽध्ययनाभावसत्त्वेन मासत्वादिव्यापकताया अध्ययने बाधेन 'मासमधीते'

---

मासस्यैकस्मिन्नपि दिवसेऽध्ययने कृते तादृशाखण्डकालेऽध्ययनं जातमेवेत्यध्ययनव्यधिकरणस्याऽध्ययनाभावस्य तादृशाखण्डकालेऽसत्त्वेन तत्रापि 'मासमधीते' इतिप्रयोगः स्यादेव प्रतियोगिव्यधिकरणाभावासत्त्वे एतत्प्रयोगस्येष्टत्वादित्यर्थः। दिनपदार्थमाह—मासघटकं चेति। क्रियादिप्रचयः=सूर्यपरिस्पन्दप्रचयः। तथा सति=यदि क्रियासमूह एव दिनपदार्थः स्यात्तदा एकैकक्रियाव्यक्तेरपि मासत्वाधिकरणत्वं स्यात्तथा च तादृशक्रियावच्छेदकदण्डादिषु प्रतियोगिव्यधिकरणस्याप्यध्ययनाभावस्य सत्त्वादेवाध्ययने व्यापकत्वाप्राप्त्या द्वितीयार्थो व्यापकत्वं नैव संभवेत्, न हि दिनस्य प्रत्येकक्षणे प्रत्येकदण्डे वाध्ययनं भवति किं तु केषुचिदेव दण्डेषु। दिनस्याखण्डपदार्थत्वे दिनस्य कस्मिन्नपि भागेऽध्ययने कृते मासत्वाधिकरणीभूतदिनेष्वध्ययनसंबन्धादध्ययनस्य मासव्यापकत्वं संभवतीत्यर्थः।

'दिवसं स्वपिति' इत्यत्र दिवसपदं सूर्योदयावधि सूर्योदयान्तरपर्यन्तक्षणकूटपरमेवेति तादृशक्षणकूटेन स्वापसंबन्धे सत्येव 'दिवसं स्वपिति' इति प्रयोगो भवति न तु दण्डमात्रस्वप्नेपीत्याह—दिवसमिति। अत्र दिवसपदस्याखण्डवस्तुपरत्वे एकदण्डमात्रस्वप्नेप्यखण्डपदार्थेन स्वापसंबन्धे जाते 'दिवसं स्वपिति' इतिप्रयोगः स्यात् न चैतदिष्टमिति तद्वारणाय दिवसपदस्य तादृशक्षणकूटपरत्वमुक्तमिति भावः।

ननु 'मासमधीते' इत्यत्र यदि व्यापकत्वं द्वितीयार्थो मासव्यापकत्वं चाध्ययने उच्यते तदा मासान्तरस्यापि मासत्वाद् मासान्तरेऽध्ययनाभावे मासत्वावच्छिन्नव्यापकत्वस्याध्ययने बाधान्मासव्यापकाध्ययनस्थलेपि 'मासमधीते' इति प्रयोगानुपपत्तिरित्याशङ्कते—अथेति। ननु यद्यपि मासपदेन यत्किंचित्त्रिंशद्दिनमात्रवृत्तिविशेषधर्मप्रकारेण=तद्व्यक्तित्वेन रूपेण मासपदार्थस्योपस्थितिर्न संभवति येनाध्ययनस्योपस्थिततन्मासव्यक्तिमात्रव्यापकत्वं प्राप्नुयात् तथापि तद्धर्मवत्=मासत्वधर्मवत् यत्त्वं तन्मासव्यक्तिः ( अध्ययनाधिकरणमासव्यक्तिः ) तन्निरूपि यदाधेयत्वम् ( पूर्वं मासाधेयत्वं प्रथमाभावे उक्तं तत्स्मरणीयम् ) तादृशाधेयत्वसंबन्धेन मासपदार्थस्योक्तप्रथमाभावेऽन्वयः स्वीक्रियते इति यत्किंचिन्मास ( तन्मासव्यक्ति=अध्ययनाधिकरण

इत्यादिप्रयोगानुपपत्तिः । न च मासपदेन यत्किंचित्त्रिंशद्दिनमात्रवृत्तिविशेषधर्मप्रकारेणानुपस्थापनेपि तद्धर्मवत्स्वनिरूपिताधेयत्वसंबन्धेन मासपदार्थस्याभावेऽन्वयोपगमाद् यत्किंचिन्मासनिष्ठाभावप्रतियोगितानवच्छेदकत्वमन्वयितावच्छेदके लभ्यते इति न काप्यनुपपत्तिरिति वाच्यम्, तत्तन्मासमात्रवृत्तिधर्मविशेषाणां संबन्धघटकत्वेपि शाब्दबोधे संसर्गतात्पर्यज्ञानस्य हेतुतया संसर्गविशेषोपस्थितेरपेक्षितत्वात् । संबन्धघटक तादृशधर्मान् विशिष्याऽविदुषः शाब्दबोधानुदयप्रसङ्गात् । न चेष्टापत्तिः– अनुभवविरोधात् । अनागतादिमासवृत्तितादृशधर्माणां विशिष्य ज्ञानसामग्र्या असर्वज्ञस्य दुर्लभतयाऽस्मदादीनां सर्वेषामेव तादृशमासत्वव्यापकताबोधोच्छेदप्रसङ्गात् ।

---

सव्यक्ति ) निष्ठाभावप्रतियोगितानवच्छेदकत्वमन्वयितावच्छेदके=अध्ययनत्वे लभ्यते तद्वत्त्वं चाध्ययनेऽस्त्येवेत्येवंरूपेण तन्मासव्यक्तिव्यापकत्वमध्ययने सुलभमेव, तन्मासव्यक्तेश्च संसर्गकोटिप्रवेशात्तदुपस्थितेरप्यपेक्षा नास्तीति न काप्यनुपपत्तिरित्याशङ्क्याह–न चेति । परिहारमाह– तत्तन्मासमात्रेति, यथा 'नीलो घटः' इत्यत्रत्यबोधे 'नीलो घटः' इतिवाक्यमभेदसंसर्गबोधकं भवतु इत्येवं संसर्गविषयकतात्पर्यज्ञानस्यापि हेतुत्वं भवति तथा 'मासमधीते' इत्यत्रापि तत्तन्मासवृत्तिविशेषधर्माणाम्=तद्व्यक्तित्वानां संबन्धघटकत्वेपि शाब्दबोधे 'मासमधीते' इतिवाक्यं तन्मासव्यक्तित्वसंसर्गबोधकं भवतु इत्येवं संसर्गविषयकतात्पर्यज्ञानस्य हेतुत्वे प्राप्ते तद्व्यक्तित्वरूपस्यापि संसर्गस्योपस्थित्यपेक्षा प्राप्तैव तथा च मासपदेन तद्व्यक्तित्वेन रूपेण मासपदार्थोपस्थितिं विना निर्वाहो नास्ति न च तद्व्यक्तित्वेनोपस्थितिः संभवति. मासत्वावच्छिन्नयावन्मासव्यापकत्वं चाध्ययने बाधितमेवेति 'मासमधीते' इतिप्रयोगानुपपत्तिरेवेत्यर्थः । किं च संबन्धघटकतद्व्यक्तित्वरूपधर्मज्ञानाभाववतः ( माघमासेऽनेनाधीतमित्यादिज्ञानाभाववतः ) 'मासमधीते' इत्यनेन शाब्दबोधो न स्यात् न चैतदिष्टं विशिष्य तादृशधर्मज्ञानाभावेपि शाब्दबोधोदयदर्शनादित्याह– संबन्धघटकेति । भूततत्तन्मासव्यक्तित्वादिधर्माणां विशेषरूपेण ज्ञानसंभवेपि 'मासमध्येष्यते' इत्यादौ भविष्यन्मासवृत्तीनां तादृशधर्माणाम्=तद्व्यक्तित्वधर्माणां विशेषरूपेण ज्ञानसामग्र्याः=उपस्थित्यादेरस्मदाद्यऽसर्वज्ञानां दुर्लभतया=असंभवादऽध्ययने तादृश-(भविष्यत्) मासत्वव्यापकताबोधस्योच्छेद एव स्याद् ज्ञानसामग्र्या दुर्लभत्वे ज्ञानस्यासंभवादिति न तद्व्यक्तित्वस्य संबन्धकोटिप्रवेशोप्यऽदुष्ट इत्याह– अनागतेति ।

ननु 'मासमधीते' इत्याकारकवाक्यार्थविषयकं यदेव तात्पर्यं तदेव संसर्गविषयकमपि तात्पर्यम्. 'मासमधीते' इत्याकारकवाक्यजन्यज्ञाने च वाक्यार्थघटको यस्तन्मासव्यक्तित्वघटितः संबन्धउक्तरूपः ( तद्धर्मवत्स्वनिरूपिताधेयत्वसंबन्धः ) स संसर्गमर्यादयैव भासते इति विशेषरूपेणोपस्थित्यपेक्षाभावाद्विशेषरूपेणानुपस्थितस्यैवोक्तधर्मेण=तन्मासव्यक्तित्वधर्मेण घटितस्य संबन्धस्य=तन्मा-

न च तादृशवाक्यार्थतात्पर्यमेव संसर्गतात्पर्यम्. उक्तज्ञाने च वाक्यार्थघटकः संबन्धः संसर्गमर्यादयैव भासते इति विशेषरूपेणानुपस्थितस्यैवोक्तधर्मघटितसंबन्धस्य तात्पर्यज्ञाने बाधाभावबलात् शाब्दबोधे च तात्पर्यज्ञानबलाद् भानमनपवादमेवेति वाच्यम्, एकपदार्थविशिष्टापरपदार्थरूपवाक्यार्थविशेषिततत्प्रतीतीच्छारूपतात्पर्यविषयकनिश्चयस्य प्राक् वाक्यार्थानिश्चये दुर्घटतया तस्य शाब्दधीहेतुत्वे च योग्यतासंशयाच्छाब्दबोधानुपपत्तेर्विशकलिततत्तत्पदार्थतत्तत्संसर्गविषयकत्वविशेषितप्रतीतीच्छाज्ञानस्यैव शाब्दधीहेतुताया उपेयत्वात्. तत्र च तादृशसंसर्गोपस्थितेरवश्यापेक्षणीयत्वादिति चेत् ?,

---

सव्यक्तिनिरूपिताधेयत्वसंबन्धस्य तात्पर्यज्ञाने बाधाभावबलाद् भानमऽनपवादं शाब्दबोधे च तात्पर्यज्ञानबलाद् भानमनपवादमेवेति तद्व्यक्तित्वरूपविशेषधर्मघटितसंसर्गस्याश्रयणेपि तेन संसर्गेण मासपदार्थस्याभावेऽन्वयोपगमेपि च न काप्यनुपपत्तिरित्याशङ्क्याह— न चेति । परिहारमाह— एकपदार्थेति, एकपदार्थविशिष्टो योऽपरपदार्थः स एव वाक्यार्थो भवति तादृशवाक्यार्थविशेषिता या तत्प्रतीतीच्छा=वाक्यार्थप्रत्यायनेच्छा तादृशेच्छारूपं यत् तात्पर्यं तादृशतात्पर्यविषयकनिश्चयस्य वाक्यार्थनिश्चयसापेक्षत्वेन वाक्यार्थनिश्चयात् पूर्वं दुर्घटतया=असंभवात्, वाक्याथबोधो न स्यादेव वाक्यार्थबोधकारणीभूतस्योक्ततात्पर्यनिश्चयस्य वाक्यार्थबोधात्पूर्वमसंभवात्, दोषान्तरमाह— तस्येति, किं चोक्ततात्पर्यनिश्चयस्य शाब्दबोधहेतुत्वस्वीकारे एकपदार्थेऽपरपदार्थवैशिष्ट्यरूपाया योग्यतायाः संशयेपि या शाब्दबोधोत्पत्तिः सर्वशास्त्रसिद्धास्ति सा नोपपद्येत यतस्त्वया ह्येकपदार्थविशिष्टापरपदार्थविषयकतात्पर्यनिश्चयस्यैव शाब्दबोधहेतुत्वमुक्तं योग्यतापि चैकपदार्थेऽपरपदार्थवैशिष्ट्यमेवेति योग्यतातात्पर्ययोरेकरूपत्वे प्राप्ते तात्पर्यनिश्चये हि योग्यतानिश्चयोपि स्यादेव सर्वत्रेति योग्यतासंशयेन शाब्दबोधस्य क्वचिदपि प्रसङ्गो न स्यान्न चैतदिष्टं योग्यतासंशयेनापि शाब्दबोधस्वीकारादिति योग्यतासंशयादपि शाब्दबोधोपपत्त्यर्थं विशकलितं यत् तत्तत्पदार्थविषयकत्वम् ( मासमधीते इति वाक्यमऽध्ययनस्य मासव्यापकत्वबोधकं भवतु इति ) तत्संसर्गविषयकत्वं च ( तन्मासव्यक्तिनिरूपिताधेयत्वसंसर्गबोधकं भवतु इति ) ताभ्यां विशेषिता या वाक्यार्थप्रत्यायनेच्छा तद्विषयकज्ञानस्यैव ( एतादृशतात्पर्यज्ञानस्यैव ) शाब्दबोधहेतुता स्वीकार्या तत्र च=एतादृशसंसर्गविषयकतात्पर्यज्ञाने च तादृशसंसर्गोपस्थितेः= विशकलितरूपेण प्रविष्टस्य संसर्गतात्पर्यज्ञानविषयीभूतसंसर्गस्योपस्थितेरवश्यमपेक्षासत्त्वात् तदेकदेशभूततन्मासव्यक्तित्वधर्माणामनुपस्थितौ शाब्दबोधो नैव संभवति, न च तादृशतद्व्यक्तित्वानामुपस्थितिः संभवति न वा यावन्मासव्यापकत्वमध्ययने संभवतीति शाब्दबोधानुपपत्तिरेवेति प्रयोगानुपपत्तिरपीत्यर्थः । अत्र च योग्यताया उक्तवैशिष्ट्यरूपत्वात् तात्पर्यस्य च विशकलितपदार्थविषयकत्वात्तयोर्भेदे प्राप्ते तात्पर्यनिश्चयेपि योग्यतासंशयसंभवाद् योग्यतासंशये उक्तशाब्दबोधानुपपत्तिर्नास्तीति विज्ञेयम् ।

सत्यम्- मासादिघटकतावद्दिनादिनिष्ठत्रिंशत्त्वादिरूपमासत्वादिर्मासादिभेदेन नानैव, मासादिपदप्रवृत्तिनिमित्तता परमनुगतरूपेण, अन्यथा शक्त्यानन्त्यप्रसङ्गात्, सर्वोपसंहारेण व्युत्पत्तिं विना प्रागप्रतीतमासादेः शाब्दानुभवाऽनिर्वाहाच्च। न च त्रिंशत्त्वादिकं बुद्धिविशेषविषयत्वरूपं वाच्यम्- दिनादेर्द्रव्यानात्मकत्वेन तत्र गुणरूपसंख्याया असंभवात्, द्रव्यात्मकत्वेपि क्रमिकेषु तेषु संख्योत्पत्तेरसंभवात्, तत्र बुद्धेरनतिप्रसक्तं वैलक्षण्यमनुगतं दुर्वचम्- जातिरूपस्य तस्य संकरप्रसङ्गनिरस्तत्वात्, तत्तद्दिनविषयकत्वरूपस्य तत्तद्दिनाद्यननुगमेनाऽननुगतत्वादिति वाच्यम्, तावत्कालस्थायिनो द्रव्यस्यापि दिनादिरूपत्वसंभवात्। मीमांसकानुयायिभिरगत्या संख्यायाः पदार्थान्तरत्वोपगमाच्च संख्यादिरूपनानादिनादिनिष्ठानुगतत्रिंशत्त्वादेः सुवचत्वात्।

---

अथेत्यादिनाऽऽशङ्कितस्योत्तरमारभते- सत्यमित्यादिना, मासान्तरेऽध्ययनाभावेऽध्ययनस्य मासत्वावच्छिन्नव्यापकत्वं न संभवतीति यदुक्तं यद्यपि तत्सत्यं तथापि सकलमासेष्वेकं मासत्वं न स्वीक्रियते येनैषाऽनुपपत्तिः स्यात् किं तु मासत्वस्य संख्यारूपत्रिंशत्त्वरूपत्वेन तादृशत्रिंशत्त्वस्य प्रत्येकमासभेदेन भेदसंभवात् प्रतिमासं मासत्वं भिन्नमेवेत्येकमासमात्राध्ययनस्थलेऽध्ययनस्य मासत्वावच्छिन्नव्यापकत्वलाभात् 'मासमधीते' इतिप्रयोगे न काप्यनुपपत्तिरित्यर्थः। नन्वेवं मासपदशक्त्यानन्त्यं स्यादित्याशङ्क्याह- मासादिपदेति, अनुगतरूपेण=मासत्वत्वेन रूपेण। परमिति त्वर्थकः। मासत्वत्वस्य प्रवृत्तिनिमित्तत्वस्वीकारे हेतुमाह- सर्वेति, सर्वोपसंहारेण व्युत्पत्तिं विना=सकलमासविषयकशक्तिग्रहं विना प्रागप्रतीतमासादेः=भविष्यन्मासादेः शाब्दबोधविषयत्वासंभवात्। ननु संख्यादिरूपो गुणो द्रव्ये एव संभवति नाद्रव्ये दिनं च क्रियाप्रचयरूपत्वात् न द्रव्यभूतमिति दिनेषु मासत्वरूपत्रिंशत्त्वस्य संख्यारूपस्य संभवाऽभावात् त्रिंशत्त्वं बुद्धिविशेषविषयत्वरूपम् ( अयमेकोयमेक इत्याद्यपेक्षाबुद्धिविषयत्वरूपम् ) वाच्यम्= स्वीकार्यम्, दिनानां कालस्वरूपत्वेन द्रव्यात्मकत्वपक्षेपि त्रिंशद्दिनानामेकदा सत्त्वं न संभवति यत्र त्रिंशत्त्वसंख्याया उत्पत्तिः संभवेत् तस्मादपि त्रिंशत्त्वं बुद्धिविशेषविषयत्वमेव वाच्यम्, ननु तत्र 'मासमधीते' इत्यत्र त्रिंशद्दिनेषु या त्रिंशत्त्वबुद्धिर्भवति तादृशबुद्धेरनतिप्रसक्तं यत् किमपि वैलक्षण्यं त्रिंशद्दिनमात्रपर्याप्तं तदेव त्रिंशत्त्वमिति वक्ष्यामो न तु बुद्धिविशेषविषयत्वं त्रिंशत्त्वमित्याशङ्क्याह- तत्रेति, एतादृशं वैलक्षण्यमनुगतं दुर्वचमेवेत्यर्थः, दुर्वचत्वे हेतुमाह- जातीति, तादृशवैलक्षण्यस्य जातिरूपत्वमपि वक्तुं न शक्यते केनापि धर्मेण तस्य सांकर्यं स्यादेव सांकर्ये च जातित्वं न संभवति. तत्तद्दिनविषयकत्वरूपत्वमपि न वक्तुं शक्यते- तत्तद्दिनानामननुगमेन तद्घटितस्य तत्तद्दिनविषयकत्वस्याप्यननुगमादिति त्रिंशत्त्वादिकं बुद्धिविशेषविषयत्वमेव वाच्यमित्याशङ्क्याह- न चेति। परिहारमाह- तावदिति, तावत्कालस्थायिनः=सूर्योदयावधिसूर्योदयान्तरपर्यन्तस्थायिनः। त्रिंशद्दिनानां द्रव्यात्मकत्वे तेषु क्रमिकेष्वपि क्रमेण त्रिंशत्त्वरूपसंख्याया उत्पत्तौ

एवम्– 'मासमधीते चैत्रः' इत्यादावधिकरणतैव द्वितीयार्थः, मासादिपदार्थतावच्छेदकदिनपर्याप्तत्रिंशत्त्वादेर्धर्मिविशेषणतापन्नस्य द्वितीयार्थाधिकरणतायां चैत्रकर्तृकाध्ययनाधारतात्वादिव्याप्यधर्मावच्छिन्नं स्वरूपसंबन्धरूपमऽवच्छेद्यत्वं संसर्गतया भासते इत्युपगमेन सामञ्जस्यात्, यत्किंचिदेकमासं व्याप्य यत्राधीतं तत्राऽध्ययनाधारतानामवच्छेद्यतावच्छेदकाधारतावृत्त्यऽन्यतमत्वविशे-

---

बाधकं नास्तीत्यर्थः। मीमांसकमतमाह– मीमांसकेति, संख्यायाः पदार्थान्तरत्वे द्रव्यानात्मकेष्वपि त्रिंशद्दिनेषु संख्यारूपत्रिंशत्त्वस्य सत्त्वे बाधकं नास्तीत्यर्थः। संख्यारूपं यन्नानादिनादिनिष्ठमनुगतं त्रिंशत्त्वं तस्येत्यन्वयः। सुवचत्वात्=निरूपयितुं शक्यत्वात्। नानात्रिंशद्दिनसमुदायभूतमासनिष्ठं संख्यारूपं त्रिंशत्त्वं त्रिंशत्त्वत्वरूपेणानुगतमेव नाऽननुगतमिति न दोष इति भावः।

'मासमधीते' इत्यत्र व्यापकत्वस्य द्वितीयार्थत्वमुपवर्ण्य संप्रत्यधिकरणत्वस्य द्वितीयार्थत्वं वक्तुं पक्षान्तरमारभते– एवमिति, अत्र च पक्षे 'मासमधीते' इत्यस्य 'मासाधिकरणकाध्ययनकर्ता' इति शाब्दबोधः। मासादिपदार्थतावच्छेदकं त्रिंशद्दिनपर्याप्तं यत् त्रिंशत्त्वं तस्य धर्मिविशेषणतापन्नस्य=मासरूपधर्मिविशेषणीभूतस्य द्वितीयार्थाधिकरणतायामन्वयः कर्तव्यः स चान्वयश्चैत्रकर्तृकाध्ययनाधारतात्वादिव्याप्यधर्मावच्छिन्नस्वरूपसंबन्धरूपावच्छेद्यत्वसंसर्गेण कर्तव्य इत्यन्वयः, मासरूपधर्मिविशेषणतापन्नस्य त्रिंशत्त्वस्य येनावच्छेद्यत्वसंसर्गेण द्वितीयार्थाधिकरणतायामन्वयस्तेनैवावच्छेद्यत्वसंसर्गेण द्वितीयार्थाधिकरणतायां प्रकृत्यर्थस्य मासस्याप्यन्वय इत्यर्थादेव लभ्यते, "एकत्र विशेषणत्वेनोपस्थितस्य" इति व्युत्पत्तिविरोधात् मासविशेषणीभूतस्य त्रिंशत्त्वस्य स्वातन्त्र्येण द्वितीयार्थाधिकरणतायामन्वयो न संभवतीति मासरूपधर्मिद्वारान्वयार्थमेव "धर्मिविशेषणतापन्नस्य" इत्युक्तं तथा च नोक्तव्युत्पत्तिविरोधः। चैत्रकर्तृकेति– चैत्रकर्तृकाध्ययनाधारतासु चैत्रकर्तृकाध्ययनाधारतात्वमप्यस्ति अन्यतमत्वमप्यस्त्येव– नानात्वात् नानात्वाक्रान्तपदार्थेष्वेवान्यतमत्वव्यपदेशात्. तत्राधारतात्वमधिकदेशवृत्तित्वाद् व्यापकम्. अन्यतमत्वं चाल्पदेशवृत्तित्वाद् व्याप्यम्. तथा च चैत्रकर्तृकाध्ययनाधारतात्वापेक्षया व्याप्यो यो धर्मोऽन्यतमत्वं तदवच्छिन्नं स्वरूपसंबन्धरूपं यद् अवच्छेद्यत्वं तद् द्वितीयार्थाधिकरणतायामस्त्येवेति संसर्गतया शाब्दबोधे भासते नाम तेनावच्छेद्यत्वसंसर्गेण द्वितीयार्थाधिकरणतायां त्रिंशत्त्वस्यान्वय इत्यर्थः। अत्र "अवच्छेद्यतावच्छेदकाधारतावृत्त्यन्यतमत्वविशेषादि" इत्यादिवाक्यानुरोधेन व्याप्यधर्मपदेनान्यतमत्वं गृह्यते। अवच्छेद्यत्वं चानतिप्रसक्तस्वरूपमपि भवति स्वरूपसंबन्धरूपमपि भवति तत्र द्वितीयार्थाधिकरणताया अध्यापनादिमासेष्वपि सत्त्वादनतिप्रसक्तस्वरूपावच्छेद्यत्वस्यासंभवात् स्वरूपसंबन्धरूपमेवावच्छेद्यत्वं ग्रहीतुं शक्यते इत्युक्तं स्वरूपसंबन्धेति। द्वितीयार्थाधिकरणतायामवच्छेद्यत्वमप्यस्ति अन्यतमत्वमप्यस्तीत्यवच्छेद्यत्वं सामानाधिकरण्यादन्यतमत्वावच्छिन्नं जातम्। अत्र द्वितीयार्थाधिकरणतायां त्रिंशत्त्वस्योक्तावच्छेद्यत्वसंसर्गेणान्वयात् त्रिंशत्त्वावच्छिन्नपूर्णमासाधिकरणकत्वमध्ययने प्राप्नोति स एव 'मासमधीते' इत्यस्यार्थः।

उक्तस्य फलमाह–यत्किंचिदिति, यत्र=यदा यत्किंचिदेकमासम्=एकमासमात्रं व्याप्याधीतं

**षादिरूपोक्तधर्मावच्छिन्नाऽनतिप्रसक्तेन तद्वृत्तित्रिंशत्त्वेनाऽवच्छेदाद्. न्यूनकालाध्ययनस्थले चातिप्रसक्ततया तादृशस्य मासत्वस्योक्तरूपावच्छिन्नाधारताऽनवच्छेदकत्वाच्चाऽप्रसङ्गातिप्रसङ्गयोरनवकाशात्। मासादिपदप्रवृत्तिनिमित्तधर्मे चैत्राध्ययनाधारताया व्याप्यत्वस्य शब्दादलाभेप्यर्थतस्तल्लाभाद्द्वितीयाया अत्यन्तसंयोगार्थपरत्वमिति नानुशासनविरोधः ।**

---

तत्र=तदाप्यध्ययनाधारतानां तद्वृत्तित्रिंशत्त्वेन=तन्मासमात्रवृत्तितत्त्रिंशत्त्वेनावच्छेदाद् अप्रसङ्गः=' मासमधीते ' इतिप्रयोगस्यानुपपत्तिर्नास्तीत्यन्वयः, मासेऽध्ययनाधारतापि वर्तते त्रिंशत्त्वमपि वर्तते इति त्रिंशत्त्वेनाध्ययनाधारतानामवच्छेदः, किं वा द्वितीयार्थभूताध्ययनाधारतासूक्तावच्छेद्यत्वसंसर्गेण तत्त्रिंशत्त्वस्यान्वयात् तेन त्रिंशत्त्वेनाध्ययनाधारतानामवच्छेदः । तद्वृत्तित्रिंशत्त्वं विशिनष्टि—अवच्छेद्यतेति, द्वितीयार्थाधिकरणतायां संसर्गभूतं यद् अवच्छेद्यत्वं वर्तते तस्यावच्छेदकीभूतो योधिकरणतावृत्त्यन्यतमत्वविशेषस्तद्रूपोक्तधर्मेण ( त्रिंशत्त्वेन ) अवच्छिन्नो यो मासस्तदनतिप्रसक्तेन तद्वृत्ति ( तन्मासवृत्ति ) त्रिंशत्त्वेनेत्यन्वयः । तन्मासमात्रवृत्तित्रिंशत्त्वं तन्मासातिप्रसक्तं नास्तीति सुस्पष्टम्. अनतिप्रसक्तत्वात्तस्य स्वसमानाधिकरणाध्ययनाधारतावच्छेदकत्वं युक्तमेव तथा च तत्त्रिंशत्त्वं तन्मासमात्रे वर्तते नाधिककाले मासमात्रं चाधीतमेवेत्येकमासमात्राध्ययनस्थलेपि ' मासमधीते ' इतिप्रयोगस्यानुपपत्तिर्नास्तीत्यर्थः । अतिप्रसङ्गाभावमाह—न्यूनकालेति, यदा हि मासापेक्षया न्यूनकालमऽधीतं तत्र तादृशस्य=त्रिंशत्त्वरूपस्य मासत्वस्याध्ययनकालापेक्षयाऽधिककाले ( सर्वमासे ) वर्तमानत्वेनातिप्रसक्तत्वाद् उक्तरूपेण ( अन्यतमत्वेन ) अवच्छिन्ना याऽध्ययनाधारता तदवच्छेदकत्वं न संभवतीति तादृश स्थले अतिप्रसङ्गः=' मासमधीते ' इतिप्रयोगस्यापत्तिर्नास्तीति न कोपि दोष इत्यर्थः । ननु व्यापकत्वस्य द्वितीयार्थत्वे तु मासादिपदप्रवृत्तिनिमित्तधर्मे मासत्वादौ यत् चैत्रीयाध्ययनाधारताव्याप्यत्वं तस्य द्वितीयाविभक्तित एव लाभः संभवति—व्यापकत्वस्य व्याप्यनिरूपितत्वाद् व्याप्यघटितत्वाच्च व्यापकत्वार्थकद्वितीयाया व्याप्यत्वाक्षेपकत्वात्, अत्र च पक्षे द्वितीयाया अधिकरणतार्थकत्वेन तद्वद् व्याप्यत्वाक्षेपकत्वासंभवाद् मासत्वस्याध्ययनाधारताव्याप्यत्वं शब्दतो न प्राप्तमिति " कालाध्वनोरत्यन्तसंयोगे " इत्यनेन द्वितीयाया यदऽत्यन्तसंयोगार्थपरत्वमुक्तं तदत्र न प्राप्नोति—अत्यन्तसंयोगस्याभिव्याप्तिरूपत्वाद् अभिव्याप्तेश्चोक्तरीत्या व्यापकत्वस्वरूपत्वाद् अध्ययननिष्ठतादृशव्यापकत्वस्य च मासत्वनिष्ठव्याप्यत्वं विनानुपपद्यमानत्वात् तादृशव्याप्यत्वस्य च केनापि पदेनात्र लाभाभावाद् द्वितीयाया अत्यन्तसंयोगबोधकत्वं न स्यादित्याशङ्क्याह—मासादिपदेति, मासादिपदप्रवृत्तिनिमित्तधर्मे=मासत्वे वा त्रिंशत्त्वे वा. " चैत्राध्ययनाधारतायाः " इति षष्ठ्यर्थो निरूपितत्वमिति मासत्वे चैत्राध्ययनाधारतानिरूपितव्याप्यत्वस्य शब्दतो लाभाभावेपि अर्थतः=अर्थात् तल्लाभात्=मासत्वेऽध्ययनाधारतानिरूपितव्याप्यत्वस्य लाभात् ' मासमधीते ' इत्यादौ द्वितीयायाः " कालाध्वनोरत्यन्तसंयोगे " इत्यनुशासनवि-

**न च 'भूतले घटः' 'भूतलं घटवत्' इत्यादि प्रत्ययबलादतिप्रसक्तोपि धर्म आधेयत्वाधारत्वयोरवच्छेदक इति वाच्यम्, तादृशप्रत्ययेऽवच्छेदकत्वभानानुपगमात् । आधेयताया अतिप्रसक्तधर्मावच्छेद्यत्वे साध्यसामानाधिकरण्यावच्छेदकधर्मात्मकव्याप्तिशरीरे मिश्रादीनां स्वरूपसंबन्धरूपावच्छेदकत्वनिवेशस्य "व्यभि-**

---

हितमत्यन्तसंयोगार्थपरत्वं नानुपपन्नमिति नोक्तानुशासनविरोध इत्यन्वयः । अर्थतो नामात्र द्वितीयार्थाधिकरणतायामवच्छेद्यत्वसंसर्गेण त्रिंशत्त्वरूपमासत्वस्योक्तरीत्यान्वयेनार्थादेवाधिकरणतायां व्यापकत्वं मासत्वे च व्याप्यत्वं प्राप्तम्—अन्वयप्रतियोग्यनुयोगिनोर्व्याप्यव्यापकभावसंभवादत्र च मासत्वस्यान्वयप्रतियोगित्वादित्यनुसंधेयम् । अभियुक्तैरप्युक्तम्—" यस्य यन्निष्ठावच्छेद्यत्वनिरूपकत्वं तस्य तद्व्याप्यत्वम् " इति ।

ननु ' भूतले घटः ' इत्यत्र घटे वर्तमानाऽऽधेयता घटत्वावच्छिन्नास्ति घटत्वं चैतद्भूतलावृत्तिष्वप्याधेयताशून्येषु घटेषु वर्तत एवेत्यतिप्रसक्तमेव तथापि घटत्वे आधेयतावच्छेदकत्वमस्त्येव तथा 'भूतलं घटवत्' इत्यत्र भूतले वर्तमानाऽऽधारता भूतलत्वावच्छिन्नास्ति भूतलत्वं चान्येष्वप्याधारताशून्येषु भूतलप्रदेशेष्वस्त्येवेत्यतिप्रसक्तस्यापि भूतलत्वस्याधारतावच्छेदकत्वमस्त्येव; तथा च प्रकृतेपि न्यूनकालाध्ययनस्थलेतिप्रसक्तस्यापि मासत्वस्याध्ययनाधारतावच्छेदकत्वप्राप्त्या मासापेक्षया न्यूनकालाध्ययनेपि ' मासमधीते ' इतिप्रयोगापत्तिरूपोतिप्रसङ्गः स्यादेवेत्याशङ्क्याह— न चेति । परिहारमाह— तादृशेति, ' भूतले घटः ' इत्यादिवाक्यजन्यबोधे घटत्वादावाधेयत्वाद्यवच्छेदकत्वस्य भानमेव न भवति येनातिप्रसक्तधर्मस्याधारताद्यवच्छेदकत्वं प्राप्नुयादित्यर्थः । अतिप्रसक्तधर्मस्याऽऽधेयतावच्छेदकत्वं न भवतीत्यत्र प्रमाणमाह— आधेयताया इति, यद्याधेयताया अतिप्रसक्तधर्मेणाप्यवच्छेद्यत्वम्=अवच्छिन्नत्वं स्यात्तदा " व्यभिचारिण्यतिव्याप्त्या न ह्यतिप्रसक्तमवच्छेदकम् " इति तत्स्थलीयचिन्तामणिपरिष्कारविरोधेन साध्यसामानाधिकरण्यावच्छेदकधर्मात्मकव्याप्तिशरीरे मिश्रादीनां स्वरूपसंबन्धरूपावच्छेदकत्वनिवेशस्याऽसंभवदुक्तिकता प्राप्नुयादित्यन्वयः, अयमर्थः— " साध्यसामानाधिकरण्यावच्छेदकधर्मो व्याप्तिः " इत्युक्तमर्थात्— वह्न्यादिसाध्यसामानाधिकरण्यं धूमेस्ति तदवच्छेदको यो धूमत्वरूपो धर्मः स एव व्याप्तिरित्युक्तं तत्र साध्यसामानाधिकरण्यं हि साध्याधिकरणवृत्तित्वमेव वृत्तित्वं चाधेयत्वमेवेति तादृशाधेयतावच्छेदकत्वं धूमत्वस्यैतादृशव्याप्तिलक्षणेन प्राप्तं चिन्तामणिकारेण च " साध्यसामानाधिकरण्यावच्छेदकधर्मो व्याप्तिः " इत्यत्र " व्यभिचारिण्यतिव्याप्त्या न ह्यतिप्रसक्तमवच्छेदकम् " इत्युक्तम्, अर्थादतिप्रसक्तोपि धर्मो यद्यवच्छेदकः स्यात् तदाऽयोगोलके धूमाधिकरणता नास्ति वह्न्यधिकरणता त्वस्त्येवेति धूमसामानाधिकरण्याभाववत्यप्ययोगोलकवृत्तिवह्नौ सत्त्वेन वह्नित्वमतिप्रसक्तमस्ति कचिन्महानसाद्यन्तर्भावेण च धूमसामानाधिकरण्यावच्छेदकत्वमपि वह्नित्वे प्राप्नोतीति यद्यतिप्रसक्तधर्मोप्यवच्छेदकः स्यात्तदा वह्नित्वस्यापि धूमसामानाधिकरण्यावच्छेदकत्वात् व्याप्तित्वं स्यात्तादृशव्याप्त्याश्रयत्वाद् वह्नेरपि धूमानुमापकत्वं स्यान्न चैतदिष्टं वह्नेर्धूमव्यभिचारि-

चारिण्यतिव्याप्त्या न ह्यतिप्रसक्तमवच्छेदकम् " इति तत्स्थलीयचिन्तामणिपरिष्कारविरोधादऽसंभवदुक्तिकतापत्तेः । आधारताया अतिप्रसक्तधर्मावच्छेद्यत्वे "यद्धेत्वधिकरणत्वं साध्याधिकरणतावच्छेदकम्" इतितल्लक्षणव्याख्यापक्षे स्वरूपसंबन्धरूपावच्छेदकत्वप्रवेशं व्यभिचारिण्यतिव्याप्त्याऽदूषयित्वा " विरुद्धदिक्कालावच्छिन्नवृत्तिकस्य " इत्यादिदूषणान्तरेण तत्परित्यज्य दीधितिकृतामनतिरिक्तवृत्तित्वरूपावच्छेदकत्वविवक्षाया असंगत्यापत्तेः ।

अस्तु वाऽव्यासज्यवृत्तिधर्मस्यातिप्रसक्तस्यापि दर्शितप्रतीतिबलादाधाराधे-

---

त्वादिस्यऽतिप्रसक्तधर्मस्यावच्छेदकत्वं न भवतीति न वह्नित्वस्य धूमसामानाधिकरण्यावच्छेदकत्वमिति, मिश्रेण च " साध्यसामानाधिकरण्यावच्छेदकधर्मो व्याप्तिः " इत्यत्र वह्निं विनापि निस्सारितवह्निस्थले धूमस्य दर्शनाद् धूमत्वे यद् वह्निसामानाधिकरण्यावच्छेदकत्वं तत्स्वरूपसंबन्धरूपमेवावच्छेदकत्वमस्ति न त्वनतिप्रसक्तत्वरूपमवच्छेदकत्वमित्युक्तं तत्र यद्याधेयताया अतिप्रसक्तधर्मावच्छेद्यत्वमपि स्यात्तदा साध्याधिकरणवृत्तित्वरूपाधेयताया अतिप्रसक्तेनापि धूमत्वेनोक्तरीत्याऽवच्छेद्यत्वप्राप्त्या ' धूमस्योक्ताधेयतावच्छेदकत्वं यदस्ति तत्स्वरूपसंबन्धरूपमेवास्ति न त्वऽनतिप्रसक्तत्वरूपम् ' इत्याकारकमिश्रकृतनिवेशस्याऽसंभवदुक्तिकतैव स्यात्– आधेयताया अतिप्रसक्तधर्मावच्छेद्यत्वे उक्तमिश्रकृतनिवेशस्य व्यर्थत्वापातादित्यर्थः प्रतिभाति । अतिप्रसक्तधर्मस्याऽऽधारतावच्छेदकत्वमपि न भवतीत्यत्र प्रमाणमाह– आधारताया इति । तल्लक्षणेति– "साध्यसामानाधिकरण्यावच्छेदकधर्मो व्याप्तिः" इतिव्याप्तिलक्षणस्य "यद्धेत्वधिकरणत्वं साध्याधिकरणतावच्छेदकम् " इत्याकारकव्याख्यापक्षे स्वरूपसंबन्धरूपावच्छेदकत्वप्रवेशं व्यभिचारिण्यतिव्याप्त्या दूषयित्वा वाऽदूषयित्वा वा विरुद्धदिक्कालेत्यादिदूषणान्तरेण स्वरूपसंबन्धरूपावच्छेदकत्वप्रवेशं परित्यज्य दीधितिकारेण यदत्र 'हेत्वधिकरणत्वे साध्याधिकरणतावच्छेदकत्वं यदस्ति तदऽनतिरिक्तवृत्तित्वरूपम्=अनतिप्रसक्तत्वरूपमेवास्ति ' इत्युक्तं तस्याऽऽधारताया अतिप्रसक्तधर्मावच्छेद्यत्वेऽसंगतिरेव स्यात्– आधारताया अतिप्रसक्तधर्मावच्छेद्यत्वे हेत्वधिकरणत्वेऽनतिरिक्तवृत्तित्वरूपावच्छेदकत्वविवक्षाया व्यर्थत्वादित्यर्थः । तथा च प्रकृते मासापेक्षया न्यूनकालाध्ययनस्थलेऽतिप्रसक्तस्य मासत्वस्याध्ययनाधारतावच्छेदकत्वाभावात् ' मासमधीते ' इतिप्रयोगापत्तिरूपोतिप्रसङ्गो नास्तीति भावः । अत्र " चिन्तामणिपरिष्कारविरोधात् " इत्यत्र ' चिन्तामणिपरिष्कारस्य च ' इत्येवं पाठो युक्त इति संभाव्यते– उक्तमिश्रकृतनिवेशे चिन्तामणिपरिष्कारविरोधासंभवादित्यनुसंधेयम् । उदाहृतवाक्यानां विशेषतोर्थप्रतिपत्तिस्तु तत्तत्संदर्भेणैव संपाद्या । अतिप्रसक्तधर्मस्याधारताद्यवच्छेदकत्वं न भवतीत्ययमेवात्र प्रघट्टकार्थः । वस्तुतस्तु ' मासमधीते ' इत्यादिमूलग्रन्थः क्लेशकर एव छात्राणाम् ।

' भूतले घटः ' इत्यादिप्रतीतौ घटत्वादीनामाधेयत्वाद्यवच्छेदकत्वमभ्युपगम्याह–अस्तु वेति, दर्शितप्रतीतिबलात्='भूतले घटः' इत्यादिप्रतीतिबलात् । घटत्वं ह्यऽव्यासज्यवृत्तिधर्मोस्तीति

यभावावच्छेदकत्वम्, व्यासज्यवृत्तेस्त्वतिप्रसक्तस्य तदवच्छेदकत्वमप्रसक्तम्—'क्षितिजलोभयं गन्धवत्' 'स्नेहगन्धोभयं क्षितौ' इत्याद्यप्रतीतेः।

अथ वा द्वितीयाद्यर्थेऽध्ययनाधारत्वे तत्तन्मासादिरूपप्रकृत्यर्थविशेषणतापन्न-तत्तन्मासत्वादिव्यक्तीनां व्यापकतासंबन्धेन स्वपारतन्त्र्येण विशेषणत्वमुपेयते, तादृशं च व्यापकत्वं स्वसमानाधिकरणव्याप्यवृत्त्यभावप्रतियोगितावच्छेदकत्वसंबन्धेन स्वावच्छिन्नस्य यो भेदस्तदाश्रयधर्मवत्त्वम्. तादृशधर्मश्च 'चैत्रो मास-

---

तस्योक्तरीत्यातिप्रसक्तस्याप्याऽऽधेयतावच्छेदकत्वं संभवति 'भूतलं घटवत्' इत्यत्र भूतलत्वमप्यव्यासज्यवृत्तिधर्मोऽस्तीति तस्योक्तरीत्यातिप्रसक्तस्याप्याधारतावच्छेदकत्वं संभवति, व्यासज्यवृत्तिधर्मस्य त्वतिप्रसक्तस्याधारत्वाद्यवच्छेदकत्वं न संभवति. अन्यथा 'क्षितिजलोभयं गन्धवत्' इत्यत्र गन्धनिष्ठाधेयतानिरूपकाधारतावच्छेदकत्वमऽतिप्रसक्तस्यापि व्यासज्यवृत्तिधर्मस्य क्षितिजलोभयत्वस्य स्यात् तथा च 'क्षितिजलोभयं गन्धवत्' इत्यपि प्रतीतिः स्याद् न चैवं प्रतीतिर्भवति—गन्धस्य क्षितिमात्रवृत्तित्वस्वीकारात्, व्यासज्यवृत्तिधर्मस्यातिप्रसक्तस्याधेयतावच्छेदकत्वे 'स्नेहगन्धोभयं क्षितौ' इत्यत्र क्षितिनिष्ठाधारतानिरूपकाधेयतावच्छेदकत्वमतिप्रसक्तस्यापि व्यासज्यवृत्तिधर्मस्य स्नेहगन्धोभयत्वस्य स्यात् तथा च 'स्नेहगन्धौ क्षितौ' इत्यपि प्रतीतिः स्याद् न चैवं प्रतीतिर्भवति—स्नेहस्य जलमात्रवृत्तित्वेन स्नेहे क्षितिनिष्ठाधारतानिरूपकाधेयताया अभावात्, क्षितिजलोभयत्वं हि गन्धाभाववति जलेऽप्यस्त्येवेत्यतिप्रसक्तम्, स्नेहगन्धोभयत्वं च क्षित्यऽवृत्तिस्नेहेऽप्यस्तीत्यतिप्रसक्तमिति बोध्यम्। तथा च प्रकृते मासत्वमपि त्रिंशद्दिनेषु व्यासज्य वर्तते अथ च मासापेक्षया न्यूनकालाध्ययनस्थलेऽध्ययनाऽनधिकरणदिनेष्वपि वर्तते इत्यतिप्रसक्तमपीति तत्र मासत्वस्याप्यध्ययनाधारतावच्छेदकत्वं न संभवतीति मासापेक्षया न्यूनकालाध्ययनस्थले 'मासमधीते' इति प्रयोगस्यापत्तिर्नास्तीत्यर्थः।

पक्षान्तरमाह—अथ वेति, 'मासमधीते' इत्यत्राधिकरणतैव द्वितीयार्थ इति ( ३५८ ) यदुक्तं तत्र द्वितीयार्थाध्ययनाधारत्वे व्यापकतास्त्येवेति तेन संबन्धेन स्वपारतन्त्र्येण=धर्मिपारतन्त्र्येण=मासद्वारा तत्तन्मासादिरूपो यो प्रकृत्यर्थस्तत्र विशेषणतापन्नं यत् तत्तन्मासत्वं तद्व्यक्तीनां विशेषणत्वं स्वीक्रियते इत्यन्वयः। उक्तसंबन्धभूतव्यापकत्वस्य स्वरूपमाह—तादृशमिति, तादृशम्=संबन्धभूतम्। स्वसमानाधिकरणेति—स्वं तत्तन्मासत्वं तत्समानाधिकरणो व्याप्यवृत्तिः ( मासव्यापकः ) च योऽभावो मासे नृत्याधिकरणता नास्तीत्यऽभावस्तत्प्रतियोगितावच्छेदकत्वं नृत्याधिकरणतात्वेऽस्तीत्येतादृशेन स्वसमानाधिकरणव्याप्यवृत्त्यभावप्रतियोगितावच्छेदकत्वसंबन्धेन स्वावच्छिन्नम्=तत्तन्मासत्वावच्छिन्नं यन्नृत्याधिकरणतात्वं तस्य ( स्वावच्छिन्नस्य=नृत्याधिकरणतात्वस्य ) यो भेदस्तदाश्रयो यो धर्मः=अध्ययनाधिकरणतात्वरूपो धर्मस्तद्वत्त्वमऽध्ययनाधिकरणतायामस्त्येव—नृत्याधिकरणतात्वापेक्षयाऽध्ययनाधिकरणतात्वस्य भिन्नत्वादेव, एतादृशभेदाश्रयधर्मवत्त्वमेवात्र व्यापकत्वं ग्राह्यम्, यथा धूमसमानाधिकरणात्यन्ताभावप्रतियोगि-

मधीते ' इत्यादौ चैत्रीयाध्ययनाद्याधारतात्वं विशिष्यैव संबन्धेऽन्तर्भावनीयम् । मासान्तरनिष्ठताद्दशाभावप्रतियोगितावच्छेदकत्वस्य ताद्दशधर्मे सत्त्वेपि तत्तन्मासत्वसमानाधिकरणाभावप्रतियोगितानवच्छेदकताद्दशधर्मे उक्तसंबन्धेन तत्तन्मासत्वाद्यवच्छिन्नस्य यो भेदस्तदाश्रयत्वमक्षतमेवेति यत्किंचिदेकमासादिमात्रव्यापकाध्ययनादिस्थलेपि ताद्दशप्रयोगनिर्वाहः ।

'प्रतिमासमधीते' इत्यादौ प्रत्यादिशब्दानां मासादिपदोपस्थाप्यानुगतरूपावच्छिन्नमासत्वादिमन्निष्ठाभावप्रतियोगितावच्छेदकत्वसामान्याभावघटितव्यापकताबोधकतया यत्किंचिदेकमासव्यापकाध्ययनादिस्थले न ताद्दशः प्रयोगः ।

---

तावच्छेदकत्वसंबन्धेन धूमविशिष्टं यद् घटत्वं तद्भिन्नधर्म ( वह्नित्वधर्म ) वत्त्वरूपं व्यापकत्वं वह्नौ भवतीत्यन्वयः । उक्तभेदाश्रयधर्मस्वरूपमाह—ताद्दशेति, ताद्दशधर्मः=तत्तन्मासत्वव्यापकतावच्छेदकीभूतो धर्मश्च ( उक्तभेदाश्रयधर्मश्च ) चैत्रीयाध्ययनाधारतात्वरूप एव विशेषरूपेण संबन्धकोटौ प्रवेशनीय इत्यन्वयः, तथा च 'मासमधीते' इत्यत्रोक्तव्यापकत्वसंबन्धेन तत्तन्मासत्वविशिष्टा याधिकरणता ताद्दशाधिकरणतानिरूपकं यदध्ययनं ताद्दशाध्ययनानुकूलकृतिमांश्चैत्र इति शाब्दबोधाकारः । यत्र च मासापेक्षया न्यूनकालेऽध्ययनं कृतं तत्र मासे नृत्यादेरपि संभवेन तदधिकरणताऽभावस्यासंभवादध्ययनाधारत्वे द्वितीयार्थभूते संबन्धभूतमुक्तव्यापकत्वमेव नास्ति येन तेन संबन्धेनाध्ययनाधारत्वे तत्तन्मासत्वव्यक्तीनामन्वयः स्यात् तथा च मासापेक्षया न्यूनकालाध्ययनस्थले 'मासमधीते' इति प्रयोगापत्तिर्नास्ति । एकमासमात्राध्ययनस्थले 'मासमधीते' इति प्रयोगस्योपपत्तिं स्वयमाह—मासान्तरेति, मासान्तरनिष्ठो यस्ताद्दशाभावः=अध्ययनाधिकरणताभावस्तत्प्रतियोगितावच्छेदकत्वस्य ताद्दशधर्मे=अध्ययनाधिकरणतात्वे सत्त्वेपि तत्तन्मासत्वसमानाधिकरणो योऽभावः=नृत्याधिकरणता नास्तीत्यभावस्तत्प्रतियोगितानवच्छेदकीभूते ( तत्प्रतियोगितावच्छेदकीभूतं तु नृत्याधिकरणतात्वं ज्ञेयम् ) ताद्दशधर्मे=अध्ययनाधिकरणतात्वे उक्तसंबन्धेन=स्व ( तत्तन्मासत्व ) समानाधिकरणव्याप्यवृत्त्यभाव ( नृत्याधिकरणता नास्तीत्यभाव ) प्रतियोगितावच्छेदकत्वसंबन्धेन यस्तत्तन्मासत्वावच्छिन्नः=नृत्याधिकरणतात्वधर्मस्तस्य यो भेद उक्तस्तदाश्रयत्वम् ( अध्ययनाधिकरणतात्वधर्मे ) अक्षतमेवेति ताद्दशव्यापकत्वसंबन्धेनाध्ययनाधिकरणतायां तन्मासत्वान्वयसंभवाद् यत्किंचिदेकमासमात्राध्ययनस्थलेपि ताद्दशप्रयोगस्य='मासमधीते' इति प्रयोगस्य निर्वाहः संभवत्येवेति न कोपि दोष इत्यर्थः ।

प्रतिमासमिति—'प्रतिमासमधीते' इत्यत्र प्रतिशब्दस्य मासपदोपस्थाप्यं यन्मासत्वत्वाद्यनुगतरूपावच्छिन्नं मासत्वादि तद्वान् यो मासस्तन्निष्ठो योऽभावस्तत्प्रतियोगितावच्छेदकत्वस्य सामान्याभावेन घटिता अर्थात् मासत्वावच्छिन्ननिष्ठात्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वरूपा या व्यापकता तद्बोधकत्वमस्तीति यत्किंचिदेकमासमात्रव्यापकाध्ययनस्थले ताद्दशप्रयोगः='प्रतिमासमधीते' इति प्रयोगो न भवति—मासत्वावच्छिन्नेष्वन्येषु मासेष्वऽध्ययनसंबन्धाभावात् किं

अथाऽत्यन्तसंयोगार्थकद्वितीयाया एकादिपदं विनापि यत्किंचिदेकमासादिव्यापकताबोधकत्वे " उपसद्भिश्चरित्वा मासमेकमग्निहोत्रं जुहोति " इत्यत्रैकपदवैयर्थ्यमितिचेत् ?, न, तत्र मासाधिककालव्यापकत्वेपि मासव्यापकतयाऽधिककालव्यापकस्य होमस्य शास्त्रार्थतावारणायैकपदोपादानात्, तथा सति तस्य केवलार्थकतया मासमात्रव्यापकतालाभात् तादृशप्रयोजनोपपत्तेः। अत एव च " यावज्जीवमग्निहोत्रं जुहोति " इतिश्रुतिबोधिताग्निहोत्रानुवादेन सतिलव्रीहिचरुरूपद्रव्यस्य मासैकरूपकालस्य च विधाने वाक्यभेदः स्यादिति तादृशद्रव्यकालोभयविशिष्टस्य गौणाग्निहोत्रपदप्रतिपाद्यस्य कर्मान्तरस्यैव विधायिका तादृशी श्रुतिरिति सिद्धान्ते यावज्जीवकालान्तर्गतमासरूपकालांशेऽप्यनुवादकतासंभवात् प्राप्ताग्निहोत्रानुवादेन द्रव्यस्यैव विधानमुचितमिति

---

तु यदा विवक्षितानेकमासेष्वऽध्ययनं भवति तदैव 'प्रतिमासमधीते' इतिप्रयोगो भवतीत्यर्थः ।

ननु यदि 'मासमधीते' इत्यादावेकपदं विनाप्यत्यन्तसंयोगार्थकद्वितीयाया अध्ययनस्यैकमासमात्रव्यापकताबोधकत्वं स्यात्तदा "मासमेकमग्निहोत्रं जुहोति" इत्यत्राप्येकपदं विनापि होमस्य द्वितीयया एकमासमात्रव्यापकत्वं प्राप्नुयादेवेति श्रुतावेकपदं व्यर्थमेव स्यादित्याशङ्कते–अथेति । परिहरति–नेति, होमस्य मासाधिककालव्यापकत्वेपि मासव्यापकत्वं स्यादेव तच्च नेष्टमिति मासाधिककालव्यापकतावारणायैकपदमुपात्तम्, तथा सति=एकपदोपादाने कृते च तस्य=एकपदस्य केवलार्थकतया मासमात्रव्यापकत्वे लब्धे तादृशप्रयोजनोपपत्तेः=होमस्य मासाधिककालव्यापकत्ववारणरूपप्रयोजनं संपद्यते इत्यर्थः "तादृशप्रयोजनोपपत्तेः" इत्यत्र "तादृशप्रयोगोपपत्तेः" इत्यपि पाठः । अत एवेति–अत एव=एकपदं विना मासमात्रव्यापकताबोधस्यासंभवेनैकपदस्य सार्थकत्वादेव पूर्वपक्षो निरस्त इत्यन्वयः । उपपादयति– यावज्जीवमित्यादिना " यावज्जीवम् " इतिश्रुत्युक्ताग्निहोत्रमनूद्य तिलादिद्रव्यस्य मासरूपकालस्य च "मासमेकमग्निहोत्रम् " इति श्रुत्या विधाने उभयविधानाद्वाक्यभेदः स्यात् स च नेष्ट इति तिलादिद्रव्येण मासरूपकालेन च विशिष्टस्यैव गौणं यदग्निहोत्रपदं तत्प्रतिपाद्यस्य कर्मान्तरस्यैव तादृशी श्रुतिः= " मासमेकमग्निहोत्रम् " इतिश्रुतिर्विधायिकास्तीति सिद्धान्तः, " मासमेकम् " इतिश्रुतिस्थमग्निहोत्रपदं न मुख्याग्निहोत्रपरं किं तु मुख्याग्निहोत्रसदृशकर्मान्तरपरमेवेति गौणम् । अत्र च सिद्धान्ते पूर्वपक्षिणोक्तम्– " मासमेकम् " इतिश्रुत्या द्रव्यकालयोरुभयोर्विधानापेक्षैव नास्ति येन वाक्यभेदः स्यात् किं तु " यावज्जीवम् " इतिश्रुत्युक्तयावज्जीवकालान्तर्गतस्यैव मासरूपकालस्य "मासमेकम्" इतिपदेनानुवादः क्रियते इति न कालविधानापेक्षा किं तु द्रव्यमात्रविधानापेक्षास्तीति द्रव्यमात्रविधाने च न वाक्यभेदप्रसङ्ग इति "मासमेकम्" इति श्रुतिर्न कर्मान्तरविधायिका किं तु "यावज्जीवम्" इतिश्रुत्युक्ताग्निहोत्रमनूद्य द्रव्यमात्रविधायिकेति पूर्वपक्षो निरस्त इत्यर्थः । अनुवादकतात्र "मासमेकम्" इति श्रुतेर्ज्ञेया । मासरूपकालांशे=मासरूपकालांशविषये । पूर्वपक्ष

पूर्वपक्षो निरस्तः—" यावज्जीवम् " इत्यादिश्रुत्या यावज्जीवव्यापकत्वे बोधितेऽर्थतो मासैकव्यापकतालाभेऽप्युपसन्नचरुकरणकत्वविशिष्टहोमे तन्मात्रव्यापकताया अलाभेन तस्यापि विधेयतया वाक्यभेदस्य प्राप्ताग्निहोत्रानुवादेन द्रव्यविधिपक्षे दुर्वारत्वात् ।

अथ तादृशश्रुतेर्द्रव्यकालोभयविशिष्टस्य गौणाग्निहोत्रपदप्रतिपाद्यस्य कर्मान्तरस्य विधायकत्वेऽपि न कथं वाक्यभेदः ?— विधेयभेदस्यैतावताप्यऽपरिहारात्, प्रत्युत धर्मिणोऽप्यधिकस्य विधानात्, एवं च—

" प्राप्ते कर्मणि नानेको विधातुं शक्यते गुणः ।
अप्राप्ते तु विधीयन्ते बहवोऽप्येकयत्नतः ॥ "

इत्यपि निर्युक्तिकमिति चेत् ?, न—यत्र विधेयांशे युगपदनेकधर्माणां विशेषण-

---

निरस्तत्वे हेतुमाह— यावज्जीवमिति, " यावज्जीवम् " इतिश्रुत्या होमस्य यावज्जीवकालव्यापकत्वे बोधिते यद्यपि यावज्जीवाग्निहोत्रेऽर्थत एकमासव्यापकतापि लभ्यते एव तथापि " मासमेकम् " इतिश्रुत्युक्तहोमे तन्मात्रव्यापकता=एकमासमात्रव्यापकता न लभ्यते उपायाभावाद् अनुवादेन च यावज्जीवकालस्यैवानुवादसंभवादिति " मासमेकम् " इति श्रुत्या तस्यापि=एकमासमात्रकालस्यापि विधानं कर्तव्यमेवेति कालद्रव्ययोरुभयोर्विधाने प्राप्ते वाक्यभेदः स्यादेव तस्मात् " मासमेकम् " इतिश्रुतिः कालद्रव्योभयविशिष्टकर्मान्तरस्यैव विधायिका. विशिष्टस्य चैक्यान्न वाक्यभेदः, यदि " मासमेकम् " इतिश्रुतावेकपदं सार्थकं न स्यात्तदा एतच्छ्रुत्युक्तहोमस्य यावज्जीवकालव्यापकत्वेऽप्येकमासव्यापकतालाभसंभवात् "यावज्जीवम्" इति श्रुत्युक्तयावज्जीवकालस्यैवानुवादसंभवेन कालविधानापेक्षाया अभावेन द्रव्यमात्रविधानापेक्षाप्राप्तौ द्रव्यमात्रविधाने च वाक्यभेदो न स्यादेवेति पूर्वपक्षः सङ्गत एव स्यात् न निरस्तः स्यात्. एकपदसत्त्वे चैकमासमात्रकालस्यानुवादार्थं लाभाभावात् तद्विधाने द्रव्यविधाने च वाक्यभेदः स्यादेवेत्यऽगत्या द्रव्यकालविशिष्टकर्मान्तरविधाने प्राप्ते पूर्वपक्षनिरासः संभवतीत्यर्थः ।

ननु तादृशश्रुतेः=" मासमेकम् " इतिश्रुतेर्द्रव्यकालोभयविशिष्टकर्मान्तरविधायकत्वेऽपि विशिष्टविधाने विशेषणीभूतद्रव्यकालयोरपि विधानापत्त्या वाक्यभेदः स्यादेव, एतावतापि=विशिष्टविधानेनापि । प्रत्युत धर्मिणः=होमस्यापि विधानं कर्तव्यमिति त्रयाणां विधानं प्राप्तम्, तथा च प्राप्तकर्मोद्देशेनानेकस्य गुणस्य=अप्रधानस्य विशेषणीभूतस्य द्रव्यादेर्विधानं न संभवति—अनेकविधाने वाक्यभेदप्रसङ्गात् कर्मण्यप्राप्ते त्वऽनेकगुणविशिष्टस्य प्रधानस्य होमादेरेकयत्नतः=एकेन शब्दव्यापारेण ( वाक्येन ) विधानं संभवति. अनेकगुणविशिष्टस्यापि विधेयस्य प्रधानस्यैक्याद् वाक्यभेदप्रसङ्गाभावादित्येतत् " प्राप्ते कर्मणि " इत्यादिना यदुक्तं तदपि निर्युक्तिकमेव विशिष्टविधानेऽपि विशेषणीभूतद्रव्यादीनां विधेयतापत्त्या वाक्यभेदप्रसङ्गस्य गले पतितत्वादित्याशङ्कते—अथेति । परिहरति— नेति, विशेषणीभूतद्रव्यादीनां पृथग्वाक्येन विधानाऽभावाद् विशेष-

तया भानं तत्र विधेयविशेषणभेदेपि विशिष्टनिष्ठविधेयत्वाभेदेन वाक्यभेदविरहात्, अन्यथा 'भूतलं नीलघटवत्' इत्यादावपि 'नीलवद् घटवत्' इत्यादाविव वाक्यभेदप्रसङ्गात्। अनुवाद्यांशे विशेषणतया यत्रानेकेषां विधानं तत्र तेषां विधेयता भिन्नैवेति वाक्यभेदः।

यद्यपि तत्रोपसच्चरुकरणकहोमाधिकरणतात्वेन वाऽधिकारिविशेषकृततादृशहोमाधिकरणतात्वेन वा मासैकव्यापकता मासन्यूनकालहोतृकृतहोमाधिकरणतायामप्यन्यान्यदिने पुरुषान्तरकर्तृकहोमाधिकरणतासत्त्वेनाक्षतैव; तत्तत्पुरुषकर्तृकतादृशहोमाधिकरणतात्वेन व्यापकतायाः श्रुतितात्पर्यविषयत्वे च विधेयानन्त्यम्, तथापि विभिन्नपुरुषकर्तृकहोमाधिकरणताद्वयावृत्ति– तादृशचरुहोमाधिकरणतामात्रवृत्तिधर्मत्वेनाऽनुगतीकृत्य तत्तत्पुरुषकर्तृकतादृशचरुहोमाधिकरणतात्वावच्छिन्नव्यापकतानां संसर्गविधया विवक्षितत्वान्न दोषः। तादृशाधिकरण-

---

-णानां भेदेपि विशिष्टस्य भेदाभावेन तद्गतविधेयत्वस्यैक्याच्च न विशिष्टविधाने वाक्यभेदप्रसङ्ग इत्यर्थः। विपक्षे बाधकमाह–अन्यथेति, यदि विशिष्टविधानेपि वाक्यभेदः स्यात्तदा 'नीलवद् घटवत्' इत्यत्र यथा वाक्यभेदोस्ति तथा 'नीलघटवत्' इति विशिष्टविधानेपि वाक्यभेदः स्यात् न चैतदिष्टमित्यर्थः। वाक्यभेदस्थलमाह–अनुवाद्येति, यत्रैकं प्रधानमनूद्य तद्विशेषणत्वेनानेकेषां द्रव्यादीनां विधानं भवति तत्र विशिष्टविधानाभावात् प्रतिविशेषणनिष्ठविधेयतायाश्च भेदाद् वाक्यभेदो भवतीत्यर्थः। अथेत्यारभ्यायं पाठः प्रक्षिप्त एव।

यद्यपीति–यद्यपि तत्र=मासाग्निहोत्रस्थले मासापेक्षया चैत्रेण न्यूनकालेपि होमे कृते तत्कालवृत्तितादृशहोमाधिकरणतायामुपसच्चरुकरणकहोमाधिकरणतात्वेन रूपेण वा अधिकारिविशेषकृत=उपसद्होमकारिकृतहोमाधिकरणतात्वेन रूपेण वा मासव्यापकताऽक्षतैव मासेऽन्यान्यदिने=चैत्रकर्तृकहोमहीनदिनेषु मैत्रादिकर्तृकहोमाधिकरणतायाः सत्त्वात् चैत्रकर्तृकस्य मैत्रादिकर्तृकस्य च होमस्य तुल्यत्वात्, यदि चैत्रादिरूपैककर्तृकर्तृकहोमाधिकरणतायां मासव्यापकता श्रुतितात्पर्यविषयीभूता स्यात्तदाऽन्यान्यदिने मैत्रकर्तृकहोमेन चैत्रकर्तृकहोमस्य मासव्यापकत्वापत्त्यभावेपि होमकर्तृभूतचैत्रादिपुरुषानन्त्येन होमरूपविधेयानन्त्यं स्यात् तत्तु नेष्टम्, तथापि धर्मत्वेन=विभिन्नपुरुषकर्तृकहोमाधिकरणताद्वयाऽवृत्तित्वे सति यस्तादृशचरुहोमाधिकरणतामात्रवृत्तित्वं धर्मस्तेन रूपेण होमाधिकरणतात्वावच्छिन्नव्यापकतानामनुगमं कृत्वा चैत्रादिरूपतत्तत्पुरुषकर्तृकतादृशचरुहोमाधिकरणतात्वावच्छिन्नव्यापकतानां संसर्गविधया=होमप्रतियोगिकमासवृत्तिहोमाधिकरणतानुयोगिकसंसर्गविधया=( मासव्यापकहोमाधिकरणतायामेतादृशव्यापकतासंबन्धेन होमान्वयः ) संसर्गत्वेन विवक्षितत्वान्न दोषः=कर्तृभूतचैत्राद्यनन्तव्यक्तीनां संसर्गकोटौ प्रवेशेन तदुपस्थित्यपेक्षाऽभावात् चैत्रादिभेदेन होमरूपविधेयानन्त्यप्रसङ्गो नास्तीत्यर्थः। होमाधिकरणतात्वाव-

ताद्वयावृत्तित्वं च स्ववृत्तित्वस्वनिरूपकहोमकर्तृनिष्ठभेदप्रतियोगिकर्तृकहोमाधिकरणतावृत्तित्वोभयसंबन्धेनाऽधिकरणताविशिष्टान्यत्वरूपमऽनुगतं बोध्यम् ।

'मासमधीते' इत्यादावपि चैत्रादिकर्तृकाध्ययनाधिकरणतात्वरूपव्यापकतावच्छेदकधर्मस्योक्तानुगतरूपेणैवानुगमः कार्यः । अतो 'मासमधीयानो दृष्टः' इत्यादौ विशिष्य चैत्रत्वाद्यनुपस्थितावपि नान्वयबोधानुपपत्तिः । अन्यत् स्वयमूहनीयम् ।

'दण्डं विना न घट उत्पद्यते' 'रासभं विनापि घट उत्पद्यते' इत्यादौ विनापदार्थोऽभाववान् । तत्पदसमभिव्याहृतद्वितीयाया अभावान्वयिप्रतियोगि-

---

च्छिन्नव्यापकतानां विभिन्नपुरुषकर्तृकहोमाधिकरणताद्वयेपि संभवात् तदवृत्तित्वं कथं स्यादित्याशङ्क्य विभिन्नपुरुषकर्तृकहोमाधिकरणताद्वयावृत्तित्वस्य स्वरूपमाह—तादृशाधिकरणताद्वयावृत्तित्वं चेति, स्वं तादृशहोमाधिकरणता: तद्वृत्तित्वं पुनरपि स्वं होमाधिकरणता तन्निरूपको यो होमस्तादृशहोमकर्तृनिष्ठो यो भेदः=मासाग्निहोत्रहोमविशेषकर्ता : नेतिभेदस्तादृशभेदप्रतियोगी यो मासाग्निहोत्रहोमविशेषकर्ता तत्कर्तृको योऽन्यहोमस्तादृशहोमाधिकरणतायां वृत्तित्वं चैतदुभयसंबन्धेनाधिकरणताविशिष्टा या व्यापकता=विभिन्नपुरुषकर्तृकहोमाधिकरणताद्वयवृत्तिव्यापकता तादृशव्यापकताभिन्नत्वमेव तादृशाधिकरणताद्वयाऽवृत्तित्वस्यानुगतं रूपं बोध्यमित्यन्वयः । तथा चैतादृशव्यापकता एकपुरुषकर्तृकसकलमासनिष्ठहोमाधिकरणतायामेव संभवति नान्यत्रेति पुरुषद्वयकृतमासव्यापकोक्तानिष्टहोमस्थले श्रुतेर्न चरितार्थतेत्यर्थः । अत्र "वृत्तिधर्मत्वेन" इत्यत्र 'वृत्तित्वधर्मेण' इत्येवं पाठो युक्तः, त्वप्रत्ययस्य च 'अवृत्ति—वृत्ति' इत्युभयत्रैवान्वयः । "उपसद्भिश्चरित्वा मासमेकमग्निहोत्रं जुहोति" इत्यत्र मीमांसकैस्तु उपसन्मासाभ्यां विशिष्टस्य नित्याग्निहोत्रातिरिक्तकर्मान्तरस्य विधानं प्रतिपाद्यते इति ध्येयम् ।

मासमधीत इति— चैत्रादिकर्तृकाध्ययनाधिकरणतात्वरूपो यो व्यापकतावच्छेदकधर्मस्तस्यायुक्तानुगतरूपेण=विभिन्नपुरुषकर्तृकाध्ययनाधिकरणताद्वयावृत्तित्वचैत्रकर्तृकाध्ययनाधिकरणतामात्रवृत्तित्वरूपेणाऽनुगतेनानुगमः कार्यः तादृशानुगतधर्मावच्छिन्नव्यापकतायाश्च संसर्गकोटौ प्रवेशः कार्य इति 'मासमधीयानो दृष्टः' इत्यादौ विशेषरूपेण चैत्रत्वाद्यनुपस्थितावपि न शाब्दबोधानुपपत्तिः— चैत्रत्वावच्छिन्नचैत्रकर्तृकाध्ययनाधारतात्वविशिष्टव्यापकतायाः संसर्गकोटौ प्रवेशेन तद्विशेषणीभूतचैत्रत्वादीनामुपस्थित्यऽपेक्षाभावादित्यर्थः । द्वितीयार्थाध्ययनाधारत्वे उक्तव्यापकतासंबन्धेन तत्तन्मासत्वादिव्यक्तीनामन्वयः कर्तव्य इति पूर्वमेव ( ३६२ ) प्रतिपादितम् ।

विनापदसमभिव्याहृतद्वितीयाया अर्थं प्रतिपादयितुमारभते— दण्डं विनेति, "विनापदार्थोऽभाववान्" इत्यत्राभाववत्पदेन देशो कालो वा ग्राह्यः, अभावश्च द्वितीयाप्रकृत्यर्थदण्डादीनां ग्राह्यः । तत्पदम्=विनापदम् । प्रतियोगित्वमनुयोगित्वं वा द्वितीयार्थस्तत्र प्रतियोगित्वस्य निरूपकत्वसंबन्धेनाऽनुयोगित्वस्य चाश्रयतासंबन्धेनाऽभावान्वयित्वं ज्ञेयम्, अभाववतः कालस्य

त्वमनुयोगित्वं वार्थः । अभाववतश्चोत्पत्तावाऽऽधारत्वेनान्वयः । तथा च 'दण्डाभाववद्वृत्त्युत्पत्तिकत्वाभाववान् घटः' 'रासभाभाववद्वृत्त्युत्पत्तिको घटः' इत्याकारको बोधः । यद्यपि निपातार्थे नामार्थस्य साक्षादपि भेदान्वयस्तथापि संभवति सार्थकत्वे विभक्तेर्निरर्थकत्वमनुचितमिति द्वितीयायाः सार्थकत्वमुपेयते ।

'भूतले न घटः' 'चन्द्र इव मुखम्' इत्यादौ प्रथमायाः प्रतियोगिताद्यर्थकत्वे प्रथमैव न साधुः स्यात्- प्रातिपदिकार्थान्वयिनोऽन्यपदेनाभिधानस्थले एव "प्रातिपदिकार्थ" इत्यादिसूत्रेण प्रथमाविधानादिति तत्र प्रतियोगित्वादिः संबन्धविधयैव भासते इत्युपेयते ।

'दण्डं विना न घटोत्पत्तिः' इत्यादौ च विनान्तार्थे घटोत्पत्त्याद्यभावान्वयेऽनुयोगिविशेषणदण्डाद्यभावस्य च तदनुयोगितावच्छेदकत्वं भासते- 'द्रव्ये

---

देशस्य वोत्पत्तावाधारत्वेन रूपेणान्वयः देशकालयोरेवोत्पत्त्याऽऽधारत्वात्, तथा चात्र दण्डस्याभावेऽभावस्य काले कालस्योत्पत्तौ उत्पत्तेर्नञर्थाभावे तस्य घटेऽन्वयः । स्वयमेव वाक्यार्थमाह- तथा चेति, दण्डाभाववान् यः कालो देशो वा तद्वृत्तिर्योत्पत्तिस्तादृशोत्पत्त्यभाववान् घट इत्यर्थः। तथा रासभाभाववान् यः कालो देशो वा तद्वृत्त्युत्पत्तिमान् घट इत्यर्थः । यद्यपीति- यद्यपि निपातार्थनामार्थयोः साक्षादपि भेदान्वय इष्ट एवेत्यत्र प्रतियोगित्वस्य द्वितीयार्थत्वाभावेपि तेन संबन्धेन निपातार्थे=विनापदार्थाभावे नामार्थस्य दण्डस्य भेदान्वयः साक्षादपि संभवति तथापि विभक्तेः सार्थकत्वे संभवति सति निरर्थकत्वमनुचितमेवेति प्रतियोगित्वस्य द्वितीयार्थत्वमुक्तं तथा च दण्डस्य द्वितीयार्थे तस्य च विनापदार्थघटकाभावेन्वयः कर्तव्य इत्यर्थः ।

ननु यथा 'दण्डं विना न घटः' इत्यत्र द्वितीयायाः प्रतियोगित्वार्थकत्वं स्वीकृतं तथा 'भूतले न घटः' इत्यत्रापि भूतले घटप्रतियोगिक एवाभावः प्रतीयते इति प्रथमाया अपि प्रतियोगित्वार्थकत्वं स्वीक्रियतामित्याशङ्क्याह- भूतल इति । 'चन्द्र इव मुखम्' इत्यत्र चन्द्रप्रतियोगिकसादृश्यवन्मुखमित्यर्थः, साधुत्वाभावे हेतुमाह- प्रातिपदिकार्थेति, अभिहिते कर्मणि कर्तरि च प्रथमा भवतीति प्रातिपदिकार्थे घटादावन्वयिनः कर्मत्वादेरन्यपदेनाख्यातप्रत्ययेनाभिधानस्थले एव "प्रातिपदिकार्थे" इति सूत्रेण प्रथमा भवतीति प्रतियोगित्वस्य प्रथमयैवाभिधाने प्रथमायाः साधुत्वं न स्यादिति तत्र='भूतले न घटः' इत्यादौ प्रतियोगित्वस्य संबन्धविधयैव भानं संभवति न तु प्रथमार्थत्वेनेत्यर्थः । तत्र=अत्र ।

दण्डमिति- 'दण्डं विना न घटोत्पत्तिः' इत्यादौ विनान्तार्थे=दण्डाभाववति काले देशे वा घटोत्पत्त्यभावस्यान्वये कृते सति=घटोत्पत्त्यभावविशिष्टो दण्डाभाववान् काल इत्यत्र घटोत्पत्त्यभावस्य दण्डाभाववान् काल एवानुयोगी तादृशानुयोगिविशेषणतां प्राप्तस्य दण्डाभावस्य ( दण्डाभाववति दण्डाभावस्य विशेषणत्वात् ) तदनुयोगितावच्छेदकत्वम्=घटोत्पत्त्यभावानुयोगितावच्छेदकत्वं भासते इत्यर्थः । नन्वत्र घटोत्पत्त्यभावानुयोगिताया अवच्छेदकत्वं दण्डाभा-

न गन्धः ' इत्यऽप्रयोगादुपलक्षणीभूतधर्मावच्छिन्ने न नञर्थाभावान्वय इति-व्युत्पत्तेरिति । ' रासभं विना न घटोत्पत्तिः ' इति न प्रयोगः— अतिप्रसक्ततया रासभाभावस्य घटोत्पत्त्याद्यभावानुयोगितावच्छेदकताविरहात् ।

अथ वाऽभाव एव विनार्थः, 'दण्डं विना न घटः' इत्यादौ च विनान्तार्थस्याभावस्य नञर्थे घटाद्यभावे प्रयोज्यतासंबन्धेनैवान्वयः । अत एव ' रासभं विना न घटः ' इत्यादयो न प्रयोगाः । अत एव दण्डाद्यभाववति घटादेर्वृत्तावपि

---

वस्य कथमुक्तं कालत्वादेर्वा द्रव्यत्वादेर्वा कथं नोक्तम्—घटोत्पत्त्यभावविशिष्टे देशे काले च द्रव्यत्वादेरपि सत्त्वादित्याशङ्कयोक्ते दण्डाभावस्यावच्छेदकत्वे हेतुमाह— द्रव्येति, ' द्रव्ये न गन्धः ' इति प्रयोगो न भवति द्रव्यभूतपृथिव्यां गन्धस्य सत्त्वादेवेत्युपलक्षणीभूतो यो जलादीनां धर्मो द्रव्यत्वं तदवच्छिन्ने नञर्थाभावान्वयो न भवतीति व्युत्पत्त्या यथा तत्र जलत्वाद्यवच्छिन्ने एव गन्धाभावस्यान्वयो भवति न द्रव्यत्वावच्छिन्ने एवमत्रापि नञर्थाभावस्योपलक्षणीभूतं यद् द्रव्यत्वादि तदवच्छिन्नेऽन्वयो न भवति किं त्वनतिप्रसक्तदण्डाभावविशिष्टे एवेति दण्डाभावस्य घटोत्पत्त्यभावानुयोगितावच्छेदकत्वमुक्तमित्यर्थः । ' दण्डं विना न घटोत्पत्तिः ' इत्यत्र दण्डाभावस्यानुयोगितावच्छेदकत्वस्वीकारस्य फलमाह— रासभमिति, रासभाभावस्य घटोत्पत्तिस्थलेपि संभवात् घटोत्पत्त्यभावेन सह नियतत्वाभावाचातिप्रसक्तत्वमस्ति. अतिप्रसक्तस्य चावच्छेदकत्वं न भवतीति रासभाभावस्य घटोत्पत्त्यभावानुयोगितावच्छेदकत्व न संभवतीति ' रासभं विना न घटोत्पत्तिः ' इति प्रयोगो न भवति, विनान्तार्थघटकाभावस्योक्तानुयोगितावच्छेदकत्वसंभवे एवैवंप्रयोगसंभवादित्यर्थः ।

पक्षान्तरमाह— अथ वेति, अभाव एव विनापदार्थो न त्वभाववान्, तथा च 'दण्डं विना' इत्यस्य दण्डाभाव एवार्थस्तस्य च दण्डाभावस्य नञर्थे घटाभावे प्रयोज्यतासंबन्धेनान्वयः— घटाभावे दण्डाभावप्रयोज्यत्वस्य सत्त्वादित्यर्थः । अत एवेति— घटाभावदण्डाभावयोरत्र प्रयोज्यप्रयोजकभावभानादेव 'रासभं विना न घटः' इति प्रयोगो न भवति, घटाभावस्य रासभाभावप्रयोज्यत्वाभावाद् रासभाभावेपि घटोत्पत्तिसंभवादित्यर्थः । अत एवेति— घटाभावदण्डाभावयोः प्रयोज्यप्रयोजकभावभानादेव दण्डाद्यभाववति देशे काले वा घटादेः सत्त्वेपि ' जायते ' इत्यस्य पदस्याध्याहारं विनापि ' दण्डं विना न घटः ' इति प्रयोग उपपद्यते. अन्यथा यदि घटाभावदण्डाभावयोः परस्परं प्रयोज्यप्रयोजकभावभानं न स्यात् किं तु घटोत्पत्त्यभावदण्डाभावयोरेव प्रयोज्यप्रयोजकभावभानं स्यात्तदाऽभावप्रतियोगिभूतोत्पत्तिबोधकम् ' जायते ' इति पदं विना 'दण्डं विना न घटः' इति प्रयोगो न स्यात्—प्रतियोगिभूतपदार्थोपस्थितिं विना तदभावबोधनासंभवादिति 'जायते' इतिपदस्याऽध्याहारः कर्तव्यः स्यादेव यदा च घटाभावदण्डाभावयोरपि प्रयोज्यप्रयोजकभावः स्वीकृतस्तदा तूत्पत्तिपदार्थोपस्थापकस्य 'जायते' इतिपदस्यापेक्षाऽभावान्न तदध्याहारापेक्षेत्यर्थः । दण्डाद्यभाववतीति—यद्यपि घटाभावदण्डाभावयोः कार्यकारण-

'जायते' इत्यस्याध्याहारं विनैव 'दण्डं विना न घटः' इति प्रयोगोपपत्तिः। 'रासभं विना घटः' इत्यादौ च विनार्थस्याभावस्य सामानाधिकरण्यसंबन्धेन घटादावन्वयः।

दीधितिकृतापि "अविनाभावो व्याप्तिः" इत्यत्र 'साध्यं विना=साध्याभाववति योऽभावः' इति यद् व्याख्यातं तत्र सप्तम्यन्तेन मतुपा संसर्गविधया भासमानं तदधिकरणनिष्ठत्वमेवोपात्तं न तु विनार्थत्वेनाधिकरणम्, अभावाधिकरणपर्यन्तस्य विनार्थत्वेपि सप्तम्याऽऽधेयत्वरूपाऽपदार्थविवरणरूपताया आवश्यकत्वात्।

---

भावो नास्ति अन्यथा दण्डाभाववति घटाभाव एव स्यान्न तु घटोपि न चैवमस्ति-दण्डाभाववति देशे काले च घटस्याप्युपलब्धेस्तथापि घटाभावदण्डाभावयोः प्रयोज्यप्रयोजकभावस्त्वस्त्येव तथा च दण्डाभाववति घटादेर्वृत्तावपि=घटस्य सत्त्वेपि घटाभावदण्डाभावयोः प्रयोज्यप्रयोजकभावस्वीकारात् 'दण्डं विना न घटः' इति प्रयोग उपपद्यते तत्रोक्तरीत्या 'जायते' इति पदस्याऽध्याहारापेक्षापि नास्तीत्यर्थः। रासभमिति-'रासभं विना घटः' इत्यत्र यस्मिन् देशे काले वा रासभाभावो भवति तस्मिन् घटोपि संभवत्येवेति रासभाभावघटयोः सामानाधिकरण्यं प्राप्तमिति तेन सामानाधिकरण्येन रासभाभावस्य घटेऽन्वय इति 'रासभाभावविशिष्टो घटः' इत्याकारः शाब्दबोधाकार इत्यर्थः।

विनापदार्थोऽभाव एव नत्वऽभाववान् (अभावाधिकरणम्) इत्यत्र दीधितिकारं प्रमाणयति-दीधितिकृतापीति, विनापदघटितस्याविनाभावपदस्य साध्यं विना=साध्याभाववति योऽभावः 'स व्याप्तिः' इतिव्याख्यायां साध्याभाववतीति सप्तम्यन्तेन मतुपा हेत्वभावस्य यत् तदधिकरणनिष्ठत्वम्=साध्याभावाधिकरणनिष्ठत्वमुपात्तम्=उक्तं तत् संसर्गविधयैव भासमानमुपात्तम् अर्थात् तत्रोक्तं हेत्वभावे साध्याभावाधिकरणनिष्ठत्वं संसर्गविधयैव भासते न तु साध्याभावाधिकरणं विनार्थत्वेन=विनापदार्थत्वेनोपात्तम्, अर्थात् साध्याभावाधिकरणम्=साध्याभाववान् विनापदार्थो नोक्त इति नाऽभाववान् विनापदार्थः किं त्वऽभाव एवेत्यर्थः। हेत्वभावे साध्याभाववद्वृत्तित्वसंसर्गेण हि साध्याभाववतोन्वयो विज्ञेयः। ननु दीधितिकृता 'साध्यं विना' इत्यस्य 'साध्याभाववति' इति व्याख्या कृता तत्र विनिगमनाविरहात् स्वारस्याच्च विनापदस्याऽभाववान् एवार्थ इति दीधितिकारेष्टं प्रतीयते अन्यथा 'साध्यं विना' इत्यस्य 'साध्याभाववति' इतिव्याख्यायां मतुपाऽपदार्थस्यैव विवरणं कृतमित्यापद्येत मतुबर्थाधिकरणस्याऽपदार्थत्वापत्तेः 'साध्यं विना' इत्यस्य साध्याभावमात्रार्थकत्वासंभवादित्याशङ्क्याह-अभावाधिकरणेति, अभाववतो विनार्थत्वस्वीकारेण अभावाधिकरणपर्यन्तस्य=साध्याभाववतीतिपदघटकस्य साध्याभाववत् इत्यस्यापि विनापदार्थत्वे स्वीकृते साध्याभाववत्पदोत्तरसप्तम्या यदाऽऽधेयत्वरूपस्यार्थस्य विवरणं कृतं तत्तु कस्यापि पदस्य नार्थ इत्यऽपदार्थ एवेत्युक्तायाम् "साध्याभाववति" इति व्याख्यायामपदार्थविवरणत्वं त्वावश्यकमेव

न च विनापदोत्तरलुप्तसप्तम्यर्थ एव 'अभाववति' इति सप्तम्या विवृत इति वाच्यम्, निपातोत्तरविभक्तेर्निरर्थकत्वात् । अत एव सर्वत्र निपातोत्तरं साधुत्वार्थं प्रथमैवेतिशाब्दिकाः ।

"पृथिव्यामेव गन्धः" इत्यादावेवकारप्रकृतिकसप्तम्या यदाऽऽधेयत्वबोधकत्वमङ्गीकृतं दीधितिकृद्भिस्तत्रापि तेषां न निर्भरः । अस्तु वा तत्र प्रतियोगितया पृथिव्यन्यवृत्तित्वभानानुरोधेनैवकारस्यान्यवृत्तित्वार्थकत्वं गौरवादुपेक्ष्य तत्राधेयत्ववाचकत्वेन क्लृप्तायाः सप्तम्याः कल्पनम् । प्रकृते चाधेयत्वस्य संसर्गतयैवोपपत्तौ विनापदसाकाङ्क्षाधेयत्वार्थकसप्तमीकल्पनं दुष्कल्पनमेव ।

---

गले पतितमेवेति मतुपाप्यऽपदार्थस्यैव विवरणं कृतमिति स्वीकार्यं तथा च विनापदार्थोऽभाव एव न त्वभाववानिति सिद्धम् । किं वा ननु "साध्यं विना=साध्याभाववति" इत्यत्र दीधितिकृताऽभाववानेव विनापदार्थ उक्त इति कथं त्वयाऽभावमात्रस्य विनापदार्थत्वमुच्यते इत्याशङ्क्याह—दीधितिकृतेति । 'अविनाभावः' इत्यत्राऽविनापदेन भावपदसमासः ।

ननु "साध्याभाववति" इत्यत्र मतुपा विनापदोत्तरलुप्तसप्तम्यर्थस्यैव विवरणं कृतं नाऽपदार्थस्येत्याशङ्क्याह—न चेति । उत्तरमाह—निपातेति । अत एव=निपातोत्तरविभक्तेर्निरर्थकत्वादेव प्रथमातिरिक्तविभक्तिप्रातिर्य्यर्थैवेति साधुत्वार्थं प्रथमैव सापि लोपं प्राप्नोतीति न मतुपा उक्तसप्तम्यर्थविवरणं संभवतीत्यर्थः ।

ननु दीधितिकृतैव "पृथिव्यामेव गन्धः" इत्यत्र निपातभूतैवकारपदोत्तरसप्तम्या आधेयत्वबोधकत्वं स्वीकृतमिति कथं निपातोत्तरविभक्तेर्निरर्थकत्वं स्यात् तथा च विनापदोत्तरविभक्तेरपि सार्थकत्वात्तदर्थस्यैव "साध्याभाववति" इत्यत्र मतुपा विवरणं कृतमित्याशङ्क्याह—पृथिव्यामिति। उत्तरमाह—तत्रापीति । तत्र=एवपदोत्तरलुप्तसप्तम्या आधेयत्वबोधकत्वे । एवकारोत्तरसप्तम्या आधेयत्वबोधकत्वमभ्युपगम्याह—अस्तु वेति । तत्र='पृथिव्यामेव गन्धः' इत्यत्र, एवकारस्याऽन्ययोगव्यवच्छेदोऽर्थस्तत्रान्ययोगोऽन्यवृत्तित्वमेव व्यवच्छेदश्चाभाव एवेत्यऽन्यवृत्तित्वप्रतियोगिकाभावे प्रतियोगित्वरूपेण पृथिव्यन्यवृत्तित्वस्य भानं भवति, एवकारस्यान्यवृत्तित्वे च शक्तिस्वीकारे गौरवं स्यादिति वृत्तित्वार्थभागं परित्यज्यान्यपदार्थेऽभावे चैवकारस्य खण्डशः शक्तिः, एवकारोत्तरप्राप्ताधेयत्वार्थकसप्तम्या वृत्तित्वमेवार्थस्तस्य च सप्तम्यर्थवृत्तित्वस्यान्यपदार्थेऽन्वय इतिसप्तम्यन्तैवकारेणान्यवृत्तित्वाभावोऽर्थो लब्ध इति एवकारस्थलेऽन्यवृत्तित्वार्थकत्वस्वीकारे गौरवभयात् सप्तमीकल्पनं युज्यते । प्रकृते=" साध्यं विना " इत्यत्राधेयत्वस्य संसर्गतयापि भानं संभवतीति विनापदोत्तरं सप्तमीकल्पनं न युक्तमेव तथा च "साध्याभाववति" इति मतुपाऽपदार्थविवरणमेव कृतमित्याह—प्रकृते चेति ।

नन्वेवमेवकारस्थलेप्याधेयत्वस्य संसर्गत्वमेवास्तु तथा चाभावे आधेयतासंबन्धेनान्यपदार्थ-

एवकारस्थले चाऽभावरूपे एवार्थेऽन्यरूपतदर्थान्तरस्याऽऽधेयतासंबन्ध इति न संभवति–आधेयतायास्तद्वत्येव संबन्धत्वात्. न तु तदभावे। न च तत्राधेयत्वाभावो न प्रतीयते. अपि तु तत्संबन्धावच्छिन्नप्रतियोगिताकपृथिव्याद्यन्याभाव इत्युपेयं तादृशप्रतियोगिताकत्वमेवाभावेऽन्यस्य संबन्धोऽस्त्विति वाच्यम्, आधेयतासंबन्धस्य प्रतियोगिन आधारस्याऽनुयोगिन्याधेये वृत्त्यनियामकत्वेनाऽभावप्रतियोगितानवच्छेदकत्वात्। 'चैत्रः पचति' इत्यादौ कृत्यादिसंबन्धस्याऽपदार्थत्वेपि 'पाककृतिमान्' इत्यादौ मतुबादिपदेन विवरणवद् उक्तस्थले सामानाधिकरण्यस्य पदेन विवरणमपि न विरोधमापादयति, विवरणीयार्थस्याप्यन्यलभ्यत्वेऽपदार्थतोपपत्तेरित्यलमसदावेशेन।

---

स्यान्वयं वक्ष्याम इत्याशङ्क्याह–एवकारस्थल इति। परिहारहेतुमाह–आधेयताया इति, यथा 'भूतले घटः' इत्यत्र तद्वति=आधेयत्ववति=भूतलवृत्तिघटे एव भूतलस्याधेयतासंबन्धः संभवति न तु भूतलाभावे तथा एवकारस्थलेप्यन्यपदार्थस्य स्वाभावे आधेयतासंबन्धो न संभवतीत्यर्थः। नन्वेवकारस्थले आधेयत्वाभावो न प्रतीयते नाम आधेयतासंबन्धेनान्यपदार्थस्याऽभावेन्वयो नोच्यते किं तु तत्संबन्धावच्छिन्न=आधेयत्वसंबन्धावच्छिन्नप्रतियोगिताकपृथिव्याद्यन्याभावो गन्धे प्रतीयते तादृशाभावे च तादृशप्रतियोगिकत्वम्=आधेयत्वसंबन्धावच्छिन्नप्रतियोगिताकत्वसंबन्धेन पृथिव्याद्यन्यपदार्थस्यान्वय इत्युच्यते इत्याशङ्क्याह–न चेति। परिहारमाह–आधेयतेति, अभावे आधेयत्वसंबन्धावच्छिन्नप्रतियोगिताकत्वसंबन्धेनाऽन्यपदार्थस्यान्वयस्वीकारेपि आधेयतासंबन्धेनान्यपदार्थाभाव इत्येव प्राप्तं तत्र 'पृथिव्यामेव गन्धः' इत्यत्रान्यपदार्थाधेयताभावो गन्धे बोधनीय इत्याधारभूतोन्यपदार्थ एवाभावप्रतियोगी आधेयभूतो गन्धश्चानुयोगी आधेयतासंबन्धश्च वृत्त्यनियामक इति अनुयोगिन्याधेये गन्धे प्रतियोगिभूताधारस्यान्यपदार्थस्याधेयतासंबन्धोऽभावीयप्रतियोगितावच्छेदको न संभवति–वृत्त्यनियामकत्वादिति न चायं कल्पोपि युक्त इति नैवकारस्थले आधेयत्वस्य संसर्गविधया भानं संभवतीत्यर्थः। "अविनाभावः" इत्यस्य दीधितिकृता यः "साध्यसामानाधिकरण्यम्" इति निष्कर्ष उक्त स आपाततोऽपदार्थ एव प्रतिभातीति तद्दोषं प्रसङ्गसंगत्योद्धरति–चैत्र इति, यथा 'चैत्रः पचति' इत्यत्र कृतेराख्यातार्थत्वेपि कृतिसंबन्धस्तु यद्यपि कस्यापि पदस्यार्थो नास्ति 'चैत्रः पचति' इत्यस्य 'पाककृतिमान्' इति विवरणे च मतुपा संबन्धस्यैव विवरणं क्रियते तथापि संबन्धस्याऽपदार्थत्वं नास्ति– अन्यलभ्यत्वाभावात्. एवमुक्तस्थले=" अविनाभावः " इत्यत्र साध्यसामानाधिकरण्यं यद्यपि कस्यापि पदस्यार्थो नास्ति तथापि पदेन="साध्यसामानाधिकरण्यं व्याप्तिः" इतिपदेन साध्यसामानाधिकरण्यविवरणेपि विरोधः=अपदार्थविवरणत्वदोषो नास्ति– साध्यसामानाधिकरण्यस्यान्यलभ्यत्वाभावात्, व्याख्यातस्यार्थस्यान्यलभ्यत्वे एवाऽपदार्थत्वदोषापरिस्वीकारादित्यर्थः।

'विना वातं वृक्षः पतितः' इत्यादौ विनापदार्थस्याभावस्याश्रयतासंबन्धेन वृक्षेऽन्वयात् 'वाताभावविशिष्टो वृक्षः पतितः' इति शब्दतो लभ्यते, पतनेऽनुभवसिद्धो वातजन्यत्वाभावलाभश्चाऽऽर्थः– जन्यतायाः पदानुपस्थाप्यत्वात् तदभावस्य तस्य वृत्त्यनियामकसंबन्धत्वात् तदवच्छिन्नवाताभावस्य च शब्देन बोधयितुमशक्यत्वात् ।

'पुत्रं विना गतः' इत्यादौ पुत्रादिपदं लक्षणया पुत्रगमनादिपरम्, विनापदबोध्यतदभावश्च समानकालीनत्वादिसंबन्धेन गमनेऽन्वेति, समानकालीनत्वघटककालनिष्ठं स्वाधिकरणत्वमनवच्छिन्नं बोध्यम्, अतो गमनादिकाले तदनधिकरणदेशावच्छेदेन गमनाद्यभावसत्त्वेपि नातिप्रसङ्गः ।

केचित्तु– उक्तस्थलेऽसाहित्यमेव विनापदार्थः, तस्य च गमनादिकर्तर्यऽ-

---

विना वातमिति– वातमिति प्रतियोगित्वं द्वितीयार्थस्तथा च वाताभावविशिष्ट इत्यस्य वातप्रतियोगिकाभावविशिष्ट इत्यर्थः । ननु 'विना वातं वृक्षः पतितः' इत्यत्र वृक्षकर्तृकं पतनं वातजन्यत्वाभाववदिति प्रतीतिर्भवति न तु वाताभावविशिष्टो वृक्षः पतित इत्याशङ्क्याह– पतन इति, 'विना वातम्' इत्यत्र जन्यतायाः कस्यापि पदस्यार्थत्वाभावात् पतने वातजन्यत्वाभावलाभ आर्थ एव, तथा च जन्यतायाः पदानुपस्थाप्यत्वात् तदभावस्य=जन्यत्वाभावस्य (वातजन्यत्वाभावस्य) शब्देन बोधयितुमशक्यत्वात्– पदोपस्थाप्यस्यैव शब्देन बोधयितुं शक्यत्वात् तथा तस्य=जन्यत्वस्य वृत्त्यनियामकसंबन्धत्वेन तदवच्छिन्नवाताभावस्य=जन्यत्वसंबन्धावच्छिन्नप्रतियोगिताकवाताभावस्यापि ( जन्यत्वसंबन्धेन वाताभावस्यापि ) शब्देन बोधयितुमशक्यत्वात् पतने वातजन्यत्वाभावलाभ आर्थ एवेत्यर्थः ।

पुत्रं विनेति– अत्र पुत्रपदस्य लक्षणया पुत्रगमनपरत्वात् 'पुत्रगमनं विना=पुत्रगमनाभावकाले गत इत्यर्थः । तदभावः=पुत्रगमनाभावः । यस्मिन् काले पुत्रगमनाभावस्तस्मिन् काले एव पितृगमनमिति समानकालिकत्वं तेन संबन्धेन पुत्रगमनाभावविशिष्टं पितृगमनमित्यर्थः । संबन्धभूतसमानकालिकत्वघटककाले यत् स्वाधिकरणत्वम्=पुत्रगमनाभावाधिकरणत्वं तदऽनवच्छिन्नम्=देशानवच्छिन्नं बोध्यं तथा च पित्रा सह पुत्रस्य गमनकाले तदनधिकरणदेशावच्छेदेन=यन्मार्गोपरि पितृपुत्राभ्यां न गम्यते तन्मार्गे=तद्देशावच्छेदेन किं वा पितृगमनानधिकरणदेशावच्छेदेन=मार्गान्तरावच्छेदेन पुत्रगमनाभावसत्त्वेपि नातिप्रसङ्गः='पुत्रं विनागतः' इतिप्रयोगापत्तिर्नास्ति, अन्यथा कालनिष्ठस्य पुत्रगमनाभावाधिकरणत्वस्य देशेनावच्छिन्नत्वे पितृगमनानधिकरणदेशावच्छेदेन पुत्रगमनाभावस्य पुत्रगमनकालेपि सत्त्वेन प्राप्त्या 'पुत्रं विना गतः' इति प्रयोगः स्यादेव न चैतदिष्टमित्यर्थः ।

लक्षणाश्रयणगौरवरहितं मतान्तरमाह– केचिदिति । उक्तस्थले='पुत्रं विना गतः' इत्यत्र । तस्य=असाहित्यस्य । तथा च पुत्राऽसाहित्यवान् (पुत्रसाहित्याभावविशिष्टः) गत इत्यर्थः ।

न्वयः । असाहित्यं च स्वकर्तृकसमभिव्याहृतगमनादिक्रियासमानकालीनतादृश-क्रियाकर्तृत्वरूपसाहित्याभावः । क्रियान्वयिस्वकर्तृकतादृशक्रियाकालीनत्वाभाव एव वा विनार्थः, कर्तृत्वे पुत्रादेराधेयत्वेनान्वयः, विभक्तिः साधुत्वार्थैव । अस्तु वाऽऽधेयत्वं द्वितीयार्थः । सप्तम्या आधेयत्वार्थकत्वेपि नात्र सप्तमीप्रसक्तिः-तस्याः कारकविभक्तित्वेन क्रियान्वयिस्वार्थबोधकत्वात्, अतः शेषषष्ठीप्रसक्त्या तामेवोपपदविभक्तिर्द्वितीया बाधते इति "सर्वा उपपदविभक्तयः षष्ठ्यपवादिकाः" इत्यस्याऽविरोध इति । विनासमानार्थकयोर्ऋतेऽन्तरेणेतिनिपातयोरपि दर्शितैव रीतिः । एवं विनायुक्ततृतीयापञ्चमीस्थलेपि ।

मर्यादाऽभिविध्यर्थकयावच्छब्दयोगेपि द्वितीया दृश्यते । तत्र मर्यादार्थको यावच्छब्दः- " आरभ्य तस्यां दशमीं तु यावत् प्रपूजयेत् पर्वतराजपुत्रीम् "

असाहित्यपदार्थमाह- असाहित्यमिति, स्वं गमनकर्ता पिता तत्कर्तृका समभिव्याहृता या गत इति गमनक्रिया तादृशक्रियासमानकालिका या तादृशक्रिया=गमनक्रिया तत्कर्तृत्वरूपस्य साहित्यस्याभाव एवाऽसाहित्यपदार्थ इत्यर्थः, गच्छता पुत्रेण च गमनरूपमेव साहित्यं कर्तव्य-मिति गमनकर्तृत्वं साहित्यमित्युक्तम् । सर्वत्रोक्तस्थलेषु विनापदार्थोऽभाव एवेत्युक्तमिति 'पुत्रं विना गतः' इत्यत्राप्यऽभावेनैव विनापदार्थेन भवितव्यमित्याशयेन पक्षान्तरमाह- क्रियान्वयीति, क्रियान्वयी=पितृकर्तृकगमनक्रियान्वयी यः स्वकर्तृकतादृशक्रियाकालीनत्वस्य=पुत्रकर्तृकगमनक्रि-याकालिकत्वस्याभावः स एव विनापदार्थः स चाभावः पितृगमनेऽस्त्येवेत्यर्थः । स्वकर्तृकेत्यत्र कर्तृत्वं पुत्रनिष्ठं विवक्षितमिति पुत्रस्य कर्तृत्वे आधेयत्वसंबन्धेनैवान्वयेनाधेयत्वस्य संसर्गविधया भानसंभवेन तदुपस्थित्यपेक्षाभावात् पुत्रपदोत्तरद्वितीया विभक्तिः साधुत्वार्थत्वेन निरर्थकैवेत्याह- कर्तृत्वे इति । विभक्तेर्निरर्थकत्वानौचित्यात् पक्षान्तरमाह- अस्तु वेति, द्वितीयाविभक्त्यर्थभूता-धेयत्वेन कर्तृत्वे पुत्रान्वयो ज्ञेयः । ननु यद्यत्राधेयत्वं द्वितीयार्थस्तदात्र पुत्रपदात्सप्तमी किं न स्यात् तस्याप्याधेयत्वार्थकत्वादित्याशङ्क्याह- सप्तम्या इति । सप्तमीप्रसक्त्यभावे हेतुमाह- तस्या इति, तस्याः=सप्तम्याः कारकविभक्तित्वेन क्रियान्वयिस्वार्थबोधकत्वमस्ति. अत्र च नाधेयत्वस्य क्रियान्वयित्वमस्तीति न सप्तमीप्रसक्तिः । अत इति- अत्र विभक्त्यर्थस्य क्रियान्वयित्वं नास्ती-त्यऽकारकविभक्तेः शेषषष्ठ्या एव प्राप्तिरस्ति तां च विनापदयोगे विधीयमाना द्वितीया बाधते इति पुत्रपदोत्तरं द्वितीया प्राप्ता- उपपदविभक्तीनां=विनादिपदसंयोगेन प्राप्तानां विभक्तीनां षष्ठी-बाधकत्वादित्यर्थः । उक्ते प्रमाणमाह- सर्वा इति । 'ऋते' 'अन्तरेण' इति पदयोरप्येषैव रीतिरित्याह- विनासमानार्थकयोरिति । एवम् 'पुत्रेण विना गतः' 'पुत्राद्विना गतः' इत्य-त्राप्युक्तरीतिरेव ज्ञेयेत्याह- एवमिति । विनायुक्त=विनापदसमभिव्याहृत ।

मर्यादेति-मर्यादार्थकस्याभिविध्यर्थकस्य च यावच्छब्दस्य योगेपि द्वितीया भवति, तत्र 'तेन विना मर्यादा' 'तेन सहाभिविधिः' । मर्यादार्थकयावच्छब्दोदाहरणमाह- आरभ्येति । तस्याम्=

इत्यादौ । मर्यादा=सीमा कालरूपा देशरूपा च. कालनिष्ठं तत्त्वं च तत्कालनिष्ठं समभिव्याहृतकालप्रागभावानधिकरणस्वप्रागभावाधिकरणस्वसजातीययावत्कालवृत्तिसमभिव्याहृतक्रियानधिकरणत्वम्, एवं चोक्तस्थले यावच्छब्देन पूजारूपक्रियायां शुक्लदशमीनिष्ठतादृशसीमात्वनिरूपकत्वं प्रत्याय्यते, तावतैवार्थतः शुक्लदशम्यां मर्यादात्वं लभ्यते । तन्निष्ठसीमात्वनिरूपकत्वं च तदवृत्तित्वे सति कृष्णनवमीप्रागभावानधिकरणशुक्लदशमीप्रागभावाधिकरणतिथिकूटव्यापकत्वम्, तावता षोडशतिथ्यधिकरणकषोडशपूजारूपस्यैककर्मणो विधेयतया लाभः ।

---

आश्विनकृष्णनवम्यां पूजामारभ्याऽऽश्विनशुक्लदशमीं यावत् ( शुक्लनवमीपर्यन्तं दशमीं विना ) प्रपूजयेदित्यर्थः । , देशकालयोर्भेदेन द्विविधां मर्यादामाह— मर्यादेति । तत्त्वम्=सीमात्वम् । तत्कालेति— तत्कालनिष्ठं यत् समभिव्याहृतकालप्रागभावानधिकरणस्वप्रागभावाधिकरणस्वसजातीययावत्कालवृत्तिसमभिव्याहृतक्रियानधिकरणत्वं तदेव दशमीनिष्ठं सीमात्वमित्यन्वयः, तत्र तत्कालनिष्ठम्=दशमीकालनिष्ठम् ( दशमीनिष्ठम् ) यत्— समभिव्याहृतकालः कृष्णनवमीकालस्तत्प्रागभावानधिकरणं स्वप्रागभावस्य दशमीप्रागभावस्य चाधिकरणं यः स्वसजातीयः दशमीसजातीयो यावत्कालः कृष्णनवमीमारभ्य शुक्लनवमीपर्यन्तकालस्तद्वृत्तिः समभिव्याहृता या क्रिया पूजारूपक्रिया तदनधिकरणत्वं तदेव दशम्यां सीमात्वमस्ति, नवमनवरात्रपर्यन्तमेव पूजाविधानेन दशम्यां पूजाया अभावात्, कृष्णनवमीप्रागभावस्याधिकरणीभूतः कालः कृष्णाष्टमीपर्यन्तकालः कृष्णनवमीप्रागभावानधिकरणीभूतश्च कृष्णनवमीमारभ्य कालः स एव कालः शुक्लदशमीप्रागभावाधिकरणोपि । साजात्यं च तिथित्वरूपेण विज्ञेयम् । फलमाह— एवं चेति, शुक्लदशमीनिष्ठसीमात्वस्य निरूपिका पूजारूपक्रियैव— दशम्याः पूजारूपक्रियानधिकरणत्वात्, तदनधिकरणस्यैव तत्सीमात्वात्—तदुच्यते—तेन विना सीमेत्यर्थः । तावतेति—यतो यावच्छब्देन तु पूजारूपक्रियायामुक्तसीमात्वनिरूपकत्वमात्रं प्रत्याय्यतेऽतो दशम्यां यो मर्यादात्वलाभः स आर्थ एवेत्यर्थः । सीमात्वनिरूपकत्वस्वरूपमाह—तन्निष्ठेति, तन्निष्ठ=दशमीनिष्ठ । तदवृत्तित्वे सति=शुक्लदशम्यऽवृत्तित्वे सति कृष्णनवमीप्रागभावानधिकरणीभूतस्तथा शुक्लदशमीप्रागभावाधिकरणीभूतो यस्तिथिकूटः=कृष्णनवमीमारभ्य शुक्लनवमीपर्यन्तः षोडशतिथ्यात्मकस्तिथिसमूहस्तद्व्यापकत्वं यत्पूजारूपक्रियायामस्ति तदेव दशमीनिष्ठसीमात्वस्य निरूपकत्वं विज्ञेयमित्यर्थः । फलमाह—तावतेति । तावता=एतावता कृष्णनवमीमारभ्य शुक्लनवमीपर्यन्तं षोडशतिथिषु षोडशोपचारात्मकपूजारूपमेकमेवं कर्मात्र विधेयमस्तीति लभ्यते न तु तिथिभेदेन षोडश कर्माणीत्यर्थः । " समभिव्याहृत " इत्यत्र स्वसमभिव्याहृत इतिपाठे स्वपदेन दशमी ग्राह्या ।

व्याप्यकालसमुदाये सजातीयत्वविशेषणात् पूजायामुक्तविशेषणद्वयाक्रान्त-दण्डादिसमुदायाऽव्यापकत्वेपि न बाधः, अन्वयितावच्छेदकरूपेण साजात्यस्य विवक्षणात्. उक्तस्थले च 'तिथिम्' इत्यस्याध्याहारेण दशमीपदार्थतावच्छेदकस्य तिथित्वघटितत्वेन वा यावत्पदार्थान्वयितावच्छेदकतया तिथित्वभानात् तेन रूपेण दण्डादेर्दशमीसजातीयत्वाभावात् । तिथिश्चाऽखण्डकालविशेषरूपा न तु चन्द्रमण्डलकलारम्भाद्यनुगुणक्रियाप्रचयरूपा- पूजायास्तावत्क्रियावृत्तित्वासंभवात् ।

अत्र च प्रागभाव एव यावत्पदार्थः । द्वितीयार्थः प्रतियोगित्वमनुयोगित्वं वा,

---

ननूक्तपूजा षोडशतिथीनां कस्मिंश्चित् प्रातरादौ समये एव क्रियते नाऽहर्निशमिति कथं पूजायाः षोडशतिथिव्यापकत्वं स्यादित्याशङ्क्याह—व्याप्यकालेति, व्याप्यकालसमुदाये=पूजाव्याप्यकालसमुदाये किं वा षोडशतिथ्यात्मककालापेक्षया व्याप्यकालसमुदाये पूजाधिकरणे काले सजातीयत्वम्= तिथित्वेन रूपेण दशमीसजातीयत्वं स्वसजातीयेत्युक्तसीमात्वलक्षणनिक्षिप्तविशेषणेन विवक्षितमस्तीति दण्डादिसमुदाये विशेषणद्वयस्य=समभिव्याहृतकाल ( कृष्णनवमी ) प्रागभावानधिकरणत्वस्य स्वप्रागभावा( दशमीप्रागभावा )धिकरणत्वस्य च सत्त्वेपि तिथित्वेन दशमीसजातीयत्वाभावात् पूजायां तादृशदण्डादिसमुदायाव्यापकत्वेपि न व्यापकत्वस्य बाधः—तिथित्वेन दशमीसजातीयासु षोडशतिथिषु पूजायाः सत्त्वेन व्यापकत्वाक्षतेरित्यर्थः । उक्ते हेतुमाह—अन्वयितेति, पूजायाः षोडशतिथ्यात्मककालेऽन्वयोस्तीति पूजान्वयी षोडशतिथ्यात्मककालस्तस्यावच्छेदकं च तिथित्वमित्यन्वयितावच्छेदकं यत् तिथित्वं तेन रूपेण साजात्यस्य विवक्षणाद् दण्डादेश्च तिथित्वानाक्रान्ततया तिथित्वेन रूपेण सजातीयत्वाभावादित्यर्थः । ननु कथमत्र तिथित्वमन्वयितावच्छेदकं स्यादित्याशङ्कायामाह— उक्तस्थले इति, उक्तस्थले=" आरभ्य तस्यां दशमीं तु यावत् " इत्यत्र द्वितीयान्ततिथिपदस्याध्याहारेण ' दशमीं तिथिं यावत् ' इतिजातमिति दशमीपदार्थतावच्छेदकं तिथित्वमिति प्राप्तम्, अध्याहारस्वीकाराभावे च दशम्यास्तिथिरूपत्वाद् दशमीपदार्थतावच्छेदकं तिथित्वघटितम्=दशमीतिथित्वमेव ग्राह्यमिति सीमारूपयावत्पदार्थान्वयिनी या दशमी तदवच्छेदकतया तिथित्वं भासते एवेत्यन्वयितावच्छेदकत्वं तिथित्वे प्राप्तमेव तेन च तिथित्वरूपेण दण्डादेर्दशमीसजातीयत्वाभावात्तत्र दण्डादौ पूजाया अभावेपि न पूजायां व्यापकत्वक्षतिः—तिथित्वेन सजातीयासु षोडशतिथिषु पूजायाः सत्त्वादेवेत्यर्थः । तिथिस्वरूपमाह—तिथिश्चेति, तिथिश्च ज्योतिश्शास्त्रानुमताऽखण्डकालरूपैव ग्राह्या न तु चन्द्रमण्डलकलारम्भानुगुणक्रियासमूहरूपा. अन्यथा पूजायाः प्रातरादौ काले एव सत्त्वेन तादृशक्रियाश्रयीभूतप्रत्येकक्षणेष्वऽभावात् तिथिव्यापकत्वं न स्यादित्यर्थः ।

" आरभ्य तस्याम् " इत्युक्तोदाहरणं स्वयं नैयायिकरीत्या परिष्करोति—अत्रेति । तत्र= द्वितीयार्थे प्रतियोगित्वादौ । तत्प्रकृत्यर्थदशम्याः=द्वितीयाप्रकृत्यर्थदशम्याः । एतावत्पर्यन्तं

तत्र तत्प्रकृत्यर्थदशम्या अन्वयः, तावता दशमीप्रतियोगिकप्रागभावलाभः, तस्य स्वप्रतियोग्यऽवृत्तित्वविशिष्टव्यापकतासंबन्धेन पूजारूपसमभिव्याहृतक्रियाया-मन्वयः । व्यापकत्वं च स्वाधिकरणतिथिनिष्ठाभावप्रतियोगितानवच्छेदकपूजा-विशेषत्ववत्त्वम् । स्वाधिकरणत्वं च स्वाधिकरणकृष्णनवमीप्रागभावावच्छिन्नभे-दविशिष्टकालिकविशेषणतासंबन्धेन, एतेन कृष्णनवमीप्रागभावाधिकरणप्रति-योगिकभेदस्याऽव्यावर्तकतया तत्सामान्यभेदनिवेशे भाविकृष्णनवमीप्रागभावा-

---

यलब्धं तदाह—तावतेति । तावता=एतावता 'दशमीं यावत्' इत्यस्य दशमीप्रतियोगिकप्रागभाव इत्यर्थः सिद्ध इत्यर्थः । तस्य=दशमीप्रतियोगिकप्रागभावस्य, स्वं दशमीप्रागभावस्तत्प्रतियोगिभूता या दशमी तदवृत्तित्वसमानाधिकरणं यद् व्यापकत्वं तेन संबन्धेन पूजारूपक्रियायामन्वयः—पूजायां दशमीवृत्तित्वं नास्ति तदतिरिक्तषोडशतिथिव्यापकत्वं चास्त्येव. एतेनाश्विनकृष्णनवमीमारभ्य दशमीप्रागभावाधिकरणषोडशतिथिवृत्तित्वं पूजायां प्राप्तं दशम्यां च दशमीप्रागभावो न भवतीति दशम्यऽवृत्तित्वमपि प्राप्तम् । संबन्धघटकव्यापकत्वस्य स्वरूपमाह—व्यापकत्वमिति, स्वं दशमीप्रागभावस्तदधिकरणीभूतनवम्यादितिथिषु पूजाया अभावो नास्तीति तन्निष्ठाऽभावप्रतियोगितानवच्छेदकं यत्पूजाविशेषत्वं तद्वत्त्वमेव पूजायां व्यापकत्वमस्तीत्यर्थः । ननु दशमीप्रागभावाधिकरणभूतास्तु भाद्रपदतिथयोपि भवन्ति तासु पूजासंबन्धस्याभावात् कथं पूजायां स्वाधिकरणतिथिव्यापकत्वं स्यादित्याशङ्क्य स्वाधिकरणत्वं परिष्करोति—स्वाधिकरणत्वमिति, स्वं दशमीप्रागभावस्तदधिकरणीभूता याऽऽश्विनकृष्णनवमी तत्प्रागभावावच्छिन्ना या आश्विनकृष्णनवमीपूर्वभूता अष्टम्यादयस्तिथयस्तासां यो भेदः=कृष्णनवमीप्रागभावावच्छिन्ना न इत्याकारकभेदस्तादृशभेदविशिष्टेन कालिकविशेषणतासंबन्धेन=कालिकसंबन्धेन दशमीप्रागभावाधिकरणत्वं ग्राह्यं तथा च कृष्णनवमीपूर्वभाव्यऽष्टम्यादितिथिषु कृष्णनवमीप्रागभावस्यैव सत्त्वात् कृष्णनवमीप्रागभावावच्छिन्ना नेति भेद एव नास्ति येन तादृशाष्टम्यादीनां तादृशभेदघटितसंबन्धेन दशमीप्रागभावाधिकरणत्वं स्यात् तथा च तादृशाष्टम्यादिषु पूजाया असत्त्वेपि न व्यापकत्वक्षतिः, कृष्णनवमीप्रागभावावच्छिन्ना नेति भेदः कृष्णनवम्यादिषु भवतीति तादृशभेदघटितसंबन्धेन तासां दशमीप्रागभावाधिकरणत्वमप्यस्ति पूजाधिकरणत्वमप्यस्तीति पूजायां व्यापकत्वं प्राप्तमित्यर्थः । स्वाधिकरणत्वपरिष्कारे दशमीप्रागभावनिवेशस्य फलमाह—एतेनेति, यदि 'स्वाधिकरणत्वं च कृष्णनवमीप्रागभावावच्छिन्नभेदविशिष्टकालिकविशेषणतासंबन्धेन' इत्येवोच्येत तदा कृष्णनवमीपदेन भाविकृष्णनवमीग्रहणसंभवाद् भाविकृष्णनवमीप्रागभावाधिकरणत्वमादाय=भाविकृष्णनवमीप्रागभावावच्छिन्ना नेति भेदस्याभिप्रेतषोडशतिथिष्वऽसत्त्वात् ( तत्र भाविकृष्णनवमीप्रागभावावच्छिन्नत्वस्यैव सत्त्वात् ) तेन संबन्धेन तासां षोडशतिथीनां दशमीप्रागभावाधिकरणत्वमेव न संभवतीति कृष्णनवमीप्रागभावाधिकरणप्रतियोगिकभेदस्य=कृष्णनवमीप्रागभावावच्छिन्नभेदस्याव्यावर्तकतया=अभिप्रेतषोडशतिथीनां तदन्यतिथीनां च परस्परं विशे-

धिकरणत्वमादाय नाऽप्रसिद्धिः-तथा सत्यपि तत्तद्दशमीप्रागभावाधिकरण· कालस्य स्वाधिकरणकृष्णनवमीप्रागभावावच्छिन्नभेदवत्त्वसंबन्धेन तत्तत्प्राग· भावाधिकरणत्वाक्षतेः ।

न चैवमपि व्यवहितपूर्वकृष्णनवमीप्रागभावावच्छिन्नभेदघटितसंबन्धेनाऽव्य· वहितपूर्वकृष्णनवमीपूर्वतिथीनामपि तत्तद्दशमीप्रागभाववत्त्वात् तदधिकरण· तिथिव्यापकत्वं पूजायां न संभवतीति वाच्यम्, स्वावच्छिन्नकृष्णनवमीप्राग·

---

षापादकत्वासंभवात् तत्सामान्यभेदनिवेशे=तादृशस्य सामान्यरूपस्य कृष्णनवमीप्रागभावावच्छि· न्नभेदस्य निवेशेऽप्रसिद्धिः=अभिप्रेतषोडशतिथिषु दशमीप्रागभावाधिकरणत्वस्याऽप्रसिद्धिरेव स्यात् तासु भाविकृष्णनवमीप्रागभावस्यैव सत्त्वेन भाविकृष्णनवमीप्रागभावावच्छिन्नभेदस्य दशमीप्राग- भावसंबन्धभूतस्याऽसत्त्वात्, सा चाप्रसिद्धिरेतेन=उक्तरूपेण दशमीप्रागभावाधिकरणत्वस्य संबन्धपरिष्कारेण नास्तीत्यन्वयः, अप्रसिद्ध्यभावे हेतुमाह-तथा सत्यपीति, तथा सत्यपि= संबन्धस्वरूपपरिष्कारे दशमीप्रागभावाऽनिवेशे उक्तरीत्या षोडशतिथिषु दशमीप्रागभावाधि- करणत्वाऽप्रसिद्धावपि दशमीप्रागभावनिवेशेनाऽप्रसिद्धिर्नास्तीति भावः-तथा हि तत्तद्दशमी- प्रागभावाधिकरणत्वं दशमीपूर्वभावितिथिकूटकाले एव संभवतीति स्वाधिकरण=दशमीप्रागभावा- धिकरणीभूतकृष्णनवमीप्रागभावावच्छिन्नभेदवत्त्वसंबन्धेन तत्तद्दशमीप्रागभावाधिकरणकालस्य= अभिप्रेतषोडशतिथिकालस्य तत्तत्प्रागभावाधिकरणत्वम्=दशमीप्रागभावाधिकरणत्वमक्षतमेव, अत्र च यद्यपि दशमीप्रागभावाधिकरणत्वं कृष्णनवमीपूर्वभाव्यष्टम्यादिष्वस्ति तथापि तत्र कृष्णनवमीप्रागभावस्यैव सत्त्वेन कृष्णनवमीप्रागभावावच्छिन्नभेदवत्त्वं नास्तीति न तासां विव- क्षितदशमीप्रागभावाधिकरणत्वं प्राप्नोति, दशमीप्रागभावाधिकरणत्वे सति कृष्णनवमीप्रागभा- वानधिकरणत्वं चाभिप्रेतषोडशतिथिष्वेवास्ति । तत्र च पूजासंबन्धस्य सत्त्वात् पूजायां तादृश- तिथिकूटव्यापकत्वं प्राप्तमेवेत्यर्थः ।

नन्वेवमपि=उक्तरीत्या स्वाधिकरणत्वसंबन्धकोटौ दशमीप्रागभावाधिकरणीभूतकृष्णनवमी· प्रागभावावच्छिन्नभेदस्य निवेशे कृतेपि आश्विनशुक्लदशमीप्रागभावाधिकरणत्वं व्यवहितपूर्वकृष्ण- नवम्याम्=भाद्रपदकृष्णनवम्यामपि संभवति तादृशभाद्रपदकृष्णनवमीप्रागभावश्चाश्विनकृष्णप्रति- पदादितिथिषु नास्तीति तत्र व्यवहितपूर्वकृष्णनवमीप्रागभावावच्छिन्नभेदोस्त्येवेति तादृशभेदघ- टितकालिकसंबन्धेनाऽव्यवहितपूर्वकृष्णनवमीपूर्वतिथीनाम्= आश्विनकृष्णप्रतिपदादितिथीनामपि तत्तद्दशमीप्रागभाववत्त्वमऽस्ति पूजाधिकरणत्वं च नास्तीति कथं पूजायां दशमीप्रागभावाधिक· रणकृष्णनवमीप्रागभावानधिकरणतिथिकूटव्यापकत्वं स्यात् उक्तरूपाक्रान्तास्वाश्विनकृष्णप्रति· पदादिषु पूजाया अभावात्, कृष्णनवमीपदेन भाद्रपदकृष्णनवम्या अपि ग्रहणसंभवादित्याशङ्- क्याह-न चैवमपीति । कृष्णनवमीपदेन पूर्वकृष्णनवमीग्रहणमात्रप्रसक्तदोषं परिहरति-स्वावच्छि- न्नेति, उक्ते प्रागभावसंबन्धे=दशमीप्रागभावाधिकरणत्वस्य संबन्धपरिष्कारे यः खलु स्वावच्छिन्न·

**भावानधिकरणत्वसंबन्धेन स्वावच्छिन्नभेदस्यैव प्रागभावसंबन्धे निवेशनीयत्वात् । स्वाधिकरणनिष्ठाभावप्रतियोगितानवच्छेदकत्वमपि तादृशावच्छेदकत्व-**

---

भेदः=कृष्णनवमीप्रागभावावच्छिन्नप्रतियोगिकभेदः प्रविष्टस्तस्य तत्र 'दशमीप्रागभावसंबन्धे स्वावच्छिन्न=दशमीप्रागभावावच्छिन्नकृष्णनवमीप्रागभावानधिकरणत्वसंबन्धेनैव निवेशः कर्तव्यस्तथा चाश्विनकृष्णाष्टम्यादिषु दशमीप्रागभावावच्छिन्नभाद्रकृष्णनवमीप्रागभावानधिकरणत्वस्य सत्त्वेपि दशमीप्रागभावावच्छिन्नाश्विनकृष्णनवमीप्रागभावाधिकरणत्वमप्यस्तीत्याश्विनकृष्णाष्टम्यादयो न ग्राह्या अभिप्रेताश्विनकृष्णनवम्यादिषोडशतिथिषु तु दशमीप्रागभावावच्छिन्नकृष्णनवमीप्रागभावानधिकरणत्वमस्त्येवेत्येतादृशसंबन्धेन तासु स्वावच्छिन्नभेदः=कृष्णनवमीप्रागभावावच्छिन्नप्रतियोगिकभेदः संभवतीति तादृशभेदसंबन्धेन तासु स्वाधिकरणत्वम्=दशमीप्रागभावाधिकरणत्वं संभवत्येव. तासु पूजासंबन्धस्य च सत्त्वात् पूजायां तादृशषोडशतिथिव्यापकत्वमप्यस्त्येवेति न कोपि दोषः । यद्यप्यभिप्रेतषोडशतिथिष्वपि कार्तिककृष्णनवमीप्रागभावाधिकरणत्वमस्ति तथापि दशमीपदेनाश्विनशुक्लदशमीग्रहणात् तादृशदशमीप्रागभावाधिकरणत्वं तु कार्तिककृष्णनवम्यां नास्त्येवेति तादृशदशमीप्रागभावाधिकरणभूता कृष्णनवमी आश्विनकृष्णनवम्येव ग्रहीतुं शक्यते । भाद्रादिकृष्णनवमीपरिहारोपायस्त्वनुपदमेवोक्तः ।

ननु यदुक्तम्— " व्यापकत्वं च स्वाधिकरणतिथिनिष्ठाभावप्रतियोगितानवच्छेदकपूजाविशेषत्ववत्त्वम् " इति तत्र नञोऽत्यन्ताभाववद् भेदबोधकत्वमप्यस्तीत्यनवच्छेदकपदेन ' पूजात्वे स्वाधिकरणतिथिनिष्ठाभावप्रतियोगितावच्छेदकत्वं नास्ति ' इत्याकारकात्यन्ताभावो ग्राह्यः किं वा ' पूजात्वं स्वाधिकरणतिथिनिष्ठाभावप्रतियोगितावच्छेदकं न ' इत्याकारकभेदो ग्राह्य इत्याशङ्क्य भेदग्रहणेन परिष्करोति— स्वाधिकरणनिष्ठेति, स्वं दशमीप्रागभावः । व्यापकत्वलक्षणे यत्तु " स्वाधिकरणतिथिनिष्ठाभावप्रतियोगितानवच्छेदकत्वम् " इत्युक्तं तदपि=तत्रापि नञा भेद एव ग्राह्यः स च भेदः तादृशावच्छेदकत्वसंबन्धेन=दशमीप्रागभावाधिकरणतिथिनिष्ठाभावप्रतियोगितावच्छेदकत्वसंबन्धेन स्वावच्छिन्नस्य=दशमीप्रागभावावच्छिन्नस्य भेदो ग्राह्य इत्यन्वयः, तथा च दशमीप्रागभावाधिकरणाभिप्रेतषोडशतिथिषु पूजाया अभावो नास्तीति पूजात्वे दशमीप्रागभावाधिकरणाभिप्रेततिथिनिष्ठाभावप्रतियोगितावच्छेदकत्वं नास्त्येव. गगनस्य चावृत्तिपदार्थत्वात् तादृशतिथिष्वऽभावोस्त्येवेति गगनत्वे दशमीप्रागभावाधिकरणतिथिनिष्ठाभावप्रतियोगितावच्छेदकत्वमस्त्येवेति तेन संबन्धेन गगनत्वे दशमीप्रागभावोपि संभवतीति गगनत्वस्योक्तसंबन्धेन दशमीप्रागभावावच्छिन्नत्वं प्राप्तमित्युक्तसंबन्धेन स्वावच्छिन्नस्य=दशमीप्रागभावावच्छिन्नस्य गगनत्वस्य भेद उक्तपूजाविशेषत्वेऽस्त्येवेति तादृशभेदवत्त्वमेव पूजात्वेऽभावप्रतियोगितानवच्छेदकत्वं ज्ञेयं तथा च ' दशमीप्रागभावाधिकरणतिथिनिष्ठाभावप्रतियोगितावच्छेदकत्वसंबन्धेन दशमीप्रागभावावच्छिन्नं न ' इत्याकारकभेदवत्त्वमेव पूजात्वे व्यापकतावच्छेदकत्वं लब्धमित्यर्थः । एवं भेदनि-

संबन्धेन स्वावच्छिन्नस्य भेदः, अतस्तादृशावच्छेदकत्वत्वावच्छिन्नाभावनिवेशे यत्किंचिद्दशमीप्रागभावाधिकरणनिष्ठाभावप्रतियोगितावच्छेदकत्वमादायाऽप्रसिद्धिवारणाय विशिष्य तत्तत्प्रागभावरूपस्वपदार्थस्य संबन्धमध्ये प्रवेश्यतयाऽननुगम इति निरस्तम् ।

देशरूपा सीमा च 'काशीतः कौशिकीं यावद् याति' इत्यादौ, तत्र कौशिक्या गमनसीमात्वं प्रतीयते तच्च काशीपूर्वकौशिकीपश्चिमदेशव्यापकगमनानधिकरणत्वम् । यावत्पदेन च कौशिक्यनधिकरणत्वे सति काशीपूर्वकौशिकीपश्चिमदेशव्यापकत्वं गमने प्रत्याय्यते । तत्र द्वितीयार्थोऽवधित्वमवधिमत्त्वं वा प्रतीच्याद्यन्वयि । निष्कर्षः पूर्ववत् स्वयमूहनीयः ।

---

वेशस्य फलमाह- अत इति, उक्तव्यापकत्वलक्षणे अनवच्छेदकेतिपदघटितनञाऽत्यन्ताभावग्रहणतात्पर्येण तादृशावच्छेदकत्वत्वावच्छिन्नाभावनिवेशे नाम यदि दशमीप्रागभावाधिकरणतिथिनिष्ठाभावप्रतियोगितावच्छेदकत्वाऽत्यन्ताभावस्य निवेशः स्यात् तदा यत्किंचिद्दशमीप्रागभावाधिकरणभूता=श्रावणादिदशमीप्रागभावाधिकरणभूता या तिथिस्तस्यां पूजाया अभावादेव तादृशतिथिनिष्ठाभावप्रतियोगितावच्छेदकत्वमेव पूजात्वे प्राप्तं न तु तादृशतिथिनिष्ठाभावप्रतियोगितावच्छेदकत्वाभाव इति तादृशतिथिनिष्ठाभावप्रतियोगितावच्छेदकत्वेन पूजात्वे व्यापकतावच्छेदकत्वस्याऽप्रसिद्धिरेव स्यात्- अत्यन्ताभावनिवेशे तादृशतिथिनिष्ठाभावप्रतियोगितावच्छेदकत्वाभावस्यैव व्यापकत्वपदार्थत्वात् तस्य चाभावस्य पूजात्वे उक्तरीत्या बाधात् । एतद्दोषपरिहाराय यदि स्वाधिकरणेत्यत्र स्वपदार्थस्य दशमीप्रागभावस्य तत्तद्दशमीप्रागभावरूपेण निवेशः कृतः स्यात्तदाऽऽश्विनशुक्लदशम्या एव ग्रहणेन यत्किंचिद्दशमीग्रहणासंभवाद् उक्ते दोषे निवृत्तेपि तत्तद्दशमीप्रागभावस्य संबन्धमध्ये प्रवेशेनाऽननुगमः स्यादिति दोषः स्यादिति निरस्तम्- उक्तव्यापकत्वलक्षणे उक्तनञोक्तभेदस्य ग्रहणेनाऽत्यन्ताभावस्याऽग्रहणात् । नञा भेदग्रहणे च दशमीप्रागभावाधिकरणतिथिनिष्ठाभावप्रतियोगितावच्छेदकत्वसंबन्धेन यावद्दशमीप्रागभावावच्छिन्नगगनत्वस्य भेदः पूजात्वे प्राप्स्यत्येवेति न पूजात्वे व्यापकतावच्छेदकत्वाप्रसिद्धिशङ्कापि संभवति- तादृशभेदवत्त्वस्यैवात्र व्यापकतावच्छेदकत्वेनाभिमतत्वादित्यर्थः । एवकारस्य तृतीयान्तसबन्धनेतिपदेनान्वयः ।

देशरूपसीमाबोधकयावच्छब्दमुदाहरति-देशरूपेति । तत्र=इत्यत्र । तच्च=सीमात्वं च । तेन विना सीमा भवतीति कौशिकीं यावद् गमनकर्त्रा काशीतः कौशिकीपश्चिमदेशपर्यन्तमेव गन्तव्यमिति कौशिकीपश्चिमदेशव्यापकगमनाऽनधिकरणत्वमेव कौशिक्यां सीमात्वं प्राप्तमित्यर्थः । यावत्पदबोध्यमाह-यावत्पदेनेति, तेन विना सीमा भवतीति सीमाभूतकौशिक्यऽनधिकरणत्वं गमने प्राप्तम् । कौशिकीपदोत्तरद्वितीयार्थमाह-तत्रेति, अवधित्वमऽवधिमत्त्वं चाश्रयतासंबन्धेन कौशिकीपश्चिमदिशि विज्ञेयमित्यर्थः । कौशिकी च काशीतः पूर्वदिश्यऽभ्युप-

अभिविध्यर्थो यावच्छब्दः 'कार्तिकमारभ्य चैत्रं यावच्छीतं भवति' इत्यादौ 'काशीतः पाटलिपुत्रं यावद् वृष्टो देवः' इत्यादौ च। अभिविधिः=तत्पर्यन्ताभिव्याप्तिः । एवं च प्रथमे कार्तिकपूर्वकालोत्तरचैत्रोत्तरकालपूर्वकालव्यापकत्वं चैत्रोत्तरकालाऽवृत्तित्वसहितं शीतभवने. द्वितीये च काशीपश्चिमदेशपूर्वपाटलिपुत्रपूर्वदेशपश्चिमदेशव्यापकत्वं पाटलिपुत्रपूर्वदेशावृत्तित्वसहितं वृष्टौ यावत्पदेन प्रत्याय्यते, विशेषः पूर्ववत्। यावच्छब्दसमानार्थकाऽऽङ्शब्दस्थलेपि दर्शितैव रीतिरवसेया, तद्योगे च पञ्चमी साधुः ।

'यज्ञमनु प्रावर्षत्' इत्यादावऽनुशब्दार्थः कारकत्वरूपं हेतुत्वम्–"अनुर्लक्षणे" इत्यत्र कर्मप्रवचनीयसंज्ञाविधायकसूत्रे लक्षणपदस्य कारकहेतुपरत्वात्, तत्र च यज्ञान्वितस्याधेयत्वरूपद्वितीयार्थस्याऽन्वयः, हेतुतायाश्च निरूपकत्वसंबन्धेन

---

गन्तव्या । किं वा पूर्ववदेवात्राप्यवधित्वं प्राचीनमतेनाऽवधिमत्त्वं च नवीनमतेन द्वितीयार्थ इत्यनुसन्धेयम् ।

अभिविध्यर्थकयावच्छब्दमुदाहरति–अभीति । तेन सहाभिविधिः । 'चैत्रं यावत्' इतिकालरूपाभिविध्युदाहरणम्, 'पाटलिपुत्रं यावत्' इति देशरूपाभिविध्युदाहरणम् । अभिविधिस्वरूपमाह–अभिविधिरिति, निष्कर्षमाह–एवं चेति । प्रथमे=प्रथमोदाहरणे, कार्तिकपूर्वकालोत्तर=कार्तिकपूर्वकाल आश्विनकालस्तदपेक्षयोत्तरकालः कार्तिकारम्भकालस्तं कालमारभ्य चैत्रोत्तरकालपूर्वकाल=चैत्रोत्तरकालो वैशाखारम्भकालस्तदपेक्षया पूर्वकालश्चैत्रसमाप्तिकालस्तादृशकालव्यापकत्वं वैशाखव्यापकत्वं शीतेनास्तीति चैत्रोत्तरकालावृत्तित्वसहितं शीतभवने=शीतसत्तायां यावत्पदेन प्रत्याय्यते इत्यन्वयः । द्वितीये=द्वितीयोदाहरणे च काशीपश्चिमदेशपूर्व=काश्या यः पश्चिमदेशस्तदपेक्षया पूर्वदेशः पश्चिमायां काश्यारम्भदेशस्तं देशमारभ्य पाटलिपुत्रपूर्वदेशपश्चिमदेश=पाटलिपुत्रापेक्षया यः पूर्वदेशस्तदपेक्षया पश्चिमदेशः पूर्वस्यां पाटलिपुत्रनगरसमाप्तिदेशस्तादृशदेशव्यापकत्वं पाटलिपुत्रापेक्षया यः पूर्वदेशस्तदऽवृत्तित्वसहितं वृष्टौ यावत्पदेन प्रत्याय्यते इत्यन्वयः । यावच्छब्दसमानार्थकाऽऽङ्शब्दप्रयोगस्थलेपि= 'आबालं हरिभक्तिः' 'कार्तिकमारभ्याऽऽचैत्रम्' 'काशीत आपाटलिपुत्रम्' इत्यादावप्युक्तयावच्छब्दरीतिरेव विज्ञेया । तद्योगे=आङ्शब्दयोगे "पञ्चम्यऽपाऽऽङ्परिभिः" इतिसूत्रेण पञ्चम्यपि भवति यथा–'आ मुक्तेः संसारः' इति ।

अनुशब्दसमभिव्याहृतद्वितीयार्थमनुशब्दार्थं चाह–यज्ञमिति । कारकहेतुपरत्वादिति–उक्तं च महाभाष्ये "अनुर्हेताविति" "लक्षणेन हेतुरपि व्याप्तो न ह्यवश्यं तदेव लक्षणं भवति येन पुनः पुनर्लक्ष्यते किं तर्हि ? यत् सकृदपि निमित्तत्वाय कल्पते तदपि लक्षणं भवति" इत्यादि । तथा चात्रानुशब्देन हेतुत्वबोधकेन यज्ञे वृष्टिहेतुत्वं बोध्यते–यज्ञहेतुका वृष्टिरित्यर्थः । तत्र=अनुशब्दार्थहेतुत्वे आधेयत्वरूपद्वितीयार्थस्य=वृत्तित्वरूपद्वितीयार्थस्यान्वयः, हेतुत्वस्य च

वृष्टावन्वयः । जन्यत्वं वाऽनुशब्दार्थः, तत्र निरूपितत्वरूपद्वितीयार्थस्य यज्ञान्वितस्यान्वयः, जन्यतायाश्चाऽऽश्रयत्वसंबन्धेन वृष्टावन्वयः । 'अन्वर्जुनं योद्धारः' इत्यत्रापकर्षरूपं हीनत्वमनुशब्दार्थः, अर्जुनावधिकत्वं द्वितीयान्तार्थस्तस्य चापकर्षेऽन्वयः । अवधित्वस्याऽपादानतारूपत्वेपि क्रियान्वयाभावान्न पञ्चमीप्रसक्तिः । 'अस्मादयं दीर्घः' इत्यादौ 'भवति' इत्यस्याऽध्याहारेणैव पञ्चम्युपपादनात् । अतः षष्ठ्यपवादतानिर्वाहः ।

'वृक्षं प्रति विद्योतते विद्युत्' 'मातरं प्रति साधुः' 'यो मां प्रति स्यात्' 'वृक्षं वृक्षं प्रति सिञ्चति' इत्यादौ "लक्षणेत्थंभूत०" इत्यादिसूत्रानुशिष्टकर्मप्रवचनीय-

---

निरूपकत्वसंबन्धेन वृष्टावन्वयः—यज्ञवृत्तिहेतुताया वृष्टिनिरूपितत्वात् । आधेयत्वस्य निरूपकत्वसंबन्धेन यज्ञेन्वयः, स्वरूपसंबन्धेनाश्रयत्वसंबन्धेन वा हेतुत्वेऽन्वय इत्यर्थः तथा च यज्ञनिष्ठा या वृष्टिहेतुता तादृशहेतुतानिरूपिका वृष्टिरिति शाब्दबोधः । पक्षान्तरमाह—जन्यत्वमिति, तत्र=जन्यत्वे । निरूपितत्वं द्वितीयार्थस्तथा च यज्ञनिरूपितजन्यतावती वृष्टिरिति प्राप्तम् । उदाहरणान्तरमाह—अन्वर्जुनमिति, हीनत्वमनुशब्दार्थः, अवधित्वं द्वितीयार्थ इति 'अर्जुनम्' इति-द्वितीयान्तस्याऽर्जुनावधिकत्वमर्थस्तस्य=अर्जुनावधिकत्वस्य चापकर्षेऽन्वयः तथा च 'अर्जुनावधिकापकर्षवन्तो योद्धारः ( अर्जुनापेक्षयाऽपकृष्टाः ) इत्यर्थः सिद्धः । नन्ववधित्वं ह्यपादानतारूपमेव अपादानत्वे च "अपादाने पञ्चमी" इत्यनेन पञ्चमी प्राप्नोतीत्यत्राप्यर्जुनपदात् पञ्चमी किं न स्यादित्याशङ्क्याह—अवधित्वस्येति, पञ्चमी कारकविभक्तिरस्तीति यत्र पञ्चम्यार्थावधित्वस्य क्रियायामन्वयो भवति तत्रैव पञ्चमी भवति नान्यत्र. अत्र चावधित्वस्यापकर्षे एवान्वयो न क्रियायामिति न पञ्चम्यापत्तिरित्यर्थः । नन्वेवम् 'अस्मादयं दीर्घः' इत्यत्रापि पञ्चमी न स्यात् क्रियापदस्याभावादत्राप्यवधित्वस्य क्रियायामन्वयासंभवादित्याशङ्क्याह—अस्मादिति, अत्र 'भवति' इति क्रियापदाध्याहारेण तद्वाच्यक्रियायामेवावधित्वस्यान्वयेन पञ्चम्या युक्तत्वादित्यर्थः । फलमाह—अत इति, उपपदविभक्तिः षष्ठीबाधिकैव भवति न कारकविभक्तिबाधिका, अत्र च पञ्चम्याः प्राप्तिरेव नास्ति येनोपपदविभक्तेरत्रत्यद्वितीयायाः पञ्चमीबाधकत्वं स्यादिति षष्ठ्यपवादतानिर्वाहो जात इत्यर्थः ।

" लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यऽनवः" इतिसूत्रसिद्धप्रयोगानुदाहरति—वृक्षमिति । " लक्षणेत्थम् " इतिसूत्रेण लक्षणाद्यर्थबोधकप्रत्यादीनां कर्मप्रवचनीयसंज्ञा विधीयते ततश्च " कर्मप्रवचनीययुक्ते द्वितीया " इत्यनेन कर्मप्रवचनीयप्रत्यादियोगे द्वितीया भवति, अनुशिष्टम्=अनुशासितम् । प्रथमे='वृक्षं प्रतिविद्योतते विद्युत्' इत्यत्र कृष्णपक्षरात्रावन्तस्थः पुरुषो विद्युतमपश्यन्नपि वृक्षप्रकाशेन विद्युद्विद्योतनमनुमिनोति—प्रकारान्तरेण वृक्षप्रकाशासंभवादिति परिचायकत्वरूपम्=ज्ञापकत्वरूपं लक्षणत्वं प्रत्यादिकर्मप्रवचनीयार्थः परिचायकत्वं वृक्षे वर्तते इति आधेयत्वम्=वृत्तित्वं द्वितीयार्थः । वृक्षप्रकाशज्ञाप्या विद्युत् किंवा प्रकाशद्वारा वृक्षवृत्तिज्ञापक-

**संज्ञकप्रत्यादिशब्देषु प्रथमे परिचायकत्वरूपं लक्षणत्वं परिचेयत्वरूपं लक्ष्यत्वं वा कर्मप्रवचनीयार्थः, वृक्षप्रकाशेन विद्युद्विद्योतनज्ञानाद् वृक्षस्य परिचायकता, द्वितीयार्थश्चाऽऽधेयत्वं निरूपितत्वं वा । द्वितीये साधुत्वम्=प्रियकारित्वं साधुत्वघटकक्रियान्वयी संबन्धः कर्मप्रवचनीयार्थः, संबन्धान्वयिप्रतियोगित्वं तन्निरूपकत्वं वा द्वितीयार्थः । तृतीये भागः=स्वत्वाश्रयः प्रत्याद्यर्थः, तदन्वयी संबन्धो द्वितीयार्थः, इत्थ चाऽस्मत्संबन्धी यो भाग स्यादिति बोधः । चतुर्थे कर्मण्येव द्वितीया षत्वबाध एव संज्ञाफलं प्रतिश्च निरर्थकः-'गृहे गृहेऽश्वाः' इत्यादाविव व्यापकताया द्विरुक्तिबललभ्यत्वात् । प्रतिशब्दस्य व्यापकतार्थकत्वे उक्तार्थकत्वेन 'गृहं व्याप्नुवतेऽश्वाः' इत्यादाविव द्विरुक्तिरेव न स्यात् ।**

---

तन्निरूपितज्ञाप्यताश्रयविद्योतनव्यापारवती विद्युत् इत्यादिश्च शाब्दबोधः । पक्षान्तरमाह—परिचेयत्वरूपमिति, परिचेयत्वरूपम्=परिचयकर्मत्वरूपं लक्ष्यत्वं प्रतेरर्थः, अत्र पक्षे निरूपितत्वं द्वितीयार्थः—वृक्षनिरूपितलक्ष्यत्ववती विद्युद्विद्योतते इत्यर्थः । द्वितीये='मातरं प्रति साधुः' इत्यत्र साधुत्वं प्रियकारित्वमेव तत्र साधुत्वघटका=प्रियकारित्वघटका ह्यनुकूलाचरणरूपा या क्रिया तादृशक्रियान्वयी=तादृशक्रियानिरूपितो यः सेवकत्वादिरूपः संबन्धः स प्रत्यादिकर्मप्रवचनीयस्यार्थः, तादृशसंबन्धप्रतियोगित्वं मातरीति प्रतियोगित्वं द्वितीयार्थस्तथा च मातृप्रतियोगिकोक्तसंबन्धाश्रय इत्यर्थः प्राप्तः । किं वा तादृशसंबन्धनिरूपकत्वं मातरि वर्तते इति निरूपकत्वं द्वितीयार्थस्तथा च मातृनिरूपितोक्तसंबन्धवानित्यर्थः प्राप्तः । तृतीये='यो मां प्रति स्यात्' इत्यत्र स्वत्वाश्रयो भाग एव कर्मप्रवचनीयप्रत्याद्यर्थः, तदन्वयी=भागान्वयी यः संबन्धः=स्वत्वसंबन्धः स द्वितीयार्थ इत्यर्थः । वाक्यार्थस्वरूपमाह—इत्थमिति, अत्र 'दीयताम्' इत्यादिशेषः । चतुर्थे='वृक्षं वृक्षं प्रति सिञ्चति' इत्यत्र कर्मण्येव द्वितीयेति कर्मत्वं द्वितीयार्थस्तथा च सकलवृक्षकर्मकं सेचनमिति शाब्दबोधः । नन्वत्र वृक्षस्य कर्मत्वं तु सिञ्चतिक्रियापदयोगादपि संभवतीति प्रतिशब्दस्य कर्मप्रवचनीयसंज्ञाविधानस्य किं फलमित्याशङ्क्याह—षत्वबाध एवेति, अत्र "उपसर्गात्सुनोति" इतिसूत्रेण उपसर्गसंज्ञकप्रतिशब्दयोगे सिचः सकारस्य षत्वं प्राप्नोति तत्र "लक्षणेत्थंभूत" इति सूत्रेण प्रतेः कर्मप्रवचनीयसंज्ञया उपसर्गसंज्ञाबाधात् षत्वबाधो जातः स एव प्रतेः कर्मप्रवचनीयसंज्ञाफलम्, तदुक्तम्—"अत्रोपसर्गत्वाभावान्न षत्वम्" इति, इत्यर्थः । 'गृहे गृहेऽश्वाः' इत्यत्र यथाऽश्वानां गृहव्यापकत्वं द्विरुक्त्या लभ्यते तथा 'वृक्षं वृक्षं प्रति सिञ्चति' इत्यत्रापि सेचनस्य वृक्षव्यापकता द्विरुक्त्यैव लभ्यते इति प्रतिशब्दो निरर्थक एव न वीप्सार्थक इत्याह—प्रतिश्चेति । विपक्षे बाधकमाह— प्रतिशब्दस्येति, यथा 'गृहं व्याप्नुवतेऽश्वाः' इत्यत्र व्याप्नुवते इति पदेनैव व्यापकताया उक्तत्वाद् गृहपदद्विरुक्तिर्न भवति—उक्तार्थानामप्रयोग इति नियमात् तथा 'वृक्षं वृक्षं प्रति' इत्यत्रापि यदि प्रतिशब्दो व्यापकताबोधकः स्यात् तदा व्यापकताबोधिका

न च प्रतिशब्दस्यापि व्यापकतार्थकत्वम् 'प्रतिदिनमधीते' इत्यादौ क्लृप्तं द्विरुक्तेरपि 'वृक्षं वृक्षं सिञ्चति' इत्यादौ क्लृप्तमिति प्रकृते "संभेदेनान्यतरवैयर्थ्यम्" इतिन्यायाद् द्वयोरेव व्यापकताबोधकत्वमऽवर्जनीयमिति वाच्यम्, 'प्रतिमासमधीते' इत्यादावऽव्ययीभावे हि प्रथमातिरिक्तविभक्तेरसाधुत्वेन प्रतिशब्देन मासान्वितव्यापकत्वं क्रियायां बोध्यते विभक्तिः साधुत्वार्था। 'वृक्षं वृक्षं प्रति सिञ्चति' इत्यत्र तु सेके द्वितीयार्थकर्मत्वावरुद्धप्रकृत्यर्थवृक्षविशेषितव्यापकता बोधयितुं न शक्यते- एकविशेषणत्वेनोपस्थितस्यान्यत्र विशेषणत्वे व्युत्पत्तिविरोधात्. कर्मत्वसंबन्धस्यैव च व्यापकताघटकत्वेन स्वीकरणीयतया वृत्त्यनियामकस्य तस्य तथात्वासंभवाच्च। तस्य सेककर्मत्वे आश्रयतासंबन्धघटितव्यापकताप्रत्यायनमपि न युज्यते- प्रकृत्यर्थसुबर्थयोरन्तरा

---

वृक्षपदद्विरुक्तिर्न स्यात्. उक्तार्थानामप्रयोगात्. अस्ति च द्विरुक्तिरिति तयैव व्यापकतारूपार्थे लब्धे प्रतिशब्दो निरर्थक एवेत्यर्थः।

शङ्कते- न चेति। प्रकृते='वृक्षं वृक्षं प्रति सिञ्चति' इत्यत्र। संभेदेति- एकार्थबोधकयोरेकत्रापि संभेदे=संयोगे प्राप्तेऽन्यतरस्य वैयर्थ्यं न भवति किं तु द्वयोरेव सार्थक्यमेव भवतीति 'वृक्षं वृक्षं प्रति' इत्यत्र व्यापकताबोधकयोर्द्वयोरेव=द्विरुक्तिप्रतिशब्दयोर्द्वयोरेव सार्थक्यं युक्तमित्यर्थः। परिहारमाह- प्रतिमासमिति, अव्ययीभावसमासोत्तरं साधुत्वार्थं प्रथमैव प्राप्नोति न प्रथमातिरिक्तापि विभक्तिः सा प्रथमापि निरर्थकैव भवति तस्मात् 'प्रतिमासम्' इत्यऽव्ययीभावसमासोस्तीति तदुत्तरं द्वितीयादिविभक्तिरेव न संभवति यया व्यापकत्वबोधनं स्यादिति प्रतिशब्देनैव मासव्यापकत्वमध्ययनक्रियायां बोध्यते इति युक्तं तत्र प्रतेर्व्यापकत्वार्थकत्वम्- प्रकारान्तरेण व्यापकत्वलाभाऽसंभवात्। 'वृक्षं वृक्षं प्रति' इत्यत्र तु प्रतिशब्दबोध्यव्यापकताया निरूपकत्वसंबन्धेन वृक्षे विशेषणत्वं स्यादेव एवं च सेचनरूपक्रियायां प्रतिशब्देन व्यापकत्वबोधनं न संभवति- द्वितीयार्थकर्मत्वेनावरुद्धः=विशिष्टो यः प्रकृत्यर्थभूतो वृक्षस्तद्विशेषितायाः= वृक्षे विशेषणतां प्राप्ताया व्यापकतायाः सेके विशेषणत्वासंभवात्- एकविशेषणत्वेनोपस्थितस्यान्यत्र विशेषणत्वं न भवतीति व्युत्पत्तिविरोधादित्यर्थः। एवम् 'वृक्षं वृक्षं प्रति' इत्यत्र प्रतिशब्देन वृक्षविशेषणत्वेनापि व्यापकत्वं बोधयितुं न शक्यत इत्याह- कर्मत्वेति, कर्मत्वसंबन्धेनैव प्रतिशब्दप्रतिपाद्यव्यापकताया वृक्षविशेषणत्वं स्वीकार्यं तत्र च तस्य=कर्मत्वसंबन्धस्य वृत्त्यनियामकतयाऽभावीयप्रतियोगितावच्छेदकत्वं न संभवतीति 'न वृक्षं वृक्षं प्रति सिञ्चति' इत्यत्र कर्मत्वसंबन्धेन व्यापकत्वाभावबोधनासंभवेन तस्य कर्मत्वसंबन्धस्य तथात्वासंभवात्=व्यापकतासंबन्धत्वमपि न संभवतीत्यर्थः। ननु प्रतिशब्दप्रतिपाद्यव्यापकताया यदि सेचनवृक्षयोरन्वयो न संभवति तदा सेचनकर्मत्वे आश्रयतासंबन्धेनान्वयो भवतु- आश्रयतासंबन्धस्य न वृत्तिनियामकत्वेन न व्यापकत्वाभावबोधानुपपत्तिरपीत्याशङ्क्याह- तस्येति, तस्य=प्रतिशब्द

नञर्थातिरिक्तभानस्य व्युत्पत्तिविरुद्धत्वात्, "नामूढस्येतरोत्पत्तेः" "नानुपमृद्य प्रादुर्भावात्" इत्यादौ नञर्थमात्रस्य पञ्चम्यर्थहेतुतायां विशेषणत्वेन प्रकृत्यर्थस्य च विशेष्यत्वेनाऽन्वयात्, तस्मात् प्रतिरनर्थक एव । द्विरुक्तान्वये तात्पर्यबलाच्च सेचनकर्मत्वे वृक्षादेर्व्यापकत्वं संसर्गतयैव भासते ।

यदि च 'वृक्षं प्रति षिञ्चति' इत्यादावुपसर्गस्य प्रतेर्वाच्यो द्योत्यो वा कश्चिदन्योऽर्थः ? तदाऽस्तु स एवात्रापि तदर्थः । अत एव तस्यैवाऽस्यापि प्रतिशब्दस्य प्रयोगो नानर्थः । वस्तुतः– अनर्थकयोः कर्मप्रवचनीयाऽधिपरि-शब्दयोः प्रयोगवत् तादृशप्रतेरपि प्रयोगस्य प्रयोजनान्तरानुपपत्तिश्चिन्त्या ।

---

स्वाश्रयतासंबन्धेन सेककर्मत्वेपि व्यापकताप्रत्यायकत्वं न संभवतीत्यर्थः । उक्ते हेतुमाह– प्रकृत्यर्थेति, व्यापकतायाः सेककर्मत्वेऽन्वये हि कर्मत्वविशेषणीभूतव्यापकतायाः कर्मत्वापेक्षया पूर्वं प्रवेशेन प्रकृत्यर्थभूतो यो वृक्षः सुबर्थभूतं च यत्कर्मत्वं तयोर्मध्यपतित्वं प्राप्नुयाद् न चैतद् युक्तम्– प्रकृत्यर्थसुबर्थयोर्मध्ये नञर्थातिरिक्तपदार्थभानस्य व्युत्पत्तिविरुद्धत्वादित्यर्थः । प्रकृत्यर्थसुबर्थयोर्मध्ये नञर्थमात्रस्य भानं भवतीत्यस्योदाहरणमाह– नामूढस्येति, इदं च चतुर्थाध्यायप्रथमाह्निकन्यायसूत्रद्वयम्, मोहहीनस्य रागद्वेषौ न भवत इतिप्रथमसूत्रार्थस्तत्र मोहाभावे रागद्वेषोत्पत्त्यभावहेतुत्वं प्रतीयते इति पञ्चम्यर्थहेतुतायां नञर्थाभावस्य विशेषणत्वेन प्रकृत्यर्थ ( उत्पत्ति ) विभक्त्यर्थ ( हेतुत्व ) योर्मध्यपतितत्वेन भानं भवति, एवं नानुपमृद्येत्यस्य बीजादेरुपमर्दम्=विनाशं विनाऽङ्कुरादिप्रादुर्भावो न भवतीत्यर्थस्तत्रोपमर्दाभावे प्रादुर्भावाभावहेतुत्वं प्रतीयते इति न प्रादुर्भावादित्यत्र पञ्चम्यर्थहेतुतायां नञर्थाभावस्य विशेषणत्वेन प्रकृत्यर्थभूतप्रादुर्भाव-विभक्त्यर्थभूतहेतुत्वयोर्मध्यपतितत्वेन भानं भवतीत्यर्थः । उपसंहरति– तस्मादिति, यस्मात् प्रतिशब्देन सेकसेककर्मत्ववृक्षाणां विशेषणत्वेन व्यापकताबोधनं न संभवति तस्मात् प्रतिशब्दोत्र निरर्थक एवेत्यर्थः । नन्वेवं द्विरुक्त्यापि व्यापकत्वबोधनं न स्यादित्याशङ्क्याह– द्विरुक्तेति । वृक्षादेरिति षष्ठ्यर्थो निरूपितत्वम् । वृक्षादिनिरूपितं सेचनकर्मत्वनिष्ठं व्यापकत्वं द्विरुक्तितात्पर्यबलात् संसर्गमर्यादया भासते, संसर्गमर्यादया भाने च न कोपि दोषः, उक्तदोषाणां प्रतिशब्दोपस्थापितव्यापकत्वस्य प्रकारतया भाने एव संभवादित्यर्थः ।

पक्षान्तरमाह–यदि चेति, अन्यः=व्यापकत्वभिन्नः कर्मत्वादिरूपः । सः=व्यापकत्वभिन्नः । अत्र='वृक्षं वृक्षं प्रति सिञ्चति' इत्यत्र । तदर्थः=प्रतिशब्दार्थः । कर्मत्वस्य प्रतिशब्दार्थत्वे द्वितीया साधुत्वार्था निरर्थकैव विज्ञेयेति भावः । अतएव नाम 'वृक्षं प्रति' 'वृक्षं वृक्षं प्रति' इत्युभयत्रापि प्रतिशब्दस्य समानार्थत्वादेव । तस्यैव='वृक्षं प्रति' इत्यत्रत्यप्रतिशब्दस्यैव । अस्य='वृक्षं वृक्षं प्रति' इत्यत्रत्यप्रतिशब्दस्य । स्वाभिप्रायमाह–वस्तुत इति, तादृशप्रतेः=कर्मप्रवचनीयप्रतेः । यथा 'कुतोऽध्यागच्छति कुतः पर्यागच्छति' इत्यत्रानर्थकयोरप्यऽधिपरिशब्दयोः प्रयोगस्य प्रयोजनान्तरानुपपत्तिर्नास्ति "गतिर्गतौ" इतिनिघाताभावस्यैव प्रयोजनत्वोपपत्तेस्तथा 'वृक्षं वृक्षं

प्रतेर्यत्र व्यापकतार्थकत्वं तत्र 'प्रतिवृक्षं सिञ्चति' इत्यव्ययीभावसमास एव नियतः- तदर्थकाऽव्ययस्याऽव्ययीभावसमासविधेर्विभाषाधिकारीयताविरहेण नित्यत्वात्, अतो वीप्सया 'प्रतिवृक्षं सिञ्चति' इतिवत् 'वृक्षं प्रति सिञ्चति' इति न प्रयोगः। यत्र व्यापकत्वार्थकेनाऽव्ययेनाऽव्ययीभावसमासस्तदुत्तरं सर्वत्र प्रथमा विभक्तिरेव। न तु 'उपकुम्भे गच्छति' इतिवत् 'प्रतिगृहेऽश्वाः' इत्यादिरपि प्रयोगः- उक्तयुक्त्या तत्र प्रतिनाऽश्वादौ गृहादिव्यापकताया बोधयितुमशक्यत्वात्। तदाधारतादिरूपसप्तम्याद्यर्थे च समासार्थस्य गृहादिव्यापकत्वस्याश्रयतासंबन्धेन तदर्थस्य व्यापकरूपधर्मिणो वाऽभेदसंबन्धेनान्वये 'मेयत्वे घटः' 'घटवृत्तौ घटः' इत्यादिप्रयोगवारणाय कल्प्यायाः सप्तम्यर्थाधारतायामाऽऽश्रयत्वसंबन्धेनाऽभेदसंबन्धेन वा प्रकृत्यर्थाऽनन्वयव्युत्पत्तेर्विरोधात्।

---

प्रति' इत्यत्रानर्थककर्मप्रवचनीयप्रतिशब्दप्रयोगस्य प्रयोजनान्तरानुपपत्तिर्नास्ति-( ३८३ पृ. ) उक्तपत्वाभावस्यैव प्रयोजनत्वोपपत्तेरिति प्रयोजनान्तरानुपपत्तिर्योक्ता सा चिन्त्येत्यर्थः। प्रतेर्यत्रेति, "अव्ययं विभक्ति" इत्यनेन यथाशब्दार्थकाव्ययेन समासः प्राप्तो यथाशब्दार्थाश्च योग्यतावीप्सादयस्तत्र वीप्सैव व्यापकतेति तदर्थकप्रतिशब्देन सह समासे जाते 'प्रतिवृक्षम्' इति जातम्। तस्मात् 'वृक्षं वृक्षं प्रति' इत्यत्र प्रतिशब्दस्य व्यापकतार्थकत्वेऽव्ययीभावसमास एव स्यात् न चास्ति समास इति नात्र प्रतिशब्दो व्यापकतार्थक इति भावः। नित्यत्वादिति चिन्त्यम्-'वृक्षं वृक्षं प्रति' इत्यसमस्तवाक्यस्याप्यभीष्टत्वात् तदुक्तम्-"प्रतिशब्दस्य वीप्सायां कर्मप्रवचनीयसंज्ञाविधानसामर्थ्यात् तद्योगे द्वितीयागर्भं वाक्यमपि" इति। समासस्य नियतत्वे हेतुमाह- तदर्थकेति, तदर्थकाव्ययस्य=विभक्त्याद्यर्थकाव्ययस्य, निरूपितत्वं षष्ठ्यर्थस्तथा च तदर्थकाव्ययनिरूपिताव्ययीभावसमासविधेर्नित्यत्वादित्यर्थः। उक्तसमासनित्यत्वस्य फलमाह- अत इति, वीप्सायाम् 'वृक्षं प्रति' इतिप्रयोगो न भवति किंतु 'प्रतिवृक्षम्' 'वृक्षं वृक्षं प्रति' इति वेत्यर्थः। उक्तसमासस्य विशेषान्तरमाह- यत्रेति, तथा च 'प्रतिवृक्षम्' इत्यत्र प्रथमायाः "नाव्ययीभावात्" इति सूत्रेणाम्भावः प्राप्तस्तथा च प्रथमायाः साधुत्वार्थकत्वेन निरर्थकत्वाद् व्यापकत्वं प्रतेरेवार्थ इति भावः। विशेषान्तरमाह- न त्विति, उक्तयुक्त्या="सेके द्वितीयार्थकर्मत्वावरुद्ध" इत्यादियुक्त्या, निरूपकत्वसंबन्धेन गृहे विशेषणतां प्राप्ताया व्यापकताया अश्वविशेषणत्वासंभवात्-"एकविशेषणत्वेनोपस्थितस्य" इतिव्युत्पत्तिविरोधादित्यर्थः। तदाधारतादीति, तत्=अश्वः। 'प्रतिगृहेऽश्वाः' इत्यत्र यद्यश्वाधारतारूपसप्तम्यर्थे आश्रयत्वसंबन्धेन समासार्थस्य गृहव्यापकत्वस्यान्वयः क्रियेत ( अश्वाधारता गृहव्यापकतावती इति ) किं वाऽश्वाधारतारूपसप्तम्यर्थेऽभेदसंबन्धेन तदर्थस्य=समासार्थस्य व्यापकरूपधर्मिण एवान्वयः क्रियेत- अश्वाधारता गृहव्यापिकेत्येवं तदा सप्तम्यर्थघटाधारत्वे आश्रयतासंबन्धेन मेयत्वस्याप्यन्वयः स्यादिति 'मेयत्वे घटः' इत्यपि प्रयोगः स्यात्तथा "घटवृत्तौ घटः' इत्यत्र सप्तम्यर्थो घटाधारता प्रकृत्यर्थोपि घटवृत्तिपदवाच्या घटवृत्तित्वविशिष्टघटाधारतैव- घटनिष्ठाधारताया घटवृत्तित्वादिति सप्तम्यर्थघटाधारतायामभेदसंबन्धेन प्रकृत्यर्थ-

'उपकुम्भे निधेहि' 'उपकुम्भादागतः' 'उपकुम्भेन कृतः' इत्यादौ च विवक्षितस्याऽधारत्वाऽपादानत्वकर्तृत्वादौ कुम्भसमीपादेराधेयतासंबन्धेनाऽन्वयस्याऽऽधेयत्वादौ निरूपितत्वसंबन्धेन तदन्वयस्य वा बोधे न कश्चिद् व्युत्पत्तिविरोध इत्युपपद्यन्ते तथा प्रयोगा इति ध्येयम् ।

'त्वां च मां चान्तरा' इत्यादौ "अन्तरान्तरेण युक्ते" इतिद्वितीयाया निरूपितत्वमर्थः, तस्यान्तरापदार्थतावच्छेदकमध्यत्वेऽन्वयः । एवमन्यत्रापि तदर्थस्तूक्तदिशा स्वयं परिच्छेद्यः ॥ ॥ इति द्वितीयाविभक्तयः ॥

---

भूताया घटाधारताया अप्यन्वयः स्यादिति 'घटवृत्तौ घटः' इत्यपि प्रयोगः स्यात् न चैवं प्रयोगौ भवत इति तद्वारणाय 'सप्तम्यर्थाधारतायामाश्रयत्वसंबन्धेनाऽभेदसंबन्धेन वा प्रकृत्यर्थस्यान्वयो न भवति' इतिव्युत्पत्तिः कल्प्या तथा चैतस्याः कल्प्याया व्युत्पत्तेर्विरोधात् 'प्रतिगृहेऽश्वाः' इत्यत्राप्यश्वाधारतारूपसप्तम्यर्थे आश्रयतासंबन्धेन प्रकृत्यर्थस्य गृहव्यापकत्वस्य अभेदसंबन्धेन च व्यापकरूपधर्मिणो वाऽन्वयो न संभवतीति 'प्रतिगृहेऽश्वाः' इतिप्रयोगोपि न भवति । उपकुम्भपदात्तु "दूरान्तिकार्थेभ्यो द्वितीया च" "सप्तम्यधिकरणे च" इतिसूत्राभ्यां द्वितीयातृतीयापञ्चमीसप्तम्यो वचनाद् भवन्तीत्यर्थः ।

उपकुम्भेति— 'उपकुम्भे' इत्यत्र सप्तम्यर्थाधारत्वे 'उपकुम्भात्' इत्यत्र पञ्चम्यर्थाऽपादानत्वे 'उपकुम्भेन' इत्यत्र तृतीयार्थकर्तृत्वे आधेयतासंबन्धेन कुम्भसमीपस्यान्वये ( आधारत्वादौ कुम्भसमीपाधेयतायाः सत्त्वात् ) तथाऽऽधेयत्वे= आधारत्वापादानत्वकर्तृत्वादिनिष्ठाधेयत्वे तदन्वयस्य=कुम्भसमीपान्वये न कश्चिद्व्युत्पत्तिविरोधोस्तीति तथाप्रयोगाः='उपकुम्भे' इत्याद्युक्तप्रयोगा उपपद्यन्ते । आधारत्वादिनिष्ठाधेयत्वस्य कुम्भसमीपनिरूपितत्वेन तादृशाधेयत्वे कुम्भसमीपनिरूपितत्वस्य सत्त्वात् तेन संबन्धेन तादृशाधेयत्वे कुम्भसमीपस्यान्वयः । आधारत्वादीनां च कुम्भसमीपवृत्तित्वेनाऽऽधारत्वादावाऽऽधेयत्वं ज्ञेयमित्यर्थः ।

त्वां चेति— 'त्वां च मां चान्तरा हरिः' इत्यत्र "अन्तरान्तरेण युक्ते" इति सूत्रेण द्वितीया भवति तस्याश्च द्वितीयाया निरूपितत्वमर्थः, तस्य च द्वितीयार्थभूतनिरूपितत्वस्य अन्तरापदार्थतावच्छेदकमध्यत्वेऽन्वयस्तथा च त्वन्मन्निरूपितमध्यत्वविशिष्टो हरिरिति शाब्दबोधः, आवयोर्मध्येहरिरेवेति भावार्थः । अन्तरापदस्य मध्यपदार्थवाचकत्वाद् मध्यत्वमन्तरापदार्थतावच्छेदकमित्यर्थः । अन्तरेणेतिपदं विनार्थकम यथा— 'अन्तरेण हरिस्मरणं न सुखम्' इति । अत्र न निरूपितत्वं द्वितीयार्थः किं तु विनापदोक्तस्थलीयरीतिरूह्येति— हरिस्मरणाभावप्रयोज्यसुखाभाव इति शाब्दबोधः । प्रतियोगित्वं द्वितीयार्थः । द्वितीयाकारकनिरूपणमुपसंहरति— एवमिति । अन्यत्र=अन्यद्वितीयोदाहरणेष्वप्येवमेव विज्ञेयम् । तदर्थः=तादृशद्वितीयार्थो द्वितीयाज्ञापकशब्दविशेषार्थश्च स्वयमुक्तदिशा परिच्छेद्यः=निर्वचनीयः— शास्त्रस्य मार्गमात्रप्रदर्शकत्वादित्यर्थः ॥ ॥ मतिः श्रान्ता पुरो गन्तुं विरमत्यधिकलेखतः ॥

॥ इति व्युत्पत्तिवादाऽऽदर्शे द्वितीयाकारकं समाप्तम् ॥

---

## ॥ अथ तृतीया ॥

कारकविभक्तितृतीयायाः क्रियान्वयि कर्तृत्वं करणत्वं चार्थः– " कर्तृकरणयोस्तृतीया " इत्यनुशासनात् । कर्तृत्वं च मुख्यं क्रियानुकूलकृतिरेव, सा च कर्त्राख्यातसमभिव्याहृते 'चैत्रः पचति' इत्यादौ क्रियाविशेष्यतयाऽऽख्यातेन प्रतिपाद्यते । 'चैत्रेण पच्यते तण्डुलः' 'चैत्रेण शय्यते' इत्यादिकर्मभावाख्यातस्थले च क्रियायां विशेषणतया तृतीयया सा प्रत्याय्यते ।

यत्तु तत्राप्याख्यातार्थ एव कृतिः, तृतीयार्थश्चाधेयत्वम्, तस्य चाख्यातार्थकृतिविशेषणतयाऽन्वयः, कृतेश्च क्रियाविशेषणतया । तथाकृतिबोधने चात्मनेपदरूपाख्यातस्य यगादिसमभिव्याहारज्ञानमपेक्षितम्– 'पचति' 'पचते'

---

कारकद्वितयग्रन्थविशेषार्थविदां नृणाम् ।

इतः क्लेशकरं स्वल्पं ज्ञातव्यमवशिष्यते ॥

तृतीयाविभक्त्यर्थनिरूपणमारभते– कारकेति । उक्ते प्रमाणमाह– कर्तृकरणयोरिति । कर्तृत्वस्वरूपमाह–कर्तृत्वमिति । सा=कृतिः । समभिव्याहृते=समभिव्याहारे । क्रियाविशेष्यतयेति– 'पचति' इत्यादौ 'पाकानुकूलकृतिमान्' इतिबोधोदयात् कृतेः क्रियाविशेष्यत्वं प्राप्तम् । आख्यातेन=कर्त्राख्यातेन । 'चैत्रेण पच्यते तण्डुलः' इति कर्माख्यातप्रयोगः, 'चैत्रेण शय्यते' इतिभावाख्यातप्रयोगः– शीङ्धातोः कर्माभावात् । सा=कृतिः । विशेषणतयेति– 'पच्यते' इत्यत्र कृतिजन्यपाकजन्यविक्लित्त्याश्रयस्तण्डुलः 'शय्यते' इत्यत्र च कृतिजन्यशयनव्यापार इति बोधोदयात् कृतेः क्रियाविशेषणत्वमेव प्राप्तम् । क्रियाविशेषणतया चात्र कृतिः तृतीयया प्रतिपाद्यते नत्वाख्यातेन– अन्यथा तृतीयाया नैरर्थक्यं स्यात् " कर्तृकारणयोः " इति सूत्रेण च तृतीयाया कर्तृत्वार्थकत्वानुशासनात्, कर्तृत्वं च कृतिरेवेत्यर्थः ।

परिहाराय मतान्तरमनुवदति– यत्त्विति । तत्रापि=' पच्यते ' ' शय्यते ' इत्युक्तकर्माख्यातभावाख्यातस्थलयोरपि । आख्यातार्थ एव कृतिर्न तृतीयार्थ इत्यर्थः । उक्तस्थलीयतृतीयाया अर्थमाह– तृतीयार्थश्चेति । तस्य=तृतीयार्थभूताधेयत्वस्य । तथा च 'चैत्रेण पच्यते' इत्यत्र चैत्रवृत्तिकृतिजन्यपाकजन्यविक्लित्याश्रयस्तण्डुलः 'चैत्रेण शय्यते' इत्यत्र च चैत्रवृत्तिकृतिजन्यशयनव्यापार इति बोधोदयाद् व्यापारे कृतेः कृतौ चाधेयत्वस्य=वृत्तित्वस्य विशेषणत्वं प्राप्तम् । " क्रियाविशेषणतया " इत्यत्र 'अन्वयः' इति शेषः । तथाकृतिबोधने=' चैत्रवृत्तिकृतिजन्यव्यापारः ' इत्येवं क्रियाविशेषणतया कृतिबोधने । उक्ते हेतुमाह– पचतीति । तथाकृत्यन्वयावोधात्=कृतेः क्रियायां विशेषणतया शाब्दबोधाविषयत्वात् । नन्वेवं तृतीयाया

इत्यादौ तथाकृत्यन्वयावोधात् । 'चैत्रेण ज्ञायते. गम्यते' इत्यादौ तृतीयाया आधेयत्वार्थकत्वं क्लृप्तमेवेति न तत्कल्पनमऽधिकमिति, तन्न—'चैत्रेण पक्कम्' इत्यादौ तृतीयायाः कृत्यर्थकताया आवश्यकत्वात्—तत्र कृत्यर्थकाख्यातविरहेण कृतश्च कर्तृकर्मवाचकत्वेन कृत्यर्थकताविरहात् ।

यदि च कर्तृकृतः कृतावेव शक्तिर्न तु विशिष्टे 'ज्ञाता' इत्यादौ त्वाश्रयार्थकतायाः कृतः क्लृप्तत्वेन तत्र कृत्यन्वयादेव कर्तृलाभसंभवादित्युच्यते ? तथापि कर्मकृतः कृत्यर्थत्वमप्रसक्तमेव । उक्तप्रत्ययस्य क्वचित् कर्तृवाचकत्वेपि 'चैत्रेण पाच्यः' 'दुष्पचश्चैत्रेणौदनः' 'चैत्रेणौदनस्य पाकः' इत्यादौ कृतां न

---

आधेयत्वार्थकत्वकल्पनमधिकं स्यात् तेन च गौरवं स्यादित्याशङ्क्याह— चैत्रेणेति, 'चैत्रेण ज्ञायते' इत्यत्र 'चैत्रवृत्तिज्ञानम्' 'चैत्रेण गम्यते' इत्यत्र च 'चैत्रवृत्तिसंयोगानुकूलव्यापारः' इतिबोधोदयात् तृतीयाया आधेयत्वार्थकत्वं क्लृप्तमेवेति नाधिककल्पनापत्तिरित्यर्थः । तत्कल्पनम्=आधेयत्वार्थकत्वकल्पनम् । उक्तमतं परिहरति— तन्नेति, 'चैत्रेण पक्कम्' इत्यत्राख्यातमेव नास्ति यस्यार्थः कृतिः स्यात् कृत्प्रत्ययस्य च कर्मवाचकत्वेन कृतिवाचकत्वं न संभवतीत्यत्र विवशं तृतीयाया एव कृतिवाचकत्वं स्वीकार्यं तथा चात्र तृतीयायाः कृतिवाचकत्वे प्राप्ते 'चैत्रेण पच्यते' इत्यादावपि तृतीयाया एव कृतिवाचकत्वं युक्तं नाख्यातस्येत्यर्थः ।

ननु 'चैत्रेण पक्कम्' इत्यादौ कर्मकृतः कृतिवाचकत्वाभावेपि कर्तृवाचककृत्प्रत्ययस्य तु कृतावेव शक्तिः स्वीकार्या लाघवात् कृतौ शक्तौ कृतित्वमेकमेव शक्यतावच्छेदकं कर्तरि शक्तौ तु कृतेः शक्यतावच्छेदकत्वं स्यात् कृतीनां च नानात्वाद् गौरवं स्यादिति न विशिष्टे=कृतिविशिष्टे कर्तरि शक्तिर्येन कर्तृकृतः कर्तृवाचकत्वेन तृतीयायाः कृतिवाचकत्वं प्रसज्येत तस्मात् तृतीयार्थ आधेयत्वमेवेति यदुक्तं तदेव युक्तमित्यर्थः । नन्वेवं कर्तृलाभः कथं स्यादित्याशङ्क्याह—ज्ञातेति, 'ज्ञाता' इत्यत्र 'ज्ञानाश्रयः' इतिबोधोदयादाश्रयार्थकत्वं कृत्प्रत्ययस्य क्लृप्तमेव तथा च कर्तृकृतां कृतावाश्रये च शक्तिरिति प्राप्तं तत्र=प्रत्ययार्थाश्रये प्रत्ययार्थकृतेरन्वयादेव कर्तृलाभः=कर्तृविषयकबोधः संभवत्येव—कृत्यन्वयिन आश्रयस्यैव कर्तृपदार्थत्वादिति कर्तृकृतां कृतावेव शक्तिः । तथा च 'पक्ता' इत्यत्र 'पाककृत्याश्रयः' 'गन्ता' इत्यत्र 'गमनकृत्याश्रयः' इत्येवं बोधः उन्नेय इत्याशङ्क्याह—यदीति । उत्तरमाह—तथापीति, कर्तृकृत्प्रयोगस्थले उक्तरीत्या कर्तृलाभसंभवेन कर्तृकृतः कृतिवाचकत्वसंभवेपि कर्मवाचककृत्प्रत्ययस्य तु कृतिवाचकत्वं कथमपि न संभवतीति 'चैत्रेण कृतम्' इत्यादिकर्मकृत्समभिव्याहारस्थले तृतीयाया एव कृतिवाचकत्वं स्वीकार्यमित्यर्थः । कर्तृकृतः क्वचित् कर्तृवाचकत्वेनोक्तलाघवानुरोधात् कृतिवाचकत्वमभ्युपगम्यापि तृतीयायाः कृतिवाचकत्वावश्यकतामाह—उक्तेति, उक्तप्रत्ययस्य=कृत्प्रत्ययस्य क्वचित्='कर्ता पक्ता' इत्यादौ कर्तृवाचकत्वे प्राप्ते लाघवात् कृतिवाचकत्वे स्वीकृते तृतीयायाः कृत्यवाचकत्वे प्रसक्तेपि 'चैत्रेण पाच्यः' इत्यादिस्थले कृत्प्र-

कृतिबोधकत्वमिति तत्र कृतिबोधानुरोधेन तृतीयायाः कृतिवाचकत्वमावश्यकम् । एवं च 'चैत्रेण पच्यते' इत्यादावपि तृतीययैव कृतिर्बोध्यते, तत्र चैत्रादेः संबन्ध एवाधेयत्वमित्यत एव निर्वाहे कृतावाऽऽधेयत्वस्य विशेषणतया भानोपगमस्यानुचितत्वात्,तथा सति तत्संसर्गस्यापि विषयताकल्पनाधिक्यात् । तादृशवाक्यज्ञानघटितशाब्दसामग्र्यामऽधिकोपस्थितिनिवेशेन च गौरवात् ।

अथ तत्र कृतेस्तृतीयार्थतोपगमे ' चैत्रेण पच्यते न मैत्रेण ' इत्यादौ तृतीयान्तार्थमैत्रीयकृतेरभावः पाकेऽन्वेतीत्युपेयं तस्याश्च समवायसंबन्धावच्छिन्नाभावो मैत्रकर्तृकपाकेपीत्यऽतिप्रसङ्गः, जन्यतायाश्च वृत्त्यनियामकतया तत्संबन्धावच्छिन्नाभावः प्रसिद्ध्यत्येव न, मैत्रकर्तृकपाककर्मत्वाभावस्य कर्मणि तण्डुलादौ प्रतीतिश्च कर्मवाचकपदासमभिव्याहारस्थले दुर्घटा, आधेयत्वस्य तृतीयार्थत्वे चाधेयत्वाभावबोध एव कृतावङ्गीक्रियते ।

---

त्ययस्य कृतिबोधकत्वं नास्ति भवति च कृतेर्बोध इति विवशं तृतीयाया एव कृतिबोधकत्वं स्वीकार्यमावश्यकं चेत्यर्थः । उपसंहरति–एवं चेति, उक्तरीत्या तृतीयायाः कृतिवाचकत्वे सिद्धे ' चैत्रेण पच्यते ' इत्यादिस्थलेपि तृतीयाया एव कृतिबोधकत्वं स्वीकार्यं न त्वाख्यातस्येत्यर्थः। तथा च तत्र=कृतौ चैत्रादेः संबन्ध एवाधेयत्वम्=चैत्रादेः स्ववृत्तिकृतावाऽऽधेयतासंबन्धेनान्वयो भवतीत्याधेयत्वस्य संबन्धत्वेन रूपेणापि बोधविषयतानिर्वाहे संभवति सति तृतीयाया आधेयत्वे शक्तिं स्वीकृत्य तादृशतृतीयार्थभूतस्याधेयत्वस्य कृतौ विशेषणत्वेन रूपेण भानस्वीकारो नोचित एवेत्यर्थः । विपक्षे बाधकमाह–तथा सतीति, आधेयत्वस्य तृतीयार्थत्वे तेन च विशेषणत्वे स्वीकृते तत्संसर्गस्यापि=आधेयत्वसंसर्गस्याप्यधिकस्य शाब्दबोधविषयतापत्त्या गौरवं स्यादित्यर्थः । किं चाधेयत्वस्य विशेषणत्वे विभिन्नविषयकप्रत्यक्षं प्रति शाब्दसामग्र्याः प्रतिबन्धकत्वस्थले आधेयत्वोपस्थितेरपि तादृशशाब्दसामग्र्यां निवेशापत्त्या गौरवं स्यादित्याह–तादृशेति, तस्मात् तृतीयायाः कृतिवाचकत्वमेव युक्तं नाधेयत्ववाचकत्वमित्यर्थः ।

आशङ्कते–अथेति । कृतेस्तृतीयार्थतोपगमे ' चैत्रेण पच्यते न मैत्रेण ' इत्यत्र मैत्रेणेति तृतीयान्तार्थो यो मैत्रीयकृतिस्तदभावस्य पाके एवान्वयः स्यात् तस्याः=कृतेश्च समवायेनाभावो मैत्रकर्तृकपाकेऽप्यस्त्येव समवायेन कृतेरात्ममात्रवृत्तित्वादित्यऽतिप्रसङ्गः=मैत्रकर्तृकपाकसत्त्वेपि ' मैत्रेण न पच्यते ' इति प्रयोगापत्तिरूपोतिप्रसङ्गः स्यात्, यदि चैत्रकर्तृकपाके मैत्रकृतेर्जन्यतासंबन्धेनाऽभाव उच्येत तदपि न संभवति–जन्यतासंबन्धस्य वृत्त्यनियामकतयाऽभावीयप्रतियोगितावच्छेदकत्वासंभवादित्याह–जन्यतायाश्चेति । यदि ' चैत्रेण पच्यते न मैत्रेण ' इत्य तण्डुले मैत्रकर्तृकपाककर्मत्वस्याश्रयतासंबन्धेनाभाव उच्यते. तदपि न संभवति कर्मवाचकतण्डुलादिपदाभावे पदानुपस्थिततण्डुलादौ मैत्रकर्तृकपाककर्मत्वाभावप्रतीतेरपि दुर्घटत्वात्–तण्डुलोपस्थित्यभावादित्याह–मैत्रेति । [illegible] किं त्वाधेयत्वमेव, तथा च ' चैत्रे

न च तथा सति मैत्रचैत्रोभयकर्तृकपाकस्थले चैत्रीयपाककृतौ मैत्रवृत्तित्वाभावसत्त्वात् 'मैत्रेण न पच्यते' इतिप्रयोगापत्तिरिति वाच्यम्, 'मैत्रेण न पच्यते' इत्यत्र वर्तमानपाकानुकूलकृतित्वावच्छेदेन मैत्रवृत्तित्वाभावबोधनाद् उक्तस्थले च तादृशकृतित्वसामानाधिकरण्येन मैत्रवृत्तित्वसत्त्वात् तादृशवाक्याऽप्रामाण्यात् । वर्तमानत्वस्य कृतिविशेषणतया च 'चैत्रेण पक्ष्यतेऽपच्यत न तु पच्यते' इत्युपपद्यते । क्रियाविशेषस्य तथात्वाद् यदा मैत्रेणान्यत् क्रियते न तु पच्यते तदा 'मैत्रेण न पच्यते' इति प्रयोगश्च ।

न चाख्यातेन कालस्य कृतिविशेषणतया बोधनात् कालविशेषविशेषितकृतित्वस्यान्वयितावच्छेदकतया तदवच्छेदेन नञाऽभावः शक्यते बोधयितुं न तु कालक्रियाविशेषोभयविशेषितकृतित्वावच्छेदेन कर्मप्रत्ययस्थले क्रियायाः कृति-

---

'पच्यते न मैत्रेण' इत्यत्र पाकानुकूलकृतावाऽऽधेयत्वस्य=मैत्रवृत्तित्वस्याभाव आश्रयतासंबन्धेन प्राप्तः 'पाकानुकूला कृतिर्मैत्रवृत्तिर्न' इति, अत्र च न कोपि दोष इत्याधेयत्वमेव तृतीयार्थ इत्यर्थः ।

ननु तथा सति=आधेयत्वस्य तृतीयार्थत्वं स्वीकृत्य कृतौ मैत्रवृत्तित्वाभावस्वीकारे चैत्रमैत्रोभयकर्तृकपाकस्थलेपि चैत्रकृतौ मैत्रवृत्तित्वाभावस्य सत्त्वेन तद्बोधकस्य 'मैत्रेण न पच्यते' इति प्रयोगस्यापत्तिः स्यादित्याशङ्क्याह—न चेति । परिहारमाह—मैत्रेणेति, 'मैत्रेण न पच्यते' इति वाक्येन वर्तमानकालिकायामेव पाकानुकूलकृतौ मैत्रवृत्तित्वाभावः प्रत्याय्यते उक्तस्थले=चैत्रमैत्रोभयकर्तृकपाकस्थले च तादृशकृतित्वसामानाधिकरण्येन=वर्तमानपाकानुकूलकृतित्वसामानाधिकरण्येन=वर्तमानायां पाकानुकूलायां कस्यांचित् ( मैत्रसमवेतायाम् ) कृतौ मैत्रवृत्तित्वस्यापि सत्त्वादेव तदभावबोधकस्य 'मैत्रेण न पच्यते' इतिवाक्यस्याऽप्रामाण्यमेवेति न प्रयोगापत्तिरित्यर्थः । कृतौ वर्तमानत्वविशेषणनिवेशस्य फलमाह—वर्तमानत्वस्येति, 'न तु पच्यते' इत्यनेन वर्तमानपाकानुकूलकृतावेव चैत्रवृत्तित्वाभावात्, भूतभविष्यत्पाकानुकूलकृतौ च चैत्रवृत्तित्वस्यैव सत्त्वात् 'चैत्रेण पक्ष्यतेऽपच्यत न तु [illegible]' इतिप्रयोग उपपद्यते एवं मैत्रकर्तृकान्यक्रियाकाले क्रियाविशेषस्य=तादृशान्यक्रियाया एव तथात्वात्=वर्तमानकृतिजन्यत्वात् पाकानुकूलक्रियायाश्च वर्तमानकृतिजन्यत्वाभावात् 'मैत्रेण न पच्यते' इति प्रयोगश्चोपपद्यते इत्यर्थः ।

शङ्कते— न चेति, 'मैत्रेण न पच्यते' इत्यत्र कालविशेषो वर्तमानकालः स चाख्यातेन कृतिविशेषणतया बोध्यते, मैत्रवृत्तित्वाभावस्य कृतावऽन्वयादन्वयिनी कृतिः, अन्वयितावच्छेदकं च कृतित्वम्, तदवच्छेदेन=वर्तमानकालावच्छिन्नकृतित्वावच्छेदेन हि कृतौ अभावः=मैत्रवृत्तित्वाभावो बोधयितुं शक्यते यथा— 'वर्तमानकालावच्छिन्ना कृतिर्मैत्रवृत्तिर्न' इति, न त्वति—कालक्रियोभयविशेषेण विशेषितकृतित्वावच्छेदेन तु नञाऽभावो न बोधयितुं शक्यते— 'मैत्रेण पच्यते'

**विशेषणत्वाभावेन तद्घटितधर्मस्याऽन्वयितावच्छेदकत्वाभावादिति वाच्यम्, क्रियाविशेषघटितधर्मस्यान्वयितानवच्छेदकत्वेपि तदवच्छिन्नत्वविशिष्टविशेषणताया अभावसंसर्गतया भानसंभवेन सामञ्जस्यात् ।**

---

इत्यादिकर्मप्रत्ययस्थले 'मैत्रवृत्तिकृतिजन्यपाकजन्यवक्लित्याश्रयस्तण्डुलः' इत्याकारकबोधोदयेन कृतेरेव क्रियायां विशेषणत्वेन कृतौ क्रियाया विशेषणत्वाभात् तद्घटितधर्मस्य=पाकादिक्रियाविशेषितकृतित्वस्याऽन्वयितावच्छेदकत्वाभावात् तथा च 'मैत्रेण न पच्यते' इत्यत्र वर्तमानकालिककृतिसामान्येपि मैत्रवृत्तित्वाभावस्यान्वयो न संभवति– मैत्रे पाककृतेरसंभवेपि कृत्यन्तरस्य बाधाभावात् वर्तमानकालिकपाकानुकूलकृतावपि मैत्रवृत्तित्वाभावस्यान्वयो न संभवति- कृतावुक्तरीत्या पाकक्रियाया विशेषणत्वाभावेन पाकक्रियावच्छिन्न ( विशेषित ) कृतित्वस्याऽन्वयितावच्छेदकत्वाभावादिति यदुक्तम्– " आधेयत्वस्य तृतीयार्थत्वे चाधेयत्वाभावबोध एव कृतावङ्गीक्रियते ३९०" इति तन्नोपपद्यते । अस्मन्मते च तृतीयावाच्यमैत्रवृत्तिकृतौ पाकानुकूलत्वाभावबोधने किं वा वक्ष्यमाणदिशा पाके मैत्रवृत्तिकृतिजन्यत्वाभावबोधने न काप्यनुपपत्तिरित्यर्थः । पूर्वपक्षी परिहरति– क्रियाविशेषेति, उक्तरीत्या क्रियाविशेषघटितधर्मस्य=पाकक्रियाविशेषितकृतित्वस्यान्वयितानवच्छेदकत्वेपि तदवच्छिन्नत्वविशिष्टविशेषणतायाः=पाकक्रियावच्छिन्नत्वसमानाधिकरणस्वरूपस्य अभावसंसर्गतया=मैत्रवृत्तित्वाभावसंसर्गतया भानसंभवेन समञ्जस्यात्, अयं भावः– यद्यपि शाब्दबोधकाले कर्मप्रत्ययस्थले कृतेरेव क्रियायां विशेषणत्वेन पाकक्रियायाः कृतौ विशेषणत्वाभावात् पाकक्रियावच्छिन्नकृतित्वस्यान्वयितावच्छेदकत्वं न संभवतीति पाकक्रियावच्छिन्नकृतित्वावच्छेदेन मैत्रवृत्तित्वाभावस्यान्वयोपि न संभवति तथापि अभावो हि स्वरूपसंबन्धेत्यपरपर्यायेण विशेषणतासंबन्धेन सर्वत्रान्वितो भवतीत्यत्र मैत्रवृत्तित्वाभावस्य स विशेषणतासंबन्धः तदवच्छिन्नत्वविशिष्टः ( पाकक्रियावच्छिन्नत्वसमानाधिकरणः ) ग्राह्यः-- कृतौ तादृशः स्वरूपलक्षणः संबन्धोप्यस्त्येव चैत्रवृत्तिकृतेः पाकजनकत्वेन वस्तुगत्या कृतावनुकूलतासंबन्धेन पाकक्रियान्वयस्य सत्त्वेन कृतौ तदवच्छिन्नत्वम्=पाकक्रियावच्छिन्नत्व[illegible]त्येव शाब्दबोधे तस्य भानं न संभवतीत्यन्यदेतत् तथा च पाकक्रियावच्छिन्नत्वसमाना[illegible] कृतेस्तत्र [illegible] स्वरूपसंबन्धेन चैत्रादिवृत्तिपाककृतावेव मैत्रवृत्तित्वाभावस्यान्वयः संभवति न कृतिसामान्ये इति नोक्तदोष इति न 'मैत्रेण न पच्यते' इति प्रयोगानुपपत्तिः न वा "आधेयत्वस्य तृतीयार्थत्वे चाधेयत्वाभावबोध एव कृतावङ्गीक्रियते" इत्युक्तस्यानुपपत्तिः पाकक्रियावच्छिन्नत्वस्य संसर्गकोटौ प्रवेशेन तदुपस्थित्यपेक्षापि नास्तीति सर्वं समञ्जसमिति ।

नन्वन्वयितावच्छेदकावच्छिन्नत्वमेव विशेषणस्य संबन्धे भासते न तु तदन्यधर्मावच्छिन्नत्वम् यथा--'घटवद् भूतलम्' इत्यत्र भूतले घटसंयोगोप्यस्ति भूतलत्वमप्यस्तीति विशेषणस्य घटसंबन्धे संयोगे भूतलत्वावच्छिन्नत्वमेव भासते नान्यधर्मावच्छिन्नत्वं तथा च 'मैत्रेण न पच्यते' इत्य[illegible] यदुक्तम्-- 'तदवच्छिन्नत्वविशिष्टविशेषणतासंबन्धेन कृतौ मैत्रवृत्तित्वाभावस्यान्वय उपेयते' इ[illegible]

**न चान्वयितावच्छेदकावच्छिन्नत्वमेव विशेषणसंबन्धे भासते इतिनियमः, तथा सति 'शरदि पुष्यन्ति सप्तच्छदाः' इत्यादौ सप्तच्छदपुष्पोत्पत्तित्वादेः शरद्वृत्तित्वाद्यन्वयितानवच्छेदकत्वादाऽऽख्यातान्तप्रतिपाद्यतावच्छेदकपुष्पोत्पत्तित्वाद्यवच्छेदेन च शरद्वृत्तित्वान्वयबाधादऽवच्छेदकावच्छेदेनान्वयानुपपत्तेः । अन्वयितावच्छेदकसामानाधिकरण्यमात्रेण च तदन्वयोपगमे 'शरदि पुष्यन्ति सप्तच्छदाः' 'शरदि पुष्यन्ति चम्पकाः' इत्यऽविशेषेण प्रयोगापत्तिः ।**

---

तन्न युक्तं किं तु कृतित्वस्यैवान्वयितावच्छेदकत्वेन केवलकृतित्वावच्छिन्न ( कृतित्वावच्छिन्नत्वसमानाधिकरण ) विशेषणतासंबन्धेनैव कृतौ मैत्रवृत्तित्वाभावस्यान्वयः स्वीकार्यः, पाककृतित्वस्य न्यूनवृत्तित्वेनान्वयितावच्छेदकत्वाभावाच्च, कृतित्वावच्छिन्नत्वावच्छिन्नविशेषणतासंबन्धेन कृतौ मैत्रवृत्तित्वाभावान्वये हि कृतित्वावच्छेदेन यावत्कृतौ मैत्रवृत्तित्वाभावान्वय उपलभ्येतेति 'मैत्रेण भक्ष्यते' इत्यादिप्रयोगोपि न स्यात्, कृतित्वावच्छिन्नविशेषणतासंबन्धं परित्यज्य पाककृतित्वावच्छिन्नविशेषणतासंबन्धस्य ग्रहणे चैतन्नियमस्य व्याघातः स्यादित्याशङ्क्याह— न चेति । किं वात्रैवकारस्य 'भासते एव' इत्येवमन्वयः । किं चान्वयितावच्छेदकावच्छिन्नत्वं विशेषणसंबन्धे भासते यदि तदा 'विशेषणस्यान्वयितावच्छेदकावच्छेदेनान्वयो भवति' इत्ययमेवार्थः प्राप्तः—यत्र विशेषणं भवति तत्रैव विशेषणसंबन्धस्यापि संभवादिति विज्ञेयम् । अयं नियम एव नास्ति येनोक्तदोषापत्तिः स्यात् तथा चोक्तवर्त्तमानपाककृतित्वावच्छिन्नविशेषणताया एव संबन्धत्वात् वर्तमानपाककृतावेव चैत्रादिनिष्ठायां मैत्रवृत्तित्वाभावस्यान्वयो जायते न तु कृतिसामान्ये इति न 'मैत्रेण पक्ष्यते' 'मैत्रेण गम्यते भक्ष्यते' इत्यादिप्रयोगानुपपत्तिरित्यर्थः । उक्तनियमस्वीकारे बाधकमाह— तथा सतीति, तथा सति=एतन्नियमस्वीकारे हि 'शरदि पुष्यन्ति सप्तच्छदाः' इत्यत्र शरद्वृत्तित्वं विशेषणमस्ति तदन्वयितावच्छेदकत्वं सप्तच्छदपुष्पोत्पत्तित्वस्य न संभवति— 'पुष्यन्ति' इत्यनेनोपस्थित्यभावात् किं तु पुष्पोत्पत्तित्वस्यैव. पुष्पोत्पत्तित्वावच्छेदेन च शरद्वृत्तित्वस्यान्वयो न संभवति— सकलपुष्पोत्पत्तिषु शरद्वृत्तित्वस्याऽसंभवादित्यऽवच्छेदकावच्छेदेन=अन्वयितावच्छेदकावच्छेदेन ( पुष्पोत्पत्तित्वावच्छेदेन ) अन्वयानुपपत्तेः=विशेषणान्वयो न संभवति । अन्वयितावच्छेदकसामानाधिकरण्यमात्रेण=किंचित्पुष्पोत्पत्तौ तदन्वयोपगमे=शरद्वृत्तित्वस्यान्वयोपगमे च सप्तच्छदपुष्पोत्पत्तौ शरद्वृत्तित्वान्वयस्य संभवेपि दोहदवशात् किंचित्चम्पकपुष्पोत्पत्तेरपि शरदि संभवेन किंचित्चम्पकपुष्पोत्पत्तावपि शरद्वृत्तित्वसंभवात् 'शरदि पुष्यन्ति सप्तच्छदाः' इतिवत् 'शरदि पुष्यन्त चम्पकाः' इत्यपि प्रयोगः स्यात्, न चैतदिष्टमिति दोषद्वयपरिहाराय यथा 'शरदि पुष्यन्ति सप्तच्छदाः' इत्यत्र सप्तच्छदपुष्पोत्पत्तित्वावच्छेदेनैव शरद्वृत्तित्वस्यान्वय उपेयते न तु पुष्पोत्पत्तित्वरूपान्वयितावच्छेदकावच्छेदेन तथैव 'मैत्रेण न पच्यते' इत्यत्रापि वर्तमानपाककृतित्वावच्छेदेनैव मैत्रवृत्तित्वाभावस्यान्वय उपेयते न तु शुद्धान्वयितावच्छेदककृतित्वावच्छेदेनेत्यर्थः ।

यदि च तत्र शरत्संबन्धः सप्तच्छदविशेषणतया भासते न पुनराख्यातार्थे धातुमात्रार्थे वा पुष्पोत्पत्तौ. अत एव तत्र : कारकविभक्तिरूपसप्तम्यनुपपत्त्या कालरूपविशेषणपदोत्तरं स्वातन्त्र्येण सप्तमी शर्ववर्मणाऽनुशिष्टा. एवं च क्रियानिमित्तत्वरूपकारकत्वगर्भकर्तृत्वस्याख्यातार्थत्वे पुष्पोत्पत्तिनिमित्तत्वरूपाख्यातान्तार्थस्य विशिष्टान्वयानुरोधेन शरत्संबन्धेप्यन्वय उपगन्तव्य इति कारकत्वस्याख्यातार्थत्वानुपगमेपि 'शीतलं सरोऽवगाढतो निदाघदुःखं व्यपैति' इत्यादाविवोद्देश्यविधेयभावमहिम्नोद्देश्यविशेषणेन शरत्संबन्धेन विधेयभूतपुष्पोत्पत्तेः प्रयोज्यप्रयोजकभावस्य संसर्गमर्यादया भानमौत्सर्गिकमिति चम्पकादिपुष्पोत्पत्तौ

---

ननु 'शरदि पुष्प्यन्ति सप्तच्छदाः' इत्यत्र शरद्वृत्तित्वमाऽऽख्यातार्थे=पुष्पोत्पत्त्याश्रयत्वेपि विशेषणं नास्ति तथा धात्वर्थभूतपुष्पोत्पत्तावपि विशेषणं नास्ति येनोक्तदोषापत्तिः स्यात् किं तु शरद्वृत्तित्वं सप्तच्छदे एव विशेषणमस्ति, अत एव=शरदीति सप्तम्यर्थवृत्तित्वस्य सप्तच्छदद्रव्ये विशेषणत्वेन क्रियायां विशेषणत्वाभावादेव कारकविभक्तिरूपसप्तम्या अत्र प्राप्तिर्नास्तीति विचार्य शर्ववर्मणा व्याकरणकर्त्रा विशेषणीभूतकालविशेषवाचकपदोत्तरं पृथगेव सप्तम्यनुशिष्टा, शरद्वृत्तित्वस्य सप्तच्छदाऽविशेषणत्वे तदनुशासनं व्यर्थमेव स्यात्, तथा चात्र 'शरद्वृत्तित्वविशिष्टाः सप्तच्छदाः पुष्प्यन्ति' इति शाब्दबोधः । तत्र च क्रियानिमित्तत्वमेव कारकत्वं कारकत्वव्याप्यं च कर्तृत्वमिति कारकत्वगर्भकर्तृत्वस्याख्यातार्थत्वे=आख्यातस्य कर्तृत्वे शक्तिस्वीकारपक्षे आख्यातार्थभूतस्य कर्तृत्वरूपस्य पुष्पोत्पत्तिनिमित्तत्वस्य विशिष्टान्वयानुरोधेन=विशिष्टे=शरद्वृत्तित्व ( शरत्संबन्ध ) विशिष्टसप्तच्छदेष्वऽन्वयानुरोधेन शरद्वृत्तित्वविशिष्टसप्तच्छदानां पुष्पोत्पत्तौ कर्तृत्वरूपनिमित्तत्वे प्राप्ते शरत्संबन्धस्यापि पुष्पोत्पत्तिनिमित्तत्वं प्राप्तं तथा च सप्तच्छदपुष्पोत्पत्तौ शरत्संबन्धस्य निमित्तत्वात् ' शरदि पुष्प्यन्ति सप्तच्छदाः' इतिप्रयोगो भवति. शरदि चम्पकपुष्पोत्पत्तिस्तु दोहदादिनिमित्तिका भवति न तु शरत्संबन्धनिमित्तिका स्वभावतश्चम्पकपुष्पाणां शरदि जायमानत्वाभावादिति 'शरदि पुष्प्यन्ति चम्पकाः' इतिप्रयोगापत्तिर्नास्ति; वृक्षादिजडपदार्थेषु कर्तृत्वस्य बाधादत्र कर्तृत्वलक्षणकारकत्वे शक्त्यऽस्वीकारपक्षे च यद्यपि शरद्वृत्तित्वविशिष्टसप्तच्छदानां पुष्पोत्पत्त्याश्रयत्वात् विशेषणीभूतशरदः सप्तच्छदपुष्पोत्पत्त्याश्रयत्ववत् चम्पकपुष्पोत्पत्त्याश्रयत्वमपि शरदि निराबाधमेवेति 'शरदि पुष्प्यन्ति चम्पकाः' इति प्रयोगः स्यादेव तथाप्यऽस्मिन् पक्षे यथा 'शीतलं सरः' इत्यत्र शीतलसरोऽवगाहनमुद्दिश्य निदाघदुःखापगमो विधीयते इत्युद्देश्यविधेयभावमहिम्ना निदाघदुःखापगमस्य शीतलसरोऽवगाहनस्य च परस्परं प्रयोज्यप्रयोजकभावः संसर्गमर्यादया भासते( उपस्थापकाभावात् )तथैव 'शरदि पुष्प्यन्ति सप्तच्छदाः' इत्यत्रापि शरद्वृत्तित्वविशिष्टसप्तच्छदानुद्दिश्य पुष्पोत्पत्तिर्विधीयते इति विधेयभूतपुष्पोत्पत्तेरुद्देश्यविशेषणीभूतशरत्संबन्धस्य च परस्परं प्रयोज्यप्रयोजकभावः संसर्गमर्यादया भासते तथा च सप्तच्छदपुष्पोत्पत्तौ शरत्संबन्धप्रयोज्यत्वस्य सत्त्वात् 'शरदि पुष्प्यन्ति सप्तच्छदाः' इति प्रयोगो भवति

शरत्संबन्धनिमित्तकत्वाभावान्नोक्तातिप्रसङ्ग इत्युक्तस्थलेऽवच्छेदकावच्छेदेनान्वय एव नोपेयते इत्युच्यते ? तथापि तादृशनियमो निष्प्रामाणिक एव ।

न च तादृशनियमानुपगमे ' इह भवने मैत्रेणैव पक्ष्यते तेमनम् ' इत्यत्रैतद्भवनाधिकरणकतेमनपाकत्वेन रूपेण शब्दात् पाकानुपस्थित्या तदवच्छिन्ने मैत्रान्यसमवेतभविष्यत्कृतिविषयत्वव्यवच्छेदबोधासंभवकथनं दीधितिकृतां विरुध्येतेति वाच्यम्, अवच्छेदकावच्छेदेन विशिष्टबुद्धौ धर्मिणि विशेषणतया

---

दोहदवशाज्जायमानचम्पकपुष्पोत्पत्तौ च शरत्संबन्धप्रयोज्यत्वाभावादुक्तातिप्रसङ्गः='शरदि पुष्यन्ति चम्पकाः' इति प्रयोगापत्तिर्नास्ति, इति=तथा चोक्तस्थले=' शरदि पुष्यन्ति सप्तच्छदाः ' इत्यत्रान्वयितावच्छेदकावच्छेदेन=पुष्पोत्पत्तित्वावच्छेदेन शरद्वृत्तित्वस्यान्वय एव नोपेयते ( सप्तच्छदे एवान्वयस्वीकारात् ) येनान्वयितावच्छेदकावच्छिन्नत्वस्य विशेषणसंबन्धेत्र भानापत्तिः स्यात् । ' मैत्रेण न पच्यते ' इत्यत्र त्वन्वयितावच्छेदकावच्छेदेनैव कृतौ मैत्रवृत्तित्वाभावान्वयस्वीकारावश्यकत्वाद् विशेषणसंबन्धेऽन्वयितावच्छेदकावच्छिन्नत्वं गले पतितमेव तत्र दोषाः प्रदर्शिता एवेत्याशङ्क्याह— यदि चेति । परिहारमाह—तथापीति । तादृशनियमः=अन्वयितावच्छेदकावच्छिन्नत्वमेव विशेषणसंबन्धे भासते इतिनियमः । तथा च 'मैत्रेण न पच्यते ' इत्यत्र वर्तमानपाककृतौ मैत्रवृत्तित्वाभावान्वयसंभवान्न कोपि दोष इति भावः ।

ननु ' इह भवने मैत्रेणैव पक्ष्यते तेमनम् ' इत्यत्रैतद्भवनाधिकरणकतेमनपाकत्वावच्छिन्ने मैत्रान्यसमवेतभविष्यत्कृतिविषयत्वाभावस्यान्वयबोधो न संभवति—पाकस्य एतद्भवनाधिकरणकतेमनपाकत्वेन रूपेणोपस्थित्यभावादिति दीधितिकारोक्तमुक्तनियमस्वीकारे संगच्छते—अत्रैतद्भवनाधिकरणकतेमनपाकत्वस्यैवान्वयितावच्छेदकत्वात् तेन रूपेण चोपस्थित्यभावेन तत्रोक्ताभावान्वयस्याऽसंभवात्, एतन्नियमानभ्युपगमे चाऽन्वयितानवच्छेदकं यत् पाकत्वं तादृशपाकत्वसामानाधिकरण्येन ( कस्मिंश्चित् पाके ) मैत्रान्यसमवेतभविष्यत्कृतिविषयत्वाभावस्यान्वयः संभवत्येव—पाकत्वेन रूपेणोपस्थितेः सत्त्वादित्युक्तनियमानभ्युपगमे दीधितिकारोक्तं मैत्रान्यसमवेतभविष्यत्कृतिविषयत्वाभावस्यान्वयाऽसंभवकथनं न संगच्छते इति दीधितिग्रन्थसंगत्यर्थमुक्तनियमः स्वीकार्य एवेत्याशङ्क्याह—न चेति, तदवच्छिन्ने=एतद्भवनाधिकरणकतेमनपाकत्वावच्छिन्ने । अत्र च पाकत्वावच्छेदेनापि मैत्रान्यसमवेतभविष्यत्कृतिविषयत्वाभावस्यान्वयो न संभवति—कस्मिंश्चित्पाके मैत्रान्यसमवेतभविष्यत्कृतिविषयत्वस्यैव संभवादिति पाकत्वसामानाधिकरण्येनेत्युक्तम्, ' चैत्रेण न पच्यते ' इत्यत्र कृतौ पाकक्रियाया विशेषणत्वाभावात् कृतित्वमेवान्वयितावच्छेदकं न तु पाकक्रियावच्छिन्नकृतित्वम्, ' शरदि पुष्यन्ति सप्तच्छदाः ' इत्यत्रापि सप्तच्छदानां विशेष्यत्वेन पुष्पोत्पत्तौ विशेषणत्वाभावात् केवलं पुष्पोत्पत्तित्वमेवान्वयितावच्छेदकम्, अत्र तु एतद्भवनाधिकरणकत्वस्य तेमनपाकत्वस्य च पाके विशेषणत्वाद् एतद्भवनाधिकरणकतेमनपाकत्वमेवान्वयितावच्छेदकमिति विशेषः । परिहारमाह—अवच्छेदकावच्छेदेनेति,

भासमानमेव रूपं विशेषणेऽवच्छिन्नत्वसंबन्धेन विशेषणमित्याशयेन तेषां तदभिधानात्। विशेषणसंबन्धे तदवच्छिन्नत्वमेव तदवच्छेदेन विशिष्टबुद्धौ भासते इत्युपगमे शब्दानुपस्थितरूपावच्छेदेन विशेषणान्वये बाधकाभावात्।

न चावच्छेदकावच्छिन्नत्वस्यावच्छेदकावच्छेदेन विशिष्टबुद्धौ विशेषणांशे भानमसंभवदुक्तिकम्—'घटो द्रव्यम्' इत्यादौ घटत्वावच्छेदेन द्रव्यत्वादिमत्त्वबुद्धौ द्रव्यत्वादिविशेषणस्य स्वरूपत एव भानादिति वाच्यम्, तादृशशाब्दबोधे द्रव्यत्वाद्यवच्छिन्नस्यैवाऽभेदसंबन्धेन विशेषणत्वात्, घटत्वादिविशिष्टे

---

यथा 'घटवद् भूतलम्' इत्याकारिकायामवच्छेदकावच्छेदेन विशिष्टबुद्धौ धर्मिणि=भूतले विशेषणतया भासमानरूपम्=भूतलत्वं विशेषणे=घटसंयोगेपि स्वावच्छिन्नत्वसंबन्धेन विशेषणं भवति तथाऽत्र 'इह भवने' इत्याकारकावच्छेदकावच्छेदेन विशिष्टबुद्धौ धर्मिणि=पाके विशेषणतया भासमानरूपम्=एतद्भवनाधिकरणकतेमनपाकत्वं विशेषणे=मैत्रान्यसमवेतकृतिविषयत्वाभावे स्वावच्छिन्नत्वसंबन्धेन विशेषणमिति वक्तव्यं तस्य चैतद्भवनाधिकरणकतेमनपाकत्वस्यात्रोपस्थित्यभावात् मैत्रान्यसमवेतभविष्यत्कृतिविषयत्वाभावे विशेषणत्वं न संभवति—उपस्थितस्यैव विशेषणत्वसंभवादित्याशयेन तेषाम्=दीधितिकृताम् तत्=तस्य=उक्ताभावान्वयासंभवस्य कथनमस्ति न तु 'अन्वयितावच्छेदकावच्छेदेन विशेषणान्वयो भवति' इत्यभिप्रायेण तथा च नोक्तनियमस्वीकारापेक्षाऽस्तीत्यर्थः। स्वाभिप्रायमाह—विशेषणसंबन्धे इति यथा 'घटवद् भूतलम्' इत्यत्र घटसंयोगेऽवच्छिन्नत्वसंबन्धेन भूतलत्वं विशेषणम्, तथा च स्वावच्छिन्नत्वसंबन्धेन भूतलत्वविशिष्टो यः संयोगस्तादृशसंयोगसंबन्धेन भूतलं घटवदिति शाब्दबोधाकारः, तथा 'इह भवने' इत्यत्र विशेषणसंबन्धे=विशेषणस्य मैत्रान्यसमवेतभविष्यत्कृतिविषयत्वाभावस्य स्वरूपसंबन्धे तदवच्छिन्नत्वम्=एतद्भवनाधिकरणकतेमनपाकत्वावच्छिन्नत्वं तदवच्छेदेन=एतद्भवनाधिकरणकतेमनपाकत्वावच्छेदेन विशिष्टबुद्धौ=मैत्रान्यसमवेतभविष्यत्कृतिविषयत्वाभावान्वयबुद्धौ भासते तथा चैतद्भवनाधिकरणकतेमनपाकत्वस्य संसर्गकोटौ प्रवेशात् तदुपस्थित्यपेक्षा नास्तीति शब्दादनुपस्थितेपि एतद्भवनाधिकरणकतेमनपाके मैत्रान्यसमवेतभविष्यत्कृतिविषयत्वाभावस्यान्वये न कोपि दोष इत्यर्थः। तदवच्छिन्नत्वम्=अन्वयितावच्छेदकावच्छिन्नत्वम् तदवच्छेदेन=अन्वयितावच्छेदकावच्छेदेन।

नन्वऽवच्छेदकावच्छेदेन विशिष्टबुद्धौ अवच्छेदकावच्छिन्नत्वं विशेषणे भासते (विशेषणेऽवच्छिन्नत्वसंबन्धेन विशेषणम्) इति यत्त्वयोक्तं तदपि न संभवति—'घटो द्रव्यम्' इत्यत्र द्रव्यत्वस्य स्वरूपेणैव भासमानत्वेन अन्वयितावच्छेदकं यद् घटत्वं तदवच्छिन्नत्वेन भासमानत्वाभावाद् अन्यथा सकलद्रव्यस्य घटत्वं स्यादित्याशङ्क्याह—न चेति। उत्तरमाह—तादृशेति तादृशशाब्दबोधे='घटो द्रव्यम्' इत्याकारकशाब्दबोधे द्रव्याभेद एव घटे प्रतीयते इति द्रव्यत्वावच्छिन्नमभेदसंबन्धेन विशेषणमस्तीति नेदं मदुक्तनियमस्योदाहरणं भेदसंबन्धस्थले

द्रव्यत्वादिविशेषणकताद्दशप्रत्यक्षेऽवच्छेदकावच्छिन्नत्वभानानुपगमे क्षतिविरहात् । तथा च 'मैत्रेण न पच्यते' इत्यादौ पाककृतित्वस्यान्वयितानवच्छेदकत्वेऽप्यर्थलभ्यताद्दशधर्मावच्छिन्नत्वस्य संसर्गांशे भानं निराबाधमेवेति चेत् ?,

न—'मैत्रेण न पक्वः' इत्यादौ कृतौ मैत्रादिवृत्तित्वाभावबोधासंभवेन कृतिजन्यत्वस्य तृतीयार्थतां स्वीकृत्य क्रियायां मैत्रादिकृतिजन्यत्वाभावबोधस्यावश्यमुपगन्तव्यतया 'मैत्रेण न पच्यते' इत्यादावपि तद्बोधोपगमेन सामञ्जस्यात् ।

न च यदा मैत्रः सुप्तस्तदा 'मैत्रेण पक्ष्यते न तु पच्यते' इतिप्रयोगानुपपत्तिः—मैत्रवृत्तिवर्तमानकृतेरप्रसिद्ध्या ताद्दशकृतिजन्यत्वाभावप्रत्यायनासंभवात्,

---

तस्य मदुक्तनियमस्य संभवात् 'घटवद् भूतलम्' 'इह भवने' इत्यादौ भेदसंबन्धेनैवान्वयादित्यर्थः । घटत्वविशिष्टविषयके द्रव्यत्वविशेषणके ताद्दशप्रत्यक्षे='घटो द्रव्यम्' इत्याकारकप्रत्यक्षे च विशेषणेऽवच्छेदकावच्छिन्नत्वभानानभ्युपगमेपि क्षतिविरहात्=उक्तस्थलयोरन्वयितावच्छेदकावच्छिन्नत्वभानाभ्युपगमे बाधकाभावादित्यर्थः । उपसंहरति—तथा चेति, 'मैत्रेण न पच्यते' इत्यत्र पाकक्रियाया विशेष्यत्वात् कृतौ विशेषणत्वाभावात् कृतित्वमेवान्वयितावच्छेदकं न तु पाककृतित्वमिति पाककृतित्वस्यान्वयितानवच्छेदकत्वेपि शब्दादनुपस्थितत्वेपि च पचधातुसमभिव्याहारबलात् पाककृतित्वस्य भानं संभवत्येवेत्यर्थलभ्यः=अर्थाल्लभ्यो यस्ताद्दशधर्मः=पाककृतित्वधर्मस्तदवच्छिन्नत्वस्य संसर्गांशे=मैत्रवृत्तित्वाभावसंसर्गांशे भानं निराबाधमेव, पाककृतित्वस्य संसर्गांशे प्रवेशेन तदुपस्थित्यपेक्षाभावात् तथा चात्र कृतौ पाककृतित्वावच्छिन्नविशेषणतासंबन्धेन वा पाककृतित्वावच्छिन्नस्वरूपसंबन्धेन वा मैत्रवृत्तित्वाभावस्यान्वयः क्रियते इति न कोपि दोषः । अत्रापि मैत्रवृत्तित्वाभावरूपविशेषणस्य संबन्धे एव तदवच्छिन्नत्वम्=पाककृतित्वावच्छिन्नत्वं प्राप्तमित्यर्थः ।

अथेत्यादिनाऽऽशङ्कितं परिहरति—नेति, यदि कृतिराख्यातार्थ एव स्यान्न तृतीयार्थस्तदा 'मैत्रेण न पक्वः' इत्यत्राख्यातस्याभावेन कृत्युपस्थितिर्न स्यात्तथा च कृतौ मैत्रवृत्तित्वाभावबोधनमपि न स्यादित्यगत्याऽत्र तृतीयायाः कृतिजन्यत्वमर्थः स्वीकार्यस्तथा च तृतीययोपस्थितमैत्रवृत्तिकृतिजन्यत्वस्य पाकक्रियायामभावस्तद्बोधनं च संभवतीति 'मैत्रेण न पच्यते' इत्यत्रापि तृतीयायाः कृतिजन्यत्वार्थकत्वेन तद्बोधोपगमेन=पाके मैत्रवृत्तिकृतिजन्यत्वाभावबोध एव युक्त इत्यर्थः ।

ननु यदा मैत्रसुप्तस्तदा मैत्रे कृतिर्न संभवतीति मैत्रवृत्तिवर्तमानकृतेरसंभवाद् मैत्रवृत्तिवर्तमानकृतिजन्यत्वस्याऽसंभवेन मैत्रवृत्तिवर्तमानकृतिजन्यत्वाभावस्य बोधोपि न संभवति वर्तमानत्वाविशेषितस्य सामान्यतः कृतिजन्यत्वस्याभावस्तु बाधित एव भूतभविष्यत्कृतिजन्यत्वस्य भूतभविष्यत्पाकादौ संभवादिति 'मैत्रेण पक्ष्यते न तु पच्यते' इति प्रयोगानुपपत्तिरित्याशङ्क्याह—

वर्तमानत्वाविशेषिततदीयकृतिजन्यत्वाभावस्य च बाधितत्वादिति वाच्यम्, आख्यातार्थवर्तमानत्वादेर्नञ्समभिव्याहारस्थलेऽभावांशे एवान्वयस्य व्युत्पन्नत्वात्। अन्यथा 'विनष्टघटं न पश्यति' इत्यादौ तादृशघटकर्मकवर्तमानदर्शनाद्यऽप्रसिद्ध्याऽन्वयबोधानुपपत्तेः। प्रकृते च मैत्रीयवर्तमानकृत्यऽप्रसिद्धावपि वर्तमानकालावच्छिन्नतज्जन्यत्वाभावस्यैव पाके प्रतीत्या सामञ्जस्यात्। पाकत्वाद्यवच्छेदेनैव मैत्रादिकर्तृकत्वाभावबोधोपगमाद् मैत्रादिकर्तृकपाकदशायामन्यकर्तृकपाके मैत्रादिकर्तृकत्वाभावसत्त्वेपि ' न पच्यते मैत्रेण ' इत्यादयो न प्रयोगाः।

यत्र मैत्रेणौदनं पच्यते न तु तेमनं तत्र ' मैत्रेण न पच्यते तेमनम् ' इत्यादिप्रयोगनिर्वाहाय तेमनपाकत्वाद्यवच्छेदेनैवाऽभावान्वयबोध उपगम्यते न तु शुद्धपाकत्वाद्यवच्छेदेन- बाधितत्वात्। यथा च तेन रूपेण शब्दादनुपस्थितावपि तदवच्छेदेनान्वयबोधनिर्वाहस्तथोपपादितमाधेयत्वस्य तृतीयार्थत्ववादिनैव।

---

न चेति। परिहारमाह-आख्यातार्थेति, नञ्सत्त्वे वर्तमानत्वादिकालस्याभावेऽन्वयो भवति न तु कृतौ कृतिजन्यत्वे वेत्यर्थस्तथा चोक्तस्थले वर्तमानकालिको यः कृतिजन्यत्वाभावस्तस्य पाकेऽन्वयोऽभीष्टस्तत्र च न काप्यनुपपत्तिः-उक्तस्थले पाके वर्तमानकालिकस्य कृतिजन्यत्वाभावस्य बाधाभावात्। विपक्षे बाधकमाह- अन्यथेति, यदि नञ्समभिव्याहारस्थले आख्यातार्थवर्तमानत्वादेरभावेऽन्वयो न स्वीक्रियेत तदा ' विनष्टघटं न पश्यति ' इत्यत्र विनष्टघटस्यासत्त्वेन तादृश=विनष्टघटकर्मकवर्तमानदर्शनस्याऽसंभवात्तदभावबोधनं नोपपद्येत, नञर्थाभावे च वर्तमानत्वस्यान्वये तु वर्तमानस्य दर्शनाभावस्य सत्त्वेनान्वयबोधः=शाब्दबोध उपपद्यते। उपसंहरति-प्रकृते चेति, प्रकृते=' मैत्रेण पक्ष्यते न तु पच्यते ' इत्यत्र। वर्तमानकालावच्छिन्नो यस्तज्जन्यत्वाभावः=कृतिजन्यत्वाभावस्तस्येत्यर्थः। पाकत्वेति- ' मैत्रेण न पच्यते ' इत्यत्र पाकत्वावच्छेदेन मैत्रकर्तृकत्वाभावबोधस्य=मैत्रवृत्तिकृतिजन्यत्वाभावबोधस्य स्वीकारात् पाकत्वावच्छेदेन मैत्रकर्तृकत्वाभावस्याऽसत्त्वाच्च अन्यकर्तृकपाके मैत्रकर्तृकत्वाभावस्य सत्त्वेपि मैत्रकर्तृकपाके मैत्रकर्तृकत्वाभावस्याऽसत्त्वात् मैत्रकर्तृकपाकदशायाम् ' मैत्रेण न पच्यते ' इतिप्रयोगस्यापत्तिर्नास्तीत्यर्थः।

यत्रेति- यदा मैत्रेणौदनं पच्यते तेमनं तु न पच्यते तदा ' मैत्रेण न पच्यते तेमनम् ' इतिप्रयोगनिर्वाहाय तेमनपाके एव मैत्रवृत्तिकृतिजन्यत्वाभावः स्वीक्रियते न तु सामान्यतः पाके-ओदनपाके मैत्रवृत्तिकृतिजन्यत्वस्यैव सत्त्वेन मैत्रवृत्तिकृतिजन्यत्वाभावस्य बाधितत्वादित्यर्थः। ननु ' मैत्रेण न पच्यते तेमनम् ' इत्यत्र तेमनपाकत्वेन रूपेण पाकस्योपस्थितिरेव न संभवतीति कथं तेमनपाकत्वावच्छेदेन मैत्रवृत्तिकृतिजन्यत्वाभावस्यान्वयः स्यादित्याशङ्क्याह- यथा चेति। तेन रूपेण=तेमनपाकत्वेन रूपेण। तदवच्छेदेन=तेमनपाकत्वावच्छेदेन। अन्वयबोधनिर्वाहः=मैत्रवृत्तिकृतिजन्यत्वाभावबोधनिर्वाहः। उपपादितम्=" क्रियाविशेषघटितधर्मस्यान्वयितानवच्छेदकत्वेपि तदवच्छिन्नत्वविशिष्टविशेषणताया अभावसंसर्गतया भानसंभवेन साम-

'घटेन न पच्यते' इत्यादयः प्रयोगाः 'आकाशं न पश्यति' इत्यादिप्रयोगसमानयोगक्षेमा एव मन्तव्याः । अचेतनस्य काष्ठस्थाल्यादेरपि कर्तृत्वविवक्षया 'काष्ठं पचति' 'स्थाली पचति' इत्यादिवत् 'काष्ठेन पच्यते' 'स्थाल्या पच्यते' इतिप्रयोगात् तत्र व्यापाररूपे कर्तृत्वे तज्जन्यत्वरूपे तत्कर्तृकत्वे वा तृतीयाया लक्षणा । एवम्- 'चैत्रेण ज्ञायते. इष्यते. गम्यते' इत्यादावाश्रयत्वरूपे कर्तृत्वे आधेयत्वरूपे कर्तृमत्त्वे वा, 'नश्यते घटेन' इत्यादौ प्रतियोगित्वरूपे कर्तृत्वेऽनुयोगित्वरूपे कर्तृमत्त्वे वा लक्षणा । कर्तृपदमपि व्यापारादिमत्यचेतनादौ भाक्तमेव- अचेतनादौ स्वरसतः कर्तृपदाप्रयोगात्, अत एव च कृञो यत्नवाचकत्वम् ।

---

ऽस्यात्. ३९२" इत्यादिना "पाककृतित्वस्यान्वयितानवच्छेदकत्वेऽप्यर्थलभ्यतादृशधर्मावच्छिन्नत्वस्य संसर्गांशे भानं निराबाधमेव ३९७" इत्यादिना चोपपादितम् । अर्थात् तेमनपाकस्य संसर्गांशे प्रवेशः कर्तव्यस्तथा च तेमनपाकत्वसमानाधिकरणविशेषणतासंबन्धेन पाके मैत्रवृत्तिकृतिजन्यत्वाभावस्यान्वयः कर्तव्य इति तेमनपाकत्वेनोपस्थितेरपेक्षा नास्ति ।

घटेनेति- समानयोगक्षेमा=तुल्या निष्प्रामाणिका इत्यर्थः (२९४ पृ.) द्रष्टव्यम् । नन्वेवम् 'काष्ठेन पच्यते' इत्यादिप्रयोगाणामप्यऽप्रामाण्यं स्याद् घटकाष्ठयोरचेतनत्वेनाविशेषादित्याशङ्क्याह- अचेतनस्येति, प्रयोगात्=प्रयोगो भवतीत्यर्थः । काष्ठस्थाल्यादीनामचेतनत्वेपि पाके करणत्वादिना पाकोपयोगित्वेन कर्तृत्वविवक्षा संभवति न तु घटादेरपि- पाकोपयोगित्वाभावादियमेव विशेष इति भावः । तत्र='काष्ठेन पच्यते' इत्यत्राचेतने काष्ठे कृतेरसंभवेन तृतीयाया मुख्यकृत्यर्थकत्वासंभवात् कृतिजन्यत्वार्थकत्वासंभवाच्च व्यापाररूपे कर्तृत्वे तज्जन्यत्वरूपे=व्यापारजन्यत्वरूपे तत्कर्तृकत्वे=काष्ठकर्तृकत्वे वा लक्षणा तत्र कर्तृत्वं काष्ठादौ तत्कर्तृकत्वं पाकादौ बोध्यम् । एवमिति, "तृतीयाया लक्षणा" इत्यनुवर्तनीयम् । चैत्रादौ यज् ज्ञानाश्रयत्वं तदेव ज्ञानकर्तृत्वम्, ज्ञानादौ च यच्चैत्रनिरूपिताधेयत्वं तदेव कर्तृमत्त्वम्=चैत्रवत्त्वं ज्ञेयम्- आधेयत्वसंबन्धेन ज्ञानादौ चैत्रादिकर्तृपदार्थान्वयात् तथा च चैत्रकर्तृकज्ञानविषयताश्रयश्चैत्रवृत्तिज्ञानविषयताश्रय इति वा शाब्दबोधः । एवमेव 'गम्यते' इत्यादावपि तृतीयायाः कर्तृत्वादौ लक्षणा । अनुयोगित्वेति-नाशरूपाभावेपि घटः स्वप्रतियोगिकत्वसंबन्धेन वर्तत इति अनुयोगित्वं नाशे वर्तते तदेव घटवत्त्वमित्यर्थः । भाक्तम्=लाक्षणिकम् । स्वरसत इति- मुख्यस्य कृतिमत्त्वरूपकर्तृत्वस्याचेतनेऽसंभवादित्यर्थः । अत एवेति- यत एवाचेतने कर्तृपदं भाक्तमत एव, यदि कृञो यत्नवाचकत्वं न स्यात्तदा कर्तृपदप्रयोगोऽचेतनेपि मुख्य एव स्यात् न चैतदिष्टमिति कृञो यत्नवाचकत्वं तथा च कृञर्थयत्नस्याचेतनेऽभावाद् यत्नाश्रयत्वबोधककर्तृपदमचेतने काष्ठादौ लाक्षणिकमेव भवति न मुख्यमित्यर्थः । गम्यते इत्यत्र चैत्रकर्तृकगमनव्यापारजन्यसंयोगाश्रयः, 'काष्ठेन पच्यते' इत्यत्र च काष्ठकर्तृकव्यापारजन्यविक्लित्त्याश्रय ओदनः' इतिशाब्दबोधः ।

न च यत्नवत एव कर्तृपदार्थत्वे "कर्तृकरणयोस्तृतीया" इत्यादौ कर्तृपदस्य मुख्यार्थत्यागे युक्तिविरहादऽचेतनकाष्ठादिपदप्रयोगे कर्तृप्रत्ययानुपपत्तिरिति वाच्यम्, सूत्रस्थकर्तृपदानाम् " स्वतन्त्रः कर्ता " इतिसूत्रकृत्परिभाषितकर्तृपरत्वात्, अन्यथा तत्प्रणयनवैयर्थ्यप्रसङ्गात् । स्वतन्त्रत्वं च कारकान्तरव्यापारानधीनत्वे सति कारकत्वम् । ' काष्ठं पचति ' इत्यादौ स्वातन्त्र्यविवक्षया काष्ठादेः कर्तृत्वम् ।

न च स्वातन्त्र्यविवक्षणेपि पुरुषव्यापाराधीनक्रियानुकूलव्यापारवतामेषामन्यव्यापारानधीनक्रियानुकूलव्यापारवत्त्वरूपस्य स्वातन्त्र्यस्य वास्तविकस्याभावात्तद्बोधकविभक्तीनामप्रामाण्यं दुर्वारमेवेति वाच्यम्, समभिव्याहृतक्रियाकारकान्तरव्यापारानधीनतत्क्रियानुकूलस्य व्यापारस्यैव तत्क्रियावाचकपदसमभिव्याहृतविभक्त्यर्थत्वात् । अनधीनान्तविशेषणप्रयोजनं च ' चैत्रः काष्ठैः स्थाल्यां पचति ' इत्यादिस्थले ' चैत्रः स्थाली काष्ठानि पचति ' इतिप्रयोगापत्तिवारणम् । यत्र च ' चैत्रः पचति ' 'काष्ठं पचति' इत्यादौ समभिव्याहृतकारकान्त-

---

शङ्कते- न चेति, अचेतने काष्ठादौ यत्नाऽसंभवादित्यर्थः । परिहारमाह- सूत्रस्थेति, " स्वतन्त्रः कर्ता " इतिसूत्रे सूत्रकृता परिभाषितं यत् स्वतन्त्रत्वरूपं कर्तृत्वं तत्परत्वात् सूत्रस्थकर्तृपदानामित्यर्थः । विपक्षे बाधकमाह- अन्यथेति, अन्यथा=उक्तपरिभाषितकर्तृत्वाग्रहणे यत्नाश्रयत्वरूपकर्तृत्वस्य लोकप्रसिद्धत्वात् " स्वतन्त्रः कर्ता " इतिसूत्रप्रणयनं व्यर्थमेव स्यात्, तथा च काष्ठादीनां स्वतन्त्रत्वरूपकर्तृत्वस्य संभवात् काष्ठादिपदोत्तरं कर्तृतृतीया संभवतीत्यर्थः । स्वतन्त्रत्वलक्षणमाह- स्वतन्त्रत्वं चेति ।

शङ्कते- न चेति । एषाम्=काष्ठादीनाम् । तद्बोधकेति- कारकान्तरव्यापारानधीनकारकत्वरूपं यत् स्वतन्त्रत्वं तादृशस्वतन्त्रत्वरूपकर्तृत्वबोधकविभक्तीनाम्, अचेतकाष्ठादौ पुरुषाधीनत्वेनोक्तस्वतन्त्रत्वस्याप्यसंभवादित्यर्थः । परिहारमाह-समभिव्याहृतेति, ' काष्ठेन पच्यते ' इत्यादौ व्यापारस्यैव कर्तृत्वमुक्तमिति समभिव्याहृता क्रियाकारकान्तरव्यापारानधीना या तत्क्रिया=पाकक्रिया तदनुकूलो यः प्रज्वलनरूपो व्यापारस्तस्यैव तत्क्रियावाचकेन 'पच्यते ' इति पदेन समभिव्याहृता या तृतीयाविभक्तिस्तदर्थत्वात् तस्य च काष्ठादावपि सत्त्वात् न काष्ठादिपदोत्तरतृतीयादिविभक्तेरप्रामाण्यमित्यर्थः । स्वतन्त्रत्वलक्षणेऽनधीनान्तविशेषणप्रयोजनमाह- अनधीनान्तेति, कारकत्वं स्वतन्त्रत्वमित्येतावन्मात्रोक्ते काष्ठस्थाल्यादीनामपि कारकत्वेन स्वतन्त्रत्वरूपं कर्तृत्वं स्यात् तस्य च पचतीत्याख्यातेनोक्तत्वात् काष्ठादिपदोत्तरं प्रथमैव स्यादिति ' चैत्रः काष्ठैः स्थाल्यां पचति ' इत्यस्य स्थाने ' चैत्रः स्थाली काष्ठानि पचति' इत्यपि प्रयोगः स्यात् "कारकान्तरव्यापारानधीनत्वे सति" इति विशेषणसत्त्वे तु काष्ठादीनामत्र चैत्रव्यापाराधीनत्वेन स्वतन्त्रत्वाभावात् तेन च कर्तृत्वाभावान्न काष्ठादिपदोत्तरं प्रथमापत्तिरिति न 'चैत्रः काष्ठैः' इत्यस्य स्थाने 'चैत्रः काष्ठानि' इति प्रयोगापत्तिरित्यर्थः । यत्र चेति- कारकान्तरबोध-

रात्रसिद्धिस्तत्राऽनधीनान्तविशेषणं न प्रतीयत एव, तन्निर्वाहश्च तत्र लकारादेः स्वतन्त्रशक्त्यन्तरकल्पनात्, विशिष्टविषयकशक्त्या विशेषणांशाविषयकबोधाऽजननात् ।

न च 'मैत्र श्चैत्रेण पाचयति' इत्यादौ हेतुकर्तृसमभिव्याहारस्थले कर्तरि तृतीयानुपपत्तिः—कर्तृव्यापारस्य समभिव्याहृतहेतुव्यापाराधीनत्वादिति वाच्यम्, तत्र ण्यन्तप्रतिपाद्यपाचनादिक्रियायामेव हेतोः कारकतया स्वतन्त्रकर्तृव्यापारस्य पच्यादिक्रियायां कारकान्तरव्यापारानधीनत्वात् । स्वतन्त्रं प्रयुञ्जानस्य पुंसो व्यापारस्तण्डुलक्रयणादिवत् पाकादावन्यथासिद्धतया न कारणमिति पाकादिप्रयोजकव्यापारवत्त्वेपि तस्य तत्क्रियाकारकत्वाभावात्, अत एव 'चैत्रो मैत्रेण पाचयति' इत्यादौ 'चैत्रः पचति' इति न प्रयोगः ।

---

दाभावेन कारकान्तरोपस्थित्यभावात् तेन च कारकान्तराधीनत्वप्रतीत्यसंभवात् तदभावरूपकान्तरानधीनत्वप्रतीतेरप्यसंभव एवेत्यर्थः । "कारकान्तरव्यापारानधीनत्वे सति कारकत्वं स्वतन्त्रम्" इत्याकारकविशिष्टविषयकशक्त्या अनधीनान्तविशेषणं विना केवलकारकत्वविषयकबोधोपत्तिर्न संभवतीति तन्निर्वाहः=अनधीनान्तविशेषणाऽप्रतीतिनिर्वाहो लकारादेः स्वतन्त्रशक्त्यन्तरकल्पनात्=केवलकारकत्वरूपस्वतन्त्रत्वे शक्तिकल्पनाद् भवतीत्यर्थः, तथा च कर्तृवाचकलकारतृतीयानाम् 'चैत्रः काष्ठैः' इत्यादौ कारकान्तरव्यापारानधीनकारकत्वरूपस्वतन्त्रत्वभूतकर्तृत्वे शक्तिर्ज्ञेय चैत्रः पचति' इत्यादौ कारकान्तराभावात् शुद्धकारकत्वरूपस्वतन्त्रत्वभूतकर्तृत्वे शक्तिर्ज्ञेयेति नधीनत्वरूपविशेषणप्रतीत्यापत्तिः ।

शङ्कते—न चेति, चैत्रव्यापारस्य मैत्राधीनत्वेन चैत्रस्य स्वतन्त्रत्वं नास्तीति तृतीयापत्तिरित्यर्थः । हेतुकर्ता=प्रयोजककर्ता स चात्र मैत्रः । परिहारमाह— तत्रेति, तत्र='मैत्रश्चैत्रेण पाचयति' इत्यत्र मैत्रस्य हेतुकर्तृभूतस्य ण्यन्तप्रतिपाद्यपाचनक्रियायामेव कारकत्वमस्ति न तु धात्वर्थपचनक्रियायामिति स्वतन्त्रकर्तृव्यापारस्य=चैत्रव्यापारस्य धात्वर्थपचनक्रियायां कारकान्तरव्यापाराधीनत्वं नास्त्येव पचनक्रियायां कारकान्तरस्यैवाभावादिति न चैत्रपदोत्तरतृतीयानुपपत्तिरित्यर्थः । उक्ते हेतुमाह— स्वतन्त्रमिति, स्वतन्त्रम्=धात्वर्थपचनादिक्रियाकर्तृभूतं चैत्रादिकं प्रयुञ्जानस्य=प्रेरकस्य पुंसो मैत्रादेः प्रेरणारूपो व्यापारः क्रयणादिव्यापारवत् पाकक्रियायामन्यथासिद्ध एवोपयोगित्वाभावादिति न कारणं तथा च मैत्रादेः पाकादिप्रयोजकव्यापारवत्त्वेपि=पाकविषयकप्रेरणालक्षणव्यापारवत्त्वेपि तस्य=मैत्रादेस्तत्क्रियायाम्=पाकक्रियायां कारकत्वमेव नास्ति येन पाकक्रियायां चैत्रस्य मैत्राधीनत्वं स्यात्तेन च तृतीयानुपपत्तिः स्यादित्यर्थः । अत एव='चैत्रो मैत्रेण पाचयति' इत्यत्र चैत्रस्य धात्वर्थपाकक्रियायां कारकत्वाभावादेव । अन्यथा चैत्रस्यापि कारकत्वे कर्तृत्वं स्यादिति 'चैत्रो मैत्रेण पाचयति' इत्यस्य स्थाने 'चैत्रः पचति' इतिप्रयोगः स्यादेवेत्यर्थः ।

न च 'पञ्चभिर्हलैः कर्षति गृही' इत्यादौ भूमिलेखनरूपकृष्यादिक्रियायां स्वतन्त्रकर्तॄन् प्रयुञ्जानस्य गृहिणो व्यापारस्य दर्शितयुक्त्या लकारादिनाऽभिधानाऽसंभव इति 'कर्षति'इति न स्यात् 'कर्षयति' इति च स्यादिति वाच्यम्, तत्र कृषेः प्रतिविधानार्थत्वात्, उक्तं च "'याजका यजन्ति' इति यजिर्हविःप्रक्षेपार्थः, 'पञ्चभिर्हलैः कर्षति'इति कृषिः प्रतिविधानार्थः"इति, यजेर्देवतोद्देश्यकद्रव्यत्यागेच्छाविशेषरूपार्थे मुख्यतया तत्र च यजमानस्यैव कर्तृतया हविःप्रक्षेपरूपलक्ष्यार्थपरत्वं दर्शितं तत्र चर्त्विजामेव स्वातन्त्र्यम् । 'होता' इत्यत्रापि हविःप्रक्षेप एव हुधातोरर्थो न तु तादृशफलावच्छिन्नस्त्यागः, तथा सति ऋत्विजस्तत्र स्वतन्त्रकर्तृताविरहेण होतृपदेन प्रतिपादनासंभवात् । "धात्वर्थतावच्छेदकफलकर्तृत्वमेवकर्तृप्रत्ययेन प्रतिपाद्यते इति ऋत्विजि होतृव्यवहारो न यष्टरि । अतः प्रतिगृहीतृव्यापारो न स्वत्वजनकस्तथा सति तत्र दातृव्यवहारापत्तेः" इति तु जीमूतवाहनः ।

---

शङ्कते— न चेति । हलपदेनात्र हलवाहका पुरुषा एव ग्राह्याः । गृहिपदेन च व्यवस्थापको ग्राह्यः । स्वतन्त्रकर्तॄन्=कृषिक्रियायां स्वतन्त्रान् हलवाहकान् । दर्शितयुक्त्या="स्वतन्त्रं प्रयुञ्जानस्य पुंसो व्यापारस्तण्डुलक्रयणादिवत्" इत्यादिदर्शितयुक्त्या, गृहिणः प्रेरणारूपक्रियायामेव कारकत्वात् प्रेरणाव्यापारबोधकणिच आपत्त्या 'कर्षयति' इतिस्यात् कृषिरूपक्रियायां च गृहिणः कारकत्वाभावात् हलानामेव तत्र कारकत्वात् लकारादिना गृहिव्यापारस्याभिधानासंभवात् 'कर्षति' इति न स्यादित्यर्थः । परिहरति— तत्रेति । तत्र=उक्तोदाहरणे प्रतिविधानम्=व्यवस्था । उक्ते प्रमाणमाह— याजका इति, तथा च प्रतिविधानरूपक्रियायां गृहिण एव कारकत्वात् तद्गतव्यापारस्यैवात्र लकारेणाभिधानात् 'कर्षति गृही' इति युक्तमेव, तथा च 'गृही पंचभिर्हलैर्व्यवस्थां करोति' इति शाब्दबोधः । यजेर्हविःप्रक्षेपार्थत्वमुपपादयति— यजेरित्यादिना । तत्र=देवतोद्देश्यकहविस्त्यागेच्छायां यजमानस्यैव कर्तृकारकत्वात् 'याजका यजन्ति' इति न स्यात् किं तु 'यजमानो यजति तं याजका याजयन्ति' इत्येव स्यादिति यजेर्हविःप्रक्षेपरूपार्थे लक्षणास्ति तथा च तत्र=हविःप्रक्षेपे ऋत्विजामेव स्वातन्त्र्यात 'याजका यजन्ति' इतियुक्तमेवेत्यर्थः । एवमेव होतृपदेपि ज्ञेयमित्याह— होतेति । तादृशफलावच्छिन्नः=देवतोद्देश्यकद्रव्यत्यागरूपफलावच्छिन्न इच्छारूपत्यागः । विपक्षे बाधकमाह— तथा सतीति, यदि'होता'इत्यत्र हुधातोर्देवतोद्देश्यकद्रव्यत्यागरूपफलावच्छिन्न इच्छारूपः त्याग एवार्थः स्यात्तदा ऋत्विजः=ऋत्विग्विशेषस्य तत्र=देवतोद्देश्यकेच्छारूपत्यागे स्वतन्त्रकर्तृताविरहेण होतृपदेन ऋत्विग्विशेषस्य प्रतिपादनं न संभवेत् किंतु यजमानस्यैव प्रतिपादनं स्यात्, नचैतदिष्टं तस्मादत्र हुधातोर्हविःप्रक्षेप एवार्थस्तत्र च ऋत्विजः स्वातन्त्र्यात् जोहुतीति होतेत्यत्र होतृपदेन ऋत्विक्प्रतिपादनं संभवति । अत्र जीमूतवाहनमतमाह—धात्वर्थेति, देवतोद्देश्यकद्रव्यत्यागेच्छा धात्वर्थस्तदवच्छेदकं फलं देवतोद्देश्यकद्रव्यत्यागस्तत्कर्तृत्वमेव 'होता' इत्यत्र कर्तृवाचकतृच्प्रत्ययेन प्रतिपाद्यते द्रव्यं

अथास्तु 'चैत्रेण मैत्रेण पाच्यते' इत्यादौ स्वतन्त्रव्यापारस्य हेतुकर्तृव्यापाराधीनत्वेपि दर्शितरीत्या तस्य स्वतन्त्रकर्तृत्वनिर्वाहस्तथापि तद्वाचकपदोत्तरं तृतीयानुपपत्तिः– कर्तृत्वस्य णिच्प्रत्ययेनाभिधानादिति चेत् ?, न– कर्तृत्वनिर्वाहकत्वसंबन्धेन पाकाद्यन्वयिनो हेतुकर्तृव्यापारस्य णिजर्थत्वेन स्वतन्त्रकर्तृत्वस्य णिचाऽनभिधानात् । कर्तृत्वरूपफलावच्छिन्नस्य तादृशव्यापारस्य णिजर्थतामतेप्याऽऽश्रयोपरक्तस्य कर्तृत्वस्यान्यतो भानाऽनिर्वाहेण कर्तुरनभिधानात् तृतीयोपपत्तिः । आख्यातस्य धर्म्यऽवाचकत्वेपि कृतिविशिष्टबोधकत्वरूपस्य कर्त्रऽभिधानस्याऽक्षतत्वात् 'चैत्रः पचति' इत्यादौ न तृतीया ।

---

हविस्त्यागे च ऋत्विजः स्वातन्त्र्यमिति ऋत्विजि होतृत्वव्यवहारो भवति न यष्टरि=यजमाने इत्यर्थः । अत इति–यतो धात्वर्थतावच्छेदकफलकर्तृत्वं कर्तृप्रत्ययेन प्रतिपाद्यतेऽतः प्रतिगृहीतृव्यापारो न स्वस्वत्वजनकोऽभ्युपगन्तव्यः, अयं भावः–स्वस्वत्वध्वंसविशिष्टपरस्वत्वानुकूलेच्छैव दाधात्वर्थोस्तीत्युक्तम् ( २४० पृ. ) तत्र धात्वर्थतावच्छेदकं फलं परस्वत्वमेव परस्वत्वं च प्रतिगृहीतृस्वत्वमेवेति प्रतिगृहीतृस्वत्वकर्तृत्वम्=प्रतिगृहीतृस्वत्वजनकत्वमेव 'दाता' इत्यत्र कर्तृप्रत्ययेन तृचा प्रतिपाद्यते इति प्रतिगृहीतृस्वत्वजनकत्वमेव दातृत्वमिति सिद्धं यदि च प्रतिगृहीतृव्यापारोपि स्वस्वत्वजनकः स्यात्तदा तत्र=प्रतिगृहीतर्यपि दातृत्वव्यवहारः स्यादेव स्वत्वजनकव्यापारवत एव दातृत्वात् तस्मान्न प्रतिगृहीतृव्यापारः स्वस्वत्वजनकः किं तु दातृव्यापार एवेत्यर्थः । तथा सति=प्रतिगृहीतृव्यापारस्य स्वत्वजनकत्वे सति । स्वत्वपदेन संप्रदानस्वत्वं ग्राह्यम् ।

ननु 'चैत्रेण मैत्रेण पाच्यते' इत्यत्र स्वतन्त्रव्यापारस्य=मैत्रव्यापारस्य हेतुकर्तृव्यापाराधीनत्वेपि=चैत्रव्यापाराधीनत्वेपि दर्शितरीत्या=" तत्र ण्यन्तप्रतिपाद्यपाचनादिक्रियायामेव हेतोः कारकतया ४०१ पृ. " इत्यादिरीत्या. अर्थात् चैत्रस्य ण्यन्तक्रियायां कारकत्वेपि धात्वर्थक्रियायां कारकत्वाभावात्तत्र मैत्रस्यैव स्वातन्त्र्यात् तस्य=मैत्रस्य स्वतन्त्रकर्तृत्वं यद्यपि संभवति तथापि तद्वाचकपदोत्तरम्=स्वतन्त्रकर्तृवाचकमैत्रपदोत्तरं तृतीया न संभवति– कर्तृत्वस्य णिच्प्रत्ययेनाभिधानात्, कर्तृत्वानभिधाने एव कर्तृत्ववाचकतृतीयासंभवादित्याशङ्कते– अथेति । परिहरति–नेति । अत्र पाक एव कर्तृत्वनिर्वाहक इति कर्तृत्वनिर्वाहकत्वसंबन्धेन पाके हेतुकर्तृव्यापारस्य=चैत्रव्यापारस्यान्वयात् तस्यैव णिचाऽभिधानात् मैत्रवृत्तिकर्तृत्वस्य च णिचाऽनभिधानात् मैत्रपदोत्तरं कर्तृत्वबोधिका तृतीया युक्तैवेत्यर्थः । पक्षान्तरमाह– कर्तृत्वरूपेति, यदि न केवलं हेतुकर्तृव्यापार एव णिजर्थः किं तु कर्तृत्वानुकूलपाकान्वयी व्यापारो णिजर्थस्तथा च कर्तृत्वस्यापि णिचैव लाभस्तदाप्याश्रयोपरक्तस्य=आश्रयविशिष्टकर्तृत्वस्य तृतीयातिरिक्तेन भानं न संभवतीति कर्तृत्वाश्रयीभूतकर्तुरनभिधानात् तादृशकर्तुर्बोधनार्थं मैत्रपदोत्तरं तृतीया युक्तैवेत्यर्थः । णिचो व्यापारवाचकत्वेन कर्तृत्ववाचकत्वाभावाच्चैत्रमैत्रपदाभ्यां कर्तृत्ववाचकतृतीयाया आवश्यकतेति भावः । नन्वेवमाख्यातस्याप्याश्रयत्ववाचकत्वेन धर्म्यऽवाचकत्वात्=कर्त्रऽवाचकत्वात् 'चैत्रः पचति' इत्यत्रापि चैत्रपदोत्तरं तृतीया स्यादित्याशङ्क्याह–आख्या-

न चैवं मुख्यविशेष्यतया कृतिबोधकत्वरूपस्य: कर्त्रऽभिधानस्य विवक्षायाम् 'चैत्रेण पचति ' इति स्यादिति वाच्यम्, आश्रयातिरिक्तांशेऽविशेषणतया कृतिबोधनस्यैव कर्त्रभिधानरूपत्वात्। तथा तदभिधानं च लकृत्तद्धितसमासानामेव, अत एव तैरेवाभिधानं वृत्तिकृता विवृतम्।

इदं त्ववधेयम्—यद्यपि स्वतन्त्रव्यापारमात्रे एव तृतीयादेरनुशासनं तथापि लाघवात् कृतिरूपे एव कर्तृत्वे तृतीयादेः शक्तिः। अचेतनव्यापारे निरूढलक्षणैव। अनुशासनस्यानादितात्पर्यमात्रग्राहकत्वात् लाघवसहकृतस्यैव तादृशतात्पर्यस्य शक्तिकल्पकत्वात् व्यापारे तत्सत्त्वेपि गौरवेण शक्त्यसिद्धेः। एवं च

---

तस्येति। अत्राप्याख्यातस्य कृतिविशिष्टबोधकत्वमस्त्येवेति कृतिविशिष्टबोधनरूपस्य कर्त्रभिधानस्य सत्त्वान्न तृतीयापत्तिरित्यर्थः।

ननु 'चैत्रः पचति ' इत्यत्र कृतिविशिष्टबोधकत्वरूपस्य कर्त्रभिधानस्याऽक्षतत्वेपि यदि मुख्यविशेष्यतया यत् कृतिबोधनं तदेव कर्त्रभिधानमित्याकारिका विवक्षा स्यात् तदा कृतिविशिष्टबोधकत्वेनाख्यातस्य मुख्यविशेष्यतया कृतिबोधकत्वरूपकर्त्रभिधायकत्वाभावादनुक्ते कर्तरि तृतीयापत्त्या 'चैत्रेण पचति ' इत्यपि स्यादेव प्रयोग इत्याशङ्क्याह—न चैवमिति। परिहारमाह—आश्रयेति। आश्रयातिरिक्ते=कर्त्रऽतिरिक्ते व्यापारादावऽविशेषणतया कृतिबोधनमेव कर्त्रभिधानमस्ति तथा च ' चैत्रः पचति ' इत्यत्राख्यातेनाश्रयविशेषणतयैव कृतिर्बोध्यते न त्वाश्रयातिरिक्तविशेषणतयेति कर्त्रभिधानस्य जातत्वान्नात्र तृतीयापत्तिरिति न ' चैत्रेण पचति ' इति प्रयोगापत्तिरित्यर्थः। तथेति—तथा=आश्रयातिरिक्तांशे चाऽविशेषणतया तदभिधानम्=कृत्यभिधायकत्वं लकारादीनामेवेत्यर्थः। उक्ते प्रमाणमाह—अत एवेति। " कर्मणि द्वितीया " इति सूत्रे विवृतम्=" अभिधानं तु प्रायेण तिङ्कृत्तद्धितसमासैः " इति व्याख्यातमित्यर्थः। तदेतत् ( १९४ पृ. ) " लकृत्तद्धितसमासैरभिधानमेव " इत्यस्यादर्शे द्रष्टव्यम्।

स्वाभिप्रायमाह—इदमिति। अनुशासनमिति—" कर्तृकरणयोस्तृतीया " इत्यनेन कर्तरि तृतीया विहिता कर्ता च स्वतन्त्रव्यापारवानेवेति " स्वतन्त्रः कर्ता " इत्यनेनोक्तं तत्र कर्त्रऽवच्छेदकः स्वतन्त्रव्यापार एवेति स्वतन्त्रव्यापारमात्रे तृतीयादेरनुशासनं प्राप्तं घटादिपदानामवच्छेदकीभूतघटत्वादौ शक्तिवत् तत्र स्वतन्त्रव्यापारो नाम कारकान्तरव्यापारानधीनत्वे सति व्यापार एवेति तत्र तृतीयायाः शक्तिस्वीकारे गौरवं स्यादिति लाघवात् कृतौ शक्तिः कल्प्यते कृतिरेव च कर्तृत्वमित्यर्थः। कृतेश्च यत्नरूपत्वेनाऽचतनेऽसंभवादचेतनव्यापारे तृतीयाया लक्षणैव यथा 'काष्ठेन पच्यते ' इत्यत्र। उक्तमुपपादयति—अनुशासनस्येति, तादृशतात्पर्यस्य=अनादितात्पर्यस्य। तत्सत्त्वेपि=तृतीयानिरूपितानादितात्पर्यसत्त्वेपि। व्यापारे शक्तिस्वीकारे कारकान्तरव्यापारानधीनरूपे स्वतन्त्रव्यापारे एव शक्तिस्वीकारापत्त्या गौरवं स्यादिति न तत्र शक्तिः संभवति किं तु लाघवात् कृतावेव शक्तिः शक्यतावच्छेदकं च कृतित्वं लघुस्वरूप-

कर्तृत्वरूपकृतिबोधस्थले कारकान्तरव्यापारानधीनत्वं न प्रतीयते इति तदन्तर्भावेण शक्तिकल्पने मानाभावः । व्यापारलाक्षणिकेन: कर्तृप्रत्ययेन लक्षणया तदन्तर्भावेण व्यापारबोधनादेव पूर्वोक्तातिप्रसङ्गवारणात् । अन्यथा तदन्तर्भावेण कृतिशक्तावपि तादृशातिप्रसङ्गस्य दुर्वारत्वादिति ।

'घटो जायते' 'ओदनः सिद्ध्यति' इत्यादौ सत्कार्यवादविद्वेषिणां नैयायिकानां कारकत्वं कर्तृत्वं च घटौदनादेर्यथाश्रुतसूत्रानुसारेण दुरुपपादमेव ।

---

मेवेत्यर्थः । एवं चेति—कारकान्तरव्यापारानधीनत्वप्रतीतावऽन्वयव्यतिरेकावपि सहायकौ न स्तः कृतिबोधस्थले कारकान्तरव्यापारानधीनत्वस्याऽप्रतीयमानत्वादिति :तदन्तर्भावेण=कारकान्तरव्यापारानधीनत्वान्तर्भावेण=कारकान्तरव्यापारानधीनव्यापारविषयककृतावपि शक्तिकल्पने मानं नास्तीत्यर्थः । ननु यदि कृतिबोधनस्थले कारकान्तरव्यापारानधीनत्वं न प्रतीयते तदा 'चैत्रः काष्ठैः स्थाल्यां पचति' इत्यस्य स्थाने 'चैत्रः काष्ठं स्थाली पचति' इत्यपि प्रयोगः स्यात्, व्यापारवत्त्वेन काष्ठादीनामपि कर्तृत्वप्रसङ्गात् कारकान्तरव्यापारानधीनत्वप्रतीतौ तु काष्ठादीनां चैत्रव्यापाराधीनत्वेन स्वतन्त्रत्वाभावात्तेन च कर्तृत्वाभावान्न काष्ठादिपदोत्तरमत्र प्रथमापत्तिरित्याशङ्क्याह—व्यापारलाक्षणिकेनेति, अत्र शक्त्या कर्तृप्रत्ययेन कारकान्तरव्यापारानधीनत्वस्याऽप्रत्यायनेपि व्यापारे तस्य लक्षणास्तीति लक्षणया तदन्तर्भावेण=कारकान्तरव्यापारानधीनत्वान्तर्भावेण व्यापारस्यापि बोधनात् काष्ठादिव्यापारस्य च चैत्रव्यापाराधीनत्वान्न काष्ठादीनां कर्तृत्वं तथा च न काष्ठादिपदोत्तरं प्रथमापत्तिरित्यर्थः । विपक्षे बाधकमाह—अन्यथेति, अन्यथा= उक्तव्यापारे लक्षणाया अस्वीकारे तदन्तर्भावेण=कारकान्तरव्यापारानधीनत्वान्तर्भावेण, कर्तृप्रत्ययस्थले केवलं कारकान्तरव्यापारानधीनव्यापारविषयककृतौ शक्तिस्वीकारे 'पचति' इत्यनेन कारकान्तरव्यापारानधीनव्यापारविषयककृतेरुक्तत्वेन "उक्ते कर्तरि प्रथमैव" इत्यनेन चैत्रपदोत्तरमिव काष्ठादिपदोत्तरमपि प्रथमापत्त्या 'चैत्रः काष्ठं स्थाली पचति' इति स्यादेव, यदा च केवलं शुद्धकृतौ शक्तिः कारकान्तरव्यापारानधीनव्यापारे च लक्षणा तदात्र कर्त्राख्यातेन चैत्रवृत्तिकृतेरभिधानाच्चैत्रपदोत्तरं प्रथमा जाता लक्षणया च कारकान्तरव्यापारानधीनव्यापारस्योपस्थितिर्जाता काष्ठादिव्यापारे च चैत्रव्यापाराधीनत्वस्यैव सत्त्वात् कारकान्तरव्यापारानधीनव्यापार एव काष्ठादौ नास्ति यस्याख्यातेनाभिधानं स्यादिति काष्ठादिवृत्तिकारकान्तरव्यापारानधीनव्यापारस्यानुक्तत्वात् काष्ठादिपदोत्तरं तृतीयैव भवति. किं वाख्यातेन चैत्रवृत्तिकृत्यभिधाने कृते काष्ठादिवृत्तिव्यापारस्याभिधानासंभवात् काष्ठादिपदोत्तरं तृतीयैव । 'काष्ठं पचति' इत्यादिप्रयोगानुरोधेन च कारकान्तरव्यापारानधीनव्यापारे लक्षणास्वीकारावश्यकता— अचेतनकाष्ठादौ कृतेरसंभवेन काष्ठादिवृत्तिकृत्यभिधानस्याप्यसंभवादित्यर्थः प्रतीयते ।

घट इति— 'घटो जायते' इत्यत्रोत्पत्तिपूर्वमसतो घटस्यासत्कार्यवादिनैयायिकमते

मुख्यं च क्रियाकर्तृत्वं न क्रियानुकूलकृतिमात्रम्-एकक्रियाविषयककृतितो यत्र नान्तरीयकक्रियान्तरनिर्वाहस्तत्र तत्कृतिमतस्तत्क्रियाकर्तृत्वाभावात्, अत एव 'मत्तो भूतं न तु मया कृतम्' इति व्यपदेश इति, किं तु तत्क्रियाविषयकत्वे सति तदनुकूला या कृतिस्तदेव तत्कर्तृत्वम्। अन्योद्देशेन नाराचक्षेपाद्य यत्र ब्राह्मणवधस्तत्र मरणानुकूलस्य नाराचक्षेपरूपव्यापारस्य कृतिविषयत्वेऽपि ब्राह्मणमरणानुकूलव्यापारत्वेन तस्याऽनभिसंहितत्वात् तेन रूपेण कृतिविषयत्वं न तादृशव्यापारस्येति ब्राह्मणमरणानुकूलव्यापारत्वेन कर्तृत्वं न तादृशव्यापारकर्तुरिति न तस्य संपूर्णप्रायश्चित्तम्।

---

कारकत्वं वा कर्तृत्वं वा न संभवति सत एव कारकत्वादिसंभवात्, सत्कार्यवादे तूत्पत्तिपूर्वमपि घटादेः सत्त्वेन कारकत्वादिकमुपपद्यते इत्यर्थः। सूत्रानुसारेण="स्वतन्त्रः कर्ता" इत्यादिसूत्रानुसारेण।

मुख्यमिति, क्रियानुकूलकृतिमात्रस्य मुख्यकर्तृत्वास्वीकारे हेतुमाह-एकेति, यत्र कृतिस्तु केवलं गमनक्रियानुकूलैवास्ति अथ च नान्तरीयकस्य=तत्सहावश्यंभाविनः क्रियान्तरस्य परशरीरेऽभिघातस्यापि निर्वाहो जातः=गमनानुकूलकृत्यैवाभिघातोऽपि परस्य जातस्तत्र तत्कृतिमतः=गमनानुकूलकृतिमतस्तत्क्रियाकर्तृत्वाभावात्=अभिघातक्रियाकर्तृत्वमिष्टं नास्तीति हेतोर्न क्रियानुकूलकृतिमात्रं मुख्यं क्रियाकर्तृत्वम्। अत एव=उक्तस्थले अभिघातक्रियाकर्तृत्वाभावादेव तादृशस्थले 'मत्तो भूतम् ( काकतालीयन्यायेन विवशमभिघातो मत्तो जातः ) न तु मया कृतम्' इति व्यपदिशन्ति, यदि च क्रियानुकूलकृतिमात्रं मुख्यं कर्तृत्वं स्यात्तदोक्तस्थले गमनानुकूलकृत्याप्यभिघाते जाते गमनानुकूलकृतिमतोऽभिघातक्रियाकर्तृत्वमपि स्यादेव कृतिं विनाभिघातस्याप्यसंभवेनाऽभिघातक्रियोत्पादिकाया गमनानुकूलकृतेः सत्त्वादेव न चैतदिष्टमित्यर्थः। मुख्यं क्रियाकर्तृत्वमाह-किं त्विति, तत्क्रियाविषयकत्वे सति या तत्क्रियानुकूला कृतिः सैव मुख्यं तत्क्रियाकर्तृत्वमित्यर्थस्तथा च गमनानुकूलकृतेरुक्तस्थलेऽभिघातक्रियाविषयकत्वं नास्ति गमनकर्तुरभिघाते तात्पर्याभावादिति नाभिघातक्रियाकर्तृत्वम्, गमने तात्पर्यसत्त्वेन कृतेर्गमनविषयकत्वमस्तीति गमनकर्तृत्वमपीष्टमेवेत्यर्थः तत्कर्तृत्वम्=तत्क्रियाकर्तृत्वम्। अत्र प्रसङ्गसङ्गत्या विषयान्तरमाह-अन्येति, अन्योद्देशेन=मृगाद्युद्देशेन बाणप्रक्षेपाद् यत्र ब्राह्मणवधो जातस्तत्र बाणप्रक्षेपव्यापारस्य मरणानुकूलत्वं कृतिविषयत्वं च यद्यप्यस्ति तथापि तस्य=बाणप्रक्षेपस्य ब्राह्मणमरणानुकूलव्यापारत्वेनाभिप्रायविषयत्वाभावात् तेन रूपेण=ब्राह्मणमरणानुकूलव्यापारत्वेन रूपेण तादृशव्यापारस्य=अन्योद्देशेन बाणप्रक्षेपरूपव्यापारस्य कृतिविषयत्वं नास्तीति तादृशव्यापारकर्तुः=अन्योद्देशेन बाणप्रक्षेपकर्तुर्ब्राह्मणमरणानुकूलव्यापारकर्तृत्वं न भवतीति न तस्य संपूर्णप्रायश्चित्तं भवतीति तत्क्रियाविषयकत्वे सति तत्क्रियानुकूला या कृतिस्तद्वत्त्वमेव मुख्यं कर्तृत्वं वक्तव्यम्, अन्यथोक्तस्थलेऽन्योद्देशेनापि नाराचप्रक्षेपाद् ब्राह्मणवधे जाते नाराचप्रक्षेप्तुर्ब्राह्मणवधकर्तृत्वं प्राप्नुयात्तेन च तस्य संपूर्णमेव प्रायश्चित्तं स्यान्न चैतदिष्टमित्यर्थः।

अत एव संपूर्णप्रायश्चित्तप्रयोजकस्य कर्तृव्यापारस्य लक्ष्यताभिप्रायेण हिंसालक्षणे मणिकृतां मरणोद्देशेनानुष्ठीयमानत्वाऽदृष्टाऽद्वारकत्वविशेषणयोरुपादानमिति मिश्राभिधानसंगतिः । मरणोद्देशेनानुष्ठीयमानस्य व्यापारस्यावश्यं मरणानुकूलव्यापारत्वेन प्रतिसंहितत्वात् तादृशरूपेण कृतिविषयत्वमिति तादृशविशेषणस्य विशिष्टकर्तृतानिर्वाहकत्वात् तद्विशेषणवतो व्यापारस्य नियमेन लक्ष्यत्वात् । तच्छून्यस्य चाऽलक्ष्यत्वनियमात् ।

अथ मरणोद्देशेनानुष्ठितस्यापि व्यापारस्य यत्र खड्गाभिघातत्वादिनैवेष्टसाधनत्वकृतिसाध्यत्वधीविषयता न तु मरणानुकूलत्वविशेषिततद्रूपेण तत्र न मरणानुकूलत्वविशिष्टविषयिणी कृतिरिति तादृशव्यापारकर्तुर्न वधत्वविशिष्टकर्तृत्वमिति कथमुक्तविशेषणस्य विशिष्टकर्तृतानिर्वाहकत्वम् ?। यदि च मरणोद्देशेनानुष्ठीयमा-

---

अत एवेति— यतोन्योद्देशेन संपादिताद् व्यापाराद् दैवात् कस्यचिद् मरणे जातेपि न तादृशव्यापारकर्तुर्वधकर्तृत्वं भवति किं तु वधोद्देशेनैव व्यापारकरणाद् वधकर्तृत्वं भवति अत एव संपूर्णप्रायश्चित्तप्रयोजकस्यैव वधकर्तृव्यापारस्य लक्ष्यत्वमभिप्रेत्य मणिकृता हिंसालक्षणे 'मरणोद्देशेनानुष्ठीयमानत्वमऽदृष्टाऽद्वारकत्वं च ' इति विशेषणद्वयमुपात्तमिति मिश्रोक्तं सङ्गच्छते अर्थात् ' अदृष्टाद्वारकत्वे सति मरणोद्देशेनानुष्ठीयमानत्वं हिंसात्वम् ' तत्र श्येनादिना शत्रुमरणे जातेपि न संपूर्णं प्रायश्चित्तं भवतीति तद्व्यवच्छेदाय ' अदृष्टाद्वारकत्वे सति ' इति विशेषणं तत्र हिंसाया अदृष्टद्वारकत्वादेव. अन्योद्देशेन नाराचक्षेपाद् वधे जाते तादृशव्यापारव्यवच्छेदाय ' मरणोद्देशेनानुष्ठीयमानत्वम् ' इति विशेषणं तत्र मरणोद्देशेनानुष्ठीयमानत्वस्याभावादित्यर्थः । लक्षणमुक्त्वा लक्ष्यमाह— मरणोद्देशेनानुष्ठीयमानस्येति, मरणोद्देशेनानुष्ठीयमानो व्यापारो मरणानुकूलत्वेनैवाभिप्रायविषयो भवतीति तादृशरूपेण=मरणानुकूलव्यापारत्वेन रूपेण कृतिविषयोपि भवतीति तादृशविशेषणस्य=मरणोद्देशेनानुष्ठीयमानत्वविशेषणस्य विशिष्टकर्तृतानिर्वाहकत्वात्=वधकर्तृत्वनिर्वाहकत्वमपि भवतीति तद्विशेषणवतः=अदृष्टाऽद्वारकत्वे सति मरणोद्देशेनानुष्ठीयमानत्वविशेषणवत एव व्यापारस्य हिंसालक्षणलक्ष्यत्वं भवति. तच्छून्यस्य=उक्तविशेषणद्वयशून्यस्य च व्यापारस्य लक्ष्यत्वं न भवतीत्यऽन्योद्देशेन नाराचप्रक्षेपस्यापि ब्राह्मणहिंसात्वं न भवतीत्यन्वयः ।

उक्तलक्षणे शङ्कते— अथेति, यत्र मरणोद्देशेनैव खड्गाभिघातः कृतः अथ च तादृशखड्गाभिघातस्य खड्गाभिघातत्वेन रूपेणैवेष्टसाधनत्वं कृतिसाध्यत्वं च स्याद् मरणानुकूलत्वविशेषिततद्रूपेण=मरणानुकूलखड्गाभिघातत्वेन रूपेणेष्टसाधनत्वं कृतिसाध्यत्वं च न स्यात्तत्र मरणानुकूलत्वविशिष्टविषयिणी=मरणानुकूलखड्गाभिघातविषया कृतिर्न संभवतीत्युक्तखड्गाभिघातरूपव्यापारकर्तुर्वधत्वविशिष्टो यो वधस्तत्कर्तृत्वमपि न स्यादिति कथमुक्तविशेषणस्य=मरणोद्देशेनानुष्ठीयमानत्वविशेषणस्य विशिष्टकर्तृतानिर्वाहकत्वम्=वधकर्तृत्वनिर्वाहकत्वं स्यात् ? इष्टं चैतादृशखड्गाभिघातकर्तुरपि वधकर्तृत्वमित्यर्थः । ननु मरणोद्देशेनानुष्ठीयमानत्वमित्यस्य मरणानुकूल-

नत्वस्य मरणानुकूलत्वेन कृतिविषयत्वमेवार्थ इत्युपेयते ? तदा व्यापारे तादृश-विशेषणस्य तत्कर्तरि विशिष्टकर्तृतानिर्वाहकत्वेऽप्युक्तस्थले खड्गाभिघातादौ तादृशलक्षणाऽव्याप्तिर्दुर्वारैव । तत्र संपूर्णप्रायश्चित्तस्य निर्विवादतया लक्ष्यताया आवश्यकत्वात् ।

न च विशेषणीभूतफलनिष्ठोद्देश्यताख्यविषयतानिरूपकत्वे सति व्यापार-निष्ठसाध्यताख्यविषयतानिरूपकत्वमेव विशिष्टविषयकत्वं कृतेरित्युपदर्शितस्थले-ऽनुकूलतासंबन्धेन मरणवैशिष्ट्यस्य साध्यतारूपकृतिविषयतावच्छेदकताविरहेऽपि न विशिष्टकर्तृत्वाऽनिर्वाह इति मरणोद्देशेनानुष्ठीयमानत्वस्य मरणकामनाधीन-

---

त्वेन कृतिविषयत्वमित्येवार्थोऽस्ति तथा च मरणानुकूलत्वेन कृतिविषयीभूतव्यापारकर्तुरुक्तविशेषणेन वधकर्तृत्वं नानुपपन्नमित्याशङ्क्याह— यदि चेति । उत्तरमाह— तदेति, एवं हि व्यापारे मरणोद्देशेनानुष्ठीयमानत्वमिति यद्विशेषणं दत्तं तेन विशेषणेन तत्कर्तरि=उक्तविशेषणविशिष्ट-व्यापारकर्तरि ( मरणानुकूलत्वप्रकारककृतिविषयीभूतव्यापारकर्तरि ) वधकर्तृत्वे प्राप्तेऽप्युक्तस्थले= खड्गाभिघातस्य खड्गाभिघातत्वेनेष्टसाधनत्वकृतिसाध्यत्वधीविषयतास्थले खड्गाभिघाते मर-णानुकूलत्वेन कृतिविषयत्वाभावादुक्तहिंसालक्षणस्य=मरणानुकूलत्वेन कृतिविषयत्वस्याऽव्याप्तिरस्त्येव. अयं भावः— खड्गाभिघाते खड्गाभिघातत्वेनापीष्टसाधनत्वकृतिसाध्यत्वधीविषयतायां सत्यां पर-प्राणवियोगे जाते तादृशव्यापारकर्तुर्वधकर्तृत्वं प्राप्नोति हिंसालक्षणे तु मरणानुकूलत्वेन कृति-विषयत्वस्य प्रवेशाद् तादृशव्यापारे च मरणानुकूलत्वेन कृतिविषयत्वस्याभावाद्धिंसालक्षणस्या-ऽव्याप्तिः स्पष्टैव न चाव्याप्तिरिष्टा तादृशव्यापारकर्तुरपि संपूर्णप्रायश्चित्तस्य निर्विवादतया तत्प्र-योजकतादृशखड्गाभिघातस्यापि हिंसालक्षणलक्ष्यत्वावश्यकत्वादित्यर्थः ।

ननु कृतेर्यद् विशिष्टविषयकत्वम्=मरणानुकूलव्यापारविषयकत्वं तद् व्यापारविशेषणीभूतं फलं यन्मरणं तन्निष्ठा योद्देश्यताख्यविषयता तादृशविषयतानिरूपकत्वे सति व्यापारनिष्ठा या साध्यताख्यविषयता तन्निरूपकत्वमेव, मरणे उद्देश्यता वर्तते सा चोद्देश्यता कृतिनिरूपितैवेति कृतौ मरणनिष्ठोद्देश्यतानिरूपकत्वं व्यापारे साध्यता वर्तते सा साध्यतापि कृतिनिरूपितैवेति कृतौ व्यापारनिष्ठसाध्यतानिरूपकत्वमपि वर्तते एवं च कृतेर्मरणानुकूलत्वं प्राप्तं तथा चानुकूलतासंबन्धेन मरणवैशिष्ट्यं कृतौ वर्तते. साध्यतारूपकृतिविषयता च व्यापारे वर्तते इति अनुकूलतासंबन्धेन मरणवैशिष्ट्यस्य साध्यतारूपकृतिविषयतावच्छेदकत्वाभावेऽपि प्राप्ते न विशिष्टकर्तृत्वस्य=वधकर्तृत्वस्यानिर्वाहः—कृतिरेव कर्तृत्वं कृतौ च मरणानुकूलत्वं प्राप्तमेव. एवं च मरणोद्देशेनानुष्ठीयमानत्वस्य मरणकामनाधीनकृतिविषयत्वरूपत्वं प्राप्तं तथा चोक्तस्थले मरणोद्देशेनानुष्ठितस्य खड्गाभिघातस्य यत् कृतिविषयत्वं तत् मरणकामनाधीनकृतिविषयत्वमेव. मरणकामनाधीनकृतिविषयत्वमेव हि मरणोद्देशेनानुष्ठीयमानत्वमस्तीति नोक्तखड्गाभिघाते हिंसालक्षणस्योक्ताऽव्याप्तिरित्याशङ्क्याह— न चेति । परिहारमाह— ब्राह्मणमिति, " ब्राह्मणं न हन्यात् " इत्यत्र हन्तेर्मरणा-

कृतिविषयत्वरूपतैवेति वाच्यम्, " ब्राह्मणं न हन्यात् " इत्यादौ धात्वर्थतावच्छेदकस्य मरणस्य स्वोद्देश्यकत्वसंबन्धेन कृतावन्वयसंभवे एव निरुक्तविशिष्टकर्तृत्वस्य निषेधविधिविषयत्वसंभवात्, व्यापारविशेषणतयोपस्थितस्य कृत्यंशे विशेषणतयाऽन्वयस्य व्युत्पत्तिविरुद्धत्वात् ।

अथ मरणोपलक्षितव्यापारकर्तृत्वस्य तादृशनिषेधविषयत्वेपि न क्षतिः— अन्योद्देशेन नाराचक्षेपस्यापि ब्राह्मणमरणोपधायकस्य नरकसाधनत्वात्, परं तु मरणप्रायश्चित्तविधेरेव तदविषयकत्वमुपपादनीयं तच्च मरणोद्देशेन तदनुकूलव्यापारकर्तृत्वबोधकस्य शब्दस्य तद्विधावन्तर्भावे एवोपपद्यते इति चेत्?, एवमपि

---

नुकूलव्यापारार्थकत्वाद् धात्वर्थतावच्छेदकं मरणमेव तस्य मरणस्य स्वोद्देश्यकत्वसंबन्धेन यदि कृतावन्वयः स्यात्तदैव निरुक्तविशिष्टकर्तृत्वस्य=वधकर्तृत्वस्यैतन्निषेधविधिविषयत्वं संभवति न त्वनुकूलतासंबन्धेनापि कृतावन्वये, अयं भावः— कर्तृत्वं कृतिरेव ब्राह्मणवधोद्देश्यका च यस्य कृतिर्भवति तं प्रत्येव " ब्राह्मणं न हन्यात् " इति निषेधविधिः प्रवर्तते न तु केवलं ब्राह्मणवधानुकूलकृतिमन्तं प्रत्यपि ब्राह्मणवधानुकूलकृतेः सहायादौ तथा ब्राह्मणवधमनोरथकालेपि संभवात् तत्र तदा निषेधविधेः प्रवृत्तेरनभिमतत्वात्, स्वोद्देश्यकत्वसंबन्धेन च मरणस्य व्यापारे विशेषणत्वे तु कृतौ विशेषणत्वं न संभवति " एकत्र विशेषणतयान्वितस्यान्यत्र विशेषणत्वासंभवात् " इति व्युत्पत्तिविरोधात् तथा चोक्तरीत्या विशिष्टकर्तृत्वनिर्वाहे प्रतिपादितेपि तस्य निषेधविधिविषयत्वं न संभवतीति दोषापत्तिः प्राप्तेत्यर्थः ।

ननु स्वोद्देश्यकत्वसंबन्धेन मरणस्य व्यापारविशेषणत्वे कृतौ विशेषणत्वासंभवेप्युपलक्षणत्वं तु संभवत्येव तथा च मरणोपलक्षितं यद् व्यापारविषयकं कर्तृत्वं ( कृतिः )तस्योक्तनिषेधविषयत्वस्वीकारेपि क्षतिर्नास्ति. तच्च संभवत्येवेत्याशङ्कते— अथेति । नन्वेवमन्योद्देशेन नाराचक्षेपाद् यत्र ब्राह्मणमरणं तत्रापि ब्राह्मणमरणस्योपलक्षणत्वसंभवात् तादृशव्यापारकर्तृत्वस्याप्युक्तनिषेधविषयत्वं भविष्यतीत्याशङ्क्येष्टापत्त्याह— अन्योद्देशेनेति,ब्राह्मणमरणोपधायकस्य=ब्राह्मणमरणरूपफलजनकस्यान्योद्देशेनापि नाराचक्षेपस्य नरकसाधनत्वात् तादृशव्यापारकर्तृत्वस्योक्तनिषेधविषयत्वं त्विष्टमेव किंतु मरणरूपपापप्रायश्चित्तविधिविषयत्वं नेष्टमिति मरणप्रायश्चित्तविधेरेव तदविषयकत्वम्=अन्योद्देशेन यन्नाराचक्षेपाद् ब्राह्मणमरणं जातं तदविषयकत्वमुपपादनीयं तस्य भाविनरकसत्त्वेपि तादृशप्रायश्चित्तस्याभावात्, तच्चोपपादनं "मरणोद्देशेन तदनुकूल=मरणानुकूलव्यापारकर्तृत्वबोधकस्य शब्दस्य तद्विधौ=मरणप्रायश्चित्तविधावन्तर्भाव एव संभवति— 'मरणोद्देशेन मरणानुकूलव्यापारकर्ता संपूर्णं मरणप्रायश्चित्तमाचरेत्' इत्येवं प्रायश्चित्तविधिवाक्यनिर्माणे एवोक्तं तदविषयकत्वमुपपद्यते तथा चान्योद्देशेन नाराचक्षेपाद् ब्राह्मणवधे जाते तादृशनाराचक्षेपरूपव्यापारे मरणानुकूलत्वस्य सत्त्वेपि मरणोद्देश्यकत्वं नास्तीति न तादृशव्यापारकर्तुः प्रायश्चित्तविधिविषयत्वमित्यर्थः । तच्च=तदविषयकत्वं च । उत्तरमाह— एवमपीति, एवमपि=मरणोपलक्षितव्यापारकर्तृत्वस्य तादृशनिषेधविषय-

ब्राह्मणमरणकामनया यत्र न तन्मरणानुकूलव्यापारानुष्ठानमऽपि तु फलान्तरकामनाधीनतन्मरणानुकूलव्यापारत्वप्रकारकचिकीर्षया तदनुष्ठितं तत्राव्याप्तिरेतन्मते दुर्वारैव । तत्रापि संपूर्णस्यैव प्रायश्चित्तस्याऽऽचरणादऽलक्ष्यतोपगमासंभवादिति ।

मैवम्- यत्र हि मरणानुकूलव्यापारत्वेन कृतिसाध्यताधीस्तत्रेव यत्र व्यापारविशेषत्वेनैव तद्धीस्तत्रापि मरणरूपफलकामनाधीनव्यापारविषयिणी कृतिर्मरणानुकूलत्वेन व्यापारमवगाहते- कृतेः कामनाविषयफलोपरागेणोपायविषयतोपगमात्, विशृङ्खलफलभानोपगमे यत्र तृप्तिकामनया भोजनं फलान्तरकामनया च गमनमवगाहमाना समूहालम्बनकृतिस्तत्र 'तृप्तये गमनं करोति'

---

त्वस्वीकारेपि यदा ब्राह्मणमरणकामनया न ब्राह्मणमरणानुकूलो व्यापारः कृतः किं तु तदीयधनग्रहणादिरूपफलान्तरस्य कामनाधीना या ब्राह्मणमरणानुकूलव्यापारत्वप्रकारकचिकीर्षा=ब्राह्मणमरणानुकूलव्यापारविषयकेच्छा तया मरणानुकूलव्यापारः कृतस्तत्र ब्राह्मणधनग्रहणस्यैवोद्देश्यत्वेन ब्राह्मणमरणस्योद्देश्यत्वाभावात् तादृशव्यापारकर्तुः प्रायश्चित्तविधिविषयत्वं न संभवतीति तत्र प्रायश्चित्तविधेरव्याप्तिरेतन्मते प्राप्ता, न चाऽव्याप्तिस्तत्रेष्टा तादृशस्थलेपि संपूर्णप्रायश्चित्तस्येष्टत्वेन तादृशव्यापारकर्तुरलक्ष्यत्वस्वीकारासंभवादित्यर्थः ।

प्रथमाथशब्देनाशङ्कितं परिहरति- मैवमिति, यत्र व्यापारे मरणानुकूलव्यापारत्वेन कृतिसाध्यताज्ञानं भवति तत्र यथा मरणरूपफलकामनाधीनव्यापारविषया कृतिर्व्यापारं मरणानुकूलत्वेनावगाहते इति तादृशव्यापारस्य हिंसालक्षणलक्ष्यत्वं तत्कर्तुश्च प्रायश्चित्तविधिविषयत्वं भवति तथैव यत्र खड्गाभिघाते खड्गाभिघातत्वेनैव तद्धीः=कृतिसाध्यताज्ञानं तत्रापि मरणरूपफलकामनाधीनव्यापारविषया कृतिः खड्गाभिघातव्यापारं मरणानुकूलव्यापारत्वेनैवावगाहते इति तादृशव्यापारस्य हिंसालक्षणलक्ष्यत्वं तत्कर्तुश्च प्रायश्चित्तविधिविषयत्वं भवत्येवेत्यर्थः । मरणरूपकामनाधीनव्यापारविषयककृतेर्व्यापारस्य मरणानुकूलत्वेनावगाहने हेतुमाह- कृतेरिति, कृतेर्योपायविषयता=व्यापारविषयता भवति सा कामनाविषयफलोपरागेण=कामनाविषयीभूतफलविषयतापूर्वकमेव भवति तथा चात्र कृतेः खड्गाभिघातविषयत्वं मरणरूपफलानुकूलत्वेनैव प्राप्तमिति खड्गाभिघातस्य हिंसाव्यापारत्वं प्राप्तमेवेति नोक्तदोषापत्तिरित्यर्थः । विपक्षे बाधकमाह- विशृङ्खलेति, यदि कृतेः कामनाविषयीभूतफलविषयतापूर्वकं तादृशफलोपाय ( व्यापार ) विषयता न स्यात् ( फलोपरागेणोपायविषयता न स्यात् ) किं तु विशृङ्खलरीत्या फलभानं स्यात्=फलस्योपायविशेषणत्वेन भानं न स्यात्तदा यत्र समूहालम्बना कृतिस्तृप्तिकामनया भोजनं फलान्तरकामनया च गमनमवगाहते- 'तृप्तये भोजनं मदिष्टसाधनं फलान्तराय गमनं मदिष्टसाधनम्' इति तत्र 'तृप्तये गमनं करोति' इत्यपि व्यवहारः स्यात्- बाधकाभावात्- तृप्तिगमनयोर

इति व्यवहारापत्तेः, उपायांशे फलस्यानुकूलत्वं संबन्धः प्रकारो वेत्यन्यदेतत्, एवं च, मरणावच्छिन्नव्यापारविषयकत्वमुभयत्रैव कृतेरिति विशेषणावच्छिन्नविषयककृतिमत्त्वरूपं विशिष्टकर्तृत्वमुभयस्थले निष्प्रत्यूहम्। मरणोद्देशेनानुष्ठीयमानत्वमपि मरणानुकूलत्वोपरागेण कृतिविषयत्वरूपमेव लक्षणघटकमिति न काचिदनुपपत्तिः।

यद्यप्यऽदृष्टद्वारा पाकानुकूलकृतिमतोपि न पाकादिकर्तृत्वमिति तत्तत्क्रियाकर्तृत्वघटककृतिनिष्ठतदनुकूलत्वे एवाऽदृष्टाद्वारकत्वमपेक्षितं न तु क्रियानिष्ठफलानुकूलत्वे तदपेक्षितामिति, व्यापारनिष्ठमरणानुकूलत्वेऽदृष्टाद्वारकत्वरूपमणिकारोक्त-

---

पि समूहालम्बनकृतिविषयत्वात्. न चैतदिष्टमिति कृतेरुपायविषयता कामनाविषयफलोपरागेण स्वीकार्या तथा च गमनकामनाविषयीभूतफलत्वं तृप्तेर्न संभवति किं तु फलान्तरस्यैव. तृप्तेस्तु भोजनकामनाविषयीभूतफलत्वमेवेति कृतेस्तृप्तिरूपफलोपरागेण भोजनरूपोपायविषयतैव भवति न तु गमनरूपोपायविषयतेति 'तृप्तये भोजनं करोति' इत्येव व्यवहार उपपद्यते. 'तृप्तये गमनं करोति' इति व्यवहारापत्तिर्नास्तीत्येवमुक्तस्थले कृतेः खड्गाभिघातरूपोपायविषयतापि मरणरूपफलोपरागेणैव भवतीति तादृशखड्गाभिघातस्यापि हिंसात्वं प्राप्तमेवेत्यर्थः। ननु 'तृप्तये भोजनं करोति' इत्यादावुपायांशे=भोजनादिव्यापारे यत् तृप्त्याद्यनुकूलत्वं तत् संबन्धभूतं वा प्रकारभूतं वेत्याशङ्क्यात्रोपेक्षामाह— उपायांश इत्यादिना। उपसंहरति— एवं चेति, उभयत्र=यत्र खड्गाभिघातस्य खड्गाभिघातत्वेन कृतिसाध्यत्वं यत्र च मरणानुकूलव्यापारत्वेन कृतिसाध्यत्वं तत्रोभयत्रैव कृतेर्मरणावच्छिन्न (अनुकूल) व्यापारविषयकत्वमस्त्येवेति तादृशव्यापारकर्तुरुक्तोभयस्थले विशेषणावच्छिन्नविषयककृतिमत्त्वरूपम्=मरणावच्छिन्नव्यापारविषयककृतिमत्त्वरूपं विशिष्टकर्तृत्वम्=वधकर्तृत्वमस्त्येवेति न काचिदनुपपत्तिः। ननु हिंसालक्षणे हि मरणोद्देशेनानुष्ठीयमानत्वस्य निवेशोस्ति न तु फलोपरागेत्यादिकस्य येन त्वदुक्तरीत्या दोषपरिहारः स्यादित्याशङ्क्याह— मरणोद्देशेनेति, हिंसालक्षणघटकं यद् मरणोद्देशेनानुष्ठीयमानत्वं व्यापारविशेषणं तद् मरणानुकूलत्वोपरागेण कृतिविषयत्वरूपम्=मरणानुकूलकृतिविषयत्वरूपमेवास्तीति न काचिदनुपपत्तिरित्यर्थः। "फलस्यानुकूलत्वम्" इत्यत्र "मरणस्यानुकूलत्वम्" इत्यपि पाठः, प्रकृते मरणं फलमेव।

यद्यपीति— अदृष्टद्वारा पाकानुकूलकृतिमतोपि पाकादिकर्तृत्वं न भवतीति तत्तत्क्रियाकर्तृत्वघटका या कृतिस्तादृशकृतिनिष्ठं यत् तत्तत्क्रियानुकूलत्वं तस्मिन्नेवादृष्टाद्वारकत्वं विशेषणमपेक्षितमस्ति न तु क्रियानिष्ठे फलानुकूलत्वे अन्यथा (यद्यऽदृष्टाद्वारकत्वं क्रियानिष्ठफलानुकूलत्वे विशेषणं स्यात् कृतिनिष्ठपाकादिव्यापारानुकूलत्वे च विशेषणं न स्यात्तदा) यः पुरुषः पाकार्थं व्यापारं न करोत्यऽदृष्टद्वारा च पाकानुकूलकृतिमानस्ति पाकानुकूलादृष्टजनकमन्त्रादिद्वारा पाकसंपादकत्वात् तस्यापि पाककर्तृत्वं स्याद् न चैतदिष्टम्, तथा च मणिकारेण हिंसाल-

विशेषणस्य न कर्तृताघटकत्वम्, तथाप्यनुष्ठीयमानत्वप्रविष्टकृतेरेवाऽदृष्टाद्वारकमरणानुकूलत्वं विवक्षितं विशिष्टकर्तृत्वं चाऽदृष्टाऽद्वारकत्वविशेषितमरणानुकूलत्वेन कृतिविशेषणेन घटितमिति मिश्राशयः ।

तथा चैवं पर्यवसितम्—हिनस्तेः प्रवृत्तिनिमित्तं मरणरूपफलावच्छिन्नव्यापारत्वमेव " न हिंस्यात् " इत्यादौ फलविशिष्टस्वनिरूपितकर्तृत्वसंबन्धेन हिनस्त्याद्यर्थस्यानिष्टविशेषसाधनत्वं प्रतीयते, श्येनस्य हिनस्त्याद्यर्थत्वेपि न तस्य तादृशकारणतावच्छेदकसंबन्धेन क्वचिदपि सत्त्वम्— तत्कर्तुरदृष्टाऽद्वारकानुकूलताघटितफलकर्तृत्वविरहेण विशिष्टाऽकर्तृत्वादिति नाऽनिष्टविशेषं प्रति हिंसात्वेन साधनत्वमिति न क्रियायां विध्यर्थान्वयमतेपि श्येनविध्यर्थबाधः ।

---

क्षणे यद् व्यापारनिष्ठे मरणरूपफलानुकूलत्वेऽदृष्टाद्वारकत्वं विशेषणं प्रक्षिप्तं तत् यद्यपि कर्तृताघटकं नास्ति—क्रियानिष्ठफलानुकूलत्वघटकत्वेन कृतिनिष्ठक्रियानुकूलत्वघटकत्वाभावात् तथाप्यनुष्ठीयमानत्वघटका या कृतिस्तन्निष्ठं यन्मरणानुकूलत्वं तस्मिन्नेवाऽदृष्टाऽद्वारकत्वं विशेषणं विवक्षितमस्ति विशिष्टकर्तृत्वम्=वधकर्तृत्वं च कृतिविशेषणेनाऽदृष्टाद्वारकत्वविशिष्टमरणानुकूलत्वेन घटितमस्ति—अदृष्टाद्वारकमरणानुकूलकृतिजन्यव्यापारकर्ता हिंसक इति बोधोदयादिति एवं चादृष्टाद्वारकत्वविशेषणस्य कर्तृताघटकत्वं लभ्यते इति मिश्राशयः । तथा च कर्तृत्वमदृष्टाद्वारकमपेक्ष्यते अन्यथा श्येनकर्तुरपि वधकर्तृत्वप्राप्त्या संपूर्णप्रायश्चित्तं स्यादिति भावः । यः खलु मन्त्रादिद्वारा पाकं करोति सोऽदृष्टद्वारा पाकानुकूलकृतिमान् विज्ञेयः । अनुष्ठीयमानत्वं च कृतिविषयत्वमेवेत्यनुष्ठीयमानत्वस्वरूपे कृतिप्रवेशो विज्ञेयः ।

पर्यवसन्नमर्थमाह—तथा चेति, मरणानुकूलव्यापार एव हिंसार्थकधात्वर्थः । " न हिंस्यात् " इत्यत्र च जनकतासंबन्धेन फलविशिष्टं यत्स्वं व्यापारः=अदृष्टाद्वारकमरणानुकूलव्यापारस्तादृशव्यापारकर्तृत्वसंबन्धेन हिनस्त्याद्यर्थस्य=हिंसाया अनिष्टविशेषसाधनत्वम्=नरकादिसाधनत्वं प्रतीयते अर्थात् अदृष्टाद्वारकमरणानुकूलव्यापरकर्तुरनिष्टं भवतीति प्रतीयते, हिंसके उक्तविशेषकर्तृत्वेन वर्तमाना हिंसा तत्रानिष्टं नरकादिकमुत्पादयन्ती तेन कर्तृत्वसंबन्धेनानिष्टस्य साधनं भवतीत्यर्थः । श्येनश्च शत्रुमरणार्थमेव क्रियते इति श्येनस्य हिनस्त्याद्यर्थत्वेपि=हिंसार्थव्यापाररूपत्वेपि न तस्य=श्येनस्य तादृशकारणतावच्छेदकसंबन्धेन=उक्तफलविशिष्टव्यापारनिरूपितकर्तृत्वसंबन्धेन क्वचिदपि सत्त्वं येन श्येनोऽनिष्टसाधनं स्यादित्यर्थः । उक्तसंबन्धेन श्येनस्य सत्त्वाभावे हेतुमाह—तत्कर्तुरिति, श्येनकर्तुरदृष्टाऽद्वारकानुकूलताघटितफलकर्तृत्वाभावेन विशिष्टकर्तृत्वाभावात्=अदृष्टाऽद्वारकवधकर्तृत्वाभावात्, श्येनकर्तुरदृष्टद्वारैव वधकर्तृत्वात् श्येनकर्तरि संबन्धभूतमदृष्टाद्वारकमरणविशिष्टव्यापारकर्तृत्वमेव नास्ति येन तादृशकर्तृत्वसंबन्धेन श्येनस्य सत्त्वमनिष्टसाधनत्वं च स्यादित्यर्थः तथा च श्येनस्यानिष्टसाधनत्वेपि हिंसात्वेनाऽनिष्टसाधनत्वं नास्ति श्येनस्य हिंसाफलकत्वे हिंसारूपत्वाभावात् । तथा च विध्यर्थस्य=इष्टसाधनत्वस्य क्रियायामेवान्वयो भवतीत्यस्मि

वस्तुतः श्येनानुकूलकृतेर्मरणप्रयोजकत्वमेव न तु मरणकारणत्वम्-अन्यथा-सिद्धत्वात्, मरणोपलक्षितान्यकर्तृकखड्गाभिघातादिरूपवैरिवधं प्रत्येव श्येनस्य हेतुताया वेदेन बोधितत्वात् । क्रियाजन्यकार्ये तत्क्रियानुकूलकृतिहेतुताया नियमोऽपि खड्गाभिघातादावेव श्येनकृतेर्हेतुत्वात् । तथा चाऽनिष्टविशेषफलजनकतावच्छेदकप्रत्यासत्तिप्रविष्टमरणानुकूलत्वं मरणजनकत्वमेव न तु प्रयोजकत्वम्. अतोऽदृष्टाद्वारकत्वं न तत्र निवेशनीयम्, कारणत्वपर्यन्तनिवेशलाभायैव वा तदुपादानम् । यदि च विशिष्टान्वयपरतया वेदे औत्सर्गिकत्वेन वधसाधनता-

---

न्तेऽपि "श्येनेनाभिचरन् यजेत" इत्यत्र श्येनयागक्रियायामनिष्टसाधनत्वाभावात् श्येनयागे ...र्थ्यस्य=इष्टसाधनत्वस्य बाधो नास्त्येव, श्येनयागप्रयोज्यशत्रुमरणस्यैव हिंसात्वेनाऽनिष्टसाध-...त्वादित्यर्थः । फलविशिष्टस्वनिरूपितकर्तृत्वसंबन्धेनानिष्टसाधनत्वमस्तीति तस्य संबन्धस्य ...रणतावच्छेदकसंबन्धत्वं विज्ञेयम् ।

सिद्धान्तमाह—वस्तुत इति, श्येनानुकूलकृतेर्मरणकारणत्वाभावे हेतुमाह—अन्यथेति । अन्य-...सिद्धत्वे हेतुमाह—मरणोपलक्षितेति, श्येने कृते मरणलक्ष्यभूतशत्रौ श्येनप्रभावादन्येन केनापि ...खड्गाद्यभिघातः क्रियते तेन च तस्य शत्रोर्मरणं भवतीति वैरिवधकारणीभूतखड्गाभिघातादिकं ...प्रत्येव वेदेन श्येनस्य कारणत्वं बोध्यते न तु साक्षान्मरणं प्रतीति मरणं प्रत्यन्यथासिद्धत्वं प्राप्तम् । ...कार्यकारणयोरभेदोपचारेणात्र खड्गाभिघातस्य वैरिवधरूपत्वमुक्तम्—"खड्गाभिघातादिरूपवैरि-...वधम्" इति । ननु यथा संयोगानुकूलक्रियाजन्यसंयोगे संयोगानुकूलक्रियानुकूलकृतेर्हेतुत्व-...मस्त्येव एवं खड्गाभिघातजन्यशत्रुमरणे तादृशखड्गाभिघातकारणीभूतश्येनानुकूलकृतेरपि कार-...णत्वे प्राप्ते श्येनस्य शत्रुमरणं प्रति कारणत्वं स्यादेवेत्याशङ्क्याह—क्रियाजन्येति । तथा चानिष्टवि-...शेषरूपफलस्य यो जनकतावच्छेदकसंबन्ध उक्तः=फलविशिष्टस्वनिरूपितकर्तृत्वसंबन्धः ( अदृष्टा-...द्वारकमरणानुकूलव्यापारनिरूपितकर्तृत्वं संबन्धः ) तद्घटकं यन्मरणानुकूलत्वं तन्मरणजनकत्वमेव ...न तु मरणप्रयोजकत्वं श्येनस्य च मरणप्रयोजकत्वमेवास्ति न तु मरणकारणत्वमित्युक्तसंबन्धे ...कारणत्वनिवेशेनैव श्येनव्यवच्छेदे जाते तत्र=उक्तमणिकृद्धिंसालक्षणे श्येनव्यवच्छेदाय 'अदृष्टाद्वा-...रकत्वम्' विशेषणं न निवेशनीयमित्यर्थः । पक्षान्तरमाह—कारणत्वेति, उक्तसंबन्धकोटौ ...कारणत्वनिवेशलाभायैव अदृष्टाद्वारकत्वविशेषणस्योपादानमस्ति । किं वा कारणत्वपर्यन्तला-...भायैवाऽदृष्टाद्वारकत्वविशेषणस्योपादानमस्ति कारणत्वलाभस्तु संबन्धकोटौ कारणत्वनिवेशेनापि ...भवति एवेत्यदृष्टाद्वारकत्वविशेषणं न निवेशनीयमित्यर्थः । ननु वेदवाक्येन विशिष्टान्वय एव ...प्रतिपाद्यते विशिष्टान्वयस्थले च विशेषणेऽप्यन्वयो भवत्येवेति "श्येनेनाभिचरन् यजेत" ...इति श्रुत्या श्येनस्य मरणसाधनीभूतो यो वधः=खड्गाभिघातस्तत्साधनताबोधनेन मरणानुकूलख-...ड्गाभिघातरूपवधविशेषणीभूतं यन्मरणं तादृशमरणसाधनत्वमपि प्रत्याय्यते इति श्येनस्य ...मरणकारणत्वमेव प्राप्तं न तु मरणप्रयोजकत्वमित्याशङ्क्याह—यदि चेति । उत्तरमाह—तदा-

बोधकश्रुत्या विशेषणीभूतमरणसाधनतापि श्येनस्य प्रत्याय्यते तदापि श्येनानुकूलकृतेर्मरणसाधनत्वमप्रामाणिकमेव- क्रियाजनककृतेस्तज्जन्यजनकतानियमस्याऽप्रामाणिकत्वात् ।

अथाऽन्योद्देशेन नाराचक्षेपकर्तुर्विशिष्टविषयककृतिमत्त्वघटितविशिष्टकर्तृताविरहेपि यथार्धवधजन्यपापप्रायश्चित्तं तथा श्येनकर्तुर्विशिष्टाऽकर्तृत्वात् पापार्धस्यावश्यकत्वाद् बलवदनिष्ठाननुबन्धित्वबाधो दुर्वार एवेति चेत्?, न—अकामकृतेप्यर्धप्रायश्चित्तस्मरणेन मरणावच्छिन्नव्यापारस्य विषयतामनन्तर्भाव्य विशिष्टजनककृतिमत्त्वसंबन्धेन न्यूनपापे स्वतन्त्रेहेतुत्वकल्पनात् तद्बलेन विशिष्टाकर्तुः श्येनकर्तुर्हिंसाजन्यपापानुत्पत्तेः । न च लाघवेन मरणोपलक्षितव्यापारजनकत्वमेव प्रत्यासत्तिमध्ये निवेश्यतामिति वाच्यम्, श्रुत्यर्थबाधापादकलाघवस्याऽप्रयोज-

---

पीति, श्येनस्य मरणकारणत्वे प्राप्तेपि श्येनानुकूलकृतेर्मरणकारणत्वमप्रामाणिकमेवेत्यर्थः । अत्र हेतुमाह—क्रियाजनकेति, क्रियाजनककृतेः क्रियाजन्यं यन्मरणादिरूपफलं तज्जनकतापि भवतीति नियमस्याऽप्रामाणिकत्वात् । तस्माच्छ्येनस्य खड्गाद्यभिघातं प्रत्येव कारणता न तु मरणं प्रतीति न श्येनकर्तुः संपूर्णप्रायश्चित्तप्रसङ्ग इत्यर्थः ।

नन्वन्योद्देशेन नाराचक्षेपाद् यत्र ब्राह्मणमरणं भवति तत्र विशिष्टविषयका=मरणानुकूला या कृतिस्तादृशकृतिमत्त्वघटितम्—तादृशकृतिमत्त्वरूपं यद् विशिष्टकर्तृत्वं वधकर्तृत्वं तदभावेपि यथा तादृशनाराचक्षेप्तुरर्धवधप्रायश्चित्तं भवति तथा श्येनकर्तुरपि विशिष्टाकर्तृत्वात्=वधकर्तृत्वाभावेपि शत्रुमरणार्थमेव श्येनानुष्ठानात् पापार्धं स्यादेव तथा च श्येनस्य बलवदऽनिष्टाननुबन्धित्वं न स्यादिति श्येनविध्यर्थबाधः प्रसज्येतेत्याशङ्कते—अथेति । परिहरति—नेति, अकामकृते पापे कामकृतपापापेक्षयाऽर्धप्रायश्चित्तं भवतीति कामकृतपापस्य संपूर्णप्रायश्चित्ते हेतुत्वं कल्प्यं मरणावच्छिन्नव्यापारस्य=कामकृतमरणानुकूलव्यापारस्य विषयतामऽनन्तर्भाव्याऽकामकृतमरणानुकूलव्यापारस्य च न्यूनपापे पृथगेव हेतुत्वं कल्प्यमिति तद्बलेन=उक्तहेतुहेतुमद्भावकल्पनाबलेन श्येनकर्तरि संबन्धभूतस्य विशिष्टजनककृतिमत्त्वस्य=मरणोद्देश्यकमरणजनककृतिमत्त्वस्याऽभावाद्विशिष्टाकर्तुः=मरणजनकखड्गाद्यभिघाताद्यनुकूलकृतिरहितस्य श्येनकर्तुः हिंसाजन्यं पापं नोत्पद्यते—यत्र पुरुषे विशिष्टजनककृतिमत्त्वं भवति तत्रैव पापमुत्पद्यते इत्यर्थः । ननु मरणानुकूलव्यापारस्य मरणानुकूलव्यापारजनककृतिमत्त्वसंबन्धेन पापोत्पत्तिं प्रति हेतुत्वे ह्यकामकृतव्यापारेण मरणस्थलेऽर्धप्रायश्चित्तप्रयोजकपापोत्पत्तिं प्रति पृथग् हेतुत्वकल्पनापत्त्या गौरवं स्यादिति तदपेक्षया मरणोपलक्षितव्यापारजनककृतिमत्त्वसंबन्धेन व्यापारस्य पापोत्पत्तिं प्रति हेतुत्वं कल्प्यताम् एवं च पृथक् पृथग् हेतुहेतुमद्भावकल्पनापेक्षा नास्तीति लाघवं स्यादित्याशङ्क्याह—न चेति । परिहारमाह— श्रुत्यर्थेति, एवं हि श्येनस्यापि शत्रुमरणेच्छयैवानुष्ठानेन श्येनव्यापारस्यापि मरणोपलक्षितत्वात् श्येनस्यापि पापजनकत्वं स्यात् तथा च श्येनबोधकश्रुत्यर्थस्येष्टसाधन-

कत्वात् । वेदस्थले विशिष्टान्वयस्यौत्सर्गिकत्वेपि श्येनस्य मरणजनकत्वे विध्यर्थ-बाधप्रसङ्गेन मरणं प्रति श्येनस्यान्यथासिद्धताया एवोपगन्तव्यतया तस्य जनकतागर्भहिनस्त्यर्थतावच्छेदकरूपशून्यताया अपि सूपपादत्वात् ।

न च यदि खड्गाभिघातजनकाऽदृष्टव्यवहितस्य श्येनस्य मरणेऽन्यथासिद्धत्वं तदा हननकर्तृव्यापारोपि तत्रान्यथासिद्धः स्यात् यश्च व्यापारो मरणेऽव्यवहितसाधनं तत्र तद्धेतुः कृतिरेवान्यथासिद्धेति मरणकारणव्यापारकारणकृतिमत्त्वं न कस्यापि हेतुः स्यादिति वाच्यम्, तण्डुलविक्लित्त्यादिरूपफलव्यवहितस्यापि तुषादिप्रक्षेपस्य तत्करणदशायाम् 'पचति' इत्यादिव्यवहारानुरोधेन यथाऽनन्यथासिद्धत्वं तथा खड्गप्रक्षेपादिकरणदशायाम् 'हन्ति' इतिव्यपदेशानुरोधेन तत्र व्यवहितस्यापि मरणेऽनन्यथासिद्धत्वमवश्याभ्युपेयमिति सामञ्जस्यात् ।

---

स्य बाधः स्याद् न चैतदिष्टमिति नैतादृशं लाघवमिष्टमिति पृथक् पृथगेव हेतुत्वं कल्प्यमित्यर्थः। वेदस्थलेति— वेदस्थले विशिष्टान्वयस्यौत्सर्गिकत्वेन श्येनस्य मरणसाधनीभूतखड्गाद्यभिघातं प्रति साधनत्वेन विशेषणीभूतमरणं प्रति साधनत्वे प्राप्तेपि यदि श्येनस्य मरणजनकत्वं स्यात्तदा श्येन-विध्यर्थस्य=इष्टसाधनत्वस्य बाधः स्याद् न चैतदिष्टमिति मरणं प्रति श्येनस्यान्यथासिद्धत्वमेव तया च तस्य=श्येनस्य जनकतागर्भः=मरणजनकताविशिष्टो यो हिनस्त्यर्थः=मरणानुकूलव्यापा-रतादृशहिनस्त्यर्थतावच्छेदकं यद्रूपम्=मरणानुकूलव्यापारत्वं तच्छून्यत्वमपि प्राप्तमिति न श्येनस्य पापजनकत्वं न वा श्येनकर्तुर्हिंसामूलकप्रायश्चित्तं भवतीत्यर्थः । श्येनप्रयुक्तशत्रुहिंसया तु नरको भवत्येवेति विज्ञेयम् ।

ननु यदि श्येनस्यादृष्टव्यवधानेन मरणेऽन्यथासिद्धत्वं तदा हननकर्तृव्यापारस्यापि तत्र=मरणेऽन्यथासिद्धत्वं स्यात् पीडादिना व्यवधानात् तादृशव्यापारस्य पीडामात्रजनकत्वात्. यश्च व्यापारो मरणेऽव्यवहितसाधनं तद्धेतुभूता कृतिरपि तत्रान्यथासिद्धैव स्यात्— तादृशव्यापारविषय-कृत्यनन्तरं कटिबन्धनशस्त्रग्रहणादीनामावश्यकत्वेन तैर्व्यवधानादिति मरणकारणीभूतव्यापारस्य कारणीभूता या कृतिस्तादृशकृतिमत्त्वमपि श्येनवत् न कस्यापि पापस्य हेतुः स्यात् न चैतदिष्ट-मिति यथा व्यवहितस्याप्येतादृशकृतिमत्त्वस्य पापजनकत्वं तथाऽदृष्टेन व्यवहितस्यापि श्येनस्य पापजनकत्वं युक्तमित्याशङ्क्याह— न चेति । परिहारमाह— तण्डुलेति, तत्करणदशायाम्=तुषादिप्रक्षेपकरणदशायाम् । यथा तुषादिप्रक्षेपकरणदशाम् 'पचति' इतिव्यवहारात् तुषादिप्रक्षे-पस्य विक्लित्तिरूपफलव्यवहितस्यापि नाऽन्यथासिद्धत्वं तथा खड्गाभिघातदशायाम् 'हन्ति' इतिव्यवहारात् न खड्गाभिघातस्य मरणेऽन्यथासिद्धत्वम् । श्येनस्य च मरणेऽनन्यथासिद्धत्वे श्येनविध्यर्थबाधः स्यात् श्येनानुष्ठानकाले 'हन्ति' इति व्यवहाराभावाच्च मरणे श्येनस्याऽन्यथा-सिद्धत्वमेवेत्यर्थः ।

तण्डुलक्रयणदशायाम् 'पचति'इत्याद्यभाववत् खड्गादिनिर्माणदशायाम् 'हन्ति' इत्यऽव्यवहारात् तद्व्यापारो मरणेऽन्यथासिद्धतया न हिंसा । व्याघ्रमरणोद्देशेन कृतो यन्त्रार्पणादिर्यथा तत्र दैवाद्गवादिमरणेपि न हिंसारूपस्तथा न व्याघ्रादि-हिंसारूपोपि– तत्करणदशायाम् 'हन्ति' इत्यप्रयोगात् । अतथात्वेपि तन्मरणोद्दे-श्यकाऽदृष्टाद्वारकतन्मरणप्रयोजककृतिजन्यव्यापारस्यापि हिंसावत् पापजनकत्वा-दुक्तस्थले गोवधाभिसंधाने गोवधप्रायश्चित्ताऽऽचरणमित्यवधेयम् ।

एवं च 'चैत्रः पचति' इत्यादौ विषयताघटितकर्तृत्वबोधनिर्वाहाय यथा कृतौ पाकादेरुपधायकत्वविषयित्वोभयसंबन्धेनान्वयः, विषयितायाः संबन्धत्वेप्युपधा-यकत्वनिवेश आवश्यकः– पाकाद्यनिष्पत्तिस्थले 'पचति–पश्यति' इत्यादिप्रयो-गस्य प्रामाण्यवारकत्वात्, तथा ' चैत्रेण पच्यते ' इत्यादावपि तृतीयार्थकृतेर्जन्य-

---

तण्डुलेति– खड्गादिनिर्माणदशायाम् 'हन्ति' इति व्यवहारो न भवतीति तद्व्यापारः= खड्गादिनिर्माणव्यापारो न हिंसा न वा निर्माणकर्तुः प्रायश्चित्तमित्यर्थः । अस्मिन् यन्त्रे प्रविष्टो व्याघ्रो मरिष्यतीति गृह्यतामयं यन्त्र इत्येवं यत्र व्याघ्रमरणोद्देशेनापि यन्त्रार्पणं कृतं तत्र तस्मिन् यन्त्रे दैवात् प्रविष्टगवादिमरणेपि सति यथा यन्त्रार्पणव्यापारो न गोहिंसारूपस्तथा तस्मिन् प्रविष्टव्याघ्रमरणेपि न व्याघ्रहिंसारूपः– तत्करणदशायाम्=यन्त्रार्पणकरणदशायाम् 'हन्ति' इति प्रयोगव्यवहारयोरभावात्, न वा यन्त्रार्पणकर्तुः प्रायश्चित्तमित्याह– व्याघ्रमरणेति । अतथात्वे-पीति– यत्र परमरणार्थं कृतेन व्यापारेण मरणं न जातं तत्र तादृशव्यापारस्याऽतथात्त्वेपि= अहिंसारूपत्वेपि किं वा मरणरूपफलानुत्पादकत्वेपि तादृशस्य तन्मरणोद्देश्यकादृष्टाऽद्वारकतन्मरण-प्रयोजककृतिजन्यव्यापारस्य हिंसावद् यथा पापजनकत्वं भवति तथोक्तस्थले व्याघ्रमरणोद्देशेन यन्त्रार्पणस्थले यदि गोवधाभिसंधानं भवति तदा तस्मिन् यन्त्रे गोमरणे सति गोवधप्रायश्चित्तं भवत्येवेत्यर्थः । व्याघ्रमरणोद्देशेन यन्त्रार्पणस्थले व्याघ्रमरणेपि न तद् व्याघ्रादिहिंसारूपो गोवधा-भिसंधाने तु गोवधप्रायश्चित्तमित्युक्तवैषम्ये गोवधस्य प्राबल्यमेव हेतुरित्युन्नेयम् ।

उपसंहरति– एवं चेति, ' चैत्रः पचति ' इत्यत्र पाकविषयक( पाकानुकूल )कृतिमांश्चैत्र इत्याकारकबोधो जायते तन्निर्वाहाय कृतौ उपधायकत्व ( जनकत्व ) विषयित्वैतदुभयसंबन्धेन यथा पाकस्यान्वयो भवति, कृतौ विषयित्वं जनकत्वं चास्त्येव, संबन्धमध्ये उपधायकत्वनिवेशस्य फलमाह– विषयिताया इति, पाकाद्यनिष्पत्तिस्थलेपि कृतौ विषयितायाः सत्त्वेन विषयितासंबधेन कृतौ पाकान्वयसंभवात् 'पचति' इत्यादिप्रयोगस्य प्रामाण्यं स्यात्. न चैतदिष्टमिति संबन्धे उपधायकत्वनिवेशः कार्यस्तथा च पाकाद्यनिष्पत्तिस्थले कृतौ पाकादिजनकत्वाभावात् 'पचति. पश्यति' इत्यादिप्रयोगस्य प्रामाण्य न भवति, प्रकृतमाह–तथेति. तथा 'चैत्रेण पच्यते' इत्यत्र तृतीयार्थकृतेर्जन्यत्वविषयत्वैतदुभयसंबन्धेन पाकादावन्वयो भवति, पाके कृतिजन्यत्वं कृतिविषयत्वं

त्वविषयत्वोभयसंबन्धेनान्वयो बोध्यः ( पाकादौ )। कृतिजन्यत्वस्य तृतीयार्थत्वे जन्यत्वसंबन्धमध्ये एव स्वनिरूपकविषयत्वं प्रवेशनीयम्। कृतिविषयत्वमेव वा तृतीयार्थः, स्वनिरूपकजन्यत्वं विषयतायाः संबन्धमध्येऽन्तर्भावनीयम्।

'काष्ठेन पचति' इत्यादौ करणत्वं तृतीयार्थः, तच्च व्यापारवत्कारणत्वम्, व्यापारे कर्तृव्यापाराधीनत्वं निवेशनीयम्, अन्यथा कर्तुरपि करणतापत्त्या 'चैत्रश्चैत्रेण पचति' 'काष्ठं चैत्रेण पचति' इत्यादिप्रयोगापत्तेः। न च कर्तुश्चेष्टादिरूपव्यापारस्य तदीयकृत्यादिरूपव्यापाराधीनतया तद्विशेषणदानेपि कर्तुः करणत्वं दुर्वारमेवेति वाच्यम्, स्वभिन्नत्वेन कर्तुर्विशेषणीयत्वात्।

---

त्यस्त्येव, अत्रापि पाकाद्यनिष्पत्तिस्थले 'पच्यते' इत्यादिप्रयोगप्रामाण्यपरिहाराय संबन्धमध्ये जन्यत्वनिवेश आवश्यक एवेत्यर्थः। पक्षान्तरमाह— कृतिजन्यत्वस्येति, 'चैत्रेण पच्यते' इत्यत्र कृतिजन्यत्वस्य तृतीयार्थत्वे तादृशस्य तृतीयार्थभूतकृतिजन्यत्वस्य स्वनिरूपकविषयत्वसंबन्धेन पाकेऽन्वयः, स्वं कृतिजन्यत्वं तच्च कृतिजन्यत्वं पाकनिष्ठं पाकनिष्ठा या कृतिविषयता तन्निरूपितमेवेति तादृशविषयत्वे कृतिजन्यत्वनिरूपकत्वं प्राप्तमिति स्वनिरूपकविषयत्वसंबन्धेन पाके तृतीयार्थकृतिजन्यत्वस्यान्वयः— कृतिजन्यत्वनिरूपकविषयत्वस्य ( कृतिविषयत्वस्य ) पाके सत्त्वादेवेत्यर्थः। पक्षान्तरमाह—कृतिविषयत्वमिति, अन्तर्भावनीयमिति—कृतिविषयत्वस्य तृतीयार्थस्य स्वनिरूपकजन्यत्वसंबन्धेन पाकेऽन्वय इत्यन्वयः, अत्र स्वं कृतिविषयत्वं तच्च पाकनिष्ठं कृतिविषयत्वं पाकनिष्ठकृतिजन्यत्वनिरूपितमेवेति तादृशजन्यत्वे कृतिविषयत्वनिरूपकत्वं प्राप्तमिति स्वनिरूपकजन्यत्वसंबन्धेन तृतीयार्थकृतिविषयत्वस्य पाकेऽन्वयः कृतिविषयत्वनिरूपकजन्यत्वस्य पाके सत्त्वादेवेत्यर्थः। चैत्रवृत्तिकृतिजन्यत्वविशिष्टपाकजन्यविक्लित्त्याश्रयः—चैत्रवृत्तिकृतिविषयत्वविशिष्टपाकजन्यविक्लित्त्याश्रयस्तण्डुल इति यथासंख्यं शाब्दबोधौ विज्ञेयौ।

करणतृतीयार्थं निरूपयति—काष्ठेनेति। तत्=करणत्वम्। व्यापारे इति— कर्तृव्यापाराधीनव्यापारवत्कारणत्वं करणत्वमित्यर्थः। विपक्षे बाधकमाह— अन्यथेति, कर्तृव्यापाराधीनत्वनिवेशाभावे केवलं व्यापारवत्कारणत्वं तु कर्तुरप्यस्त्येवेति कर्तुरपि करणत्वं स्यात्तथा च 'चैत्रश्चैत्रेण पचति' 'काष्ठं चैत्रेण पचति' इत्यादिरपि प्रयोगः स्याद् न चैतदिष्टम्, उक्तरीत्या कर्तृव्यापाराधीनत्वनिवेशे तु चैत्रस्य स्वतन्त्रत्वेन चैत्रकाष्ठादिव्यापाराधीनव्यापारवत्त्वाभावात् न करणत्वापत्तिस्तथा च न 'चैत्रश्चैत्रेण' इत्यादिप्रयोगापत्तिरपि। ननु तद्विशेषणदानेपि=उक्तकर्तृव्यापाराधीनत्वविशेषणदानेपि कर्तुः करणत्वं स्यादेव कर्तुः पाकादिव्यापारस्यापि तदीयपाकाद्यनुकूलकृत्यादिरूपव्यापाराधीनत्वादेवेत्याशङ्क्याह— न चेति। परिहारमाह—स्वभिन्नेति, तथा च 'स्वभिन्नकर्तृव्यापाराधीनव्यापारवत्कारणत्वं करणत्वम्' इति वक्तव्यं तथा च चैत्रव्यापारस्य चैत्रवृत्तिकृत्याद्यधीनत्वेपि चैत्रभिन्नकर्तृव्यापाराधीनत्वं नास्तीति न चैत्रस्य करणत्वापत्तिः। काष्ठादिव्यापारस्य तु काष्ठादिभिन्नचैत्रव्यापाराधीनत्वमेवेति काष्ठादीनां करणत्वं प्राप्तमित्यर्थः।

यत्रैकैव पाकादिक्रिया चैत्रेण काष्ठादिना मैत्रेण तुषादिप्रक्षेपेण निष्पाद्यते तत्र 'चैत्रस्तुषैर्मैत्रः काष्ठैः पचति' इतिप्रसङ्गः समभिव्याहृतकर्तृव्यापाराधीनत्वस्य तत्तत्करणव्यापारे भानमुपगम्य वारणीयः । न च समभिव्याहृतकर्त्रन्तर्भावेण तृतीयार्थत्वे कर्त्रऽसमभिव्याहारस्थले करणे तृतीयाया अप्रयोगापत्तिरिति वाच्यम्, तत्रापि "हेतौ" इतिसूत्रेण हेतुतामात्रार्थकतृतीयासंभवात् 'धनेन कुलम्' 'विद्यया यशः' इत्यादिवत् । न हि तत्र करणे तृतीया–क्रियायोगाभावात् ।

न चैवमुक्तस्थले 'चैत्रस्तुषेण पचति' इति प्रयोगस्य "हेतौ" इतिसूत्रबलादापत्ताविष्टापत्तिं विनोत्तराभावात् समभिव्याहृतकर्त्रन्तर्भावस्य करणे स्वतन्त्रतृतीयानुशासनस्यैव वा वैयर्थ्यमिति वाच्यम्, उक्तस्थले पाके तुषहेतुकत्वाभावबा–

---

नन्वेवमपि यत्रैकैव पाकक्रिया चैत्रेण काष्ठेन संपाद्यते मैत्रेण च तुषेण संपाद्यते तत्र करणभूततुषकाष्ठाद्यपेक्षया चैत्रमैत्रयोर्भिन्नत्वादेव 'चैत्रस्तुषैर्मैत्रः काष्ठैः पचति' इति प्रयोगः किं न स्यादित्याशङ्क्याह– यत्रेति । एतत्प्रयोगापत्तिपरिहारोपायमाह– समभिव्याहृतेति, तथा च समभिव्याहृतस्वभिन्नकर्तृव्यापाराधीनव्यापारवत्कारणत्वं करणत्वमिति वक्तव्यम्, अत्र च तुषव्यापारे समभिव्याहृतचैत्रव्यापाराधीनत्वं नास्ति काष्ठव्यापारे च मैत्रव्यापाराधीनत्वं नास्तीति नोक्तस्थले 'चैत्रस्तुषैः' इत्यादिप्रयोगापत्तिः । किं तु काष्ठव्यापारस्य चैत्रव्यापाराधीनत्वात् तुषव्यापारस्य च मैत्रव्यापाराधीनत्वात् 'चैत्रः काष्ठैर्मैत्रस्तुषैः पचति' इत्येवोक्तस्थले प्रयोगो भवतीत्यर्थः । ननु यदि 'समभिव्याहृतस्वभिन्नकर्तृव्यापाराधीनव्यापारवत्कारणत्वं करणत्वम्' इत्येवं समभिव्याहृतकर्त्रन्तर्भावेन करणत्वस्य तृतीयार्थत्वम्=करणत्वे समभिव्याहृतकर्तुरप्यन्तर्भावस्तदा कर्त्रऽसमभिव्याहारस्थले 'काष्ठेन पचति' इत्यादौ करणत्वे तृतीया न स्यात्– विशेषणीभूतकर्तुः समभिव्याहाराभावेन करणत्वस्याप्यसंभवादित्याशङ्क्याह– न चेति । परिहारमाह– तत्रापीति, 'काष्ठेन पचति' इत्यत्र 'धनेन कुलम्' इत्यत्रेव "हेतौ" इति सूत्रेण हेतुतृतीया बोध्या । ननु 'धनेन कुलम्' इत्यत्र करणतृतीयैव किं न स्यादित्याशङ्क्याह– न हीति । तत्र='धनेन कुलम्' इत्यादौ । क्रियायोगाभावात्=क्रियावाचकपदाभावेन क्रियायोगाभावः ।

ननु 'काष्ठेन पचति' इत्यत्र यदि "हेतौ" इति सूत्रेण तृतीया संभवति तदोक्तस्थले=यत्रैकैव पाकक्रिया चैत्रेण काष्ठादिना मैत्रेण तुषेण च निष्पाद्यते तत्र पाके तुषस्यापि हेतुत्वेन तुषपदोत्तरम् "हेतौ" इतिसूत्रेण तृतीयासंभवात् चैत्रकर्तृकपाकस्य तुषकरणकत्वाभावेपि 'चैत्रस्तुषेण पचति' इति प्रयोगः स्यादेवेति करणत्वे समभिव्याहृतकर्त्रन्तर्भावस्य वा करणे पृथक् तृतीयानुशासनस्य वा वैयर्थ्यं स्यादेवेत्याशङ्क्याह– न चेति । उत्तरमाह– उक्तस्थले इति, उक्तस्थले=" यत्रैकैव पाकादिक्रिया " इत्युक्तस्थले पाके तुषहेतुकत्वस्यापि सत्त्वेन तुषहेतुकत्वाभावस्य बाधेपि 'चैत्रस्तुषेण न पचति किं तु काष्ठेन' इतिप्रयोगोपपत्त्यर्थं समभिव्याहृत–

धेपि ' चैत्रस्तुषेण न पचति किं तु दारुणैव ' इतिप्रयोगोपपत्तये समभिव्याहृतकर्त्रन्तर्भावेण तृतीयायाः शक्तिकल्पनाया आवश्यकत्वात्, तद्ग्राहकतयैव करणे तृतीयानुशासनस्यावश्यकत्वात् । ' शरैः शातितपत्रोयम् ' इत्यादौ तृतीयायाः कारकविभक्तित्वे एव तदर्थान्वितार्थकशातितादिपदेन समासस्य साधुतानिर्वाहाच्च । न च तृतीयायाः समभिव्याहृतकर्त्रन्तर्भावेण करणत्वार्थत्वे तत्र समभिव्याहृतकर्त्रऽभावादऽकारकविभक्तित्वं करणे तृतीयानुशासनेपि दुर्वारमेवेति वाच्यम्, एतदनुरोधेन तत्र कर्तुरध्याहरणीयत्वात् ।

वस्तुतः समभिव्याहृतकर्तृव्यापाराधीनत्वे व्यापारवत्कारणत्वे च तृतीयायाः शक्तिद्वयम्, कर्त्रसमभिव्याहारस्थले व्यापारवत्कारणत्वमात्रं प्रतीयते, कर्तृसमभिव्याहारस्थले च व्यापारे तद्व्यापाराधीनत्वमपीति सामञ्जस्यम् ।

---

कर्त्रन्तर्भावेण तृतीयायाः करणत्वे शक्तिकल्पनाया अपेक्षास्ति तादृशशक्तिग्रहार्थं च करणे तृतीयानुशासनस्यावश्यकतास्तीति न समभिव्याहृतकर्त्रन्तर्भावस्य वा करणे तृतीयानुशासनस्य वा वैयर्थ्यम्, एवं हि तुषव्यापारस्य मैत्रव्यापाराधीनत्वेन चैत्रव्यापाराधीनत्वाभावात् तुषस्य पाकहेतुत्वेपि ' चैत्रस्तुषेण न पचति ' इति प्रयोग उपपद्यते. करणत्वे समभिव्याहृतकर्त्रन्तर्भावस्याभावे तु तुषस्यापि पाकहेतुत्वेन चैत्रस्य च पाककर्तृत्वेनोक्तस्थले ' चैत्रस्तुषेण पचति ' इति स्यादेव ' चैत्रस्तुषेण न पचति ' इति न स्यात्, न चैतदिष्टमित्यर्थः । तद्ग्राहकतया=उक्तशक्तिग्राहकतया । करणतृतीयाया आवश्यकत्वे हेत्वन्तरमाह– शरैरिति, ' शरैः शातितपत्रोयम् ' इत्यत्र शातितपदार्थैकदेशशातनक्रियायां हेतुतृतीयार्थस्यान्वयो न संभवति क्रियायां कारकस्यैवान्वयनियमात् तथा च शरपदोत्तरतृतीयायाः कारकविभक्तित्वे एव तदर्थान्वितार्थकशातितपदेन=कारकविभक्तिरूपतृतीयार्थेन करणत्वेनान्वितार्थकं यत् शातितपदं तेन सह पत्रपदसमासस्य साधुत्वं संभवतीत्येतदर्थमपि करणे तृतीयाया आवश्यकतेत्यर्थः । ननु यदि समभिव्याहृतकर्तृव्यापाराधीनव्यापारवत्कारणत्वं करणत्वमित्युच्यते तदा तत्र=' शरैः शातितपत्रोयम् ' इत्यत्र कर्तृसमभिव्याहाराभावेन समभिव्याहृतकर्तृव्यापाराधीनव्यापारवत्त्वं शराणां न संभवतीति शरपदोत्तरतृतीयायाः कथं कारकविभक्तित्वं स्यादित्याशङ्क्याह– न चेति । उत्तरमाह– एतदनुरोधेनेति, कर्तृसमभिव्याहारं विना शराणामुक्तकरणत्वं न संभवति इष्टं च करणत्वमित्यनुरोधेन तत्र=' शरैः शातितपत्रः ' इत्यत्र कर्तुरध्याहारः कर्तव्यस्तथा चाध्याहृतकर्तृव्यापाराधीनव्यापारवत्त्वं शराणां भविष्यतीति न शरपदोत्तरतृतीयायाः कारकविभक्तित्वानुपपत्तिरित्यर्थः ।

स्वाभिप्रायमाह– वस्तुत इति, शक्तिद्वयम्=खण्डशः शक्तिद्वयम् । कर्त्रऽसमभिव्याहारस्थले=' शरैः शातितपत्रः ' इत्यादौ व्यापारवत्कारणत्वमात्ररूपं करणत्वं प्रतीयते । कर्तृसमभिव्याहारस्थले=' चैत्रः काष्ठेन पचति ' इत्यादौ व्यापारे=काष्ठादिरूपकरणव्यापारे तद्व्यापाराधीनत्वम्=कर्तृव्यापाराधीनत्वमपि प्रतीयते इति न कोपि दोष इत्यर्थः ।

एवं हेत्वनुशिष्टतृतीयायाः " अकर्तर्यृणे " इत्यनेन बाधनात् करणत्वविवक्षायाम् ' धनवता ऋणेन बद्धोयम् ' इत्यत्र तृतीयाया उपपत्तये करणे तृतीयानुशासनस्यावश्यकता । कारणत्वं च फलोपधानतारूपमेव करणताघटकम्, अन्यथा कुठारादिकरणकच्छिदादौ दात्रादेरपि स्वरूपयोग्यतया करणत्वापत्तेः ।

लिङ्गज्ञानस्यानुमितिकरणतामते ' धूमेन वह्निमनुमिनोमि ' इत्यादौ धूमादिपदं तज्ज्ञानपरम्, व्याप्तिविशिष्टहेतुज्ञानस्य व्यापारस्तद्विशिष्टवैशिष्ट्यावगाही परामर्शः, स चात्ममनोयोगादिरूपानुमातृपुरुषव्यापाराधीन इति तस्य निरुक्तकरणत्वमबाधितमेव । धूमादिलिङ्गकवह्न्यनुमितौ यत्र लिङ्गान्तराद् घटादिभानं तत्र ' धूमेन घटमनुमिनोमि ' इति न प्रयोगः-अन्वयितावच्छेदकतद्विधेयकानुमितित्वावच्छेदेनैवाऽन्वयितावच्छेदकधूमादिविषयकज्ञानत्वावच्छिन्नत्वेन भास-

---

करणतृतीयाया आवश्यकत्वे उपपत्त्यन्तरमाह-एवमिति, हेत्वनुशिष्टतृतीयायाः=" हेतौ " इति सूत्रोक्ततृतीयायाः " अकर्तर्यृणे " इतिपञ्चमीविधायकसूत्रेण बाधो भवतीति करणतृतीयाया अभावे ' धनवता ऋणेन बद्धः ' इत्यत्र तृतीया न स्यादिति ऋणस्य करणत्वविवक्षायामत्र तृतीयोपपत्त्यर्थमपि करणे तृतीयानुशासनस्यावश्यकतास्तीत्यर्थः । स्वाभिप्रेतं कारणत्वस्वरूपमाह-कारणत्वमिति, ' व्यापारवत्कारणत्वं करणत्वम् ' इतिकरणत्वस्वरूपप्रविष्टं यत्कारणत्वं तत्फलोपधानतारूपम्=फलजनकतारूपं ग्राह्यम् । विपक्षे बाधकमाह-अन्यथेति, फलोपधानतारूपस्य कारणत्वस्याग्रहणे कुठारादिकरणकच्छेदनक्रियायां दात्रादेरपि स्वरूपयोग्यतारूपकारणतायाः सत्त्वात् करणत्वं स्यात्, न चैतदिष्टमित्यर्थः ।

लिङ्गेति, तज्ज्ञानपरम्=धूमादिज्ञानपरम्, तथा च धूमज्ञानज्ञाप्यो वह्निरित्यर्थः । धूमज्ञानस्यानुमितिकरणत्वसिद्ध्यर्थं कर्तृव्यापाराधीनव्यापारवत्त्वमुपपादयति-व्याप्तीति, व्याप्तिविशिष्टो यो धूमादिर्हेतुस्तज्ज्ञानस्य तद्विशिष्टवैशिष्ट्यावगाही=व्याप्तिविशिष्टो यो हेतुस्तद्वैशिष्ट्यावगाही 'वह्निव्याप्यधूमवान् पर्वतः ' इत्याकारको यः परामर्शः स एव व्यापारः सः=परामर्शरूपव्यापारश्चात्ममनःसंयोगादिरूपस्यानुमातृपुरुषव्यापारस्याऽधीन एव-आत्ममनःसंयोगं विना परामर्शानुत्पत्तेरिति तस्य=हेतुज्ञानस्य निरुक्तकरणत्वम्=कर्तृव्यापाराधीनव्यापारवत्त्वरूपं करणत्वं प्राप्तमेवेत्यर्थः । धूमादिलिङ्गेन वह्न्यनुमितौ यदा लिङ्गान्तराद् घटादिभानं भवति तदापि 'धूमेन घटमनुमिनोमि ' इति प्रयोगो न भवतीत्याह-धूमादिलिङ्गकेति । उक्ते हेतुमाह-अन्वयितावच्छेदकेति, धूमादिलिङ्गकवह्न्यनुमितौ यत्र लिङ्गान्तराद् घटादिभानं तत्राऽन्वयितावच्छेदकं यद्धूमादिविषयकज्ञानत्वं तदवच्छिन्ननिष्ठं यद् भासमानं करणत्वं तादृशकरणत्वनिरूपकत्वम् अन्वयितावच्छेदकं यत् तद्विधेयका ( वह्न्यादिविधेयका ) नुमितित्वं तदवच्छिन्ने एव स्वीक्रियते तथा च धूमज्ञाननिष्ठकरणत्वनिरूपकत्वं वह्निविधेयकानुमितावेवास्ति न तु घटाद्यनुमितावपीति

मानस्य करणत्वस्य निरूपकत्वभानोपगमात् । निरूपकत्वं तु करणतामात्रस्य तृतीयार्थतावादिनां प्राचां मते संसर्गः, नव्यमते तु करणतानिरूपकत्वस्यैव नञर्थाभावे प्रतियोगित्वेनाऽन्वयानुरोधात् तावत्पर्यन्तस्य तृतीयार्थतया प्रकार एवेत्यन्यदेतत् ।

परे तु लिङ्गज्ञानस्य करणत्वेपि 'धूमेन वह्निमनुमिनोमि' इत्यादौ धूमादिपदं मुख्यार्थपरमेव "हेतौ" इति सूत्रेण तत्र तृतीया—हेतुत्वस्य कारणतावच्छेदकसाधारणप्रयोजकत्वरूपस्य तत्र विवक्षितत्वात्, जनकज्ञानविषयधूमादेश्चानुमितिकारणतावच्छेदकतया प्रयोजकत्वमक्षतमेव । उक्तसमूहालम्बनस्थले

---

'धूमेन घटमनुमिनोमि' 'घटेन वह्निमनुमिनोमि' इति वा प्रयोगापत्तिरित्यर्थः । धूमज्ञाने धूमज्ञानत्वमप्यस्ति करणत्वमप्यस्तीति करणत्वस्य धूमज्ञानत्वावच्छिन्नत्वेन भासमानत्वं प्राप्तम् । अनुमितौ यत्करणतानिरूपकत्वमुक्तं तन्निरूपकत्वं संसर्गो वा प्रकारो वेत्याशङ्क्याह—निरूपकत्वमिति, करणत्वं तृतीयार्थ इति प्राचीनमतं तत्र हेतुनिष्ठतृतीयार्थकरणत्वस्य निरूपकत्वसंबन्धेनानुमितावन्वय इति निरूपकत्वं संसर्गः । करणत्वनिरूपकत्वमनुमितावुक्तमेव तथा च निरूपकत्वसंबन्धेन करणत्वविशिष्टानुमितिरित्यर्थः । नवीनमते 'धूमेन वह्निमनुमिनोमि न घटेन' इत्यत्र घटज्ञानकरणतानिरूपकत्वस्य नञर्थाभावे प्रतियोगित्वरूपेणान्वयो भवति तादृशविशिष्टाभावस्य च वह्न्यनुमितावऽन्वयो भवति—'घटज्ञानकरणतानिरूपकत्वाभावविशिष्टा वह्न्यनुमितिः' इति तावत्पर्यन्तस्य=करणतानिरूपकत्वस्य तृतीयार्थत्वेन तद्घटकस्य निरूपकत्वस्यापि तृतीयार्थत्वात् प्रकारत्वं प्राप्तमेवेत्यर्थः । अत्र च निरूपकत्वं प्रकार एवेत्यन्वयः । एवमेव 'जलसेकेन घटमनुमिनोमि न धूमेन' इत्यत्र घटानुमितौ धूमज्ञाननिष्ठकरणतानिरूपकत्वाभाववैशिष्ट्यं बोध्यम् ।

मतान्तरमाह—परे त्विति, लिङ्गज्ञानस्यापि करणत्वे इत्यन्वयः । धूमं विना धूमज्ञानस्यासंभवादनुमितिकारणतावच्छेदकरूपप्रयोजकत्वरूपं हेतुत्वं धूमस्याप्यस्त्येव धूमस्य च हेतुत्वे प्राप्ते तत्र=धूमादिपदोत्तरम् "हेतौ" इति सूत्रेण तृतीया उपपद्यते एवेति धूमादिपदं मुख्यार्थपरमेव तथा चानुमितौ धूमादिज्ञानकरणकत्वं किं वा धूमादिज्ञानस्य करणत्वमार्थमेवेत्यर्थः । "हेतौ" इति सूत्रघटकहेतुत्वस्वरूपमाह—हेतुत्वस्येति, हेतुत्वं हि प्रयोजकत्वरूपमेव तच्च द्विविधं भवति कारणतावच्छेदकत्वरूपं साक्षात् कारणत्वरूपं च तथा च तत्र="हेतौ" इतिसूत्रे कारणतावच्छेदकसाधारणप्रयोजकत्वरूपं हेतुत्वं विवक्षितमस्ति जनकज्ञानविषयधूमादेः=अनुमितिजनकं यद्धूमज्ञानं तद्विषयो यो धूमस्तादृशधूमस्य चानुमितिकारणे धूमज्ञाने विशेषणत्वादनुमितिकारणतावच्छेदकत्वं प्राप्तं तेन चानुमितिप्रयोजकत्वं प्राप्तं तथा च प्रयोजकत्वरूपहेतुत्वस्य धूमे सत्त्वाद्धूमपदात् 'धूमेन वह्निम्' इत्यत्र "हेतौ" इति सूत्रेण तृतीया प्राप्तेति नेयं करणतृतीयेत्यर्थः । ननु एवं धूमलिङ्गकवह्न्यनुमितौ यत्र लिङ्गज्ञानादू घटादिभानं तत्र तादृशसमूहालम्बनात्मकानुमि-

ऽतिप्रसङ्गश्च वह्निविधेयकानुमितित्वावच्छेदेन प्रयोजकतानिरूपकत्वभानाभ्युपगमेन वारणीयः ।

वस्तुतो जनकादिनिष्ठप्रयोजकतानिरूपकत्वं कार्यस्येव कार्यतावच्छेदकस्याप्यक्षतं प्रतीतिसाक्षिकं च तथा चानुमितिविशेषणतत्तद्विधेयकत्वरूपसुबन्तार्थे एव तृतीयार्थान्वय उपगम्यते । समूहालम्बनानुमितिनिष्ठघटादिविधेयकत्वस्य धूमाद्यप्रयोज्यतया नोक्तातिप्रसङ्गः । 'धूमेन वह्निमनुमिनोमि न घटेन' इत्यादावनुमितौ घटादिप्रयोज्यत्वाभावो नान्वेति, अपि तु नञर्थाभावप्रतियोग्यन्वयिनि वह्न्यादिविधेयकत्वे एव. अतो यत्र धूमादिलिङ्गकवह्न्यनुमितौ घटादिरूपलिङ्गाधीनं द्रव्यत्वादिभानं तत्र 'धूमेन वह्निमनुमिनोमि न घटेन' इति प्रयोगोपपत्तिः— समूहालम्बनरूपतादृशानुमितौ घटादिरूपलिङ्गप्रयोज्यत्वाभावस्याऽसत्त्वेपि वह्न्या-

---

तिप्रयोजकत्वं धूमेऽस्त्येवेति 'धूमेन घटमनुमिनोमि' इतिप्रयोगापत्तिरूपोतिप्रसङ्गः स्यादित्याशङ्क्याह—उक्तेति, तत्र धूमनिष्ठप्रयोजकतानिरूपकत्वमुक्तरीत्या वह्निविधेयकानुमितित्वावच्छेदेन=वह्निविधेयकानुमितावेवास्ति न तु घटविधेयकानुमितावपीति न 'धूमेन घटमनुमिनोमि' इति प्रयोगापत्तिरित्यर्थः ।

स्वाभिप्रायमाह— वस्तुत इति, जनकनिष्ठं यत्प्रयोजकत्वं तन्निरूपकत्वं यथा कार्यस्य तथा कार्यतावच्छेदकस्यापि भवति— कार्यतावच्छेदकविशिष्टस्यैव कार्यस्य निरूपकत्वेन तद्विशेषणीभूतकार्यतावच्छेदकस्यापि प्रतीतिसाक्षिकं निरूपकत्वं प्राप्तमेव तथा च कार्यतावच्छेदकरूपं यदनुमितिविशेषणं तत्तद्विधेयकत्वम्=वह्न्यादिविधेयकत्वं तदेव 'वह्निम्' इति सुबन्तार्थस्तस्मिन् प्रयोजकतानिरूपकत्वस्य सत्त्वात् तादृशनिरूपकतासंबन्धेन तत्र तृतीयार्थस्य=प्रयोज्यत्वस्यान्वयो भवतीत्यर्थः । धूमलिङ्गकवह्न्यनुमितौ यत्र लिङ्गान्तराद् घटादिभानं तादृशसमूहालम्बनानुमितौ यद् घटविधेयकत्वं तस्य लिङ्गान्तरप्रयोज्यत्वेन धूमप्रयोज्यत्वाभावात् 'धूमेन घटमनुमिनोमि' इत्यतिप्रसङ्गापत्तिर्नास्तीत्याह— समूहेति । धूमेनेति— 'धूमेन वह्निमनुमिनोमि न घटेन' इत्यत्र 'न घटेन' इत्यस्य यो घटप्रयोज्यत्वाभावरूपोर्थस्तस्यानुमितावन्वयो न भवति किं तु नञर्थाभावस्य प्रतियोगिभूतं यत्प्रयोज्यत्वं निरूपकत्वसंबन्धेन तदन्वयिनि वह्निविधेयकत्वे एवान्वयो भवति तथा च यत्र धूमादिलिङ्गकवह्न्यनुमितौ घटादिरूपलिङ्गेन द्रव्यत्वादिभानं भवति तत्र 'धूमेन वह्निमनुमिनोमि न घटेन' इति प्रयोग उपपद्यते— वह्निविधेयकत्वे घटप्रयोज्यत्वाभावस्य सत्त्वादेव, यदि घटादिप्रयोज्यत्वाभावस्यानुमितावेवान्वयः स्यात्तदात्रानुमितौ घटेन द्रव्यत्वभानेन घटप्रयोज्यत्वस्यैव सत्त्वाद् घटप्रयोज्यत्वाभावस्य चासत्त्वात् 'धूमेन वह्निमनुमिनोमि न घटेन' इति प्रयोगो न स्यादित्यर्थः । उक्तमुपपादयति— समूहालम्बनेति, यत्र धूमादिलिङ्गकवह्न्यनुमितौ घटेन द्रव्यत्वादिभानं तादृशसमूहालम्बनानुमितौ घटादिरूपलिङ्गप्रयोज्यत्वस्यैव सत्त्वेन घटादिरूपलिङ्गप्रयोज्यत्वाभावस्याऽसत्त्वेपि तादृशानुमित्येकदेशभूतवह्निविधेयकत्वे

दिविधेयकत्वे तदबाधात् । न ह्यनुमितावपि द्रव्यत्वादिविधेयकत्वावच्छिन्नस्य घटादिलिङ्गप्रयोज्यत्वस्य वह्न्यादिविधेयकत्वावच्छेदेनाऽभावो बाधित इति संभवति— प्रयोज्यताया व्याप्यवृत्तित्वविरहात् ।

एतेन— अनुमितौ धूमादिलिङ्गज्ञानकरणकत्वं तृतीयया प्रत्याय्यते करणे एव तृतीया तत्रेतिमतं प्रत्युक्तम्— उक्तस्थलेऽनुमितौ नञर्थान्वययोग्यताया अनुपपत्तेः। वह्न्यादिविधेयकत्वे धूमादिज्ञानरूपकरणजन्यतावच्छेदकत्वतदभावौ तृतीयान्ततत्समभिव्याहृतनञ्भ्यां प्रत्याय्येते इत्यपि न सत्— कारकविभक्त्यर्थस्य क्रियातिरिक्तेऽनन्वयात् ।

---

तदबाधात्=घटादिरूपलिङ्गप्रयोज्यत्वाभावस्याऽबाधात् 'धूमेन वह्निमनुमिनोमि न घटेन' इति प्रयोग उपपद्यते एवेत्यर्थः । ननु यद्युक्तसमूहालम्बनानुमितौ घटप्रयोज्यत्वाभावो बाधितस्तदा तदेकदेशभूतवह्निविधेयकत्वेपि घटप्रयोज्यत्वाभावो बाधित एव भविष्यतीत्याशङ्क्याह— न हीति, उक्तसमूहालम्बनानुमितावपि वह्निविषधेयकत्वावच्छेदेन नाम वह्निविधेयकत्वे घटप्रयोज्यत्वस्याभावो बाधितो नास्ति— प्रयोज्यताया व्याप्यवृत्तित्वाभावात् तथा चोक्तस्थले द्रव्यत्वविधेयकत्वे घटप्रयोज्यत्वसत्त्वेपि वह्निविधेयकत्वे घटप्रयोज्यत्वाभावोप्युपपद्यते एवेत्यर्थः । यत्र घटप्रयोज्यत्वं तत्रैव द्रव्यत्वविधेयकत्वमिति द्रव्यत्वादिविधेयकत्वावच्छिन्नस्येति घटप्रयोज्यत्वस्य विशेषणम् । अपिर्भिन्नक्रमस्तेन 'वह्निविधेयकत्वावच्छेदेनापि' इत्यन्वयः ।

एतेनेति— यत् केनाप्युक्तम्— 'धूमेन वह्निमनुमिनोमि' इत्यत्र तत्र=धूमपदोत्तरं करणत्वे एव तृतीया तथा च तृतीयया धूमादिलिङ्गज्ञानकरणकत्वमनुमितौ प्रत्याय्यते इति तदपि परास्तं वेदितव्यम्— यदि धूमादिलिङ्गज्ञानकरणकत्वमनुमितावेव प्रत्याय्यते न विशेषरूपेण वह्न्यादिविधेयकत्वे तदोक्तस्थले=यत्र धूमादिलिङ्गकवह्न्यनुमितौ घटेन द्रव्यत्वभानं तत्रानुमितौ घटज्ञानकरणकत्वस्यैव सत्त्वेन नञर्थान्वयस्य=घटप्रयोज्यत्वाभावान्वयस्य योग्यताया अनुपपत्तेः=असत्त्वात् 'धूमेन वह्निमनुमिनोमि न घटेन' इति प्रयोगो नोपपद्येत, यदा च लिङ्गज्ञानप्रयोज्यत्वस्य तत्तत्साध्यविधेयकत्वेऽन्वय उपगम्यते तदा तूक्तरीत्यायं प्रयोग उपपद्यते इत्यर्थः । वह्न्यादिविधेयकत्वे इति—यत् केनाप्युक्तम्—धूमादिज्ञानरूपं यत् करणं तादृशकरणनिष्ठजनकतानिरूपितजन्यतावच्छेदकत्वं करणतृतीयार्थभूतं तृतीयान्तेन धूमादिपदेन वह्न्यादिविधेयकत्वे एव प्रत्याय्यते तथा तृतीयान्तसमभिव्याहृतनञा च 'न घटेन' इत्यादौ घटादिज्ञानरूपकरणजन्यतावच्छेदकत्वाभावोपि वह्न्यादिविधेयकत्वे एव प्रत्याय्यते तथा च 'धूमेन वह्निमनुमिनोमि न घटेन' इति प्रयोगानुपपत्तिर्नास्तीति, तदपि न युक्तम्— धूमादिपदोत्तरतृतीयायाः कारकविभक्तित्वाश्रयणात् कारकविभक्त्यर्थस्य च क्रियातिरिक्ते वह्न्यादिविधेयकत्वेऽन्वयासंभवादित्यर्थः तस्माद्धूमादिपदोत्तरं हेतुतृतीयैवेति यदुक्तं तदेव युक्तम् ।

न चोक्तस्थले वह्न्यादिविधेयकत्वावच्छेदेन घटादिरूपलिङ्गज्ञानजन्यतावदनुमितिमत्त्वाभावः पुरुषनिष्ठो नञा प्रत्याय्यते तादृशानुमितिर्घटादौ वह्न्यादिलिङ्गत्वभ्रमदशायां प्रसिद्धेति वाच्यम्, 'धूमेन वह्नेरनुमानमिदं न घटेन' इत्यादावनुमितिमत्त्वाद्यभावबोधानुपपत्तेरिति प्राहुः ।

'पर्वतो धूमेन वह्निमान्' इत्यादौ क्रियायोगाभावाद्धेतुतृतीयैव तत्र ज्ञापकज्ञानविषयत्वरूपं हेतुत्वं ज्ञानज्ञाप्यत्वरूपं वा हेतुमत्त्वं तृतीयार्थः । हेतुशब्दो यद्यपि कारणपर्यायो न तु ज्ञापकपर्यायस्तथापि "हेतौ" इति सूत्रस्थहेतुपदं न सम-

---

ननूक्तस्थले=' धूमेन वह्निमनुमिनोमि न घटेन ' इत्यत्र घटरूपलिङ्गज्ञानजन्यतावती याऽनुमितिस्तादृशानुमितिमत्त्वस्याभावो योऽनुमातृपुरुषनिष्ठः स एव नञा सामानाधिकरण्यसंबन्धेन वह्निविधेयकत्वावच्छिन्नायामनुमितौ प्रत्याय्यते तथा च नोक्तः कोपि दोषः, तादृशानुमितिः= घटादिरूपलिङ्गज्ञानजन्यतावत्यऽनुमितिश्च घटादौ यदा वह्न्यादिलिङ्गत्वभ्रमो भवति तदा घटादिना वह्न्यनुमितेर्जायमानत्वान्नाऽप्रसिद्धेति तादृशानुमितिमत्त्वस्यापि प्रसिद्धत्वान्नाऽप्रसिद्धप्रतियोगिकाभावप्रत्यायनोपालम्भोपि संभवतीत्याशङ्क्याह- न चेति । अत्र वह्न्यादिविधेयकत्वावच्छिन्नानुमितिरपि पुरुषे एव घटादिलक्षणलिङ्गज्ञानजन्यतावदनुमितिमत्त्वाभावोपि पुरुषे एवेति सामानाधिकरण्येन तादृशानुमितिमत्त्वाभावो वह्न्यादिविधेयकानुमितौ प्राप्त इति ध्येयम् । परिहारमाह- धूमेनेति, ' धूमेन वह्निमनुमिनोमि न घटेन ' इत्यत्र तिपाऽऽश्रयोपस्थितिसंभवेन तादृशाश्रयीभूतानुमातरि वर्तमानस्यानुमितिमत्त्वाभावस्य वह्निविधेयकानुमितौ सामानाधिकरण्येन नञा प्रत्यायनसंभवेपि ' धूमेन वह्नेरनुमानमिदं न घटेन' इत्यत्र तिपोऽभावात्तन्न संभवति तथा वह्निपदोत्तरद्वितीयाया विधेयत्वार्थिकाया अभावाद् वह्निविधेयकत्वस्याप्युपस्थितिर्न संभवति यदवच्छिन्ने पुरुषनिष्ठानुमितिमत्त्वाभावस्यान्वयः स्यादित्यर्थः ।

पर्वतेति- ' धूमेन वह्निमनुमिनोमि ' इत्यत्र क्रियापदोपस्थाप्यक्रियायोगसंभवात् करणतृतीयासंभवेपि ' धूमेन वह्निमान् ' इत्यत्र तु हेतुतृतीयैव न करणतृतीया संभवति क्रियायोगाऽसंभवादित्यर्थः । तत्र=' धूमेन वह्निमान् ' इत्यत्र । तृतीयार्थः=धूमपदोत्तरहेतुतृतीयार्थः । ज्ञापकं यद्धूमज्ञानं तद्विषयत्वरूपं हेतुत्वं धूमेस्ति- ज्ञापकहेतोर्ज्ञापकज्ञानविषयत्वरूपत्वस्वीकारात्, धूमज्ञानज्ञाप्यत्वरूपं हेतुमत्त्वं तु वह्नौ- ज्ञाप्यत्वसंबन्धेन वह्नौ हेत्वन्वयात् । ननु हेतुशब्दः कारणपर्याय एव न तु ज्ञापकपर्यायो धूमश्च वह्नेर्ज्ञापक एव न कारणमिति कथमत्र धूमपदोत्तरम् "हेतौ" इति सूत्रेण तृतीया स्यादित्यत्राह- हेतुशब्देति, यद्यपि हेतुशब्दः कारणपर्यायो न ज्ञापकपर्यायस्तथापि "हेतौ" इति सूत्रघटकं हेतुपदं न समभिव्याहृतं यद्वह्न्यादि तन्निरूपितहेतुतामात्रपरं किं तु यथा  तथा समभिव्याहृतं यद्

भिव्याहृतनिरूपितहेतुतामात्रपरमऽपि तु समभिव्याहृततज्ज्ञानान्यतरनिरूपित-हेतुतापरमेवेति समभिव्याहृतवह्न्यादिज्ञानहेतुज्ञानविषयधूमादिपदादपि तृतीया तत्सूत्रेणानुशिष्यते । गुणहेतौ पञ्चम्या विकल्पेन विधायकसूत्रान्तरमप्यऽन्यतर-निरूपितहेतुताविषयकमेव. अतः 'जाडयाद्बद्धो जाडयेन वा' इत्यत्र जाडय-स्य हेतुतावद् 'धूमाद्वह्निमान् धूमेन वा' इत्यादौ धूमादेर्वह्न्यादिज्ञानहेतुता प्रती-यते । हेतुत्वं च पूर्वोक्तं प्रयोजकत्वमेव । गुणपदं च न चतुर्विंशतिपरम्-धूमादिहेतौ तत्त्वासंभवात् ।

न च तत्र धूमादिपदं तज्ज्ञानपरमेवेति तादृशगुणत्वमेव वह्न्यादिहेतोरिति वाच्यम्, तत्र धूमादिपदस्य ज्ञानलाक्षणिकत्वेपि 'अज्ञानाद्बद्धः' इत्यादावऽ-

ह्न्यादि तज्ज्ञाननिरूपितहेतुतापरमपि तस्माद् यथा 'दण्डेन घटः' इत्यत्र समभिव्याहृतघटरूपका-र्यनिरूपितहेतुवाचकदण्डपदात्तृतीया तथा 'धूमेन वह्निमान्' इत्यत्र धूमपदं समभिव्याहृतो यो वह्निस्तज्ज्ञाननिरूपितहेतुतापरमस्तीति समभिव्याहृतो यो वह्निस्तादृशवह्निज्ञानस्य हेतुभूतं यद्धूम-ज्ञानं तद्विषयो यो धूमस्तादृशधूमवाचकधूमपदादपि तत्सूत्रेण="हेतौ" इति सूत्रेण तृतीया प्राप्नोत्येवेत्यर्थः । एवं गुणरूपहेतुवाचकपदात् विकल्पेन=एकपक्षे "विभाषा गुणेऽस्त्रियाम्" इति पञ्चमी भवति तत्रास्मिन् सूत्रेपि "हेतौ" इति सूत्रादेव हेतुपदस्य प्राप्तत्वाद् विधायक-सूत्रान्तरम्="विभाषा गुणेऽस्त्रियाम्" इति सूत्रमपि अन्यतरनिरूपितहेतुताविषयकमेव नाम यथा समभिव्याहृतकार्यनिरूपितहेतुताविशिष्टहेतुवाचकपदोत्तरं पञ्चमीविधायकं तथा समभिव्याहृत-विषयकज्ञाननिरूपितहेतुताविशिष्टहेतुवाचकपदोत्तरमपि पञ्चमीविधायकं तथा च यथा 'जाडयाद्बद्धः' इत्यत्र जाडयस्य बन्धहेतुता प्रतीयते तेन च जाडयपदात् पञ्चमी प्राप्ता तथा 'धूमाद्वह्निमान्' इत्यत्र धूमस्य वह्निज्ञानहेतुता प्रतीयते इति धूमपदादपि पञ्चमी प्राप्तेत्याह– गुण-हेताविति । गुणरूपहेतुवाचकपदात् पञ्चमी भवतीत्यत्र यद्धेतुत्वं तत्स्वरूपमाह– हेतुत्वमिति । पूर्वोक्तम्=( ४२१ ) "हेतुत्वस्य" इत्यादिनोक्तम् । गुणपदार्थमाह– गुणपदं चेति । चतुर्विंशतिपरम्=नैयायिकोक्तचतुर्विंशतिसंख्याकगुणघटककिंचिद्गुणपरं नेत्यर्थः । तत्त्वाऽसंभ-वात्=तादृशगुणत्वासंभवात् । "हेतुतावत्" इत्यत्र 'बन्धहेतुतावत्' इत्येवं पाठो युक्तः ।

नन्वत्र धूमपदं धूमज्ञानपरमेव ज्ञानं च चतुर्विंशतिगुणमध्यप्रविष्टमेवेति वह्न्यादिहेतुभूतधूमा-दिज्ञानस्य तादृशगुणत्वम्=चतुर्विंशतिगुणसमूहघटककिंचिद्गुणत्वं प्राप्तमेवेत्याशङ्क्याह– न चेति । उत्तरमाह– तत्रेति, तत्र='धूमाद्वह्निमान्' इत्यत्र धूमपदस्य धूमज्ञानपरत्वेन हेतुभूतस्य धूमज्ञानस्य चतुर्विंशतिगुणत्वसंभवेपि 'अज्ञानाद्बद्धः' इत्यत्र बन्धहेतुभूतस्याऽज्ञानस्य ज्ञाना-भावरूपत्वात् चतुर्विंशतिगुणघटकगुणत्वं न संभवतीति गुणपदं न चतुर्विंशतिगुणपरम् । नापि गुणपदं धर्ममात्रपरम्– कालिकसंबन्धेन गगनादेरपि धर्मतया सर्वेषामेव पदार्थानां धर्मत्वं संभ-वतीति गुणपदं कस्यापि व्यावर्तकं न स्यात्, अपि च 'धनेन कुलम्' इत्यादौ धनादिव्या-

भावरूपबन्धादिहेतोस्तथात्वासंभवात् । नापि धर्ममात्रपरम्- गगनादेरपि कालिकसंबन्धेन धर्मतयाऽव्यावर्तकत्वात् । समवायादिना धर्मत्वं चाऽभावाद्यऽसंग्राहकम् । नापि द्रव्याश्रितत्वम्- ' सत्तावान् गुणत्वात् ' इत्यादौ पञ्चम्यन्तस्याऽलाक्षणिकत्वपक्षे पञ्चम्यनुपपत्तेः । किं तु कार्यस्य ज्ञाप्यस्य वाऽऽश्रये आश्रितत्वम्, जाड्यादेः स्वप्रयोज्यबन्धाश्रये धूमादेश्च स्वज्ञाप्यवह्न्याद्याश्रये आश्रितत्वाद् गुणत्वम् । हेतौ तद्विशेषणप्रयोजनं च ' पितुः पाण्डित्येन पुत्र आहूतः ' ' धूमस्य स्वस्मिन् सत्त्वेन पर्वतो वह्निमान् ' इत्यादौ पञ्चमीवारणम् ।

ज्ञापकत्वं च तज्ज्ञानजनकप्रमाविषयत्वम्. ज्ञाप्यत्वमपि प्रमाजन्यज्ञानविषयत्वम्. अतो वह्न्यादेर्व्याप्यताभ्रमेण धूमादिज्ञापकत्वसत्त्वेपि ' वह्निना वह्नेर्वा धूमवानयम्' इत्यादयो न प्रयोगाः । प्रमात्वं च यावद्भ्रमभिन्नत्वरूपं विवक्षणीयं तेन 'धूमव्याप्यो वह्निः' इत्यादिज्ञानस्य वह्नित्वाद्यंशे प्रमात्वमादाय नोक्तातिवर्तकमिति न गुणपदं धर्ममात्रपरमित्याह- नापीति ।नापि समवायसंबन्धेन धर्मत्वं गुणत्वमिति युक्तम् - अभावादीनां समवायेन धर्मत्वाभावात् ' विद्याऽभावाद् दरिद्रः ' इत्यत्र विद्याभावपदात् पञ्चमी न स्यादित्याह- समवायादिनेति । नापि गुणत्वं द्रव्याश्रितत्वम्- ' सत्तावान् गुणत्वात् ' इत्यत्र गुणत्वस्य गुणवृत्तित्वेन द्रव्याश्रितत्वाभावाद् गुणत्वपदात् पञ्चमी न स्यादित्याह- नापीति, गुणत्वपदस्य लक्षणया गुणबोधकत्वे तु गुणस्य द्रव्याश्रितत्वेन गुणत्वपदात् पञ्चमी संभवत्येवेत्युक्तम्- अलाक्षणिकत्वपक्षे इति । गुणपदार्थमाह- किं त्विति, उदाहरति- जाड्यादेरिति । हेतौ गुणत्वविशेषणप्रयोजनमाह- हेताविति, ' पितुः पाण्डित्येन पुत्र आहूतः ' इत्यत्राह्वाने पाण्डित्यस्य हेतुत्वेपि पितृवृत्तित्वेन पुत्रवृत्तित्वाभावात् पुत्रगुणत्वं नास्तीति पञ्चमीपरिहारस्तथा ' धूमस्य स्वस्मिन् सत्त्वेन पर्वतो वह्निमान् ' इत्यत्र सत्त्वस्य धूमगुणत्वमस्ति न तु पर्वतगुणत्वमिति सत्त्वपदात् पञ्चमीवारणमेव प्रयोजनमित्यर्थः । अत्र च " विभाषा गुणेऽस्त्रियाम् " इति सूत्रं द्रष्टव्यम् ।

ज्ञापकत्वमिति- यथा- वह्निज्ञानजनिका या धूमप्रमा तादृशप्रमाविषयत्वं ज्ञापकत्वं धूमस्य । धूमप्रमाजन्यं यद्वह्निज्ञानं तादृशज्ञानविषयत्वं ज्ञाप्यत्वं तच्च वह्नेरित्यर्थः । प्रमात्वप्रवेशस्य फलमाह- अत इति, वह्नौ धूमव्याप्यत्वभ्रमे जाते वह्नेर्धूमज्ञापकत्वसंभवेपि धूमज्ञानजनकप्रमाविषयत्वरूपस्य धूमज्ञापकत्वस्य वह्नावऽसत्त्वात् ' वह्निना धूमवान्' 'वह्नेर्धूमवान्' इत्यादयः प्रयोगा न भवन्ति । उक्तज्ञाप्यज्ञापकलक्षणप्रविष्टप्रमायां यावद्भ्रमभिन्नत्वस्य( व्याप्यवृत्तित्वस्य )विवक्षायाः फलमाह- तेनेति, 'धूमव्याप्यो वह्निः' इत्यादिज्ञानस्य वह्न्याद्यंशे प्रमात्वाद् वह्नेस्तादृशप्रमाविषयत्वेपि उक्तातिप्रसङ्ग= ' वह्नेर्धूमवान् ' इत्यादिप्रयोगापत्तिर्नास्ति- ' धूमव्याप्यो वह्निः ' इत्यादिज्ञानस्य धूमव्याप्यत्वांशे भ्रमात्मकत्वाद् वह्न्यंशे प्रमात्वेपि ज्ञापकत्वेन प्रमात्वाभावेन यावद्भ्रमभिन्नत्वाभावा-

प्रसङ्गः । द्रव्यत्वादेः प्रमेयत्वावच्छिन्नवह्न्यादिज्ञापकत्वेपि विशिष्टद्रव्यत्वत्वादिना वह्नित्वाद्यवच्छिन्नज्ञापकत्वेपि च 'पर्वतो वह्निमान् द्रव्यत्वाद् द्रव्यत्वेन वा' इत्यादिर्न प्रयोगः—अन्वयितावच्छेदकवह्नित्वद्रव्यत्वत्वादिना ज्ञाप्यज्ञापकभावस्य तृतीयादिना बोधनात् तत्र तेन रूपेण ज्ञाप्यज्ञापकभावविरहात् ।

एवं ज्ञाप्यवह्न्यादिमत्त्वान्वयितावच्छेदकपर्वतत्वावच्छिन्नांशे ज्ञापकत्वं ज्ञाप्यत्वं वा प्रतीयते इत्यपि नियमस्तेन 'पर्वतो वह्निमान् महानसत्वात् तेन वा' इत्यादयो न प्रयोगाः ।

अत्रेदमवधेयम्— 'पर्वतो वह्निमान्न धूमान्न द्रव्यत्वान्नापि महानसत्वात्' इत्यादौ नञा वह्न्यादौ द्रव्यत्वमहानसत्वादिज्ञानज्ञाप्यत्वाभावबोधने बाधः, तत्र प्रमेयत्वादिना द्रव्यत्वादिज्ञानज्ञाप्यत्वस्य महानसादौ महानसत्वादिज्ञानज्ञाप्यत्वस्य च सत्त्वात्( सत्त्वेपि ) वह्नित्वादिना द्रव्यत्वादिज्ञाप्यत्वस्य पर्वतादौ महानस-

---

दित्यर्थः । द्रव्यत्वादेरिति—यत्र द्रव्यत्वं तत्र प्रमेयत्वं भवत्येवेति व्याप्त्या यद्यपि प्रमेयत्वेन रूपेण वह्नेर्ज्ञापकत्वं द्रव्यत्वस्यास्त्येव तथा वह्नित्वेन वह्नेर्ज्ञापकत्वमपि विशिष्टद्रव्यत्वत्वेन रूपेण द्रव्यत्वस्यास्त्येव यथा विशिष्टद्रव्यत्वं हि धूमविशिष्टपर्वतवृत्तित्वाद् धूमविशिष्टपर्वतत्वरूपमेव तच्च पर्वतेस्त्येवेति तस्य तत्र पर्वते वह्नित्वेन वह्नेर्ज्ञापकत्वं विज्ञेयम् तथापि ' पर्वतो वह्निमान् द्रव्यत्वात् ' ' पर्वतो वह्निमान् द्रव्यत्वेन ' इत्यादयः प्रयोगा न भवन्ति—अत्रान्वयितावच्छेदकं यद् वह्नित्वं द्रव्यत्वत्वं च ताभ्यामेव रूपाभ्यां तृतीयादिना ज्ञाप्यज्ञापकभावो बोधयितुं शक्यते न तु प्रमेयत्वादिना रूपेण. तत्र=उक्तोदाहरणे च तेन रूपेण=वह्नित्वद्रव्यत्वत्वरूपेण वह्निद्रव्यत्वयोर्ज्ञाप्यज्ञापकभाव एव नास्ति यस्य तृतीयादिना बोधनं स्यादिति न ' पर्वतो वह्निमान् द्रव्यत्वात् ' इत्यादिप्रयोगापत्तिरित्यर्थः ।

एवमिति—यथा वह्नित्वेन धूमत्वेनैव ज्ञाप्यज्ञापकभावोस्ति एवं ज्ञाप्यो यो वह्निस्तादृशवह्निमत्त्वस्य यदन्वयितावच्छेदकं पर्वतत्वं तादृशपर्वतत्वावच्छिन्नस्यापि ज्ञापकत्वं ज्ञाप्यत्वं वा प्रतीयते यथा धूमविशिष्टपर्वतस्य ज्ञापकत्वं वह्निविशिष्टपर्वतस्य च ज्ञाप्यत्वमित्यपि नियमस्तथा च यथा ' पर्वतो वह्निमान् धूमविशिष्टपर्वतत्वात् ' इति प्रयोगो भवति तथा महानसत्वस्य पर्वतेऽसत्त्वेन ज्ञाप्यवह्निमत्त्वान्वयितावच्छेदकत्वाभावात् पर्वतवृत्तिवह्निज्ञापकत्वं न संभवतीति ' पर्वतो वह्निमान् महानसत्वात् ' इत्यादयः प्रयोगा अपि न भवन्तीत्यर्थः ।

स्वाभिप्रायं प्रकटयति—अत्रेदमिति, यद्यपि तत्र=पर्वते वह्नौ प्रमेयत्वेन रूपेण द्रव्यत्वज्ञानज्ञाप्यत्वमस्त्येव महानसे च वह्नेर्वह्नित्वरूपेणापि महानसत्वज्ञानज्ञाप्यत्वमस्ति तथापि ' पर्वतो वह्निमान् धूमान्न द्रव्यत्वान्नापि महानसत्वात् ' इत्यादौ नञा वह्न्यादौ द्रव्यत्वमहानसत्वादिज्ञानज्ञाप्यत्वाभावबोधनं न संभवति—वह्नित्वेन रूपेण वह्नेर्द्रव्यत्वज्ञाप्यत्वस्याऽप्रसिद्धत्वात् पर्वते च वह्नेर्महानसत्वज्ञाप्यत्वस्याऽप्रसिद्धत्वाद् अप्रसिद्धप्रतियोगिकाभावस्य बोधनासंभवादिति

त्वादिज्ञाप्यत्वस्य चाऽप्रसिद्ध्या नाभावप्रत्यायनसंभव इति ज्ञानप्रयोज्यत्वं ज्ञानजन्यतावच्छेदकत्वरूपं समभिव्याहृतपर्वतादिविशेष्यतानिरूपितं विधेयत्वं च विशकलितं पञ्चम्यर्थः, विशिष्टलाभोऽन्वयबलात्, एवं चोक्तस्थले नञा विधेयतायां द्रव्यत्वमहानसत्वादिज्ञानप्रयोज्यत्वाभावः प्रत्याय्यते, तत्प्रयोज्यत्वं च प्रमेयत्वाद्यवच्छिन्नविधेयतायां प्रसिद्धम् ।

न चैवम् 'पर्वतो वह्निमान् न धूमात्' इत्यादेरपि प्रसङ्गः— धूमत्वाद्यवच्छिन्नविषयकज्ञानाप्रयोज्यतत्तद्वह्नित्वाद्यवच्छिन्नविधेयताया वह्न्यादावऽबाधितत्वादिति वाच्यम्, पर्वतादिविशेष्यतानिरूपितवह्नित्वाद्यवच्छिन्नविधेयतात्वावच्छेदेन विधेयतायां नञाऽभावान्वयबोधोपगमात् ।

---

हेतोर्ज्ञानजन्यतावच्छेदकत्वरूपं यज्ज्ञानप्रयोज्यत्वं समभिव्याहृतपर्वतादिविशेष्यतानिरूपितं यद् विधेयत्वं च तयोः पञ्चम्या विशकलिता खण्डश एव शक्तिः स्वीक्रियते विशिष्टलाभः=ज्ञानप्रयोज्यविधेयत्वलाभश्चाकाङ्क्षावशादेव जायते तथा चोक्तस्थले द्रव्यत्वज्ञानप्रयोज्यवह्निविधेयत्वस्य महानसत्वज्ञानप्रयोज्यपर्वतीयवह्निविधेयत्वस्य च विशिष्टस्याऽप्रसिद्ध्या तदऽभावबोधनाऽसंभवेपि वह्निविधेयतायां द्रव्यत्वमहानसत्वादिज्ञानप्रयोज्यत्वाभावो नञा बोधयितुं शक्यते—द्रव्यत्वज्ञानप्रयोज्यत्वस्य प्रमेयत्वावच्छिन्नविधेयतायां प्रसिद्धत्वात्, महानसत्वज्ञानप्रयोज्यत्वस्य महानसीयवह्निविधेयतायां प्रसिद्धत्वात् तदभावबोधने विरोधाभावादित्यर्थः ।

ननु ज्ञानप्रयोज्यत्वे विधेयत्वे च पृथक् पृथक् शक्तिस्वीकारेण यथोक्तरीत्या वह्निविधेयतायां द्रव्यत्वज्ञानप्रयोज्यत्वाभावस्य सत्त्वात् 'पर्वतो वन्हिमान् धूमान्न द्रव्यत्वात्' इति प्रयोगो भवति एवं तत्तद्वह्नित्वावच्छिन्नविधेयता हि तत्तद्धूमत्वावच्छिन्नविषयकज्ञानप्रयोज्या भवति न तु सामान्यतो धूमत्वावच्छिन्नविषयकज्ञानप्रयोज्येति धूमत्वावच्छिन्नविषयकज्ञानाऽप्रयोज्यायास्तत्तद्वह्नित्वावच्छिन्नविधेयताया वह्नावऽबाधितत्वात् 'पर्वतो वह्निमान् न धूमात्' इत्यपि प्रयोगः स्यादित्याशङ्क्याह—न चैवमिति । उत्तरमाह—पर्वतादीति, 'पर्वतो वह्निमान् न धूमात्' इत्यत्र नञा पर्वतनिष्ठविशेष्यतानिरूपिता या वह्नित्वावच्छिन्ना यावद्विधेयता तादृशविधेयतात्वावच्छेदेन धूमत्वावच्छिन्नविषयकज्ञानाऽप्रयोज्यत्वं बोधयितुं शक्यते तत्तु न संभवति—पर्वतनिष्ठविशेष्यतानिरूपितवह्नित्वावच्छिन्नविधेयतात्वावच्छेदेन धूमत्वावच्छिन्नविषयकज्ञानाऽप्रयोज्यत्वस्याऽसत्त्वादिति न 'पर्वतो वह्निमान् न धूमात्' इति प्रयोगस्यापत्तिरित्यर्थः ।

ननु 'पर्वतो वह्निमान् न धूमात्' इत्यत्र विधेयतात्वेनैव विधेयता पञ्चम्यर्थोऽस्ति न तु वह्नित्वावच्छिन्नविधेयता पञ्चम्यर्थो न वा वह्नित्वावच्छिन्नविधेयतात्वमन्वयितावच्छेदकं तथा च यत्र वह्नित्वावच्छिन्नविधेयतात्वमन्वयितावच्छेदकं स्यात्तत्रैव तदवच्छेदेन=वह्नित्वावच्छिन्नविधेयतात्वावच्छेदेनेतरस्य=अ[illegible]पि—अत्र तु वह्नित्वावच्छिन्नत्वेना-

यत्र वह्नित्वावच्छिन्नविधेयतात्वमन्वयितावच्छेदकं तत्रैव तदवच्छेदेनेतरान्वयः संभवति- अत्र च वह्नित्वावच्छिन्नत्वाविशेषितं विधेयतात्वमेव तथेति कथं तदवच्छेदेनाभावान्वय इति तु न शङ्क्यम्-पञ्चम्याद्यर्थविधेयताया वह्न्यादौ वह्नित्वाद्यवच्छेदेनाऽन्वयोपगमात् तदवच्छेदेन तदन्वये चावच्छेदकतद्रूपस्य तद्विशेषणांशे धर्मिपारतन्त्र्येण प्रकारत्वात् । प्रकृते स्वरूपसंबन्धरूपवह्नित्वाद्यवच्छिन्नत्वेन सहितस्य विधेयतात्वस्यैवान्वयितावच्छेदकत्वात् ।

वह्न्यादिपदमेव तदवच्छिन्नविधेयताशालिज्ञानपरं तदुत्तरमतुबादिप्रत्ययो विशेष्यतारूपसंबन्धपर इति प्राचीनमते तु वह्नित्वाद्यवच्छिन्नविधेयतात्वस्यान्वयितावच्छेदकत्वमविवादमेव ।

---

ऽविशेषितमेव विधेयतात्वं तथा=अन्वयितावच्छेदकमस्तीति कथं तदवच्छेदेन=वह्नित्वावच्छिन्नविधेयतात्वावच्छेदेनाऽभावान्वयः=धूमत्वावच्छिन्नविषयकज्ञानप्रयोज्यत्वाभावस्यान्वयः स्यात् ? तथा च किंचिद्विधेयतायामभावान्वयो वक्तव्यस्तद्विधेयतायां च धूमत्वावच्छिन्नविषयकज्ञानप्रयोज्यत्वाऽभावस्य न बाध इति ' पर्वतो वह्निमान् न धूमात् ' इति प्रयोगः स्यादेवेति " पर्वतादिविशेष्यतानिरूपित " इत्यादिपरिहारो न युक्तिसंगत इत्याशङ्कायामाह-यत्रेति । परिहारमाह-पञ्चम्याद्यर्थेति, तदवच्छेदेन=वह्नित्वावच्छेदेन तदन्वये=पञ्चम्यर्थविधेयताया अन्वये चावच्छेदकतद्रूपस्य=वह्नित्वस्य तद्विशेषणांशे=वह्निविशेषणीभूतपञ्चम्यर्थविधेयतायां धर्मिपारतन्त्र्येण=वह्निद्वारा प्रकारत्वादित्यन्वयः । उपसंहरति-प्रकृते इति, अत्र विधेयतायां यद्यप्यनतिप्रसक्तत्वरूपं वह्नित्वावच्छिन्नत्वं न संभवति-जलत्वाद्यवच्छिन्नत्वस्यापि संभवात् तथापि स्वरूपसंबन्धरूपं तु संभवतीति स्वरूपसंबन्धरूपं यद् वह्नित्वावच्छिन्नत्वं तेन सहितस्यैव विधेयतात्वस्यान्वयितावच्छेदकत्वं प्राप्तं तथा च वह्नित्वस्य विधेयताविशेषणत्वे प्राप्ते वह्नित्वावच्छिन्नविधेयतात्वमेवाऽन्वयितावच्छेदकं जातं वह्नित्वावच्छिन्नविधेयतात्वावच्छेदेन तु धूमत्वावच्छिन्नविषयकज्ञानाऽप्रयोज्यत्वं नास्त्येवेति न ' पर्वतो वह्निमान् न धूमात् ' इति प्रयोगस्यापत्तिरित्यर्थः ।

प्राचीनमतमाह-वह्न्यादिपदमिति, वह्निपदं वह्नित्वावच्छिन्नविधेयताशालिज्ञानपरं वह्न्यादिपदोत्तरवर्तमानमतुबादिप्रत्ययश्च विशेष्यतारूपसंबन्धपरः पञ्चम्यर्थश्च पूर्ववत् प्रयोज्यत्वं तथा च ' पर्वतो वह्निमान् ' इत्यत्र ' धूमज्ञानप्रयोज्यं यद् वह्नित्वावच्छिन्नविधेयताकज्ञानं तद्विशेष्यताश्रयः पर्वतः ' किं वा ' विशेष्यतासंबन्धेनोक्तविधेयताकज्ञानवान् पर्वतः ' इति शाब्दबोधः, उक्तानुमितौ पर्वते विशेष्यता भासते एव । एतादृशप्राचीनमते तु वह्नित्वावच्छिन्नविधेयतात्वस्याऽन्वयितावच्छेदकत्वमऽविवादमेव-वह्निपदस्यैव वह्नित्वावच्छिन्नविधेयताशालिज्ञानपरत्वात्, वह्नित्वावच्छिन्नविधेयतात्वावच्छेदेन तु धूमत्वावच्छिन्नविषयकज्ञानप्रयोज्यत्वाभावस्य बाधात् ' पर्वतो वह्निमान्न धूमात् ' इत्यादिप्रयोगस्यापत्तिर्नास्त्येवेत्यर्थः ।

विधेयतायास्तत्तत्संबन्धावच्छिन्नविधेयतात्वेन पञ्चम्याद्यर्थत्वं स्वीकरणीयं तेन 'अयं जानाति आत्मत्वान्न द्रव्यत्वात्' इत्यादौ विषयतासंबन्धावच्छिन्नायां प्रकृतविशेष्यतानिरूपितज्ञानविधेयतायां द्रव्यत्वादिरूपलिङ्गज्ञानप्रयोज्यत्वसत्त्वेपि नावच्छेदकावच्छेदेनाऽभावान्वयायोग्यत्वम्- संबन्धविशेषावच्छिन्नविधेयतात्वरूपाऽन्वयितावच्छेदकावच्छेदेनाऽभाववत्त्वबोधात् ।

एवं ज्ञानप्रयोज्यत्वप्रविष्टं ज्ञानमपि तत्तत्संबन्धावच्छिन्नप्रकारकत्वविशेषितमर्थः, तेन समवायेन हेतुत्वपरस्य 'अयं वह्निमान् तद्रूपान्न तु धूमात्' इतिप्रयोगस्य नाऽयोग्यता-वह्निविधेयतायां संयोगेन धूमप्रकारकज्ञानप्रयोज्यत्वसत्त्वेपि समवायसंबन्धावच्छिन्नतत्प्रकारताशालिज्ञानप्रयोज्यतात्वरूपान्वयितावच्छेदकावच्छिन्नाभाववस्याऽबाधात् । संबन्धविशेषघटितधर्मस्यान्वयितावच्छेद-

---

नवीनमतं परिष्करोति-विधेयताया इति, तत्तत्संबन्धावच्छिन्नैव विधेयता पञ्चम्यर्थ इत्यर्थः। फलमाह-तेनेति, यदि तत्तत्संबन्धावच्छिन्नविधेयता पञ्चम्यर्थो न स्यात्तदा 'अयं जानाति आत्मत्वान्न द्रव्यत्वात्' इति प्रयोगस्याऽप्रामाण्यं स्यात्-घटादिद्रव्येपि विषयतासंबन्धेन ज्ञानं वर्तते इति तत्र ज्ञानत्वावच्छिन्नविधेयतायां द्रव्यत्वज्ञानाप्रयोज्यत्वस्याभावात् तत्र द्रव्यत्वस्यैव ज्ञानप्रयोजकत्वात्, यदा च तत्तत्संबन्धावच्छिन्नविधेयता पञ्चम्यर्थस्तदा विषयतासंबन्धावच्छिन्नायां प्रकृत ( घटादिनिष्ठ ) विशेष्यतानिरूपितज्ञाननिष्ठविधेयतायां द्रव्यत्वरूपलिङ्गज्ञानप्रयोज्यत्वस्य सत्त्वेपि. अवच्छेदकावच्छेदेन=ज्ञानत्वावच्छिन्नविधेयतात्वावच्छेदेनाऽभावान्वयस्य=द्रव्यत्वज्ञानप्रयोज्यत्वाभावान्वयस्याऽयोग्यत्वं नास्ति-संबन्धविशेषावच्छिन्नविधेयतात्वरूपं यदन्वयितावच्छेदकं तदवच्छेदेनैवाऽभाववत्त्वबोधात्=अभावान्वयबोधस्य जायमानत्वात्, तथा च 'अयं जानाति ( ज्ञानवान् ) आत्मत्वान्न द्रव्यत्वात्' इत्यत्र समवायसंबन्धावच्छिन्नैव विधेयता पञ्चम्यर्थोस्ति समवायसंबन्धावच्छिन्नज्ञानीयविधेयतायां च आत्मत्वज्ञानप्रयोज्यत्वमेवास्ति न तु द्रव्यत्वज्ञानप्रयोज्यत्वमिति द्रव्यत्वज्ञानप्रयोज्यत्वाभावाऽन्वययोग्यतायाः सत्त्वान्न 'अयं जानाति आत्मत्वान्न द्रव्यत्वात्' इति प्रयोगस्यानुपपत्तिरित्यर्थः ।

साध्यनिष्ठविधेयतां परिष्कृत्य विधेयताप्रयोजकज्ञानं परिष्करोति-एवमिति, यथा विधेयतायां तत्तत्संबन्धावच्छिन्नत्वस्य निवेशः कृत एवं ज्ञानप्रयोज्यत्वमपि यद्विधेयतायां वर्तते तत्प्रविष्टं यज्ज्ञानं प्रयोजकीभूतज्ञानं तन्निष्ठप्रकारकत्वेपि तत्तत्संबन्धावच्छिन्नत्वस्य निवेशः कार्य इति यद् धूमपदस्य धूमज्ञानमर्थ इत्युक्तं तत्र धूमपदस्य तत्तत्संबन्धावच्छिन्नप्रकारकत्वविशिष्टं ज्ञानमर्थ इत्यर्थः। फलमाह-तेनेति, अयम=वह्न्यवयवः वह्निमान् तद्रूपात्=वह्नित्वात्, वह्न्यवयवे समवायेन वह्नित्वं वर्तते तदेव हेतुः, वह्न्यवयवे समवायेन धूमस्य वह्निज्ञापकत्वं न संभवतीत्युक्तम् 'न धूमात्' इति । अयोग्यताऽभावमुपपादयति-वह्नीति । यदि तत्तत्संबन्धावच्छिन्नप्रकारकत्वविशिष्टज्ञानस्य ज्ञानप्रयोज्यत्वांशे प्रवेशो न स्यात्तदा 'अयं वह्निमान् तद्रूपान्न तु धूमात्' इति प्रयोगस्य

कतंया भाननियामकं तु तात्पर्यमेव । वह्न्यादिविधयताया व्याप्त्यादिघटकाभावादिज्ञानप्रयोज्यत्वसत्त्वेपि 'पर्वतो वह्निमानऽभावात्' इत्यादिर्न प्रयोगः—मुख्यविशेष्यतानिरूपितप्रकारताया एव निवेशनीयत्वादिति दिक् ।

'केन हेतुना' 'कस्मै हेतवे' इत्यादौ विभक्तिभिर्हेतुताविशिष्टे हेतुता बोधयितुमशक्या—पौनरुक्त्यादिति तु नशङ्क्यम्—हेतुशब्दस्य स्वरूपयोग्यपरत्वात् विभक्तेः

---

प्रामाण्यं न स्यात्—संयोगसंबन्धावच्छिन्नप्रकारकत्वविशिष्टधूमज्ञानप्रयोज्यत्वस्यैव वह्निनिष्ठविधेयतायां सत्त्वेन संयोगसंबन्धावच्छिन्नप्रकारकत्वविशिष्टधूमज्ञानप्रयोज्यत्वाभावस्याऽसत्त्वात्, यदा च तत्तत्संबन्धावच्छिन्नप्रकारकत्वविशिष्टमेव ज्ञानं ज्ञानप्रयोज्यत्वांशे प्रविष्टं तदा तु 'अयं वह्निमान् तद्रूपाद् न तु धूमात्' इत्यत्र समवायेनैव हेतोर्हेतुत्वमभीष्टमस्तीति प्रयोजकीभूतहेतुज्ञाननिष्ठं प्रकारकत्वं समवायसंबन्धावच्छिन्नं जातमिति समवायसंबन्धावच्छिन्नप्रकारकत्वविशिष्टहेतुज्ञानं प्रयोजकं ग्राह्यं तथा च वह्निविधेयतायां संयोगेन धूमप्रकारकं यज्ज्ञानं तत्प्रयोज्यत्वसत्त्वेपि=संयोगसंबन्धावच्छिन्नप्रकारकत्वविशेषितधूमज्ञानप्रयोज्यत्वसत्त्वेपि समवायसंबन्धावच्छिन्ना या तत्प्रकारता धूमनिष्ठा प्रकारता तादृशप्रकारताशालि ( समवायसंबन्धावच्छिन्नप्रकारकत्वविशिष्टम् ) यज्ज्ञानं समवायेन धूमज्ञानं तादृशज्ञानप्रयोज्यतात्वरूपं यदन्वयितावच्छेदकं तदवच्छिन्नाभावस्य=समवायेन धूमज्ञानप्रयोज्यत्वाभावस्यात्र वह्निविधेयतायामऽबाधात्=संभवात्=वह्निविधेयतायां समवायेन धूमज्ञानप्रयोज्यत्वस्याऽसंभवात् वह्नित्वज्ञानप्रयोज्यत्वस्य च संभवात् 'अयं वह्निमान् तद्रूपान्न तु धूमात्' इति प्रयोगस्याऽयोग्यता=अनुपपत्तिर्नास्तीत्यर्थः । ननु साध्यनिष्ठविधेयतायां प्रयोजकीभूतज्ञाननिष्ठप्रकारतायां चामुकसंबन्धावच्छिन्नत्वमस्ति अमुकसंबन्धावच्छिन्नत्वं नास्तीत्यत्र किं नियामकमित्याशङ्क्याह—संबन्धविशेषेति, धर्मस्य=विधेयतात्वादेः । ननु वह्निविधेयतायां व्याप्तिविशिष्टधूमज्ञानप्रयोज्यत्वं वक्तव्यं व्याप्तिश्च साध्याभाववदऽवृत्तित्वमिति वह्निविधेयतायां व्याप्तिविशिष्टधूमज्ञानघटकाभावप्रयोज्यत्वमपि प्राप्तमिति 'पर्वतो वह्निमानऽभावात्' इत्यपि प्रयोगः स्यादित्याशङ्क्याह—वह्न्यादीति । प्रयोगापत्त्यऽभावे हेतुमाह—मुख्येति, अत्र मुख्यविशेष्यता पर्वतनिष्ठा ग्राह्या तथा च पर्वतनिष्ठमुख्यविशेष्यतानिरूपिता प्रकारता धूमे एव वर्तते न तूक्ताभावे इति न 'पर्वतो वह्निमानऽभावात्' इति प्रयोगापत्तिः । धूमनिष्ठापि सा प्रकारता स्वनिरूपितप्रकारितावत्त्वसंबन्धेन धूमज्ञाने वर्तते स्वं धूमनिष्ठप्रकारता । उक्ताभावे तु व्याप्तिनिष्ठविशेष्यतानिरूपितप्रकारता वर्तते. व्याप्तौ च धूमनिष्ठविशेष्यतानिरूपितप्रकारता वर्तते. धूमे च पर्वतनिष्ठविशेष्यतानिरूपितप्रकारता । मुख्यविशेष्यता पर्वते एवेत्यर्थः ।

केनेति— 'केन हेतुना' इत्यत्र तृतीयया हेतुत्वं बोध्यते प्रकृतिभूतहेतुशब्देन च हेतुत्वविशिष्टहेतुपदार्थो बोध्यते हेतुत्वविशिष्टे हेतुत्वं च न बोधयितुं शक्यते पौनरुक्त्याद् उद्देश्यतावच्छेदकविधेययोरैक्यापाताचेत्यर्थः । उत्तरमाह— हेतुशब्दस्येति, हेतुशब्देन स्वरूपयोग्यतामात्रविशिष्टो हेतुर्बो-

फलोपधानपरत्वात्, 'दण्डवान् रक्तदण्डवान्' इतिवत् कार्यविशेषानुपरक्तहेतुता-विशिष्टे कार्यविशेषोपरक्तहेतुताबोधेऽनाकाङ्क्षताविरहाच्च । न चान्वयबोधसंभवेपि हेतुशब्दप्रयोगवैयर्थ्यम्- फलोपधायकतालाभे स्वरूपयोग्यताया अर्थाल्लाभसंभवादिति वाच्यम्, विभक्तेरन्यार्थताया अप्यन्यत्र दृष्टत्वाद् हेतुतापरत्वनिश्चयार्थं तत्प्रयोगात् ।

सहार्थयोगेपि साहित्यप्रतियोगिवाचकपदात् तृतीया-'पुत्रेण सहागतः' इत्यादौ ।

अथ यदि सहशब्दार्थः समभिव्याहृतपदोपस्थाप्यक्रियासमानकालीनक्रियान्वयित्वम्, तदन्वयित्वं च समभिव्याहृतक्रियाबोधकपदेन क्रियाया यादृशः संबन्धः साहित्यान्वयिनि प्रत्याय्यते तादृशतत्संबन्ध एव स च 'पुत्रेण' इत्यादौ कर्तृत्वम्, 'दध्ना सहौदनो भुज्यते' इत्यादौ कर्मत्वादिः, तृतीयार्थोपि स एव संबन्धः, तथा च पुत्रकर्तृकागमनसमानकालीनागमनकर्तृत्व-दधिकर्मकभोजनसमानकालीनभोजनकर्मत्वादिकं पुरुषौदनादौ तत्रतत्र प्रतीयते इत्युच्यते ?

---

ध्यते तृतीयया च फलजनकत्वविशिष्टहेतुत्वं बोध्यते तथा च यथा 'दण्डवान् रक्तदण्डवान्' इत्यत्र पूर्वोक्तरीत्या नान्वयबोधानुपपत्तिस्तथात्रापि नान्वयबोधानुपपत्तिरित्यर्थः । ननु यत्र फलोपधायकता=फलजनकता भवति तत्र स्वरूपयोग्यतापि भवत्येवेति तृतीयया फलोपधायकताया लाभे स्वरूपयोग्यताया अप्यर्थाल्लाभसंभवाद्धेतुशब्दप्रयोगवैयर्थ्यं तु स्यादेवेत्याशङ्क्याह-न चेति । परिहारमाह- विभक्तेरिति, तृतीया तु करणत्वादावपि भवतीति हेतुशब्दप्रयोगं विना तृतीयाया हेतुत्वपरत्वनिश्चयो न संभवतीति न हेतुशब्दप्रयोगवैयर्थ्यम् । तत्प्रयोगात्=हेतुशब्दप्रयोगात् ।

सहार्थेति- सहार्थयोगे=प्रतियोगित्वसंबन्धेन साहित्यार्थः साहित्यप्रतियोगिपुत्रादौ वर्तते इति पुत्रादिपदात् "सह युक्तेऽप्रधाने" इत्यनेन तृतीया भवतीत्यर्थः ।

शङ्कते- अथेति, 'पुत्रेण सहागतः' इत्यत्र समभिव्याहृतपदम् 'आगतः' इति क्रियाबोधकपदं तदुपस्थाप्या या पुत्रनिष्ठाऽऽगमनक्रिया तत्समानकालिका या पितृनिष्ठाऽऽगमनक्रिया तदन्वयित्वं ( तदाश्रयत्वम् ) सहशब्दार्थः । उक्तक्रियान्वयित्वस्वरूपमाह- तदन्वयित्वमिति, साहित्यान्वयिनि=पितरि पुत्रे वा तादृशतत्संबन्ध एव=तादृश एव तत्संबन्धः=क्रियासंबन्धस्तदन्वयित्वपदार्थः । सः=क्रियासंबन्धश्च 'पुत्रेण सहागतः' इत्यादौ कर्तृत्वम् 'दध्ना सहौदनो भुज्यते' इत्यादौ कर्मप्रत्ययस्थले कर्मत्वं तथा च 'पुत्रेण सहागतः' इत्यत्र सहशब्दार्थ आगमनकर्तृत्वम् 'दध्ना सहौदनो भुज्यते' इत्यादौ च भोजनक्रियाकर्मत्वं सहशब्दार्थः । तृतीयार्थोपि स एव=कर्तृत्वकर्मत्वादिरूपः संबन्ध एव । एतेन य एव सहशब्दार्थः स एव तृतीयार्थ इति प्राप्तम्, तथा च 'पुत्रेण सहागतः' इत्यत्र पुत्रकर्तृकागमनसमानकालीनागमनकर्तृत्वं पुरुषे प्रतीयते 'दध्ना सहौदनो भुज्यते' इत्यत्र च दधिकर्मकभोजनसमानकालीनभोजनकर्मत्व-

तदा सहशब्देनैव तत्तत्क्रियाकर्तृत्वबोधने क्रियापदवैयर्थ्यम्– द्विधाक्रियाभानस्याऽनुपयुक्तत्वं तु, क्रियान्वयिनि क्रियान्वयबोधस्योद्देश्यतावच्छेदकाविधेययोरभेदेन [illegible] 'प्रासोद्धयाऽसंभवाच्च ।

न [illegible]लक्ष्मणप्रसवयं मानकालीनत्वमात्रं सहशब्दार्थः तस्य च क्रियापदोपस्थापितक्रियायामेवान्वय इति क्रियापदसहितसहशब्दादेवोक्तविशिष्टार्थलाभ इति वाच्यम्, एवं सति ' पुत्रेण सहागतः ' इत्यादौ सहशब्दार्थस्य क्रियापदार्थान्वयित्वेनाऽन्यसापेक्षतया तेन सह पुत्रशब्दस्य समासाऽसंभवेन ' सपुत्रः ' इत्यादिप्रयोगानुपपत्तिः, न ह्यत्र समासे सहार्थस्य प्राधान्यं येनान्यसापेक्षत्वेपि समासो भवेत् किं तु बहुव्रीहित्वादन्यपदार्थप्राधान्यमेवेति चेत् ?,

न– समभिव्याहृतपदोपस्थाप्यक्रियाकाल एव सहशब्दार्थः तस्य क्रियान्व-

---

[illegible]दने प्रतीयते इत्यन्वयः । स्वाभिप्रायं प्रकटयति– तदेति, एवं हि सहशब्देनापि क्रियाक[illegible]र्के बोध्यते क्रियापदेनापि क्रियाकर्तृत्वं बोध्यते तत्र द्विधा क्रियाकर्तृत्वबोधनस्योपयोगा[illegible] [illegible]क्रियापदवैयर्थ्यम्, किं च क्रियान्वयिनि क्रियान्वयः संभवत्यपि न– क्रियान्वयिन उद्दे[illegible] क्रियाया एवोद्देश्यतावच्छेदकत्वात् क्रियाया एव च विधेयत्वात् उद्देश्यतावच्छेदकविधेय[illegible] च शाब्दबोधस्यानभिमतत्वादित्याह– क्रियान्वयिनीति । " द्विधाक्रियाभानस्यानुपयुक्त[illegible] इति पाठस्तु काचित्क एव । अत्र च " क्रियाभानस्य " इत्यत्र ' समानक्रियाभा[illegible] इत्येवं पाठो युक्तः ।

न क्रियाकर्तृत्वं सहशब्दार्थः किं तु तत्तत्क्रियासमानकालीनत्वमात्रम्=पुत्रादिकर्तृका[illegible] [illegible]देक्रियासमानकालीनत्वम्; दध्यादिकर्मकभोजनादिक्रियासमानकालीनत्वम्, तस्य च सह[illegible] [illegible]स्य क्रियापदोपस्थापितक्रियायाम्=पित्रादिकर्तृकक्रियायामन्वयः– पुत्रकर्तृकागमनक्रिया[illegible] [illegible]लीना याऽऽगमनक्रिया तत्कर्ता पितेति वाक्यार्थस्तथा च क्रियापदसहितादेव सहशब्दा[illegible] [illegible]ष्टार्थस्य=पुत्रादिकर्तृकागमनादिक्रियासमानकालीनक्रियाकर्तृत्वस्य लाभः संभवति न [illegible]दरहितादपि सहशब्दादिति न क्रियापदवैयर्थ्यमित्याशङ्कयाह– न चेति । उक्ते दोष[illegible] [illegible]मिति, यदि ' पुत्रेण सहागतः ' इत्यादौ सहशब्दार्थस्य क्रियायामन्वयः स्यात्तदा [illegible]न्यसापेक्षतया=क्रियासापेक्षतया तेन=सहशब्देन सह पुत्रशब्दस्य समासो न स्यात् [illegible]स्परस[illegible] [illegible]रेव समाससंभवादिति ' सपुत्र आगतः ' इति प्रयोगो नोपपद्येतेत्यर्थः । उक्ते [illegible]माह– न हीति, प्राधान्ये सति त्वन्यसापेक्षत्वेपि समासो भवति यथा ' राजपुरुषः ' इत्यत्र [illegible]पदार्थस्य प्रधानत्वात् तेन सह सुन्दरपदसमासेन ' सुन्दरराजपुरुषः ' इत्येवं समासो [illegible] । ' सपुत्रः ' इत्यत्र तु बहुव्रीहिसमासत्वादन्यपदार्थस्य=पितृपदार्थस्यैव प्राधान्यं न सहा[illegible] येनान्यसापेक्षत्वेपि समासो भवेदित्यर्थः ।

[illegible]येत्यादिनाशङ्कितं परिहरति– नेति, समभिव्याहृतपदम्=आगत इत्यादिपदम् । तस्य=

यिनि नामार्थे एवान्वयः । तादृशकालविशिष्टे नामार्थे क्रियान्वये च क्रियाया-मपि तादृशकालावच्छिन्नत्वं भासते- उद्देश्यतावच्छेदकावच्छेदेन [illegible] विधेयान्वयस्य व्युत्पत्तिसिद्धत्वात्, अतः क्रियाद्वयसमानकालीनत्वलाभ इ[illegible]स्यात् ।

अथ वाऽऽगमनसमानकालीनाऽऽगमनादिकमेव सहशब्द[illegible]या अर्थाल्ला[illegible]र्तृत्वा-दिसंवन्धेन पुरुषादावन्वयः, तादृशसंवन्धेन तद्विशिष्टे च '[illegible]आगतः' 'आग-च्छति' इत्यादिपदोपस्थाप्याऽऽगमनकर्तृत्वादीनामन्वये न व्युत्पत्तिविरोधः- विधेयस्योद्देश्यतावच्छेदकप्रकाराऽभेदविरहात् । न च सहशब्दार्थान्वयबलादेव तत्क्रियाकर्तृत्वस्य पुरुषादौ लाभे प्रकारतयापि क्रियापदेन तत्प्रतिपादनमफल-मिति तत्प्रयोगो व्यर्थ इति वाच्यम्, समभिव्याहृतपदेन तत्तत्क्रियाया अनु-पस्थाने सहशब्देनापि तत्तत्क्रियाघटितसाहित्यस्य शक्यस्य बोधनं न संभव-

---

सहशब्दार्थभूतस्यागमनादिक्रियाकालस्य । क्रियान्वयिनामार्थे=पित्रादौ । तादृशेति- उक्तसह-शब्दार्थभूतकालविशिष्टे नामार्थे पित्रादावागमनादिक्रियान्वये कृते क्रियायामपि=पित्रादिसमवे-तागमनादिक्रियायामपि तादृशकालावच्छिन्नत्वम्=सहशब्दार्थभूतपुत्रकर्तृकागमनक्रियाकालाव-च्छिन्नत्वं भासते- क्रियाया उक्तसहार्थभूतकालस्य च पित्रादौ सत्त्वात् सामानाधिकरण्येन सहार्थभूतकालावच्छिन्नत्वं पित्रादिकर्तृकक्रियायां प्राप्तमित्यर्थः । उक्ते हेतुमाह- उद्देश्यतेति, उद्देश्यतावच्छेकावच्छेदेन=उद्देश्यतावच्छेदकावच्छिन्ने विधेयान्वयस्य स्वीकारात्- उद्देश्यताव-च्छेदकं चात्र सहशब्दार्थभूत उक्तकालः कालाधिकरणे क्रियान्वये कृते क्रियायामपि तादृश-कालावच्छिन्नत्वं प्राप्तमेव । उपसंहरति- अत इति, क्रियाद्वयस्य=पुत्रकर्तृकागमनादिक्रियायाः पितृकर्तृकागमनादिक्रियायाश्च समानकालिकत्वलाभ इत्यर्थः ।

पक्षान्तरमाह- अथ वेति । तस्य=उक्तसहशब्दार्थस्य । आदिपदात् कर्मत्वादिसंग्रहः । ताद-शसंवन्धेन=कर्तृत्वसंबन्धेन तद्विशिष्टे=सहशब्दार्थीभूतागमनसमानकालीनागमनादिविशिष्टे । व्युत्पत्तिविरोधाभावे हेतुमाह- विधेयस्येति, 'पुत्रेण सहागतः' इत्यत्र विधेयमागमनकर्तृत्वं तस्योक्तागमनविशिष्टेऽन्वयाद् उद्देश्यमाऽऽगमनविशिष्टम् उद्देश्यतावच्छेदकीभूतप्रकारश्चागमनमेव तयोश्चागमनकर्तृत्वागमनयोः परस्परं भेदान्न व्युत्पत्तिविरोधः- उद्देश्यतावच्छेदकविधेययोरभेदे एव व्युत्पत्तिविरोधस्योक्तत्वात् । ननूक्तसहशब्दार्थस्य कर्तृत्वादिसंबन्धेनैव पित्रादावन्वय उक्तः संब-न्धभूतं कर्तृत्वं च तत्क्रियाकर्तृत्वमेव तथा च सहशब्दार्थान्वयबलादेव पित्रादौ तत्क्रियाकर्तृ-त्वादिकस्य लाभः संभवतीति पुनः प्रकारतयापि क्रियापदेन तत्प्रतिपादनम्=कर्तृत्वप्रति-पादनम् निष्फलमेवेति तादृशकर्तृत्वप्रतिपादकक्रियापदस्य प्रयोगो व्यर्थ एवेत्याशङ्क्याह- न चेति, 'आगच्छति' 'गच्छति' 'भुङ्क्ते' इत्यादिक्रियापदप्रयोगे सत्येव क्रियापदोपस्थाप्य-तत्तत्क्रियाघटितस्य स्वशक्यार्थस्य सहशब्देन बोधनं संभवति समभिव्याहृतक्रियापदोपस्थाप्याया एव क्रियाया सहशब्दार्थेऽन्तर्भावादिति न क्रियापदप्रयोगो व्यर्थः किं त्वावश्यक एवेत्यर्थः ।

तीति क्रियापदप्रयोगस्यावश्यकत्वात् । सहशब्दार्थक्रियायाः कर्तृत्वादिसंबन्धेन नामार्थेऽन्वयश्च न व्युत्पत्तिविरुद्धः— सहशब्दस्याऽधातुत्वाद् निपातत्वाच्च ।

न च "प्रासोष्ट शत्रुघ्नमुदारचेष्टमेका सुमित्रा सह लक्ष्मणेन" इत्यादौ शत्रुघ्नप्रसवलक्ष्मणप्रसवयोः समानकालीनत्वाभावात् क्रियाद्वयसमानकालीनतायाः सहशब्दार्थत्वाऽसंभव इति वाच्यम्, तत्रापि स्थूलकालघटितसमानकालीनत्वसत्त्वात् / न च कालत्वेनैव कालस्य तदर्थान्तर्भावे पुत्रागमनपूर्वमागन्तारि 'आगतोयं न पुत्रेण सह' इति प्रयोगानुपपत्तिः— पुत्रागमनाधिकरणस्थूलकालवृत्त्याऽऽगमनकर्तृत्वसत्त्वेनाऽन्वयितावच्छेदकरूपावच्छिन्नप्रतियोगिताकसाहित्याभावबाधादिति वाच्यम्, तत्र क्षणत्वेनैव कालस्य सहशब्दार्थेऽन्तर्भावनीयत्वात् ।

एवं यत्रैककालेपि विभिन्नस्थले भुञ्जानमधिकृत्य 'न सह भुङ्क्ते' इति

---

नु कर्तृत्वसंबन्धो हि भेदसंबन्ध एवेति सहशब्दार्थस्य नामार्थे पुरुषे कथं भेदसंबन्धेनान्वयः स्यात् "निपातातिरिक्तनामार्थयोः ६८" इत्याद्युक्तव्युत्पत्तिविरोधादित्याशङ्क्याह— सहशब्दाेति, नामार्थे निपातातिरिक्तनामार्थस्य धात्वर्थस्य च भेदसंबन्धेनान्वयो व्युत्पत्तिविरुद्धोस्ति न तु निपातार्थस्यापि सहशब्दश्च निपात एव न धातुरिति सहशब्दार्थस्य पुरुषे कर्तृत्वलक्षणभेदसंबन्धेनाप्यन्वये न व्युत्पत्तिविरोध इत्यर्थः । 'दध्ना सहौदनो भुज्यते' इत्यत्र तु भोजनसमानकालीभोजनं सहशब्दार्थस्तस्य कर्मत्वसंबन्धेनौदनेऽन्वयः ।

प्रथमं सहार्थमतमुद्दिश्याशङ्कते— न चेति, प्रसवद्वयस्यैकस्मिन् काले ह्यऽसंभवात् लक्ष्मणसवक्रियायाः शत्रुघ्नप्रसवक्रियायाश्चैककालिकत्वं न संभवतीत्यर्थः । उत्तरमाह— तत्रापीति, त्र=' प्रसोष्ट ' इत्युक्तोदाहरणे, स्थूलकालगतैक्येन शत्रुघ्नप्रसवलक्ष्मणप्रसवक्रिययोः समानकालिकत्वं संभवतीत्यर्थः । ननु यदि कालत्वेनैव रूपेण कालस्य सहशब्दार्थघटकत्वमस्ति तदा पुत्रापेक्षया यः पुरुषः पूर्वमेवागतस्तमुद्दिश्य ' आगतोयं न पुत्रेण सह' इतीष्टोपि प्रयोगो नोपद्येत— पितृपुत्रागमनक्रिययोः सूक्ष्मकालस्य भेदेपि स्थूलकालस्यैक्येन समानकालिकत्वसंभवात्. पुत्रागमनपूर्वमागन्तारि पुरुषे पुत्रागमनाधिकरणीभूतो यः स्थूलकालस्तादृशस्थूलकालवृत्ति यदागमनं तत्कर्तृत्वस्य सत्त्वेन अन्वयितावच्छेदकं यद्रूपमाऽऽगमनकर्तृत्वसमानाधिकरणपुत्रत्वं तादृशरूपावच्छिन्नप्रतियोगिताकं यत्साहित्यं तादृशसाहित्याभावस्य बाधात्= अत्र स्थूलकालघटितस्य पुत्रप्रतियोगिकसाहित्यस्यैव सत्त्वात्, साहित्याभावे एव च 'आगतोयं न पुत्रेण सह' इति प्रयोगष्टत्वादित्याशङ्क्याह— न चेति । उत्तरमाह—तत्रेति, तत्र=' आगतोयं न पुत्रेण सह ' इत्यत्र कालस्य क्षणत्वेनैव रूपेण— सहशब्दार्थेऽन्तर्भावो विज्ञेयस्तथा च पुत्रागमनपित्रागमनयोरेकक्षणेत्त्वेन साहित्याभावस्य सत्त्वादेव नोक्तप्रयोगानुपपत्तिरित्यर्थः ।

एवमिति— यथोक्तस्थले क्षणत्वेनैव कालस्य सहशब्दार्थेऽन्तर्भावस्तथा एककालेपि विभिन्नस्थले भुञ्जानमधिकृत्य 'न सह भुङ्क्ते' इति प्रयुक्तस्य वाक्यस्योपपत्त्यर्थं शालादिरूपभोजनाधिकरण-

प्रयुज्यते तत्रैकशालारूपभोजनाधारोपि सहशब्दार्थेऽन्तर्भावनीयः । अत एव "आलापाद् गात्रसंस्पर्शान्निश्वासात् सहभोजनात्" इत्यादिना पतितभोजनसमानकालीनभोजनमात्रस्य पापजनकत्वं न बोध्यते— एकपङ्क्तेरपि विवक्षणात् । एवम्—

" याजनं योनिसंबन्धं स्वाध्यायं सह भोजनम् ।
सद्यः पतति कुर्वाणः पतितेन न संशयः ॥"

इत्यादावेकदैकपात्रभोजनस्यैव सद्यःपातहेतुत्वं प्रतीयते तत्र तादृशार्थस्यैव सहशब्देन विवक्षणात् ।

अथ नामार्थस्यैव सहार्थविशेष्यतयाऽन्वयोपगमे 'पुत्रेण सह नाऽऽगच्छत्ययम्' इत्यादौ सहशब्दार्थपुत्रसाहित्याभाव एव पुरुषांशे नञा बोध्यते इत्युपगन्तव्यं तच्च नोपपद्यते, तथा सत्याख्यातार्थोद्देश्यतावच्छेदकतयैव नञर्थभानस्योपगन्तव्यतया प्रसज्यप्रतिषेधस्थले निषेधस्य प्राधान्येन भाननियमव्याघातात् ।

---

स्यापि सहशब्दार्थेन्तर्भावो विज्ञेयस्तथा च समानाधिकरणकभोजनं सहशब्दार्थस्तस्योक्तरीत्या कर्तृत्वसंबन्धेन भोजनकर्तर्यऽन्वय इत्येकस्मिन् स्थले भोजने सति ' सह भुङ्क्ते' इति संभवति सहशब्दार्थीभूतसमानाधिकरणकभोजनाभावे च ' न सह भुङ्क्ते' इत्यप्युपपद्यते, अन्यथा समानकालिकभोजनस्य सत्त्वादेव 'न सह भुङ्क्ते' इति नोपपद्येतेत्यर्थः । अत एवेति— सहशब्दार्थे दैशिकसामानाधिकरण्यस्यापि प्रवेशात् "आलापाद् गात्रसंस्पर्शात्" इत्यत्र पतितभोजनसमानकालिकभोजनस्य न पापजनकत्वं प्रत्याय्यते अन्यथैकस्मिन् काले विभिन्नस्थलेपि भोजनेन पापं स्यादित्येकस्मिन् काले एकपङ्क्तौ पतितेन सह भोजनेन पापं भवतीति बोध्यते तथा चात्र समानपङ्क्तिकभोजनं सहशब्दार्थ इत्यर्थः । एवमिति— यथोक्तस्थले समानपङ्क्तिकत्वस्य सहशब्दार्थेन्तर्भावस्तथा समानपात्रकत्वस्यापि सहशब्दार्थेन्तर्भावो विज्ञेयस्तथा च "याजनं योनिसंबन्धम्" इत्यत्रैककालिकैकपात्रभोजनस्यैव सद्यःपातहेतुत्वं प्रतीयते न तु विभिन्नपात्रकभोजनस्यापीत्यर्थः । पतितेन=पतितेन सहेत्यर्थः । तादृशार्थस्य=ऐककालिकैकपात्रभोजनस्य सहशब्दार्थत्वात् ।

यदुक्तम्— "तस्य ( सहशब्दार्थस्य ) क्रियान्वयिनि नामार्थे एवान्वयः" इति तत्राशङ्कते— अथेति, यत्र प्रतियोगिनोऽन्वयो भवति तत्रैव तदभावस्याप्यन्वयो भवतीति नामार्थस्यैव यदि सहार्थविशेष्यत्वं नाम 'पुत्रेण सहागच्छति' इत्यत्र सहार्थस्योक्तरीत्या यदि नामार्थे पुरुषेऽन्वयस्तदा 'पुत्रेण सह नागच्छत्ययम्' इत्यत्र सहशब्दार्थपुत्रसाहित्याभावस्यापि नञर्थस्य पुरुषे एवान्वयः स्यात् स च न संभवति तथा सति=सहशब्दार्थपुत्रसाहित्याभावस्य पुरुषेऽन्वये सति आख्यातार्थो य आश्रयत्वं तदुद्देश्यः पुरुषस्तन्निष्ठा योद्देश्यता तादृशोद्देश्यतावच्छेदकत्वं नञर्थाभावस्य स्यादिति नञर्थाभावस्य पुरुषविशेषणत्वात् प्राधान्यं न स्याद् इष्टं च प्रसज्यप्रतिषे

एवमनागच्छन्तमपि पुरुषमधिकृत्य तथाप्रयोगात् तत्राऽयोग्यताप्रसङ्गाच्च । एतेन तत्र पर्युदासनञ्वत् क्रियायोगपरित्याग इत्युक्तावपि न प्रतीकारः ।

न च तत्राऽऽगमनाभावकाल एव पुरुषान्वयी सहशब्दार्थः, तथा च पुत्राऽऽगमनाभावकालावच्छिन्नपुरुषे वर्तमानकालावच्छिन्नाऽऽगमनकर्तृत्वाभावः प्रतीयते इति न काचिदनुपपत्तिरिति वाच्यम्, यत्रास्य पुत्र आयाति न स्वयं तत्रापि तादृशप्रयोगात् तत्र च पुत्रागमनकालावच्छिन्नस्याऽऽगमनकर्तृत्वाभावस्य सत्त्वेपि पुत्रागमनाभावकालावच्छिन्नपुरुषे वर्तमानकालावच्छिन्नागमनकर्तृत्वाभावस्याऽसत्त्वेनाऽयोग्यतापातात् ।

---

स्थले निषेधस्य=नञर्थाभावस्य प्राधान्यमिति प्राधान्येन भाननियमस्य व्याघातः स्यात्, अस्ति चात्र प्रसज्यप्रतिषेध एव नञोऽसमस्तत्वाऽदित्यर्थः । दोषान्तरमाह— एवमिति, सहशब्दार्थ-पुत्रसाहित्यस्य पुरुषेऽन्वयसंभवे एव तदभावस्यापि पुरुषेऽन्वयः संभवति तत्र यः खलु कदापि पुत्रेण सह नागच्छति तस्मिन् सहार्थीभूतपुत्रसाहित्यस्य बाधेन योग्यताया अभावात् सहार्थ-प्रतियोगिकाभावस्यापि योग्यता न स्यात्, भवति च तादृशमनागच्छन्तमपि पुरुषमधिकृत्य तथा='पुत्रेण सह नागच्छत्ययम्' इति प्रयोग इत्यर्थः । ननु यथा पर्युदासनञर्थस्य नामार्थेऽन्वयो भवति न क्रियायां तथा तत्र='पुत्रेण सह नागच्छत्ययम्' इत्यत्रापि न नञर्थस्य क्रियायामन्वयः स्वीक्रियते तथा चोक्तस्थले न नञर्थाभावस्य प्राधान्यापेक्षा येन तस्य नामार्थे विशेषणत्वेनाऽप्राधान्ये काचिदनुपपत्तिः स्यादित्याशङ्क्याह— एतेनेति, एवमप्युक्तरीत्याऽनागच्छन्तं पुरुषमधिकृत्य तथाप्रयोगे ह्यऽयोग्यताप्रसङ्गः स्यादेवेति नायमपि पक्षो युक्त इत्यर्थः ।

ननु तत्र='पुत्रेण सह नागच्छत्ययम्' इत्यत्र पुत्रो नागच्छतीति पुत्रागमनाभावस्य सत्त्वात् तादृशाभावकाले पुरुषस्य च सत्त्वात् पुरुषे पुत्रागमनाभावकालावच्छिन्नत्वं वर्तते एवेति पुरुषान्वयी यः पुत्रागमनाभावकालः स एव सहशब्दार्थस्तथा चात्र पुत्रागमनाभावकालावच्छिन्ने पुरुषे नञा वर्तमानकालावच्छिन्नागमनकर्तृत्वाभावः प्रतीयते इति नञर्थाभावस्य कर्तृत्वेऽन्वयेन तद्द्वारा क्रिया-यामप्यन्वयसंभवान्न प्रसज्यप्रतिषेधत्वानुपपत्तिः— नञर्थाभावस्यैव प्राधान्येन भानलाभादित्याशङ्क्याह— न चेति । परिहारमाह— यत्रेति, यदा पुत्र एवायाति न तु तदनन्तरमपि पिता तदापि 'पुत्रेण सह नागच्छत्ययम्' इति प्रयोगो भवति तत्र च पुत्रागमनकालावच्छिन्नस्यागमन-कर्तृत्वाभावस्य=पुत्रागमनकालावच्छिन्ने पुरुषे वर्तमानकालावच्छिन्नागमनकर्तृत्वाभावस्य सत्त्वेपि ( पुत्रागमनस्य सत्त्वेन पुत्रागमनकालावच्छिन्नत्वस्य पुरुषे संभवात् ) पुत्रागमनाभावकालावच्छिन्ने पुरुषे वर्तमानकालावच्छिन्नागमनकर्तृत्वाभावो नैव संभवति पुत्रागमनस्य जातत्वेन पुरुषे पुत्रागमनकालावच्छिन्नत्वस्यैव सत्त्वेन पुत्रागमनाभावकालावच्छिन्नत्वस्यासत्त्वात् पुत्रागमनाभाव-कालावच्छिन्नपुरुषे ह्यसद्भूते वर्तमानकालावच्छिन्नागमनकर्तृत्वाभावस्यान्वयाऽसंभवेनाऽयोग्य-तापातादित्यर्थः ।

मैवम्-सहशब्दार्थस्ततत्क्रियाकालः क्वचित् तत्क्रियान्वयिनि प्रथमान्तपदार्थेऽन्वेति क्वचिच्च समभिव्याहृतक्रियायाम् । 'सपुत्र आगच्छति' इत्यस्य 'पुत्रेण सहागच्छति यः' इतिविग्रहात् प्रथमान्तान्यपदार्थे एव पुत्रागमनकालान्वयो न तु क्रियायामिति न समासानुपपत्तिः, न वाऽन्यपदार्थपुरुषाऽलाभः ।

न चैवं समासलभ्यस्य पुत्रागमनकालावच्छिन्नस्य पुंसो विग्रहवाक्येनापि प्रतिपादनाद् बहुव्रीहिमात्रस्यैव नित्यसमासत्वमिति भज्येतेति वाच्यम्, बहुव्रीहिमात्रस्य तथात्वाऽनियमात् । प्रथमान्तानुपस्थाप्याऽन्यपदार्थबोधकबहुव्रीहेरेव तत्त्वाभ्युपगमात् । अत्र चान्यपदार्थस्य पुरुषस्य प्रथमान्तोपस्थाप्यत्वात् ।

---

अथेत्यादिना शङ्कितं परिहरति- मैवमिति, तत्क्रियाकालः=पुत्रकर्तृकागमनक्रियाकालः । क्वचित्='पुत्रेण सहागतः' इत्यादिनञ्समभिव्याहारहीनस्थले तत्क्रियान्वयिनि=यादृशक्रियायाः सहशब्दार्थे प्रवेशस्तादृश्या आगमनादिक्रियाया अन्वयिनि प्रथमान्तपदार्थे=पुरुषादावन्वयो भवति तथा च पुत्रागमनकालावच्छिन्नः पुरुष आगमनक्रियाकर्तेति शाब्दबोधः पुत्रागमनकाले आगत इति यावत् । क्वचित्='पुत्रेण सह नागच्छति' इत्यादौ स सहशब्दार्थ उक्तक्रियाकालः समभिव्याहृतक्रियायामन्वेति तथा च पुत्रागमनकालिका याऽऽगमनक्रिया तत्कर्तृत्वाभावस्य पुरुषेऽन्वयो भवतीति पुत्रागमनकालिकागमनकर्तृत्वाभाववान् पुरुष इति शाब्दबोधः । सपुत्र इति-'सपुत्र आगच्छति' इत्यस्य 'पुत्रेण सहाऽऽगच्छति यः' इत्येवं विग्रहवाक्यं भवतीति प्रथमान्तयत्पदप्रतिपाद्यस्यान्यपदार्थस्यैव प्राधान्यात् तस्यैव 'सपुत्रः' इति पदेन बोधनात् तस्मिन्नेव प्रथमान्तान्यपदार्थे=प्रथमान्तपदवाच्यभूतेऽन्यपदार्थे पुरुषे पुत्रागमनकालस्य सहशब्दार्थस्यान्वयो भवति न तु क्रियायामिति या पूर्वं ( ४३३ ) समासानुपपत्तिः प्रदर्शिता सापि नास्ति, अन्यपदार्थस्यैव प्राधान्यात् सहशब्दार्थान्वयित्वाच्चान्यपदार्थभूतपुरुषस्य प्रतीत्यभावप्रसङ्गोपि नास्तीति पूर्वोक्ताः सर्वे दोषाः समुद्धृता ज्ञेयाः । 'सपुत्र आगच्छति' इत्यत्र पुत्रागमनकालविशिष्टपुरुषे आगमनकर्तृत्वान्वयः, 'सपुत्रो नागच्छति' इत्यत्र च पुत्रागमनकालिकागमनकर्तृत्वाभावस्य पुरुषेन्वयो विज्ञेयः ।

ननु यदि य एव पुत्रागमनकालावच्छिन्नः पुरुषः 'सपुत्रः' इतिसमासेन प्रतीयते स एवोक्तविग्रहवाक्येनापि प्रतीयते तदा बहुव्रीहिमात्रस्यैव= ( एवकारोऽयोगव्यवच्छेदार्थः ) सकलबहुव्रीहिसमासस्य नित्यत्वमस्तीति नियमव्याघातः स्यात्- समासलभ्यार्थस्य विग्रहवाक्येनाऽलभ्यत्वे ( समासस्थाने विग्रहवाक्यासंभवे ) एव समासस्य नित्यत्वस्वीकारादित्याशङ्क्याह- न चैवमिति । उत्तरमाह- बहुव्रीहीति, सकलबहुव्रीहिसमासस्य तथात्वानियमात्=नित्यत्वानभ्युपगमात्, प्रथमान्तानुपस्थाप्यो योऽन्यपदार्थस्तद्बोधकबहुव्रीहेरेव तत्त्वाभ्युपगमात्=नित्यत्वाभ्युपगमाद् यथा 'प्राप्तमुदकं यं स प्राप्तोदको ग्रामः' 'पीतमम्बरं यस्य स पीताम्बरः' इत्यादौ द्वितीयाद्यन्तयत्पदेनान्यपदार्थोपस्थितिर्भवतीत्येतादृशबहुव्रीहिसमासस्य नित्यत्वम्, अत्र

न च प्रथमार्थे बहुव्रीहिरेवाऽसाधुस्तदुक्तम्- " प्रथमार्थे न भवति- 'वृष्टे देवे गतः' इति " इति वाच्यम्, " अनेकमन्यपदार्थे " इतिसूत्रानुशिष्टबहुव्रीहावेव तन्नियमात्, अत्र च सूत्रान्तरेणैव समासविधानात्. एतदर्थमेव तत्सूत्रप्रणयनात्। 'पुत्रेण सह नागच्छति' इत्यादौ च क्रियायामेव तादृशसहार्थान्वय इति पुत्रागमनकालीनागमनकर्तृत्वाद्यभावः प्रथमान्तार्थे प्रतीयते इति सर्वं सुस्थम्, तथापि 'सपुत्रो नागच्छति' इत्यादौ पूर्वोक्तदिशानुपपत्तिर्द्रष्टव्या। भारमनुद्वहन्तं पुत्रमनुद्वहन्त्यामपि गर्दभ्याम्- 'सहैव दशभिः पुत्रैः' इत्यादौ 'वर्तमाना' इत्यध्याहाराद्वर्तमानत्वक्रियामादायैव साहित्यबोध इति वदन्ति।

" इत्थंभूतलक्षणे " इत्यनेन लक्षणवाचिपदात् तृतीयानुशिष्यते। लक्षणत्वं च

---

'सपुत्रः' इत्यत्र त्वन्यपदार्थस्य पुरुषस्य प्रथमान्तेनैव यत्पदेनोपस्थितिर्भवति- उक्तविग्रहवाक्ये प्रथमान्तस्यैव यत्पदस्य प्रवेशादिति न समासस्य नित्यत्वमित्यर्थः। विग्रहवाक्येऽन्यपदार्थोपस्थापकयत्पदस्य यद्विभक्त्यन्तत्वं भवति बहुव्रीहेरपि तद्विभक्त्यन्तबहुव्रीहित्वं ज्ञेयम्। ननु प्रथमार्थे बहुव्रीहिरेव न भवति अन्यथा 'वृष्टे देवे गतः' इति विग्रहवाक्येपि बहुव्रीहिसमासप्राप्तौ तन्निषेधो नोपपद्येतेत्याशङ्क्याह- न चेति। परिहारमाह- अनेकेति, " अनेकमन्यपदार्थे " इतिसूत्रेण प्रथमार्थे बहुव्रीहिर्न भवतीति तत्सूत्रानुशिष्टप्रथमार्थबहुव्रीहावेव तन्नियमात्=असाधुत्वनियमात्, अत्र='सपुत्रः' इत्यत्र तु सूत्रान्तरेण=" तेन सहेति तुल्ययोगे " इति सूत्रेणैव समासविधानमस्तीति नाऽसाधुत्वम्, एतदर्थमेव='सपुत्रः' इतिप्रयोगसिद्ध्यर्थमेव "तेन सह" इतिसूत्रं प्रणीतमस्तीति कथम् 'सपुत्रः' इतिसमासस्यासाधुत्वं स्यात्, अन्यथैतत्सूत्रमेव व्यर्थं स्यादित्यर्थः। समभिव्याहृतक्रियायां सहशब्दार्थान्वयस्योदाहरणमाह- पुत्रेणेति, तादृशसहार्थान्वयः= पुत्रकर्तृकागमनक्रियाकालान्वयः। उपसंहरति- इतिसर्वमिति, नञ्समभिव्याहारस्थले सहार्थस्य क्रियायामन्वयो भवतीत्युक्तमिति सहशब्दार्थस्य क्रियासापेक्षतया तेन सहशब्देन पुत्रशब्दस्य समासो न स्यादिति 'सपुत्रो नागच्छति' इति प्रयोगः पूर्वोक्तदिशा ( ४३३ पृष्ठोक्तदिशा ) नोपपद्यते इत्याह- तथापीति। भारमिति- गर्दभीपुत्रो न भारमुद्वहति. तादृशपुत्रं च गर्दभ्यपि नोद्वहति किं तु भारमात्रमुद्वहतीति " सहैव दशभिः पुत्रैर्भारं वहति गर्दभी " इत्यत्र 'वर्तमाना' इतिपदस्याध्याहारः कर्तव्यः अध्याहृतवर्तमानपदबोध्यक्रियायामेव सहशब्दार्थसाहित्यस्यान्वयो ज्ञेयः- 'दशभिः पुत्रैः सह वर्तमाना ( दशसंख्याकपुत्रवर्तनकालिकवर्तनक्रियावती )' गर्दभी भारं वहति' इत्यन्वयः, 'वर्तमाना' इतिपदस्याऽनध्याहारे 'पुत्रैः सह भारं वहति' इत्यन्वयापत्त्या गर्दभीपुत्राणामपि भारवाहकत्वं प्राप्नुयात्. न चैतदिष्टमिति 'वर्तमाना' इतिपदस्याध्याहारः कार्य इत्यर्थः।

इत्थंभूतलक्षणतृतीयानिरूपणमारभते- इत्थमिति। लक्षणवाचिपदात्=लक्षणभूतजटादिवाचकपदात् तृतीया भवति यथा 'जटाभिस्तापसः' इति। लक्षणत्वस्वरूपमाह- लक्षणत्व-

व्यावर्तकत्वम्, तच्च विशेष्यतावच्छेदकसमानाधिकरणाभावाऽप्रतियोगित्वम्, तदाश्रयश्च धर्मो द्विविधः- विशेषणमुपलक्षणं च । विद्यमानं सद् व्यावर्तकं विशेषणम्- पुरुषादौ वर्तमानकालावच्छेदेन विद्यमानो दण्डादिः । अविद्यमानं सद् व्यावर्तकमुपलक्षणम्- तापसादेः कालान्तरीणजटादिकम् । विशेषणस्य संबन्धो मतुबादिभिः प्रत्याय्यते- अस्तीत्यर्थे विहितानां वर्तमानसंबन्धार्थकत्वात्, अतः 'जटाभिस्तापसः' इत्यादावऽविद्यमानजटादेः संबन्धविवक्षायां मतुबाद्यनवकाशात् तृतीयैव । तृतीयया चाऽविद्यमानत्वस्येव विद्यमानत्वस्यापि प्रत्यायनाद् विशेषणवाचिपदादपि तृतीया यथा- 'ज्ञायमानत्वेन लिङ्गं करणम्' इत्यादौ ।

---

मिति । व्यावर्तकत्वम्=व्यवच्छेदकत्वम् ( परिचायकत्वमिति यावत् ) तच्च=व्यावर्तकत्वं च । विशेष्यतावच्छेदकेति- यथा विशेष्यतावच्छेदकं यत्तापसत्वं तत्समानाधिकरणाभावाऽप्रतियोगित्वं जटायामस्त्येव तापसत्वावच्छिन्ने कस्मिंश्चित्तापसे जटाया वर्तमानत्वात्, सकलेषु तापसेषु जटासत्त्वासंभवाद् विशेष्यतावच्छेदकावच्छेदेनेति त्यक्त्वा विशेष्यतावच्छेदकसमानाधिकरणेत्युक्तम् । तदाश्रयः=लक्षणत्वाश्रयः । विशेषणोदाहरणमाह- पुरुषादाविति । यथेत्यादिः । उपलक्षणोदाहरणमाह- तापसादेरिति, 'काकवन्तो देवदत्तस्य गृहाः' इति वत् तापसे जटानामसत्त्वेऽप्युपलक्षणत्वं भवत्येव, जटानां वर्तमानकाले तु तापसविशेषणत्वमेव । विशेषणत्वोपलक्षणत्वयोः परिचायकमाह- विशेषणस्येति । अस्तीत्यर्थ इति- "तदस्याऽस्त्यऽस्मिन्निति मतुप्" इत्यादिसूत्रैर्विहितानां मतुबादिप्रत्ययानां वर्तमानसंबन्धार्थकत्वात्=वर्तमानपदार्थसंबन्धबोधकत्वाद् विशेषणस्य वर्तमानत्वाच्च विशेषणवाचकपदात् मतुबादयः प्रत्यया भवन्ति यथा 'दण्डवान्' 'दण्डी' इत्यादि । एतावत्पर्यन्तप्रतिपादनस्य निष्कर्षमाह- अत इति, यतो मतुबादयो विद्यमानस्यैव संबन्धबोधका नाऽविद्यमानस्यापि जटादीनां चाविद्यमानानामेव तापसाद्युपलक्षणत्वं भवति अतो जटादिवाचकपदान्मतुबाद्यनवकाशात् तृतीयैव भवति यथा- 'जटाभिस्तापसः' इति । मतुबाद्यपेक्षया तृतीयाया विशेषमाह- तृतीययेति, मतुबादयस्तु विद्यमानमात्रस्य संबन्धबोधका भवन्ति तृतीया तु विद्यमानाविद्यमानयोरुभयोरपि संबन्धबोधिका भवतीति विशेषणवाचकपदादपि क्वचित् तृतीया भवति यथा- 'ज्ञायमानत्वेन लिङ्गं करणम्' इत्यत्र लिङ्गविशेषणवाचकाज्ज्ञायमानत्वपदात् तृतीया जाता । 'जटाभिस्तापसः' इत्यत्र तृतीयया जटानामविद्यमानत्वं प्रत्याय्यते, 'ज्ञायमानत्वेन लिङ्गं करणम्' इत्यत्र ज्ञायमानत्वस्य विद्यमानत्वं प्रत्याय्यते- ज्ञायमानस्यैव लिङ्गस्य करणत्वस्वीकारात् । तृतीयया विद्यमानत्वाविद्यमानत्वयोः प्रत्यायने योग्यतैव नियामिकेति विज्ञेयम्- क्वचिज्जटानां विद्यमानत्वेपि 'जटाभिस्तापसः' इतिप्रयोगदर्शनादिति ।

अथ तत्र ज्ञायमानत्वादिवैशिष्ट्यं तृतीयया लिङ्गादौ न प्रत्याय्यते. अपि तु पदार्थैकदेशे करणत्वादावेव तदवच्छिन्नत्वमिति चेत् ?, तथापि सा विशेषणतृतीयैव—अनुशासनान्तराभावात् । वस्तुतो लिङ्गादौ ज्ञायमानत्वादिवैशिष्ट्यबोधनेपि संबन्धाविधया करणत्वज्ञायमानत्वाद्योरवच्छेद्यावच्छेदकभावभानसंभवादेकदेशान्वयस्वीकारोऽनुचितः । न च संबन्धविधया करणत्वे एकदेशेऽवच्छिन्नत्वभानेप्येकदेशान्वयध्रौव्यमिति वाच्यम्, करणाभेदरूपे करणत्वे करणस्य संबन्धविधया भासमाने ज्ञायमानत्वावच्छिन्नत्वस्याऽवच्छेदकतया भानोपगमेनैकदेशान्वयं विनाप्यवच्छेद्यावच्छेदकभावभानात् ।

---

प्रसङ्गसङ्गत्या शङ्कते—अथेति, लिङ्गमेव करणमिति करणत्वं लिङ्गैकदेशत्वात् पदार्थैकदेशः । तदवच्छिन्नत्वम्=ज्ञायमानत्वावच्छिन्नत्वम् । धूमादौ करणत्वज्ञाने वर्तमाने सत्येव धूमादीनां करणत्वस्वीकाराज्ज्ञायमानत्वं करणत्वविशेषणमिति भावः । उत्तरमाह—तथापीति, तथापि=ज्ञायमानत्वस्य करणत्वविशेषणत्वेपि सा=' ज्ञायमानत्वेन ' इतितृतीया विशेषणतृतीयैव. अनुशासनान्तराभावात्=" इत्थंभूतलक्षणे " इतिसूत्रेणैव प्राप्तत्वादिति यावत् । स्वाभिप्रायमाह—वस्तुत इति, ज्ञायमानत्वस्य करणत्वविशेषणाभ्युपगमस्य करणत्वे ज्ञायमानत्वावच्छिन्नत्वप्राप्तिरेव फलं करणत्वस्य ज्ञायमानत्वावच्छिन्नत्वं तु ज्ञायमानत्वस्य लिङ्गविशेषणत्वेपि प्राप्नोत्येव यथा लिङ्गे एव ज्ञायमानत्वमस्ति लिङ्गे एव च करणत्वमिति करणत्वज्ञायमानत्वयोः संबन्धविधया=सामानाधिकरण्येन परस्परमऽवच्छेद्यावच्छेदकभावः प्राप्त इति करणत्वे ज्ञायमानत्वावच्छिन्नत्वं प्राप्तमेवेति ज्ञायमानत्वस्य करणत्वरूपैकदेशेऽन्वयस्वीकारो नोचित इत्यर्थः । नन्वेवमपि करणत्वरूपैकदेशे ज्ञायमानत्वस्यान्वयः प्राप्त एवेत्याशङ्क्याह—न चेति । परिहारहेतुमाह—करणाभेदरूपे इति, त्वया हि करणत्वे ज्ञायमानत्वस्यान्वय उक्तस्तत्र करणकरणत्वयोरभेदपक्षे करणत्वे ज्ञायमानत्वस्यान्वयेन करणेपि तदन्वयः प्राप्त इति करणे करणत्वसंबन्धेन ज्ञायमानत्वस्यान्वयः कर्तव्यः, करणत्वं चाभेदपक्षे करणे तादात्म्येन वर्तत एव संबन्धभूतं करणत्वं ज्ञायमानत्वं च करणे एवेति सामानाधिकरण्येन करणत्वमपि ज्ञायमानत्वावच्छिन्नं जातमितिरीत्या ज्ञायमानत्वावच्छिन्नत्वस्य अवच्छेदकतया=संसर्गतावच्छेदकतया भानोपगमेनैकदेशान्वयं विनापि करणत्वज्ञायमानत्वयोरवच्छेद्यावच्छेदकभावस्य भानं संभवत्येवेत्येकदेशान्वयस्वीकारोऽनुचित एवेत्यर्थः । प्रकारभूतपदार्थैकदेशेनान्वयस्यैव व्युत्पत्तिविरुद्धत्वात् संसर्गभूतपदार्थैकदेशेनान्वये दोषाभावाद् अत्र च करणत्वस्य करणाभिन्नत्वं संसर्गत्वं च स्वीकृतमिति तेनान्वये न कोपि दोष इति भावः । करणाभिन्नस्यैव करणत्वस्य ज्ञायमानत्वान्वये संसर्गत्वाश्रयणादुक्तम्—" करणस्य संबन्धविधया भासमाने " इति ।

ननु यदि मतुबादयो विद्यमानमात्रस्यैव संबन्धबोधकास्तदा ' दण्डवानयमासीद् ' ' दण्डी गतवान् ' इत्यादौ दण्डादिपदोत्तरं मतुबादयो न स्युः—दण्डादीनामतीतत्वेन विद्यमानत्वाभा-

अथ ' दण्डवानयमासीद् दण्डी गतवान् ' इत्यादौ दण्डस्याऽतीततया विशेषणत्वासंभवाद् मतुबाद्यनुपपत्तिरिति चेत् ?, न-प्रकृतशब्दप्रयोगाधिकरणकालावच्छिन्नस्येव विधेयान्तरसमभिव्याहारस्थले तदधिकरणकालावच्छिन्नसंबन्धस्यापि मतुबादिना प्रत्यायनात् तत्राऽतीतकालिकसत्त्वादिरूपविधेयाधिकरणाऽतीतादिकालावच्छिन्नसंबन्धस्यैव मतुबाद्यर्थत्वात् । अविद्यमानोपि दण्डादिर्धर्मान्तरसंबन्धसमानकालीनतया धर्मान्तरान्वयिनि विशेषणम्. तत्प्रकारेण भासमाने धर्मान्तरान्वयबोधो विशिष्टवैशिष्ट्यमित्युच्यते, न त्वसावऽन्वयिन्युपलक्षणम्. न वा तादृशबोधस्तदुपलक्षितान्वयबोध इत्युच्यते ।

क्वचिद्विधेयान्तरसमानकालीनमपि विशेषणं तदनन्वयितया तदन्वयिन्युपलक्षणमुच्यते यथा- ' रूपवान् रसवान् ' इत्यादौ रूपादिकं रसान्वयिनि, ' सास्नावान् गोपदवाच्यः ' इत्यादौ सास्नादिकं गवादिपदवाच्ये । क्वचिद्धर्मिसंबद्धधर्मान्तरसंबन्ध्यपि धर्मो धर्मान्तरसंबन्धितानवच्छेदकतया धर्मान्तर-

---

बादित्याशङ्कते-अथेति । परिहरति-नेति, मतुबादिना दण्डादीनां यथा प्रकृत=दण्डादिशब्दप्रयोगाधिकरणकालिकः संबन्धः ' दण्डवानस्ति ' इत्यादौ प्रत्याय्यते तथा विधेयान्तरसमभिव्याहारस्थले तदधिकरणकालावच्छिन्नसंबन्धः=विधेयान्तराधिकरणकालावच्छिन्नसंबन्धोपि प्रत्याय्यते तथा च तत्र=' दण्डवानयमासीद् ' ' दण्डी गतवान् ' इत्यत्राऽतीतकालिकं यत्सत्त्वादिरूपं विधेयं तादृशविधेयाधिकरणीभूतो योऽतीतकालस्तादृशातीतकालावच्छिन्न एव संबन्धः=दण्डादिसंबन्धो मतुबाद्यर्थोस्ति तस्य चात्र बाधाभावात् न मतुबाद्यनुपपत्तिरित्यर्थः । ननु विशेषणवाचकपदान्मतुबादयो भवन्ति विशेषणत्वं च विद्यमानस्यैव भवतीति कथमविद्यमानस्य दण्डादेर्विशेषणत्वं येन मतुबादय उपपद्येरन्नित्याशङ्क्याह-अविद्यमानोपीति, यथात्र धर्मान्तरसंबन्धसमानकालीनतया=अतीतकालिकसत्त्वसंबन्धसमानकालिकतया ( यस्मिन् काले सत्त्वमासीत् तस्मिन् काले दण्डोप्यासीदेव ) धर्मान्तरान्वयिनि=अतीतकालिकसत्त्वान्वयिनि पुरुषे दण्डो विशेषणमेव, तत्प्रकारेण=दण्डप्रकारेण ( बहुव्रीहिः ) भासमाने पुरुषे धर्मान्तरान्वयबोधः=अतीतकालिकसत्त्वबोधो विशिष्टवैशिष्ट्यबोध इत्युच्यते- दण्डविशिष्टेऽतीतकालिकसत्त्ववैशिष्ट्यस्य सत्त्वात्, न त्वसौ=दण्डः अन्वयिनि=पुरुषे उपलक्षणम्, न वा तादृशबोधः=' दण्डवानयमासीत् ' इत्यादिवाक्यजन्यबोधस्तदुपलक्षितान्वयबोधः=दण्डोपलक्षितविषयकशाब्दबोध इत्यविद्यमानोपि दण्डादिर्विशेषणमेवात्र न तूपलक्षणमित्यर्थः ।

विशेषणोपलक्षणयोः परिभाषामाह-क्वचिदिति, यथा विधेयान्तरसमानकालीनमपि=रससमानकालिकमपि विशेषणं रूपं तदनन्वयितया=रसानन्वयितया तदन्वयिनि=रसान्वयिन्युपलक्षणमित्युच्यते इत्यन्वयः, सास्नेति-यथा विधेयान्तरं गोपदवाच्यत्वं तत्कालिकमपि विशेषणं सास्ना तदनन्वयितया=गोपदवाच्यत्वानन्वयितया गवि उपलक्षणमित्यन्वयः । उपलक्षणस्य स्वरू-

संबन्धिन्युपलक्षणम्. अतः 'दण्डपुरुषौ' इत्यादिसमूहालम्बनबोधो दण्डाद्युपलक्षितपुरुषादिविषयको न तु विशिष्टविषयक इत्युच्यते।

विशेष्यसंबद्धासंबन्ध्यपि तत्संबन्धितावच्छेदकतया तद्वति विशेषणम्, अत एव संज्ञाविशिष्टसंज्ञादिज्ञाने संज्ञादेर्विषयत्वमनङ्गीकुर्वतां प्राभाकराणां प्राचीननैयायिकानां च मते तटस्थज्ञानविषयतयैव विषयतावच्छेदकत्वात् संज्ञादेः

---

न्तरमाह कचिदिति। उदाहरति–अत इति, यथा 'दण्डपुरुषौ' इत्यत्र धर्मी पुरुषः तत्संबद्धधर्मान्तरं वर्तमानकालिकसत्त्वादिकं तत्संबन्ध्यपि धर्मो दण्डः–दण्डेपि वर्तमानकालिकसत्त्वस्य सत्त्वात् स च दण्डो धर्मान्तरस्य=उक्तवर्तमानकालिकसत्त्वस्य संबन्धितावच्छेदकं नास्ति संबन्धितावच्छेदकत्वेनाऽप्रतीयमानत्वादिति धर्मान्तरसंबन्धिनि=उक्तसत्त्वविशिष्टे पुरुषे दण्ड उपलक्षणमिति 'दण्डपुरुषौ' इति समूहालम्बनात्मको बोधो दण्डोपलक्षितविषयक एव न तु दण्डविशिष्टविषयक इत्यन्वयः। यस्य धर्मस्य धर्मिणि स्वसमानकालिकधर्मान्तरे चान्वयो भवति स विशेषणमित्युच्यते यथा 'अस्ति दण्डी' इत्यत्र वर्तमानकालिकं सत्त्वं पुरुषे तदन्वितदण्डे चान्वेतीति विशेषणमित्युच्यते।

उक्तवैपरीत्येन विशेषणपरिभाषामाह– विशेष्येति, धर्मिसंबद्धधर्मान्तरसंबन्ध्यपि धर्मो धर्मान्तरसंबन्धितानवच्छेदकतयोपलक्षणं भवतीति यदुक्तं तद्वैपरीत्ये विशेष्यसंबद्धाऽसंबन्ध्यपि धर्मो तत्संबन्धितावच्छेदकतया=विशेष्यसंबद्धधर्मान्तरसंबन्धितावच्छेदकतया तद्वति धर्मान्तरवति विशेष्ये विशेषणं भवतीत्यभिप्रायः, यथा 'घटो घटपदवाच्यः' इत्यत्र विशेष्यो घटस्तत्संबद्धो घटत्वं सदऽसंबन्ध्यपि=घटत्वासंबन्ध्यपि संज्ञा तत्संबन्धितावच्छेदकतया=घटसंबद्धघटत्वसंबन्धितावच्छेदकतया=घटे वाच्यत्वसंबन्धेन संज्ञा विशेषणं तत्र च घटे घटत्वसंबन्धिता वर्तते इति संज्ञायां घटत्वसंबन्धितावच्छेदकतास्त्येवेति संज्ञा तद्वति=घटत्ववति घटे विशेषणमित्यन्वयः, तथा च विशेष्यसंबद्धधर्मान्तरसंबन्धितानवच्छेदकमुपलक्षणम्, विशेष्यसंबद्धधर्मान्तरसंबन्धितावच्छेदकं विशेषणमिति फलितम्। उदाहरति– अत एवेति, तटस्थेति– संज्ञाया ज्ञानविषयत्वं नास्ति घटस्य प्रत्यक्षादिविषयत्वात् संज्ञायाश्च स्मर्यमाणत्वेन स्मृतिविषयत्वादिति संज्ञायास्तटस्थज्ञानविषयत्वं तटस्थज्ञानविषयत्वेपि संज्ञाया विषयतावच्छेदकत्वमस्त्येव– 'घटो घटपदवाच्यः' इत्यत्र संज्ञाया घटे विशेषणतया घटनिष्ठविषयतावच्छेदकत्वेन भासमानत्वात्, विषयताविच्छेदकत्वाच्च संज्ञाया ज्ञानविषये घटे विशेषणत्वं प्राप्तमिति भावः। उक्तं च प्राभाकरैः– "नामकल्पनापि प्रत्यक्षा– इन्द्रियानुविधायित्वात् 'देवदत्तोयम्' इति। तत्र यद्यपि शब्दात्मकं नाम स्मरणनिष्ठम् (न प्रत्यक्षविषयः) तेन सह वाच्यवाचकभावोपि स्मृतिसमारूढ एव (न प्रत्यक्षविषयः) तथापि संज्ञा प्रत्यक्षतां न मुञ्चति, न हि संज्ञा तत्संबन्धो वा तदात्मिकज्ञाने विशेष्यत्वेन प्रतिभातः किं तु तौ स्मृत्यारूढावेव, संज्ञिनि हि दृश्यमाने प्रागनुभूतौ तौ स्मृतिमारोहत अत एवोक्तम्–

प्रकारस्य ज्ञानविषयविशेषणत्वम् । अत एव द्वित्वनाशकालीनायाम् ' द्वे द्रव्ये ' इतिबुद्धौ न द्वित्वविषयकत्वमऽपि तु द्वित्वविशिष्टविषयकत्वमेव- द्वित्वरूपविशेषणधीजन्यत्वादित्याचार्याः ।

एवमप्रतियोगित्वाविशेषेपि घटसामान्याभावादिप्रतियोगिनि: घटत्वादिकं विशेषणं नीलादिकमुपलक्षणमित्युच्यते । क्वचिच्च विद्यमानमप्यऽतद्व्यावृत्तिन्यूनाधिकवृत्तितया तत्र न विशेषणमित्युच्यते किं तूपलक्षणं यथा विद्यमानापि जटा तापसे उपलक्षणं न तूपलक्ष्यतावच्छेदकशमदमादिवद्विशेषणम्, इत्यलमप्रस्तुतपरिभाषाविचारबाहुल्येन ।

---

" संज्ञा हि स्मर्यमाणापि प्रत्यक्षत्वं न बाधते ।

संज्ञिनः, सा तटस्था हि न रूपाच्छादनक्षमा ॥ " इति " इति । ( हि-यतः )

विशेषणस्य स्वरूपान्तरमाह- अत एवेति, प्रत्यक्षात्मकज्ञानस्य नष्टपदार्थविषयकत्वं न संभवतीति द्वित्वनाशकालिकायाः 'द्वे द्रव्ये' इत्याकारकबुद्धेर्नष्टद्वित्वविषयकत्वाभावेपि द्वित्वविशिष्टविषयकत्वमक्षतमेव- द्वित्वरूपविशेषणज्ञानजन्यत्वात्, तथा च नष्टस्याप्यत्र द्वित्वस्य द्रव्यविशेषणत्वमेव- उक्तबुद्धेर्द्वित्वविशिष्टविषयकत्वात्, अपेक्षाबुद्धिजन्यस्य द्वित्वस्यापेक्षाबुद्धिनाशेन नष्टत्वादुक्तबुद्धिविषयत्वं नास्तीत्यन्यदेतत्. नैतावता विशेषणत्वस्य काचित् क्षतिरित्यर्थः । अत एव=विशेष्यसंबद्धासंबन्धिनोपि तत्संबन्धितावच्छेदकतया तद्वति विशेषणत्वस्वीकारादेव. अत्र च द्रव्यलक्षणविशेष्यसंबद्धं यद् वर्तमानकालिकसत्त्वादिकं तदसंबन्धिनोपि=तद्रहितस्यापि द्वित्वस्य तत्संबन्धितावच्छेदकतया तद्वति=उक्तसत्त्ववति द्रव्ये विशेषणत्वमित्यर्थः ।

विशेषणोपलक्षणयोः स्वरूपान्तरमाह- एवमिति, नीले घटे नष्टे यथा घटत्वस्य समवायस्तथा नीलस्याप्यस्त्येव- समवायस्य नित्यत्वादिति घटत्वनीलयोरभावाऽप्रतियोगित्वाविशेषेपि घटत्वं प्रतियोगितावच्छेदकत्वेन विशेषणं नीलं च प्रतियोगितानवच्छेदकत्वेनोपलक्षणमित्येव परिभाषास्तीत्यर्थः । उपलक्षणस्य स्वरूपान्तरमाह- क्वचिदिति, अतद्व्यावृत्तिपदेन विशेष्यतावच्छेदकरूपा जातिर्ग्राह्या, तत्र= अन्वयिनि । अत्र तापसत्वमेव विशेष्यतावच्छेदकमतद्व्यावृत्तिपदेन ग्राह्यं यत्र यत्र च तापसत्वं तत्र तत्र जटा वर्तते इत्यपि नियमो नास्ति यत्र तापसत्वं नास्ति तत्र जटा न भवतीत्यपि नियमो नास्तीति तापसत्वन्यूनाधिकवृत्तितया तत्र=तापसे जटा न विशेषणं किं तूपलक्षणमेव । शमदमादिकं तु तापसे विशेषणमे[व] शमादिकं विना तापसत्वानुपपत्तेरित्यर्थः । विशेषणोपलक्षणपरिभाषाप्रतिपादनमुपसंहरति- इत्यलमिति ।

**क्वचिदऽविशेषणस्यापि संबन्धो मत्वर्थीयेन बोध्यते 'घटोयं विनाशी' इत्यादिप्रयोगदर्शनादिति दीधितिकृतः, तदसत्– आवश्यकार्थधातूत्तरणिनिप्रत्ययेनापि तत्र विनाशिपदव्युत्पत्तेरिति ॥**

**॥ इति तृतीया ॥**

---

एवं च मत्वर्थीयेन प्रत्ययेन विशेषणस्यैव संबन्धः प्रत्याय्यते न तूपलक्षणस्य तृतीयया तु विशेषणोपलक्षणयोरुभयोरपि संबन्धः प्रत्याय्यते इति सिद्धं तत्र दीधितिकारेण यदुक्तमऽविशेषणस्य=उपलक्षणस्यापि संबन्धो मत्वर्थीयेन प्रत्याय्यते यथा 'घटोयं विनाशी' इत्यत्र घटे विनाशस्याविद्यमानत्वेन विशेषणत्वं न संभवतीत्यऽविशेषणस्यापि विनाशस्य संबन्धो विनाशपदोत्तरमत्वर्थीयणिनिप्रत्ययेन प्रतिपाद्यते इति तत्परिहारायानुवदति-- क्वचिदिति, परिहरति– तदसदिति, 'घटोयं विनाशी' इत्यत्र विनाशपदोत्तरं मत्वर्थीयणिनिप्रत्यय एव नास्ति येनोक्तरीत्या मत्वर्थीयप्रत्ययस्याऽविशेषणसंबन्धप्रतिपादकत्वं प्राप्नुयात् किं तु आवश्यकार्थेन धातूत्तरणिनिप्रत्ययेन " आवश्यकाधमर्णयोः " इतिसूत्रात् प्राप्तेन 'विनाशी' इति पदं सिद्धमस्तीत्यर्थः।

॥ इति व्युत्पत्तिवादादर्शे तृतीयाकारकम् ॥

---

# अथ चतुर्थी

'ब्राह्मणाय गां ददाति' इत्यादौ संप्रदानचतुर्थ्या ब्राह्मणादिसंप्रदानकत्वं दानादौ बोध्यते। संप्रदानत्वं च मुख्यभाक्तसाधारणं क्रियाकर्मसंबन्धितया कर्त्रऽभिप्रेतत्वम्। क्रियाकर्मत्वं क्रियाजन्यफलशालित्वम्। तद्वता संबन्धश्च तन्निष्ठफलभागित्वमेव, तथा च क्रियाजन्यफलभागितया कर्तुरिच्छाविषयत्वं पर्यवसन्नम्। "कर्मणा यमभिप्रैति" इतिसूत्रस्याप्ययमेवार्थः—"कर्मणा यमभिप्रैति" इत्यस्य 'कर्मणा यमऽभिसंबद्धुमिच्छति' इति शाब्दिकैर्विवरणात्। उक्तस्थले त्यागरूपक्रियाजन्यगोनिष्ठस्वत्वभागितया दातुरिच्छाविषयो ब्राह्मण इति तस्य संप्रदानत्वम्।

अथ निरुक्तस्य संप्रदानत्वस्य कर्मत्वाऽविशेषः—"कर्तुरीप्सित" इतिसूत्रेण कर्तुः क्रियया व्याप्तुमिष्टस्य कर्मसंज्ञाविधानात् क्रियया व्याप्तुमिष्टत्वमपि हि क्रियाजन्यफलभागितयेच्छाविषयत्वमेव। न च "तथायुक्तं चानीप्सितम्"

---

क्रमप्राप्तं चतुर्थ्यर्थनिरूपणमारभते—ब्राह्मणायेति। यतः संप्रदानचतुर्थ्या दानादौ ब्राह्मणादिसंप्रदानकत्वं बोध्यतेऽतः संप्रदानचतुर्थ्याः संप्रदानत्वमर्थस्तदुक्तम्—"चतुर्थी संप्रदाने" इति। संप्रदानत्वस्वरूपमाह—संप्रदानत्वमिति, क्रियाकर्मसंबन्धितया कर्त्रऽभिप्रेतत्वमेव संप्रदानत्वं यथा 'ब्राह्मणाय गां ददाति' इत्यत्र दानक्रियाकर्मभूता या गौस्तत्संबन्धितया=तत्स्वामित्वेन दानकर्त्रऽभिप्रायविषयत्वं ब्राह्मणेस्तीति ब्राह्मणस्य संप्रदानत्वं प्राप्तम्, इदमेव च मुख्यसंप्रदानत्वं भाक्तं संप्रदानत्वमग्रे वक्ष्यति। कर्मत्वस्वरूपमाह—क्रियाकर्मत्वमिति। तद्वता=कर्मत्ववता। तन्निष्ठफलभागित्वम्=कर्मत्ववन्निष्ठफलभागित्वम्। यथोक्तस्थले दानक्रियाकर्मत्ववती या गौस्तन्निष्ठं फलभूतं यत्स्वत्वं तादृशस्वत्वभागित्वमेव गवा ब्राह्मणस्य संबन्धः। पर्यवसितार्थमाह—तथा चेति। संप्रदानत्वमिति शेषः। दानक्रियाजन्यं यद् गोनिष्ठं स्वत्वरूपं फलं तद्भागितया दानकर्तुरिच्छाविषयत्वं ब्राह्मणेस्त्येवेत्यर्थः। उक्तसंप्रदानत्वस्वरूपे सूत्रं प्रमाणयति—कर्मणेति। "कर्मणा यमभिप्रैति" इतिसूत्रस्याप्ययमेवार्थ इत्यत्र हेतुत्वेनोक्तसूत्रव्याख्यामनुवदति—कर्मणेति। गवादिरूपकर्मणा यं ब्राह्मणादिकमभिसंबद्धुमिच्छति स संप्रदानभूतो विज्ञेय इत्यर्थः। लक्षणसमन्वयमाह—उक्तस्थल इति। उक्तस्थले=' ब्राह्मणाय गां ददाति' इत्यत्र। तस्य=ब्राह्मणस्य।

उक्तप्रतिपादनेन कर्मत्वसंप्रदानत्वयोर्विशेषो न प्राप्त इत्यभिप्रायेणाशङ्कते—अथेति। उक्तसंप्रदानत्वस्य कर्मत्वाविशेषमुपपादयति—कर्तुरित्यादिना। व्याप्तुम्=प्राप्तुम्। "क्रियया व्याप्तुमिष्टस्य" इत्यस्यार्थमाह—क्रिययेति, तथा च क्रियाजन्यफलभागितयेच्छाविषयत्वमेव कर्मत्वं क्रियाजन्यफलभागितयेच्छाविषयत्वमेव च संप्रदानत्वमुक्तमिति कर्मत्वसंप्रदानत्वयोर्विशेषाभावादैक्यं

इत्यनेन क्रियाजन्यफलभागितयाऽनभिप्रेतस्यापि क्रियाजन्यफलाश्रयस्य कर्मसंज्ञाविधानात् कर्मत्वं क्रियाजन्यफलशालित्वमेव न त्विच्छागर्भम्. संप्रदानत्वं त्विच्छागर्भमतो भेद इति वाच्यम्, कर्मत्वस्येच्छयाऽघटितत्वे सूत्रभेदवैयर्थ्यापत्तेः।

न च फलाश्रयत्वेनाऽनभिप्रेतस्यापि कर्मत्वे तत्साधारणक्रियाजन्यफलाश्रयतयेष्टस्यापि ग्रामादेः कर्मत्वोपपत्ताविच्छाघटिततत्सूत्रवैयर्थ्यं दुर्वारमेवेति वाच्यम्, इच्छाघटितस्य निरुक्तरूपस्य यत्र बाधस्तत्र कर्मप्रत्ययेन तादृशमपि रूपं बोध्यते इत्येतत्प्रतिपादनाय सूत्रद्वयप्रणयनात् । अत एव यत्रौदनस्य गलाधःसंयोगे-

---

नातमित्यर्थः । ननु 'ग्रामं गच्छंस्तृणं स्पृशति' इत्यादौ तृणादीनामिच्छाविषयत्वाभावेपि कर्मत्वस्येष्टत्वात् कर्मत्वशरीरे इच्छानिवेशो नास्ति संप्रदानत्वशरीरे चेच्छानिवेशोस्तीति क्रियाजन्यफलशालित्वमात्रं कर्मत्वं क्रियाजन्यफलभागितयेच्छाविषयत्वं च संप्रदानत्वमित्येवमस्ति कर्मत्वसंप्रदानत्वयोर्विशेष इत्याशङ्क्याह—न चेति । परिहारमाह—कर्मत्वस्येति । यदि कर्मत्वशरीरे इच्छानिवेशो न स्यात्तदा कर्मसंज्ञाविधायकयोः "कर्तुरीप्सिततमं कर्म" "तथायुक्तं च" इतिसूत्रयोर्मध्ये एकस्य सूत्रस्य वैयर्थ्यं स्यात्—एकेनैव सूत्रेण ग्रामस्य तृणस्य च कर्मसंज्ञाप्राप्तिसंभवात्, न च सूत्रवैयर्थ्यं युक्तम् ? तस्मात् कर्मत्वशरीरेपीच्छानिवेशोस्त्येव. तथा च "कर्तुरीप्सिततमं कर्म" इति सूत्रेण क्रियाजन्यफलाश्रयतयेच्छाविषयस्य ग्रामादेः कर्मसंज्ञा विधीयते, "तथायुक्तं च" इत्यनेन चेच्छाया अविषयस्यापि क्रियाजन्यसंयोगादिरूपफलाश्रयमात्रस्य तृणादेः कर्मसंज्ञा विधीयते इति विवेकः । तथा चोक्तरीत्या कर्मत्वसंप्रदानत्वयोस्तुल्यतापत्तिस्तदवस्थैवेत्यर्थः ।

ननु यदि फलाश्रयत्वेनाऽनभिप्रेतस्यापि=क्रियाजन्यफलभागितयेच्छाया अविषयस्यापि तृणादेः कर्मत्वमिष्टमस्ति तदा तत्साधारणम्=तृणादिसाधारणं यत् क्रियाजन्यफलाश्रयत्वं तेन रूपेणेष्टस्य ग्रामादेरपि "तथायुक्तं च" इतिसूत्रेणैव कर्मत्वोपपत्तिः संभवतीति इच्छाघटितसूत्रस्य="कर्तुरीप्सिततमं कर्म" इति सूत्रस्य वैयर्थ्यं दुर्वारमेवेत्याशङ्क्याह—न चेति । परिहारमाह—इच्छाघटितस्येति, अयमर्थः—"कर्तुरीप्सिततमं कर्म" इत्येतदिच्छाघटितसूत्राभावे "तथायुक्तं चानीप्सितम्" इत्यनेन सूत्रेणानीप्सितस्य=क्रियाजन्यफलाश्रयतया इच्छाया अविषयस्यैव तृणादेः कर्मसंज्ञा स्यान्न त्विच्छाविषयस्य ग्रामादेरपीति ग्रामादेः कर्मसंज्ञाप्राप्त्यर्थम् "कर्तुरीप्सिततमम्" इतीच्छाघटितसूत्रस्यावश्यकता । न चैवम् "तथायुक्तं च" इतिसूत्रवैयर्थ्यम्—"कर्तुरीप्सिततमम्" इत्यनेनैव सर्वत्र कर्मसंज्ञासंभवादिति वाच्यम्, इच्छाघटितस्य निरुक्तरूपस्य=क्रियाजन्यफलाश्रयतयेच्छाविषयत्वस्य यत्र=तृणादौ बाधस्तत्र तृणादौ कर्मप्रत्ययेन=द्वितीयया तादृशमपि रूपम्=इच्छाविषयत्वरहितमपि कर्मत्वरूपं बोध्यते इत्येतत्प्रतिपादनाय=इच्छाविषयस्य ग्रामादेरिच्छाया अविषयस्य तृणादेश्च कर्मत्वप्रतिपादनाय कर्मसंज्ञाविधानाय चोक्तसूत्रद्वयं प्रणीतमस्ति—एकेन सूत्रेणोभयत्र कर्मसंज्ञायाः प्राप्तेरसंभवादिति । अत्र

च्छया यो व्यापारस्ततो विषादेरपि गलाधस्संयोगस्तत्र विषादौ क्रियाजन्यफलशालित्वाभावबाधेपि तेन रूपेणेच्छाविषयत्वाभावोऽबाधितस्तत्र 'विषमनेन न भुज्यते' इतिप्रयोगोपपत्तिः। इच्छाद्यऽघटितकर्मत्वतात्पर्येण च 'दैवाद्विषं भुज्यते' इतिप्रयोगस्य चोपपत्तिः।

न च धात्वर्थतावच्छेदकफलशालित्वेनोद्देश्यत्वं कर्मत्वं तदनवच्छेदकफलशालित्वेनोद्देश्यत्वं संप्रदानत्वमिति विशेषः, स्वस्वत्वध्वंसावच्छिन्नत्याग एव ददात्यर्थो न तु परस्वत्वरूपफलावच्छिन्नोपीति वाच्यम्, उपेक्षाया अपि ददातेर्मुख्यार्थतापत्तेः।

---

च " इच्छाघटितस्य " इत्येतत्पाठात्पूर्वमुक्तदिशेच्छाघटितसूत्रसार्थक्योपपादकग्रन्थोऽपेक्ष्यते मन्ये स लेखकप्रमादादेव भ्रष्ट इति। " इच्छाघटितस्य " इत्यस्य 'इच्छया अघटितस्य' इतिव्याख्ययाप्युक्तस्येच्छाघटितसूत्रवैयर्थ्यस्य परिहारो यद्यपि संभवति तथापि नायं पक्षः स्वरसः प्रतिभाति। सूत्रद्वयसार्थक्यमाह—अत एवेति, व्यापारः=भोजनव्यापारः। यदौदनेन सहाऽज्ञातं विषं भुज्यते तदा विषे भोजनरूपक्रियाजन्यस्य गलाधःसंयोगरूपफलस्य सत्त्वेन तादृशक्रियाजन्यतादृशफलशालित्वाभावस्याऽसत्त्वेपि तेन रूपेण=उक्तक्रियाजन्यफलशालित्वरूपेणेच्छाविषयत्वस्याभावोऽस्त्येवेति तत्र विषे इच्छाघटितकर्मत्वस्य प्रतिषेधार्थम् 'विषमनेन न भुज्यते' इति प्रयोग उपपद्यते, इच्छाघटितकर्मत्वप्रतिपादकसूत्राभावे उक्तस्थले इच्छानिवेशरहितकर्मत्वस्य विषेपि सत्त्वेन कर्मत्वापत्त्या 'विषमनेन न भुज्यते' इति प्रयोगो नोपपद्येतेति इच्छाघटितकर्मत्वप्रतिपादकस्य " कर्तुरीप्सिततमं कर्म " इतिसूत्रस्यावश्यकता, 'दैवाद्विषं भुज्यते' इत्यत्रेच्छाविषयत्वहीनस्यापि विषस्य कर्मत्वोपपत्त्यर्थमिच्छाद्यऽघटितकर्मत्वप्रतिपादकस्य " तथायुक्तं च " इति सूत्रस्यावश्यकतेति सूत्रद्वयमेव सार्थकम्।

प्रकारान्तरेण कर्मत्वसंप्रदानत्वयोर्भेदं पूर्वपक्ष्युपपादयति— न चेति, 'ग्रामं गच्छति' इत्यत्र संयोगानुकूलव्यापारो धात्वर्थ इति धात्वर्थतावच्छेदकीभूतसंयोगरूपफलशालित्वेनोद्देश्यत्वम्=इच्छाविषयत्वं ग्रामस्यास्तीति ग्रामस्य कर्मत्वं प्राप्तम्, 'ब्राह्मणाय गां ददाति' इत्यत्र स्वस्वत्वध्वंसानुकूलत्याग एव धात्वर्थो न तु स्वस्वत्वध्वंसपूर्वकपरस्वत्वानुकूलत्यागो येन धात्वर्थतावच्छेदकीभूतपरस्वत्वरूपफलशालित्वेनोद्देश्यस्य ब्राह्मणस्य कर्मत्वं स्यात् तथा च दाधात्वर्थताऽनवच्छेदकीभूतं यत् परस्वत्वरूपं फलं तादृशफलशालित्वेनोद्देश्यत्वाद् ब्राह्मणस्य संप्रदानत्वं प्राप्तम्— स्वत्वस्य निरूपकत्वसबन्धेन ब्राह्मणेपि सत्त्वादित्यर्थः। ब्राह्मणस्योक्तसंप्रदानत्वप्रतिपादनार्थं परस्वत्वस्य दाधात्वर्थतानवच्छेदकत्वमाह— न त्विति। परिहारमाह— उपेक्षाया इति, स्वस्वत्वध्वंसावच्छिन्नत्यागमात्रस्य ददात्यर्थत्वे उपेक्षाया अपि स्वस्वत्वध्वंसानुकूलत्यागरूपत्वेन मुख्यं ददात्यर्थत्वं स्यात्, न चैतदिष्टमिति न स्वस्वत्वध्वंसानुकूलत्यागमात्रं ददात्यर्थः किं तु स्वस्वत्वध्वंसपूर्वकपरस्वत्वानुकूलत्यागो ददात्यर्थस्तथा च संप्रदानस्यापि धात्वर्थतावच्छेदकीभूतपरस्वत्वरूपफलशालित्वं प्राप्तमिति कर्मत्वसंप्रदानत्वयोर्विशेषाभावस्तदवस्थ एवेत्यर्थः।

**मैवम्**— फलाश्रयतयेष्टत्वमेव हि कर्मत्वम्. फलसंबन्धितयेष्टत्वं संप्रदानत्वम्, ब्राह्मणादिश्च न त्यागजन्यस्वत्वाश्रयतया दातुरिष्टः, अपि तु तन्निरूपकतयैवाऽतो न तस्य कर्मता ।

न चाश्रयत्वमपि संबन्धविशेष इति गवादेरपि संप्रदानत्वं दुर्वारम्, आश्रयत्वेनाभिप्रायस्थले कर्मसंज्ञया बाधादन्य एव हि संबन्धः संप्रदानताघटक इति यद्युच्येत ? तदा ' वृक्षायोदकमासिञ्चति ' ' पत्ये शेते ' इत्यादौ सेकजन्यजलसंयोग— शयनजन्यप्रीत्याद्याश्रयतयाऽभिप्रेतस्य वृक्षपत्यादेः संप्रदानत्वानुपपत्तिरिति वाच्यम्, धात्वर्थतावच्छेदकफलाश्रयत्वभिन्नफलसंबन्धस्य संप्रदानत्वशरीरे निवेशेन सामञ्जस्यात् । ' वृक्षायोदकमासिञ्चति ' इत्यादौ द्रवद्रव्याक्रियानु-

---

अथेत्यादिना शङ्कितं परिहरति— मैवमिति । कर्मत्वसंप्रदानत्वयोर्विशेषमाह— फलेति । यथा— ' ग्रामं गच्छति ' इत्यत्र क्रियाजन्यसंयोगरूपफलाश्रयतया ग्रामस्य कर्मत्वम्, ' ब्राह्मणाय गां ददाति ' इत्यत्र च ब्राह्मणस्य त्यागरूपक्रियाजन्यं यद् गोनिष्ठं स्वत्वरूपं फलं तत्संबन्धितया=तादृशस्वत्वनिरूपकतयेष्टत्वमस्तीति संप्रदानत्वं प्राप्तमित्यर्थः । उपपादयति— ब्राह्मणादिश्चेति । तन्निरूपकतया=त्यागजन्यस्वत्वनिरूपकतया ब्राह्मणो दातुरिष्टः । तस्य=ब्राह्मणस्य ।

ननु यदि " फलसंबन्धितयेष्टत्वं संप्रदानत्वम् " तदाऽऽश्रयत्वमपि संबन्धविशेष एवेत्यत्र फलाश्रयतयेष्टाया दानकर्मभूताया गोरपि फलसंबन्धितयेष्टत्वप्राप्त्या संप्रदानत्वं प्राप्तमित्याशङ्कते— न चेति । नन्वाश्रयत्वस्य संबन्धविशेषरूपत्वेपि फलाश्रयत्वेनाभिप्रायस्थले संप्रदानसंज्ञापेक्षया परभूतया कर्मसंज्ञया सप्रदानसंज्ञाया बाधाद् गवादेः फलाश्रयत्वेनाभिप्रायविषयत्वात् कर्मसंज्ञैव भवतीति न संप्रदानत्वापत्तिस्तथा च ब्राह्मणादीनां संप्रदानसंज्ञासिद्ध्यर्थं संप्रदानत्वशरीरघटकः संबन्ध आश्रयत्वसंबन्धापेक्षया भिन्न एवेत्युच्यते इत्याशङ्कते— आश्रयत्वेनेति । उक्ते दोषमुद्घाटयति— तदेति, यदि संप्रदानत्वशरीरघटकः संबन्ध आश्रयत्वसंबन्धापेक्षया भिन्न एव तदा फलाश्रयतयाभिप्रेतस्य संप्रदानत्वं न स्यादिति ' वृक्षायोदकमासिञ्चति ' इत्यत्र सेकक्रियाजन्यजलसंयोगरूपफलाश्रयतयाभिप्रेतस्य वृक्षस्य संप्रदानत्वं न स्यात् ' पत्ये शेते ' इत्यत्र च शयनजन्यप्रीत्याश्रयतयाभिप्रेतस्य पत्युः संप्रदानत्वं न स्यात्. न चैतदिष्टमिति न संप्रदानत्वशरीरघटकः संबन्धः आश्रयत्वसंबन्धभिन्न एवेति युक्तं तथा चाश्रयत्वस्यापि संबन्धविशेषरूपत्वात् फलाश्रयतयाभिप्रेताया गोरपि संप्रदानत्वं प्राप्तमेवेत्यर्थः । परिहारमाह— धात्वर्थतेति, धात्वर्थतावच्छेदकीभूतं यत् फलं तादृशफलाश्रयत्वापेक्षया भिन्नो यः फलसंबन्धस्तस्यैव संप्रदानत्वशरीरे निवेशोस्ति तथा च धात्वर्थतावच्छेदकीभूतत्यागजन्यस्वत्वरूपफलाश्रयतया गोः कर्मत्वमेव न तु संप्रदानत्वमित्यर्थः । ' वृक्षायोदकमासिञ्चति ' इत्यादौ वृक्षादेः संप्रदानत्वमुपपादयति— वृक्षायेति, अत्र द्रवद्रव्यसमवेतक्षरणरूपक्रियानुकूलव्यापारो धात्वर्थोस्त संप्रदानतानिर्वाहको यः खलु वृक्षसमवेतो जलसंयोगः स च नोक्तधात्वर्थतावच्छेदक इति तदा-

कूलव्यापारो धात्वर्थः, संप्रदानतानिर्वाहकसंयोगश्च न तादृशधात्वर्थतावच्छेदक इति तदाश्रयत्वं निरुक्ताश्रयताभिन्नमेवेति तत्प्रकारकाभिप्रायविषयवृक्षादेः संप्रदानतानिर्वाहात् ।

न च 'पत्ये शेते' इत्यादौ धात्वर्थतावच्छेदकफलाऽप्रसिद्ध्या तदनुपपत्तिः– भेदप्रतियोगिप्रविष्टे धात्वर्थतावच्छेदके फलत्वानिवेशेन प्रसिद्धिसंभवात् । एवं च 'ब्राह्मणाय गां ददाति' इत्यादौ ब्राह्मणनिरूपितत्वेनेच्छाविषयगोनिष्ठस्वत्वजनकत्यागकर्तेति बोधः । निरूपितत्वेन कर्तुरिच्छाविषयत्वं द्वितीयान्तार्थगोवृत्तित्वान्वयिधात्वर्थतावच्छेदकस्वत्वान्वायि चतुर्थ्यर्थः, स्वत्वजनकत्यागश्च ददात्यर्थः ।

अत्र केचित्– ददातियोगे धात्वर्थतावच्छेदकस्वत्वनिरूपकत्वमेव संप्रदानत्वं

---

श्रयत्वम्=उक्तजलसंयोगाश्रयत्वं निरुक्ताश्रयताभिन्नम्=धात्वर्थतावच्छेदकफलाश्रयत्वभिन्नमेवेति तत्प्रकारकाभिप्रायविषयस्य=धात्वर्थतानवच्छेदकीभूतजलसंयोगाश्रयत्वेनाभिप्रायविषयस्य वृक्षादेः संप्रदानत्वं युक्तमेव एवम्, 'पत्ये शेते' इत्यत्र पतिवृत्तिः प्रीतिर्न धात्वर्थतावच्छेदकफलमिति तादृशधात्वर्थतानवच्छेदकीभूतप्रीतिरूपफलाश्रयत्वात् पत्युः संप्रदानत्वमित्यर्थः । "धात्वर्थतावच्छेदकफलाश्रयत्वभिन्नफलसंबन्धस्य" इत्यत्र 'धात्वर्थतावच्छेदकफलभिन्नफलस्य' इत्येवं पाठो युक्तः, भेदस्य फलेनान्वयाभिप्रायात् ।

ननूक्तप्रतिपादनेन 'धात्वर्थतावच्छेदकफलाश्रयत्वभिन्नफलसंबन्धितयेष्टत्वं संप्रदानत्वम्' इति प्राप्तं तत्र 'पत्ये शेते' इत्यत्र धातोरकर्मकत्वेन धात्वर्थतावच्छेदकफलाऽप्रसिद्ध्या धात्वर्थतावच्छेदकफलाश्रयत्वभिन्नफलस्याप्यऽप्रसिद्धेस्तदनुपपत्तिः=पत्युः संप्रदानत्वानुपपत्तिरित्याशङ्क्याह– न चेति । उत्तरमाह– भेदेति, धात्वर्थतावच्छेदकफलाश्रयत्वभिन्नफलसंबन्धितयेष्टत्वं संप्रदानत्वमिति नोच्यते येनोक्तदोषापत्तिः स्यात् किं तु धात्वर्थतावच्छेदकभिन्नफलाश्रयतयेष्टत्वं संप्रदानत्वमित्येवोच्यते तथा चाऽत्र धात्वर्थतावच्छेदकं यच्छयनत्वादिकं तद्भिन्नं यत् प्रीतिरूपमुक्तं फलं तदाश्रयत्वात् पत्युः संप्रदानत्वं युक्तमेवेत्यर्थः । 'ब्राह्मणाय गाम्' इति वाक्याज्जायमानबोधस्वरूपमाह– एवं चेति । ब्राह्मणनिरूपितमिच्छाविषयीभूतं गोनिष्ठं यत्स्वत्वं तादृशस्वत्वजनकत्यागकर्तेत्यर्थः । चतुर्थ्यर्थमाह– निरूपितत्वेनेति, गामिति द्वितीयान्तार्थभूतं यद् गोवृत्तित्वं तदन्वयि= गोवृत्तित्वान्वयि ( तादृशगोवृत्ति ) यद् धात्वर्थतावच्छेदकीभूतं स्वत्वं तादृशस्वत्वान्वयि यत् कर्तुरिच्छाविषयत्वम्=दानकर्तुः स्वत्वविषयकेच्छाविषयत्वं तदेव चतुर्थ्यर्थः, निरूपितत्वेनेत्यस्य ब्राह्मणनिरूपितमित्यर्थः । धात्वर्थमाह– स्वत्वजनकेति । तथा चात्र ब्राह्मणस्य धात्वर्थतानवच्छेदकीभूतोक्तेच्छाश्रयत्वात्संप्रदानत्वम्, गोश्च धात्वर्थतावच्छेदकीभूतस्वत्वाश्रयतया कर्मत्वमिति बोध्यम् ।

मतान्तरमनुवदति– अत्रेति, ददातियोगे='ब्राह्मणाय गां ददाति' इत्यादौ स्वस्वत्वध्वंस-

तदेव मुख्यं तथा च तत्र निरूपितत्वमात्रं चतुर्थ्यर्थो धात्वर्थतावच्छेदकस्वत्वेऽन्वेति, अत एव " श्राद्धस्य पित्रपेक्षया यागत्वमेव दानत्वं तु ब्राह्मणापेक्षया " इति शूलपाणिः । तत्र त्यज्यमानेऽन्ने पितॄणां स्वत्वानुत्पत्त्या संप्रदानत्वासंभवात् । स्वत्वभागित्वेनोद्देश्यत्वं यदि संप्रदानत्वं स्यात्तदा पितॄणामपि तथात्वाऽतः पित्रऽपेक्षयापि दानत्वं स्यात्, न हि श्राद्धे पितॄणां स्वत्वभागित्वेन नोद्देश्यत्वम्– " पितरेतत्तेऽन्नं स्वधा " इत्यादिश्राद्धरूपत्यागाभिलापस्वधार्थे त्यागे चतुर्थ्याः स्वत्वभागित्वेन पित्रादेरुद्देश्यत्वबोधकत्वात् । स्वत्वभागित्वेनोद्देश्यभूतस्यापि पित्रादेः स्वीकाराभावान्न स्वत्वम्, ब्राह्मणानां तत्रानुद्देश्यत्वेपि स्वत्वं

---

कपरस्वत्वानुकूलस्त्यागो दाधात्वर्थस्तत्र धात्वर्थतावच्छेदकं यत् परस्वत्वं तन्निरूपकत्वं ब्राह्मीति तदेव स्वत्वनिरूपकत्वं मुख्यं संप्रदानत्वम्, उक्तधात्वर्थतावच्छेदकस्वत्वे यद् ब्राह्मणनिपितत्वमस्ति तदेव चतुर्थ्यर्थस्तस्य च स्वत्वे आश्रयतासंबन्धेनान्वय इत्यन्वयः । उक्ते प्रमाहह– श्राद्धस्येति, अत एव=यत एव धात्वर्थतावच्छेदकस्वत्वनिरूपकत्वमेव संप्रदानत्वमत श्राद्धस्य पित्रपेक्षया यागत्वमेव न तु दानत्वं पितॄणां स्वत्वनिरूपकत्वाभावात्, श्राद्धस्य दानत्वं तु ब्राह्मणापेक्षयैव ब्राह्मणस्यैव स्वत्वनिरूपकत्वेन तत्र संप्रदानत्वात् । उक्ते हेतुमाह–त्रेति, तत्र=श्राद्धे त्यज्यमानेऽन्ने पितॄणां स्वत्वं नोत्पद्यते तत्स्वीकाराभावादिति न पितॄणां संप्रदानत्वं संप्रदानत्वाभावाच्च न पित्रपेक्षया श्राद्धस्य दानत्वमित्यर्थः । विपक्षे बाधकमाह–स्वत्वभागित्वेनेति, यदि स्वत्वभागित्वेनोद्देश्यत्वं संप्रदानत्वं स्यात्तदा पितॄणामपि तथात्वाऽतः=श्राद्धे स्वत्वभागित्वेनोद्देश्यत्वस्य सत्त्वेन संप्रदानत्वप्राप्त्या पित्रपेक्षयापि श्राद्धस्य दानत्वं स्यादेव, श्राद्धे पितॄणां स्वत्वभागित्वेनोद्देश्यत्वं व्यतिरेकमुखेनाह– न हीति । श्राद्धे पितॄणां स्वत्वभागित्वेनोद्देश्यत्वे प्रमाणमाह– पितरेतदिति, श्राद्धमपि त्याग एव स्वधाशब्दार्थोपि त्याग इति श्राद्धरूपत्यागस्याभिलापरूपो यः स्वधेतिशब्दस्तदर्थभूते त्यागे ते इतिचतुर्थी पितॄणां स्वत्वभागित्वेनोद्देश्यत्वं बोधयतीति श्राद्धे पितॄणामपि स्वत्वभागित्वेनोद्देश्यत्वस्य सत्त्वात् संप्रदानत्वं स्यात् संप्रदानत्वाच्च पित्रपेक्षयापि श्राद्धस्य दानत्वं स्यात् न च पित्रपेक्षया श्राद्धस्य दानत्वमिष्टमिति न स्वत्वभागित्वेनोद्देश्यत्वं संप्रदानत्वं किं तु स्वत्वनिरूपकत्वमेव संप्रदानत्वमित्यर्थः । ननु श्राद्धे पितॄणां स्वत्वनिरूपकत्वमेव कथं नेत्याशङ्क्याह– स्वत्वभागित्वेनेति, यः द्रव्यं स्वीकरोति तस्यैव स्वत्वमुत्पद्यत इति तस्यैव स्वत्वनिरूपकत्वं भवति न खलु पितरः श्राद्धान्नं स्वीकुर्वन्तीति न पितॄणां स्वत्वं न च स्वत्वनिरूपकत्वं स्वत्वनिरूपकत्वाभावाच्च न संप्रदानत्वम् । ब्राह्मणानां च तत्र=श्राद्धे उद्देश्यत्वाभावेपि पित्रुद्देश्यत्वेन त्यक्तं द्रव्यं ब्राह्मणाय दीयते इति तादृशप्रतिपत्तिभूतदानात् स्वत्वं जायते स्वत्वोत्पत्त्या स्वत्वनिरूपकत्वं स्वत्वनिरूपकत्वाच्च संप्रदानत्वं तथा च ब्राह्मणापेक्षया श्राद्धस्य दानत्वम् । अप्रधानं कर्म प्रतिपत्तिरुच्यते इतिमीमांसाशास्त्रे द्रष्टव्यम् । ननु ब्राह्मणानामनुद्देश्यत्वे कथं संप्रदानत्वं स्यादित्या-

प्रतिपत्तितो जायते । अनुद्देश्यत्वेपि च संप्रदानत्वमुपपादितमेव । पितॄणामिव ब्राह्मणानामपि च स्वत्वभागित्वेनोद्देश्यत्वमप्यविरुद्धम् ।

धात्वर्थतानवच्छेदकफलभागितया यत्र संप्रदानत्वम् 'वृक्षायोदकं सिञ्चति' 'पत्ये शेते' इत्यादौ तत्रोद्देश्यत्वांशनिवेश आवश्यकः- यत्रान्योद्देशेन क्षिप्तजलस्य दैवाद् वृक्षसंयोगोऽन्योद्देशेन शयनादितश्च पत्यादेः फलसंबन्धस्तत्र तथाप्रयोगविरहात् । अत एव तत्र चतुर्थ्यर्थः स्वनिष्ठतया कर्त्रभिप्रेततत्फलं प्रति जनकत्वं तच्च सेकादिक्रियायामन्वेति, भाक्तं च तत्र संप्रदानत्वम्- उद्देश्यत्वागर्भसंप्रदानत्वे एव लाघवाच्छक्तेः, इतरत्र लक्षणाया अभ्युपगमात् । 'पितृभ्यो दद्यात्' इत्यादावनिर्धारितकर्तृकसंप्रदाने चतुर्थी तत्त्वं च तत्र त्यागजन्यस्वत्वभागितयोद्देश्यत्वमेवः।

---

शङ्कयाह- अनुद्देश्यत्वेपीति, उपपादितमिति- :स्वत्वनिरूपकत्वमेव संप्रदानत्वं न तु स्वत्वभागित्वेनोद्देश्यत्वम् अस्ति च श्राद्धद्रव्यनिष्ठस्वत्वस्य निरूपकत्वं ब्राह्मणानां स्वीकर्तृत्वादिति युक्तं संप्रदानत्वम् । पक्षान्तरेण श्राद्धे :ब्राह्मणानामपि स्वत्वभागित्वेनोद्देश्यत्वमाह- पितॄणामिवेति, तथा च ब्राह्मणानामपि स्वत्वभागित्वेनोद्देश्यत्वात् संप्रदानत्वं प्राप्तमेवेत्यर्थः ।

मुख्यं संप्रदानत्वमुक्त्वा भाक्तमाह- :धात्वर्थतेति, 'वृक्षायोदकमासिञ्चति' इत्यत्र द्रवद्रव्यक्रियानुकूलव्यापार एव धात्वर्थ इति वृक्षवृत्तिजलसंयोगो न धात्वर्थतावच्छेदक इति तादृशधात्वर्थतानवच्छेदकीभूतसंयोगरूपफलभागितया संप्रदानत्वमिष्टमस्तीति तत्रोद्देश्यत्वनिवेश आवश्यक एव तथा च धात्वर्थतानवच्छेदकफलभागितयोद्देश्यत्वं संप्रदानत्वमित्येव वक्तव्यम्, अस्ति चात्र तादृशजलसंयोगरूपफलभागितयोद्देश्यत्वं संप्रदानभूतवृक्षस्य 'पत्ये शेते' इत्यत्र च तादृशप्रीतिरूपफलभागितयोद्देश्यत्वं संप्रदानभूतपत्युः । उद्देश्यत्वांशनिवेशस्यावश्यकत्वे हेतुमाह- यत्रेति । तथाप्रयोगविरहात्='वृक्षायोदकमासिञ्चति' 'पत्ये शेते' इत्यादि प्रयोगाभावात् । यद्यत्रोद्देश्यत्वनिवेशो न स्यात्तदाऽन्योद्देशेनापि क्षिप्तजलस्य दैवाद् वृक्षसंयोगे जाते 'वृक्षायोदकमासिञ्चति' इति प्रयोगः स्यादेव न चैतदिष्टम्, उद्देश्यत्वनिवेशे कृते तु तत्र वृक्षस्य जलसंयोगभागितयोद्देश्यत्वाभावान्न तथाप्रयोगापत्तिरित्यर्थः । अत एवेति- उद्देश्यत्वांशनिवेशादेव यत्र वृक्षोद्देशेन जलः क्षिप्यते तत्र 'वृक्षायोदकमासिञ्चति' इति प्रयोगो भवति तत्र स्वनिष्ठतया=चतुर्थ्यन्तार्थभूतवृक्षनिष्ठं यत् कर्त्रभिप्रेतम्=सेकक्रियाकर्त्रभिप्रेतं जलसंयोगरूपं फलं तज्जनकत्वमेव चतुर्थ्यर्थः, तच्च जनकत्वं सेकक्रियायामस्ति, अत्र च वृक्षकर्तृकस्वीकाराभावाद् भाक्तमेव संप्रदानत्वमित्याह- भाक्तमिति । एतत्संप्रदानत्वस्य भाक्तत्वे हेतुमाह- उद्देश्यत्वेति, उद्देश्यत्वागर्भसंप्रदानत्वं हि स्वत्वनिरूपकत्वरूपं पूर्वमेवोक्तम् । इतरत्र='वृक्षायोदकम्' इत्यादिस्थले वृक्षादिनिष्ठे उद्देश्यत्वगर्भसंप्रदानत्वे लक्षणायाः=चतुर्थ्या लक्षणायाः । "पितृभ्यो दद्यात्" इत्यादिवचनस्य सामान्यतः प्रवृत्तत्वेन दानकर्तुर्विशेषतो निर्धारणाभा-

अथ यत्र जनान्तरस्य वृक्षादिनिष्ठजलसंयोगादिरिच्छाविषयोऽन्येन च जनेनाऽन्योद्देशेन क्षिप्तजलादेर्वृक्षादिसंयोगस्तत्रापि ‘ वृक्षायोदकमासिञ्चति जनः’ इत्यादिप्रयोगापत्तिः—तत्तद्व्यक्तित्वस्य पदेनानुपस्थानात्. तेन रूपेण विशेष्यभूतकर्तृव्यक्तीनामिच्छांशे भानासंभवाद् उपस्थितजनत्वावच्छिन्नेच्छाविषयत्वस्य च वृक्षसंयोगादावऽबाधात् । एवं तदीयकालान्तरीणेच्छामादायाप्यतिप्रसङ्गतादवस्थ्यमिति चेत् ?, न—वृक्षादिनिष्ठत्वेनेच्छैव हि चतुर्थ्यन्तार्थस्तस्याश्च स्वविषयसंयोगादिजनकत्वस्वजन्यत्वोभयसंबन्धेन सेकादिक्रियायामन्वयः, उक्तस्थले च यत्क्रियाव्यक्त्या जलसंयोगादिर्वृक्षादौ जन्यते तत्र कालान्तरीणपुरुषान्तरीणेच्छायाः स्वविषयसंयोगादिजनकत्वसंबन्धसत्त्वेपि स्वजन्यत्वाभावान्नोभयसंबन्धेनेच्छावैशिष्ट्यमित्यऽयोग्यतैवेति वदन्ति ।

---

न्=अभिलापाभावादत्रानिर्धारितकर्तृकसंप्रदाने=अनिर्धारितः कर्ता यस्य दानस्य तादृशदानिरूपितसंप्रदाने चतुर्थी ।ः तत्त्वम्=संप्रदानत्वम् ।

ननु यदा कस्यचित् जनस्य ‘ वृक्षस्य जलसंयोगो भवतु ’ इत्याकारिकेच्छा स्याद् अन्येन च जनेनान्योद्देशेन क्षिप्तजलस्य वृक्षसंयोगो जातस्तत्रापि वृक्षस्य जनत्वावच्छिन्नवेतेच्छाविषयसंयोगरूपफलभागितयोद्देश्यत्वात् ‘ वृक्षायोदकमासिञ्चति ’ इतिप्रयोग आपत्त्याशङ्कते—अथेति । उपपत्तिमाह—तत्तद्व्यक्तित्वस्येति, जनादिपदेन देवदत्तादितत्तद्व्यनामुपस्थितिरेव न भवतीति तेन=तत्तद्व्यक्तित्वेन रूपेण विशेष्यभूतकर्तृव्यक्तीनाम्=सेकाकर्तृव्यक्तीनामिच्छांशे=इच्छासमवायित्वेन भानासंभवात्, उपस्थितं च यज्जनत्वावच्छिन्नेच्छायत्वं तस्य तु वृक्षनिष्ठजलसंयोगे बाधो नास्त्येव जलसंयोगस्य किंचिज्जनेच्छाविषयत्वादेव, पूर्वकाले ‘ वृक्षस्य जलसंयोगो भवतु ’ इतीच्छा जाता कालान्तरे तेनैव जनेनान्योद्देशेन तजलस्य वृक्षसंयोगे जाते तादृशजलवृक्षसंयोगस्यापि पूर्वकालिकेच्छाविषयत्वसंभवात् ‘ वृक्षायोदकमासिञ्चति ’ इतिप्रयोगः स्यादित्याह—एवमिति । परिहरति—नेति, ‘ वृक्षायोदकम् ’ यत्र वृक्षोदकसंयोगस्येच्छाविषयत्वाद् वृक्षस्यापीच्छाविषयत्वं प्राप्तं सा चेच्छा विषयतासंबन्धेन वर्तते इति वृक्षनिष्ठत्वेन वृक्षनिष्ठा सेच्छैव ‘ वृक्षाय ’ इति चतुर्थ्यन्तपदस्यार्थस्तस्याश्चेच्छायाः स्वविषयसंयोगादिजनकत्वस्वजन्यत्वैतदुभयसंबन्धेन सेकक्रियायामन्वयः क्रियते स्वम्=इच्छा । तथा च यत्र तेनैव जनेन बुद्धिपूर्वकं जलस्य वृक्षसंयोगेच्छयोदकमासिच्यते तत्र स्वमिच्छा तद्विषयो यो वृक्षजलसंयोगस्तज्जनकत्वमपि सेकक्रियायां भवति स्वमिच्छा तज्जन्यत्वमपि सेकक्रियायां भवति तादृशसेकक्रियाया उक्तेच्छाजन्यत्वादेवेति स्वविषयसंयोगजनकत्वस्वजन्यत्वैतदुभयसंबन्धेनेच्छायाः सेकक्रियायामन्वयस्य संभवात् ‘ वृक्षायोदकमासिञ्चति ’ इतिप्रयोगो भवति, उक्तानिष्टस्थले च यत्सेकक्रियाव्यक्त्या जलसंयोगो वृक्षे जायते तत्र=तत्सेकक्रियाव्यक्तौ उक्तकालान्तरीणेच्छायाः पुरुषान्तरीणेच्छायाश्च स्वविषयसंयोगजनकत्वसंबन्धेनान्वयसंभवेपि तत्से-

अत्रेदं बोध्यम्-उद्देश्यत्वाऽगर्भस्यैव त्यागजन्यस्वत्वभागित्वस्य ददातिसंप्रदानतारूपत्वे चैत्रमात्रोद्देशेन यद्दत्तं तत्र तादृशदानेन "दम्पत्योर्मध्यगं धनम्" इत्यतस्तत्पत्न्या अपि स्वत्वस्य प्रामाणिकतया संप्रदानत्वेन 'चैत्रपत्न्यै दत्तम्' इति व्यवहारापत्तेः। न च पत्युः स्वत्वमेव पत्नीस्वत्वं जनयति न तु तत्सामग्रीति वाच्यम्, स्वत्ववति स्वत्वान्तरानुत्पत्तेः, तथा च सर्वत्रैवोद्देश्यत्वान्तर्भावः। भवतु च "पितृभ्यो दद्यात्" इत्यत्रापि मुख्यमेव संप्रदानत्वं चतुर्थ्यर्थः।

अस्तु वा स्वस्वत्वेच्छाधीनतत्कत्वमेव मुख्यं दानक्रियासंप्रदानत्वं पितृस्वत्वाप्रसिद्ध्या न तेषां संप्रदानत्वम्। चतुर्थ्यर्थो धात्वर्थतावच्छेदकस्वत्वान्वयि

---

कक्रियाव्यक्तेरुक्तकालान्तरीणपुरुषान्तरीणेच्छाजन्यत्वाभावात् स्वजन्यत्वसंबन्धेनान्वयाऽसंभवान्नोक्तानिष्टस्थले 'वृक्षायोदकमासिञ्चति' इति प्रयोगापत्तिः। एवं शयनक्रियायामपि स्वविषयप्रीतिजनकत्वस्वजन्यत्वैतदुभयसंबन्धेन चतुर्थ्यन्तार्थेच्छाया अन्वयमुपगम्योक्तातिप्रसङ्गो वारणीयः।

उद्देश्यत्वनिवेशरहिते स्वत्वनिरूपकत्वरूपे संप्रदानत्वे दोषमुद्‌घाटयति-अत्रेदमित्यादिना, यद् धनं केवलं चैत्राय दत्तं तत्र यथा चैत्रस्य स्वत्वं तथा चैत्रपत्न्या अपि स्वत्वस्य जायमानत्वात् संप्रदानत्वशरीरे उद्देश्यत्वनिवेशाभावाच्च यथा 'चैत्राय दत्तम्' इति व्यवहारो भवति तथा 'चैत्रपत्न्यै दत्तम्' इत्यपि व्यवहारः स्यात् "दम्पत्योर्मध्यगं धनम्" इतिप्रमाणेन चैत्रतत्पत्न्योरुभयोरपि स्वत्वनिरूपकत्वसाम्यादित्यर्थः। ननु चैत्रस्वत्वमेव चैत्रपत्न्याः स्वत्वमुत्पादयति न तु तत्सामग्री=चैत्रस्वत्वोत्पादिका दानादिसामग्रीति दानस्य चैत्रपत्नीस्वत्वानुत्पादकत्वादेव 'चैत्रपत्न्यै दत्तम्' इतिव्यवहारापत्तिरुक्तस्थले नास्तीत्याशङ्क्याह-न चेति। परिहारमाह-स्वत्ववतीति। तथा च "दम्पत्योर्मध्यगं धनम्" इतिप्रमाणेन दानक्रियया दम्पत्योरेकदैव स्वत्वमुत्पद्यते इति स्वीकार्यं तथा च चैत्राय दत्ते चैत्रपत्न्या अपि स्वत्वस्य जातत्वात् 'चैत्रपत्न्यै दत्तम्' इति व्यवहारः स्यादेव न चैतदिष्टमिति सर्वत्रैव संप्रदानत्वशरीरे उद्देश्यत्वनिवेशः कर्तव्यस्तथा चोक्तस्थले चैत्रपत्न्या उद्देश्यत्वाभावात् 'चैत्रपत्न्यै दत्तम्' इति व्यवहारापत्तिर्नास्त्येवेत्यर्थः। नन्वेवं यदि सर्वत्रैव संप्रदानत्वशरीरे उद्देश्यत्वनिवेशः स्यात्तदा मुख्यसंप्रदानत्वेप्युद्देश्यत्वनिवेशात् "पितृभ्यो दद्यात्" इत्यत्र पितॄणामप्युद्देश्यत्वान्मुख्यमेव संप्रदानत्वं स्यादित्याशङ्क्योक्तं स्वीकरोति-भवतु चेति।

पक्षान्तरमाह-अस्तु वेति। प्रथमस्वपदस्येच्छयान्वयः-स्वकीया या स्वत्वेच्छा=परस्वत्वेच्छा तदधीनं यत् तत्कत्वम्=पूर्वोक्तं स्वत्वनिरूपकत्वं तदेव दानक्रियाया मुख्यं संप्रदानत्वं यथा गोनिष्ठस्वत्वस्य ब्राह्मणो निरूपको भवतु इत्याकारकेच्छाधीनं स्वत्वनिरूपकत्वं चैत्रादेरेवोक्तस्थले भवति न तत्पत्न्याः-'चैत्रपत्न्या इदं भवतु' इत्याकारकप्रधानेच्छाया अभावादिति न तत्र 'चैत्रपत्न्यै

निरूपितत्वम्, स्वत्वस्य च स्वस्वत्वध्वंसेच्छारूपे त्यागे स्वजनकत्वस्वेच्छाधीनत्वोभयं संबन्धः, तल्लाभश्च विशिष्टस्य धातुशक्यतामते शक्तित एव—तदन्तर्भावेनैव शक्त्युपगमात् । फलव्यापारयोः पृथग् धात्वर्थतामते आकाङ्क्षाबलादेव तादृशसंबन्धलाभः । "पितृभ्यो दद्यात्" इत्यत्र च धात्वर्थान्तर्गतस्वत्वे चतुर्थ्या पित्राद्यन्वयी निरूपितत्वरूपो मुख्योर्थो बाधितत्वान्न प्रत्याय्यते. अपि तु निरूपितत्वेनेच्छाविषयत्वरूपो लक्ष्यार्थ एव, ददातिस्तु तत्र मुख्य एव— श्राद्धस्यापि ब्राह्मणापेक्षया दानत्वात् । "श्राद्धे ब्राह्मणस्य संप्रदानतानिर्वाहायाऽस्ति चोद्देश्यतापि ब्राह्मणस्य" इत्यादिकमभिदधानस्य शूलपाणेरपि संप्रदानत्वशरीरे उद्देश्यत्वांशापरित्यागे निर्भरोऽवगम्यते, "कर्मणा यमभिप्रैति" इति प्रणयतो महर्षेः पाणिनेरपि संमतोयमर्थः ।

"शत्रवे भयं ददाति" इत्यादौ जनयतीति भाक्तोर्थः, एव चोत्पादकव्यापाररूपे धात्वर्थे भयरूपं कर्म तद्योगितयोद्देश्यत्वाच्छत्वादेः संप्रदानत्वम् ।

---

दत्तम्' इति व्यवहारापत्तिरिति भावः । स्वत्वान्वयि=स्वत्वनिष्ठम् । त्यागो हि स्वस्वत्वध्वंसेच्छारूप एव तादृशत्यागस्य ब्राह्मणस्वत्वजनकत्वमप्यस्ति तादृशस्वत्वेच्छाधीनत्वमप्यस्ति—तादृशस्वत्वोत्पत्तीच्छयैव त्यागस्योत्पत्तेरिति स्वत्वस्य=ब्राह्मणस्वत्वस्य त्यागे स्वजनकत्वस्वेच्छाधीनत्वैतदुभयसंबन्धेनान्वय इति नोक्तस्थले 'चैत्रपत्न्यै दत्तम्' इतिप्रयोगापत्तिः । तल्लाभः=उक्तसंबन्धप्रतीतिः । विशिष्टस्य=स्वजनकत्वस्वेच्छाधीनत्वैतदुभयसंबन्धेन स्वत्वविशिष्टत्यागस्य । फलव्यापारयोः=त्यागरूपव्यापारे स्वत्वरूपफले च । तादृशसंबन्धलाभः=स्वजनकत्वस्वेच्छाधीनत्वैतत्संबन्धप्रतीतिः । अस्मिन् पक्षे "पितृभ्यो दद्यात्" इतिवाक्यस्य गतिमाह— पितृभ्य इति, दीयमानद्रव्ये पितॄणां स्वत्वं नोत्पद्यते स्वीकाराभावादिति तादृशस्वत्वे पितृनिरूपितत्वं नास्त्येवेति बाधितमेव किं तु निरूपितत्वेनेच्छाविषयत्वमेव पित्रान्वयिस्वत्वे चतुर्थ्या प्रत्याय्यते तच्च चतुर्थ्या लक्ष्यार्थ एव न मुख्यार्थ इत्यर्थः । श्राद्धस्य ब्राह्मणापेक्षया तु दानत्वं मुख्यमेवेति तत्र="पितृभ्यो दद्यात्" इत्यत्र ददातिस्तु मुख्यार्थ एवेत्याह— ददातीति । संप्रदानत्वशरीरे उद्देश्यत्वनिवेशे शूलपाणेरप्यनुमितिमाह— श्राद्धे इत्यादिना । पाणिन्यनुमितिमाह— कर्मणेति । अयम्=उद्देश्यत्वनिवेशः । "अभिप्रैति" इतिसूत्रस्थपदेन संप्रदानभूतब्राह्मणादेरुद्देश्यत्वं प्राप्तम्— अभिप्रायविषयत्वस्योद्देश्यत्वरूपत्वात् "अभिप्रैति" इत्यनेनाभिप्रायविषयत्वस्य प्राप्तत्वादित्यर्थः ।

प्रयोगान्तरमुदाहरति— शत्रव इति, 'भयं ददाति' इत्यस्य 'भयं जनयति' इत्यर्थः । उत्पादकव्यापाररूपे=जनयतीत्युत्पत्त्यनुकूलव्यापाररूपे धात्वर्थे=धात्वर्थस्य भयमेव कर्म तादृक्कर्मभूतभययोगितयोद्देश्यत्वाच्छत्रोः संप्रदानत्वमित्यर्थः ।

'युद्धाय संनह्यते' इत्यादौ संनहनादिक्रियाजन्यफलाऽसंबन्धाद् युद्धादेर्न संप्रदानतानिर्वाह इति नेयं संप्रदानचतुर्थी. अपि तु 'एधानाहर्तुं व्रजति' इत्यर्थे 'एधेभ्यो व्रजति' इत्यत्रेव 'युद्धं कर्तुं सोढुं वा संनह्यते' इत्यर्थविवक्षया "क्रियार्थोपपद" इति सूत्रान्तरेण. तस्य च 'स्थानिनोऽश्रूयमाणस्य क्रियार्थोपपदस्य तुमुन्नन्तधातोः कर्मणि=स्वार्थनिष्ठकर्मत्वे विवक्षिते स्वोत्तरं चतुर्थी' इत्यर्थस्तथा चाऽऽहरणकरणसहनाद्युद्देश्यकत्वं तादृशचतुर्थ्यर्थ इत्यवधेयम्।

अथ "यदग्नये च प्रजापतये च सायं जुहोति" इत्यादावग्न्यादेरिव "सर्वभूतेभ्य उत्सृष्टं मयैतज्जलमूर्जितम्" इत्यादौ सर्वप्राणनामिव च "पशुना रुद्रं यजते" इत्यादावपि त्यागविशेषरूपक्रियायां रुद्रादेरनिराकर्तृसंप्रदानत्वं दुर्वारमिति तत्रापि चतुर्थी स्यादिति चेत्?, न— गौरवितप्रीतिहेतुक्रिया

---

प्रयोगान्तरमुदाहरति— युद्धायेति, संनहनादिक्रियाजन्यफलस्य जयादिरूपस्य जनके युद्धे निरूपकत्वादिरूपः संप्रदानत्वनिर्वाहकः संबन्धो नास्तीति न युद्धस्य संप्रदानत्वमिति न युद्धपदोत्तरचतुर्थी संप्रदानचतुर्थी किं तु "क्रियार्थोपपदस्य च कर्मणि स्थानिनः" इतिसूत्रेणान्यैव चतुर्थीत्यर्थः। अत्रोदाहरणमाह— एधानिति। एधान्=काष्ठानि। उक्तसूत्रस्यार्थमाह— तस्येति, यथा 'एधानाहर्तुं व्रजति' इत्यत्र 'आहर्तुम्' इति तुमुन्नन्तधातुरेव स्थानी व्रजतीतिक्रियार्थोपपदं चास्ति नाम आहरणादिक्रियार्था या व्रजनादिक्रिया तद्बोधकव्रजतीत्यादिक्रियापदमुपपदं यस्यास्ति स च तुमुन्नन्तधातुः 'एधेभ्यो व्रजति' इत्यत्र श्रूयमाणं नास्तीति तादृशतुमुन्नन्तधातोः कर्मणि=कर्मभूतेष्वेधेषु स्वार्थनिष्ठकर्मत्वे=एधनिष्ठकर्मत्वे विवक्षिते स्वोत्तरम्=एधपदोत्तरं चतुर्थी स्यादित्यनेन 'एधेभ्यो व्रजति' इति सिद्धम्. एवमेव 'युद्धाय संनह्यते' इत्यत्रापि चतुर्थी ज्ञेया। अत्रत्यचतुर्थ्यर्थमाह— तथा चेति, 'फलान्याहर्तुं व्रजति— फलेभ्यो व्रजति' इत्यत्राहरणोद्देश्यकत्वम्, 'युद्धं कर्तुं संनह्यते— युद्धाय संनह्यते' इत्यत्र करणोद्देश्यकत्वम्, 'युद्धं सोढुं संनह्यते— युद्धाय संनह्यते' इत्यत्र सहनोद्देश्यकत्वं चतुर्थ्यर्थस्तस्य व्रजनादिव्यापारेऽन्वयस्तथा च 'एधाहरणोद्देश्यकव्रजनानुकूलकृतिमान्' 'युद्धसहनोद्देश्यकसंनहनानुकूलकृतिमान्' इत्यादिः शाब्दबोधः। उद्देश्यत्वं च फलाहरणादीनां प्राप्तम्।

शङ्कते— अथेति, संप्रदानत्वं द्विविधं भवति स्वीकर्तृसंप्रदानत्वमऽनिराकर्तृसंप्रदानत्वं च तत्र 'दीयताम्' इत्यादियाचनासंभवात् ब्राह्मणादीनां स्वीकर्तृसंप्रदानत्वम् 'सूर्यायाऽर्घं ददाति' इत्यादौ 'दीयताम्' इत्यादिरूपायाः सूर्यादिकर्तृकयाचनाया असत्त्वेपि सूर्येण 'मा दीयताम्' इत्यादिरूपो निराकारः=परिहारोपि न क्रियते इति तत्र सूर्यस्याऽनिराकर्तृसंप्रदानत्वम्, एवम् "यदग्नये" इत्यादावग्न्यादिकर्तृकपरिहाराभावाद् यथाग्न्यादेरनिराकर्तृसंप्रदानत्वं यथा च "सर्वभूतेभ्यः" इतितडागोत्सर्गवाक्ये सर्वभूतानामनिराकर्तृसंप्रदानत्वं तथा "पशुना रुद्रं यजते" इत्यत्र रुद्रकर्तृकपशुकर्मकत्यागविषयकस्य "मह्यं पशुर्न देयः" इत्यादिरूपस्य परिहारस्याभावाद् रुद्रस्यानिराकर्तृसंप्रदानत्वं किं न स्यात्? प्राप्ते च संप्रदानत्वे

यज्यर्थस्तदर्थतावच्छेदकफलं प्रीतिस्तदाश्रयतया रुद्रस्य विवक्षितत्वात् कर्मसंज्ञकत्वेन द्वितीयैव न तु चतुर्थी, त्यागात्मकतादृशक्रियायां निरुक्ताऽनिराकर्तृसंप्रदानत्वे सत्यपि तदऽविवक्षणात् । प्रीतिभागितयोद्देश्यत्वरूपसंप्रदानत्वविवक्षायां च 'रुद्राय यजते ' इत्यपि प्रयोगः । उभयविवक्षायां परत्वेन कर्मसंज्ञया बाधाद् द्वितीयैव । जुहोत्युत्सृजत्यादेः प्रीतिरूपफलावच्छिन्नत्यागाऽबोधकतया त्यागरूपक्रियाजन्यप्रीतिभागिनो देवतादेस्तत्कर्मताविरहान्नैव 'प्रजापतिं जुहोति' ' भूतान्युत्सृजति ' इत्यादयः प्रयोगाः ।

' रजकस्य वस्त्रं ददाति ' इत्यत्र ददातिर्न त्यागार्थकोऽपि तु परायत्तीकरणार्थको गौणः, तदायत्तीकरणं च प्रकृते तत्कर्तृकनिर्णेजनेच्छाप्रकाशको व्यापारः, तदेकदेशे कर्तृत्वे रजकस्य संबन्धाविवक्षायां शैषिकी षष्ठी ।

' हन्तुः पृष्ठं ददाति ' इत्यत्र तत्कर्तृकताडनानुमतिप्रकाशको व्यापार एव

---

त्रापि=रुद्रपदोत्तरमपि चतुर्थी स्यादित्यर्थः । परिहरति— नेति, गौरवमस्त्यस्यामिति गौरविता या प्रीतिस्तादृशप्रीतिहेतुभूता क्रिया यजधात्वर्थ इति धात्वर्थतावच्छेदकं फलं सा प्रीतिरेति तादृशप्रीत्याश्रयतया रुद्रस्य विवक्षितत्वात् कर्मसंज्ञैव भवतीति रुद्रपदोत्तरं द्वितीयैव न चतुर्थीप्राप्तिः—पूर्वमेव धात्वर्थतावच्छेदकफलाश्रयत्वे कर्मत्वमित्युक्तत्वादित्यर्थः । किं च त्यागात्मकतादृशक्रियायाम्=यज्यर्थभूतत्यागरूपप्रीतिहेतुक्रियायामऽनिराकर्तृसंप्रदानत्वस्य रुद्रे सत्यपि विवक्षाऽभावान्न संप्रदानत्वमित्याह— त्यागात्मकेति । वस्तुतस्त्वत्र " कर्मणः करणसंज्ञा संप्रदानस्य च कर्मसंज्ञा " इति वार्तिकेनैव रुद्रस्य कर्मसंज्ञेति बोध्यम् । ' रुद्राय यजते ' इतिप्रयोगमुपपादयति—प्रीतिभागितयेति । विशेषान्तरमाह— उभयेति, यदि कर्मत्वसंप्रदानत्वयोरुभयोर्विवक्षा स्यात्तदापि परया कर्मसंज्ञया संप्रदानसंज्ञाया बाधाद् द्वितीयैव भवति न चतुर्थीत्यर्थः । जुहोत्यादिप्रयोगस्थले प्रीतिरूपफलस्य धात्वर्थतावच्छेदकत्वमेव नास्ति येन धात्वर्थतानवच्छेदकीभूतप्रीतिरूपफलभागितया तादृशत्यागक्रियाजन्यप्रीतिभागिनो देवतादेः कर्मत्वं स्यात् किं तु धात्वर्थतानवच्छेदकीभूततादृशप्रीतिभागितयोद्देश्यत्वात् संप्रदानत्वमेवेति " यदग्नये च प्रजापतये च " " सर्वभूतेभ्यः " इत्येवं चतुर्थ्यन्त एव प्रयोगो भवति न तु ' प्रजापतिं जुहोति ' इत्यादिरित्याह— जुहोतीति ।

ननु ' रजकस्य वस्त्रं ददाति ' इत्यत्र रजकस्य कथं न संप्रदानसंज्ञा ? ददातियोगादित्याशङ्क्याह— रजकस्येति । परायत्तीकरणम्=पराधीनीकरणम् । तत्कर्तृक=रजककर्तृक । तदेकदेशे=उक्तव्यापारैकदेशे । उक्तकर्तृत्ववत्त्वं रजकस्येति संबन्धविवक्षायां षष्ठ्येव रजकपदोत्तरं भवति न चतुर्थीत्यर्थः । रजककर्तृकवस्त्रकर्मकनिर्णेजनेच्छाप्रकाशकव्यापारानुकूलकृतिमानिति शाब्दबोधः ।

प्रयोगान्तरमुदाहरति— हन्तुरिति । तत्कर्तृक=हन्तृकर्तृक । अत्र ' पृष्ठे मे ताडयताम् '

ददात्यर्थः, तदेकदेशे कर्तृत्वे हन्तुः संबन्धविवक्षायां षष्ठी । एवम् ' संवाहकस्य चरणं ददाति ' इत्यादावूहनीयम् ।

' नारदाय रोचते कलहः ' इत्यादौ " रुच्यर्थानाम् " इत्यनुशासनेन प्रीतिजनकतारूपरुच्यर्थघटकप्रीतिभागिनः संप्रदानसंज्ञा विहिता, तत्र चतुर्थ्यर्थं आश्रितत्वं प्रीतावऽन्वेति तादृशक्रियाश्रयतया प्रीतिजनककलहादेः कर्तृता ।

' पुष्पेभ्यः स्पृहयति ' इत्यत्र स्पृहाविषयपुष्पस्य " स्पृहेरीप्सितः " इत्यनेन संप्रदानत्वाच्चतुर्थी तदर्थो विषयित्वं तस्येच्छारूपक्रियायामन्वयः ।

'पुत्राय क्रुध्यति' इत्यत्र "क्रुधद्रुह" इत्यादिसूत्रेण कर्मणः संप्रदानसंज्ञा तत्रापि चतुर्थ्यर्थो विषयित्वं कोपेऽन्वेति, क्रोधस्य द्वेषविशेषात्मकतया भक्तिश्रद्धादिवज्ज्ञानविशेषरूपत्वेन वा सविषयकत्वात् । एवम् ' शत्रवे द्रुह्यति ' इत्यदावपि तेनैव संप्रदानत्वम्, द्रोहोऽपचिकीर्षा. अहितेच्छेति यावत्, अहितभागितया येच्छाविषयता तन्निरूपकत्वं चतुर्थ्यर्थ इच्छान्वयी, अहितान्वय्याधेयत्वं वा, अतः " कर्मणा " इत्यादिसूत्रस्याविषयः । ईर्ष्या=अक्षान्तिः परोत्कर्षाऽस-

---

इत्याकारकाऽनुमतिप्रकाशको व्यापारो ददात्यर्थः स च गौण एवेति न हन्तुः संप्रदानत्वम् । तदेकदेशे=उक्तव्यापारिकदेशे । प्रयोगान्तरमुदाहरति- एवमिति, अत्र संवाहककर्तृकं यत्संवाहनं तदनुमतिप्रकाशको व्यापारो ददात्यर्थः, तदेकदेशे कर्तृत्वे संवाहकस्य संबन्धविवक्षास्तीति संवाहकपदोत्तरं षष्ठ्येव न चतुर्थीत्यर्थः ।

प्रयोगान्तरमुदाहरति- नारदायेति, प्रीतिजनकत्वमेव रुच्यर्थत्वमिति प्रीतिजनकतारूपो यो रुच्यर्थस्तद्घटकप्रीतेर्भागिनः संप्रदानसंज्ञा संप्रदानत्वाच्च नारदपदोत्तरं चतुर्थी । चतुर्थ्यर्थमाह- तत्रेति, कलहजन्यप्रीतेर्नारदाश्रितत्वाच्चतुर्थ्यर्थभूतमाश्रितत्वं प्रीतावन्वेति । तादृशक्रियाश्रयतया=प्रीतिजननानुकूलक्रियाश्रयतया । स्पष्टार्थोयं ग्रन्थः । नारदाश्रितप्रीतिजनकताश्रयः कलह इति शाब्दबोधः ।

प्रयोगान्तरमुदाहरति- पुष्पेभ्य इति, तदर्थः=चतुर्थ्यर्थः । तस्य=विषयित्वस्य । पुष्पनिष्ठविषयतानिरूपितविषयिताविशिष्टेच्छाश्रयश्चैत्र इति शाब्दबोधः । विषयितासंबन्धेनेच्छायां पुष्पान्वयस्येष्टत्वाद् विषयित्वं चतुर्थ्यर्थः ।

प्रयोगान्तराण्युदाहरति-पुत्रायेत्यादिना, चतुर्थ्यर्थस्य विषयित्वरूपोपपत्त्यर्थं क्रोधस्य सविषयकत्वमुपपादयति- क्रोधस्येति । एवमिति- तेनैव=" क्रुधद्रुह " इत्यादिसूत्रेणैव । द्रोहपदार्थमाह- द्रोह इति । चतुर्थ्यर्थमाह- अहितेति, शत्रोरहितभागित्वेन येच्छाविषयता तन्निरूपकत्वमिच्छायामस्ति तदेव चतुर्थ्यर्थः । किं वाऽहिते यच्छत्रुवृत्तित्वं तदेव चतुर्थ्यर्थ इत्याह- अहितान्वयीति । अत इति- यतोत्र पुत्रादीनां गवादिरूपकर्मणा संबद्धुमभिप्रायविषयत्वं नास्त्यतः पुत्रादीनाम् "कर्मणा यमभिप्रैति" इतिसूत्रेण संप्रदानसंज्ञा न संभवतीति तदर्थम् " क्रुधद्रुह "

द्विष्णुता परोत्कर्षगोचरो द्वेष इति यावत् तद्विषयस्य परस्य तेनैव संप्रदानता । असूया=गुणिनि दोषाविष्करणं तद्विषयस्याप्यनेन संप्रदानता विषयताविशेषस्तत्र चतुर्थ्यर्थः ।

'विप्राय शतं धारयति' इत्यादौ "धारेरुत्तमर्णः" इत्यनेन धनिकविप्रादेः संप्रदानता ।

अथ कोयं धार्यर्थः ? न तावद् द्रव्यान्तरदानमङ्गीकृत्य परदत्तद्रव्यादानम्-तथा सत्यादानात् परतः 'धारयति' इति प्रयोगानुपपत्तेः—आदानस्याऽवर्तमानत्वात् । न चेष्टापत्तिः—आविशोधनं तथा प्रयोगात् । नापि तादृशादानध्वंसः—अधमर्णस्य तदकर्तृत्वात् । न चादानमिच्छाविशेषस्तद्वतः पुंसस्तदाश्रयतया तत्कर्तृत्ववत् तद्ध्वंसाश्रयतया तत्कर्तृत्वमप्यक्षतमिति वाच्यम्, एवमप्या-दानध्वंसस्य परिशोधनोत्तरमपि सत्त्वेन तदानीमपि 'धारयति' इति प्रयोगापत्तेः ।

---

इत्यादिसूत्रारम्भ इत्यर्थः । सूत्रघटकेर्ष्यापदार्थमाह— ईर्ष्येति । तद्विषयस्य=ईर्ष्याविषयस्य । तेनैव="क्रुधद्रुहेर्ष्यासूयार्थानाम्" इतिसूत्रेणैव । सूत्रघटकाऽसूयापदार्थमाह— असूयेति । तद्विषयस्य=असूयाविषयस्य । अनेन="क्रुधद्रुह" इतिसूत्रेण । विषयताविशेषः=विषयिताख्यविषयता चतुर्थ्यर्थः सा चाऽसूयायामन्वेति— असूयाया अपि क्रोधवत् सविषयकपदार्थत्वादित्यर्थः । 'पुत्रादिनिरूपितविषयिताविशिष्टक्रोधादिव्यापारवान्' इति शाब्दबोधः ।

प्रयोगान्तरमुदाहरति— विप्रायेति । धनिकविप्रादेः=उत्तमर्णस्येत्यर्थः ।

धारयत्यर्थनिरूपणायाशङ्कते— अथेति । ननु द्रव्यान्तरदानमङ्गीकृत्य=अहं तुभ्यं कालान्तरे मुद्रासहस्रं दास्यामीत्येवं द्रव्यान्तरव्यक्तिदानमङ्गीकृत्य यत् परदत्तद्रव्यस्य=उत्तमर्णदत्तद्रव्यस्याऽऽदानम्=ग्रहणं तदेव धार्यर्थः=धारयत्यर्थ इत्याशङ्क्याह— न तावदिति, परिहारे हेतुमाह— तथा सतीति, तथा सति=यद्युक्तादानमेव धारयत्यर्थस्तदाऽऽदानस्य क्रियारूपत्वेन स्वयमेव सद्यो विनाशित्वादाऽऽदानानन्तरमृणपरिशोधनपूर्वमपि 'धारयति' इति प्रयोगो न स्यात्—धारयत्यर्थभूतस्यादानस्याऽसत्त्वादित्यर्थः । न च परिशोधनपूर्वम् 'धारयति' इति प्रयोगाभाव इष्टः प्रयोगस्यैवेष्टत्वादित्याह— न चेष्टापत्तिरिति । ननु यद्याऽऽदानानन्तरं सद्य एवादानं विनश्यति तदोक्तादानस्य ध्वंस एव धारयत्यर्थस्तथा चादानानन्तरमप्यादानध्वंसस्य सत्त्वात् नादानानन्तरम् 'धारयति' इतिप्रयोगानुपपत्तिरित्याशङ्क्याह—नापीति । परिहारहेतुमाह—अधमर्णस्येति, आदानस्य ध्वंसस्तु स्वयमेव भवति न त्वधमर्णकर्तृक इति अधमर्णेनाकृतं धारयत्यर्थभूतमादानध्वंसमादाय 'धारयति' इति प्रयोगः कथं स्यात् न हि देवदत्तेनाऽकृतपाकमादाय 'देवदत्तः पचति—आकाशं करोति' इत्यादिप्रयोगो भवतीत्यर्थः । ननूक्तादानमिच्छैव तथा चाधमर्णस्येच्छारूपादानाश्रयत्वेनेच्छाकर्तृत्वमस्त्येवेति तादृशादानरूपेच्छाध्वंसस्याप्याश्रयत्वं

न च परिशोधनप्रागभावविशिष्टो निरुक्तादानध्वंसस्तथा—ऋणीकृतद्रव्यान्तरपरिशोधनप्रागभावदशायां परिशुद्धमृणमादाय 'धारयति' इति प्रयोगापत्तेः। न च स्वप्रतियोगिनिर्वाहकाङ्गीकारविषयद्रव्यदानप्रागभावविशिष्टादानध्वंसस्तथा-यद् ऋणं परिशोधितं तावद् द्रव्यं च पुनर्गृहीत्वा पुनः परिशोधनीयं तदादाय 'धारयति' इतिव्यवहारापत्तेः, उदीच्यपरिशोधनस्यापि स्वकर्तव्यतया पूर्वाभ्युपगमविषयत्वात् तत्प्रागभावस्य पूर्वपरिगृहीतपरिशोधनोत्तरमपि सत्त्वात्।

---

तेन च तत्कर्तृत्वं युक्तमेव ध्वंसस्य स्वप्रतियोग्याश्रये एवाश्रितत्वस्वीकारादिति नाऽऽदानानन्तरम् 'धारयति' इति प्रयोगानुपपत्तिरित्याशङ्क्याह—न चादानमिति, परिहारहेतुमाह—एवमिति, यद्यादानध्वंस एव धारयत्यर्थस्तदा ध्वंसस्याऽविनाशित्वेन परिशोधनोत्तरमपि वर्तमानत्वात् तदानीम्=परिशोधनोत्तरमपि 'धारयति' इतिप्रयोगः स्यात्, न चैतदिष्टमित्यर्थः।

ननु परिशोधनप्रागभावविशिष्ट उक्तादानध्वंसस्तथा=धारयत्यर्थस्तथा च परिशोधनोत्तरं परिशोधनप्रागभावस्य विनाशेन तद्वैशिष्ट्यमुक्तध्वंसे न संभवतीति परिशोधनोत्तरं परिशोधनप्रागभावविशिष्टध्वंसस्य धारयत्यर्थस्याऽसत्त्वान्न परिशोधनोत्तरम् 'धारयति' इतिप्रयोगापत्तिरित्याशङ्क्याह—न चेति, परिहारमाह—ऋणीकृतेति, यत्र ऋणद्वयं कृतमेकं च यदा ऋणं परिशोधितमेकं च न परिशोधितं तत्राऽपरिशोधितर्णपरिशोधनप्रागभावविशिष्टस्यादानध्वंसस्य सत्त्वादेव परिशोधितर्णमादाय 'धारयति' इतिप्रयोगः स्यादेव न चैतदिष्टमित्यर्थः। ननूक्तध्वंसस्य प्रतियोगिभूतं यदाऽऽदानं तन्निर्वाहको योऽङ्गीकारः='ऋणमिदं परिशोधयिष्यामि' इत्यङ्गीकारः ( अधमर्णकृतपरिशोधनाङ्गीकारं विना ऋणप्राप्तेरसंभवादङ्गीकारस्याऽऽदाननिर्वाहकत्वम् ) तादृशाङ्गीकारविषयीभूतं यद् द्रव्यदानम्=परिशोधनं तादृशद्रव्यदानस्य प्रागभावेन विशिष्टो य उक्तादानध्वंसः स तथा=धारयत्यर्थस्तथा च द्रव्यान्तरपरिशोधनप्रागभावदशायां परिशुद्धमृणमादाय नोक्ता 'धारयति' इतिप्रयोगापत्तिः—द्रव्यान्तरपरिशोधनप्रागभावस्यैतद्धारयत्यर्थघटकत्वाभावात् तद्द्रव्यपरिशोधनप्रागभावस्यैव धारयत्यर्थघटकत्वात् तद्द्रव्यपरिशोधनप्रागभावकाले च तद्द्रव्यमादाय 'धारयति' इति प्रयोगस्येष्टत्वादेवेत्याशङ्क्याह—न चेति। स्वम्=आदानध्वंसः। परिहारमाह—यदिति, यत्र मुद्रासहस्रद्वयग्रहणपरिशोधनयोः संकेतो जातः किं तु प्रथममऽर्धमेवर्णं मुद्रासहस्ररूपं गृहीतं परिशोधितं च पुनश्च शेषभूतमेकसहस्रं कालान्तरे प्राह्यं परिशोधनीयं चास्ति तत्रोदीच्यस्य=भाविनः परिशोधनस्यापि स्वीकृतत्वेनाङ्गीकारविषयत्वात् तत्प्रागभावस्य=तादृशोदीच्यपरिशोधनप्रागभावस्य पूर्वपरिगृहीतपरिशोधनोत्तरमपि सत्त्वात् पूर्वादानध्वंसस्यापि च सत्त्वात् तदादाय=परिशोधितमृणमादाय 'धारयति' इति प्रयोगः स्यादेव, न चैतदिष्टमित्यर्थः।

न च स्वप्रतियोग्यादाननिर्वाहकाभ्युपगमविषयीभूतं यद् द्रव्यदानमेकक्षणावच्छिन्नैकाधिकरणवृत्तित्वसंबन्धेन तद्विशिष्टान्यप्रागभावविशिष्टादानध्वंसस्तथा उक्तस्थले चोदीच्यपरिशोधनप्रागभावः प्रथमादानप्रयोजकाभ्युपगमविषयप्रथमपरिशोधनविशिष्टः प्रथमपरिशोधनप्रागभावश्च प्रथमपरिशोधनोत्तरं नास्त्येवेति नोक्तातिप्रसङ्ग इति वाच्यम्, एवमपि यस्य ऋणस्य परिशोधनमप्रसिद्धं तदादानपूर्वकालीनस्य 'एतावद् द्रव्यं मया तुभ्यं देयम्' इत्यभ्युपगमस्य तदुत्तमर्णोद्देश्यकत्वेन स्वकर्तृकान्योद्देश्यकतावद्द्रव्यदानमेव विषय इत्युपेयम्–तदुत्तमर्णोद्देश्यकतत्कर्तृकतावद्द्रव्यदानस्याप्रसिद्धत्वात् तथा चान्योद्देश्यकतत्कर्तृकतावद्-

---

ननूक्तध्वंसस्य प्रतियोगिभूतं यदाऽऽदानं तन्निर्वाहको योभ्युपगमः='ऋणमिदं परिशोधयिष्यामि' इत्यङ्गीकारस्तद्विषयीभूतं यद् द्रव्यदानम्=परिशोधनं तेन एकक्षणावच्छिन्नैकाधिकरण (अधमर्णतद्व्यक्ति) वृत्तित्वसंबन्धेन विशिष्टो यः प्रागभावः नाम प्रथमादानप्रयोजका (निर्वाहका) भ्युपगमविषयप्रथमपरिशोधनविशिष्ट उदीच्य (ग्रहीष्यमाणधनविषयक) परिशोधनप्रागभावस्तदन्यो यः प्रागभावः=प्रथमपरिशोधनप्रागभावस्तद्विशिष्टो य आदानध्वंसः स तथा=धारत्यत्यर्थस्तथा चोक्तस्थले उदीच्यपरिशोधनप्रागभावस्तु प्रथमादाननिर्वाहकाभ्युपगमविषयप्रथमपरिशोधनविशिष्ट एवोक्तसंबन्धेन भवति–यस्मिन् क्षणे तदधमर्णव्यक्तौ प्रथमादाननिर्वाहकाभ्युपगमविषयप्रथमपरिशोधनं तिष्ठति तस्मिन्नेव क्षणे तदधमर्णव्यक्तौ उदीच्यपरिशोधनप्रागभावोपि तिष्ठतीति वैशिष्टयम् एतादृशोदीच्यपरिशोधनप्रागभावश्च न धारयत्यर्थघटक इति नोक्तस्थले=प्रथमपरिगृहीतपरिशोधनोत्तरमपि परिशोधितमृणमादाय 'धारयति' इतिप्रयोगापत्तिः, धारयत्यर्थघटकस्तु तत्रोक्तोदीच्यपरिशोधनप्रागभावान्यः प्रथमपरिशोधनप्रागभाव एव स च प्रथमपरिशोधनेन विनाश्यमानत्वात् प्रथमपरिशोधनोत्तरं न तिष्ठतीति प्रथमपरिशोधनोत्तरं प्रथमादानध्वंसस्याऽविनाशित्वेन सत्त्वेपि धारयत्यर्थैकदेशभूतस्य प्रथमपरिशोधनप्रागभावस्याऽसत्त्वान्न प्रथमपरिशोधनोत्तरं तादृशप्रथमपरिगृहीतपरिशोधितमृणमादाय 'धारयति' इति प्रयोगापत्तिः, प्रथमपरिशोधनपूर्वकाले च प्रथमपरिशोधनप्रागभावोप्यस्ति प्रथमादानध्वंसोप्यस्तीति तदा 'धारयति' इतीष्टप्रयोगस्योपपत्तिरप्यस्त्येवेति न कोपि दोष इत्याशङ्क्याह–न चेति, परिशोधनस्य क्रियारूपत्वेनैकमात्रक्षणस्थायित्वेनोक्तम्–एकक्षणावच्छिन्नेति। अत्रापि दोषमाह–एवमपीति, यस्य ऋणस्य परिशोधनमसंभवित्वादप्रसिद्धं जातम्–येन केनापि कारणेन गृहीतधनपरिमितधनस्य दात्रे वा तदुत्तराधिकारिणे वाऽदेयत्वात् तादृशस्य ऋणस्य पूर्वकाले यः 'एतावद् द्रव्यं मया तुभ्यं देयम्' इत्यभ्युपगमः कृतस्तस्य तदुत्तमर्णोद्देश्यकत्वेन स्व (अधमर्ण) कर्तृकमऽन्योद्देश्यकम्=तदुत्तमर्णोत्तराधिकार्युद्देश्यकमेव द्रव्यदानम्=परिशोधनं विषय इत्युपेयम्=स्वीकार्यम्– तदुत्तमर्णोद्देश्यकस्य=साक्षात्तदुत्तमर्णाय तत्कर्तृकतावद्द्रव्यदानस्य=अधमर्णकर्तृकपरिशोधनस्याऽप्रसिद्धत्वात् तथा च=तादृशस्थले अन्योद्देश्यकतत्कर्तृकतावद्द्रव्यदानोत्तरं यथा

द्रव्यदानोत्तरं तदभ्युपगमविषयद्रव्यदानविशिष्टान्यप्रागभावासत्त्वात् ' धारयति ' इति व्यवहारानुपपत्तिरिति चेत् ?,

अत्राहुः- ऋणग्रहणेनाधमर्णनिष्ठः परिशोधननाश्योऽदृष्टविशेषो जन्यते तेनैवाऽदृष्टेन ऋणमपरिशोध्य मृतस्य नरकादिकमुत्पद्यते तथा च द्रव्यान्तरदानाभ्युपगमपूर्वकपरदत्तद्रव्यादानजन्याऽदृष्टविशेषवत्त्वमेव धारयतेरर्थः, तद्घटकदा-

---

चैत्रेण मैत्राद् यावद्द्रव्यं ऋणत्वेन गृहीतं तावद्द्रव्यं देवदत्ताय दत्तं न च स देवदत्तो मैत्रोत्तराधिकार्यऽस्ति तत्र चैत्रकर्तृकैतादृशद्रव्यदानोत्तरम् ' धारयति ' इति व्यवहारो न स्यादेव द्रव्यदानरूपपरिशोधनस्य जातत्वेन धारयत्यर्थैकदेशस्य परिशोधनप्रागभावस्याऽसत्त्वात् एतदेवाह- तदभ्युपगमविषयद्रव्यदानविशिष्टान्यप्रागभावाऽसत्त्वादिति, अत्र हि धारयत्यर्थभूतादानध्वंसे विशेषणीभूतोपि परिशोधनप्रागभावो नास्ति-परिशोधनस्य जातत्वात् एतादृशपरिशोधनप्रागभावे विशेषणीभूतो यो भेदस्तत्प्रतियोगिभूतपरिशोधनप्रागभावोपि नास्ति-तस्य पूर्वोक्तऋणद्वयस्थले एव संभवात्, इष्टश्चैतादृशस्थलेप्यऽन्योद्देश्यकतत्कर्तृकतावद्द्रव्यदानोत्तरमपि ' धारयति' इतिव्यवहारः-येन ऋणं दत्तं तस्मै वा तदुत्तराधिकारिणे वा गृहीतधनप्रतिदानस्याऽजातत्वात् यच्च तावद्द्रव्यं प्रतिदत्तं तद्धि तटस्थायैव कस्मैचित् प्रतिदत्तमस्तीति । ' एतावद्द्रव्यं मया तुभ्यं देयम् ' इत्यभ्युपगमेन च साक्षाद् दात्रे वा तदुत्तराधिकारिणे वा प्रतिदानप्रतिज्ञायाः कृतत्वात् अत्र चान्योद्देश्यकतावद्द्रव्यदानेनापि कृतप्रदर्शितप्रतिदानप्रतिज्ञापरिपालनस्याऽजातत्वात्, दात्रुद्देश्यके एव परिशोधनरूपे प्रतिदाने जाते एव ' धारयति ' इति व्यवहारनिवृत्तेरिष्टत्वादित्यर्थः । अत्र चान्योद्देश्यकतत्कर्तृकतावद्द्रव्यदानात् पूर्वमादानध्वंसोप्यस्ति तादृशादानध्वंसविशेषणीभूतः परिशोधनप्रागभावोप्यस्तीति ' धारयति ' इति व्यवहारानुपपत्तिर्नास्तीत्युक्तम्-" अन्योद्देश्यकतावद्द्रव्यदानोत्तरम् " इति । वस्तुतस्त्वत्र कृताभ्युपगमविषयपरिशोधनस्याजातत्वादाऽऽदानध्वंसे साक्षाद्विशेषणीभूतस्य परिशोधनप्रागभावस्य सत्त्वेपि तादृशप्रागभावविशेषणीभूतो यो भेदस्तत्प्रतियोगिभूतप्रागभावस्याऽप्रसिद्ध्यैव 'धारयति' इति व्यवहारानुपपत्तिर्ज्ञेया तथा चैकर्णस्थले सर्वत्रैव 'धारयति' इतिव्यवहारस्यानुपपत्तिरस्ति ऋणद्वयस्थले एवैतत्परिष्कारस्य समन्वयसंभवात्तदर्थमेवोहितत्वादिति ध्येयम् ।

अथेत्यादिनाऽऽशङ्कितं समाधत्ते- अत्राहुरित्यादिना । स्पष्टार्थोयं ग्रन्थः । धारयत्यर्थमाह- तथा चेति । द्रव्यान्तरदानाभ्युपगमः=' कालान्तरे एतावद् द्रव्यमहं तुभ्यं दास्यामि ' इत्याकारको यः परिशोधनविषयकोभ्युपगमस्तत्पूर्वकं यत् परदत्तद्रव्यस्याऽऽदानम्=ऋणग्रहणं तज्जन्याऽदृष्टविशेषवत्त्वमेव धारयत्यर्थः । 'विप्राय शतं धारयति' इत्यत्रत्यचतुर्थ्यर्थमाह- तद्घटकेति, धारयत्यर्थघटकं यद्दानं परदत्तेतिदाधात्वर्थदानं तदन्वयिकर्तृत्वं दाननिरूपितकर्तृत्वम् चतुर्थ्यर्थः- दानस्य कर्तृत्वनिरूपकत्वेन निरूपकत्वसंबन्धेन कर्तृत्वस्य दानेऽन्वयस्तथा च 'विप्रकर्तृकं यद् ऋणदानं तदादानजन्याऽदृष्टविशेषाश्रयश्चैत्रः' इति शाब्दबोधः । ऋणादानजन्या-

नान्वायि कर्तृत्वं तत्र चतुर्थ्यर्थः । न च ऋणापरिशोधनमेव दुरदृष्टजनकम्- उपपातकमध्ये तस्य परिगणनात्, न तु ऋणाऽऽदानम्- तस्य तथात्वे मानाभावादिति वाच्यम्, ऋणादानस्य दुरदृष्टविशेषजनकत्वेऽपि परिशोधनेन तस्य नाश इति बोधनायाऽपरिशोधनस्य नरकरूपफलोपधानप्रयोजकत्वाभिप्रायेण तस्योपपातकमध्ये परिगणनोपपत्तेः । ऋणमादायापरिशोधकस्य नरकभागितया ऋणादानस्यैव दुरदृष्टसाधनतायाः कल्पनीयत्वात्, गृहीतर्णापरिशोधनापेक्षया लघुत्वात् । अपरिशोधनस्य हेतुत्वे परिशोधनपूर्वकालेप्यऽपरिशोधनसत्त्वेन दुरदृष्टोत्पत्तेरावश्यकतया परिशोधनस्य तन्नाशकताया, आवश्यकतयाऽस्माकं तत्कल्पनाधिक्यविरहात् । परिशोधनोत्तरकालं परिशोधनाभावसत्त्वेन तद्बलात् तदुत्तरं दुरदृष्टवारणाय परिशोधनध्वंसस्य प्रतिबन्धकतायाः कल्पनीयतया भवन्मते गौरवाच्च ।

---

ष्टस्य ऋणाऽऽदानोत्तरमेव जायमानत्वेन ऋणादानात्पूर्वमसत्त्वाद् ऋणादानात् पूर्वकाले 'विप्राय शतं धारयति' इतिप्रयोगापत्तिर्नास्ति, एवं तस्य ऋणादानजन्यादृष्टस्य परिशोधननाश्यत्वेन परिशोधनानन्तरमसत्त्वात् परिशोधनानन्तरम् 'विप्राय शतं धारयति' इतिप्रयोगापत्तिरपि नास्ति, ऋणादानादनन्तरमापरिशोधनं तादृशादृष्टस्य सत्त्वादेवोक्तप्रयोगानुपपत्तिरपि नास्तीति न कोपि दोष इत्यर्थः । शङ्कते- न चेति । तस्य=ऋणापरिशोधनस्यैव । तस्य=ऋणादानस्य । तथात्वे=दुरदृष्ट ( पाप ) जनकत्वे । परिहारमाह- ऋणादानस्येति, यद्यपि ऋणादानस्यैव दुरदृष्टजनकत्वमस्ति तथापि परिशोधनं विना तस्य=ऋणाऽऽदानजन्यदुरदृष्टस्य नाशो न भवतीति परिशोधनावश्यकत्वबोधनायैवाऽपरिशोधनस्य नरकरूपफलोपधान ( उत्पत्ति ) प्रयोजकत्वाभिप्रायेण तस्य=अपरिशोधनस्य निन्दितत्वादुपपातकमध्ये परिगणनास्ति न तु वस्तुतो दुरदृष्टजनकत्वेनेत्यर्थः । मतद्वयमध्ये ऋणादानस्य दुरदृष्टजनकतामते लाघवमाह- ऋणमादायेति । उक्ते हेतुमाह- गृहीतर्णेति, ऋणापरिशोधनं हि ऋणपरिशोधनाभाव एवेति तत्राभावपदार्थप्रवेशेन तादृशाभावज्ञानार्थं प्रतियोगिभूतपरिशोधनपदार्थज्ञानापेक्षया चापरिशोधनस्य गुरुत्वात् तदपेक्षया ऋणाऽऽदानस्य लघुत्वात्तस्यैव दुरदृष्टजनकत्वं स्वीकार्यमित्यर्थः । अपरिशोधनस्य दुरदृष्टजनकत्वे गौरवान्तरमाह- अपरिशोधनस्येति अपरिशोधनस्य हेतुत्वे= दुरदृष्टजनकतामते परिशोधनपूर्वकालेपि नाम न केवलमृणग्रहणादनन्तरमेव परिशोधनपूर्वकालेऽपरिशोधनमस्तिकिन्तु ऋणग्रहणात् पूर्वमप्यऽपरिशोधनमस्त्येवेति ऋणग्रहणात् पूर्वमेव विद्यमानतादृशाऽपरिशोधनेन दुरदृष्टमुत्पद्येत तस्यापि परिशोधनेन विनाशो भवन्मते कल्पनीयो न चैतादृशकल्पनाऽस्मन्मतेस्ति- ऋणादानस्यैव दुरदृष्टजनकत्वादिति भावः प्रतीयते । गौरवान्तरं प्रदर्शयति- परिशोधनोत्तरकालमिति, परिशोधनस्य क्षणिकत्वेन परिशोधनोत्तरमप्यऽपरिशोधनसत्त्वेन दुरदृष्टमुत्पद्येतेति तदुत्तरम्=परिशोधनोत्तरं तद्बलात्=परिशोधनाभाव( ध्वंस )बलात् दुरदृष्टवारणाय

न च परिशोधनानुत्तरमरणमेव पापजनकं वाच्यं तथा च नोक्तातिप्रसङ्ग इति वाच्यम्, गृहीतद्रव्यमपरिशोध्यमरणस्थले तद्द्रव्यपरिशोधनाप्रसिद्ध्या तदनुत्तरत्वादिघटितरूपेण हेतुतायाः कल्पयितुमशक्यत्वादित्यलम् ।

'यूपाय दारु' इत्यादौ न संप्रदानचतुर्थी, अपि तु तादर्थ्ये सूत्रान्तरेण सा, तादर्थ्यं च स एवार्थः=प्रयोजनं यस्य तत्त्वम् । 'समभिव्याहृतपदार्थे तादर्थ्यविवक्षायां तद्वाचकपदाच्चतुर्थी' इति तत्सूत्रार्थः । प्रयोजनत्वं चात्र न जन्यत्वम्— दुःखादेः पापादिजन्यतया 'दुःखाय पापम्' इत्यादिप्रयोगापत्तेः । नापि जन्यतयेच्छाविषयत्वम्— स्वर्गादेः पुण्यादिजन्यत्वेनेच्छाविषयत्वात् 'स्वर्गाय पुण्यम्' इत्याद्यापत्तेः, न चेष्टापत्तिः— तथा सति 'पक्तुं व्रजति' इत्यर्थे 'पाकाय व्रजति' इति निर्वाहाय " तुमर्थाच्च भाववचनात् " इति सूत्रप्रणयनवैयर्थ्यात्—

---

परिशोधनध्वंसस्य दुरदृष्टप्रतिबन्धकत्वमपि कल्पनीयमित्यपि गौरवम्, अस्मन्मते च ऋणादानस्यैव दुरदृष्टजनकत्वेन ऋणादानजन्यदुरदृष्टे परिशोधनेन नष्टे पुनश्च ऋणादानं विना दुरदृष्टोत्पत्तिरेव न संभवतीति न परिशोधनध्वंसस्य दुरदृष्टप्रतिबन्धकत्वकल्पनापत्तिरितिभावः प्रतीयते ।

पुनराशङ्कते— न चेति । नोक्तातिप्रसङ्गः=परिशोधनोत्तरकाले दुरदृष्टोत्पत्तिलक्षणातिप्रसङ्गो नास्त्येव— परिशोधनानन्तरं दुरदृष्टोत्पादकस्य परिशोधनानुत्तरमरणस्याऽसत्त्वात् तस्यैव दुरदृष्टोत्पादकत्वस्वीकारादित्यर्थः । परिशोधनानुत्तरमरणम्=अपरिशोध्यमरणम् । परिहारमाह— गृहीतेति, विशेषणीभूतस्य परिशोधनस्य सत्त्वे एव परिशोधनानुत्तरत्वस्य प्रसिद्धिः संभवति गृहीतद्रव्यमपरिशोध्यैव मरणस्थले च तद्द्रव्यपरिशोधनस्याऽप्रसिद्ध्या परिशोधनानुत्तरत्वस्याप्यप्रसिद्धिर्जातेति परिशोधनानुत्तरत्वघटितस्य परिशोधनानुत्तरमरणस्याप्यऽप्रसिद्ध्या दुरदृष्टहेतुत्वं न संभवति प्रसिद्धस्यैव पदार्थस्य हेतुत्वसंभवात् । परिशोध्य मरणस्थलेपि परिशोधनानुत्तरमरणप्रसिद्धिर्नास्ति— परिशोधनोत्तरमरणस्यैव सत्त्वादिति ऋणादानस्यैव दुरदृष्टोत्पादकत्वं युक्तमित्यर्थः ।

प्रयोगान्तरमुदाहरति— यूपायेति । सूत्रान्तरेण="तादर्थ्ये चतुर्थी वाच्या" इतिवार्तिकेन । तादर्थ्यस्वरूपमाह— तादर्थ्यं चेति, यथा सः=यूप एवार्थः=प्रयोजनं यस्य दारुणस्तदे तत्त्वम्=तादर्थ्यम् ( यूपार्थत्वम् ) । अत्र चतुर्थीप्रापकवार्तिकार्थमाह— समभिव्याहृतेति, यथा समभिव्याहृतपदार्थे=दारुपदार्थे तादर्थ्यविवक्षायाम्=यूपार्थत्वविवक्षायां तद्वाचकपदात्=यूपवाचकपदात् चतुर्थीत्यर्थः । उक्ततादर्थ्यलक्षणघटकप्रयोजनपदार्थमाह— प्रयोजनत्वमिति । अत्र उक्ततादर्थ्यलक्षणे । यदि जन्यत्वमेव प्रयोजनत्वं स्यात्तदा दुःखस्य पापजन्यत्वात् 'दुःखाय पापम्' इतिप्रयोगः स्याद् न चैतदिष्टम् । जन्यतयेच्छाविषयत्वमपि प्रयोजनत्वं न संभवतीत्याह— नापीति । विपक्षे बाधकमाह— न चेति । तथा सति=' स्वर्गाय पुण्यम्' इ प्रयोगस्येष्टत्वे सति 'पक्तुं व्रजति' इत्यर्थे 'पाकाय व्रजति' इति प्रयोगः " तादर्थ्ये चतु

पाकादेर्निरुक्तव्रजनाद्यर्थतयैव तद्वाचकपदाच्चतुर्थ्युपपत्तेः । अपि तु समभिव्याहृतपदार्थनिष्ठव्यापारेच्छानुकूलेच्छाविषयत्वं तत्प्रयोजनत्वम्, तत्प्रयोजनकत्वरूपतादर्थ्यं च तदिच्छाधीनेच्छाविषयव्यापाराश्रयत्वम्. दारुणो यूपेच्छाधीनेच्छाविषयतक्षणादिरूपव्यापारवत्तया यूपार्थत्वमिति तद्विवक्षया यूपपदाच्चतुर्थी, इच्छाधीनेच्छाविषयव्यापाराश्रयत्वं चतुर्थ्यर्थः, प्रथमेच्छायां यूपादेः प्रकृत्यर्थस्य विषयतयाऽन्वयः । एवम्– ' रन्धनाय स्थाली ' इत्यादावूह्यम्, तत्र तादृशव्यापारस्तण्डुलधारणादिः ।

पुण्यादेः स्वर्गेच्छाधीनेच्छाविषयव्यापारानाश्रयतया न ' स्वर्गाय पुण्यम् ' इत्यादिप्रयोगः । व्रजनादेः पाकानुकूलव्यापारानाश्रयतया न ' पाकाय व्रजति ' इत्यादावनेन चतुर्थीति " तुमर्थाच्च " इत्यादिसूत्रम्, तदर्थश्च– ' तुमुन्नन्तयद्धातुना यादृशोऽर्थः प्रत्याय्यते समभिव्याहृतक्रियान्विततदर्थपरात् तद्धातुघटितभाव-

[व]च्या " इतिवार्तिकेन चतुर्थीप्राप्त्या उपपद्येतेति "तुमर्थाच्च" इतिसूत्रं व्यर्थमेव स्यादित्यर्थः । [उ]क्तवैयर्थ्ये हेतुमाह– पाकादेरिति । तद्वाचकपदात्=पाकपदात् । स्वाभीष्टं प्रयोजनत्वपदार्थ[म]ाह– अपि त्विति, समभिव्याहृतपदार्थो दारुपदार्थस्तन्निष्ठं यत् तक्षणादिरूपव्यापारविषयके[च्छ]ाया जनकीभूता या यूपेच्छा तादृशेच्छाविषयत्वं तदेव तत्प्रयोजनत्वम्, ( दारुणो यूपप्रयो[ज]नकत्वम् ), अत्र यूपेच्छया तक्षणादिव्यापारेच्छा जायते इति यूपेच्छायास्तक्षणादिव्यापारेच्छा[ज]नकत्वमस्तीति तक्षणादिव्यापारेच्छानुकूलेच्छाविषयत्वं यूपस्य प्राप्तम् । तादर्थ्यपदार्थमाह– प्रयोजनकत्वेति, तदिच्छा=यूपेच्छा यूपेच्छाधीना या व्यापारविषयकेच्छा तादृशेच्छाविषयो यो [तक्ष]णादिव्यापारस्तदाश्रयत्वमित्यर्थः । लक्षणसमन्वयमाह– दारुण इति । चतुर्थ्यर्थमाह– इच्छा[धी]नेति, तथा च यूपेच्छाधीनेच्छाविषयतक्षणादिव्यापाराश्रयो दारु इति वाक्यार्थः । प्रथमेच्छा[न्व]यमाह– प्रथमेच्छायामिति । उक्तप्रतिपादनमन्यत्रातिदिशति– एवमिति, तादृशव्यापारः=[च]तुर्थ्यर्थादिघटकव्यापारः । रन्धनेच्छाधीनेच्छाविषयतण्डुलधारणादिव्यापाराश्रयत्वं स्थाल्या[म]ेव चतुर्थ्यर्थः ।

पुण्यस्यादृष्टरूपत्वेन गुणत्वाद् व्यापाराश्रयत्वमेव न संभवति येन "तादर्थ्ये चतुर्थी" इतिवा[र्ति]केनोक्तरीत्या ' स्वर्गाय पुण्यम् ' इतिप्रयोगः स्यादित्याह– पुण्यादेरिति । स्वर्गेच्छाधीनेच्छा[विष]यव्यापारश्च यागादिर्विज्ञेयः । 'पाकाय व्रजति' इतिप्रयोगस्य साधुत्वेपि व्रजनस्य व्यापाररूप[त्वे]न व्यापाराश्रयत्वाऽसंभवादत्र पाकपदोत्तरं न अनेन=" तादर्थ्ये चतुर्थी " इत्यनेन चतुर्थी [भव]तीति किं तु " तुमर्थाच्च भाववचनात् " इतिसूत्रेणेत्याह– व्रजनादेरिति । पाकानुकूलेत्यत्र [पा]केच्छाधीनेच्छाविषयव्यापारानाश्रयतया' इत्येवं वक्तव्यम्, पाकेच्छाधीनेच्छाविषयव्यापारश्चात्र [व्रज]नव्यापार एव तदनाश्रयत्वं व्रजने स्पष्टमेव । अत्र "गुणादिर्निर्गुणक्रियः" इति स्मर्तव्यम् । ["]तुमर्थाच्च " इतिसूत्रस्यार्थमाह– तदर्थश्चेति, यथात्र तुमुन्नन्तेन यद्धातुना=पक्तुमिति पच्-

कृदन्ताच्चतुर्थी ' इति । ' पक्तुं व्रजति ' इत्यत्र तुमुन्नन्तेन व्रजने पाकसमानकर्तृकत्वसहितपाकविषयकेच्छाधीनेच्छाविषयत्वं बोध्यते- " तुमुन्ण्वुलौ " इतिसूत्रेण समभिव्याहृतक्रियायां प्रकृतक्रियासमानकर्तृकत्वसहिततदिच्छाधीनेच्छाविषयत्वरूपतदर्थकत्वेन विवक्षितायां तुमुन्ण्वुलोर्विधानात् । एतत्सूत्रस्यापि ' स्वर्गाय पुण्यम् ' इत्यादिर्न विषय इति सोऽसाधुरेव ।

' एधानाहर्तुं व्रजति ' इत्यर्थे ' एधेभ्यो व्रजति ' इत्यत्रैधस्य न व्रजनप्रयोजनत्वम्- सिद्धतया व्रजनेच्छानुकूलेच्छाया अविषयत्वात्, व्रजनस्य तदनुकूलव्यापारानाश्रयत्वाच्चेति न "तादर्थ्ये" इतिसूत्रस्य प्रवृत्तिर्नापि " तुमर्थात् " इत्यादेः- एधपदस्य क्रियारूपभाववचनत्वाभावादिति तत्र " क्रियार्थोपपदस्य " इतिचतुर्थी तदर्थश्च- ' क्रियार्थोपपदस्तुमुन्नन्तो यो धातुरप्रयुक्तस्य तस्य यत्कर्म=तत्प्रयोग विना तदर्थकर्मतया यद्विवक्षितं तद्वाचकपादाच्चतुर्थी ' इति तत्र च ' आहर्तुम् ' इतितुमुन्नन्तार्थः समभिव्याहृतक्रियान्वयिस्वार्थकर्मत्वान्व-

---

धातुना यादृशोर्थः=पाकरूपार्थः प्रत्याय्यते समभिव्याहृता या व्रजनक्रिया तदन्विततदर्थपरात्=पाकरूपार्थपरात् तद्धातुघटितः=पच्धातुघटितो यो भावार्थकृत्प्रत्ययस्तदन्तात् पाकपदात् चतुर्थी स्यादिति ' पक्तुं व्रजति ' इत्यर्थे ' पाकाय व्रजति ' इति सिद्धम् । ' पक्तुं व्रजति ' इत्यत्र व्रजनक्रियायां पाकसमानकर्तृकत्वं पाकविषयकेच्छाधीनेच्छाविषयत्वं च तुमुन्प्रत्ययेन प्रत्याय्यते इत्याह- पक्तुमिति । उक्तार्थे सूत्रं प्रमाणयति- तुमुन्ण्वुलाविति । समभिव्याहृतक्रिया=यथात्र व्रजनक्रिया । प्रकृतक्रिया=यथात्र पाकक्रिया । तदिच्छा=पाकेच्छा । तदर्थकत्वेन=पाकार्थकत्वेन । ' स्वर्गाय पुण्यम् ' इत्यत्र स्वर्गपदात् " तुमर्थाच्च " इतिसूत्रेणापि चतुर्थी न प्राप्नोतीति ' स्वर्गाय पुण्यम् ' इतिप्रयोगोऽसाधुरेवेत्याह- एतदिति ।

एधानिति- असिद्धस्यैवेच्छाविषयत्वात् सिद्धस्यैधस्य नेच्छाविषयत्वम्, व्रजनस्य च व्यापाररूपत्वेन न व्यापाराश्रयत्वमिति न ' एधेभ्यो व्रजति ' इत्यत्र " तादर्थ्ये " इत्यनेन चतुर्थी नापि " तुमर्थाच्च भाववचनात् " इत्यनेन चतुर्थी- एधपदस्य क्रियारूपभावबोधकत्वाभावादिति " क्रियार्थोपपदस्य " इत्यनेनात्र चतुर्थी भवतीत्यर्थः । " क्रियार्थोपपदस्य " इतिसूत्रस्यार्थमाह- तदर्थश्चेति, यथा ' एधानाहर्तुं व्रजति ' इत्यत्र क्रियार्थपदम् ' व्रजति ' इति पदं तादृशक्रियार्थोपपदस्तुमुन्नन्तो यो धातुः=हृधातुस्तस्याऽप्रयुक्तस्य यत्कर्मभूत एधपदार्थस्तद्वाचकादेधपदादत्र चतुर्थी प्राप्तेति ' एधेभ्यो व्रजति ' इतिसिद्धम् । " अप्रयुक्तस्य तस्य यत्कर्म " इति स्ववाक्यं स्वयं व्याचष्टे- तत्प्रयोगं विनेति, हृधातुप्रयोगं विना तदर्थकर्मतया= आङ्पूर्वकहृधात्वर्थाहरणकर्मतया यद्विवक्षितमेधस्तद्वाचकादेधपदाच्चतुर्थी इत्यर्थः । उक्तार्थे लक्ष्यभूतप्रयोगे समनुगमयति- तत्रेति । ' आहर्तुम् ' इति, तुमुन्नन्तस्यार्थमाह- समभिव्याहृतेति, समभिव्याहृतक्रिया व्रजनक्रिया स्वकर्मकत्वसंबन्धेन तदन्वयी स्वार्थ एधपदार्थस्तन्निष्ठकर्म-

स्याहरणं तादृशार्थकर्मतयैधस्य विवक्षितत्वात्तत्र चतुर्थी, चतुर्थ्या एवार्थः–तत्कर्मकाहरणप्रयोजनकत्वम् ।

'पाकाय व्रजति' इत्यादौ 'पाकं कर्तुम्' इत्यर्थविवक्षायामनेनैव सूत्रेण चतुर्थ्युपपत्तावपि यदा पाककृतीच्छाधीनेच्छाविषयत्वरूपं पाककर्मककरणप्रयोजनकत्वं न व्रजनस्य विवक्षितमऽपि तु पाकेच्छाधीनेच्छाविषयत्वरूपं पाकार्थकत्वमेव तत्रापि चतुर्थ्युपपत्तये "तुमर्थात्" इतिसूत्रम् ।

'अश्वाय घासः' इत्यादावश्वपदस्याऽश्वभोजनपरतया तादर्थ्यचतुर्थ्येव । 'आह्रियते' इत्यस्याध्याहारेण 'अश्वं भोजयितुमाह्रियते' इत्यर्थविवक्षया "क्रियार्थोपपद" इत्यादिसूत्रेण चतुर्थ्युपपत्त्याऽश्वपदस्य मुख्यार्थपरत्वोपपादनेपि 'अश्वघासः' इत्यत्राश्वपदस्य तद्भोजनपरतायास्तादर्थ्यचतुर्थ्याश्चावश्यकता, अन्यथाऽऽहृतपदसापेक्षतया चतुर्थीसमासानुपपत्तेः । न च तथापि समासानुपपत्तिः–'रन्धनाय स्थाली' इत्यादौ तद्वारणाय "चतुर्थी तदर्थार्थ" इतिसूत्रेण

---

न्वयि ( स्वनिरूपितत्वसंबन्धेन ) आहरणम् । तादृशार्थकर्मतया=उक्ताहरणकर्मत्वेन । चतुर्थ्यर्थमाह– चतुर्थ्या इति, तत्कर्मक=एधकर्मक । तथा च 'एधकर्मकाहरणप्रयोजनकव्रजनक्रियाश्रयः' इति शाब्दबोधः ।

'पाकाय व्रजति' इत्यत्र "पाकं कर्तुं व्रजति' इत्यर्थविवक्षायामनेन="क्रियार्थोपपदस्य" इतिसूत्रेण चतुर्थी, व्रजने पाकेच्छाधीनेच्छाविषयत्वरूपपाकार्थकत्वस्य 'पक्तुं व्रजति' इत्येवं विवक्षायां च "तुमर्थाच्च" इतिसूत्रेण चतुर्थी भवति पाकपदस्य क्रियारूपभावबोधकत्वादित्याह– पाकायेति । पाककर्मककरणमित्यत्र करणेतिपदेन कृधात्वर्थभूतकरणं ग्राह्यम् ।

प्रयोगान्तरमुदाहरति– अश्वायेति, तादर्थ्यचतुर्थी="तादर्थ्ये चतुर्थी" इतिवार्तिकेन चतुर्थी । तथा च 'अश्वभोजनार्थो घासः' इतिबोधः । यद्यपि 'आह्रियते' इतिपदस्याध्याहारेण 'अश्वं भोजयितुमाह्रियते' इत्यर्थविवक्षयाऽश्वपदस्य मुख्यार्थपरत्वेपि "क्रियार्थोपपदस्य" इतिसूत्रेण चतुर्थ्युपपत्त्या 'अश्वाय घासः' इति प्रयोग उपपद्यते तथापि 'अश्वघासः' इतिसमासोपपत्त्यर्थम् 'अश्वाय घासः' इतिविग्रहवाक्येऽश्वपदस्याश्वभोजनपरत्वमश्वपदात्तादर्थ्यचतुर्थी चापेक्ष्यते, अन्यथाऽऽहृतपदसापेक्षतया "सापेक्षमसमर्थवद्भवति" इतिनियमेन सामर्थ्याभावादऽश्वपदार्थस्य भोजनान्वयित्वेन घासेनान्वयाभावाच्च 'अश्वघासः' इतिसमासो न स्यादित्याह–आह्रियत इति । ननु 'अश्वघासः' इत्यत्र "चतुर्थी तदर्थार्थ" इतिसूत्रेण समासः कर्तव्यस्तत्र च 'रन्धनाय स्थाली' इत्यत्र तद्वारणाय=चतुर्थीसमासवारणाय प्रकृतिविकृतिभावस्थले एव समासो भवति यथा 'यूपाय दारु–यूपदारु' इति तदुक्तम्– "तदर्थेन प्रकृतिविकृतिभाव एव" इति तथा चाश्वघासयोः प्रकृतिविकृतिभावस्याभावादश्वपदस्याश्वभोजनपरत्वेपि तादृशाश्वपदात्तादर्थ्यचतुर्थीसत्त्वेपि च 'अश्वघासः' इतिचतुर्थीसमासो

चतुर्थीसमासे प्रकृतिविकारभावस्य नियामकत्वानुसरणादिति वाच्यम्, आवासगृहाऽश्वघासादौ चतुर्थीतियोगविभागेन शाब्दिकैः समासोपपादनात् ।

नमःस्वस्त्यादिशब्दयोगेपि तदर्थविशेषणवाचकपदात् "नमःस्वस्ति" इत्यादिसूत्रेण चतुर्थ्यनुशिष्यते । नमःशब्दार्थस्त्यागो नमस्कारश्च 'एषोऽर्घ्यः शिवाय नमः' इत्यादौ त्यागार्थको नमःशब्दः, चतुर्थ्या च तत्र प्रकृत्यर्थस्य शिवादेरुद्देश्यत्वं प्रत्याय्यते । त्यागश्च यदि 'शिवस्यायं भवतु' इत्यादिफलेच्छाधीनस्वस्वत्वाभावेच्छारूपस्तदा त्यागोद्देश्यत्वं त्यागजनकेच्छायाः स्वत्वभागितया विषयत्वम् । यदि च त्यागरूपेच्छैव स्वस्वत्वाभावमिवान्यदीयत्वेन त्यज्यमानगतं स्वत्वमपि तत्र विषयीकरोति न तु तज्जनकेच्छा तदा स्वत्वभागितया त्यागविषयत्वमेव तदुद्देश्यत्वम् । शिवादेर्विग्रहवत्त्वेपि स्वीकाराभावात् तदाकारतया ध्यातमन्त्रस्य त्यागोद्देश्यतामते तदभावाच्च त्यज्यमानोपचारादौ स्वत्वाभावेपि तदीयत्वेन तत्तद्द्रव्ये स्वत्वावगाहिनीच्छा विसंवादिरूपैव-द्रव्यनिष्ठेऽन्यदीयस्वत्वे बाधितं शिवादिनिरूपितत्वं शिवादिनिरूपितप्रसिद्धस्वत्वान्तरे वा बाधितं तत्तद्द्रव्यसंबन्धमवगाहते ।

---

नोपपद्यत इयाशङ्क्याह—न चेति । परिहारमाह—आवासेति, "चतुर्थी तदर्थार्थ" इतिसूत्रे "चतुर्थी" इतिपदस्य योगविभागेन 'चतुर्थ्यन्तं सुबन्तेन सह समस्यते' इत्यर्थलाभात् 'आवासाय गृहम्—आवासगृहम्' 'अश्वाय घासः—अश्वघासः' इति समास उपपद्यते इत्यर्थः। वस्तुतस्तु 'अश्वघासः' इतिषष्ठीसमास एवेति. कौमुद्यां द्रष्टव्यम् ।

प्रयोगान्तरमुदाहरति—नम इति, 'रामाय नमः' इत्यादौ रामाद्युद्देश्यकनमस्कारप्रतीत्या नमः पदार्थादीनां विशेष्यत्वेन तत्र रामादिपदार्थस्य विशेषणत्वमिति रामादिपदेभ्यः "नमःस्वस्ति" इतिसूत्रेण चतुर्थीत्यर्थः । नमःपदार्थमाह—नमःशब्दार्थ इति । तत्र=नमःशब्दार्थत्यागे । 'शिवोद्देश्यकार्घ्यत्यागः' इतिबोधः । त्यागपदार्थमाह—त्यागश्चेति । फलमत्र शिवस्वत्वं ग्राह्यम् । अस्मिन् प्रथमकल्पे त्यागोद्देश्यत्वस्य स्वरूपमाह—त्यागोद्देश्यत्वमिति । स्वत्वभागितया त्यागजनकेच्छाविषयत्वं त्यागोद्देश्यत्वमित्यन्वयः, अस्ति चात्रैतादृशोद्देश्यत्वं शिवस्य । त्यागोद्देश्यत्वस्य स्वरूपान्तरमाह— यदि चेति । तज्जनकेच्छा=परस्वत्वजनकेच्छा त्यागजनकेच्छावा । परस्वत्वस्येच्छारूपत्यागविषयत्वमनेन प्राप्तमिति स्वत्वभागितया त्यागविषयत्वमेव त्यागोद्देश्यत्वमित्यर्थः । अत्र च द्वितीयकल्पेपि त्यागस्वरूपं पृथग्वक्तव्यमासीदिति ध्येयम् । शिवादेर्विग्रहवत्त्वेपि शिवादिकर्तृकस्वीकारासंभवेन त्यज्यमानोपचारादौ=नैवेद्यादौ शिवादिस्वत्वाभावेप्युक्तत्यागरूपेच्छा तदीयस्वत्वमवगाहते इति विसंवादिरूपा=भ्रान्तिरूपैवेत्याह—शिवादेरिति । शिवस्वरूपेण ध्यातमन्त्रस्य त्यागोद्देश्यतामते च सुतरां विसंवादः—तदभावात्=विग्रहवत्त्वस्यैवाभावाद् दूरे स्वीकर्तृत्वमित्याह— तदाकारतयेति । विसंवादिरूपत्वे हेतुमाह—द्रव्यनिष्ठेति, शिवाद्युद्देशेन त्यज्यमानो

न च स्वत्वान्तररूपफलेच्छां विना स्वस्वत्वाभावगोचरेच्छैव न संभवतीति 'शिवादिस्वत्वं त्यागस्यैव विषयः' इतिपक्षोऽसंभवदुक्तिक इति वाच्यम्, स्वस्वत्वाभावविषयकेच्छायाः पुण्यादिरूपफलजनकत्वात् तद्विषयस्य पुण्यादिजनकतावच्छेदकस्यापि पुण्यादिफलकत्वात्, अन्यथा तत्स्वत्वस्यापीष्टान्तराऽजनकतया स्वतोऽपुरुषार्थतया च प्रथममपि तदिच्छाया असंभवेन प्रथमकल्पस्यापि हेयत्वापातात्, तत्र च प्रथमकल्पे स्वत्वप्रकारकेच्छाजन्यत्वं जन्यतासंबन्धेन त्यागान्वयिनी तादृशेच्छैव वा चतुर्थ्यर्थस्तत्र प्रकृत्यर्थस्य शिवादेर्विषयिताविशेषसंबन्धेनान्वयः । द्वितीयकल्पे च विषयिताविशेष एव चतुर्थ्यर्थस्तत्र च निरूपितत्वसंबन्धेन शिवादेरन्वयः, नमःपदार्थत्यागस्य च विषयताविशेषसंबन्धेन द्रव्येऽन्वयः, द्रव्यस्यैव वा विशेष्यतया भासमानत्यागे विषयिताविशेषसंबन्धेनान्वयः ।

---

चारादिरूपद्रव्ये ब्राह्मणादीनामेव स्वत्वं जायते तादृशस्वत्वे ब्राह्मणादिनिरूपितत्वस्य सत्त्वेन शिवादिनिरूपितत्वस्य च बाधितत्वेन तादृशबाधितशिवनिरूपितत्वस्यावगाहनाद्विसंवादिरूपता यदि त्रिशूलाद्यस्थे शिवादिनिरूपिते प्रसिद्धस्वत्वे त्यज्यमानद्रव्यसंबन्धमवगाहते तदा एतादृशसंबन्धस्यापि बाधितत्वाद् बाधितावगाहनेन विसंवादिरूपतैव प्राप्तेत्यर्थः । त्रिशूलादिनिष्ठे स्वत्वे त्रिशूलादीनामेव संबन्धो न त्वस्मदादित्यज्यमानद्रव्यस्य संबन्ध इति ज्ञेयम् ।

ननूद्देश्यत्वद्वितीयस्वरूपे यत् "यदि च त्यागरूपेच्छैव" इत्यादिना शिवादिस्वत्वस्यापि यागरूपेच्छाविषयत्वमुक्तं तन्न संभवति– शिवादिस्वत्वरूपफलविषयकेच्छां विना स्वस्वत्वाभाविषयकत्यागरूपेच्छाया असंभवादित्याशङ्क्याह– न चेति । उत्तरमाह–स्वस्वत्वेति, स्वस्वत्वाभावविषयकेच्छयापि पुण्यमुत्पद्यते इति पुण्यादिजनकता स्वस्वत्वाभावेच्छायामस्ति पुण्यादिजनकतावच्छेदकं च स्वस्वत्वाभाव एव स एव स्वस्वत्वाभावेच्छाया विषय इति स्वस्वत्वाभावेच्छाया पुण्यजनकत्वे प्राप्ते पुण्यजनकतावच्छेदकस्य स्वस्वत्वाभावस्यापि पुण्यजनकत्वं प्राप्तमेवेति स्वस्वत्वाभावस्य पुण्योत्पादकत्वज्ञाने जाते परस्वत्वरूपफलेच्छां विनापि स्वस्वत्वाभावगोचरेच्छा संभवत्येवेत्युक्तपक्षे नाऽसंभवदुक्तिकत्वं दोष इत्यर्थः । विपक्षे बाधकमाह–अन्यथेति, यदि स्वस्वत्वाभावस्य पुण्योत्पादकत्वं न स्यात् तदा पुण्योत्पादकत्वज्ञानेपि परस्वत्वविषयकेच्छां विना स्वस्वत्वाभावविषयकेच्छा न संभवेत्तथा च तत्स्वत्वस्य=परस्वत्वस्याप्येकेष्टजनकत्वेनेष्टान्तराजनकतया स्वयं च सुखदुःखाभावयोः पुरुषार्थयोर्मध्येऽन्यतररूपत्वाभावेनाऽपुरुषार्थतया प्रथमं तदिच्छायाः=परस्वत्वविषयकेच्छाया अप्यसंभवात् प्रथमकल्पस्य=" त्यागश्च यदि " इत्यादिनोक्तस्य परस्वत्वेच्छानन्तरं स्वस्वत्वाभावेच्छेतिकल्पस्यापि हेयत्वं स्यात्=असंभवदुक्तिकत्वं स्यात्–उक्तरीत्या परस्वत्वेच्छाया अपि प्रथममसंभवादित्यर्थस्तथा चोक्तं पक्षद्वयमपि संभवदुक्तिकमेव । उक्तप्रथमकल्पे चतुर्थ्यर्थमाह–तत्रेति । स्वत्वप्रकारकेच्छाजन्यत्वं त्यागे ज्ञेयम् । तत्र=चतुर्थ्यर्थरू-

न च प्रथमान्तपदार्थस्य मुख्यविशेष्यतानियमः- 'भूतले न घटः' इत्यादौ निपातार्थस्यापि मुख्यविशेष्यतया भानात्। 'शिवायोत्सृजति' इत्यादाविव नात्राऽनिराकर्तृसंप्रदानता-त्यागपदार्थस्य क्रियात्वाभावात्।

नमःपदेन च स्वप्रयोक्तृपुरुषकर्तृकत्वोपरागेणैव त्यागोऽभिधीयते- अन्योच्चरितनमःपदेनाऽन्यदीयत्यागाबोधनात्। तत्पुरुषोच्चरितनमःपदात् त्यागबोधे सति त्यागे त्यज्यमाने द्रव्ये चान्यदीयत्वसंशयानुदयात्, अत एव त्यागे तदीयत्वबोधनाय 'अहं ददे' इत्यादिवत् 'अहं नमः' इति न प्रयुज्यते, न वा परकीयत्वबोधनाय 'चैत्रो नमः' इत्यादि। ऋत्विजा च यजमानरूपपुरुषान्तरीयतत्तद्द्रव्यत्यागे स्वीयत्वमारोप्यैव पूजायां नमःपदं प्रयुज्यते स चारोपस्तस्य विशेषदर्शनदशायामप्याहार्यतयोपपद्यते इति प्रतिनिधिप्रयुक्तस्य दानवाक्यस्येव पूजायां तादृशनमःपदघटितवाक्यस्य बाधितार्थत्वेप्यदृष्टजनकत्वं न विरुद्धम्।

---

षेच्छायाम्। "यदि च त्यागरूपेच्छैव" इत्याद्युक्तद्वितीयकल्पे चतुर्थ्यर्थमाह-द्वितीयकल्पेति। शिवनिष्ठोद्देश्यताख्यविषयतानिरूपितविषयिताश्रयीभूतेच्छाजन्याऽर्घ्यविषयकस्त्याग इतिशाब्दबोधः। स्पष्टमन्यत्।

ननु प्रथमान्तपदार्थस्यैव विशेष्यत्वं भवतीति नियमे सत्यपि कथं नमःपदार्थत्यागस्य विशेष्यत्वमुक्तमित्याशङ्क्याह- न चेति। उत्तरमाह- भूतले इति। निपातार्थस्य=नञर्थाभावस्य। 'घटाभावो भूतलवृत्तिः' इत्याकारकशाब्दबोधोदयादित्यर्थः। ननु 'एषोऽर्घ्यः शिवाय नमः' इत्यत्र शिवस्यानिराकर्तृसंप्रदानत्वं स्वीकार्यं तथा च संप्रदानचतुर्थ्यैव शिवपदात् संभवेदिति "नमःस्वस्ति" इति सूत्रं व्यर्थमेवेत्याशङ्क्याह- शिवायेति। त्यागपदार्थस्येच्छारूपत्वेन गुणत्वात् न क्रियारूपत्वम्, अनिराकर्तृसंप्रदानत्वं चोत्सृजतीत्यादिक्रियासत्त्वे एव भवतीत्यत्र नमःस्वस्त्यादिशब्दयोगे चतुर्थ्युपपत्त्यर्थम् "नमःस्वस्ति" इत्यादिसूत्रं सार्थकमावश्यकं चेत्यर्थः।

नम इति- स्वम्=नमःपदम्। तथा च चैत्रोच्चारितनमःपदेन चैत्रकर्तृक एव त्यागो बोध्यते नान्यकर्तृक इत्यर्थः। उक्तेः हेतुमाह- अन्येति। हेत्वन्तरमाह- तत्पुरुषेति, चैत्रोच्चारितनमःपदाद् यदा त्यागबोधो भवति तदा तस्मिन् त्यागे त्यज्यमानद्रव्ये चान्यदीयत्वस्य संशयोपि न भवतीति नमःपदेन स्वोच्चारणकर्तृकर्तृक एव त्यागो प्रत्याय्यते इत्यर्थः। अत एवेति- यत एवोक्तान्यदीयत्वसंशयोपि नमःपदार्थत्यागे न भवत्यत एव। न वेति- परोच्चारितनमःपदात् परकीयस्यैव त्यागस्य बोधो जायते इति न चैत्रादिनामोच्चारणापेक्षेत्यर्थः। ऋत्विगुच्चारितनमःपदाद् यजमानीयत्यागस्यैव बोधो भवतीत्याह- ऋत्विजेति। तस्य=ऋत्विजः। विशेषदर्शनदशायाम्=' इदं द्रव्यं मदीयं न ' इत्याकारकस्वकीयत्वाभावज्ञानदशायामपि। आहार्यतया=बाधितस्वरूपेण। प्रतिनिधिप्रयुक्तस्येति दानवाक्यस्य विशेषणम्। तादृशनमः-

अस्मच्छब्दादिवत्— स्वोच्चारणकर्तृत्वोपलक्षितपुरुषविशिष्टवाचकान्नमःपदाद् विशेषरूपेण पुरुषभानम् । अशक्यस्य चैत्रत्वादेर्भानासंभवे तस्यापि वाच्येऽन्तर्भावः स्वीकरणीयः । तदनुगमकं चोपलक्षणीभूतमेककालीनोभयावृत्त्युच्चारयितृशरीरजातित्वम्, स्वत्वाननुगमेपि शक्त्यैक्यं कथंचिदुपपादनीयं सर्वनामशक्त्यैक्यवत् ।

उपलक्षणरूपप्रविष्टमुच्चारणं वेदीयत्वेन विशेषणीयम्. अतः पूजाभिन्नयादृच्छिकान्नत्यागबोधनाय 'अन्नं नमः' इति न प्रयोगः । योग्यतासत्त्वेपि तत्र नमःपदप्रयोगस्य वेदाबोधितत्वेन तद्घटिततत्पदशक्यपुरुषोपलक्षणरूपाऽप्रसिद्ध्याऽवाचकत्वात् । अत एव यथा नीचप्रीतिहेतुक्रियास्थले 'पूजयति' इत्यादिप्रयोगवारणाय पूजयतीत्यादिवाच्यप्रीतौ गौरवितवृत्तित्वं स्वसमभिव्याहृतकर्तृ-

---

पदघटितवाक्यस्य=ऋत्विगुच्चारितनमःपदघटितवाक्यस्य किं वा "प्रतिनिधिप्रयुक्तस्य" इत्युभयत्रैव विशेषणम् । अत्र चैतदऽदृष्टं यजमानसमवेतमेवोत्पद्यते न ऋत्विक्समवेतमिति "शास्त्रफलं प्रयोक्तरि" इतिमीमांसाधिकरणे ( ३ । ७ । ८ ) द्रष्टव्यम् ।

अस्मदिति— यथाऽस्मच्छब्दस्य स्वोच्चारणकर्तृत्वोपलक्षितधर्मावच्छिन्ने शक्तिस्तथा नमःपदस्यापि स्वोच्चारणकर्तृत्वोपलक्षितपुरुषविशिष्टत्यागे शक्तिरिति स्वोच्चारणकर्तृत्वोपलक्षितपुरुषस्य शक्यांशे प्रवेशाद् नमःपदात् तस्य स्वोच्चारयितुर्विशेषरूपेण=चैत्रत्वादिरूपेण भानं भवतीत्यर्थः । यद्यपि चैत्रत्वादेर्न शक्यत्वं तथाप्युक्तरीत्या स्वोच्चारणकर्तृत्वरूपेण चैत्रत्वादेरपि नमःपदवाच्यत्यागेऽन्तर्भावः संभवतीत्याह— अशक्यस्येति । चैत्रत्वादेरनुगमकमाह—तदनुगमकमिति, एककाले उभयशरीरावृत्ति यदुच्चारयितृशरीरजातित्वं तदेवोपलक्षणीभूतमनुगमकं तच्च चैत्रत्वाद्येव भवति चैत्रत्वस्यैकस्मिन् काले उभयशरीरावृत्तित्वात्, मनुष्यत्वादिकं तूभयशरीरवृत्त्येवेति तन्न ग्राह्यमित्यर्थः । चैत्रद्वयसत्त्वेपि तन्नमःपदोच्चारयितृत्वं त्वेकस्यैवैकस्मिन् काले संमवतीति ज्ञेयम् । स्वोच्चारणेत्यत्र स्वत्वाननुगमेपि शक्त्यैक्यं शक्तिवादोक्तरीत्या कर्तव्यमिति सूचयति—स्वत्वाननुगमेपीति ।

विशेषान्तरमाह— उपलक्षणेति, यत्र वेदेन नमःपदोच्चारणं विहितमस्ति तत्रैव नमःपदेन त्यागबोधो भवति नान्यत्रेति स्वोच्चारणेत्यत्र वेदबोधितस्वोच्चारणेत्येवं वक्तव्यमित्यर्थः । उक्तस्य फलमाह— अत इति । उक्ते हेतुमाह— योग्यतेति, नमःपदस्य त्यागबोधने त्योग्यतास्त्येवेत्यर्थः । तत्र=यादृच्छिकत्यागे । तद्घटितेति— तद्घटितम्= यादृच्छिकत्यागविषयीभूतवाचकन्नादिपदघटितं यत् तत्पदम्=नमःपदं तच्छक्यं यत् पुरुषोपलक्षणरूपम्=वेदीयनमःपदोच्चारणं तस्याऽप्रसिद्ध्या=असत्त्वात् 'अन्नं नमः' इत्यादौ नमःपदस्य त्यागावाचकत्वं प्राप्तम्— वेदबोधितं यत् नमःपदोच्चारणं तत्कर्तृत्वोपलक्षितपुरुषोच्चारितस्यैव नमःपदस्य त्यागबोधकत्वादित्यर्थः । अत एवेति— पुरुषोपलक्षणीभूतोच्चारणे वेदीयत्वविशेषणप्रवेशादेवेत्यर्थः । गौरवितवृत्तित्वम्=पूज्यवृ-

पुरुषाऽवधिकोत्कर्षवद्वृत्तित्वरूपमुपलक्षणमुपेयते उक्तस्थले च योग्यतासत्त्वेपि नीचवृत्तिप्रीतेः स्वसमभिव्याहृतकर्त्रवधिकोत्कर्षवद्वृत्तित्वरूपोपलक्षणाऽनाक्रान्तत्वेन तत्प्रीतिहेतुक्रियावाचकत्वविरहेण तत्तात्पर्येण 'पूजयति' इत्यादेर्न प्रयोगः, तथा नीचोद्देश्यकत्यागतात्पर्येण नमःपदाप्रयोगात् तदतिप्रसङ्गवारणाय गौरवितोद्देश्यकत्यागे एव नमःपदशक्तिरित्यनादेयम्- गौरवितोद्देश्यकत्वस्य नमःपदार्थशरीरे निवेशेपि गौरवितोद्देश्यकपूजातिरिक्तद्रव्यत्यागबोधनाय नमःपदप्रयोगवारणायोक्तविशेषणस्योच्चारणेऽवश्यं निवेशनीयतया तत एव तदतिप्रसङ्गवारणात् ।

'इन्द्राय स्वाहा' 'तुभ्यं स्वधा' इत्यादावग्निप्रक्षेपोपहितदेवोद्देश्यकत्यागबोधकस्वाहापद पित्रुद्देश्यकत्यागबोधकस्वधापदयोरपि नमःपदवद् देशनादेशितोच्चारणकर्तृत्वोपलक्षितपुरुषीयत्यागवाचकता, अन्यथा पूर्ववदेवातिप्रसङ्गः । एवं च देवोद्देश्यकत्वादेरपि न वाच्यान्तर्भावः, अतादृशत्यागतात्पर्येण स्वाहादिप्रयोगस्य देशनादेशितत्वविरहेणैवाऽनतिप्रसङ्गात्, अत एव तान्त्रिकपूजाया-

---

त्तित्वम् । स्वेति- यथा 'चैत्रः पूजयति हरिम्'इत्यत्र स्वम्=पूजयतिपदं तत्समभिव्याहृतः कर्तृपुरुषश्चैत्रस्तदवधिको य उत्कर्षस्तद्वान् हरिस्तद्वृत्तित्वं पूजधात्वर्थप्रीतावस्त्येवेति स्वसमभिव्याहृतकर्तृपुरुषावधिकोत्कर्षवद्वृत्तित्वविशिष्टा प्रीतिः पूजधात्वर्थः । उक्तस्थले=' भृत्यं पूजयति ' इत्यादौ । तत्प्रीति=नीचप्रीति । पूजयतिपदस्येत्यादिः । तत्तात्पर्येण=नीचप्रीतिहेतुक्रियातात्पर्येण । नमःपदाप्रयोगादिति- नीचोद्देश्यकत्यागाय नमःपदप्रयोगो न भवतीति तदतिप्रसङ्गवारणाय=नीचोद्देश्यकत्यागे नमःपदप्रयोगापत्तिवारणाय गौरवितोद्देश्यकत्यागे एव नमःपदशक्तिरस्तीत्यऽनादेयम्=न वक्तव्यम् । उक्ते हेतुमाह- गौरवितोद्देश्यकत्वस्येति, गौरवितोद्देश्यकयादृच्छिकत्यागार्थमपि नमःपदप्रयोग इष्टो नास्तीति नमःपदेन गौरवितोद्देश्यकयादृच्छिकत्यागबोधस्यापि वारणाय उक्तविशेषणस्य=वेदीयत्वविशेषणस्य नमःपदोच्चारणेऽवश्यं निवेश्यत्वात् ततः=वेदीयत्वविशेषणादेव तदतिप्रसङ्गस्य=नीचोद्देश्यकत्यागतात्पर्येण नमःपदप्रयोगापत्तेर्वारणस्य संभवात्- वेदेन दानरूपस्त्याग उत्कृष्टोद्देश्यकत्वेनैव बोधितो न तु नीचोद्देश्यकत्वेनेति न नीचोद्देश्यकत्यागतात्पर्येण नमःपदप्रयोगापत्तिरित्यर्थः ।

इन्द्रायेति- अग्निप्रक्षेपोपहितः=अग्निप्रक्षेपोपलक्षितो देवोद्देश्यकत्यागः स्वाहापदार्थः, पित्रुद्देश्यकत्यागः स्वधापदार्थ इत्यन्वयः । देशना=चोदना । देशनादेशितोच्चारणम्=वेदबोधितोच्चारणं तत्कर्तृत्वोपलक्षितपुरुषीयत्यागे एव स्वधास्वाहापदयोः शक्तिरिति यादृच्छिकत्यागार्थं न स्वधास्वाहापदयोः प्रयोगापत्तिरित्यर्थः । अन्यथा=देशनादेशितेत्यादिविशेषणाभावे । पूर्ववदेव=नमःपदवदेव । अतिप्रसङ्गः=यादृच्छिकत्यागे स्वधास्वाहापदयोः प्रयोगापत्तिः । एवं च=देशनादेशितेत्यादिविशेषणात् । वाच्ये=त्यागे । अतादृशत्यागतात्पर्येण=

मर्घ्याचमनीयादिदानेऽग्निप्रक्षेपोपहितत्वपित्रुद्देश्यकत्वविरहेऽपि स्वाहास्वधाप्रयोगस्य नाऽसमवेतार्थता. एवं च सति नमःस्वाहास्वधाशब्दानामेकस्थानेऽन्यप्रयोगस्यापि वेदबोधितत्वाभावेनैव नातिप्रसङ्गः ।

नतिरूपो नमःपदार्थश्च स्वापकर्षबोधनानुकूलः स्वीयव्यापारः, चतुर्थ्या चापकर्षान्वय्यऽवधित्वमऽवधिमत्त्वं वा प्रत्याय्यते. स्वमुच्चारयिता. तथा च चैत्राद्युच्चारितात् ' नमो हरये ' इत्यादिशब्दाद्धर्यऽवधिकचैत्रापकर्षबोधानुकूलश्चैत्रीयव्यापार इत्याकारको बोधः । ' नारायणं नमस्कृत्य ' इत्यादौ नमःशब्दयोगेऽपि न चतुर्थी— द्वितीयया कारकविभक्तित्वेन बलीयस्या बाधात् ।

अथात्र नारायणादेर्नमस्कारघटकापकर्षावधित्वमेव तच्च न कर्मत्वं कर्मत्वं च क्रियाजन्यफलशालित्वादिरूपमेव तच्च न तस्येति द्वितीयाया नायं विषयः । न चापकर्षबोधरूपफलाश्रयत्वरूपकर्मत्वं तत्राबाधितमेवेति तद्विवक्षयैव द्वितीयोपपत्तिरिति वाच्यम्, एवं सति नारायणावधिकाऽपकर्षबोधकदण्डवत्प्रणिपाता-

---

देवोद्देश्यकत्यागतात्पर्येण । अत एव—देशनादेशितेतिविशेषणादेव । देवोद्देश्यकार्घ्यादिदानरूपत्यागेऽग्निप्रक्षेपोपहितत्वं पित्रुद्देश्यकत्वं च नास्त्येवाऽथापि स्वधास्वाहाप्रयोगस्याऽसमवेतार्थता=बाधितार्थकता नास्ति तान्त्रिकपूजाया अपि वेदबोधितत्वेन तद्घटकार्घ्यादिदानस्यापि वेदबोधितत्वप्राप्त्या तद्बोधकत्वं स्वधास्वाहापदयोर्युक्तमेवेत्यर्थः । देशनादेशितेत्यादिविशेषणस्योपयोगान्तरमाह— एवं चेति, वेदेन देवोद्देश्यकत्यागे एव स्वाहापदं निर्दिष्टमिति न स्वाहापदस्य पित्रुद्देश्यकत्यागे प्रयोगापत्तिरेवं स्वधापदस्य न देवोद्देश्यकत्यागे प्रयोगापत्तिरित्यर्थः ।

नतिरूपनमःपदार्थमाह— नतिरूप इति । अपकर्षावधित्वमपकर्षनिरूपितमिति निरूपकतासम्बन्धेनाऽपकर्षेऽवधित्वान्वयः । अपकर्षनिरूपितावधित्वं च नमस्कार्ये । वाक्यार्थबोधस्वरूपमाह— तथा चेति । ननु यदि नमःपदयोगे " नमःस्वस्ति " इतिसूत्रेण चतुर्थी भवति तदा ' नारायणं नमस्कृत्य ' इत्यत्र कथं न नमःपदयोगेऽपि चतुर्थीत्याशङ्क्याह— नारायणमिति, ' नारायणं नमस्कृत्य ' इत्यत्र नारायणस्य धात्वर्थनिरूपितकर्मत्वाद् द्वितीयैव भवति— " नमःस्वस्ति " इतिसूत्रप्राप्तचतुर्थ्या उपपदविभक्तित्वाद् द्वितीयायाश्च कारकविभक्तित्वाद् उपपदविभक्त्यपेक्षया कारकविभक्तेर्बलीयस्त्वादुपपदविभक्तिबाधकत्वादत्र द्वितीयेत्यर्थः ।

शङ्कते— अथेति । अत्र=' नारायणं नमस्कृत्य ' इत्यत्र । तच्च=नमस्कारघटकापकर्षावधित्वं च । कर्मत्वस्वरूपमाह— कर्मत्वं चेति । तत्=क्रियाजन्यफलशालित्वम् । तस्य=नारायणस्य । तथा च नारायणस्यात्र क्रियाजन्यफलशालित्वाभावान्न कर्मत्वं कर्मत्वाभावाच्च न द्वितीयाप्राप्तिरित्यर्थः । ननु स्वापकर्षबोध एव फलं तदाश्रयत्वं च तत्र=नारायणेऽस्त्येवेति युक्तं कर्मत्वमित्याशङ्क्याह— न चेति । परिहारहेतुमाह— एवमिति, यदि स्वापकर्षबोधाश्रयतया नारायणस्य कर्मत्वं तदा यदा नारायणाग्रे दण्डवत्प्रणामः क्रियते तदा तत्रस्थपुरुषस्यापि ' अयं

दिलिङ्गकताद्दशापकर्षबोधाश्रयतायाः पुरुषान्तरसाधारणतया नारायणप्रणामदशायाम् ' मनुष्यं नमस्करोति ' इत्यादिप्रयोगापत्तिः । यदि चापकर्षावधित्वप्रकारकबोधानुकूलव्यापारो नमस्कारस्तद्घटकबोधविशेष्यतया नारायणादेः कर्मत्वं क्रियाजन्यफलशालित्वरूपे कर्मत्वे च व्यापारांशेऽनुकूलतासंबन्धेन विशेषणीभूतं फलमेव विवक्षणीयमऽत्र चानुकूलत्वमेव व्यापारांशे विशेषणमित्यपकर्षावधित्वबोद्धुः पुरुषान्तरस्य न कर्मतेत्युच्यते ?, तदापि ' नारायणं प्रणम्य ' इत्यादावेव कर्मत्वमुपपद्यते न तु ' नारायणं नमस्कृत्य ' इत्यादौ— नमःपदार्थघटकज्ञानस्य धात्वर्थताविरहेण तद्विषयतायाः कर्मतानात्मकत्वात् कृतिविषयतायाश्च नमःपदार्थव्यापारे एव सत्त्वात् ।

मवम्—' नमस्करोति ' इत्यादौ कृधातुनैव व्यापारबोधात्. अत्र च स्वापकर्षावधित्वप्रकारकबोधविषयतामात्रं निपातार्थः, अत्र स्वं समभिव्याहृतः कर्ता तथा च ताद्दशबोधविषयताप्रयोजकव्यापारानुकूलकृतिमानिति समुदायाधीनो

---

स्वात्मानमपकृष्टं मन्यते ' इत्याकारकस्तदपकर्षबोधो जायते एवेति ताद्दशबोधाश्रयतया तस्यापि मनुष्यस्य कर्मत्वापत्त्या नारायणोद्देश्यकप्रणामदशायाम् ' मनुष्यं नमस्करोति ' इतिप्रयोगः स्यादेव न चैतदिष्टमित्यर्थः । नन्वपकर्षावधित्वप्रकारकबोधानुकूलव्यापारो नमस्कारस्तथा च नारायणावधित्वप्रकारकस्य स्वापकर्षबोधस्य विशेष्यता=आश्रयता हि नारायणे एव न तत्रस्थमनुष्ये इति न नारायणप्रणामदशायां मनुष्यस्य प्रणामकर्मतापत्तिः, क्रियाजन्यफलशालित्वरूपकर्मत्वशरीरप्रविष्टं च फलं व्यापारांशेऽनुकूलतासंबन्धेन विशेषणीभूतमेव फलं ग्राह्यमिति नारायणसमवेत एव बोधो नमस्काररूपव्यापारेऽनुकूलतासंबन्धेन विशेषणं भवति—नारायणसमवेतबोधस्यैव ताद्दशव्यापारजन्यत्वाद् न तु मनुष्यसमवेतोपीति नारायणप्रणामदशायामत्र=पुरुषान्तरसमवेतस्वापकर्षबोधे, विषयत्वं सप्तम्यर्थ इति . पुरुषान्तरसमवेतस्वापकर्षबोधविषयकानुकूलत्वमेव नमनव्यापारे विशेषणं भवति न त्वनुकूलतासंबन्धेन पुरुषान्तरसमवेतस्वापकर्षबोधरूपं फलमिति ताद्दशस्याऽपकर्षावधित्वबोद्धुः पुरुषान्तरस्य न कर्मतापत्तिरित्याऽऽशङ्क्याह— यदि चेति । उत्तरमाह— तदापीति । नमःपदार्थघटकज्ञानस्य— स्वापकर्षबोधस्य । ननु कृतिविषयत्वादेव नारायणस्यात्र कर्मत्वं भविष्यतीत्याशङ्क्याह— कृतीति । कृतिविषयता तु नमनानुकूलव्यापारे एव न तु नारायणे इत्यर्थः ।

अथेत्यादिनाशङ्कितं परिहरति— मैवमिति । अपकर्षावधित्वप्रकारकबोधानुकूलव्यापारो न नमस्कारपदार्थः किं तु तत्र व्यापारमात्रं कृधात्वर्थः, स्वापकर्षावधित्वप्रकारकबोधविषयता च निपातार्थः=नमः पदार्थस्तथा च ' नमस्करोति ' इत्यस्य स्वापकर्षावधित्वप्रकारकबोधविषयतानुकूलव्यापारोर्थस्तत्र व्यापारविशेषणीभूत ( व्यापारप्रयोज्य ) ताद्दशविषयताश्रयतया नारायणस्य कर्मत्वं न तु मनुष्यस्य— ताद्दशबोधविषयताश्रयत्वाभावादिति न नारायणप्रणामदशायाम्

बोधः, तादृशविषयताश्रयतया नारायणादेः कर्मत्वम्– यतः 'धात्वर्थतावच्छेदकफलशालित्वं कर्मत्वम्' इत्यत्र धात्वर्थतावच्छेदकत्वं न धातुशक्यतावच्छेदकत्वम्. अपि तु व्यापाररूपार्थेऽनुकूलतासंबन्धेन विशेषणतया धातुप्रतिपाद्यत्वम् । प्रकृते च निपातार्थस्य धात्वर्थे साक्षादन्वयेन तादृशबोधविषयत्वरूपस्य नमःपदार्थस्य धात्वर्थतावच्छेदकत्वमक्षतमेव ।

न चैवं पूर्वदेशादेर्गम्यादिकर्मत्वं दुर्वारम्, विभागादौ क्रियाजन्यत्वसत्त्वेपि निरुक्तधात्वर्थतावच्छेदकत्वाभावात्, न हि विभागादिर्गम्याद्यर्थे कथमपि विशेषणतया भासते । एवं च नारायणादेः करोतिकर्मत्वेपि नमःपदादिकं विना न तद्योगे नारायणादिपदोत्तरं द्वितीया–तदर्थान्वयिफलोपस्थापकाभावेन तदर्थानन्वयात् । नापि 'नारायणं फलं करोति' इतिप्रयोगापत्तिः–फलस्यात्र धात्वर्थव्यापारे साक्षादविशेषणत्वात्. निपातातिरिक्तनामार्थस्य धात्वर्थे भेदेनान्वयस्याव्युत्पन्नत्वात्. धात्वर्थे साक्षाद्विशेषणीभवत्येव फले द्वितीयार्था·

---

'मनुष्यं नमस्करोति' इति प्रयोगापत्तिरित्यर्थः । ननु यद्युक्तविषयता नमःपदार्थ एव न धात्व· र्थस्तदा तस्या विषयताया धात्वर्थतावच्छेदकत्वाभावात्कथं तदाश्रयस्य नारायणस्य कर्मत्वं स्यादित्यत्राह– यत इति, धात्वर्थतावच्छेदकत्वं हि व्यापारेऽनुकूलतासंबन्धेन विशेषणतया धातुप्रतिपाद्यत्वमेव तथा च प्रकृते नमःपदार्थभूतोक्तविषयताया धात्वर्थे साक्षादेवान्वयोस्ति नम· स्करोतीतिधातुप्रतिपाद्यत्वमप्यस्त्येवेति धात्वर्थतावच्छेदकत्वं प्राप्तं धात्वर्थतावच्छेदकत्वाच्च तादृशविषयताश्रयस्य नारायणस्य युक्तं कर्मत्वमित्यर्थः । तादृश=निपातार्थभूत ।

ननु यदि व्यापारेऽनुकूलतासंबन्धेन विशेषणतया धातुप्रतिपाद्यत्वमेव धात्वर्थतावच्छेदकत्वं तदा 'गच्छति' इत्यत्र गमनव्यापारस्य पूर्वदेशविभागजनकत्वमप्यस्त्येवेति विभागस्याप्यनुकूलतासंबन्धेन व्यापारविशेषणत्वात् तादृशविभागाश्रयतया पूर्वदेशस्यापि गम्यादिकर्मत्वं स्यादिति आशङ्क्याह–न चेति । परिहारमाह– विभागादाविति । निरुक्तधातु=गम्यादिधातु । विशेषान्तरमाह–एवं चेति । तद्योगे=' करोति ' इतिपदयोगे । नारायणे नित्ये करोत्यर्थकर्मत्वाभावादिति भावः । तदर्थान्वयि=द्वितीयार्था ( वृत्तित्वाद्य ) ऽन्वयि यत्फलं निरुक्तबोधविषयतारूपं तदुपस्थापकस्य नमःपदस्याभावेन तदर्थानन्वयात्=द्वितीयार्थान्वयाऽसंभवात् । विशेषान्तरमाह–नापीति, ' फलं करोति ' इत्यत्र द्वितीयार्थस्यैव व्यापारे साक्षादन्वयो द्वितीयार्थे च फलस्यान्वय इति न फलस्य व्यापारे साक्षादन्वयो धात्वर्थव्यापारे साक्षाद्विशेषणभूते एव च फले द्वितीयार्थाधेयत्वस्यान्वयो भवतीति नात्र फले द्वितीयार्थान्वयः संभवति । किं च नामार्थस्य फलस्य धात्वर्थे भेदेन साक्षादन्वयो न संभवति–निपातातिरिक्तनामार्थस्य धात्वर्थे भेदेनान्वयस्याऽव्युत्पन्नत्वादिति ' नारायणं फलं करोति ' इतिप्रयोगापत्तिर्नास्ति । अत

धेयत्वान्वयात्, अत एव ' पुरस्कृत्य शिखण्डिनम् ' इत्यादावपि शिखण्ड्यादेः कृतिकर्मता- धात्वर्थव्यापारविशेषणपुरःपदरूपनिपातार्थाग्रदेशावस्थानरूपफलाश्रयत्वात् ।

'नारायणो नमस्क्रियते ' ' ज्यायान् पुरस्क्रियते ' इत्यादौ निपातार्थफलं धात्वर्थव्यापारे विशेष्यतयैव भासते । तदन्वितमाश्रयत्वं कर्माख्यातादिना प्रत्याय्यते ।

अथैवमपि कारकविभक्तेः साक्षाद्धात्वर्थान्वयित्वनियमभङ्ग इति चेत् ?, न- तादृशनियमे निपातातिरिक्तार्थमन्तराऽकृत्वेत्यस्यैव साक्षादर्थत्वात् । अन्यथा 'घटो दण्डाज्जायते न पारिमाण्डल्यात् ' इत्यादौ कारकपञ्चम्या जन्याद्यन्वयिनि नञर्थाभावे प्रतियोगितया स्वार्थप्रयोज्यत्वादिबोधनासंभवात् । पारिमा-

---

एवेति- यथा नमःपदार्थस्य धात्वर्थविशेषणत्वात्तदाश्रयस्य नारायणस्य कर्मत्वं तथा पुरःपदार्थस्याग्रावस्थानरूपस्य निपातार्थत्वेन साक्षाद् धात्वर्थविशेषणत्वात् तदाश्रयस्य शिखण्डिनः कर्मत्वात् ' पुरस्कृत्य शिखण्डिनम् ' इति प्रयोग उपपद्यते । कृतिकर्मता=पुरस्कृत्येति कृधात्वर्थकर्मता ।

कर्मप्रत्ययान्तप्रयोगमुदाहरति—नारायण इति, नमइतिनिपातार्थफलमुक्तबोधविषयता, पुरइतिनिपातार्थरूपं फलमग्रावस्थानम् । तदन्वितम्=उक्तनिपातार्थरूपफलनिरूपितम्, तथा च नमनानुकूलव्यापारजन्यस्वापकर्षावधित्वप्रकारकबोधविषयताश्रयो नारायण इति, पुरस्कृतिरूपव्यापारजन्याऽग्रावस्थानाश्रयो ज्यायानिति वाक्यार्थबोधः ।

ननूक्तरीत्या 'नारायणं नमस्करोति' इत्यत्र नारायणवृत्तिर्या स्वापकर्षबोधविषयता तत्प्रयोजकव्यापारानुकूलकृतिमानित्याकारकबोधोदयाद् द्वितीयार्थाधेयत्वस्य निपातार्थरूपफलेनान्वयो जातो न च निपातार्थो धात्वर्थो द्वितीया च कारकविभक्तिः कारकविभक्तेश्च धात्वर्थेनैवान्वयः साक्षाद्भवतीति यो नियमस्तस्य व्यभिचारः प्राप्त इत्याशङ्कते—अथेति । परिहरति—नेति, उक्तस्थले नमइतिनिपातार्थद्वारा द्वितीयाया धात्वर्थेऽन्वयोऽस्ति स नोक्तनियमभङ्गकरः—निपातातिरिक्तार्थमन्तराकृत्वा कारकविभक्त्यर्थस्य धात्वर्थेऽन्वयो न भवतीत्येव तादृशनियमार्थ इत्यर्थः । विपक्षे बाधकमाह—अन्यथेति, यदि कारकविभक्त्यर्थस्य निपातार्थेऽन्वयो न स्यात्तदा ' घटो दण्डाज्जायते न पारिमाण्डल्यात् ' इत्यत्रापि निपातरूपनञर्थाऽभावे कारकविभक्तिरूपपञ्चम्यर्थस्य प्रयोज्यत्वस्यान्वयो न स्याद् भवति चान्वय इति निपातार्थेऽपि कारकविभक्त्यर्थस्यान्वयो भवत्येव । जन्येति—जन्यो घटस्तदन्वयी यो नञर्थाभावः=पारिमाण्डल्यनिरूपितप्रयोज्यत्वाभावस्तत्र प्रतियोगितया=प्रतियोगित्वरूपेण स्वप्रतियोगिकत्वसंबन्धेन च पञ्चम्यर्थस्य पारिमाण्डल्यनिरूपितप्रयोज्यत्वस्यान्वयो भवतीत्यर्थस्तथा च घटः पारिमाण्डल्यनिरूपितप्रयोज्यत्वाभाववानिति बोधाकारः । ननु " पारिमाण्डल्यभिन्नानां कारणत्व ( प्रयोज्यत्व ) मुदाहृतम् " इत्युक्त तथा च पारिमाण्डल्यनिरूपितप्रयोज्यत्वमेव प्रसिद्धं नास्ति यदभावस्य घटेऽन्वयः स्यादित्याश-

ण्डल्यादिनिरूपितमपि प्रयोज्यत्वं विषयितया तदवच्छिन्नजनकताकज्ञानादौ प्रसिद्धम् । प्रयोज्यत्वविशिष्टोत्पत्तिरेव वा तत्र धात्वर्थः, तत्र पञ्चम्यन्तार्थपारिमाण्डल्यनिरूपितत्वस्याभावो नञा बोध्यते । उक्तरीत्या क्रियायोगेन नमस्कार्यस्य कर्मत्वेपि 'स्वयम्भुवे नमस्कृत्य' इत्यादौ चतुर्थी– अपकर्षावधित्वमात्रविवक्षया ।

केचित्तु– 'नारायणं नमस्कृत्य' इत्यादौ नमःपदं नतिकर्मपरं तथा च 'नारायणं नतिकर्मीकृत्य' इत्यर्थविवक्षया 'घटं शुक्लं करोति शुक्ली करोति' इत्यादौ घटादेरिव नारायणादेः कृतिकर्मता। 'शिखण्डिनं पुरस्कृत्य' इत्यादौ पुरःपदमग्रस्थितपरम् । एवम् 'घटं साक्षात्करोति' इत्यादौ साक्षात्पदं स्वीयप्रत्यक्षविषयपरं न तु धर्मपरम् । एवम् 'दुःखमाविष्करोति' 'अस्त्रं प्रादुष्करोति' इत्यादावप्याऽऽविरादिपदं ज्ञानगोचरार्थकमिति सर्वत्र पूर्ववद् द्वितीयानिर्वाह इत्याहुः ।

---

इत्याह–पारिमाण्डल्येति, पारिमाण्डल्यस्यापि स्वविषयकज्ञानादौ प्रयोज्यत्वमस्त्येवेति पारिमाण्डल्यनिरूपितप्रयोज्यत्वं तदवच्छिन्ना=पारिमाण्डल्यत्वावच्छिन्ना जनकता यस्य तादृशपारिमाण्डल्यविषयकज्ञानादौ विषयितया=विषयितासंबन्धेन प्रसिद्धम्, ज्ञाने विषयिता वर्तते इति विषयितयेत्युक्तम् । पक्षान्तरमाह–प्रयोज्यत्वविशिष्टेति, तत्र=' घटो दण्डाजायते न पारिमाण्डल्यात्' इत्यत्र, तत्र=धात्वर्थीभूतप्रयोज्यत्वविशिष्टोत्पत्तौ,तथा च दण्डप्रयोज्या घटोत्पत्तिः पारिमाण्डल्यनिरूपितत्वाभाववतीति वाक्यार्थबोधः । विषयान्तरमाह–उक्तरीत्येति, उक्तरीत्या=नारायणस्य कर्मत्वप्राप्तिरीत्या नमस्कार्यस्य स्वयम्भुवः कर्मत्वेपि स्वापकर्षावधित्वमात्रविवक्षया 'स्वयम्भुवे नमस्कृत्य' इत्यत्र चतुर्थ्येव न द्वितीया तथा च स्वापकर्षावधित्वप्रकारकबोधविषयताश्रयत्वविवक्षायां नमस्कार्यवाचकपदाद् द्वितीया भवति यथा 'नारायणं नमस्कृत्य' इति, स्वापकर्षावधित्वमात्रविवक्षायां च चतुर्थी भवति यथा 'स्वयम्भुवे नमस्कृत्य' इति निष्पन्नम् ।

मतान्तरमाह–केचित्त्विति । स्पष्टो ग्रन्थः । पूर्वं नमआदिपदानां धर्मपरत्वमुक्तमऽनेन तु धर्मिपरत्वमुच्यते इति विशेषः । घटमिति–तथा च घटं स्वीयप्रत्यक्षविषयं करोतीत्यर्थः । न तु धर्मपरमिति–साक्षात्पदस्य धर्मपरत्वे स्वीयप्रत्यक्षविषयतारूपधर्मपरत्वं स्यात्तत्र च घटं स्वीयप्रत्यक्षविषयताश्रयं करोतीत्यर्थः स्यात् । ज्ञानगोचरार्थकमिति–तथा च दुःखं परकीयज्ञानगोचरं (विषयम्) करोतीत्यर्थः । अयमेवार्थः प्रादुष्करोतीत्यस्य ज्ञेयः । पूर्ववदिति–'नारायणं नमस्कृत्य' इत्यत्रेव धात्वर्थकर्मतया घटादिपदोत्तरं द्वितीयेत्यर्थः । नमआदिपदानां धर्मपरत्वे तदर्थधर्मस्य धात्वर्थतावच्छेदकत्वाभावात् तदाश्रयस्यापि नारायणादेः कर्मत्वं न स्याद् धर्मिपरत्वे तु तदर्थस्य धर्मिणाऽभेदान्वयो धर्मिणश्च कृतिविषयत्वेन कर्मत्वं तेन च द्वितीया संभवतीति भावः ।

तत्र- नमःपदस्य धर्मिबोधकत्वे ' हरिराविर्भवति ' इत्यादिवत् 'नमो भवति इतिप्रयोगप्रसङ्गात्, तस्मात् ' नमस्करोति ' ' आविष्करोति ' ' पुरस्करोति ' 'अलं करोति ' इत्यादौ नमःप्रभृतयो निपाता धर्मवाचका एव लाघवात्, तत्तद्धर्माश्रयस्य दर्शितरीत्यैव कर्मतोपपत्तेः । ' आविर्भवति ' इत्यादिप्रयोगानुरोधेन चाऽऽविरादिशब्दानां प्रकटताश्रये धर्मिणि लक्षणोपेयते ' शुक्लः पटः ' इत्यादौ शुक्लादिशब्दानामिव । अस्तु वा तत्रापि प्रकटतारूपो धर्म एव तदर्थस्तस्यैव धात्वर्थभावे धर्मरूपेऽभेदान्वयः, क्रियायां स्वार्थाभेदान्वये आविरादेरेवाकाङ्क्षा स्वीक्रियते न तु नमःपदादेरिति न 'नारायणो नमो भवति' इत्यादेः प्रसङ्गः ।

' शुक्ली करोति ' इत्यादौ च्विप्रत्ययान्तस्यापि शौक्ल्यादिधर्म एवार्थः- अभूततद्भावे तदनुशासनात् । अभूततद्भावश्च- अभूतस्य=पूर्वकालावच्छेदेन शुक्लादिभावरहितस्य तद्भावः=शौक्ल्यादिः । अथ वा 'अभूतः=पूर्वकालावच्छेदेन धर्मिण्यविद्यमानस्तद्भावः=शौक्ल्यादिः । ' शुक्ली भवति ' इत्यादौ तु दर्शिता गतिः ।

---

उक्तमतं पराचष्टे- तन्नेति, नमःपदस्य धर्मिवाचकत्वे नमःपदार्थस्य हरिपदार्थेन सामानाधिकरण्यप्राप्त्या 'हरिर्नमो भवति ' इत्यादिप्रयोगः स्यादेव न चैवं प्रयोगो भवतीत्युक्तधर्मवाचकत्वमेव युक्तं लाघवात् नाम धर्मिवाचकत्वे धर्मविशिष्टस्यैव धर्मित्वाद् धर्मिधर्मोभयवाचकत्वं स्याद् धर्मवाचकत्वे च धर्मिवाचकत्वं न प्राप्नोतीति लाघवमित्यर्थः । तत्तद्धर्माश्रयस्य=स्वापकर्षावधित्वप्रकारकबोधविषयतादिरूपधर्माश्रयस्य हर्यादेः । ननु यदि धर्मवाचकत्वमेव तदा ' हरिराविर्भवति ' इत्यादिः सामानाधिकरण्येन कथं प्रयोगः स्यादित्याशङ्क्याह- आविर्भवतीति । धर्मिणि=हर्यादौ । धर्मिणि लक्षणास्वीकारे दृष्टान्तमाह- शुक्ल इति । नमआदिपदानां धर्मिबोधकत्वं नास्ति आविरादिपदानां च धर्मिबोधकत्वमस्तीति वैषम्यमसहमानः पक्षान्तरमाह= अस्तु वेति । तत्र='हरिराविर्भवति ' इत्यादिस्थले तदर्थः=आविष्पदार्थः । तस्य=प्रकटतारूपधर्मस्य भूधात्वर्थे भावे=भवने भवनमपि हरेर्धर्म एवेति तत्राऽभेदान्वयस्तथा च प्रकटीभवनाश्रयो हरिरिति वाक्यार्थबोधः । नन्वेवं नमःपदार्थस्यापि धात्वर्थभवनेऽभेदान्वयः स्यादेव तथा च ' नारायणो नमो भवति ' इति प्रयोगोपि स्यादित्याशङ्क्याह- क्रियायामिति । तस्यैवेत्येवकारेण नमःपदार्थादेर्व्यवच्छेदः ।

च्विप्रत्ययान्तस्यापि धर्मवाचकत्वमेव न तु धर्मिवाचकत्वं येन तद्दृष्टान्तेन नमआदिपदानां धर्मिवाचकत्वं स्यादित्याह- शुक्लीति । अभूततद्भावे=पूर्वमविद्यमानधर्मे तदनुशासनात्=च्विप्रत्ययस्य विधानात् । भावपदेनात्र धर्म एव ग्राह्यः । अभूततद्भावपदार्थं प्रकारद्वयेनाह- अभूततद्भावश्चेति । ' घटो शुक्ली भवति' इत्यत्र तु च्विप्रत्ययान्तस्य धर्मिणि लक्षणोपेयते शुक्लतारूपधर्मपरत्वं वेत्याह- शुक्लीति । दर्शितेति- ' आविर्भवति ' इत्यत्र लक्षणाश्रयणेन धर्मपरत्वाश्रयणेन च या गतिर्दर्शिता सैव ' शुक्ली भवति ' इत्यत्रापि ज्ञेयेत्यर्थः ।

न चाऽभूततद्भावपर्यन्तस्य च्विप्रत्ययवाच्यत्वे गौरवाच्छुक्लादिपदोपस्थाप्यपदार्थतावच्छेदकशौक्ल्याद्यन्वय्यऽभूतत्वमेव च्विप्रत्ययार्थोऽस्तु. 'शुक्लतरः' इत्यादौ तरबाद्यर्थोत्कर्षस्येव च्व्यर्थस्यापि व्युत्पत्तिवैचित्र्येण पदार्थतावच्छेदकेऽन्वयसंभवादिति वाच्यम्, मन्मतेपि शौक्ल्यादिभावस्यैव च्विप्रत्ययार्थतोपगमेन गौरवानवकाशात्, पूर्वकालावच्छिन्नस्वनिष्ठाभावप्रतियोगित्वसहितस्याऽऽधेयत्वस्य प्रत्ययार्थे प्रकृत्यर्थसंबन्धतया भानोपगमात् शौक्ल्यादावऽभूतत्वलाभेनैव 'जलपरमाणुः शुक्ली भवति' इतिप्रयोगाऽप्रसङ्गात् । शौक्ल्यादेर्धर्मत्वेनैव वाच्यता न तु ताद्रूप्येणेति न शक्त्यानन्त्यम् । प्रकृत्यर्थतावच्छेदकतत्तद्धर्मनिष्ठाधेयताविशेषाणामेव संबन्धतया भानोपगमाद् धर्मान्तरस्याऽभूतत्वमादाय न 'जलपरमाणुः शुक्ली भवति' इत्यादिप्रसङ्गः ।

---

आशङ्कते— न चेति, अभूततद्भावस्य च्विप्रत्ययवाच्यत्वे शौक्ल्याऽभूतत्वयोरुभयोर्वाच्यत्वं वादिति गौरवम् । शौक्ल्यादि=शुक्लत्वादि । ननु शौक्ल्याद्यन्वयिनोऽभूतत्वमात्रस्य च्विप्रत्ययार्थत्वे "पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेन" इतिनियमात् पदार्थस्य च्विप्रत्ययार्थस्याभूतत्वस्य पदार्थैकदेशेन शुक्लत्वादिना कथमन्वयः स्यादित्याशङ्क्याह— शुक्लतर इति, यथा तरबर्थोत्कर्षस्य पदार्थैकदेशे एव शुक्लगुणेन्वयो भवति तथा च्विप्रत्ययार्थाभूतत्वस्यापि पदार्थैकदेशे शुक्लत्वेऽन्वयो न विरुद्ध इत्यर्थः । उत्तरमाह— मन्मतेपीति, अभूतत्वं न च्विप्रत्ययार्थः किं तु शौक्ल्यमेव तथा चैकपदार्थवाचकत्वान्न गौरवम् । अत्राभूतत्वलाभप्रकारमाह— पूर्वकालेति, 'घटं शुक्ली करोति' इत्यत्र पूर्वकाले स्वनिष्ठः=घटनिष्ठो योऽभावः शौक्ल्याभावस्तत्प्रतियोगित्वेन शौक्ल्यनिष्ठेन सहितं यद् द्वितीयार्थभूतमाधेयत्वं तदेव प्रत्ययार्थे=शौक्ल्ये प्रकृत्यर्थस्य=प्रकृत्यर्थस्य घटादेः संबन्धस्तथा च शौक्ल्यस्य पूर्वकालावच्छिन्नाऽभावप्रतियोगित्वप्राप्त्या अभूतत्वं प्राप्तमेवेति 'जलपरमाणुः शुक्ली भवति' इति प्रयोगापत्तिर्नास्ति— जलपरमाणुनिष्ठशौक्ल्यस्याऽनादित्वेनाऽभूतत्वाभावादित्यर्थः । शौक्ल्यादेरिति— शौक्ल्यनैल्यादीनां यदि ताद्रूप्येण=तद्रूपत्वेन शौक्ल्यनैल्यादिरूपत्वेन च्विप्रत्ययवाच्यत्वं स्यात्तदा शौक्ल्यनैल्यादीनामनन्तत्वाच्छक्त्यानन्त्यं स्यादिति शौक्ल्यनैल्यादीनां धर्मत्वेन रूपेणैव वाच्यतेति न शक्त्यानन्त्यमित्यर्थः । ननु जलपरमाणुगतशौक्ल्येऽभूतत्वाभावेपि जलपरमाणौ पूर्वमविद्यमानसंयोगादिगताभूतत्वमादाय 'जलपरमाणुः शुक्ली भवति' इतिप्रयोगः किं न स्यादित्याशङ्क्याह— प्रकृत्यर्थतावच्छेदकेति, प्रत्ययार्थे प्रकृत्यर्थस्य यदाधेयत्वं संबन्ध उक्तस्तदाधेयत्वं प्रकृत्यर्थतावच्छेदकीभूतशौक्ल्यादिनिष्ठमेव ग्राह्यं तच्चाधेयत्वं पूर्वोक्तदिशा पूर्वकालावच्छिन्नस्वनिष्ठाभावप्रतियोगित्वसमानाधिकरणमेव ग्राह्यं तथा च शौक्ल्ये घटनिरूपिताधेयत्वमप्यस्ति पूर्वकालावच्छिन्नो यो घटनिष्ठोऽऽभावस्तत्प्रतियोगित्वमप्यस्तीति 'घटः शुक्ली भवति' इत्यादिप्रयोगस्तूपपद्यते, शौक्ल्ये जलपरमाणुनिरूपिताधेयत्वस्य सत्त्वेपि पूर्वकालावच्छिन्नो यो जलपरमाणुनिष्ठोऽभावस्तत्प्रतियोगित्वं तु

प्रकृत्यर्थतावच्छेदकगतप्रागविद्यमानत्वस्य च्विप्रत्ययार्थत्वमते तु 'अशुक्ली भवति' इत्यादौ प्रकृत्यर्थतावच्छेदकशौक्ल्याद्यऽभावस्य प्रागपि क्वचिद् विद्यमानतया तदभावान्वये योग्यतानुपपत्तिः। तत्तद्धर्मिण्यऽविद्यमानत्वस्य च्व्यर्थत्वे शक्त्यानन्त्यमिति पूर्वकालावच्छिन्नोऽभाव एवाविद्यमानत्वं तस्य च प्रकृत्यर्थतावच्छेदके सामानाधिकरण्यसहितप्रतियोगित्वसंबन्धेनाऽन्वयो वाच्यः, प्रकृत्यर्थे च तादृशसंबन्धेनाभावविशिष्टस्य वैशिष्ट्यभानमुपेयम्, अन्यथाऽन्यत्र स्वाभावसमानाधिकरणस्याऽशौक्ल्यादेः सर्वदाऽशुक्ले काकादावपि सत्त्वेन 'काको ऽशुक्ली

---

नास्त्येवेति शौक्ल्ये उक्तप्रतियोगित्वसमानाधिकरणाधेयत्वस्य संबन्धभूतस्याऽभावात् प्रकृत्यर्थस्य शुक्लाभिन्नस्य जलपरमाणोरन्वयो न संभवतीत्युक्तधर्मान्तरगताऽभूतत्वमादाय 'जलपरमाणुः शुक्ली भवति' इतिप्रयोगापत्तिर्नास्त्येव, अभूतत्वं हि पूर्वकालावच्छिन्नाभावप्रतियोगित्वमेव शौक्ल्ये च जलपरमाणुनिष्ठाभावप्रतियोगित्वरूपमभूतत्वं नास्त्येव संयोगादिरूपधर्मान्तरगताभूतत्वं च नात्र ग्रहीतुं शक्यते तस्य शौक्ल्यनिष्ठाधेयत्वसमानाधिकरणत्वाभावात्, आधेयत्वोक्तप्रतियोगित्वयोः समानाधिकरणयोरेव ग्राह्यत्वेनात्र शौक्ल्यनिष्ठयोरेवोक्तप्रतियोगित्वरूपाभूतत्वाधेयत्वयोर्ग्राह्यत्वादित्यर्थः।

अभूतत्वस्य च्विप्रत्ययार्थत्वमते दोषमाह— प्रकृत्यर्थतेति, अभूतत्वमेव प्रागविद्यमानत्वम्। च्विप्रत्ययेन प्रागविद्यमानत्वबोधे ह्यऽविद्यमानत्वमभाव एवेत्यऽभावस्य=शौक्ल्याभावस्य प्रागविद्यमानत्वं प्राप्तं तथा च यत्र शौक्ल्याभावः प्रागेवास्ति तत्राऽशुक्लीपदघटकनञ्बोध्यस्य शौक्ल्याभावस्यान्वयो न संभवति तद्विशिष्टे तदन्वयाऽसंभवादिति तदभावान्वये=शौक्ल्याभावान्वयस्य योग्यतानुपपत्तिः— 'अशुक्ली भवति' इत्यनेन शौक्ल्याभावान्वयबोधस्यैवेष्टत्वादित्यर्थः। किं च तत्तद्धर्मिगताविद्यमानत्वस्य च्व्यर्थत्वे तत्तद्धर्मिनानात्वेन च्व्यर्थाविद्यमानत्वानामपि नानात्वापत्त्या च्विप्रत्ययशक्त्यानन्त्यं स्यादिति सामान्यतः पूर्वकालावच्छिन्नोऽभाव एवाऽविद्यमानत्वं च्व्यर्थ इति वक्तव्यं तस्य= एतादृशाविद्यमानत्वस्य च प्रकृत्यर्थतावच्छेदके=शौक्ल्यादौ सामानाधिकरण्यविशिष्टप्रतियोगित्वसंबन्धेनान्वयो वाच्यस्तथा हि प्रकृत्यर्थतावच्छेदके तादृशाविद्यमानत्वस्य प्रतियोगित्वमपि वर्तते तादृशाविद्यमानत्वमपि वर्तते इति स्वसामानाधिकरण्यसहितप्रतियोगित्वसंबन्धेनाविद्यमानत्वस्य प्रकृत्यर्थतावच्छेदकेऽन्वयो जात इति तादृशसंबन्धेन=स्वसामानाधिकरण्यसहितप्रतियोगित्वसंबन्धेनाऽभावविशिष्टस्य=अविद्यमानत्वविशिष्टस्य प्रकृत्यर्थतावच्छेदकस्य प्रकृत्यर्थे=शुक्लादिपदार्थे ( घटादौ ) वैशिष्ट्यम्=अन्वयः स्वीकार्यः, अन्यथा=एवं विशिष्टवैशिष्ट्यभावानभ्युपगमेऽन्यत्र=घटादौ कदाचिदऽशौक्ल्यमपि भवति कदाचिदऽशौक्ल्याभावोपि भवत्येवेति स्वाभावसमानाधिकरणस्याशौक्ल्यादेः सर्वदाऽशुक्ले काकादावपि सत्त्वेन 'काकोऽशुक्ली भवति' इतिप्रयोगः स्यादेव— उक्तसामानाधिकरण्यसहितप्रतियोगित्वसंबन्धेन स्वाभावविशिष्टस्य प्रकृत्यर्थतावच्छेदकस्य प्रकृत्यर्थेऽन्वयाऽस्वीकारात्, उक्तसामानाधि-

भवति ' इति प्रयोगः स्यात्, अत्राऽभावरूपपदार्थान्तरविशिष्टप्रकृत्यर्थताव-च्छेदकवैशिष्ट्यभानं च प्रकृत्यर्थे न संभवति– प्रकृत्या स्ववृत्तिसहकारेण स्वार्थे यादृशविशेषणावच्छिन्नः प्रकृत्यर्थतावच्छेदकीयसंबन्धो न प्रत्याय्यते पदान्तर-समभिव्याहाररूपाकाङ्क्षयापि पदार्थद्वयसंबन्धभानमात्रप्रयोजिकया प्रकृत्यर्थे प्रकृत्यर्थतावच्छेदकीयतादृशविशेषणावच्छिन्नसंबन्धाऽप्रत्यायनेन प्रकृत्यर्थता-वच्छेदकीयसंबन्धे च्विप्रत्ययार्थाभावविशिष्टप्रतियोगित्वरूपविशेषणस्य प्रकृति-वृत्त्याऽभासमानस्य भानासंभवादित्यनुपपत्तिः ।

---

रण्यसहितप्रतियोगित्वसंबन्धेन स्वाभावविशिष्टस्य प्रकृत्यर्थतावच्छेदकस्य प्रकृत्यर्थेऽन्वयस्वीकारे प्रकृत्यर्थे काके ह्यऽऽशौक्ल्याभावः कदापि न भवतीति अशौक्ल्याभावविशिष्टस्याऽशौक्ल्यस्य कृत्यर्थतावच्छेदकस्याप्यन्वये बाध एवेति ' काकोऽशुक्ली भवति ' इतिप्रयोगस्यापत्तिर्यद्यपि स्ति तथाप्यत्र=उक्तस्थलेऽभावरूपपदार्थान्तर( स्वाभाव )विशिष्टस्य प्रकृत्यर्थतावच्छेद-स्योक्तवैशिष्ट्यभानं प्रकृत्यर्थे न संभवतीत्यर्थः, अत्र हेतुमाह– प्रकृत्येति, प्रकृत्या=घटकाका-पदेन स्ववृत्तिसहकारेण=स्वनिष्ठवृत्तिसाहाय्येन स्वार्थे=घटकाकादिपदार्थे यादृशविशेषणाव-च्छिन्नो यथात्र सामानाधिकरण्यसहितप्रतियोगित्वविशेषणावच्छिन्नः प्रकृत्यर्थतावच्छेदकस्य संब-न्धो न प्रत्याय्यते तादृशविशेषणावच्छिन्नः प्रकृत्यर्थतावच्छेदकीयसंबन्ध आकाङ्क्षयापि न प्रत्याय्यते इत्युक्तस्थलेऽभावरूपपदार्थान्तरविशिष्टस्य प्रकृत्यर्थतावच्छेदकस्य प्रकृत्यर्थे वैशिष्ट्यभानं न संभवति तथा च ' काकोऽशुक्लीभवति ' इतिप्रयोगः प्राप्त एवेत्येषा प्रकृत्यर्थतावच्छेदकगतः प्रागविद्यमानत्वस्य च्विप्रत्ययार्थत्वमतेऽनुपपत्तिरित्यर्थः । आकाङ्क्षायाः स्वरूपमुक्तम्– पदान्तरेति, कार्यमुक्तम्– पदार्थद्वयेति, पदार्थद्वयसंबन्धभानप्रयोजिकयाऽऽकाङ्क्षयापि पदार्थ-द्वयस्य तादृशः संबन्धो न प्रत्याय्यते यादृशः प्रकृत्या न प्रतिपाद्यते ' शुक्ली भवति ' इत्यत्र च प्रकृतिप्रतिपाद्यः संबन्धः समवायः ' अशुक्ली भवति ' इत्यत्र च शौक्ल्याभावस्य प्रकृतिप्रतिपाद्य-संबन्धो विशेषणता न तूक्तसामानाधिकरण्यसहितप्रतियोगित्वसंबन्ध इति ध्येयम् । अत्र ' शुक्ली भवति ' इत्यत्र तु प्रकृत्यर्थतावच्छेदकगतप्रागविद्यमानत्वस्यापि च्व्यर्थतामते दोषो नास्ति यतः– तत्र प्रकृत्यर्थतावच्छेदकं शौक्ल्यमस्ति तस्य च्विप्रत्ययेन प्रागविद्यमानत्वे प्राप्ते शौक्ल्याभावस्य प्रागविद्यमानत्वं प्राप्तं यत्र च शौक्ल्याभावः प्रागस्ति घटादौ तत्र शौक्ल्यस्यान्वयः कार्यो न तु शौक्ल्याभावस्य येन दोषः स्यात् शौक्ल्याभावविशिष्टे च घटादौ शौक्ल्योत्पत्तौ विरोधाभावेन शौक्ल्यान्वये विरोधाभावाद् योग्यतानुपपत्तिर्नास्तीति ' शुक्ली भवति ' इतिप्रयोगं त्यक्त्वा ' अशुक्ली भवति ' इत्यत्र दोषः प्रदर्शितः ।

अस्मन्मते तु- भवत्यर्थे भावे च्विप्रत्ययान्तार्थस्याधेयतासंबन्धेन पूर्वकालावच्छिन्नस्वाभावाधिकरणविशिष्टस्याऽशौक्ल्यादेः सामानाधिकरण्यसंबन्धेनैवान्वयस्योपगन्तव्यतया तेन संबन्धेन चाधिकरणविशिष्टाऽशौक्ल्यादिना विशिष्टस्य भवत्यर्थस्यैवाख्यातार्थे आश्रयत्वे निरूपितत्वसंबन्धेनैव भानात्, तादृशविशिष्टनिरूपिताश्रयत्वस्य च पूर्वकालावच्छेदेनाऽशौक्ल्याद्यभावाधिकरणे एव सत्त्वेन नोक्तातिप्रसङ्गः । अन्यत्स्वयमूहनीयम् ।

'स्वस्ति भवते' इत्यादावाशीः स्वस्त्यर्थः सा च परहितविषयकस्वेच्छा,

---

स्वमतेऽनुपपत्त्यभावमाह—अस्मन्मत इति, अस्मन्मते तु यथा 'शुक्ली भवति' इत्यत्र शौक्ल्यं च्विप्रत्ययार्थस्तथा 'अशुक्ली भवति' इत्यत्राऽशौक्ल्यमेव च्विप्रत्ययार्थो न त्वभूततत्त्वरूपं प्रागविद्यमानत्वं तथा च यत्र पूर्वमऽशौक्ल्याभावो भवति तत्रैवाऽशौक्ल्यमुत्पद्यते किं चाऽशौक्ल्याधिकरणस्य धर्मिणोऽशौक्ल्ये आधेयतासंबन्धेनान्वयः किं च 'अशुक्ली भवति' इत्यत्र यत्रैव धर्मिणि घटादौ भवत्यर्थो भावः=भवनानुकूलव्यापारो वर्तते तत्रैवाशौक्ल्यमपि वर्तते इति भवत्यर्थभावस्याऽशौक्ल्यस्य च सामानाधिकरण्यं जातम् एतेन पूर्वकालावच्छिन्नस्य स्वाभावस्य (अशौक्ल्याभावस्य) यदधिकरणं घटादि तस्याधेयतासंबन्धेन च्विप्रत्ययान्तार्थे अशौक्ल्ये वैशिष्ट्यं प्राप्तं ततश्चाधेयतासंबन्धेन पूर्वकालावच्छिन्नस्वाभावाधिकरणविशिष्टस्याऽशौक्ल्यस्य सामानाधिकरण्यसंबन्धेन भवत्यर्थभावेऽन्वयः स्वीक्रियते तथा च सामानाधिकरण्यसंबन्धेनाऽधिकरणविशिष्ट=पूर्वकालावच्छिन्नस्वाभावाधिकरणविशिष्टं यदऽशौक्ल्यं तेन विशिष्टस्य भवत्यर्थस्य निरूपितत्वसंबन्धेनाऽऽख्यातार्थे आश्रयत्वेऽन्वयः स्वीक्रियते—आश्रयत्वस्य भवत्यर्थनिरूपितत्वात्, तादृशविशिष्ट=अशौक्ल्यविशिष्टो यो भवत्यर्थभावस्तन्निरूपितस्याश्रयत्वस्य च पूर्वकालावच्छेदेनाऽशौक्ल्याभावो यत्र भवति शुक्लघटादौ तादृशाधिकरणे एव सत्त्वेन 'घटोऽशुक्ली भवति' इति प्रयोगस्तूपपद्यते काकादौ च सदाऽशौक्ल्यस्यैव सत्त्वेन पूर्वकालावच्छेदेनाऽशौक्ल्याभावस्याऽसत्त्वान्न तत्रोक्ताश्रयत्वं संभवतीत्युक्तातिप्रसङ्गः='काकोऽशुक्ली भवति' इत्युक्तप्रयोगापत्तिर्नास्तीत्यर्थः । प्रकृत्यर्थतावच्छेदकगताविद्यमानत्वस्य च्विप्रत्ययार्थत्वमते त्वस्मदुक्तरीत्या पदार्थानां विशिष्टवैशिष्ट्यभावासंभवाद् भवत्यर्थनिरूपिताश्रयत्वस्याऽशौक्ल्याभावस्य च वैयधिकरण्यसत्त्वेपि 'अशुक्ली भवति' इतिप्रयोगस्य संभवात् 'काकोऽशुक्ली भवति' इतिप्रयोगः स्यादेव तद्वारणाय "तस्य च प्रकृत्यर्थतावच्छेदके" इत्याद्युक्तरीत्या पदार्थानां विशिष्टवैशिष्ट्यभावः स्वीकार्यः स तु "अत्राभावरूपपदार्थान्तर" इत्याद्युक्तरीत्या न संभवतीत्यलमधिकेन । अन्यत्स्वयमेवोहनीयम् ।

प्रयोगान्तरमुदाहरति—स्वस्तीति । आशिष्पदार्थमाह—सेति । हितनिरूपकत्वं भवत्पदार्थेस्तीति निरूपितत्वं हिते वर्तते तदेव संबन्धश्चतुर्थ्यर्थ इत्यर्थः । वाक्यार्थबोधस्वरूपमाह—एवं चेति ।

स्वम्=उच्चारयिता । हितान्वयी संबन्धश्चतुर्थ्यर्थः, एवं च ' भवदीयहितविषयिणी मदीयेच्छा ' इति बोधः । कल्याणाद्यर्थकोपि स्वस्तिशब्दः ' स्वस्त्यस्तु मह्यम् ' इत्यादौ. तत्रापि चतुर्थ्यर्थः स्वस्त्यर्थान्वयी संबन्ध इत्यलं पल्लवितेन ॥

॥ इति चतुर्थ्यर्थनिरूपणं समाप्तम् ॥

---

भवदीयहितविषयिणी=भवन्निरूपितहितविषयिणी । कल्याणार्थकस्वस्तिशब्दमुदाहरति— कल्येति । ' स्वस्त्यस्तु मह्यम् ' इत्यत्राशीर्न संभवति आशिष्पदार्थे परकीयत्वनिवेशात् स्वस्य च स्वापेक्षया परत्वाभावादित्यर्थः । अत्रापि कल्याणात्मकस्वस्त्यर्थान्वयि निरूपितत्वमेव चतुर्थ्यर्थश्च संबन्धभूतमेव तादृशचतुर्थ्यर्थनिरूपितत्वेन संबन्धेन प्रकृत्यर्थस्य स्वस्त्यर्थेन्वयात्, ' भवन्निरूपितहितविषयिणी मदीयेच्छा ' इति शाब्दबोधः । वस्तुतस्तु परत्वनिवेशं विना हितविषयकस्वेच्छा स्वस्तिपदार्थो वक्तव्यस्तेन चोक्तोभयत्रैकगत्यैव समन्वयः संभवति ॥

॥ इति व्युत्पत्तिवादादर्शे चतुर्थीकारकम् ॥

---

# अथ पञ्चमी

'वृक्षात् पर्णं पतति' इत्यादौ पञ्चम्याः प्रकृत्यर्थस्य वृक्षादेः पतनादिक्रियाऽपादानत्वं प्रत्याय्यते। अपादानत्वं च स्वनिष्ठभेदप्रतियोगितावच्छेदकीभूतक्रियाजन्यविभागाश्रयत्वम्। पर्णादेः स्वनिष्ठवृक्षादिविभागजनकस्वपतनाद्यऽपादानत्ववारणाय भूतान्तं क्रियाविशेषणम्। भेदप्रतियोगितावच्छेदकत्वे विभागे च पञ्चम्याः शक्तिद्वयम्। भेदे विभागे च वृक्षादेः प्रकृत्यर्थस्याधेयतासंबन्धेनान्वयः। प्रतियोगितावच्छेदकत्वमाश्रयत्वसंबन्धेन विभागश्च जनकतासंबन्धेन क्रियायामन्वेति।

जनकतासंबन्धस्य प्रतियोगितानवच्छेदकतया नञा तत्संबन्धावच्छिन्नविभागाभावः क्रियायां बोधयितुं न शक्यते इतिचेत् ?, तर्हि विभागजनकत्वमेव पञ्चम्यर्थोऽस्तु। प्रतियोगितावच्छेदकत्वस्येव तस्याप्याश्रयतासंबन्धेन क्रियाया-

---

क्रमप्राप्तं पञ्चम्यर्थनिरूपणमारभते— वृक्षादिति। स्पष्टार्थोऽयं ग्रन्थः। अपादानत्वस्वरूपमाह— अपादानत्वमिति। स्वं वृक्षः। भेदपदेनात्र विभागजनकीभूता या पतनादिक्रिया तादृशक्रियावान्नेत्याकारको ग्राह्यः स च भेदो वृक्ष एव संभवति न तु पर्णे— पर्णे विभागजनकीभूतपतनक्रियाया एव सत्त्वात् तथा च वृक्षनिष्ठो य उक्तभेदस्तत्प्रतियोगि पर्णं तत्र पर्णे प्रतियोगितापि वर्तते पतनक्रियापि वर्तते इति उक्तभेदप्रतियोगितावच्छेदकत्वं क्रियायां प्राप्तं भेदप्रतियोगितावच्छेदकीभूतक्रियाजन्यविभागो वृक्षे वर्तते इति वृक्षस्य स्वनिष्ठभेदप्रतियोगितावच्छेदकीभूतक्रियाजन्यविभागाश्रयत्वं प्राप्तं तदेवाऽपादानत्वमित्यर्थः। क्रियायां भूतान्तविशेषणस्य फलमाह— पर्णादेरिति, 'क्रियाजन्यविभागाश्रयत्वमऽपादानत्वम्' इत्युक्ते पर्णस्याप्यत्राऽपादानत्वं स्यात्—पर्णनिष्ठपतनक्रियाजन्यविभागाश्रयत्वात्, भूतान्तविशेषणे सति तु 'क्रियावान्न' इत्याकारको भेदः पर्णे न संभवति पर्णस्य क्रियावत्त्वादेव, पर्णनिष्ठक्रियायाश्च पर्णनिष्ठभेदनिरूपितप्रतियोगिताया अवच्छेदकत्वं न संभवतीति भेदेन वृक्षनिष्ठ एव भेदो ग्राह्यस्तथा च लक्षणघटकस्वपदस्य वृक्षबोधकत्वाद् वृक्षस्यैवाऽपादानत्वं प्राप्तं न पर्णस्य लक्षणघटकस्वपदबोध्यत्वे सति तादृशविभागाश्रयस्यैवाऽपादानत्वेनेष्टत्वादिति भावः। पञ्चम्यर्थमाह— भेदेति। भेदो विभागश्च वृक्षे वर्तते इति वृक्षस्य तयोराधेयता संबन्ध इत्याह— भेद इति। पतनक्रियायां भेदप्रतियोगितावच्छेदकत्वं विभागजनकत्वं चास्तीत्यभिप्रायेणाह— प्रतियोगितेति। वृक्षनिष्ठविभागानुकूलक्रियावत् पर्णमिति शाब्दबोधः।

विभागस्य क्रियायां जनकतासंबन्धेनान्वये शङ्कते— जनकतेति। उत्तरमाह— तर्हीति। तस्य=विभागजनकत्वस्य। उक्तस्थलीयबोधस्वरूपमाह— एवमिति। तन्निष्ठ=वृक्षनिष्ठ। तथा च वृक्षनिष्ठभेदस्य प्रतियोगितावच्छेदकं वृक्षनिष्ठविभागस्य जनकं च यत्पतनं तदाश्रयः पर्णमित्यर्थः।

मन्वयः, एवं च वृक्षनिष्ठभेदप्रतियोगितावच्छेदकतन्निष्ठविभागजनकपतनाश्रयः पर्णमित्याद्याकारक उक्तस्थले बोधः ।

अथ पञ्चमीसमभिव्याहृतनञोक्तयोः पञ्चम्यर्थयोर्द्वयोरेवाऽभावद्वयं बोध्यते यथायोगमेकतरस्य वा ? नाद्यः पक्षः— 'पर्णं वृक्षात्पतति न स्वस्मात्' इत्यत्र स्वनिष्ठपतने स्वनिष्ठभेदप्रतियोगितावच्छेदकत्वाभावसत्त्वेपि स्वनिष्ठविभागजनकत्वाभावाऽसत्त्वेन. 'वृक्षात्पतति न भूतलात्' इत्यत्र च पतने भूतलादिनिष्ठविभागादिजनकत्वाभावसत्त्वेपि तन्निष्ठभेदप्रतियोगितावच्छेदकत्वाभावासत्त्वेनाऽयोग्यतापत्तेः । नापि द्वितीयः— 'वृक्षात् पत्रं पतति न पत्रात्' इत्यत्र पत्रनिष्ठपतने पत्रनिष्ठविभागाजनकत्वस्यैव पत्रान्तरनिष्ठभेदप्रतियोगितावच्छेदकतया पत्रनिष्ठभेदप्रतियोगितानवच्छेदकत्वस्यापि बाधाद् योग्यताया निर्वाहयितुमशक्यत्वादिति ।

---

शङ्कते— अथेति । पञ्चमीसमभिव्याहृतनञा='पर्णं वृक्षात् पतति न स्वस्मात्' इत्यादौ । उक्तयोः=भेदप्रतियोगितावच्छेदकत्वविभागजनकत्वयोः । आद्यपक्षासंभवमाह— नाद्य इति, 'पर्णं वृक्षात् पतति न स्वस्मात्' इत्यत्राद्यपक्षस्वीकारे नञा स्वनिष्ठभेदप्रतियोगितावच्छेदकत्वाभावः स्वनिष्ठविभागजनकत्वाभावश्च बोधनीयः( स्वं पर्णम् )तन्न संभवति पर्णनिष्ठपतने पर्णनिष्ठभेदप्रतियोगितावच्छेदकत्वाभावो यद्यप्यस्ति पर्णनिष्ठभेदानुयोगितावच्छेदकत्वस्यैव संभवात् तथापि पर्णनिष्ठविभागजनकत्वाभावो नास्त्येव पर्णनिष्ठपतने पर्णनिष्ठविभागजनकत्वस्यैव सत्त्वाद् असतश्च बोधनासंभवादित्राऽभावद्वयबोधनयोग्यताया अभावः प्राप्तस्तथा 'पर्णं वृक्षात् पतति न भूतलात्' इत्यत्र यद्यपि पर्णनिष्ठपतने भूतलनिष्ठविभागजनकत्वाभावोस्ति तथापि भूतलनिष्ठभेदप्रतियोगितावच्छेदकत्वाभावो नास्त्येव—भूतलनिष्ठो यः पर्णभेदस्तत्प्रतियोगितावच्छेदकत्वस्यैव सत्त्वादित्यभावद्वयबोधनयोग्यता नास्तीति नाद्यः पक्षः संभवतीत्यर्थः। द्वितीयपक्षासंभवमाह— नापीति, 'वृक्षात् पत्रं पतति न पत्रात्' इत्यत्र पञ्चम्यन्तपत्रपदार्थः प्रथमान्तार्थःपतमानपत्रपदार्थ एव ग्राह्य इति 'वृक्षात् पत्रं पतति न स्वस्मात्' इत्यर्थस्तत्र पतनक्रियया जायमानो विभागो यथा वृक्षेस्ति तथा पतमानपत्रेप्यस्त्येवेति पतनक्रियायां पत्रनिष्ठविभागजनकत्वं प्राप्तमिति पत्रनिष्ठविभागाऽजनकत्वस्य बाधोस्ति विभागाजनकत्वं च विभागजनकत्वाभाव एव तस्य बाधे प्राप्ते पञ्चम्यर्थस्य पत्रनिष्ठविभागजनकत्वस्य पत्रनिष्ठपतनेऽभावो नास्तीति प्राप्तं तथा पत्रनिष्ठपतने पत्रान्तरनिष्ठो यः क्रियावान्नेतिभेदस्तत्प्रतियोगितावच्छेदकत्वमस्ति पत्रपदस्य च पत्रत्वावच्छिन्नं वाच्यमिति पत्रनिष्ठभेदप्रतियोगितानवच्छेदकत्वस्य बाधे प्राप्ते पञ्चम्यर्थस्य भेदप्रतियोगितावच्छेदकत्वस्याप्यभावो नास्तीति प्राप्तं तथा चैकतरस्यापि पञ्चम्यर्थस्यात्राभावो नास्ति येन नञा तद्बोधनमुपपद्येतेत्यर्थः । योग्यता हि शाब्दबोधे कारणं बाधाभावश्च योग्यता अत्र च पत्रनिष्ठविभागाजनकत्वस्य=पत्रनिष्ठविभागजनकत्वाभावस्य पत्रनिष्ठभेदप्रतियोगितानवच्छेदकत्वस्य=पत्रनिष्ठभेदप्रतियोगिताव-

अत्राहुः—विभागो जनकत्वं च पञ्चम्यर्थः, विभागे प्रकृत्यर्थस्याऽवधिकत्वं संबन्धस्तेन संबन्धेन प्रकृत्यर्थविशिष्टस्य विभागस्य निरूपितत्वविशेषसंबन्धेन जनकत्वेऽन्वयः, जनकत्वं च फलोपधानरूपम्, विशिष्टनिरूपिततादृशजनकत्वस्य क्रियायाम्, नञ्समभिव्याहारस्थले च क्रियान्वयिन्यऽभावे प्रतियोगित्वेनान्वयः। वृक्षपत्रादिविभागजनकं पत्रादिकर्म च न पत्राद्यवधिकत्वविशिष्टविभागोपधायकम्— पत्रादेः स्वावधिकत्वविशिष्टविभागानधिकरणत्वेन तत्कर्मणि विशिष्टविभागसामानाधिकरण्याभावात्, फलोपधायकत्वस्य सामानाधिकरण्यगर्भत्वान्नोक्ताऽनुपपत्तिः।

'वृक्षाद्विभजते' इत्यादावपि वृक्षावधिकत्वं विभागे प्रतीयते— तत्राऽपादा-

---

च्छेदकत्वाभावस्य च नञर्थस्य बाधाद् योग्यतैव नास्तीति कथं नञा पञ्चम्यर्थस्याभावबोधनं स्यादित्यर्थः। अत्र च "पत्रनिष्ठविभागजनकत्वस्येव" इति पाठस्तु प्रामादिक एव प्रतिभाति विभागजनकत्वस्य बाधे प्राप्ते विभागजनकत्वरूपपञ्चम्यर्थस्यात्राभाव एव प्राप्नुयादित्यनुपपत्तिप्रदर्शनं नोपपद्येतेति विवेचनीयम्। पूर्वत्र 'न स्वस्मात्' अत्र च 'न पत्रात्' इति कथनादुदाहरणयोर्भेदः।

अथेत्यादिना शङ्कितं समाधत्ते—अत्रेत्यादिना, प्रकृत्यर्थस्य=वृक्षस्य। फलोपधानरूपम्=फलोपधायकं विभागसंपादकं जनकत्वं ग्राह्यं न तु स्वरूपयोग्यतारूपमित्यर्थः। विशिष्टनिरूपिततादृशजनकत्वस्य=प्रकृत्यर्थवृक्षविशिष्टविभागनिरूपितफलोपधायकजनकत्वस्य पतनादिक्रियायामन्वयः। नञ्समभिव्याहारस्थलीयान्वयविशेषमाह— नञिति, क्रियान्वयिन्यऽभावे (विभागजनकत्वाभावे) प्रतियोगित्वरूपेणोक्तजनकत्वस्यान्वयः—क्रियायां विभागजनकत्वाभावबोधोदयात्। वृक्षपत्रयोर्विभागस्य जनकेन पतनादिकर्मणा पत्रनिष्ठेन हि न पत्रावधिकविभागो जन्यते पत्रे पत्रावधिकविभागाधिकरणत्वासंभवेन तत्कर्मणि=पत्रनिष्ठक्रियायां पत्रावधिकविभागसामानाधिकरण्याभावात्, फलोपधायकत्वं च जन्यसामानाधिकरण्यगर्भमेव यत्र जनकं तत्रैव जन्यमिति सामानाधिकरण्यं तथा च नोक्तानुपपत्तिः='वृक्षात् पत्रं पतति न पत्रात्' इत्यत्र पत्रावधिकविभागोत्पत्तेरभावान्नञा पञ्चम्यर्थभूतयोः पत्रावधिकविभागस्य जनकत्वस्य चाभावः प्रत्याय्यते 'पर्णं वृक्षात् पतति न स्वस्मात्' 'वृक्षात् पतति न भूतलात्' इत्यादावपि पर्णकर्मणा वृक्षावधिकविभागस्यैव जन्यत्वात् पर्णाद्यवधिकविभागस्याऽजन्यत्वाच्च नञा पर्णाद्यवधिकविभागनिरूपितजनकत्वस्याभावः क्रियायां बोध्यते इति न योग्यतानुपपत्तिरित्यर्थः। योग्यतानुपपत्तिर्हि भेदप्रतियोगितावच्छेदकत्वस्य पञ्चम्यर्थत्वस्वीकारे एवासीत् तत्पक्षस्येदानीं त्यक्तत्वात् विभागजनकत्वयोरेव पञ्चम्यर्थत्वस्वीकारादिति भावः। अत्र "अवधिकत्वम्" इत्यत्र 'स्वावधिकत्वम्' इत्येवं पाठो युक्तः।

प्रयोगान्तरमुदाहरति—वृक्षादिति। वृक्षावधिकविभागप्रतीतौ हेतुमाह—तत्रेति। तथा च वृक्षावधिकविभागनिरूपिताश्रयतावान् पक्षीत्येवं विभागानुकूलव्यापारवति पक्ष्यादौ वृक्षावधिक-

नताया अवधितारूपत्वाद्, वृक्षाद्यवधिकत्वविशिष्टविभागनिरूपितमेवाश्रयत्वमाख्यातेन बोध्यतेऽतः 'वृक्षः स्वस्माद्विभजते' इति न प्रयोगः । यथा हि स्वप्रतियोगिकत्वविशिष्टसंयोगः स्वस्मिन्न वर्तते तथा स्वावधिकस्य विभागस्य स्ववृत्तित्वेपि स्वस्य न विशिष्टविभागाधिकरणत्वमित्यऽविवादमेव । अवधित्वादिकं च स्वरूपसंबन्धविशेषः ।

यद्वा विभागोऽधिकरणता प्रयोजकत्वं च 'वृक्षात् पतति' इत्यादौ पञ्चम्यर्थः, विभागे स्वावधिकत्वसंबन्धेन प्रकृत्यर्थान्वयः तद्विशिष्टविभागस्य निरूपितत्वविशेषसंबन्धेनाधिकरणतायामन्वयः, पत्रादिकर्मणि च न तदवधिकत्वविशिष्टविभागनिरूपितान्यमात्रनिष्ठाधिकरणताप्रयोजकत्वम्— कारणस्यापि स्वाश्रयनिष्ठकार्याधिकरणतामात्रप्रयोजकत्वादिति सामञ्जस्यम् ।

---

विभागनिरूपिताश्रयत्वमाख्यातेन बोध्यते । विभागे वृक्षावधिकत्ववैशिष्ट्यस्य फलमाह—अत इति, स्वावधिकविभागः स्वस्मिन्न संभवति किं तु परावधिक एवेति वृक्षे वृक्षावधिकविभागासंभवात् 'वृक्षः स्वस्माद्विभजते' इतिप्रयोगापत्तिर्नास्तीत्यर्थः । अत्र विनिगमकमाह—यथेति, यथा स्वप्रतियोगिकत्वविशिष्टः संयोगः स्वस्मिन्न वर्तते तथा स्वावधिकत्वविशिष्टविभागोपि स्वस्मिन्न वर्तते इत्यर्थः । स्वावधिकविभागस्य स्ववृत्तित्वे स्वस्य कथं विशिष्ट=स्वावधिकत्वविशिष्टविभागाधिकरणत्वं नेति चेत्? स्ववृत्तिविभागे स्वावधिकेपि स्वावधिकत्ववैशिष्ट्यं न स्वीक्रियते किं तु स्वावधिकत्वोपलक्षितत्वमेव स्वीक्रियते इति भावः । अपादानताभूतावधित्वस्य स्वरूपमाह—अवधित्वादिकमिति ।

'वृक्षात् पतति' इत्यत्र पक्षान्तरमाह— यद्वेति । विभागोऽधिकरणता प्रयोजकत्वं चेति त्रयं पृथक् पृथगेव पञ्चम्यर्थः । प्रकृत्यर्थस्य=वृक्षस्य । तद्विशिष्टविभागस्य=वृक्षविशिष्टविभागस्य । अधिकरणतायाश्च निरूपितत्वसंबन्धेन प्रयोजकत्वेऽन्वयः । प्रयोजकत्वस्याश्रयत्वसंबन्धेन पत्रादिनिष्ठपतनादिक्रियायामन्वय इति पदार्थनिर्देशः । पत्रकर्मणि च तदवधिकत्व=वृक्षावधिकत्वविशिष्टविभागनिरूपिताधिकरणताया वृक्षनिष्ठाया एव प्रयोजकत्वमस्ति न तु वृक्षान्यमात्रनिष्ठाया अपीति 'पत्रं वृक्षात् पतति न भूतलात्' इत्यादौ वृक्षावधिकत्वविशिष्टविभागनिरूपिताधिकरणतायाः पत्रक्रियया भूतलादावापत्तिर्नास्त्येवेति नञा वृक्षावधिकत्वविशिष्टविभागनिरूपितभूतलनिष्ठाधिकरणताप्रयोजकत्वस्य पञ्चम्यर्थस्याभावः पत्रपतने बोध्यते इत्येवंरीत्यापि नोक्तयोग्यतानुपपत्तिरित्यर्थः । उक्ते विनिगमनामाह—कारणस्येति । स्वाश्रयनिष्ठं यत्कार्यं तदधिकरणतामात्रप्रयोजकत्वादित्यर्थस्तथा च पत्रकर्माश्रयः पत्रं तन्निष्ठो यः पत्रकर्मकार्यभूतो विभागस्तादृशविभागाधिकरणताप्रयोजकत्वं पत्रपतने प्राप्तं तादृशविभागश्च वृक्षपत्रयोरेव न भूतलादाविति भूतलनिष्ठायास्तादृशविभागनिरूपिताधिकरणतायाः प्रयोजकत्वस्याभावान्वयः पतने नञा संभवत्येवेति न कोपि दोषः ।

अथ 'वृक्षात् पताते' 'वृक्षाद्विभजते' इतिवत् 'वृक्षात् त्यजति' इत्यादिः कथं न प्रयोगः– पञ्चम्यर्थस्य विभागजनकत्वस्य विभागावच्छिन्नक्रियारूपत्यागेऽवधिमत्त्वरूपपञ्चम्यर्थस्य च विभागरूपधात्वर्थतावच्छेदकफलेऽन्वये बाधकाभावात्। न च विभागावच्छिन्नक्रियायां विभागान्वयोऽव्युत्पन्नः–उद्देश्यतावच्छेदकविधेययोरैक्यादिति वाच्यम्, जनकतासंबन्धेन विभागावच्छिन्ने प्रकृत्यर्थविशेषितविभागजनकत्वान्वये व्युत्पत्तिविरोधविरहात्। न च पञ्चम्यर्थविभागजनकत्वाऽवधिमत्त्वयोरन्वयबोधे धातुविशेषाधीनव्यापारविभागोपस्थितेर्हेतुत्वोपगमात्तदभावेन त्यजधातूपस्थिततत्तदर्थे न पञ्चम्यर्थान्वय इति वाच्यम्, त्यजिपत्योस्त्यजिविभज्योश्च पर्यायताभ्रमदशायां त्यजत्यर्थव्यापारविभागयोः पञ्चम्यर्थान्वयात् त्यजधातुजन्यतत्तदर्थोपस्थितेरपि पञ्चम्यर्थान्वयहेतुताया अवश्यं वाच्यत्वात्। न च पञ्चम्यर्थविभागजनकत्वान्वयबोधे धातुजन्यविभागरूपफलानवच्छिन्नव्यापारोपस्थितिस्तादृशावधिमत्त्वान्वयबोधे च धातुजन्यविभागमुख्यविशेष्यकोपस्थितिर्हेतुरिति त्यजधातुजन्यविभागावच्छिन्नव्यापारोपस्थितिविषयव्यापारविभाग-

---

ननु त्यजधातोरपि विभागावच्छिन्नक्रियाबोधकत्वात् तदर्थक्रियायां पञ्चम्यर्थस्य विभागजनकत्वस्य विभागे च पञ्चम्यर्थभूतावधिमत्त्वस्याऽन्वयसंभवात् 'वृक्षात् त्यजति' इति प्रयोगः कथं न स्यादित्याशङ्कते–अथेति। उक्तरीत्याऽपादानताया अवधितारूपत्वेऽवधिमत्त्वस्य पञ्चम्यर्थत्वं प्राप्तमिति विज्ञेयम्। शङ्कते–न चेति, विभागावच्छिन्नक्रियायां विभागान्वये विभागावच्छिन्नक्रियाया उद्देश्यत्वादुद्देश्यतावच्छेदकत्वमपि विभागस्यैव प्राप्तं विधेयत्वमपि विभागस्यैव प्राप्तमिति ज्ञेयम्। परिहारमाह–जनकतेति, विभागावच्छिन्ने=कर्मणि विभागस्योद्देश्यतावच्छेदकत्वेपि विधेयत्वं विभागस्य नास्ति किं तु वृक्षविशिष्टविभागजनकत्वस्येति नोक्तव्युत्पत्तिविरोध इत्यर्थः। ननु पञ्चम्यर्थभूतविभागजनकत्वावधिमत्त्वयोर्विभजत्यादिधातुविशेषोपस्थितयोरेव व्यापारविभागयोरन्वयो भवति न तु त्यजधातूपस्थितयोरपि व्यापारविभागयोरिति 'वृक्षात् त्यजति' इत्यत्र तदभावेन=व्यापारविभागयोर्विभजत्यादिधातुविशेषजन्योपस्थित्यभावेन त्यजधातूपस्थितव्यापारविभागयोः पञ्चम्यर्थभूतविभागजनकत्वावधिमत्त्वयोरन्वयो न संभवतीत्याशङ्क्याह– न चेति। उत्तरमाह– त्यजिपत्योरित्यादिना, त्यजधातोर्विपूर्वकभजधातोश्च पर्यायताभ्रमदशायां त्यजधातूपस्थितयोरपि व्यापारविभागयोः पञ्चम्यर्थभूतविभागजनकत्वावधिमत्त्वयोर्यथाक्रममन्वयस्येष्टत्वाद् अन्यत्रापि त्यजधातुजन्यव्यापारविभागयोरुपस्थितेः पञ्चम्यर्थान्वयहेतुत्वं प्राप्तमिति तादृशान्वयसंभवात् 'वृक्षात् त्यजति' इति प्रयोगः स्यादेवेति प्राप्तं न चैतदिष्टमित्यर्थः। ननु विभागानवच्छिन्नव्यापारे एव विभागजनकत्वस्यान्वय इष्टस्तथा मुख्यविशेष्यतयोपस्थितविभागे एवावधिमत्त्वस्यान्वय इष्टः, त्यजधातुना च विभागावच्छिन्नस्यैव व्यापारस्योपस्थितिर्भवतीति न तत्र विभागजनकत्वान्वयापत्तिः, विभागस्य

योः पञ्चम्यर्थविभागजनकत्वावधिमत्त्वान्वयाऽसंभव इति वाच्यम्, फलव्यापारयोः पृथग् धात्वर्थतामते त्यजधातोरपि प्राधान्येन विभागस्य तदनवच्छिन्नस्पन्दस्य चोपस्थित्या तदुपस्थितिविषयतादृशार्थयोरपि तत्तत्पञ्चम्यर्थान्वयसंभवादिति चेत् ?,

न— फलावच्छिन्नव्यापारस्य धात्वर्थतामते उक्तरीत्यैव सामञ्जस्यात्, तयोः पृथग् धात्वर्थतामते च फलविषयकव्यापारविषयकबोधं जनयतु धातुपदमित्येतादृशेच्छारूपा फलव्यापारयोरेकैव शक्तिः पुष्पवन्तादिपदवद् न तु फलविषयकं व्यापारविषयकं च बोधं जनयत्विति समूहालम्बनात्मकबोधनिष्ठा तत्तद्विषयकत्वावच्छिन्नविभिन्नविषयताशालिसंकेतरूपा. तथा सति नानार्थत्वाविशेषेण कदाचित् फलव्यापारयोरेकैकपरित्यागेनाप्येकैकस्य बोधप्रसङ्गात्. तथा च विभागे पञ्चम्यर्थाऽवधिमत्त्वान्वयबोधे संकेतीयबोधनिष्ठविषयत्वांशे विभाग-

---

च व्यापारविशेषणतयैवोपस्थितिर्भवति न तु मुख्यविशेष्यतयेति न तादृशविभागेऽवधिमत्त्वान्वयापत्तिरिति न 'वृक्षात् त्यजति' इति प्रयोगापत्तिरित्याशङ्क्याह— न चेति । उत्तरमाह— फलव्यापारयोरिति । त्यजधातोरिति पञ्चम्यन्तम् । तदनवच्छिन्नस्पन्दस्य=विभागानवच्छिन्नव्यापारस्य । तादृशार्थयोरिति सप्तम्यन्तम् । तदुपस्थितिविषयतादृशार्थयोः=त्यजधातुजन्योपस्थितिविषययोरपि व्यापारविभागयोस्तत्तत्पञ्चम्यर्थस्य=विभागजनकत्वस्यावधिमत्त्वस्य चान्वयः संभवत्येवेति 'वृक्षात् त्यजति' इति प्रयोगः कथं न स्यादित्यन्वयः ।

अथेत्यादिना शङ्कितं परिहरति—नेति, विभागावच्छिन्नव्यापारस्य त्यजधात्वर्थतामते उक्तरीत्यैव="पञ्चम्यर्थविभागजनकत्वान्वयबोधे धातुजन्यविभागरूपफलानवच्छिन्नव्यापारोपस्थितिस्तादृशावधिमत्त्वान्वयबोधे च धातुजन्यविभागमुख्यविशेष्यकोपस्थितिर्हेतुः" इत्युक्तरीत्यैव सामञ्जस्यम् । तयोः=विभागव्यापारयोः पृथग् धात्वर्थतामते च फलव्यापारयोः=विभागव्यापारयोः 'फलविषयकव्यापारविषयकबोधं जनयतु धातुपदम् ( त्यजधातुपदम् )' इत्याकारिकैकैव भगवदिच्छारूपा शक्तिः स्वीक्रियते न तु 'फलविषयकं व्यापारविषयकं च बोधं जनयतु धातुपदम्' इत्याकारिका. एतादृशसमूहालम्बनात्मकबोधनिष्ठा हि संकेतरूपा शक्तिस्तत्तद्विषयकत्वावच्छिन्नविभिन्नविषयताशालिन्यस्ति तत्तद्विषयकत्वेन=फलविषयकत्वेन व्यापारविषयकत्वेन चावच्छिन्ना या विभिन्नविषयता=फलव्यापारयोर्विषयता तच्छालित्वात्, तथा सति='फलविषयकं व्यापारविषयकं च बोधं जनयतु' इत्याकारकसमूहालम्बनात्मकं शक्तिस्वीकारे तादृशधातुपदस्य नानार्थत्वमेव स्यात् तथा च फलं विनापि व्यापारस्य व्यापारं च विना फलस्य धातुपदेन बोधः स्याद् न चैवं भवतीति 'फलविषयकव्यापारविषयकबोधं जनयतु धातुपदम्' इत्याकारिका फलव्यापारयोर्धातोरेकैव शक्तिः स्वीक्रियते तथा च विभागे पञ्चम्यर्थावधिमत्त्वान्वयबोधं प्रति संकेतीयबोधनिष्ठविषयतांशे विभागेतरविषयकत्वेनाऽनवच्छिन्नत्वावगाहि धातुशक्तिज्ञानं हेतुरुच्यते अत्र चोक्तरीत्या फलव्यापारयोर्धातोरेकशक्तेः स्वीकारात् संकेतीयबोधनिष्ठविषयता

तरविषयकत्वानवच्छिन्नत्वावगाहिधातुशक्तिज्ञानं क्रियांशे विभागजनकत्वरूपपञ्चम्यर्थान्वयबोधे च तादृशबोधनिष्ठविषयतांशे विभागविषयकत्वानवच्छिन्नत्वावगाहिधातुशक्तिज्ञानं हेतुरुपेयते इति त्यजधातोस्तादृशज्ञानमभ्रान्तस्याऽसंभवीत्यऽतिप्रसङ्गानवकाशात्। शक्तिद्वयादिवद् दर्शितैकशक्तेरपि कर्मप्रत्ययस्थले फलव्यापारयोर्विशेषणविशेष्यभाववैपरीत्येन शाब्दबोधसंभवात्, विशिष्टशक्तावेव विशेषणविशेष्यभावविपर्यासाऽनिर्वाहात्।

यदि च फलव्यापारयोः शक्तिभेदे एकार्थपरित्यागेनाऽपरार्थबोधप्रसङ्गवद् उक्तरूपसंकेतोपगमेऽपि पुष्पवन्तपदशक्त्यविशेषेण तत इव सकर्मकधातुतोपि विशेषणविशेष्यभावानापन्नस्यैवाऽर्थद्वयस्यान्वयबोधः स्यान्न तु तदापन्नार्थद्वयविषयक इत्युच्येत ? तदा संकेतस्य बोधांशे विशेषणतया भासमानयोः फलव्यापारविषयकत्वयोरवच्छेद्यावच्छेदकभावावगाहित्वमपि स्वीकरणीयं विशेषणविशे-

---

विभागेतरो यो व्यापारस्तद्विषयकत्वावच्छिन्नैवास्तीति न 'वृक्षात् त्यजति' इत्यत्र विभागे पञ्चम्यर्थावधिमत्त्वान्वयापत्तिस्तथा क्रियायां विभागजनकत्वरूपपञ्चम्यर्थान्वयबोधं प्रति तादृश=संकेतीयबोधनिष्ठविषयतांशे विभागविषयकत्वानवच्छिन्नत्वावगाहिधातुशक्तिज्ञानं हेतुरुपेयते अत्र चोक्तरीत्या फलव्यापारयोर्धातोरेकशक्तेः स्वीकारात्। संकेतीयबोधनिष्ठविषयता विभागविषयकत्वेनाऽवच्छिन्नैवास्तीति न क्रियायां पञ्चम्यर्थविभागजनकत्वान्वयापत्तिः- त्यजधातुतस्तादृशज्ञानम्=संकेतीयबोधनिष्ठविषयतायां विभागेतरविषयकत्वानवच्छिन्नत्वावगाहिज्ञानं विभागविषयकत्वानवच्छिन्नत्वावगाहिज्ञानं चाऽभ्रान्तस्य न संभवतीति अतिप्रसङ्गः=त्यजधातूपस्थिते व्यापारे विभागजनकत्वस्य विभागे चावधिमत्त्वस्य पञ्चम्यर्थस्यान्वयातिप्रसङ्गो नास्तीत्याह- तयोरित्यादिना। ननु फलव्यापारयोरेकशक्तिस्वीकारे हि यत्कर्माख्यातस्थले फलस्य विशेष्यत्वं भवति कर्त्राख्यातस्थले च व्यापारस्य विशेष्यत्वं भवति तादृशविशेषणविशेष्यभाववैपरीत्यं न स्यादित्याशङ्क्याह- शक्तिद्वयेति। विशिष्टशक्तावेव विशेषणविशेष्यभाववैपरीत्यं न भवति न चात्र फलव्यापारयोर्धातोरेकशक्तिस्वीकारेपि विशिष्टशक्तिरुपेयते पुष्पवन्तपदशक्तिवदित्यर्थः। "दर्शितैकशक्तेः" इति पञ्चम्यन्तम्।

यदीति- यदि फलव्यापारयोः पृथक् शक्तिस्वीकारे एकार्थपरित्यागेनाऽपरार्थबोधप्रसङ्गवद् उक्तरूपस्य='फलविषयकव्यापारविषयकबोधं जनयतु धातुपदम्' इत्याकारकसंकेतस्य स्वीकारेपि पुष्पवन्तपदशक्तितुल्यत्वेन ततः=पुष्पवन्तपदाद् यथा विशेषणविशेष्यभावानापन्नयोरेव चन्द्रसूर्ययोर्बोधो भवति तथा सकर्मकधातुतोपि अर्थद्वयस्य=फलव्यापारयोर्विशेषणविशेष्यभावानापन्नयोरेव बोधः स्यान्न तु तदापन्न=विशेषणविशेष्यभावापन्नयोरित्युच्यते तदा बोधांशे विशेषणतया भासमानयोः फलविषयकत्वव्यापारविषयकत्वयोरवच्छेद्यावच्छेदकभावावगाहित्वमपि संकेतस्य स्वीकार्यं तथा च फलव्यापारयोर्विशेषणविशेष्यभावेन भाने एव फलविषयताव्यापारविषयतयो-

ष्यभावेन भासमानयोरेव फलव्यापारयोर्विषयताद्वयमवच्छेद्यावच्छेदकभावापन्नमिति तथैव तयोर्भानम् । पुष्पवन्तपदसंकेते च चन्द्रसूर्यविषयतयोरवच्छेद्यावच्छेदकभावो न भासतेऽतस्तयोर्विशृङ्खलमेव भानमिति न काप्यनुपपत्तिः ।

यदि च 'वृक्षात् स्पन्दते' इत्यादिर्न प्रयोगस्तदा सकर्मकधातोः फलविशिष्टव्यापारवाचकतामते पञ्चम्यर्थविभागजनकत्वबोधे विभागानवच्छिन्नफलावच्छिन्नव्यापारविषयकधातुशक्तिज्ञानजन्योपस्थितिः फलव्यापारयोर्वैशिष्ट्यानुपरक्तयोर्धात्वर्थतामते च संकेतीयबोधनिष्ठविषयतांशे विभागविषयकत्वानवच्छिन्नत्वफलान्तरविषयकत्वावच्छिन्नत्वोभयावगाहिज्ञानजन्योपस्थितिः कारणमभ्युपगन्तव्येत्यलमधिकेन ।

---

ष्यवच्छेद्यावच्छेदकभावः स्यादिति तयोः=फलव्यापारयोस्तथैव=विशेषणविशेष्यभावेनैव भानं संभवतीत्यर्थः । न चैवं कर्माख्यातस्थले विशेषणविशेष्यभाववैपरीत्याऽसंभवात् फलस्य विशेष्यतया भानं न स्यादिति शङ्क्यं कर्माख्यातेनापि फलोपस्थितिस्वीकारात् तत्र धातूपस्थितफलस्य व्यापारविशेषणतया कर्माख्यातोपस्थितफलस्य व्यापारविशेष्यतया भानाद् अत एव 'ग्रामो गम्यते' इत्यत्र संयोगानुकूलव्यापारजन्यसंयोगाश्रयो ग्राम इत्येवं बोधः स्वीक्रियते अत्र च संयोगरूपफलस्य द्विधाभानमस्तीति विज्ञेयम् । सकर्मकधातोर्हि नियमेन फलव्यापारयोर्बोधो भवतीत्युक्तम्— सकर्मकधातुतोपीति । पुष्पवन्तपदविशेषमाह— पुष्पवन्तपदसंकेत इति । तयोः= चन्द्रसूर्ययोः । सर्वमिदं शक्तिवादे स्पष्टम् ।

श्रीमद्गदाधरभट्टाचार्यस्त्यजधातुवत् स्पन्दधातुमपि भ्रान्त्या सकर्मकं मत्वा तद्योगेन 'वृक्षात् स्पन्दते 'इति प्रयोगवारणोपायमाह— यदि चेत्यादिना । स्पन्दधातौ सकर्मकत्वभ्रान्त्यभावे 'वृक्षात् स्पन्दते' इति प्रयोगवारणाम "सकर्मकधातोः" इत्यादिनात्र सकर्मकधातुमुद्दिश्य पञ्चम्यर्थान्वयनिर्वचनमनुपपन्नमेव स्याद् अकर्मकधातोरेवैतादृशनिर्वचनस्य युक्तत्वादिति चिन्त्यम् । स्पन्दधातोः फलावच्छिन्नव्यापारवाचकत्वमेव नास्तीति न स्पन्दधातूपस्थितव्यापारे पञ्चम्यर्थविभागजनकत्वान्वयापत्तिः, तथा स्पन्दधातुसंकेतीयबोधनिष्ठविषयतायां फलान्तरविषयकत्वावच्छिन्नत्वमेव नास्तीति फलव्यापारयोर्वैशिष्ट्यानुपरक्तयोर्धात्वर्थतामते=फलव्यापारयोर्धातोः पृथक् शक्तिस्वीकारमतेपि स्पन्दधातूपस्थितव्यापारे न पञ्चम्यर्थविभागजनकत्वान्वयापत्तिरिति न 'वृक्षात् स्पन्दते' इति प्रयोगापत्तिः । एवं सकर्मकत्यजधातोर्विभागावच्छिन्नव्यापारबोधकत्वात् त्यजधातुसंकेतीयबोधनिष्ठविषयताया विभागविषयकत्वेनावच्छिन्नत्वाच्च न 'वृक्षात् त्यजति' इत्यपि प्रयोगापत्तिः । एतत्कार्यकारणभावस्य सकर्मकधातुस्थलीयत्वेन पतत्यादियोगे प्राप्तेरभावात् 'वृक्षात् पतति विभजते' इत्यादयः प्रयोगा भवन्ति । 'ग्रामाद् गच्छति' इत्यत्र धातोः सकर्मकत्वाद् विभागेतरसंयोगरूपफलावच्छिन्नव्यापारबोधकत्वादेवाऽनेन कार्यकारणभावेन गम्धातूपस्थितव्यापारे पञ्चम्यर्थविभागजनकत्वान्वयः संभवत्येवेति 'ग्रामाद् गच्छति' इति सिद्धमित्यर्थः ।

'व्याघ्राद्बिभेति' 'दस्युभ्यो रक्षति' इत्यादौ "भीत्रार्थानां भयहेतुः" इत्यनेनाऽपादानत्वम्। भयं च परतोऽनिष्टसंभावना, त्राणं चानिष्टनिवृत्त्यऽनुकूलो व्यापारः. तदर्थकधातुयोगे तादृशानिष्टप्रयोजकमपादानसंज्ञमिति सूत्रार्थः, एवं च पञ्चम्यर्थस्तत्र प्रयोज्यत्वं तच्च निरुक्तधात्वर्थघटकाऽनिष्टेऽन्वेति।

अथ यस्य व्याघ्राधीनं भयमप्रसिद्धमऽथ च व्याघ्राधीनत्वेनासौ स्वीयमरणादिकं संभावयति तत्पुरुषपरः 'व्याघ्रादयं बिभेति' इति कथं प्रयोगः प्रमाणम्- अनिष्टे व्याघ्राधीनत्वस्य बाधादिति चेत् ?, भयार्थकधातुयोगे प्रयोज्यताप्रकारकत्वं पञ्चम्यर्थस्तच्चानिष्टसंभावनायामन्वेति. प्रकृते च व्याघ्राधीनत्वस्य तत्पुरुषीयाऽनिष्टे बाधेप्यऽनिष्टसंभावनायां तत्प्रकारकत्वमबाधितमेवेति नानुपपत्तिः। एवं च शत्रुभ्रमेण मित्रादपि 'बिभेति' इत्यादिवाक्यस्यापि प्रामाण्यनिर्वाहः। एवं च भयार्थकधातुयोगे भयहेतुत्वेन संभावितमपादानमित्येकः सूत्रार्थः, अनिष्टविरहानुकूलव्यापाररूपत्राणार्थकधातुयोगे तदनिष्टप्रयोजकं तदित्यपरः। अनिष्टं च दुःखमेव सर्वत्रानुगतम्।

---

प्रयोगान्तरमुदाहरति- व्याघ्रादिति। तदर्थकधातुयोगे=भीत्रार्थकधातुयोगे ( भयार्थकत्राणार्थकधातुयोगे )। अनिष्टप्रयोजकम्=व्याघ्रादि। तथा च 'व्याघ्राद्बिभेति' इत्यत्र 'व्याघ्रप्रयोज्यानिष्टसंभावनाश्रयः' इति 'दस्युभ्यो रक्षति' इत्यत्र च 'दस्युप्रयोज्यानिष्टनिवृत्त्यनुकूलव्यापाराश्रयः' इति शाब्दबोधः।

शङ्कते- अथेति। यस्य=वीरस्य। उक्तप्रयोगाऽप्रामाण्ये हेतुमाह- अनिष्टे इति, यद्यपि मरणमप्यनिष्टमेव तत्र च व्याघ्राधीनत्वस्य न बाधस्तथाप्यत्रानिष्टं भयमेव ग्राह्यं न मरणं भये च व्याघ्राधीनत्वं नास्त्येव- वीरस्य व्याघ्रप्रयोज्यभयस्याऽसंभवादित्यर्थः। अनिष्टपदेन मरणस्यैव ग्रहणे तु मरणसंभावनायां व्याघ्राधीनत्वस्य ( व्याघ्रप्रयोज्यत्वस्य ) सत्त्वेपि वीरमरणे व्याघ्राधीनत्वं नास्ति व्याघ्रमरणे एव वीराधीनत्वसंभवादित्येवं मरणलक्षणानिष्टे व्याघ्राधीनत्वस्य बाधो व्याख्येयः। उत्तरमाह- भयार्थकेति, प्रयोज्यता=प्रकृत्यर्थव्याघ्रादिप्रयोज्यता तत्प्रकारकत्वं तादृशप्रयोज्यताप्रकारकसंभावनायामन्वेति- उक्तसंभावनायामुक्तप्रयोज्यतायाः प्रकारतया भासमानत्वात्, 'व्याघ्रादिप्रयोज्यानिष्टसंभावनाश्रयः' इतिशाब्दबोधोदयादित्यर्थः। अनेन व्याघ्रादिनिरूपितप्रयोज्यताप्रकारकानिष्टसंभावना तु वीरस्यापि संभवत्येवेति लब्धम्। एतदेवाह- प्रकृते इति। तत्प्रकारकत्वम्=व्याघ्रादिनिरूपितप्रयोज्यताप्रकारकत्वं। नानुपपत्तिः=वीरमुद्दिश्यापि 'व्याघ्रादयं बिभेति' इतिप्रयोगस्यानुपपत्तिर्नास्तीत्यर्थः। एवं च=अनिष्टसंभावनायामुक्तप्रयोज्यताप्रकारकत्वनिवेशात्। मित्रादनिष्टबाधेप्यनिष्टसंभावनाया बाधाभावात् 'मित्राद्बिभेति' इतिवाक्यस्यापि प्रामाण्यमुपपन्नम्। द्विधा सूत्रार्थमाह- एवमिति। अनिष्टविरहः=अनिष्टनिवृत्तिः। तदनिष्टप्रयोजकम्=उक्ततादृशा( संभाविता )ऽनिष्टप्रयो-

यज्जन्यं दुःखं कस्यापि न प्रसिद्ध्यति, तादृशस्याप्यहिकण्टकादेरपादानत्वं कथमिति चेत् ?, तर्हि यन्निष्ठस्वदुःखोपधायकव्यापारविरहानुकूलव्यापारस्तदपादानकं स्वकर्मकरक्षणमिति वक्तव्यम् । घटाद्यचेतनकर्मकं च रक्षणं विनाशोपधायकव्यापारविरहगर्भं निर्वाच्यम् ।

'यवेभ्यो गां वारयति' 'कूपादन्धं वारयति' इत्यादौ "वारणार्थानाम्" इत्यनेन यवकूपादेरपादानत्वम्, वारणं क्रियाप्रतिषेधस्तदर्थकधातुयोगे ईप्सितः=तत्तत्क्रियाजन्यफलभागितया तत्तत्क्रियाकर्तुरभिप्रेतोऽपादानमिति सूत्रार्थः, क्रिया च भक्षणगमनादिरूपा, तात्पर्यवशात् क्वचित् कस्याश्चित् प्रतिषेधो वारयत्यादिना बोध्यते, प्रतिषेधः कर्तृत्वाभावानुकूलव्यापारः । कर्तृत्वा-

नकं व्याघ्रादि, तत्=अपादानं भवति इत्यपरः सूत्रार्थः । तत्र प्रथमेन सूत्रार्थेन वीरमुद्दिश्य 'व्याघ्राद्बिभेति' इतिप्रयोगोपपत्तिः, द्वितीयेन सूत्रार्थेन 'दस्युभ्यो रक्षति' इतिप्रयोगोपपत्तिरिति विवेकः । अनिष्टानां नानात्वेनाऽनुगतस्वरूपमाह— अनिष्टमिति ।

ननु 'कण्टकादात्मानं रक्षति' इत्यादिस्थले तत्कण्टकादितः कस्यापि दुःखमेव प्रसिद्धं नास्ति येन तादृशदुःखनिवृत्त्यनुकूलव्यापारार्थकधातुयोगे कण्टकादेरपादानत्वं स्यादित्याशङ्कते— यज्जन्यमिति । उत्तरमाह— तर्हीति, यथा यन्निष्ठः=कण्टकनिष्ठः स्वदुःखोपधायकः=स्वदुःखजनको वेधनरूपो व्यापारस्तादृशव्यापारविरहा( निवृत्त्य )ऽनुकूलोऽपसरणादिरूपो व्यापार स्तदपादानकम्=कण्टकाद्यपादानकं स्वकर्मकरक्षणं तत्रास्तीति तादृशत्राणार्थकरक्षधातुयोगेन अनिष्टजनककण्टकादेरपादानत्वं प्राप्तमित्यर्थः किं वात्र प्रयोज्यत्वं पञ्चम्यर्थस्तदन्वयस्य दुःखे बाधेपि दुःखसंभावनायां न बाध इति तादृशसंभावनयैव स्वरक्षणं कण्टकादित आवश्यकमिति ज्ञेयम् । ननु चेतनगतानिष्टसंभवात्तस्य रक्षणं संभवति घटाद्यचेतनस्य त्वनिष्टमेव भयादिकं न संभवतीनि कथं तद्रक्षणमुपपद्येत तादृशधातुयोगे च कथं कस्यचिदपादानत्वं स्यादित्याशङ्क्याह— घटादीति । विनाशोपधायकव्यापारविरहगर्भमिति— यन्निष्ठविनाशोपधायकव्यापारनिवृत्त्यनुकूलव्यापारस्तदपादानकं घटादिरक्षणमिति वाच्यं यथा बालनिष्ठो यो घटविनाशजनकव्यापारस्तन्निवृत्त्यनुकूलव्यापार एव बालापादानकं घटरक्षणमस्तीति बालस्यापादानत्वं प्राप्तमिति 'बालाद् घटं रक्षति' इत्यादिप्रयोगः संभवतीत्यर्थः । 'बालकर्तृकघटनाशानुकूलव्यापारं निरुणद्धि' इति शाब्दबोधः ।

प्रयोगान्तरमुदाहरति— यवेभ्य इति । तदर्थकधातुयोगे=वारणार्थकधातुयोगे । तत्तत्क्रियाजन्यफलभागितया=वारणादिक्रियाजन्यविभागरूपफलभागितया ( वारणेन यवेभ्यो गोर्विभागो भवति ) तत्तत्क्रियाकर्तुः=वारणादिक्रियाकर्तुरभिप्रेतो यवादिरपादानं भवति, कूपोप्यन्धप्रतियोगिकविभागरूपफलभागित्वेन रूपेण वारणकर्तुरभिप्रेत एवेति विज्ञेयः । "क्रियाप्रतिषेधः" इत्यत्रत्यक्रियापदार्थमाह— क्रियेति ।: प्रतिषेधपदार्थमाह— प्रतिषेध इति, येन व्यापारेण

भावरूपधात्वर्थतावच्छेदकफलशालितया गवान्धादेः कर्मता । यवादिपदोत्तर-पञ्चम्या यवादिगतत्वेनेच्छाविषयफलकत्वं भक्षणादौ प्रत्याय्यते, इच्छा च भक्षणादिक्रियाकर्तृगवादिनिष्ठा तदर्थेऽन्तर्भावनीया,: एवं चोक्तस्थले यवकूपादिनिष्ठत्वेन गवान्धादीच्छाविषयो यो गलाधस्संयोगोत्तरदेशसंयोगादिर्गवादिनिष्ठतत्तत्फलकव्यापारविशेषकर्तृत्वाभावानुकूलव्यापारानुकूलकृतिमानित्याकारको बोधः । अन्धादेर्यद्यपि कूपगमनत्वादिना नेच्छा तथाप्यभिमुखदेशगमनत्वादिना कूपगमनादेरिच्छा वर्तत एवेति, वस्तुगतया यः कूपादिदेशस्तद्गतत्वेन क्रियाजन्यसंयोगस्य तदिच्छाविषयत्वमक्षतमेव ।

न च प्रकृते यवकूपादिनिष्ठफलविशेषजनकत्वमेव पञ्चम्यर्थोऽस्तु किमिच्छान्तर्भावेनेति वाच्यम्, यत्र चैत्रादेर्नान्तरीयकतया विषभोजनादिकं प्रसक्तं न तु स्वेच्छातस्तत्र तद्भोजनविरोधिव्यापारकर्तरि ' चैत्रं विषाद्वारयति ' इति न प्रयोगोऽपि तु ' सविषान्नाद्वारयति ' इत्यादिरेव तत्र पूर्वप्रयोगवारणाय सूत्रकृता " ईप्सितः " इत्यत्र सन्प्रत्ययेनेच्छोपदानात्, अत एव यद् यवादिकं केनापि

---

गवादौ भक्षणादिकर्तृत्वं निवर्तेत स एव व्यापारः प्रतिषेधः । तथा च वारणं हि कर्तृत्वाभावानुकूलव्यापार एव तत्र धात्वर्थतावच्छेदकं फलं कर्तृत्वाभावस्तादृशफलाश्रयतया गवान्धादेः कर्मत्वमित्याह- कर्तृत्वाभावरूप इति । पञ्चम्यर्थमाह- यवादीति, यवादिगतत्वेनेति तृतीयार्थः प्रकारत्वम्, यवादिगता येच्छा तादृशेच्छाविषयीभूतं फलं गलाधस्संयोगादिरूपं तत्फलकत्वं भक्षणादौ पञ्चम्या प्रत्याय्यते-यवादिगलाधःसंयोगफलकं भक्षणमित्यर्थः । तदर्थे=उक्तपञ्चम्यर्थे । उक्तप्रयोगयोर्वाक्यार्थस्वरूपमाह- एवं चेति । गवादिनिष्ठेति-गवादिनिष्ठो यस्तत्तत्फलकव्यापारविशेषः=गलाधस्संयोगोत्तरदेशसंयोगादिफलको भक्षणगमनादिव्यापारस्तत्कर्तृत्वाभावानुकूलव्यापारो वारणव्यापारस्तदनुकूलकृतिमान् वारको चैत्रादिरित्यर्थः । ननु नान्धः कूपमुद्दिश्य गच्छति येनान्धस्य कूपगमनेच्छा स्यादित्याशङ्क्याह-अन्धादेरिति । अत्र स्वमतमाह-वस्तुगत्येति । यः=अभिमुखीभूतः । तदिच्छाविषयत्वम्=अन्धेच्छाविषयत्वम् ।

ननु पञ्चम्या भक्षणादौ प्रतीयमानस्य यवादिगतत्वेनेच्छाविषयफलकत्वस्य यत् पञ्चम्यर्थत्वं प्राप्तं तन्न युक्तमिच्छान्तर्भावस्य व्यर्थत्वादिति वारणे यद् यवकूपादिनिष्ठविभागरूपफलस्य जनकत्वं तदेव पञ्चम्यर्थो युक्त इत्याशङ्क्याह- न चेति । उत्तरमाह-यत्रेति, " न प्रयोगः " इत्यत्र भवतीति शेषः । पूर्वप्रयोगवारणाय= ' चैत्रं विषाद्वारयति ' इतिप्रयोगवारणाय । सूत्रकारेणेच्छाया उपादानादस्माभिरपि पूर्वप्रयोगवारणाय पञ्चम्यर्थे इच्छाया अन्तर्भावः कृतः, अन्यथा सविषान्नभोजनवारणेनान्नादिव विषादपि भक्षकस्य विभागो जात एवेति तादृशविभागजनकत्वस्य वारणव्यापारे सत्त्वात् ' चैत्रं विषाद्वारयति ' इत्यप्युक्तस्थले प्रयोगः स्यात्. न चैतदिष्टम् । इच्छान्तर्भावे चोक्तस्थले विषगतत्वेनेच्छाविषयफलकत्वं भक्षणे नास्तीति न ' विषाद्वारयति '

न भुक्तं तत्कर्मकभोजनाप्रसिद्धावपि भोजनफले संयोगविशेषे तद्यवादिगतत्वेनेच्छाविषयत्वप्रसिद्ध्या तद्यवाद् 'गां वारयति' इत्यादिप्रयोगोपपत्तिः । एवं च तत्र भक्षणादौ तद्यवादिकर्मकत्वगवादिकर्तृकत्वोभयाभावबोधाय केषांचित् प्रयासोऽनादेय एवेति ।

'पण्डितात् पुराणं शृणोति' 'उपाध्यायाद्वेदमधीते' 'रामादधीतसंदेशः' इत्यादावाख्यातुः "आख्यातोपयोगे" इत्यनेनाऽपादानता, तत्र प्रकृत्यर्थपण्डितादिकर्तृकोच्चारणाधीनत्वं पञ्चम्यर्थः, तस्य च श्रवणोच्चारणार्थविशेषज्ञानादिक्रियायामन्वयः ।

'मृत्पिण्डाद् घटो जायते' इत्यादौ "जनिकर्तुः" इत्यनेनापादानत्वम्, तत्र प्रकृतित्वं न विकारित्वम्—प्रकृतिविकृतिभावाभावेपि "प्राक् केकयीतो भरतस्ततोऽभूत्" 'वायोर्जातः' इत्यादौ पञ्चमीदर्शनात्. न हि सुतवपुषो मातापितृशरीरविकारत्वमऽपि तु तदीयशुक्रशोणितादिविकृतित्वमेव शुक्रशोणितादेः शरीरस्थत्वेपि मलमूत्रादेरिव शरीरावयवत्वाभावात् तदवयवारभ्यत्वस्यैव तद्विकारतारूपत्वात् ।

---

ति प्रयोगापत्तिः, सविषान्नगतत्वेनेच्छाविषयफलकत्वं भक्षणेऽस्तीति 'सविषान्नाद्वारयति' इति योग उपपद्यते इत्यर्थः । इच्छान्तर्भावस्य फलान्तरमाह— अत एवेति । संयोगविशेषे=गलाधःसंयोगे । भोजनकर्मत्वासंभवेपि भोजनेच्छाविषयत्वं तु संभवत्येवेत्यर्थः । एवं चेति— यत्र तद्यवादिकर्मकभोजनमप्रसिद्धं तत्र भक्षणादौ तद्यवादिकर्मकत्वस्य गवादिकर्तृकत्वस्य चाभावबोधनाय यः खलु प्रयासविशेषः स न ग्राह्यः=व्यर्थ एव—उक्तरीत्या भक्षणफले गलाधस्संयोगे च्छाविषयत्वसत्त्वेपि भक्षणे तद्यवादिकर्मकत्वगवादिकर्तृकत्वयोरभावः स्वयमेव प्रतीयते इति प्रतीत्यर्थं प्रयासविशेषस्य व्यर्थत्वादित्यर्थः ।

प्रयोगान्तरमुदाहरति— पण्डितादिति । आख्यातुः=वक्तुः पण्डितादेः । तस्य= उक्तपञ्चम्यस्य । श्रवणेति— 'पुराणं शृणोति' इत्यत्र श्रवणक्रियायां पञ्चम्यर्थान्वयः, 'वेदमधीते' त्रोच्चारणक्रियायां पञ्चम्यर्थान्वयः—उपाध्यायकर्तृकोच्चारणसदृशच्छात्रकर्तृकोच्चारणस्यैवाध्ययदार्थत्वादुक्तमुच्चारणेति, 'अधीतसन्देशः' इत्यत्रार्थविशेषविषयकज्ञानक्रियायां पञ्चम्यर्थान्वयः, या च 'पण्डितकर्तृकोच्चारणाधीनश्रवणाश्रयः' 'रामकर्तृकोच्चारणाधीनसंदेशविषयकज्ञानाश्रयः' इत्यादिः शाब्दबोधः ।

प्रयोगान्तरमुदाहरति— मृत्पिण्डादिति । तत्र="जनिकर्तुः प्रकृतिः" इतिसूत्रे । जनिर्तुः=जायमानस्य । विकारित्वम्=उपादानकारणत्वम् । यदि सूत्रे प्रकृतिपदेनोपादानकारग्रहणं स्यात्तदा केकय्या भरतोपादानत्वाभावाद् वायोश्च रोगाद्युपादानत्वाभावात् 'केकयीतः' 'वायोः' इत्यादौ पञ्चमी न स्यादित्यर्थः । उपादानत्वाभावमेवाह— न हीति । विकारत्व

न च तत्र हेतुपञ्चम्येव नाऽपादानपञ्चमीति वाच्यम्, ऋणगुणातिरिक्तहेतौ पञ्चम्यनुशासनविरहात्, अन्यथा ‘ दुग्धाद् दधि जायते ’ ‘ मृत्तिकाभ्यो घटो जायते ’ ‘ शृङ्गाद् धनुर्जायते ’ इत्यादेरपि हेतुपञ्चम्यैवोपपत्तौ “ जनिकर्तुः ” इत्यादिसूत्रस्यैव वयर्थ्यापत्तेः, तस्मात् कारणत्वमेव प्रकृते प्रकृतित्वम् । ‘ दण्डाद् घटो जायते ’ इत्यादयोऽपि प्रयोगा इष्यन्त एव । अत एवेश्वरस्य द्रव्यादि-कार्याऽप्रकृतित्वेऽपि “ यतो द्रव्यं गुणाः कर्म ” इत्यादौ पञ्चमी । न च प्रकृति-पदेन कारणमात्रविवक्षायामपि क्रियायोगाऽभावादऽपादानपञ्चम्यनुपपत्तिः. हेतुपञ्चमी चोक्तक्रमेण प्रकृतेऽनुपपन्नैवेति वाच्यम्, अगत्या ‘ जायते ’ इत्यादि-क्रियाध्याहारेण तत्र पञ्चम्या उपपादनीयत्वात् ।

‘हिमवतो गङ्गा प्रभवति’ इत्यादौ “ भुवः प्रभवः ” इत्यनेनाऽपादानता, यत्संबन्धात् प्रभवनम्=प्रथमः प्रकाशः स प्रभवः, प्रथमप्रकाश एव प्रभवत्यर्थः । पञ्चम्यर्थः संबन्धाधीनत्वं तादृशक्रियायामन्वेति, संबन्धे च हिमवदादेः प्रकृत्यर्थस्यान्वयः ।

---

विकृतित्वं चोपादेयकार्यत्वम् । तदवयवारभ्यत्वे सत्येव कार्यकारणयोः प्रकृतिविकृतिभावो भवति नान्यथेत्याह—तदवयवारभ्यत्वेति । निगदव्याख्यातोयं ग्रन्थः ।

शङ्कते— न चेति । उत्तरमाह—ऋणेति, ऋणस्य हेतुत्वे “ अकर्तर्यृणे पञ्चमी ” इति-सूत्रेण पञ्चमी भवति ‘ शताद्बद्धः ’ इति, गुणस्य हेतुत्वे “ विभाषा गुणेऽस्त्रियाम् ” इति-सूत्रेण पञ्चमी ‘ जाड्याद्बद्धः ’ इति नान्यत्र । विपक्षे बाधकमाह—अन्यथेति । प्रकृतमाह—तस्मादिति । प्रकृते=“ जनिकर्तुः प्रकृतिः ” इत्यत्र । अस्ति चोक्तस्थले केकय्या वायोश्च कारणत्वमिति पञ्चमी । दण्डादिति—दण्डस्यापि कारणत्वेन प्रकृतित्वाद् दण्डपदात् पञ्चमीत्यर्थः । अत एव=प्रकृतिपदेन कारणस्यैव ग्रहणादेव, अप्रकृतित्वेपीति— न्यायमते परमात्मनः प्रपञ्चं प्रति निमित्तकारणत्वेनोपादानत्वाभावेपि परमात्मबोधकाद् यच्छब्दात् “ यतः ” इति पञ्चमी प्राप्तेत्यर्थः । ननूक्तसूत्रे प्रकृतिपदेन कारणमात्रविवक्षायामपि “ जनिकर्तुः ” इत्यनेनोत्पत्ति-कारणस्याऽपादानसंज्ञामात्रं भवति पञ्चमी तु “ अपादाने पञ्चमी ” इतिसूत्रेणैव वक्तव्या सा च कारकपञ्चमी कारकत्वं च क्रियायोगाभावे न भवतीति “ यतः ” इत्यत्र कथं पञ्चमी स्यात् हेतुपञ्चमी चोक्तक्रमेण=ऋणगुणातिरिक्तपदार्थस्य हेतुत्वे नैव भवतीति “ यतः ” इत्यत्र कथं पञ्चमी स्यादित्याशङ्क्याह—न चेति । परिहारमाह—अगत्येति, क्रिया-ध्याहारे हि तादृशक्रियायोगेन कारकत्वापत्त्याऽपादानपञ्चम्येव बोध्येत्यर्थः ।

प्रयोगान्तरमुदाहरति—हिमवत इति । प्रभवनपदार्थमाह—प्रथमेति । तादृशक्रियायाम्=प्रथम-प्रकाशरूपप्रभवनक्रियायाम् । संबन्धे हिमवतो निरूपितत्वसंबन्धेनान्वयः, तथा च हिमवत्संब-न्धाधीनप्रथमप्रकाशाश्रयो गङ्गेति शाब्दबोधः ।

' उपाध्यायादन्तर्धत्ते छात्रः ' इत्यादौ " अन्तर्द्धौ येनादर्शनमिच्छति " इत्यपादानता । अन्तर्द्धिः=अन्तर्धानं स्वनिष्ठान्यकर्तृकदर्शनविषयताविरहोद्देश्यको व्यापारः, एवं च व्यापारानुकूलतयाऽन्तर्द्धानघटको यत्कर्तृकदर्शनविषयताविरहोद्देशः सोऽपादानमिति सूत्रार्थः । उक्तस्थलीयपञ्चम्या अन्तर्द्धिघटकदर्शनान्वयिकर्तृतानिरूपकत्वमेवार्थ इत्युपाध्यायकर्तृकदर्शनविषयताया यः स्वनिष्ठोऽभावस्तदुद्देश्यकव्यापारकर्ता छात्र इति तत्रान्वयबोधः ।

इदं तु बोध्यम्– 'अस्मादयं दीर्घः ' ' अस्मादयं तारः ' इत्यादौ नापादानपञ्चमी– दैर्घ्याद्यवधेरपादानत्वस्यानुशासनात् । " ध्रुवमपायेऽपादनम् " इत्यनेन ह्यऽपाये=विभागरूपक्रियायां क्रियान्तरजन्यविभागे च यदवधिभूतं तस्याऽपादानत्वं विधीयते न त्ववधिमात्रस्य । यदि चापायपदं वस्तुमात्रोपलक्षकमुच्यते तदा तदुपादानमनर्थकं स्यात् ।

अथ तत्पदेन क्रियामात्रमुपलक्ष्यते ' अस्माद् दीर्घः ' इत्यादौ च ' भवति ' इत्यध्याहार्यं दीर्घभवनं च दीर्घतैवेति क्रियायाः सावधित्वम्, आवश्यकश्च

---

प्रयोगान्तरमुदाहरति– उपाध्यायादिति । स्वनिष्ठेति– स्वं छात्रः, छात्रनिष्ठा योपाध्यायकर्तृकदर्शनविषयता तदभावानुकूलो व्यापारोऽन्तर्धानम् । सूत्रार्थमाह– एवं चेति । व्यापारानुकूलतया=व्यापारानुकूल इतियावत्, उद्देशविशेषणम् । सः=उपाध्यायादिः । उद्देशः=इच्छा सा च छात्रस्य स्वनिष्ठा योपाध्यायकर्तृकदर्शनविषयता तदभावोद्देश्यको योऽन्तर्धानव्यापारस्तादृशव्यापारानुकूलास्ति– अन्तर्धानव्यापारं प्रति उपाध्यायकर्तृकदर्शनविषयताविरहविषयकेच्छायाः कारणत्वात्, एतदेवोक्तम्– व्यापारानुकूलतयेत्यनेन । पञ्चम्यर्थमाह–उक्तेति, उपाध्याये या दर्शनकर्तृता तन्निरूपकत्वं दर्शनक्रियायामेवेत्यर्थः । शाब्दबोधस्वरूपमाह–उपाध्यायकर्तृकेति, " उपाध्यायकर्तृकदर्शनविषयतायाः " इत्यस्य ' उपाध्यायनिष्ठकर्तृत्वस्य निरूपकं यद्दर्शनं तद्विषयतायाः ' इत्यर्थः ।

विषयान्तरमाह– इदमिति । दैर्घ्याद्यवधेरपादानत्वाभावे हेतुमाह– ध्रुवमिति । अपायपदार्थमाह– विभागेति । अनर्थकमिति–अपायपदस्य वस्तुमात्रोपलक्षकत्वे वस्तुमात्रनिरूपितावधेरपादानत्वं स्यात् तत्रावधेः किंचिद्वस्तुनिरूपितत्वमेव संभवति न चाऽवस्तुनिरूपितत्वमपि येनाऽवस्तुव्यवच्छेदकत्वात्सार्थक्यं स्यादित्यऽपायपदस्य वस्तुमात्रोपलक्षकत्वे व्यवच्छेदकत्वाभावादानर्थक्यमेव स्यादित्यर्थः ।

शङ्कते– अथेति । तत्पदेन=अपायपदेन, न वस्तुमात्रमिति शेषः । सावधित्वमिति–दीर्घता हि सावधिकैव भवति किंचिन्निरूपितत्वादिति दीर्घतारूपाया दीर्घभवनक्रियाया अपि सावधित्वं प्राप्तमेवेति दीर्घभवनरूपसावधिकक्रियानिरूपितावधित्वमिदंपदवाच्यस्य प्राप्तमिति ' अस्मादयं दीर्घः ' इत्यत्राऽपादानपञ्चमी युक्तैवेत्यर्थः । अत्र क्रियाध्याहारावश्यकतामाह–

क्रियाध्याहारस्तद्योगमन्तरेण कारकत्वस्याऽनिर्वाहात् । एवम्— 'बलाहका-द्विद्योतते विद्युत्' इत्यादौ द्योतनादिक्रियायाः सावधिकत्वविरहेण 'निसृत्य' इत्यध्याह्रियते । अत एव नैतदपादानं निर्दिष्टविषयमपि तूपात्तविषयमिति वैयाकरणाः । निर्दिष्टत्वम्=उच्चरितत्वम् । उपात्तत्वम्=अध्याहृतत्वम् । विषयः=अवधित्वनिरूपकः । निस्सरणं च विभाग एवेत्युक्तस्थलेऽध्याहृतक्रियायाः सावधिकत्वमिति चेत् ?, एवं सति 'वृक्षात् पतति' इत्यादौ वृक्षादेरसंग्रहः । तत्रापि विभागक्रियाऽध्याह्रियते इति चेत्?, तत्र निर्दिष्टविषयताप्रवादविरोधः ।

एवम् 'अस्माद् दीर्घः' इत्यादावपि क्रियाध्याहारे तत्समशीले 'माथुराः सौघ्नेभ्य आढ्यतराः' इत्यादावपि क्रियाया अध्याहरणीयतया तत्राऽपादान-

---

आवश्यक इति । तद्योगम्=क्रियायोगम् । एवमिति— निस्सरणस्य विभागरूपत्वेन सावधित्वं प्राप्तमिति तादृशनिस्सरणनिरूपितावधिभूतस्य बलाहकस्यापादानत्वं प्राप्तं तेन च पञ्चमीत्यर्थः । अत एव=निसृत्येतिक्रियाध्याहारादेव । एतदपादानम्= 'बलाहकात्' इत्यपादानम् । निर्दिष्टत्वादीनां स्वरूपमाह— निर्दिष्टत्वमिति । निर्दिष्ट उच्चरितो विषयोऽवधिनिरूपको यस्य तन्निर्दिष्टविषयमपादानम्, उपात्तोऽध्याहृतो विषयोऽवधिनिरूपको यस्य तदुपात्तविषयमपादानमित्यर्थः । उपसंहरति— निस्सरणं चेति । उक्तस्थले='बलाहकाद्विद्योतते विद्युत्' इत्यत्र । अध्याहृतक्रियायाः=निसृत्येत्यध्याहृतपदबोध्यनिस्सरणक्रियाया विभागरूपत्वात् सावधिकत्वमस्ति, "ध्रुवमपायेऽपादानम्" इतिसूत्रस्य च 'अपाये=सावधिकक्रियायां ध्रुवमपादानसंज्ञम्' इत्यर्थः संपन्नः, निस्सरणक्रिया च सावधिकैवेत्यत्र बलाहकपदादपादानपञ्चम्येवेति भावः । एवं सूत्रव्याख्यानेऽनुपपत्तिमाह— एवमिति । असंग्रह इति—पतनं ह्यधोदेशसंयोग एव स च न सावधिक इति 'वृक्षात् पतति' इत्यत्र वृक्षस्याऽपादानत्वं न स्यादित्यर्थः । ननु तत्रापि='वृक्षात् पतति' इत्यत्रापि 'वृक्षाद् विभज्य पतति' इत्येवं विभागक्रियाध्याहारः कर्तव्यो विभागस्य सावधिकत्वेन विभागनिरूपितावधित्वाद् वृक्षस्याऽपादानत्वमित्याशङ्क्याह— तत्रापीति । उत्तरमाह— तत्रेति । 'वृक्षात् पतति' इत्यत्र वृक्षस्य निर्दिष्टविषयाऽपादानत्वमुच्यते क्रियाध्याहारे सत्युपात्तविषयत्वप्राप्त्या निर्दिष्टविषयत्वं न स्यादित्यर्थः । 'वृक्षात् पतति' इत्यत्र स्वावधिकविभागजनकत्वस्य पञ्चम्यर्थत्वाश्रयणेन 'वृक्षावधिकविभागजनकपतनव्यापारवान्' एतादृशशाब्दबोधोदयसंभवात् तदर्थम् 'विभज्य' इतिक्रियाया अध्याहारापेक्षाया अभावादेतस्याऽपादानस्य निर्दिष्टविषयत्वमुपपद्यते ।

एवमिति— यदि 'अस्माद् दीर्घः' इत्यत्र क्रियाध्याहारः स्यात्तदा तत्तुल्यत्वात् 'माथुराः सौघ्नेभ्य आढ्यतराः' इत्यत्रापि क्रियाध्याहारः स्यादेव तथा चास्योपात्तविषयोपादानेऽन्तर्भावः स्यादित्युपात्तविषयस्याऽपेक्षितक्रियस्य चाऽपादानस्य विशेषो न स्यात्तथा चाऽपादा-

स्याऽपेक्षितक्रियारूपस्योपात्तविषयान्तर्भावप्रसङ्ग इति तादृशाऽपादानयोरविशेषापत्तिः । एवं च—

" उपात्तविषयं किंचिन्निर्दिष्टविषयं तथा ।
अपेक्षितक्रियं चेति त्रिधाऽपादानमुच्यते ॥ "

इतिशाब्दिकविभागविरोधः ।

अथाऽपायपदेन क्रियासामान्यं क्रियाजन्यविभागश्च विवक्षित एवं च 'वृक्षात् पतति' इत्यादौ न विभागात्मकक्रियाध्याहार इति तदपादानमपि निर्दिष्टविषयम् । यत्राऽपादानतानिर्वाहार्थमेव क्रियाध्याहारः 'बलाहकात्' इत्यादौ तदपादानमुपात्तविषयम्, यत्र वाक्यसमाप्त्यर्थं तदध्याहारस्तत एव चाऽपादानतानिर्वाहो यथा 'माथुराः स्रौघ्नेभ्यः' 'अस्माद् दीर्घः' इत्यादौ तत्रापेक्षितक्रियत्वमिति चेत् ?, एवमपि 'अयमस्मात्तारः' इत्यादावगतिः— तत्र हि तारत्वं जातिर्जातिश्च न सावधिकत्वमिति कुतोऽपादानता । अन्यथा 'अयमस्माद् गौः' इत्याद्यापत्तिः । न च जातेरपि तारत्वस्य 'अयमस्मात्तारः' इतिप्रतीतिबलाद् भवत्येव सावधिकत्वमिति वाच्यम्, यदेव ह्येकापेक्षं तारत्वं तदेवान्यापेक्षं मन्द-

---

नस्य त्रिधाविभागकरणं विरुध्येतेत्यर्थः । संग्राहकश्लोकमाह— उपात्तमिति, उपात्तविषयमपादानं यथा— 'बलाहकाद्विद्योतते विद्युत्' इति, निर्दिष्टविषयं यथा 'वृक्षात् पतति' इति, अपेक्षितक्रियं यथा— 'माथुराः स्रौघ्नेभ्य आढ्यतराः' 'अस्माद् दीर्घः' इत्यादि, अत्राऽस्तीत्यादिक्रियाया अपेक्षासत्त्वात् । ( एतद्भागत्रयवैशद्यं चाग्रिमवाक्ये द्रष्टव्यम् ) ।

शङ्कते— अथेति । फलमाह— एवं चेति, तथा च 'वृक्षात् पतति' इत्यत्र क्रियासामान्यमस्त्येवेति विभागात्मकक्रियाध्याहारं विनैवाऽपादानत्वं प्राप्तमित्यर्थः । उपात्तविषयमपादानमाह— यत्रेति । अत्र 'निस्सृत्य' इतिविभागात्मकक्रियाया अध्याहारः । अपेक्षितक्रियमपादानमाह— यत्रेति । तदध्याहारः=क्रियाध्याहारः । ततः=वाक्यसमाप्त्यर्थाध्याहृतक्रियातः । 'माथुराः स्रौघ्नेभ्य आढ्यतराः' इत्यादौ सन्तीत्यादि क्रियाध्याहारं विना वाक्यसमाप्तिरेव नास्ति । उत्तरमाह— एवमपीति । अगतिः=इदंपदवाच्यस्याऽपादानत्वोपपादनगतिर्नास्तीत्यर्थः । 'माथुराः' इत्यत्राढ्यतरत्वस्य सावधिकत्वेन स्रौघ्नानामपादानत्वं संभवति 'अस्माद् दीर्घः' इत्यत्र दैर्घ्यस्य सावधिकत्वादिदंपदवाच्यस्यापादानत्वं संभवति 'अयमस्मात्तारः' इत्यत्र तु तारत्वं जातिरेव तस्या सावधिकत्वासंभवात् क्रियाध्याहारे सत्यपि इदंपदवाच्यस्याऽपादानत्वं न संभवति पूर्वत्र हि क्रियां विना कारकत्वरूपाऽपादानत्वं न संभवतीति क्रियाध्याहारापेक्षा न तु सावधिकत्वार्थमिति विशेषः । अगतिमेवोपपादयति— तत्र हीत्यादिना । अन्यथा=जातेरपि सावधिकत्वे । सावधिकत्वमस्ति न वेति प्रतीतिसिद्धमेवेति वक्तव्यमित्याशयेनाशङ्कते— न चेति । जातेरपि तारत्वस्येति— जातिभूतस्यापि तारत्वस्येत्यर्थः । उत्तरमाह— यदेवेति । सम-

त्वम्– समनियतजातिद्वयानभ्युपगमात् समनियताभ्युपगमे जातिसङ्करप्रसङ्गात् तथा च तारत्वादेः सावधिकत्वे स्वापेक्षया यस्तारस्तमपेक्ष्य स्वस्मिन् मन्दव्यवहार इव तारव्यवहारोऽपि स्यात् स्वापेक्षया यो मन्दस्तमपेक्ष्य तारव्यवहारवत् तमपेक्ष्य स्वस्मिन् मन्दव्यवहारोऽपि स्यात् ।

अथ तदपेक्षया तारव्यवहारस्तत्सजातीयत्वे सति तत्साक्षात्कारप्रतिबन्धकतावच्छेदकजातिमत्त्वमवलम्बतेऽतो न स्वापेक्षया यस्तारस्तदपेक्षया तारव्यवहारोऽन्यापेक्षया तारेऽपि भवतीति चेत् ?, तर्हि 'अस्मात्तारः' इत्यत्र साजात्यसमानाधिकरणसाक्षात्कारप्रतिबन्धकतावच्छेदकजातिरूपतारपदप्रवृत्तिनिमित्तघटकसाजात्ये साक्षात्कारे च पञ्चम्यर्थान्वयो वाच्यस्तावतैव दर्शितातिप्रसङ्गवारणसंभवात् । तत्र साजात्यं तद्वृत्तिशब्दत्वजातिस्तस्याः साक्षात्कारस्य च न सावधिकत्वमिति न सावधिकत्वरूपमऽपादानत्वं तत्र पञ्चम्यर्थः ।

---

नियतेति– यदपेक्षया तारत्वं तदपेक्षयैव मन्दत्वमिति समनियतस्य=एकनिरूपितस्य जातिद्वयस्य=तारत्वमन्दत्वयोरस्वीकारात्, एकापेक्षं यदेव तारत्वं तदन्यापेक्षमेव मन्दत्वमिति सिद्धम् । समनियताभ्युपगमे जातिसांकर्येण तारत्वमन्दत्वयोर्जातित्वमेव न स्यात्, सांकर्यं च तन्निरूपितं यत्र तारत्वं न तत्र तन्निरूपितं मन्दत्वं यत्र च तन्निरूपितं मन्दत्वं न तत्र तन्निरूपितं तारत्वं अत्र च तन्निरूपितमेव तारत्वं मन्दत्वं चेति सांकर्यं स्यादेवेत्यर्थः । तारत्वे सावधिकत्वे दोषमुद्घाटयति– तथा चेति, तारत्वादेः सावधिकत्वेनावधिमात्रापेक्षित्वप्राप्त्या यस्मिन् यदपेक्षया तारव्यवहारस्तस्मिन् तदपेक्षयापि मन्दव्यवहारनिरोधो न स्यादेव किंचिदवधिमात्रापेक्षित्वात्, तारव्यवहारे यस्यावधित्वं तस्य: मन्दव्यवहारे नाऽवधित्वमित्यत्र विनिगमनाभावादिति भावः प्रतिभाति ।

शङ्कते– अथेति । यथा शङ्खद्वयध्वनिद्वये शङ्खध्वनित्वेन साजात्यमस्ति तत्र यस्य द्वितीयशङ्खध्वनिसाक्षात्कारप्रतिबन्धकत्वं तस्य तदपेक्षया तारत्वम् । अन्यापेक्षया १तारेऽपि १तदपेक्षया २यस्तारस्तादृश२तारापेक्षया १तस्मिन् न :तारव्यवहार इत्यन्वयः । उत्तरमाह– तर्हीति, साक्षात्कारः प्रत्यक्षं तच्च स्वविषये शब्दे विषयतासंबन्धेन वर्तते इति विषयतासंबन्धेन साजात्यसमानाधिकरणो यः साक्षात्कारस्तत्प्रतिबन्धकतावच्छेदकीभूतं यज्जातिरूपं तारपदप्रवृत्तिनिमित्तम् ( साजात्यसमानाधिकरणसाक्षात्कारप्रतिबन्धकतावच्छेदकत्वम् ) तद्घटकसाजात्ये साक्षात्कारे च पञ्चम्यर्थस्याऽपादानत्वस्यान्वयः कर्तव्यस्तावतैव=साजात्ये साक्षात्कारे च पञ्चम्यर्थान्वयेनैव यद्यपि दर्शितातिप्रसङ्गः=यदपेक्षया तारव्यवहारस्तदपेक्षया मन्दव्यवहार इत्यतिप्रसङ्गो न संभवति– साजात्ये साक्षात्कारे च पञ्चम्यर्थान्वयेन तादृशस्वसाक्षात्कारप्रतिबन्धकसाक्षात्कारविषयस्य ध्वनेः स्वापेक्षया तारत्वापत्त्या तदपेक्षया स्वस्मिन् मन्दव्यवहारस्यैव योग्यतया तारव्यवहारस्याऽयोग्यत्वात् तथापि तत्र=उक्तस्थले अस्मिन् यत्तत्साजात्यं तत् तद्वृत्ति-

**न च साजात्यघटकजातेः सावधिकत्वाभावेपि वृत्तेः सावधिकत्वमस्त्येव. एवं साक्षात्कारो विलक्षणविषयिताशालिज्ञानं तद्विषयिता च सावधिकैवेति तत्र पञ्चम्यर्थान्वयेन सामञ्जस्यमिति वाच्यम्, यतो वृत्तेर्विषयितायाश्च स्वाधारविषयप्रतियोगिकत्वमेव न तु तदवधिकत्वम्, तदवधिकत्वतत्प्रतियोगिकत्वयोर्वस्तुनोर्भेदात्, अन्यथा 'घटे वर्तते' 'घटमवगाहते' इत्यत्र 'घटाद्वर्तते'**

---

शब्दत्वजातिरेव— अन्यद्रूपसाजात्यस्य वक्तुमशक्यत्वात् जातेः साक्षात्कारस्य च न सावधिकत्वं संभवति अपादानत्वं च सावधिकत्वरूपमेवेति । तत्र='अस्मात्तारः' इत्यत्र नाऽपादानत्वं पञ्चम्यर्थः संभवतीत्यर्थः ।

ननु "साजात्यं तद्वृत्तिशब्दत्वजातिः" इत्युक्तं तत्र साजात्यघटकाया वृत्तेः=आधेयत्वस्य ( वृत्तित्वस्य ) सावधिकत्वं किं न स्यात्तथा साक्षात्काररूपज्ञाननिष्ठविषयितायाः सावधिकत्वं किं न स्यात् सावधिकत्वे च तत्रैव =वृत्तौ विषयितायां चापादानत्वरूपपञ्चम्यर्थस्यान्वयः संभवत्येवेत्याशङ्क्याह— न चेति । अत्र "विषयिता" इत्यस्य स्थाने "विषयता" इत्यपि पाठः । परिहारहेतुमाह— यत इति, यथा 'घटे वर्तते रूपम्' इत्यत्र स्वं वृत्तिः ( आधेयत्वम् ) तदाधारो रूपं तद्विषयः ( तदाधारः ) घट इति वृत्तौ घटलक्षणस्वाधारविषयप्रतियोगिकत्वं प्राप्तम्— घटस्य रूपे आधेयत्वरूपवृत्तित्वसंबन्धेनान्वयात् यस्यान्वयः स प्रतियोगी भवतीति संबन्धे तत्प्रतियोगिकत्वसंभवात्, यथा 'भूतले घटः' इत्यत्र संयोगे घटप्रतियोगिकत्वम् । स्वं विषयिता तदाधारो ज्ञानं तद्विषयो घटस्तस्य घटस्य ज्ञाने विषयितासंबन्धेनान्वयाद् विषयितायां तादृशघटप्रतियोगिकत्वं प्राप्तम्, किं वा प्रतियोगिकपदस्य निरूपितपदस्थानेपि क्वचित् प्रयोगदर्शनात् "स्वाधारविषयप्रतियोगिकत्वम्" इत्यस्य 'स्वाधारविषयनिरूपितत्वम्' इत्यर्थः अत्रापि स्वं वृत्तिस्तदाधारो रूपं तद्विषयो घटस्तादृशघटनिरूपितत्वं रूपनिष्ठाधेयत्वलक्षणवृत्तावस्त्येव. विषयितापक्षे च स्वं विषयिता तदाधारो ज्ञानं तद्विषयो घटस्तादृशघटादिलक्षणविषयनिरूपितत्वं च ज्ञाननिष्ठविषयितायां सुस्पष्टमेवेत्यर्थः । ननु स्वाधारविषयप्रतियोगिकत्वं स्वाधारविषयावधिकत्वस्वरूपमेवास्तु तथा च 'अयमस्मात् तारः' इत्यत्र न पञ्चम्यनुपपत्तिरित्याशङ्क्याह— तदवधिकत्वतत्प्रतियोगिकत्वयोरिति, यथा 'वृक्षात् पर्णं पतति' 'वृक्षाद्विभजते' इत्यादौ विभागे वृक्षावधिकत्वमस्ति न तु वृक्षप्रतियोगिकत्वं पर्णादिप्रतियोगिकत्वं चास्ति न तु पर्णाद्यवधिकत्वं तदवधिकत्वतत्प्रतियोगिकत्वयोरैक्ये त्वयं व्यतिरेको न स्यादिति पर्णादेः प्रतियोगित्वेनावधित्वप्राप्तौ पर्णादिपदादपि पञ्चमी स्याद् न चैतदिष्टमिति तदवधिकत्वतत्प्रतियोगिकत्वयोर्नैक्यं संभवतीति भावः, भेदश्च स्वानुभवसाक्षिक एव, अवधिकत्वं चावधिभूतपदार्थनिरूपितं भवति न च प्रतियोगिकत्वं तथा भवतीत्यपि विज्ञेयम् । स्वयमपि विपक्षे बाधकमाह— अन्यथेति, यदि वृत्तेः स्वाधारविषयप्रतियोगिकत्वं स्वाधारविषयावधिकत्वस्वरूपमेव स्यात्तदा 'घटे वर्तते' इत्यस्य स्थाने 'घटाद्वर्तते' इत्यपि स्याद् घटस्य

' घटादवगाहते ' इतिप्रयोगस्य घटस्याऽपादात्वेन दुर्वारत्वात्, अत एव प्रतियोगिताया अपादानत्वानात्मकतयाऽन्यादिशब्दयोगे प्रतियोगिवाचकपदात् पञ्चमी सूत्रान्तरेणानुशिष्टा प्रतियोगित्वस्याऽपादानतारूपत्वे तद्वैयर्थ्यापत्तेः ।

अथान्यादिशब्दार्थभेदादेः क्रियात्वाभावेन कारकत्वासंभव इति मुनिः सूत्रान्तरं प्रणिनायेति चेत् ?, तत् किं तारादिघटकवृत्त्यादेः क्रियात्वमनुमन्यते भवता ? तस्मादत्र पञ्चम्युपपादकं सूत्रान्तरमनुसर्तव्यमिति ।

' गुणो द्रव्याद् भिन्नः ' इत्यादौ " अन्यारात् " इतिसूत्रेणैव पञ्चमी- अन्यपदस्याऽन्यार्थकपदपरत्वादिति बहवः । न चान्यपदेन तदर्थकत्वविवक्षणे तत्समानार्थकेतरपदोपादानवैयर्थ्यमिति वाच्यम्, अन्येतरपदयोरेकस्याऽन्योन्याभावविशिष्टार्थकपरत्वात्. अपरस्य पृथक्त्वरूपगुणविशिष्टार्थकपरतयोपादानसार्थक्यात् । " पृथग्विना " इत्यादिसूत्रे पृथक्पदोपादानं तद्योगे वैकल्प-

---

वृत्त्यवधित्वेनापादानत्वापत्तेः, यदि च विषयितायाः स्वाधारविषयप्रतियोगिकत्वं स्वाधारविषयावधिकत्वरूपमेव स्यात्तदा ' घटमवगाहते ' इत्यस्य स्थाने ' घटादवगाहते ' इत्यपि प्रयोगः स्यात्. न चैवं भवतीत्यर्थः । प्रतियोगिताया अपादानत्वाऽस्वरूपत्वे विनिगमनामप्याह- अत एवेति । प्रतियोगिताया अपादानत्वानात्मकत्वेऽवधित्वानात्मकत्वमपि प्राप्तमेव । सूत्रान्तरेण= " अन्याराऽदितर " इत्यादिसूत्रेण । प्रतियोगित्वस्याऽपादानतारूपत्वे ' घटादन्य ' इत्यत्र " अपादाने पञ्चमी " इतिसूत्रेणैव पञ्चम्युपपत्त्या "अन्यारात्" इतिसूत्रं व्यर्थमेव स्यादित्यर्थः।

ननु न खलु प्रतियोगिता त्वपादानतास्वरूपा नास्तीति प्रतिसंधाय भगवता पाणिनिनाऽन्यादिशब्दयोगे पञ्चमीविधानार्थम् " अन्याराऽदितर " इत्यादिसूत्रं प्रणीतं किं त्वऽन्यादिशब्दार्थभेदादेः क्रियात्वाभावेन तद्योगे कारकत्वासंभवात् कारकविभक्तिरूपाया अपादानपञ्चम्या असंभवादेवेत्याशङ्कते- अथेति । उत्तरमाह- तत्किमिति । येन तादृशतादृशतारत्वादिरूपक्रियायोगादत्राऽपादानपञ्चमी स्यादिति शेषः । अत्र=' अयमस्मात्तारः ' इत्यत्र, सूत्रान्तरम्= " ल्यब्लोपे कर्मण्यधिकरणे च " इति वार्तिकम्, तथा च ' अयमिमपेक्ष्यतारः ' इत्यर्थे ल्यब्लोपे इति वार्तिकेन कर्मवाचकेदंपदात् पञ्चम्या ' अयमस्मात्तारः ' इतिप्रयोगः संपन्न इत्यर्थः । तस्मात्=उक्तरीत्यात्र सूत्रान्तरेण पञ्चम्याः प्राप्त्यऽसंभवादिति ।

प्रयोगान्तरमुदाहरति- गुण इति । " अन्यारात् " इतिसूत्रेऽन्यपदमन्यार्थकपदपरं भिन्नपदं चान्यार्थकमेवेति तद्योगे पञ्चमी प्राप्तेत्यर्थः । शङ्कते- न चेति । तदर्थकत्व=अन्यार्थकत्व । उत्तरमाह- अन्येतरेति । अन्योन्याभावो हि भेदः पृथक्त्वं च गुण इति विशेषः । ननु " अन्याराऽदितर " इतिसूत्रस्थयोरन्येतरशब्दयोर्मध्ये एकस्य पृथक्त्वविशिष्टार्थपरत्वे हि पुनः " पृथग्विना " इतिसूत्रे पृथक्पदोपादानमनर्थकं स्यादित्याशङ्क्याह- पृथग्विनेति । स्वमत-

कतृतीयोपपत्त्यर्थम् । वस्तुतस्तत्र पृथक्पदमऽसाहित्यार्थकं न तु गुणवदर्थकम् "दुनोति चन्द्रात् पृथगप्यनङ्गः" इत्युदाहरणेऽसाहित्यस्यैव प्रतीतेः ।

न चाऽन्यादिपदं नाऽन्योन्याभावार्थकं किं तु पृथक्त्वरूपगुणविशिष्टार्थकं तथा सति 'घटः पटो न' इत्यादावपि नञस्तदर्थकतया तद्योगे पञ्चम्यापत्तेः, न च तद्विशिष्टार्थकपदपरम्- तस्यापि विशिष्टार्थवाचकत्वात्, नञ्पदं च न तथा तदुपस्थिताभावस्य नामान्तरार्थे भेदान्वयसंभवेन लाघवेन तस्य धर्ममात्रवाचकत्वादिति न तद्योगे पञ्चमीप्रसङ्ग इति वाच्यम्, 'द्रव्याद् गणस्य भेदः' इत्यादौ पञ्चमीनिर्वाहाय भेदार्थकपदस्यैवोपादेयत्वात्. अन्यादिपदस्यापि वाच्यविशेषणभेदार्थकत्वादित्याऽचार्यानुसारिमतम् । तत्र अन्योन्याभाववाचकपदस्य पञ्चम्यनुपयोगित्वे 'द्रव्यादन्यो गुणः' इत्यादौ पञ्चम्यनुपपत्तेः, गुणादौ पृथक्त्वरूपगुणासंभवेनाऽन्योन्याभावस्यैवान्यपदार्थत्वात् । अन्योन्याभावार्थकपद-

---

माह- वस्तुत इति । तत्र="पृथग्विना" इतिसूत्रे । गुणवदर्थकम्=पृथक्त्वगुणविशिष्टपरम् । उक्ते विनिगमकमाह- दुनोतीति ।

नन्वऽन्यादिपदम् (अन्यभिन्नादिपदम्) पृथक्त्वरूपगुणविशिष्टार्थकमेव नत्वन्योन्याभावार्थकं तथा सति=अन्यादिपदस्याऽन्योन्याभावार्थकत्वे नञोपि तदर्थकतया=अन्योन्याभावार्थकतया तद्योगे=नञ्योगे 'घटः पटो न' इत्यादावपि घटादिपदात् पञ्चमी स्यादिति नाऽन्यादिपदमन्योन्याभावार्थकम्, न चाप्यऽन्यादिपदं तद्विशिष्टार्थकपदपरम्=अन्योन्याभावविशिष्टार्थकपदपरं तस्यापि=इतरशब्दस्याप्यन्योन्याभावविशिष्टार्थवाचकत्वेनाऽन्यपदोपादानवैयर्थ्यप्रसङ्गात्, नञ्पदं च न तथा=अन्योन्याभावविशिष्टार्थकं किं त्वऽन्योन्याभावमात्रवाचकमेव तदुपस्थिताभावस्य=नञ्पदोपस्थिताभावस्य निपातार्थत्वेन नामार्थे भेदेन=प्रतियोगिभूतघटादौ स्वप्रतियोगित्वसंबन्धेनानुयोगिभूतपटादौ च स्वानुयोगित्वेन स्वाश्रयत्वेन वा संबन्धेनान्वयसंभवात् तस्य=नञ्पदस्य धर्ममात्र=अन्योन्याभावमात्रवाचकत्वमिति न नञ्पदयोगे पञ्चम्यापत्तिः, पृथक्त्वरूपगुणविशिष्टार्थकपदस्याऽन्योन्याभावविशिष्टार्थकस्यैव च पदस्य पञ्चमीप्रयोजकत्वाश्रयणादित्याशङ्क्याह- न चेति । परिहारमाह-द्रव्यादिति, 'द्रव्याद् गुणस्य भेदः' इत्यादौ पञ्चमीप्राप्त्यर्थं भेदार्थकपदमेव सूत्रे उपादेयमस्तीति सूत्रोक्तान्यादिपदं वाच्यविशेषणभेदार्थकमेव न पृथक्त्वरूपगुणविशिष्टार्थकं पृथक्त्वरूपगुणविशिष्टार्थकपृथक्पदस्य सूत्रान्तरे उपात्तत्वादित्यर्थः । अत्र प्रथमनञ्पदस्थाने अथपदपाठस्तु प्रामादिक एव प्रतिभाति । उक्तपूर्वपक्षे स्वयमपि दोषमुद्घाटयति- तत्रेति । अनुपयोगित्वे=अप्रयोजकत्वे । 'द्रव्यादन्यो गुणः' इत्यत्र गुणसामान्ये पृथक्त्वरूपगुणो न संभवतीत्यत्रान्यपदस्य पृथक्त्ववाचकत्वमपि न संभवतीत्यगत्याऽन्यपदस्याऽन्योन्याभाववाचकत्वमेव स्वीकार्यमित्याह- गुणादाविति । ननु यद्यऽन्योन्याभाववाचकपदयोगे पञ्चमी स्यात्तदा 'घटः पटो न' इत्यादौ नञ्पदयोगेपि पञ्चमी स्यात् नञ्पदस्याप्यन्योन्याभाववाचकत्वादित्याश-

प्रयोगस्य पञ्चमीप्रयोजकत्वे तत्र निपातातिरिक्तत्वविशेषणप्रवेशेनापि नञ्योगे पञ्चमीवारणसंभवात् । वस्तुतस्त्वन्योन्याभावीयप्रतियोगित्वरूपार्थविवक्षायां पञ्चमी, नञ्पदोपस्थापिताभावस्य च प्रतियोगिता न विभक्त्या बोध्यते- नञर्थे प्रतियोगितयैवाऽऽधेयत्वातिरिक्तविभक्त्यर्थान्वयस्य व्युत्पन्नत्वात् 'न चैत्रस्य' इत्यादौ षष्ठ्याद्यर्थस्य नञर्थप्रतियोगित्वादतो न तद्योगे पञ्चमी ।

अथ पृथक्त्वगुणानङ्गीकर्तृमीमांसकमते सूत्रेऽन्येतरपदयोरेकतरोपादानवैयर्थ्यं दुर्वारम्- उक्तरीत्या सार्थकत्वासंभवादिति चेत्?, न- तन्मतेप्येकपदस्य प्राधान्यनाऽन्योन्याभाववाचकस्याऽपरपदस्य चान्योन्याभावविशिष्टवाचकस्य संग्राहकतया सार्थक्यात् ।

न च 'पटाद् भेदः' इत्यादौ क्रियायोगादपादानपञ्चम्येव. धातूपस्थाप्य-

---

ङ्क्याह- अन्योन्याभावार्थकपदप्रयोगस्येति, तत्रेति-निपातातिरिक्तस्यान्योन्याभाववाचकपदस्य योगे पञ्चमी भवतीति वक्ष्यामस्तथा च नञ्पदस्य निपातत्वान्न तद्योगे पञ्चम्यापत्तिरित्यर्थः । स्वाभिप्रायमाह- वस्तुत इति, 'द्रव्यादन्यो गुणः' इत्यादौ द्रव्यादावन्योन्याभावीयप्रतियोगिता विवक्षितास्तीति तामाश्रित्य पञ्चमी भवति पञ्चम्या तादृशप्रतियोगिताबोधसंभवात्. नञ्पदोपस्थापितान्योन्याभावस्य प्रतियोगिता तु पञ्चम्या न बोधयितुं शक्यते- नञर्थे=अभावे आधेयत्वातिरिक्तविभक्त्यर्थस्य प्रतियोगितारूपेणैवान्वयः स्वीक्रियते यथा 'न चैत्रस्य' इत्यत्र षष्ठ्यर्थस्वत्वस्य नञर्थाऽभावे प्रतियोगित्वेनैव रूपेणान्वयो भवति- चैत्रीयस्वत्वप्रतियोगिकाभावस्य प्रतीयमानत्वात्, पञ्चम्यर्थस्य च नञर्थाभावे प्रतियोगित्वरूपेणान्वयाऽसंभवात् तद्योगे= नञ्पदयोगे 'घटः पटो न' इत्यादौ न पञ्चम्यापत्तिरित्यर्थः । 'ग्रामं न गच्छति' इत्यत्र ग्रामवृत्तिसंयोगानुकूलव्यापाराभावस्य प्रतीयमानत्वादभावे वृत्तित्वस्य प्रतियोगितावच्छेदकतावच्छेदकत्वेन रूपेणान्वयोस्ति 'भूतले घटो नास्ति' इत्यत्र च भूतलवृत्तिघटाभावस्य प्रतीयमानत्वादभावे वृत्तित्वस्य प्रतियोगितावच्छेदकतारूपेणान्वयोस्ति न तु प्रतियोगित्वेन रूपेणेत्यभिप्रायेणोक्तम्- आधेयत्वातिरिक्तेति ।

मीमांसकमतमुद्दिश्याशङ्कते- अथेति । उक्तरीत्येति-उभयोरप्यन्येतरपदयोरेकार्थत्वादेकस्यानर्थक्यमित्यर्थः । परिहरति- नेति । एकपदस्येति- अन्येतरपदयोर्मध्ये एकस्यान्योन्याभाववाचकभेदादिपदसंग्राहकतया सार्थक्यमपरस्याऽन्योन्याभावविशिष्टवाचकभिन्नादिपदसंग्राहकतया सार्थक्यमित्यर्थः । भिन्नादिपदस्य भेदविशिष्टवाचकत्वं सुस्पष्टमेव ।

शङ्कते- न चेति, 'पटाद् भेदः' इत्यत्राऽपादानपञ्चम्यपि संभवत्येव भेदपदप्रकृतिभूतभिदधातुना क्रियाया उपस्थितत्वादिति "अन्यारात्" इतिसूत्रेऽन्यतरपदयोर्मध्येऽन्योन्याभाववाचकभेदादिपदसंग्राहकस्यैकस्योपादानमनर्थकमेवेत्याशयः । यद्यपि धातपस्थाप्यक्रियापदार्थप्रतियोगिताया अपादानतारूपत्वे 'घटे वर्तते' इत्यत्रापि घटस्यापादानत्वापत्त्या तदुत्तरं

पदार्थप्रतियोगिताया अपादानतारूपत्वे ' घटे वर्तते ' इत्यादौ पञ्चमीप्रसङ्गस्य परत्वेनाधिकरणसप्तम्यादिना बाधादेवानवकाशात्. अभावीयविलक्षणप्रतियोगितायाः एव वा तथात्वात्. ' घटादन्यत्वम् ' इत्यादौ चाऽपादानत्वासंभवेप्यन्यपदयोगेनैव पञ्चमी तत्रान्यपदाद्विशेषणतया भासमानभेदे एव पञ्चम्यर्थान्वयोपगमात् न तु भावप्रत्ययात् प्राधान्येन भासमाने तस्मिन्. पदार्थैकदेशे इव वृत्त्येकदेशे ससंबन्धिके प्रतियोगिसंबन्धान्वयस्य व्युत्पत्तिसिद्धत्वादिति वाच्यम्, प्राधान्येन भावप्रत्ययाद् भासमानेप्यन्यत्वे घटपटादिप्रतियोगिकत्वान्वयविवक्षया ' घटादन्यत्वम् ' इतिप्रयोगात् तन्निर्वाहायैवाऽन्येतरपदद्वयोपादानात् ।

अथ वा " ध्रुवमपाये " इत्यत्रावधित्वमेव विवक्षितं न तु प्रतियोगित्वम्—उभयानुगमकरूपाभावादिति ' पटाद् भेदः ' इत्यादौ पञ्चम्युपपत्तयेऽन्येतरपदोपादानम् ।

---

पञ्चमी संभवति तथाप्यत्र पञ्चम्याः सप्तम्या बाधो भवति परत्वादिति नात्र पञ्चमीप्रसङ्ग इत्याह—धातूपस्थाप्येति । धातूपस्थाप्यक्रियापदार्थं प्रति घटस्य कारकत्वेन प्रतियोगित्वं विज्ञेयम् । पक्षान्तरमाह— अभावीयेति । तथात्वात्=अपादानतारूपत्वात् तथा चान्यादिपदप्रयोगे एवाऽभावीयतादृशविलक्षणप्रतियोगितायाः प्रतीयमानत्वादन्यादिपदयोगे पञ्चमी भवति अन्यत्र च तस्या अप्रतीयमानत्वान्न ' घटे वर्तते ' इत्यादौ पञ्चम्यापत्तिरित्यर्थः । प्रयोगान्तरमुदाहरति— घटादन्यत्वमिति । अत्र क्रियायोगाभावादपादानत्वासंभवः । ननु ' घटादन्यत्वम् ' इत्यत्रान्यपदोपस्थापितभेदे पञ्चम्यर्थप्रतियोगिकत्वस्य यद्यऽन्वयः स्यात्तदाऽन्यपदयोगेनात्र पञ्चमो स्यादपि न त्वेवं संभवति— अत्रान्यपदोत्तरत्वप्रत्ययार्थभेदस्यैव प्रधानत्वात् तत्रैव पञ्चम्यर्थान्वयः स्यान्नत्वन्यपदोपस्थितभेदे इत्याशङ्क्याह— तत्रेति । भावप्रत्ययात्=त्वप्रत्ययात् । त्वप्रत्ययस्य भावे सत्त्वेनात्र भेदबोधकत्वं ज्ञेयम् । तस्मिन्=भेदे । ननु 'अन्यत्वम्' इति तद्धितवृत्तिरस्ति तत्रान्यपदोपस्थापितो भेदो वृत्त्येकदेश एव तादृशवृत्त्येकदेशे पञ्चम्यर्थस्य कथमन्वयः स्यादित्याशङ्क्याह— पदार्थैकदेशे इति, भेदो हि ससंबन्धिकपदार्थः— अन्यसापेक्षत्वादिति तादृशे ससंबन्धिके वृत्त्येकदेशभूतेप्यन्यपदोपस्थापितभेदे प्रतियोगिभूतघटादिपदार्थसंबन्धरूपस्य पञ्चम्यर्थस्यान्वयः संभवत्येवेत्यर्थः । परिहारमाह— प्राधान्येनेति, ' घटादन्यत्वम् ' इत्यत्र त्वप्रत्ययोपस्थापितभेदेपि विवक्षायां सत्यां पञ्चम्यर्थस्य घटादिप्रतियोगिकत्वस्यान्वयो भवत्येवेति तन्निर्वाहायैवान्येतरपदयोरुपादानं तत्रैकस्य प्राधान्येन भासमाने भेदे पञ्चम्यर्थान्वयार्थं पञ्चमीप्रयोजकत्वात्सार्थक्यमऽपरस्य विशेषणतया भासमाने भेदे पञ्चम्यर्थान्वयार्थं पञ्चमीप्रयोजकत्वेन सार्थक्यं यथा ' घटाद् भिन्नः ' इत्यत्र ।

पक्षान्तरमाह— अथ वेति । विवक्षितमित्यत्र ध्रुवपदेनेति शेषः । उभयानुगमकरूपस्य=अवधित्वप्रतियोगित्वैतदुभयानुगमकरूपस्य । तथा च ' पटाद् भेदः ' इत्यादौ पटादेः " ध्रुवम-

**वस्तुतस्त्वन्येतरपदं स्वरूपपरमेव. अर्थपरत्वे 'घटादन्यः' इतिवद् 'घटादेकः' इतिप्रयोगापत्तेः ।**

**यदि चैकपदस्यान्यत्वरूपेण नाऽन्यार्थकताऽपि तु समभिव्याहृतान्यत्वोपलक्षिते वस्तुनि वक्तृबुद्धिविषयतावच्छेदकघटत्वादिनैव- 'चैत्र एकमानयति मैत्रश्चापरम्' इत्यादौ घटत्वपटत्वादिनैवाऽऽनयनकर्मतादिप्रतीतेर्न तु पटघटान्यत्वादिना-अन्यत्वान्वयिप्रतियोगिवाचकपदासमभिव्याहारात्, अन्यथा तद्योगे पञ्चम्या असाधुत्वेपि 'घटस्यैकः' इतिप्रतियोगिनि षष्ठ्यापत्तेर्दुर्वारत्वादित्युच्यते ? तदाप्यन्यार्थकतदादियोगे पञ्चमीप्रयोगापत्त्याऽर्थग्रहणासंभव इति, तथा च 'पटाद् भिन्नम्' 'घटाद् भिद्यते' इत्यादौ पञ्चमीनिर्वाहाय तत्राऽपादानत्वमेव कथंचिदुपपादनीयम् ।**

---

पाये" इत्यनेनाऽपादानत्वं न संभवतीति पञ्चमी न स्यादिति पञ्चमीप्राप्त्यर्थमन्येतरपदोपादानं तत्रैकस्य भेदवाचकपदसंग्राहकत्वादपरस्य भेदविशिष्टवाचकपदसंग्राहकत्वात्सार्थक्यमिति 'पटाद् भेदः' 'पटाद् भिन्नः' इत्याद्युपपन्नमित्यर्थः ।

वस्तुत इति- तथा च "अन्यारादितर" इतिसूत्रेण 'पटादन्यः' 'पटादितरः' इत्यत्रैव पञ्चमी न तु 'पटाद् भेदः' इत्यादावपि, अत्र पञ्चमीप्राप्तेरुपायं वक्ष्यति । विपक्षे बाधकमाह- अर्थपरत्वे इति, एकशब्दस्याप्यन्यार्थकत्वात्तदुक्तममरेण "एके मुख्यान्यकेवलाः" इति ।

नन्वेकपदस्य हि वक्तृबुद्धिविषयतावच्छेदकं यद् घटत्वादिकं तेन रूपेणैवान्यार्थकतास्ति- 'चैत्र एकमानयति मैत्रश्चापरम्' इत्यादावेकपदबोध्ये वस्तुनि समभिव्याहृतैकपदोपस्थितान्यत्वोपलक्षिते बुद्धिविषयतावच्छेदकेन घटत्वादिरूपेणैवानयनकर्मतायाः प्रतीयमानत्वाद् न त्वत्र पटाद्यन्यत्वरूपेणानयनकर्मता प्रतीयते- निरूपकत्वसंबन्धेनान्यत्वान्वयी यः प्रतियोगी तद्वाचकघटादिपदप्रयोगस्यात्राभावात् प्रतियोग्युपस्थितिं विनाऽन्यत्वान्वयाऽसंभवात् तस्मादेकपदस्य नाऽन्यत्वरूपेणाऽन्यार्थकता येनैकपदयोगे पञ्चम्यापत्त्या 'घटादेकः' इतिप्रयोगापत्तिः स्यादित्याशङ्कते- यदि चेत्यादिना । अन्यथेति-अन्येतरपदयोः स्वरूपमात्रपरत्वेनैकपदाऽसंग्राहकत्वे तद्योगे=एकपदयोगे पञ्चम्या असाधुत्वेप्येकपदस्यान्यत्वरूपेणान्यार्थकत्वे 'घटस्यैकः' इत्येवं प्रतियोगिवाचकघटपदात् षष्ठी स्यादेव प्रतियोगिवाचकघटपदोपस्थितघटे एकपदोपस्थितान्यत्वस्यान्वयसंभवात्, तस्मान्नैकपदस्यान्यत्वरूपेणान्यार्थकता तथा चान्येतरपदयोः स्वसमानार्थकपदसंग्राहकत्वेप्येकपदयोगे पञ्चम्यापत्तिर्नास्ति-एकपदेन घटादेर्घटत्वादिनैव प्रतिपादनादन्यत्वरूपेण चाऽप्रतिपादनात् अन्यत्वेनाऽन्यत्वार्थकपदयोगे एव "अन्यारात्" इतिसूत्रेण पञ्चमीसंभवादिति नाऽन्येतरपदयोः स्वरूपमात्रपरत्वमित्यर्थः । उत्तरमाह- तदापीति, अन्येतरपदयोरर्थपरत्वेन स्वसमानार्थकपदसंग्राहकत्वे ह्युक्तरीत्या एकपदाऽग्राहकत्वेपि यत्र 'यः खलु नीलघटादन्यः स घटो ग्राह्यः' इत्यादौ तत्पदस्याप्यन्यार्थकतास्तीति तत्र ताद-

तथा हि—भिद्धातोर्नाऽन्योन्याभावोऽर्थः 'घटाद् भिनत्ति पटः' इतिप्रयोगापत्तेः 'भिद्यते पटः' इत्यादिप्रयोगानुपपत्तेश्च—कर्तरि यगात्मनेपदासंभवात्, अदैवादिकत्वात् परस्मैपदित्वाच्च श्यन्कर्त्रात्मनेपदयोरनवकाशात्, अकर्मकधातुयोगे कर्मकर्तृविवक्षाया अप्ययोगात्, कस्यचिदकर्मकस्य ण्यर्थान्तर्भावेन कर्मकर्तृत्वमुपपादनीयम्, अन्योन्याभावस्याऽजन्यतया तदर्थकधातोरर्थेपि ण्यर्थान्तर्भावस्य दुष्करत्वात् । 'भिद्यते कुसूलः' इत्यादौ भिदेर्विदारणार्थकत्वेन सकर्मकतया कुसूलादेः कर्मकर्तृत्वसंभवात्, अतोऽन्यत्वेन ज्ञापनं भिदेरर्थः, ज्ञापनम्=ज्ञानविषयताप्रयोजकव्याप्तिपक्षधर्मता तदाश्रयोऽसाधारणधर्म एव भिदा-

---

तदादिपदयोगे पञ्चम्यापत्त्या 'स घटात्' इत्यादिप्रयोगापत्तिः स्यादित्यऽन्येतरपदयोरर्थपरत्वं न युक्तं किं तु स्वरूपमात्रपरत्वमेवेत्यर्थः । नन्वऽन्येतरपदयोः स्वरूपपरत्वे हि 'पटाद् भिन्नम्' इत्यादौ पञ्चमी न स्यादित्याशङ्क्याह—तथा चेति ।

'पटाद् भिन्नम्' इत्यादौ पटादेरपादानत्वमुपपादयति—तथा हीत्यादिना । भिद्धातोरन्योन्याभावार्थकत्वे "अन्योन्याभावीयप्रतियोगित्वार्थविवक्षायां पञ्चमी ५०४" इत्युक्तरीत्या पञ्चम्यापत्त्या 'घटाद् भिनत्ति पटः' इतिप्रयोगः स्यादेव । 'भिद्यते पटः' इतिप्रयोगश्च न स्यादित्यर्थः । प्रयोगानुपपत्तिं प्रदर्शयति—कर्तरीति । ननु 'भिद्यते पटः' इत्यत्र कर्मभूतपटस्य कर्तृत्वविवक्षायां यगात्मनेपदयोरापत्त्या 'भिद्यते' इति किं न स्यादित्याशङ्क्याह— अकर्मकेति, कर्म हि सकर्मकधातोर्भवति तत्र कर्मणः कर्तृत्वविवक्षा संभवति, अकर्मकधातोस्तु कर्मैव न भवतीति कस्य कर्तृत्वविवक्षा स्यात्? अयं च सकर्मकविदारणार्थकभिद्धात्वपेक्षयाऽन्य एवाऽकर्मको भिद्धातुरित्यर्थः । यद्यपि कस्य चिदकर्मकधातोरपि ण्यर्थान्तर्भावेन=अकर्मकधात्वर्थे ण्यर्थस्य प्रेरणाया अन्तर्भावेन कर्मकर्तृत्वं भवति यथा 'भूयते ओदनः' इति भूधातोरकर्मकत्वेऽपि तदर्थे ण्यर्थभावनाया अन्तर्भावे कृते ण्यर्थभावनानुकूलव्यापारं प्रति चौदनस्य कर्मत्वसंभवात् तादृशौदनस्य कर्मभूतस्य कर्तृत्वविवक्षासंभवाच्च तत्रौदनस्योत्पत्तिमत्त्वेन कर्मत्वं संभवति तथाप्यन्योन्याभावार्थकभिद्धातोस्तु ण्यर्थान्तर्भावेनापि कर्मकर्तृत्वं न संभवति—अन्योन्याभावस्य नित्यत्वेनाजन्यतया ण्यर्थव्यापारं प्रत्यपि कर्मत्वासंभवात् जन्यस्यैव कर्मत्वसंभवादिति तदर्थकधातोः=अन्योन्याभावार्थकभिद्धातोरर्थे ण्यर्थान्तर्भावस्यापि दुष्करत्वात् ( ण्यर्थस्यान्तर्भावासंभवात ) इत्याह—कस्यचिदिति । नन्वेवं हि 'भिद्यते कुसूलः' इति कर्मकर्तृत्वेनाभिमतोपि प्रयोगो न स्यादित्याशङ्क्याह— भिद्यते कुसूल इति, अयं हि विदारणार्थकत्वात्सकर्मक एव भिद्धातुरिति तत्कर्मभूतकुसूलस्य कर्तृत्वेन विवक्षा संभवतीति न कर्मकर्तृत्वेन 'भिद्यते कुसूलः' इति प्रयोगानुपपत्तिरित्यर्थः । एवं हि भिद्धातोरन्योन्याभावार्थकत्वे 'भिद्यते पटः' इतिप्रयोगो नोपपद्यते इति भिद्धातोरर्थमाह— अत इति । ज्ञापनपदार्थमाह—ज्ञानेति, ज्ञानविषयता=साध्यविषयकज्ञानविषयता तत्प्रयोजिका या व्याप्तिः पक्षधर्मता च तदेव ज्ञापनपदार्थो यथा 'पृथिवी-

दिकर्तृत्वाद् भेदक उच्यते. अन्यत्वप्रकारकानुमितिविषयतारूपधात्वर्थतावच्छेदकफलाश्रयो भिदादिकर्मतया भेद्यः, एवं च 'पृथिवीतरेभ्यो भिद्यते' इत्यादौ पृथिव्यादेः कर्मतैव न केवलकर्तृता। अन्योन्याभावे साध्ये सर्वतान्त्रिकाणां तादृशप्रतिज्ञालेखनं केषां चिदनवधानेन। प्रतिज्ञास्थवह्न्यादिपदं वह्न्यादिज्ञानविषयतार्थकम्। हेत्ववयवस्थपञ्चम्या ज्ञाप्यत्वं नार्थोऽपि तु प्रयोज्यत्वमेवेति। मणिकारादिमतानुसारेण केषां चिदिति सूक्ष्मविवेचनचतुराः।

'अर्जुनः क्रोशाल्लक्ष्यं विध्यति' 'अद्य भुक्त्वाऽयं द्व्यहाद् भोक्ता' इत्यादौ "सप्तमीपञ्चम्यौ कारकमध्ये" इतिपञ्चमी प्रकृत्यर्थयोरध्वकालयोः

---

तरेभ्यो भिद्यते' इत्यस्य 'पृथिवीतरेभ्योऽन्यत्वेन ज्ञाप्यते' इत्यर्थो जातः। तदाश्रयः=उक्तज्ञापनाश्रयोऽसाधारणधर्म एव यथात्र गन्धवत्त्वं तदेव गन्धवत्त्वमितरभेदज्ञापकतया पृथिव्या इतरेभ्यो भेदक इत्युच्यते भिदादिकर्तृत्वात्=भेदकत्वात् तथाऽन्यत्वप्रकारिका या 'पृथिवीतरेभ्यो भिद्यते गन्धवत्त्वात्' इत्यनुमितिस्तदीयविषयतैवात्र ज्ञापनार्थकभिद्धात्वर्थतावच्छेदकं फलमस्तीति तदाश्रयो या पृथिवी सैवात्र भिदधातुकर्मतया ( धात्वर्थतावच्छेदकफलशालित्वं कर्मत्वमिति स्मर्तव्यम् ) भेद्याऽस्तीत्यर्थः। ज्ञापनं हि ज्ञापकधर्म एव ज्ञापकं च हेतुरेव भवतीत्यत्र गन्धवत्त्वरूपहेतुनिष्ठा या व्याप्तिविशिष्टपक्षधर्मता सैव ज्ञापनपदार्थः- व्याप्तिविशिष्टपक्षधर्मताविशिष्टस्यैव हेतोर्ज्ञापकत्वसंभवादिति यावत्। 'पृथिवीतरेभ्यो भिद्यते' इत्यत्र पृथिव्याः केवलम्=शुद्धं कर्तृत्वं नास्ति किं तु कर्मकर्तृत्वमेव-अत्र भिदधातोर्ज्ञापनार्थकत्वेन सकर्मत्वात् सकर्मकधातोश्च कर्मकर्तृत्वसंभवादित्याशयेनाह-एवं चेति। ननु सर्वे शास्त्रकारा अन्योन्याभावसिद्ध्यर्थमेव 'पृथिवीतरेभ्यो भिद्यते' इति प्रतिज्ञां विलिखन्ति तत्तु भिद्धातोरन्योन्याभावार्थकत्वे एवोपपद्यते न तु ज्ञापनार्थकत्वे तथा सति पृथिव्या अन्यत्वेन ज्ञानविषयत्वमेव सिद्ध्येत न तु भिन्नत्वमित्याशङ्क्याह- अन्योन्याभावेति, कैश्चित्प्रमादाद् भिदधातुरन्योन्याभावार्थको ज्ञात इत्यन्यैरप्यन्योन्याभावार्थक एवात्र ज्ञातो वस्तुतस्त्वत्र भिदधातुर्ज्ञापनार्थक एवेत्यर्थः। तादृशप्रतिज्ञालेखनम्='पृथिवीतरेभ्यो भिद्यते' इतिप्रतिज्ञालेखनम्। वस्तुतस्त्वेषानुमितिरन्यत्वेन ज्ञापनार्थमेव विज्ञेया नाऽन्योन्याभावसाधनार्थमिति यावत्। प्रसङ्गसङ्गत्याऽन्यदपि किंचिदाह- प्रतिज्ञास्थेति। हेतुपरधूमादिपदं च धूमादिज्ञानपरमिति शेषस्तथा च 'वह्निमान् धूमात्' इत्यस्य 'धूमज्ञानप्रयोज्या या वह्निविषयकज्ञानविषयता तदाश्रयः पर्वतः' इति बोधाकारः- वह्निमानित्याकारकवह्निविषयकज्ञानविषयतायाः=वह्निप्रकारकज्ञानीयविशेष्यताख्यविषयतायाः पर्वतेपि सत्त्वादिति भावः। 'पृथिवीतरेभ्यो भिद्यते गन्धवत्त्वात्' इत्यस्य च गन्धवत्त्वज्ञानप्रयोज्या याऽन्यत्वप्रकारकज्ञापनविषयता तदाश्रयः पृथिवीति वा बोधः। उक्तकेषांचिदिति पदेनाभिप्रेतमुद्घाटयति- मणिकारादीति।

प्रयोगान्तरमुदाहरति-अर्जुन इति। प्रकृत्यर्थयोरिति-प्रथमोदाहरणे 'क्रोशात्' इतिपञ्चम्य-

कारकद्वयव्यवधायकतामभिधत्ते. तथा च स्वाधिष्ठितदेशानन्तरक्रोशात्मकाध्व-भागानन्तरदेशस्थं लक्ष्यं विध्यत्यर्जुन इत्यादिः प्रथमस्थले बोधः, समभिव्याहृत-कर्त्रधिष्ठितदेशानन्तर्यं विशेषणतया प्रकृत्यर्थान्वयि. विशेष्यतया प्रकृत्यर्थान्वयि चानन्तरदेशस्थत्वं पञ्चम्यर्थः । स्वीयैकार्थान्वितापरपदार्थान्वितापरस्वार्थबो-धकत्वमप्यत्र व्युत्पत्तिवैचित्र्यादेकपदस्य स्वीक्रियते । भोजनकृत्यधिकरणैतद्-दिवसानन्तरद्व्यहानन्तरदिनवृत्तिभोजनकृतिमानयमित्याकारकबोधश्चरमस्थले ।

---

प्रकृत्यर्थभूतस्याध्वनः, कारकद्वयव्यवधायकताम्=अर्जुनरूपकर्तृकारकस्य लक्ष्यभूतकर्मकारकस्य च मध्ये व्यवधानभूतः क्रोशात्मकोऽध्वा वर्तते इति क्रोशपदोत्तरपञ्चम्यभिधत्ते, तथा द्वितीयोदा-हरणे ' द्व्यहात् ' इति पञ्चम्यन्तप्रकृत्यर्थभूतस्य कालस्य कारकद्वयव्यवधायकतामभिधत्ते=अद्य-भोजनकर्तृरूपकारकस्य द्व्यहानन्तरभोजनकर्तृरूपकारकस्य च मध्ये द्व्यहात्मकः कालो वर्तते इति द्व्यहपदोत्तरपञ्चम्यभिधत्ते: इत्यर्थः, यद्यप्यत्राद्य द्व्यहादनन्तरं चैक एव भोजनकर्तेति न कालस्य व्यवधायकत्वं संगच्छते पदार्थद्वयमध्यपतितस्यैव व्यवधायकत्वात्तथाप्यत्र कर्तृकारक-पदेन कृतिरूपं कर्तृत्वं ग्राह्यं तच्च भोजनक्रियाव्यक्तिभेदाद् भिन्नं भिन्नमेवेति तद्व्यवधायकता कालस्य नानुपपन्ना. इदं च स्वयमेवाग्रे वक्ष्यति-कारकद्वयमध्यवर्तितेत्यादिना । ' अर्जुनः क्रोशात् ' इत्यस्य वाक्यार्थमाह- स्वाधिष्ठितेति । स्वम्=अर्जुनः । यस्मिन् देशेऽर्जुनस्तिष्ठति ततः क्रोशात्मकाध्वभागादनन्तरदेशस्थं लक्ष्यं विध्यतीत्यर्थः । अत्रत्यपञ्चम्या अर्थमाह- समभि-व्याहृतेति, " स्वाधिष्ठितदेशानन्तरक्रोशात्मकाध्वभागानन्तरदेशस्थम् " इत्यत्र पूर्वपूर्वपदार्थ-स्योत्तरोत्तरपदार्थे विशेषणत्वादुत्तरोत्तरस्य च विशेष्यत्वात् समभिव्याहृतो योऽर्जुनरूपः कर्ता तदधिष्ठितदेशानन्तरत्वं विशेषणतया=विशेषणत्वेन रूपेण प्रकृत्यर्थे=क्रोशपदार्थेऽन्वेति स च क्रोशपदार्थोपि अनन्तरदेशस्थत्वपदार्थे विशेषणमस्तीति तादृशानन्तरदेशस्थत्वं विशेष्यतया=विशेष्यत्वेन रूपेण प्रकृत्यर्थे क्रोशपदार्थेऽन्वेतीति पदार्थास्तत्र प्रकृत्यर्थभूतक्रोशपदार्थे यद्विशेष-णतयान्वयि अनन्तरदेशस्थत्वं यच्च विशेष्यतयान्वयि अनन्तरदेशस्थत्वं तदुभयमेवाऽनन्तरदेश-स्थत्वं पञ्चम्यर्थः इत्यर्थः । नन्वेकस्य पञ्चमीरूपपदस्यैकस्मिन्नेवोदाहरणे कथमुक्तानन्तरदेशस्थत्व-द्वयबोधकत्वं स्यात् ? " सकृदुच्चरितः शब्दः सकृदेवार्थं गमयति " इति नियमादित्याशङ्क्या-ह- स्वीयैकार्थेति, स्वम्=पञ्चमी । स्वीयः=पञ्चम्या य एकोर्थः=स्वा ( अर्जुना ) धिष्ठितदेश-ानन्तर्यं तदन्वितो योऽपरपदार्थः=क्रोशात्मकाध्वभागपदार्थस्तदन्वितो योऽपरः स्वार्थः=पञ्च-म्यर्थभूतमनन्तरदेशस्थत्वं तद्बोधकत्वमप्यत्र व्युत्पत्ति( बोध )वैचित्र्यादेकपदस्य=पञ्चम्याः स्वीक्रियते तथा चात्र स्वाधिष्ठितदेशानन्तरत्वविशिष्टक्रोशात्मकाध्वभागानन्तरदेशस्थत्वं विशिष्टमे-कमेव पञ्चम्यर्थोस्तीति न " सकृदुच्चरितः " इत्यादिनियमविरोधोपीत्यर्थः । द्वितीयोदाहरणस्य वाक्यार्थबोधस्वरूपमाह- भोजनकृतीति, भोजनानुकूलकृत्यधिकरणीभूतो य एतद्दिवसस्तद-नन्तरभूतो यो द्व्यहकालस्तदनन्तरवर्तितृतीयदिने यद् भोजनं तदनुकूलकृतिमानित्यर्थः ।

कारकपदेन क्रियानुकूलव्यापाररूपकारकपदार्थतावच्छेदकस्यापि विवक्षया एकक्रियानुकूलकृत्यन्वयिनः प्रकृत्यर्थकालानन्तरकालीनत्वस्य प्रकृत्यर्थविशेषणीभवदऽपरक्रियानुकूलकृत्यधिकरणकालानन्तर्यस्य च बोधकत्वेपि पञ्चम्युपपत्तिः । कारकद्वयमध्यवर्तिता चात्र कालस्य नोपपद्यते—कर्तुरैक्यात्. अत एवोक्तम्—" कर्तृशक्त्योर्मध्ये चैकः कालः " इति ॥

॥ इति पञ्चम्यर्थनिरूपणं समाप्तम् ॥

---

यद्यपि कारकपदं क्रियाविशिष्टस्य वाचकं तथाप्यत्र भोजनक्रियाकर्तुरैक्यात्तद्व्यवधायकत्वं कालस्य न संभवतीत्यत्र कारकपदेन भोजनानुकूलकृतिरूपो व्यापार एव विवक्षितोऽस्ति स च कृतिरूपो व्यापारः क्रियानुकूलोऽस्ति कारकपदार्थतावच्छेदकोप्यस्ति तादृशव्यापारविशिष्टस्य कारकत्वेन तत्र तादृशव्यापारस्य विशेषणत्वादित्याह— कारकपदेनेति । अत्रत्यं पञ्चम्यर्थमाह— एकक्रियेति, एकक्रियानुकूलकृत्यन्वयिनः=जनकतासंबन्धेन कृत्यन्वयिनो द्व्यहानन्तरकालवृत्तिभोजनव्यापारस्य प्रकृत्यर्थकालानन्तरकालीनत्वम्=प्रकृत्यर्थकालो द्व्यहकालस्तदनन्तरकालिकत्वं तृतीयदिनवृत्तित्वम्. उक्तवाक्यार्थबोधे हि प्रकृत्यर्थे=द्व्यहकाले विशेषणीभूता याऽपरक्रिया=अद्यतनभोजनव्यापारस्तदनुकूला या कृतिस्तदधिकरणीभूतो योद्यतनकालस्तदानन्तर्यं तदनन्तरकालवृत्तित्वं च पञ्चम्या बोध्यते. एतदर्थद्वयस्य पञ्चम्या बोध्यमानस्य प्रकृते भोक्तेतिप्रकृतिप्रतिपाद्यभोजनव्यापारे बाधो नास्तीति तत्प्रतिपादनार्थं पञ्चम्या उपपत्तिरित्यर्थः । अत्र द्व्यहानन्तरकालिकभोजने द्व्यहानन्तरत्वमद्यतनकालानन्तरत्वं च पञ्चम्या प्रतीयते इति यावत् । यद्यप्यत्र द्व्यहानन्तरकालवृत्तित्वबोधनेनाऽद्यतनकालानन्तर्यमर्थादेव प्राप्नोतीति न तद्बोधनापेक्षा तथापि क्त्वाप्रत्ययवशात् अद्यपदसमभिव्याहारवशाच्च तद्बोधकत्वमपि प्राप्तमित्यवधेयम् । अद्यतनभोजनस्य द्व्यहानन्तरकालवृत्तिभोजनस्य च कर्ता एक एवेति कारकद्वयाभावात् कारकद्वयमध्यवर्तिताऽत्र कालस्य नोपपद्यते इत्यस्माभिरत्र कारकपदेन कारकतावच्छेदककृतिरूपव्यापारो गृहीतस्तादृशव्यापारस्य कालभेदेन भेदात् तन्मध्यवर्तिता कालस्य नानुपपन्नेत्याह— कारकद्वयेति । अन्यैरप्यत्र कारकपदेन कर्तृत्वं ( कृतिः ) गृहीतं तच्च तन्निरूपकव्यापारभेदात् कालभेदाच्च भिन्नमेवेति तन्मध्यवर्तिता कालस्योपपद्यते इत्याह— एत एवेति । कर्तृशक्त्योः=कर्तृत्वयोः ।

॥ इति व्युत्पत्तिवादादर्शे पञ्चमीकारकम् ॥

---

# अथ षष्ठी

स्वसंबन्धविवक्षायां कारकविभक्त्यप्रसक्तेः " शेषे षष्ठी " इत्यनेन ' चैत्रस्येदम् ' इत्यादौ षष्ठी। ' चैत्रस्य द्रव्यम् ' ' घटस्य कारणम् ' ' चैत्रस्य हस्तः ' इत्यादौ स्वत्वनिरूपितत्वावयवत्वादीनां संबन्धत्वेनैव षष्ठ्यर्थता न तु विशिष्य– शक्त्यानन्त्यप्रसङ्गात्। संयोगादिसंबन्धसत्त्वेपि ' चैत्रस्य नेदं वासः ' इत्यादौ स्वत्वादिसंबन्धविशेषाभावबोधतात्पर्येण यत्र नञ्प्रयुज्यते तत्र विशेषरूपेण षष्ठ्या लक्षणैव, " सुब्विभक्तौ न लक्षणा " इतिप्रवादस्य ' अनुशासनाऽसत्त्वे एकविभक्त्यर्थेऽपरविभक्तेर्न लक्षणा ' इत्येतत्परत्वात्। अत एव च " कृद्योगापि हि षष्ठी संबन्धत्वेनैव बोधयति " इति मिश्राः। इत्थमेव च संबन्धत्वेन कर्मत्वादिविवक्षया ' मातुः स्मृतम् ' इत्यादौ " अधीगर्थ " इत्यादिषष्ठ्यनुशासनस्य नियमपरतया सार्थक्योपपादनं वृत्तिकृतामुपपद्यते, संबन्धत्वविशिष्टसंबन्धविवक्षायाम् " शेषे षष्ठी " इत्यस्य षष्ठ्यऽविधायकत्वे तादृशानुशा-

---

क्रमप्राप्तं षष्ठ्यर्थनिरूपणमारभते– स्वसंबन्धेति, ' चैत्रस्येदम् ' इत्यत्रेदंपदबोध्ये चैत्रप्रति- योगिकस्वत्वबोधकत्वं कस्यापि कारकविभक्तेर्नास्ति–कर्मत्वादिबोधकत्वादिति षष्ठ्येव जायते त्यर्थः। स्वत्वेति– ' चैत्रस्य द्रव्यम् ' इत्यत्र स्वत्वस्य ' घटस्य कारणम् ' इत्यत्र निरूपित- त्वस्य ( घटनिरूपितकारणम् ) ' चैत्रस्य हस्तः ' इत्यत्रावयवत्वस्य च सामान्यतः संबन्धत्वेन पेण षष्ठ्यर्थता। विशिष्य=स्वत्वत्वादिरूपेण। ननु यदि संबन्धस्य संबन्धत्वेनैव रूपेण ष्ठ्यर्थता न तु विशेषरूपेण तदा ' चैत्रस्य नेदं वासः ' इत्यादौ चैत्रसंयोगस्य वाससि त्त्वादेव कथं संबन्धाभावो नञा बोध्येतेत्याशङ्क्याह– संयोगादीति। तत्र स्वत्वादिसंबन्धे ष्ठ्या लक्षणा तदभावो नञा बोध्यते इत्यर्थः। विशेषरूपेण=विशेषरूपावच्छिन्ने स्वत्वादिसंबन्धे। नु सुब्विभक्तौ तु लक्षणा न भवतीति कथं षष्ठ्याः स्वत्वादौ लक्षणा स्यादित्याशङ्क्याह– सुब्विभक्ताविति। अनुशासनसत्वे त्वेकविभक्त्यर्थेऽपरविभक्तेर्लक्षणा भवत्येव यथा तृतीयाद्वि- तीयार्थभूतयोः कर्तृकर्मणोः कृद्योगे षष्ठ्या इत्यर्थः। अत एव=षष्ठ्याः संबन्धत्वेनैव संबन्ध- विशेषबोधकत्वादेव कृद्योगापि षष्ठी ' कृष्णस्य कृतिः ' इत्यादौ कर्तृत्वादिकं संबन्धत्वेनैव रूपेण बोधयतीति मिश्रा इत्यर्थः। नियमपरतयेति– यद्यपि ' मातुः स्मरणम् ' इत्यादौ शेषे षष्ठी संभवतीति " अधीगर्थ " इतिसूत्रं व्यर्थमेव स्यात्तथापि अधीगर्थदयेशां योगे कर्मत्व- स्यैव संबन्धत्वेन विवक्षायां षष्ठी स्यान्न तु कर्तृत्वादीनामपि संबन्धत्वेन विवक्षायामिति नियमे- नास्य सूत्रस्य वैयर्थ्यं नास्तीत्यर्थः। यदि संबन्धत्वविशिष्टसंबन्धविवक्षायाम्=संबन्धत्वेन रूपेण संबन्धविवक्षायाम् "शेषे षष्ठी" इत्यस्य षष्ठीविधायकत्वं न स्यात् किं तु स्वत्वादिविशेषरूपेणैव संबन्धविवक्षायां षष्ठीविधायकत्वं स्यात्तदा 'मातुः स्मृतम्' इत्यत्र स्मरणकर्मभूतमातृवाचकमातृ-

सनस्य विधित्वमेव स्यात् । अत एव च " आमं शूद्रस्य पक्वान्नं पक्वमुच्छिष्टमुच्यते " इत्यत्र ' पक्वम् ' इत्यत्रानुषज्यमानायाः षष्ठ्याः संबन्धत्वेन कर्तृत्वमर्थो न तु स्वत्वम्- शूद्रकर्तृकवृषोत्सर्गे चरुहोमानुपपत्तेरिति नवीनस्मार्तानां मतमप्युपपद्यते ।

न च तत्र कृद्योगा षष्ठी कर्तृत्वत्वेनैव बोधयतीति वाच्यम्, निष्ठायोगे तस्या निषेधात् । अत एव " नाग्निस्तृप्यति काष्ठानां न पुंसां वामलोचना " इत्यादौ करणत्वादेः संबन्धत्वेन विवक्षया षष्ठ्युपपत्तिः, तृतीयादिविधिविषयतया विशेषरूपेण करणत्वादिसंबन्धविवक्षायां षष्ठ्यनुपपत्तेः ।

---

पदात् " शेषे षष्ठी " इत्यनेन षष्ठ्यसंभवात् " अधीगर्थ " इत्यनुशासनस्य विधित्वमेव स्यान्न तूक्तनियमपरत्वम्, " शेषे " इत्यस्य संबन्धत्वेन रूपेण संबन्धविवक्षायां षष्ठीविधायकत्वे तु ' मातुः स्मृतम् ' इत्यत्रापि " शेषे " इत्यनेन षष्ठी संभवत्येवेति तत्र कर्मत्वेनैव रूपेण संबन्धविवक्षायामत्र षष्ठी स्यादिति नियमपरत्वम् " अधीगर्थ " इतिसूत्रस्य संभवतीत्यर्थः । अत एव=षष्ठ्याः संबन्धत्वेनैव रूपेण कर्तृत्वादिबोधकत्वादेव । " आमं शूद्रस्य पक्वान्नम् " इत्यत्र शूद्रस्येति षष्ठ्यर्थः स्वत्वं तथा च शूद्रनिरूपितस्वत्वाश्रयीभूतमाऽऽमान्नं पक्वान्नसदृशं विज्ञेयमित्यर्थः, " पक्वमुच्छिष्टमुच्यते " इत्यत्रानुषज्यमानायाः शूद्रस्येति षष्ठ्याः कर्तृत्वमेवार्थो न तु स्वत्वं तथा च शूद्रकर्तृकपाकाश्रयीभूतम्=शूद्रेण पक्वमन्नमुच्छिष्टसदृशं विज्ञेयमित्यर्थः, नन्वत्रापि पूर्ववत् शूद्रस्येति षष्ठ्यर्थः स्वत्वमेव किं न स्यादित्यत्र हेतुमाह किं वात्र स्वत्वस्य षष्ठ्यर्थत्वाभावे हेतुमाह- शूद्रकर्तृकेति, शूद्रेण यदा वृषोत्सर्गः क्रियते तदा कोपि ब्राह्मणश्चरुं पक्त्वा तेन होमं करोति यदि ह्यत्र स्वत्वं षष्ठ्यर्थः स्यात्तदोक्तवचनस्य ' शूद्रनिरूपितस्वत्वाश्रयीभूतं पक्वमन्नमुच्छिष्टम् ' इतिवाक्यार्थः स्यात् शूद्रकर्तृकवृषोत्सर्गे च ब्राह्मणेनापि पक्वान्ने शूद्रस्वत्वस्य सत्त्वात् तादृशचरोरुच्छिष्टतुल्यत्वप्राप्त्या चरुहोमो नोपपद्येत भवति च शूद्रकर्तृकवृषोत्सर्गे ब्राह्मणेन पक्वचरुणा होम इति तदुपपत्त्यर्थमत्र द्वितीयपादेऽनुषज्यमानायाः शूद्रस्येति षष्ठ्याः कर्तृत्वमेवार्थो वक्तव्यस्तथा च ब्राह्मणेन पक्वचरौ शूद्रस्वत्वसत्त्वेपि शूद्रकर्तृकत्वाभावादुच्छिष्टतुल्यत्वं न प्राप्नोतीति तेन चरुणा होम उपपद्यते एवं हि नवीनस्मार्तानां मतम्=शूद्रकर्तृकवृषोत्सर्गे चरुहोमकरणमप्युपपद्यते इत्यर्थः । नवीनस्मार्तानाम्=रघुनाथभट्टाचार्याणाम् ।

शङ्कते- न चेति, कर्तृत्वत्वेनैव रूपेण कर्तृत्वं बोधयति न तु संबन्धत्वेनेत्यर्थः । तत्र= " आमं शूद्रस्य " इत्यत्र । परिहारमाह- निष्ठेति । तस्याः=कर्तृषष्ठ्याः, पक्वपदघटकक्तप्रत्ययरूपनिष्ठायोगे " न लोकाव्ययनिष्ठा " इत्यनेन कर्तृत्वादौ षष्ठीनिषेधोऽस्तीति न कर्तृत्वत्वेन कर्तृत्वबोधकत्वं किं तु संबन्धत्वेनैवेत्यर्थः । अत एव=षष्ठ्याः कर्तृत्वादीनां संबन्धत्वेनैव बोधकत्वादेव । करणत्वादिविशेषरूपेण संबन्धविवक्षायां तु तृतीयैव स्यादिति ' काष्ठानां पुंसाम् ' इति षष्ठी नोपपद्येतेत्यर्थः ।

अथ संबन्धत्वेन संबन्धस्य षष्ठीवाच्यत्वे 'पुरुषस्य दण्डः' इत्यादौ 'दण्डस्य पुरुषः' इत्यादिरपि प्रयोगः स्यात् । एवम् 'दण्डी पुरुषः' 'रूपवान् घटः' इत्यादिवत् दण्डरूपादेः पुरुषघटाद्यनाधारत्वेपि 'पुरुषी दण्डः' 'घटवद्रूपम्' इत्यादिः प्रयोगो दुर्वारः- 'तदत्रास्ति' इत्यर्थे इव 'तदस्य' इत्यर्थेपि मतुपो विधानात्. दण्डरूपादिपदोत्तरषष्ठ्या चैत्रघटादिनिष्ठतदर्थसंबन्धप्रतिपादने तदुत्तरमपि मत्वर्थीयस्य प्रसङ्गादिति चेत् ?, विशिष्य केषांचित्संबन्धानां षष्ठ्यर्थतोपगमेपि 'घटस्य रूपम्' इत्यादिप्रयोगानुरोधेन समवेतत्वादेः षष्ठ्यर्थताया आवश्यकत्वेन 'हस्तस्य चैत्रः' 'चैत्रवान् हस्तः' 'शाखाया वृक्षः' 'वृक्षवती शाखा' इति कथं न प्रयुज्यते ?, पूर्वप्रयोगाभावादिति समाधानं तु तुल्यम् ।

---

शङ्कते- अथेति, षष्ठ्याः संबन्धत्वेनैव रूपेण संबन्धबोधकत्वे दण्डपुरुषयोः परस्परं संबन्धस्य समानत्वात् 'पुरुषस्य दण्डः' इत्यर्थे 'दण्डस्य पुरुषः' इत्यपि प्रयोगः स्यादेव, एवम् "तदस्यास्त्यस्मिन्निति मतुप्" इत्यनेन 'तदत्रास्ति' इत्यर्थे इव 'तदस्यास्ति' इत्यर्थेऽपि मतुप्विधीयते तत्र यथा 'रूपवान् घटः' 'दण्डोस्त्यस्येति दण्डी पुरुषः' इति प्रयोगो भवति तथा 'पुरुषोस्त्यस्येति पुरुषी दण्डः' 'घटवद्रूपम्' इत्यादिरपि प्रयोगः स्यादेव षष्ठ्याः संबन्धमात्रबोधकत्वात्, दण्डरूपादिपदोत्तरेति- यथा 'दण्डः पुरुषस्येति दण्डी' इति भवति तथा दण्डादिपदोत्तरषष्ठ्या 'दण्डस्य पुरुष इति पुरुषी दण्डः' 'घटो रूपस्येति घटवद्रूपम्' इति स्यादेव तत्र चैत्रघटादिनिष्ठो यस्तदर्थसंबन्धः=दण्डरूपादीनां संबन्धस्तस्य षष्ठ्या प्रतिपादने तदुत्तरमपि=पुरुषघटादिपदोत्तरमपि मत्वर्थीयप्रत्ययप्रसङ्गः स्यादेव, षष्ठ्या विशेषरूपेण संबन्धबोधकत्वे तु दण्डप्रतियोगिकपुरुषानुयोगिकसंयोगबोधकत्वात् 'दण्डी दण्डवान् पुरुषः' इत्येव प्रयोगः संभवति न तु 'पुरुषी दण्डः'. इत्यादिरपि. एवं रूपप्रतियोगिकघटानुयोगिकसमवायबोधकत्वात् 'रूपी रूपवान् घटः' इत्येव प्रयोगः संभवति न तु 'घटवद्रूपम्' इत्यादिरपि- प्रतियोगिवाचकदण्डरूपादिपदोत्तरमेव मत्वर्थीप्रत्ययोत्पत्तेः स्वीकारादित्यर्थः । उत्तरमाह- विशिष्येति, यदि षष्ठ्या विशेषरूपेणैव संबन्धबोधकत्वं स्यात्तदा 'घटस्य रूपम्' इत्यत्र घटसमवेतं रूपमिति बोधोदयाद् रूपे घटसमवेतत्वं प्रतीयते इति समवेतत्वमपि षष्ठ्यर्थः स्यादेव तथा च हस्ताद्यवयवेषु चैत्रस्यावयविनः.समवेतत्वसिद्धान्तात् 'हस्तस्य चैत्रः' 'चैत्रवान् हस्तः' इति कथं न प्रयुज्यते ? तस्य 'हस्तसमवेतश्चैत्रः' इत्यर्थः स्यादेव. तथा वृक्षस्य शाखायां समवेतत्वात् 'शाखाया वृक्षः' 'वृक्षवती शाखा' इति कथं न प्रयुज्यते ? इति प्रतिबन्द्युत्तरम् । ननु 'चैत्रस्य हस्तः' इत्यादिरेव पूर्वेषां प्रयोगोस्ति न तु 'हस्तस्य चैत्रः' इति तथा चार्थविरोधाभावेपि पूर्वप्रयोगाभावादेव 'हस्तस्य चैत्रः' इत्यादि न प्रयुज्यते इत्याशङ्क्याह- पूर्वप्रयोगेति । तुल्यमिति- एवमर्थविरोधाभावेपि पूर्वप्र-

'नराणां क्षत्रियः शूरो नरेषु वा' 'अध्वगानां रथगामिनः शीघ्रतरा अध्वगेषु वा' 'गवां कृष्णा संपन्नक्षीरा गोषु वा' इत्यादौ "यतश्च निर्धारणम्" इत्यनेन षष्ठीसप्तम्यौ विधीयेते. तदर्थश्च- 'जात्यादिविशेषणविशिष्टयद्धर्मावच्छिन्नस्य तादृशविशेषणशून्यतद्धर्मावच्छिन्नव्यावृत्तत्वविशिष्टविधेयवत्तया प्रतिपादनं तद्धर्मावच्छिन्नार्थकपदात् 'षष्ठीसप्तम्यौ' इति, प्रकृते च क्षत्रियत्वादिविशेषणविशिष्टे नरादौ तच्छून्यनरादिव्यावृत्तत्वेन शौर्यविशेषादिरूपविधेयसंबन्धोऽभिमत इति नरादिपदात् षष्ठी । 'नरेभ्यो राक्षसाः शूरतमाः' इत्यादौ राक्षसत्वादिविशेषणविशिष्टे तच्छून्यनरादिव्यावृत्तशूरतमत्वविवक्षाया-

---

योगाभावादेव 'पुरुषी दण्डः' 'वटवद्रूपम्' इत्यादिरपि न प्रयुज्यते इति तुल्यमेव ममापि समाधानमित्यर्थः ।

प्रयोगान्तरमुदाहरति-नराणामिति । अध्वगानाम्=गच्छताम् । शीघ्रतराः=शीघ्रगामिनः । जात्यादीत्यादिपदेन क्रियागुणौ ग्राह्यौ क्षत्रिय इत्यत्र क्षत्रियत्वं जातिः, रथगामिन इत्यत्र गमनं क्रिया, कृष्णेत्यत्र कृष्णत्वं गुणः । सूत्रार्थमाह-तदर्थश्चेति, यथा नराणामित्यत्र-क्षत्रियत्वजातिरूपविशेषणविशिष्टस्य यद्धर्मावच्छिन्नस्य=नरत्वधर्मावच्छिन्नस्य तादृशविशेषणशून्यः=क्षत्रियत्वविशेषणशून्यो यस्तद्धर्मावच्छिन्नः=नरत्वधर्मावच्छिन्नो नरस्तद्व्यावृत्तत्वविशिष्टो यो विधेयः=शूरत्वं तद्वत्तया प्रतिपादनम्( यद्धर्मावच्छिन्नस्य )तद्धर्मावच्छिन्नार्थकपदात्=तादृशनरत्वधर्मावच्छिन्नार्थकनरपदात् षष्ठीसप्तम्यौ भवत इति 'नराणां नरेषु वा क्षत्रियः शूरः' इति सिद्धम्, नरेभ्यः शूरत्वेन रूपेण क्षत्रियस्य निर्धारणं पृथक्करणमस्तीति यावत् । अध्वगानामित्यत्र-रथकरणकगमनक्रियारूपविशेषणविशिष्टस्य यद्धर्मावच्छिन्नस्य=अध्वगत्वधर्मावच्छिन्नस्य तादृश=रथकरणकगमनक्रियारूपविशेषणशून्यो यस्तद्धर्मावच्छिन्नः=अध्वगत्वधर्मावच्छिन्नोऽध्वगस्तद्व्यावृत्तत्वविशिष्टो यो विधेयः=शीघ्रतरत्वं तद्वत्तया प्रतिपादनं तद्धर्मावच्छिन्नार्थकपदात्=तादृशाध्वगत्वधर्मावच्छिन्नार्थकाऽध्वगपदात् षष्ठीसप्तम्याविति 'अध्वगानामध्वगेषु वा रथगामिनः शीघ्रतराः' इति सिद्धम् । गवामित्यत्र-कृष्णत्वगुणरूपविशेषणविशिष्टाया यद्धर्मावच्छिन्नायाः=गोत्वधर्मावच्छिन्नायास्तादृश=कृष्णत्वविशेषणशून्या या तद्धर्मावच्छिन्ना=गोत्वधर्मावच्छिन्ना गौस्तद्व्यावृत्तत्वविशिष्टो यो विधेयः=संपन्नक्षीरत्वं तद्वत्तया प्रतिपादनं ( यद्धर्मावच्छिन्नस्य ) तद्धर्मावच्छिन्नार्थकपदात्=तादृशगोत्वधर्मावच्छिन्नार्थकगोपदात् षष्ठीसप्तम्याविति 'गवां गोषु वा कृष्णा संपन्नक्षीरा' इति सिद्धम् । उक्तार्थमुदाहरणे समनुगमयति- प्रकृत इति । तच्छून्य=क्षत्रियत्वादिशून्य । उक्तरूपनिर्धारणे सत्यपि 'नराणां नरेषु वा राक्षसाः शूरतमाः' इतिप्रयोगो न भवति- येभ्यो नरेभ्यो राक्षसानां पृथक्करणं विवक्षितमस्ति तेषु राक्षसेषु क्षत्रियेष्विव नरत्वं सामान्यधर्मो नास्तीत्याह- नरेभ्य इति, तथा च पञ्चम्या 'नरेभ्यो राक्षसाः शूरतमाः' इत्यत्र प्रयोगो भवतीत्यर्थः । षष्ठीसंपादकोक्तनिर्धारणाभावमाह- राक्षसत्वा-

मपि न निरुक्तनिर्धारणम्- राक्षसत्वादिविशिष्टस्य नरत्वादिरूपसामान्यधर्माऽनवच्छिन्नत्वात् ।

'नराणां क्षत्रियः शूरतमः' इत्यादौ क्षत्रियादिनिष्ठशूरतमत्वादौ नरादिसामान्यव्यावृत्तत्वबाधाच्छून्यत्वान्तं व्यावृत्त्यऽवधेर्विशेषणम् । तद्धर्माश्रययत्किंचिद्व्यक्तिव्यावृत्तत्वविवक्षणे 'द्रव्येषु घटो गन्धवान्' इत्यपि स्यात्-गन्धादेर्यत्किंचित्द्रव्यव्यक्तिव्यावृत्तत्वात् । तादृशविशेषणशून्यसामान्यव्यावृत्तत्वनिवेशे 'नराणां क्षत्रियः शूरतमः' इत्यादावेव तदसंभवः-शूरतमत्वादेः क्षत्रियत्वादिशून्यराक्षसाद्यऽव्यावृत्तत्वात्- अतस्तद्धर्मावच्छिन्नेति ।

---

दीति । तच्छून्य=राक्षसत्वादिशून्य । उक्तनिर्धारणाभावे हेतुमाह- राक्षसत्वादिविशिष्टस्येति । तथा च सामान्यधर्मावच्छिन्नत्वे सति किंचिद्विशेषधर्मावच्छिन्नस्य सामान्यधर्मावच्छिन्नेभ्यो यत्र पृथक्करणं विवक्ष्यते तत्र षष्ठीसप्तम्यौ भवतो यथा नरेभ्यः क्षत्रियस्य पृथक्करणे इत्यर्थः ।

उक्तसूत्रार्थघटकपदार्थानां सार्थक्यमाह—नराणामिति । यदि "तादृशविशेषणशून्यतद्धर्मावच्छिन्नव्यावृत्तत्वविशिष्टविधेयवत्तया" इत्यत्र "तादृशविशेषणशून्य" इति नोच्येत तदा विधेये शूरतमत्वे नरत्वावच्छिन्नसामान्यव्यावृत्तत्वं प्राप्नुयात् तत्तु न संभवति नरत्वधर्मावच्छिन्नेत्र क्षत्रिये शूरतमत्वस्य विवक्षितत्वादिति शून्यत्वान्तम्=" तादृश ( क्षत्रियत्वादि ) विशेषणशून्य " इति व्यावृत्त्यवधिभूतस्य नरत्वावच्छिन्नस्य विशेषणमुपात्तं तथा च क्षत्रियत्वशून्यनरे शूरतमत्वं नास्तीति विधेये शूरतमत्वे क्षत्रियत्वशून्यनरव्यावृत्तत्वस्य बाधो नास्तीत्यर्थः । अत्र शूरतमत्वे क्षत्रियान्यनरापेक्षया व्यावृत्तत्वं विवक्षितमस्तीति नरस्य व्यावृत्त्यवधित्वं ज्ञेयम् । तद्धर्माश्रेति- यदि "तादृशविशेषणशून्यतद्धर्मावच्छिन्नव्यावृत्तत्व" इत्यत्र "तद्धर्मावच्छिन्न" इति नोच्येत तदा विधेये तादृशविशेषणशून्यं यत् किंचिद्व्यक्तिमात्रव्यावृत्तत्वं लभ्येत तथा च 'द्रव्येषु घटो गन्धवान्' इत्यपि प्रयोगः स्यात्- विधेये गन्धे यत्किंचिद्द्रव्यव्यक्तिर्यदाऽऽकाशादिकं तद्व्यावृत्तत्वस्य=तदऽवृत्तित्वस्य सत्त्वात्, न चैतदिष्टमिति "तद्धर्मावच्छिन्न" इत्युक्तं तथा च गन्धे द्रव्यत्वावच्छिन्नव्यावृत्तत्वं नास्ति घटादिपार्थिवद्रव्यमात्रे गन्धस्य सत्त्वादिति 'द्रव्येषु घटो गन्धवान्' इति प्रयोगापत्तिर्नास्तीत्यर्थः । तादृशविशेषणेति- यदि "तादृशविशेषणशून्यतद्धर्मावच्छिन्नव्यावृत्तत्व" इत्यस्य स्थाने "तादृश ( क्षत्रियत्वादि ) विशेषणशून्यसामान्य ( यावन्मात्र ) व्यावृत्तत्व" इत्युच्येत तदा विधेये शूरतमत्वे क्षत्रियभिन्नव्यक्तिमात्रव्यावृत्तत्वं प्राप्नुयात् तथा च 'नराणां क्षत्रियः शूरतमः' इत्यत्राप्युक्तसूत्रार्थसमन्वयस्याऽसंभव एव स्यात्- शूरतमत्वादेः क्षत्रियभिन्नराक्षसादावपि सत्त्वेन क्षत्रियत्वादिशून्यराक्षसाद्यऽव्यावृत्तत्वात् तस्मात् "तद्धर्मावच्छिन्न" इत्युक्तं तथा च क्षत्रियत्वशून्यो यो नरत्वधर्मावच्छिन्नो नरस्तद्व्यावृत्तत्वं शूरतमत्वेऽस्त्येवेति नासंभव इत्यर्थः । अत्र 'इत्युक्तम्' इति शेषः ।

अथ विधेये जात्यादिविशेषणशून्यसाधारणधर्मावच्छिन्नान्वितं व्यावृत्तत्वं साधारणधर्मावच्छिन्नवाचकपदोत्तरषष्ठ्यादेरेवार्थो वाच्यस्तावता च नरत्वादिरूपसाधारणधर्मावच्छिन्नव्यावृत्तत्वस्यैव लाभः संभवति न तु क्षत्रियत्वादिशून्यत्वविशेषितनरादिव्यावृत्तत्वस्य–प्रकृत्यर्थे नरादौ तादृशविशेषणशून्यत्वबोधकाभावात्। न च षष्ठ्या एव तदर्थः–शक्त्यानन्त्यप्रसङ्गात्।

न च भेद एव षष्ठ्यर्थस्तत्र च क्षत्रियादिपदार्थस्य प्रतियोगित्वेनाऽन्वयात् क्षत्रियाद्यन्यनरादिव्यावृत्तत्वलाभः शक्तिभेदं विनैवेति वाच्यम्, एवमपि संख्यातिरिक्तविभक्त्यर्थस्य प्रकृत्यर्थविशेष्यतयैव भानमिति व्युत्पत्तिविरोधाऽपरिहारात्। 'नरेषु क्षत्रियाणामेव शौर्यम्' इत्यादौ क्षत्रियादेर्विभक्त्यर्थविशेषणतयोपस्थितस्य भेदे विशेषणतया भानोपगमे व्युत्पत्त्यन्तरविरोधाच्च। अस्तु लक्ष-

---

शङ्कते– अथेति, क्षत्रियत्वादिजातिरूपविशेषणशून्यो यः साधारणधर्मावच्छिन्नः=नरत्वधर्मावच्छिन्नो वैश्यादिस्तदन्वितम्=निरूपितत्वसंबन्धेन तद्विशिष्टम् ( व्यावृत्तत्वस्यास्योक्तवैश्यादिनिरूपितत्वात् ) व्यावृत्तत्वं यदत्र विधेये वर्तते तत् साधारणधर्मावच्छिन्नवाचकनरपदोत्तरषष्ठीसप्तम्योरेवार्थ इति वक्तव्यम् एवं हि विधेये शूरतमत्वे नरत्वादिरूपसामान्यधर्मावच्छिन्नाद् व्यावृत्तत्वं लभ्यते न तु क्षत्रियत्वादिशून्यनरत्वधर्मावच्छिन्नव्यावृत्तत्वम्– प्रकृत्यर्थे=षष्ठीप्रकृत्यर्थभूतनरे तादृशविशेषण=क्षत्रियत्वविशेषणशून्यत्वबोधकपदाभावात्, न च नरत्वरूपसामान्यधर्मावच्छिन्नव्यावृत्तत्वं शूरतमत्वे संभवति शूरतमत्वस्य नरत्वरूपसामान्यधर्मावच्छिन्ने एव क्षत्रिये सत्त्वाद् विवक्षितत्वाच्चेत्यर्थः। ननु नरत्वधर्मावच्छिन्नविशेषणीभूतं क्षत्रियत्वादिशून्यत्वं षष्ठ्या एवार्थ इत्याशङ्क्याह– न चेति। परिहारहेतुमाह–शक्त्येति, एवंहि क्षत्रियत्वादिधर्माणामनन्तत्वात् षष्ठ्याः शक्त्यानन्त्यं स्यादित्यर्थः।

नन्वत्र नरपदोत्तरषष्ठ्या भेद एवार्थस्तत्र=षष्ठ्यर्थभूतभेदे क्षत्रियस्य प्रतियोगित्वेन रूपेणान्वयः क्षत्रियप्रतियोगिकस्यैव भेदस्य षष्ठ्यर्थत्वेन विवक्षितत्वात् तथा च क्षत्रियप्रतियोगिकभेदविशिष्टो यो नरस्तद्व्यावृत्तं शूरतमत्वमित्येवं शूरतमत्वे क्षत्रियान्यनरव्यावृत्तत्वं लभ्यते न चापि शक्त्यानन्त्यम्–भेदत्वावच्छिन्ने एव षष्ठ्याः शक्तिस्वीकारादित्याशङ्क्याह–न चेति। अत्रापि दोषमाह–एवमपीति, विभक्त्यर्थसंख्याया एव प्रकृत्यर्थे विशेषणत्वेनान्वयो भवति न तु संख्यातिरिक्तस्यापि विभक्त्यर्थस्येति व्युत्पत्तिरस्ति या तस्या विरोध एवं प्राप्तः– अत्र षष्ठ्यर्थस्य भेदस्य प्रकृत्यर्थे नरे विशेषणत्वेनान्वयस्य जातत्वादित्यर्थः। किं चात्र क्षत्रियप्रतियोगिकभेदे क्षत्रियस्य विशेषणत्वं यथास्ति तथा 'नरेषु क्षत्रियाणामेव शौर्यम्' इत्यत्रोक्तनरपदोत्तरषष्ठीसमानार्थकत्वात् सप्तम्या अपि क्षत्रियप्रतियोगिकभेद एवार्थः स्यादिति तत्रापि क्षत्रियस्य क्षत्रियपदोत्तरषष्ठ्यर्थविशेषणतयोपस्थितस्यैव नरपदोत्तरसप्तम्यर्थभेदे विशेषणत्वेनान्वयः कर्तव्यस्तत्र च

णया नरादिपदादेव क्षत्रियान्यनरत्वादिविशेषरूपेणोपस्थितिरितिचेत् ?, अस्तु ।

व्यावृत्तत्वं किं तावत् कुत्र वा तदन्वयः ? । व्यावृत्तत्वं तदवृत्तित्वं शूरतमादिपदोपस्थापिते धर्मे तदन्वय इति चेत् ?, न– पदार्थतावच्छेदकेन पदार्थान्तराऽनन्वयात् , 'पदार्थानां जातिमति सत्ता' इत्यादौ जातिमदन्यपदार्थवृत्तित्वसामान्याभावस्य सत्तादौ वारितत्वात्. तादृशपदार्थसमवेतत्वाद्यभावस्य चाऽप्रसिद्धेर्व्यावृत्तिबोधासंभवाच्च । एवम्– 'द्रव्येषु कम्बुग्रीवादिमान् घटः' इत्यादौ घटत्वादिधर्मस्याऽन्वयितावच्छेदकरूपेणानुपस्थितत्वात् तत्र व्यावृत्तत्वान्वयबोधो दुर्घट इति ।

---

"एकत्र विशेषणत्वेनोपस्थितस्यान्यत्र विशेषणत्वेनान्वयोऽव्युत्पन्नः" इतिव्युत्पत्तिविरोधः स्यादित्यर्थः । ननु यद्युक्तरीत्या भेदः षष्ठ्यर्थो नोपपद्यते तदा नरे क्षत्रियान्यत्वलाभार्थं नरपदस्यैव क्षत्रियान्यनरे लक्षणां वक्ष्याम इति क्षत्रियान्यनरव्यावृत्तत्वं शूरतमत्वे विधेये नानुपपन्नमित्याशङ्कते– अस्त्विति । एनं पक्षं विषयान्तरोपस्थापनार्थं स्वीकरोति– अस्त्विति ।

व्यावृत्तत्वस्य स्वरूपमाश्रयं चेदानीं पृच्छति– व्यावृत्तत्वमिति । व्यावृत्तत्वस्वरूपमाह– व्यावृत्तत्वमिति । तदवृत्तित्वम्=तस्मिन्नरादावऽवृत्तित्वमेव तद्व्यावृत्तत्वम् । तस्याश्रयमाह– शूरेति । धर्मे=शूरतमत्वादौ । परिहरति– नेति, "पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेन" इतिव्युत्पत्त्यनुरोधेन पदार्थतावच्छेदकीभूते पदार्थैकदेशे शूरतमत्वे पदार्थान्तरस्य=षष्ठ्यर्थभूतव्यावृत्तत्वस्यान्वयो न संभवतीत्यर्थः । उक्ते विनिगमनामाह– पदार्थानामिति, 'पदार्थानां जातिमति सत्ता' इत्यस्याप्युक्तोदाहरणतुल्यत्वादत्रापि व्यावृत्तत्वमेव षष्ठ्यर्थोऽस्ति तत्र जातिमत्पदार्थस्य पदार्थतावच्छेदकीभूतायां सत्तायां जातिमदन्यपदार्थवृत्तित्वसामान्याभावस्य=जातिमदन्यपदार्थव्यावृत्तत्वस्य षष्ठ्यर्थस्यान्वयो वारितः. यदि पदार्थतावच्छेदकेपि पदार्थान्तरान्वयः स्यात्तदा तद्वारणं नोपपद्येतेत्यर्थः । ननूक्तव्युत्पत्तिविरोधमुपेक्ष्य वयं तत्रापि सत्तायां जातिमदन्यपदार्थव्यावृत्तत्वस्यान्वयं करिष्याम इत्याशङ्क्याऽसंभवमाह– तादृशपदार्थेति, सत्ताया जातिमदन्यसामान्यादिपदार्थे समवायसंबन्धावच्छिन्नप्रतियोगिताक एव वृत्तित्वाभावो वक्तव्यः स च न संभवति– जातिमदन्यसामान्यादौ समवायसंबन्धेन किंचिद्वृत्तित्वस्यैवाऽप्रसिद्धत्वात् तथा च व्यावृत्तिबोधासंभव एव, असंभविपदार्थप्रतिपादनाऽसंभवादित्यर्थः । दोषान्तरमाह– एवमिति, 'द्रव्येषु कम्बुग्रीवादिमान् घटः' इत्यत्र कम्बुग्रीवादिमत्त्वमुद्दिश्य घटत्वं विधीयते इति द्रव्यपदोत्तरसप्तम्यर्थस्य व्यावृत्तत्वस्य विधेये घटत्वे एवान्वयः कर्तव्यः सोपि न संभवति– घटत्वस्यात्र स्वरूपेणैवोपस्थितत्वेन अन्वयितावच्छेदकरूपेण=घटत्वत्वेन रूपेणानुपस्थितत्वात् पदार्थान्तरनिष्ठप्रकारतानिरूपितविशेष्यतासंबन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रत्यन्वयितावच्छेदकरूपेणोपस्थितेः कारणत्वादित्यर्थः । अत्र हि 'कम्बुग्रीवादिमदन्यद्रव्यव्यावृत्तं घटत्वम्' इतिशाब्दबोधो विज्ञेयः ।

अत्र केचित्— 'नराणां क्षत्रियः शूरः' इत्यादौ क्षात्रय इव लक्षणया क्षत्रियान्योपि क्षत्रियपदार्थः शूरपदस्यापि शूर इव तदन्योप्यर्थः षष्ठ्यर्थोऽभेदः क्षत्रिये तदन्यस्मिंश्चान्वेति तथा च नराभिन्नः क्षत्रियः शूरो नराभिन्नक्षात्रियान्यो न शूर इत्यर्थः। 'नराणां क्षत्रियेषु शौर्यम्' इत्यत्रापि क्षत्रियपदं प्राग्वदुभयार्थकं शौर्यपदं च तत्तदत्यन्ताभावार्थकं तथा च नराभिन्नक्षात्रिये शौर्यं तदन्यस्मिंस्तदभाव इति बोधः। उद्देश्यविधेययोर्यादृशसंबन्धो भावान्वयबोधे भासते तत्संबन्धावच्छिन्नविधेयाभाव उद्देश्यवाचकविधेयवाचकपदयोर्वैयधिकरण्यस्थले विधेयपदलक्ष्यार्थः, तयोः सामानाधिकरण्यस्थले तु विधेयधर्मिभिन्न इति सामान्यतो व्युत्पत्तिरित्याहुः।

---

परिहर्तुं मतान्तरमनुवदति— अत्र केचिदिति। अत्र क्षात्रियपदं क्षत्रियक्षत्रियान्योभयपरं शूरपदमपि शूरशूरान्योभयपरमित्यर्थः। तदन्यस्मिन्=क्षत्रियान्यस्मिन्। 'नराणां क्षत्रियः शूरः' इतिवाक्यस्यार्थमाह— तथा चेति, 'नराभिन्नः क्षत्रियः शूरः' इत्यत्र नराभेदस्य क्षत्रियेऽन्वयः, 'नराभिन्नक्षत्रियान्यो न शूरः' इत्यत्र च नराभेदस्य क्षत्रियान्यस्मिन्नन्वय इति विवेकः। उदाहरणान्तरपदार्थानाह— नराणामिति, पूर्वत्रोद्देश्यविधेयवाचकपदयोः सामानाधिकरण्यमस्ति— समानविभक्तिकत्वादत्र तु वैयधिकरण्यमिति विशेषः। उभयार्थकम्=क्षत्रियक्षत्रियान्योभयार्थकम्। तत्तदत्यन्ताभावार्थकम्=शौर्यशौर्यात्यन्ताभावैतदुभयार्थकम्। वाक्यार्थमाह— तथा चेति। तदन्यस्मिन्=क्षत्रियान्यस्मिन्। तदभावः=शौर्यात्यन्ताभावः। उक्तशाब्दबोधोपपादकव्युत्पत्तिमाह— उद्देश्येति, यथा 'नराणां क्षत्रियेषु शौर्यम्' इत्यत्रोद्देश्यविधेययोः=क्षत्रियशौर्ययोर्यादृशसंबन्धः=आश्रयत्वसंबन्धः (शौर्यस्य क्षत्रियाश्रितत्वात्) भावान्वयबोधे='क्षत्रिये शौर्यम्' इत्यत्र भासते तत्संबन्धावच्छिन्नविधेयाभावः=आश्रयत्वसंबन्धावच्छिन्नप्रतियोगिताकशौर्याभाव उद्देश्यवाचकविधेयवाचकपदयोर्वैयधिकरण्यस्थले='नराणां क्षत्रियेषु शौर्यम्' इत्यत्र विधेयपदलक्ष्यार्थो भवति तथा चात्र क्षत्रियान्यस्मिन् शौर्यपदलक्ष्यार्थस्योक्तरूपशौर्याभावस्यान्वयो भवति तदेवोक्तम् "तदन्यस्मिंस्तदभावः" इति। सामानाधिकरण्यस्थलीयव्युत्पत्तिमाह— तयोरिति, तयोः=उद्देशवाचकविधेयवाचकपदयोः सामानाधिकरण्यस्थले 'नराणां क्षत्रियः शूरः' इत्यादौ विधेयधर्मिभिन्नः=विधेयधर्मिभ्यां शूरत्वक्षत्रियाभ्यां भिन्नो विधेयवाचकधर्मिवाचकपदयोर्लक्ष्यार्थः, अत्र 'विधेयधर्मभिन्नः' इति पाठे तु विधेयरूपो यो धर्मः शूरत्वं तद्भिन्नः=अशूरत्वमेव विधेयपदस्य शूरपदस्य लक्ष्यार्थ इत्यर्थस्तथा च लक्ष्यार्थभूते क्षत्रियान्यस्मिन् लक्ष्यार्थभूतस्याऽशूरत्वस्यात्रान्वयो जातस्तदेवोक्तम्— "नराभिन्नक्षत्रियान्यो न शूरः" इति, शूरभिन्नाऽशूरस्य क्षत्रियान्येन सह सामानाधिकरण्यं संभवतीति भावः। पूर्वत्रात्यन्ताभावे उत्तरत्र च भेदविशिष्टे लक्षणेति सारः।

**तन्न शोभनम्— तथा सति ' तस्मै पुरुषोत्तमाय नमः ' इत्यत्र तत्पदार्थतदन्ययोरेव पुरुषपदार्थाऽभेदविवक्षणे उत्तमपदेनाऽसामर्थ्यात् समासाप्रसक्तेः " न निर्धारणे " इतिनिषेधाश्रयणेन प्रकाशकृतां निर्धारणषष्ठीसमासखण्डनानौचित्यप्रसङ्गात् । एवम् ' नरेषु शूरस्य क्षत्रियस्येदं राज्यम् ' इत्यादौ शूरपदार्थाऽशूरान्वितक्षत्रियपदार्थक्षत्रियान्यस्य षष्ठ्यर्थसंबन्धादौ नान्वयः किं तु शूरान्वयिक्षत्रियादेरन्वय इत्येतन्नोपपद्यते— ' श्वेतं सैन्धवं भुङ्क्ते ' इत्यादौ ( तु ) कर्मतादिविशेषणतया लवणादिबुद्धौ मुख्यविशेष्यतयाऽश्वादेरभानाद्. एकपदोपस्थापितयोर्द्वयोस्तत्प्रकृतिकविभक्त्यर्थे एकस्य विशेषणतयाऽपरस्य तद्विशेषणतया भानस्याऽव्युत्पन्नत्वात् ।**

---

परिहरति— तन्नेति, यदि ' नराणां क्षत्रियः शूरः ' इत्यत्रोक्तरीत्या षष्ठ्यर्थाभेदस्य क्षत्रियतदन्ययोरन्वयः स्यात्तदा तद्दृष्टान्तेन ' तस्मै पुरुषोत्तमाय ' इत्यस्य ' पुरुषाणां तस्मै उत्तमाय ' इत्येवमपि विग्रहवाक्ये कृते तत्रापि तत्पदस्य तत्पदार्थतदन्यपदार्थैतदुभयबोधकत्वं स्यात् पुरुषपदोत्तरषष्ठ्यर्थस्याभेदस्य च तत्पदार्थतदन्ययोरेवान्वयः स्यादिति पुरुषपदार्थतत्पदार्थयोरेवाभेदो लभ्येत न तु पुरुषपदार्थोत्तमपदार्थयोरिति पुरुषपदार्थस्योत्तमपदार्थेन सह सामर्थ्याभावादेवात्र ' पुरुषोत्तमाय ' इति समासो न संभवति इत्येवं समासाभावे प्राप्तेपि प्रकाशकारेण यदत्र " न निर्धारणे " इति निषेधमाश्रित्य ' पुरुषाणां तस्मै उत्तमाय ' इति निर्धारणषष्ठीसमासखण्डनं कृतं तस्यानौचित्यं प्रसज्येत न चैतदिष्टं तस्मान्नोक्तोपपादनं शोभनमित्यर्थः । सिद्धान्ते तु ' पुरुषोत्तमपदे ' न निर्धारणषष्ठीसमासः किं तु कर्मधारय एवेति विज्ञेयम् । केचित्तु मते विरोधान्तरमाह— एवमिति, ' नरेषु शूरस्य क्षत्रियस्येदं राज्यम् ' इत्यत्र तव मतेन शूरपदस्य शूरशूरान्यबोधकत्वं क्षत्रियपदस्य च क्षत्रियक्षत्रियान्यबोधकत्वमस्ति तत्र षष्ठ्यर्थभूते स्वत्वसंबन्धे निरूपितत्वसंबन्धेन शूरपदार्थो योऽशूरोऽभेदेन तदन्वितो यः क्षत्रियपदार्थः क्षत्रियान्यस्तस्य(क्षत्रियभिन्नाशूरस्य)अन्वयो नास्ति किं तु शूरान्वयि=शूराभिन्नक्षत्रियस्यान्वयोस्ति इति यदुक्तं तन्नोपपद्यते—एकपदोपस्थितयोर्द्वयोरर्थयोर्मध्ये तत्पदप्रकृतिकविभक्त्यर्थे एकस्य विशेषणतयाऽपरस्य तदऽविशेषणतया=विभक्त्यर्थाविशेषणतया भानं व्युत्पत्तिविरुद्धमस्ति तयोर्द्वयोरर्थयोस्तुल्यत्वात् तथा चात्र शूरक्षत्रियपदाभ्यामुपस्थितस्य शूराभिन्नक्षत्रियस्य षष्ठ्यर्थसंबन्धे विशेषणतयाऽन्वयोस्ति अशूराभिन्नक्षत्रियान्यस्य च विशेषणतयान्वयो नास्ति इतिवैषम्यं न संभवति, यद्युच्यते ' श्वेतं सैन्धवं भुङ्क्ते ' इत्यत्र लवणबुद्धौ जातायां सैन्धवपदार्थयोर्लवणाश्वयोर्मध्ये एकस्यैवार्थस्य लवणस्य यथा सैन्धवपदोत्तरद्वितीयार्थकर्मतायां विशेषणतयान्वयभानं भवति न त्वश्वस्यापीति तथा प्रकृतेप्येकस्यैवार्थस्य विभक्त्यर्थविशेषणतया भानं न विरुद्धं तदपि न युक्तम्— ' सैन्धवं भुङ्क्ते ' इत्यत्र भुङ्क्तेपदसमभिव्याहारप्रभावेन लवणबुद्धिरेव जायते लवणोपस्थितौ जातायां च सैन्धवपदेनाऽश्वस्य मुख्यविशेष्यतया भानम्=उपस्थितिरेव न भवतीत्यऽत्रा-

एवम्-' द्रव्येषु क्षितिपाथसी रसवती ' इत्यादौ क्षितिजलोभयत्वाद्यवच्छिन्नभिन्ने रसवदाद्यन्यत्वबोधो न संभवति-रसादिमत्यपि प्रत्येकमुभयत्वावच्छिन्नभेदसत्त्वात्, नापि प्रत्येकभेदावच्छिन्ने-तथैव बाधात्, नाप्येकभेदविशिष्टापरभेदावच्छिन्ने- एकपदस्य तादृशभेदावच्छिन्नलक्षकत्वेऽपरपदार्थे रसवदाद्यन्यत्वरूपविधेयानन्वयात्, द्वन्द्वघटकैकपदार्थमात्रे विधेयान्वयस्याऽव्युत्पन्नत्वात् । नापि पदाभ्यां लक्षणया तत्तद्भिन्नोपस्थितावऽभेदेनैकभिन्नान्वितेऽपरभिन्ने. तथापि

---

स्वस्य सैन्धवपदार्थस्यापि सैन्धवपदोत्तरद्वितीयार्थकर्मतायामविशेषणत्वं युक्तं प्रकृते तु द्वयोरेवार्थयोरुपस्थितयोस्तुल्यत्वादेकस्य विभक्त्यर्थें विशेषणतयाऽपरस्याऽविशेषणतया भानमिति वैषम्यं न संभवतीत्यर्थः प्रतिभाति ।

केचित्तुमतेऽनुपपत्त्यन्तरमुद्घाटयति-एवमिति, ' द्रव्येषु क्षितिपाथसी रसवती ' इत्यत्रापि त्वदुक्तरीत्या क्षितिपाथःपादाभ्यां क्षितिजलयोस्तदन्ययोश्च बोधो रसवतीपदेन रसवतीतदन्ययोश्च बोधः प्राप्तस्तत्र क्षितिजलोभयत्वावच्छिन्नभिन्ने रसवदन्यत्वस्यान्वयः कर्तव्यः सोपि न संभवति-प्रत्येकमुभयत्वावच्छिन्नभेदस्वीकाराद् रसवत्यामपि क्षितौ क्षितिजलोभयत्वावच्छिन्नभेदोस्त्येव तथा जलेप्यस्त्येव न च तत्र रसवदन्यत्वान्वयः संभवति रसवत्त्वस्यैव सत्त्वादित्यर्थः । यदि प्रत्येकभेदावच्छिन्ने=जलभेदावच्छिन्ने क्षितिभेदावच्छिन्ने च रसवदन्यत्वान्वय उच्यते तदपि न संभवति- तथैव बाधात् नाम जलभेदः क्षितावप्यस्ति क्षितिभेदश्च जलेप्यस्ति न च तत्र रसवदन्यत्वान्वयः संभवति-रसवत्त्वस्यैव सत्त्वादित्याशयेनाह-नापि प्रत्येकेति । यदि चैकभेदविशिष्टापरभेदावच्छिन्ने रसवदन्यत्वान्वय उच्यते यथा तेजसि क्षितिभेदोप्यस्ति जलभेदोप्यस्तीति एकेन क्षितिपदार्थस्य भेदेन विशिष्टो यो जलभेदस्तदवच्छिन्नत्वं क्षितिजलातिरिक्तेष्वेव तेजआदिष्वस्ति तत्र च रसवत्त्वमपि नास्ति तदाप्यत्रैकपदस्य=क्षितिपदस्य जलपदस्य वा तादृशभेदावच्छिन्नलक्षकत्वे=एकभेदविशिष्टापरभेदावच्छिन्नलक्षकत्वे तादृशभेदावच्छिन्नस्यैकपदस्यैवार्थत्वे प्राप्ते एकपदस्यार्थे एव रसवदन्यत्वान्वयः प्राप्तो न त्वऽपरपदस्यार्थे इत्यपरपदार्थे रसवदन्यत्वरूपविधेयस्याऽनन्वय एव प्राप्त इत्याशयेनाह-नाप्येकभेदेति । अस्त्वेकपदार्थे एव विधेयान्वय इत्याशङ्क्य तत्र व्युत्पत्तिविरोधमाह-द्वन्द्वेति, यथा ' धवखदिरौ छिनत्ति ' इतिद्वन्द्वे छेदनस्य द्वन्द्वघटकधवखदिरयोरुभयोरेवान्वयस्तथा ' क्षितिपाथसी ' इतिद्वन्द्वघटकोभयपदबोध्ययोरुभयोरेवार्थयोर्विधेयस्य रसवदन्यत्वस्यान्वयो युक्तो न त्वेकमात्रपदार्थे इत्यर्थः । यदि च क्षितिपदेन क्षितिभिन्नं पाथस्पदेन च पाथोभिन्नमुपस्थितं तत्राभेदसंबन्धेनैकभिन्नेन=क्षितिभिन्नेनान्वितं यदऽपरभिन्नम्=पाथोभिन्नं तेजआदिकं तत्र रसवदन्यत्वान्वयः क्रियते क्षितिभिन्नं पाथोभिन्नं चैकमेवाभेदेन भवति तथाच द्वन्द्वघटकोभयपदार्थे एव विधेयान्वयो जात इति न पूर्वोक्तदोषोपीत्युच्यते? तदापि पदार्थद्वये विधेयान्वयो न प्राप्नोति " पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेन " इति न्यायेन किं वा विशेष्ये एव विशेषणान्वयो भवतीतिन्याये-

पदार्थद्वये विधेयान्वयाऽनुपपादनात्, द्वन्द्वे समस्यमानपदार्थानां परस्परमऽनन्वयादित्यपि चिन्त्यम् ।

यत्तु 'नराणां शूरः क्षत्रियः' इत्यादौ शूराद्यन्वय्यऽभेदः षष्ठ्यर्थः, नराभिन्नशूरत्वाद्यवच्छेदेन च क्षत्रियाऽभेदान्वयः, एवं च क्षत्रियान्ये नरेऽर्थतः शौर्यव्यवच्छेदलाभ इति, तदत्यन्तमसत्–'नराणां क्षत्रिये शौर्यम्' इत्यादौ 'क्षत्रियाणां कर्णः प्रचुरं ददाति' इत्यादौ चाऽनिर्वाहात् ।

इदं तु तत्त्वम्–निर्धारणविभक्तेर्व्यावृत्तत्वमेवार्थः, व्यावृत्तत्वं चाऽभेदान्वयिविधेयसमभिव्याहारस्थलेऽन्योन्याभावप्रतियोगित्वं भेदान्वयितत्स्थले चाऽत्यन्ताभावप्रतियोगित्वं तस्य च विधेयतावच्छेदकावच्छेदेनाऽन्वयोऽतो न द्वित्वाद्यव-

---

नैकभिन्नान्वितेऽपरभिन्ने एव विधेयान्वयः स्यान्नत्वऽपरभिन्नविशेषणीभूते एकभिन्नेपि तथा च पूर्वोक्तः "द्वन्द्वघटकैकपदार्थमात्रे" इतिव्युत्पत्तिविरोधस्तदवस्थ एवेत्याशयेनाह–नापि पदाभ्यामिति । किं चास्मिन् पक्षे एकपदार्थस्यापरपदार्थेनान्वयो जातः सोपि द्वन्द्वे न भवति न हि 'धवखदिरौ छिनत्ति' इत्यत्र धवखदिरयोः परस्परमप्यन्वयो भवतीत्याशयेनाह–द्वन्द्वे इति । अनन्वयादिति–द्वन्द्वघटकपदार्थानां परस्परमन्वयो न भवतीति नियमादित्यर्थः ।

परिहाराय मतान्तरमुपस्थापयति–यत्त्विति, अनेन मतेन 'नराभिन्नशूराभिन्नः क्षत्रियः' इति वाक्यार्थो लब्धस्तथा चार्थादेव क्षत्रियान्यो नरो न शूर इति लब्धमिति भावः । परिहरति–तदिति, 'नराणां क्षत्रियः शूरः' इत्यत्र समानविभक्तिकत्वप्रयुक्तसामानाधिकरण्यवशाद् नराभिन्नशूरस्य क्षत्रियस्य चाऽभेदे संभवत्यपि 'नराणां क्षत्रिये शौर्यम्' इत्यत्र शौर्यस्य क्षत्रियेण वा नरेण वाऽभेदो न संभवति सामानाधिकरण्याभावात् बाधितत्वाच्च, एवम् 'क्षत्रियाणां कर्णः' इत्यत्रापि क्षत्रियाभिन्नकर्णेन सह तिङर्थप्रचुरदानकृतेरभेदो न संभवति–कृतिकर्त्रोरभेदस्य बाधितत्वादित्यर्थः– अनिर्वाहात्=अभेदाऽनिर्वाहात् ।

एवं परमतानि पराकृत्य सिद्धान्तमाह–इदमित्यादिना । निर्धारणविभक्तेः="यतश्च निर्धारणम्" इति सूत्रविहितषष्ठीसप्तम्योः । उक्तविभक्त्यर्थीभूतव्यावृत्तत्वस्य स्वरूपमाह–व्यावृत्तत्वं चेति । अभेदान्वयिविधेयसमभिव्याहारस्थले='नराणां क्षत्रियः शूरः' इत्यादौ. अत्र शूरपदार्थक्षत्रिययोरभेदेनैवान्वयसंभवात् । अन्योन्याभावप्रतियोगित्वमिति–क्षत्रियभिन्ननरे शूरभेदो वर्तते इति शूरे यत्तादृशभेदप्रतियोगित्वं तदेव क्षत्रियभिन्ननरव्यावृत्तत्वं विज्ञेयम् । क्षत्रियभिन्ननरे क्षत्रियभेदोपलब्धेरुपायमनुपदमेव वक्ष्यति । भेदान्वयितत्स्थले=भेदान्वयिविधेयसमभिव्याहारस्थले='नराणां क्षत्रिये शौर्यम्' इत्यादौ. अत्र क्षत्रियशौर्ययोरभेदासंभवात् क्षत्रिये शौर्यं विधीयते इति भेदान्वयिविधेयः । अत्यन्ताभावप्रतियोगित्वमिति–क्षत्रियभिन्ननरे शौर्यं नास्तीति शौर्ये यत्तादृशात्यन्ताभावप्रतियोगित्वं तदेव क्षत्रियभिन्ननरव्यावृत्तत्वम् । तस्य=अन्योन्याभावप्रतियोगि-

च्छिन्नाभावमादायातिप्रसङ्गः । अभावे च प्रकृत्यर्थस्य नरादेः क्षत्रियत्वादिरूपोद्देश्यतावच्छेदकावच्छिन्नभेदविशिष्टप्रकृत्यर्थतावच्छेदकनरत्वादिव्यापकाधिकरणतानिरूपिताऽऽधेयतासंबन्धेनान्वय एतावतैव जात्यादिरूपविशेषणशून्यप्रकृत्यर्थनरादिसामान्यव्यावृत्तेर्विधेयधर्मे लाभः ।

'द्रव्याणां क्षितिपाथसी रसवती' इत्यादौ भेदद्वयादिविशिष्टद्रव्यत्वादि-

---

त्वस्याऽत्यन्ताभावप्रतियोगित्वस्य च विधेयतावच्छेदकावच्छेदेनान्वय इति–'नराणां क्षत्रियः शूरः' इत्यत्र विधेयः शूरो विधेयतावच्छेदकं शूरत्वं तदवच्छेदेन तथा च शूरत्वावच्छेदेन शूरे क्षत्रियभिन्ननरवृत्तिशूरान्योन्याभावप्रतियोगित्वस्यान्वयः, 'नराणां क्षत्रिये शौर्यम्' इत्यत्र विधेयतावच्छेदकं शौर्यत्वं तदवच्छेदेन शौर्ये क्षत्रियभिन्ननरवृत्तिशौर्यात्यन्ताभावप्रतियोगित्वस्यान्वय इत्यर्थः । विधेयतावच्छेदकावच्छेदेनोक्तान्वयस्य फलमाह– अत इति, यद्युक्तप्रतियोगित्वस्य विधेयतावच्छेदकावच्छेदेनान्वयो न स्यात्तदा क्षत्रिये शूरभेदस्य शौर्यात्यन्ताभावस्य चासत्त्वेपि शूरराक्षसैतदुभयभेदोस्त्येव तथा शौर्यराक्षससत्त्वैतदुभयात्यन्ताभावोप्यस्त्येवेति एतादृशद्वित्वावच्छिन्नाभावमादाय विधेये शौर्यशूरादौ क्षत्रियव्यावृत्तत्वस्याप्यतिप्रसङ्गः स्यात्, यदा चोक्तप्रतियोगित्वस्य विधेयतावच्छेदकावच्छेदेनान्वयस्तदा शूरत्वावच्छिन्नप्रतियोगिताकान्योन्याभावः शौर्यत्वावच्छिन्नप्रतियोगिताकात्यन्ताभावश्च लभ्यते तथा च क्षत्रिये उक्तद्वित्वावच्छिन्नप्रतियोगिताकाभावस्य सत्त्वेपि शूरत्वावच्छिन्नप्रतियोगिताकान्योन्याभावः शौर्यत्वावच्छिन्नप्रतियोगिताकात्यन्ताभावश्च नास्त्येवेति न विधेये शौर्यशूरादौ क्षत्रियव्यावृत्तत्वस्यातिप्रसङ्ग इत्यर्थः । अभावे=क्षत्रियभिन्ननरनिष्ठे शूरान्योन्याभावे शौर्यात्यन्ताभावे च प्रकृत्यर्थस्य=निर्धारणविभक्तिप्रकृत्यर्थस्य नरादेरुच्यमानाधेयतासंबन्धेनान्वयः– अभावस्य नरादौ वृत्तित्वेनाभावे आधेयता वर्तते एव सैव संबन्ध इत्याह– अभावे चेति । स्वाभिप्रेताधेयतामाह– क्षत्रियत्वादीति, क्षत्रियत्वादिरूपोद्देश्यतावच्छेदकेनाऽवच्छिन्नो यः क्षत्रियस्तद्भेदेन विशिष्टम्=समानाधिकरणं यत् प्रकृत्यर्थतावच्छेदकं नरत्वादिकं तद्व्यापकीभूता याधिकरणता उक्ताभावनिष्ठाधेयतानिरूपिताधिकरणता यत्र यत्र क्षत्रियभेदविशिष्टनरत्वं वर्तते क्षत्रियभिन्ननरे तत्र तत्र शूरान्योन्याभावः शौर्यात्यन्ताभावश्च वर्तते एवेति तादृशाभावाधिकरणतापि वर्तते इत्यधिकरणतायामऽस्यां क्षत्रियभेदसमानाधिकरणनरत्वव्यापकत्वं प्राप्तम् । एतादृशनरत्वादिव्यापकीभूताधिकरणतानिरूपिता चाधेयता विवक्षिताभावे प्राप्तेति एतादृशाधेयतासंबन्धेनाऽभावे प्रकृत्यर्थनरादेरन्वयः क्रियते । अत्र च नरे क्षत्रियभेदवैशिष्ट्यस्य निवेशाद् नरपदेन क्षत्रियभिन्ननरो गृह्यते तथा चैतावतैव=आधेयतारूपसंबन्धस्वरूपे एव क्षत्रियभेदनिवेशेनैव क्षत्रियत्वादिजातिरूपविशेषणशून्यनरसामान्यव्यावृत्तत्वं विधेयलक्षणधर्मे लभ्यते एवेति न पूर्वोक्तमतानि युक्तानीत्यर्थः ।

द्रव्याणामिति– 'द्रव्याणां क्षितिपाथसी रसवती' इत्यत्रापि व्यावृत्तत्वं षष्ठ्यर्थ इत्यादिकं

व्यापकतैव संबन्धः । विधेयस्य शूरतमादेर्निर्धारणविभक्तिप्रकृत्यर्थतावच्छेदक-नरत्वादिविशिष्टतादात्म्यादिरेव संबन्धतया भासतेऽतो 'नराणां राक्षसः शूरः' इत्यादेर्नापत्तिः । अन्यत्स्वयमूह्यम् ॥

॥ इति षष्ठ्यर्थनिरूपणं समाप्तम् ॥

---

सर्वं पूर्ववदेव किं तु रसवदन्योन्याभावे द्रव्यस्य भेदद्वयविशिष्टद्रव्यत्वादिव्यापकतामात्रसंबन्धेना-न्वय इत्येव विशेष इत्यर्थः । भेदद्वयेति— तेजआदौ क्षितिभेदः पाथोभेदश्च वर्तते तत्र द्रव्यत्व-मपि वर्तते इति भेदद्वयविशिष्टं द्रव्यत्वं यत्र यत्र तेजआदौ वर्तते तत्र तत्र रसवदन्योन्याभावोऽपि वर्तते इत्यभावे व्यापकता प्राप्ता तादृशव्यापकतासंबन्धेनाभावे द्रव्यपदार्थस्याऽन्वय इति विधेये रसवत्त्वे क्षितिजलोभयभिन्नद्रव्यव्यावृत्तत्वलाभ इत्यर्थः । एवं पूर्वत्रापि क्षत्रियत्वावच्छिन्नभेदविशि-ष्टनरत्वव्यापकतायाः संबन्धत्वं संभवत्येवेत्याधेयतापर्यन्तानुधावनं चिन्त्यम् । विधेयस्येति— 'नराणां क्षत्रियः शूरतमः' इत्यत्र विधेयस्य शूरतमादेर्निधारणविभक्तिप्रकृत्यर्थतावच्छेदकं यन्न-रत्वं तादृशनरत्वादिविशिष्टतादात्म्यसंबन्धेन क्षत्रिये उद्देश्यभूतेऽन्वयो ज्ञेयः— क्षत्रिये च संबन्ध-भूतं नरतादात्म्यमस्त्येव. तस्मात् 'नराणां राक्षसः शूरः' इति प्रयोगस्यापत्तिर्नास्ति— यतो-ऽप्युक्तरीत्या निर्धारणविभक्तिप्रकृत्यर्थतावच्छेदकनरत्वविशिष्टतादात्म्येन=नरतादात्म्येनैव राक्षसे शूरान्वयः कर्तव्यो नरतादात्म्यं च राक्षसे नास्त्येव— राक्षसानां नरभिन्नत्वादित्यत्रोद्देश्यभूते राक्षसे विधेयभूतशूरान्वयाऽसंभवात् नैतत्प्रयोगापत्तिः किं तु 'नरेभ्यो राक्षसाः शूराः' इत्येव प्रयोगो भवतीत्यर्थः । 'नराणां कर्णः प्रचुरं ददाति' इत्यत्रापि कर्णे प्रचुरदानकृतेरभेदाऽसं-भवाद् भेदान्वय एवेत्यनेन वाक्येन कर्णभिन्नक्षत्रिये प्रचुरदानकृतेरत्यन्ताभावो बोध्यते इति तादृ-शात्यन्ताभावप्रतियोगित्वं यत् प्रचुरदानकृतौ प्राप्तं तदेव कर्णभिन्नक्षत्रियव्यावृत्तत्वमिति बोध्यम् ॥

॥ इति व्युत्पत्तिवादादर्शे षष्ठ्यर्थनिरूपणं समाप्तम् ॥

---

## अथ सप्तमः

आधारसप्तम्या आधेयत्वमर्थस्तस्य क्रियायामन्वयः । आधाराधेयभावश्च न संयोगादिरूपसंबन्धात्मकः- कुण्डादिसंयोगिनो बदरादेरपि कुण्डाधारताप्रसङ्गात्. अपि तु पदार्थान्तरमेव स च संबन्धविशेषावच्छिन्नः-संयोगेनाधिकरणं समवायेनाधिकरणमित्यादिव्यवहारात् । अथ वोक्तातिप्रसङ्गभिया संयोगेनाधारत्वमेवातिरिक्तं समवायसंबन्धावच्छिन्नं च समवायादिरूपमेव । न च समवायस्यापि संबन्धत्वेन द्विष्ठतया रूपादेरपि पटाद्यधिकरणताप्रसङ्गः,तथा सति तुल्ययुक्त्याऽधिकरणत्वस्यापि द्विष्ठतया तादृशातिप्रसङ्गस्य दुर्वारत्वात् । यदि चाधारताया आधारेऽनुयोगित्वं संबन्ध आधेये च प्रतियोगित्वमिति संबन्धवैलक्षण्यान्नातिप्रसङ्गः- आधारतानुयोगिताया एवाधारव्यवहारप्रयोजकत्वादित्युच्यते ? तदा समवायस्यापि तद्वैलक्षण्येनातिप्रसङ्गवारणादतिरिक्ताधारतायां मानाभावात् ।

---

क्रमप्राप्तं सप्तम्यर्थनिरूपणमारभते- आधारेति । आधारस्यैवाधिकरणत्वादधिकरणे च सूत्रकृता सप्तम्या विहितत्वादुच्यते- आधारसप्तम्या इति । तस्य=आधेयत्वस्य । 'स्थाल्यां पचति' इत्यादौ पाकादिक्रियायां स्थाल्याद्याधेयकत्वं स्पष्टमेव, 'भूतले वर्तते घटः' इत्यादौ क्रियायां सप्तम्यर्थान्वयव्यवस्थां स्वयमेवाग्रे अथेत्यादिना प्रतिपादयिष्यतीति ध्येयम् । आधेयत्वं च वृत्तित्वमेवेति 'भूतले घटः' इत्यस्य भूतलवृत्तिर्घट इति शाब्दबोधः संपन्नः । आधाराधेयभावमाह- आधारेति । सः=पदार्थान्तरभूत आधाराधेयभावः । बदरकुण्डयोराधाराधेयभावः संयोगसंबन्धावच्छिन्नः- कुण्डबदरयोः संयोगस्यैव सत्त्वात् । घटतद्रूपयोराधाराधेयभावः समवायसंबन्धावच्छिन्नः- तयोः समवायस्यैव संबन्धत्वात् । पक्षान्तरमाह- अथवेति । उक्तातिप्रसङ्गभिया=बदरस्य कुण्डाधारताप्रसङ्गवारणाय, संयोगसंबन्धावच्छिन्नाधारत्वस्यातिरिक्तत्वेन तत् कुण्डे एव स्वीक्रियते न बदरेपि येन बदरस्य कुण्डाधारत्वं प्रसज्येतेत्यर्थः । ननु यदि समवायसंबन्धावच्छिन्नमाधारत्वं समवायस्वरूपमेव तदा पटतद्रूपयोः समवायस्य तुल्यत्वादेव रूपस्यापि पटाधारत्वं स्यादित्याशङ्क्याह- न चेति । उत्तरमाह- तथा सतीति । नन्वाधारताऽऽधारेऽनुयोगित्वसंबन्धेन वर्तते आधेये च प्रतियोगित्वसंबन्धेनेति संबन्धवैलक्षण्यात्= अनुयोगित्वप्रतियोगित्वरूपसंबन्धयोर्वैलक्षण्यमस्ति तत्राधारतानुयोगिन एवाधारत्वं स्वीक्रियते इति नाधारताप्रतियोगिनो रूपादेः पटाद्याधारताप्रसक्तिरित्याशयेनाह- यदीति । उत्तरमाह- तदेति, तद्वैलक्षण्येन=अनुयोगिताप्रतियोगित्वयोर्वैलक्षण्येन- समवायस्यानुयोगित्वमाधारे प्रतियोगित्वं चाधेये तत्र समवायानुयोगिन एवाधारत्वस्वीकारान्न रूपस्य पटाधारताप्रसक्तिः, एवमेव कुण्डबदरादिसंयोगस्थलेपि न बदरादेः कुण्डाधारताप्रसक्तिरस्तीति संयोगसमवायाद्यतिरिक्ताधारत्वसंबन्धस्वीकारो व्यर्थ एवेत्यर्थः ।

स्पर्शाद्याधारवाय्वादे रूपाद्याधारतावारणायाऽऽधेयभेदेनाधारत्वमतिरिक्तम्, इति न सत्— आधेयभेदभिन्नाधिकरणतानामऽतिरिक्तसमवायस्य च कल्पनामपेक्ष्याऽऽधेयभेदेन समवायभेदस्यैवोपगन्तुमुचितत्वात् ।

अथ संयोगेनाधिकरणत्वमपि संयोगरूपमस्तु कुण्डबदरादिसंयोगानां कुण्डादिकमनुयोगि न तु बदरादिकमिति नातिप्रसङ्गः । न चैवमपि बदरादेः कुण्डादिनिष्ठसंयोगानुयोगितया आधारतापत्तिः— तादृशसंयोगस्य कुण्डादिनिष्ठत्वेपि तत्प्रतियोगिकत्वानुपगमात्, तत्प्रतियोगिकसंबन्धानुयोगिताया एव तदाधारव्यवहारप्रयोजकत्वात् । न चासौ संयोगो बदरादौ कुण्डादिविशिष्टबुद्धिप्रयोजकतयोभयानुयोगिक एवमुभयप्रतियोगिकोपीति वाच्यम्, आधेये संयोगेनाधिकरणविशिष्टबुद्धेरप्रामाणिकत्वात्, 'कुण्डे बदरम्' इत्यादिवि-

---

नन्वेवं हि वायौ स्पर्शसमवायोस्त्येव समवायश्चैक एवेति वायौ रूपसमवायप्रसक्त्या रूपाधारतापि प्रसज्येत न चैतदिष्टमिति तद्वारणायाऽधेयभेदेनाधारत्वं समवायाद्यतिरिक्तं स्वीक्रियते तथा च वायौ स्पर्शाधारतासत्त्वेपि रूपाधारताप्रसक्तिर्नास्ति— रूपाधारतायाः स्पर्शाधारतापेक्षयाऽतिरिक्तत्वात्तस्याश्च वायावस्वीकारादित्याशयेनाह— स्पर्शेति । परिहारमाह— इति न सदिति । एवं ह्याधारभेदेनाधारतानामनन्तानां स्वीकारः प्राप्तः समवायस्यापि प्राप्त इति गौरवं स्यादित्याधेयभेदेन समवायभेद एव स्वीकर्तुमुचितस्तथा च वायौ स्पर्शसमवायसत्त्वेपि रूपसमवायाभावाद्रूपाधारताप्रसक्तिर्नास्तीत्यर्थः ।

शङ्कते— अथेति । संयोगानुयोगिनः कुण्डादेरेवाधारत्वस्वीकारान्न बदरादेः कुण्डाद्याधारतातिप्रसङ्ग इत्यर्थः । नन्वेवमपि कुण्डबदरयोः संयोगस्यैक्यात् यः खलु कुण्डे संयोगः स बदरेप्यस्त्येवेति कुण्डनिष्ठसंयोगानुयोगिता बदरेपि प्राप्तेति कुण्डनिष्ठसंयोगानुयोगितया बदरस्य कुण्डाधारत्वं स्यादेव— अनुयोगिन आधारत्वस्वीकारादित्याशङ्क्याह— न चेति । अनुयोगितया इति पाठे तु पञ्चम्यन्तं तत् । अत्र "बदरादेः" इत्यस्य स्थाने "कुण्डादेः" इति पाठस्त्वऽसङ्गत एव भाति । उत्तरमाह— तादृशेति । तादृशसंयोगस्य=कुण्डबदरसंयोगस्य । तत्प्रतियोगिकत्वानुपगमात्=कुण्डप्रतियोगिकत्वानुपगमात् । नियामकमाह— तत्प्रतियोगिकेति, तथा च बदरे कुण्डानुयोगिकसंयोगानुयोगिता वर्त्तते न तु कुण्डप्रतियोगिकसंयोगानुयोगितेति न बदरस्य कुण्डाधारताप्रसक्तिः कुण्डे च बदरप्रतियोगिकसंयोगानुयोगिता वर्तते इति कुण्डस्य बदराधारता प्राप्तेत्यर्थः । ननु कुण्डबदरयोः संयोग एक एव तेन च कुण्डे बदरविशिष्टबुद्धिवद् बदरेपि कुण्डविशिष्टबुद्धिर्जायते एवेति स संयोग एकत्वाद् यथा कुण्डबदरोभयानुयोगिकस्तथोभयप्रतियोगिकोप्यस्त्येव तथा च बदरेपि कुण्डप्रतियोगिकसंयोगानुयोगिता प्राप्तेति बदरस्य कुण्डाधारत्वं किं न स्यादित्याशङ्क्याह— न चेति । परिहारमाह— आधेये इति, आधेये अधिकरणाधारताज्ञानस्याऽप्रामाणिकत्वादेव नाधेयस्य बदरादेः कुण्डादिलक्षणस्वाधिकरणाधारतापत्तिरित्यर्थः । नियामकमाह— कुण्डे इति, यद्यपि 'बदरवत् कुण्डम्' इत्यादौ कुण्डस्य प्रथमा-

शिष्टबुद्धौ संयोगप्रतियोगिताया एव संबन्धत्वात् 'पटे रूपम्' इत्यादौ समवायप्रतियोगितावत्, अन्यथा तादृशविशिष्टबुद्धिबलाद् रूपादावपि पटादिसमवायानुयोगिताप्रसङ्गादिति चेत् ?, मा भूत्तत्संबन्धावच्छिन्नमप्यतिरिक्तम् ।

यत्तु तत्पतनप्रतिबन्धकसंयोगवत्त्वं तदाधारत्वं कुण्डादिपतनप्रतिबन्धकसंयोगवत्त्वं च न बदरादौ— तत्संयोगसत्त्वेपि तस्य पतनादिति, तदसत्— यस्य पतनमप्रसिद्धं तदाधारत्वाऽसंग्रहात्, स्वस्मिन् स्वपतनप्रतिबन्धकसंयोगसत्त्वेन स्वस्यापि स्वाऽऽधारताप्रसङ्गाच्च । स्वान्यत्वे सति स्वनिष्ठपतनानुत्पादप्रयोजक-

---

न्तार्थत्वेन 'बदरप्रतियोगिकसंयोगवत् कुण्डम्' इति शाब्दबोधोदयात् संयोगप्रतियोगिता बदरे एव प्रतिभाति मतुप्प्रत्ययेन च बदराधारता कुण्डे भासते, तथापि 'कुण्डे बदरम्' इत्यत्र तु बदरस्य प्रथमान्तार्थत्वेन विशेष्यत्वात् 'कुण्डसंयोगवद् बदरम्' इत्याकारकशाब्दबोधोदयात् कुण्डसंयोगस्य बदरवृत्तित्वेन प्रतीयमानत्वात् संयोगप्रतियोगिता कुण्डे प्राप्ता सा संयोगप्रतियोगितैव चाधारतानियामकसंबन्ध इति कुण्डस्य बदराधारता प्राप्ता न तु बदरस्यापि कुण्डाधारता— बदरस्यैतादृशसंयोगेऽनुयोगित्वेन प्रतियोगित्वाभावादित्यर्थः, उक्ते दृष्टान्तमाह— पटे इति, यथा 'पटे रूपम्' इत्यत्र 'पटसमवायवद् रूपम्' इति शाब्दबोधोदयात् पटसमवायस्य रूपवृत्तित्वेन भानात् तादृशसमवायप्रतियोगिता पटे एवेति पटस्यैव रूपाधारतास्ति न तु रूपस्य पटाधारता तथा प्रकृतेपि कुण्डस्यैवोक्तरीत्या बदराधारता प्राप्तेत्यर्थः । विपक्षे बाधकमाह— अन्यथेति, यदि संयोगसमवायादिप्रतियोगिताया आधारतानियामकत्वं न स्यात्तदा तादृशविशिष्टबुद्धिबलात्='कुण्डे बदरम्' 'पटे रूपम्' इत्यादिविशिष्टबुद्धिबलाद् रूपबदरादावपि समवायसंयोगाद्यनुयोगिता प्राप्नोत्येव— रूपबदरादावपि समवायसंयोगादेर्वृत्तित्वेन भानादिति रूपबदरादीनामपि पटकुण्डाद्याधारत्वं प्रसज्येत. न चैतदिष्टमिति संयोगसमवायादिप्रतियोगितैव संबन्ध इत्युक्तरीत्या पटकुण्डादेरेवाधारत्वं प्राप्नोति न तु रूपबदरादेरपीत्यर्थः । इत्येवमाशङ्कायामाह— मा भूदिति, तथा च तत्संबन्धावच्छिन्नम्=संयोगसंबन्धावच्छिन्नमप्यधिकरणत्वं संयोगरूपमेवास्तु न तु संयोगातिरिक्तमिति न संयोगसंबन्धावच्छिन्नातिरिक्ताधारतास्वीकारप्रयुक्तं गौरवमित्यर्थः । अस्मिन् पक्षे बदरादेराधारत्वातिप्रसङ्गः शङ्कारम्भेपि "कुण्डादिकमनुयोगि न तु बदरादिकम्" इत्यादिना निवारितः, संयोगप्रतियोगितायाः संबन्धप्रतिपादनेन चात्रापि निवारित एवेत्यनुसंधेयम् ।

यत्त्विति । तत्संयोगसत्त्वेपि=बदरसंयोगसत्त्वेपि । तस्य=कुण्डस्य । तस्मान्न बदरादौ कुण्डाद्याधारताप्रसक्तिरित्यर्थः । परिहरति— तदसदिति, शब्दस्य पतनमेव न संभवतीत्याकाशे शब्दपतनप्रतिबन्धकत्वासंभवात् 'आकाशे शब्दः' इत्यादावाकाशादीनां शब्दाधारत्वं न स्यादित्यर्थः । अतिप्रसक्तिमाह= स्वस्मिन्निति । ननु स्वभिन्नो यः स्वनिष्ठस्तत्पतनप्रतिबन्धकसंयोगवत्त्वं तत्=तदाधारत्वं तथा च न स्वस्य स्वाधारताप्रसक्तिः— स्वस्य स्वभिन्नत्वाभावादित्याश-

संयोगवत्त्वं तदिति चेत्?, न— एतदनुपस्थितावप्यधिकरणव्यवहारादित्यलम् ।

अथाऽऽधारसप्तम्या आधेयतार्थकत्वे 'भूतले वर्तते घटः' इत्यादौ धात्वर्थस्य वृत्तेराधेयतारूपत्वेन तत्र भूतलाद्याधेयत्वाभावेनाऽयोग्यताप्रसङ्ग इति चेत्?, न— तत्र निरूपकत्वस्यैवाधारतारूपत्वेन निरूप्यत्वस्यैव सप्तम्यर्थत्वात् भूतलादिनिरूप्यत्वस्य च घटादिनिष्ठवृत्तावऽबाधात्, अत एव "इति हेतुस्तदुद्भवे" इत्यादौ हेतौ हेतुतायां चोद्भवपदार्थोत्पत्तिवृत्तित्वाभावेपि हेतुतायामुत्पत्तिनिरूपितत्वसत्त्वेन सप्तम्युपपत्तिः । अथ वा वृद्धातोरप्याधारत्वमेवार्थस्तन्निरूपकत्वमेव घटादेस्तत्कर्तृत्वम्. एवं च तादृशधात्वर्थे भूतलाद्यधिकरणकत्वमेव सप्तम्यन्तेन बोध्यते—तत्र तदऽबाधात् ।

अथाऽऽधारसप्तम्या क्रियायां प्रकृत्यर्थाधिकरणकत्वं यदि बोध्यते तदा 'चैत्रे चैत्रो गच्छति' इत्यादिप्रयोगापत्तिः— तत्र धात्वर्थस्य स्पन्दादेः कर्त्रादवृत्तित्वात्, 'भुवि गच्छति' इत्यादिश्च न स्यात्— चैत्रनिष्ठक्रियाया भुवि

---

ङ्कते— स्वान्यत्वे इति । परिहारमाह— नेति । एतदनुपस्थितौ=उक्ताधारतालक्षणानुपस्थितौ । तथा चैतल्लक्षणमपि न युक्तमित्यर्थः ।

शङ्कते— अथेति, 'भूतले वर्तते घटः' इत्यत्र सप्तम्यर्थस्याधेयत्वस्य धात्वर्थाधेयत्वेऽन्वयो न संभवति समानरूपत्वादित्यर्थः । परिहरति— नेति, तत्र='भूतले वर्तते घटः' इत्यत्र निरूप्यत्वं सप्तम्यर्थः घटादिनिष्ठा धात्वर्थभूता वृत्तिः=आधेयता च भूतलनिरूपितैवास्तीति घटादिनिष्ठवृत्तौ भूतलनिरूप्यत्वस्यान्वयः क्रियते इति नोक्ताऽयोग्यताप्रसक्तिः । अत एव=उक्तस्थलादौ निरूप्यत्वस्यैव सप्तम्यर्थत्वादेव " इति हेतुस्तदुद्भवे " इत्यत्र हेतौ हेतुतायां चोद्भवपदार्थभूता योत्पत्तिस्तद्वृत्तित्वाभावेपि हेतुतायामुत्पत्तिनिरूपितत्वमस्त्येवेति तादृशनिरूपितत्वरूपार्थमाश्रित्यात्रोद्भवपदात् सप्तम्युपपद्यते, न हि काव्योत्पत्तौ काव्यहेतुभूतशक्त्यादिर्वा तन्निष्ठहेतुता वा तिष्ठति येनात्र वृत्तित्वं सप्तम्यर्थ उपपद्येतेत्यर्थः । अत्र काव्योत्पत्तिनिरूपितहेतुताश्रयः शक्त्यादित्रयमिति शाब्दबोधः । पूर्वत्र च भूतलनिरूपितवृत्तित्वाश्रयो घट इति शाब्दबोधः । पक्षान्तरमाह— अथ वेति । तन्निरूपकत्वम्=वृद्धात्वर्थभूताधारत्वनिरूपकत्वमेव वृद्धात्वर्थकर्तृत्वं घटेस्ति— घटस्यैव तन्निरूपकत्वात् । तादृशधात्वर्थे=आधारत्वरूपे । तत्र=धात्वर्थभूताधारतायाम् । तदबाधात्=भूतलाधिकरणकत्वस्याऽबाधात् भूतलस्यैवाधारताधारत्वादितिभावः । तथा च भूतलाधिकरणका ( भूतलनिष्ठा ) धारतानिरूपको घट इति शाब्दबोधः ।

शङ्कते— अथेति । प्रकृत्यर्थाधिकरणकत्वम्=सप्तमीप्रकृत्यर्थाधिकरणकत्वम् । कर्त्रादिवृत्तित्वात्=चैत्रवृत्तित्वादित्यर्थः । चैत्रकर्तृकगमनादिक्रियायां चैत्राधिकरणकत्वस्य सत्त्वात् चैत्रपदादपि सप्तमी स्यादिति भावः । बाधात्=अवृत्तित्वात् । चैत्रनिष्ठक्रियाया भूवृत्तित्वे एव भ्वधिकरणकत्वं

बाधादादितिचेत् ?, न - तत्र कर्तृघटितपरम्परासंबन्धावच्छिन्नाधारताया एवं सप्तम्यर्थत्वेन सर्वसामञ्जस्यात्, परम्परासंबन्धस्यापि प्रतीतिबलेन क्वचिदाधारतानियामकत्वोपगमात् ।

अवच्छेद्यताविशेषोऽप्याधारसप्तम्यर्थो यथा 'वीणायां शब्दः' 'कर्णे शब्दः' 'वृक्षाग्रे कपिसंयोगः' इत्यादौ, एषु कारकतानिर्वाहाय 'भवति' इत्यध्याहारः । अथ वा "सप्तम्यधिकरणे च" इति चकारेणाऽकारकाऽऽधारवाचिनोऽपि सप्तमी, अत एव "साध्यवद्भिन्नसाध्याभाववदवृत्तित्वम्" इत्यत्र "साध्यवद्भिन्ने यः साध्याभावः" इतिसप्तमीतत्पुरुषेण व्याख्यानं संगच्छते: तत्र क्रियाध्याहारे सापेक्षतयाऽसामर्थ्येन समासानुपपत्तेः ।

'चर्मणि द्वीपिनम्' इत्यादौ "निमित्तात्कर्मयोगे" इत्यनेन सप्तमी प्रकृत्यर्थचर्मादेर्हननादिक्रियानिमित्तत्वं बोधयति । निमित्तत्वं च न कारणत्वम्- चर्मादेर्हननादिक्रियाकारणत्वे मानाभावात् पूर्ववर्तित्वेऽपीच्छाकृत्यादिनाऽन्यथासि-

---

स्यादित्याक्षेपः । परिहरति- नेति । कर्तृघटितेति- कर्तृघटितपरम्परासंबन्धावच्छिन्ना=स्वाश्रयाश्रयत्वसंबन्धावच्छिन्नाऽऽधारता सप्तम्यर्थः- स्वं क्रिया तथा: च 'भुवि गच्छति चैत्रः' इत्यत्र स्वंगमनक्रिया तदाश्रयः चैत्रस्तदाश्रयत्वं भुव्यऽस्तीति स्वाश्रयाश्रयत्वसंबन्धावच्छिन्नाऽऽधारता भुवि वर्तते चैत्र सप्तम्यर्थस्तादृशस्वाश्रयाश्रयत्वसंबन्धावच्छिन्नाधारतासंबन्धेन चैत्रनिष्ठापि गमनक्रिया भुवि संभवतीति 'भुवि गच्छति' इतिप्रयोगानुपपत्तिर्नास्ति, 'चैत्रे चैत्रो गच्छति' इति प्रयोगापत्तिरपि नास्ति- अत्र स्वंक्रिया तदाश्रयश्चैत्रस्तदाश्रयत्वस्य चैत्रे बाधादित्यर्थः । ननु 'भूतले घटः' इत्यादौ साक्षात्संबन्धस्यैव संयोगस्याधारतानियामकत्वमस्तीत्युक्तस्थले स्वाश्रयाश्रयत्वरूपपरम्परासंबन्धस्य कथमाधारतानियामकत्वं स्यादित्याशङ्क्याह- परम्परासंबन्धस्यापीति ।

सप्तम्याः सोदाहरणमर्थान्तरमाह- अवच्छेद्यतेति । तथा च वीणायाम्=वीणावच्छेदेन. कर्णे=कर्णावच्छेदन. वृक्षाग्रे=वृक्षाग्रावच्छेदेनेत्यर्थः । एषु=उक्तोदाहरणेषु । अकारकाधारवाचिनः=अकारकरूपो य आधारस्तद्वाचिनः पदात्, तथा चोक्तोदाहरणेषु क्रियाध्याहारापेक्षा नास्तीत्यर्थः । उक्ते विनिगमकमाह- अत एवेति । अत एव=अकारकरूपाधारवाचकपदादपि सूत्रस्थचकारेण सप्तमीसंभवादेव. तत्रेति- "साध्यवद्भिन्ने वर्तते यः साध्याभावः" इत्येवं क्रियाध्याहारेण व्याख्याने हि साध्यवद्भिन्नपदस्य क्रियापदसापेक्षतया "सापेक्षमसमर्थवद् भवति" इतिनियमेनाऽसामर्थ्ये प्राप्ते साध्याभावपदेन समासो न स्यादित्यर्थः । न चैवं क्वचिदपि समासो न स्यादिति शङ्क्यम्, समासानन्तरं क्रियाध्याहारेण समासे बाधकाभावात् ।

प्रयोगान्तरमुदाहरति- चर्मणीति । हन्तीति शेषः । निमित्तत्वस्वरूपमाह- निमित्तत्वमिति । ननु चर्मणो हननक्रियातः पूर्ववर्तित्वात् कथं न कारणत्वं स्यादित्याशङ्क्याह- पूर्वेति, इच्छाकृत्यादिना हननसंपत्तिः संभवत्येवेति चर्मणोऽन्यथासिद्धत्वम्, अन्यथेच्छादिकं विनापि हनन

द्वत्वात्, अपि तु क्रियाजनिका या विनियोज्यत्वेनेच्छा तद्विषयत्वम्, स्वविषयकताद्दशेच्छाधीनत्वमेव तत्र क्रियान्वयी सप्तम्यर्थः, तदेकदेशविषयितायां निरूपकत्वन प्रकृत्यर्थान्वयः । चर्मादेर्घात्यव्याघ्रादेः संबन्धश्च न सप्तम्यर्थः अपि तु सप्तम्याः साधुत्वे स्वरूपसन्नऽपेक्षितः ।

'गोषु दुह्यमानासु गतः' इत्यादौ "यस्य च भावेन" इत्यनेन गवादिपदात्सप्तमी । तत्समानाधिकरणदुह्यमानादिपदाच्च 'नीलं घटमानय' इत्यादौ नीलादिपदाद् द्वितीयावद् विशेषणपदस्य विशेष्यपदसमानविभक्तिकत्वनियमात् सप्तमी । विधायकसूत्रे च भावपदं क्रियापरं तथा च 'यद्विशेषणकृदन्तार्थविशेषणतापन्नक्रियया क्रियान्तरस्य, लक्षणम्=व्यावर्तनं तद्वाचकपदात्सप्तमी' इति तदर्थः, उक्तस्थले गमनादिक्रिया दोहनादिसमानकालीनत्वादिविशेषणपुरस्कारेण बोध्यतयाऽभिप्रेता. अतो व्यावर्तकविशेषणप्रविष्टताद्दशक्रियाया अपि व्यावर्तकतया तत्कर्माद्यऽभेदान्वयिगवादिपदात्सप्तमी । अतस्ताद्दशसप्तम्याः

---

पाद्येत न चैवमस्तीत्यर्थः । अपि त्विति— विनियोज्यत्वेनेच्छा=विनियोज्यत्वप्रकारकचर्मविषयकेच्छा चर्मविनियोगेच्छेति यावत् तद्विषयत्वम्=ताद्दशेच्छाविषयत्वमेव निमित्तत्वमित्यर्थः । स्वविषयकेति— चर्मविषयकविनियोज्यत्वेनेच्छाधीनत्वं हननक्रियायां यदस्ति तदेव सप्तम्यर्थः, तदेकदेशविषयितायाम्=उक्तेच्छानिष्ठविषयितायां निरूपकत्वेन प्रकृत्यर्थचर्मणोन्वयः, एतद्विषयितायाश्चर्मण एव निरूपकत्वात् तथा च चर्मनिरूपितविषयिताश्रयेच्छाजन्यहननव्यापारवानिति शाब्दबोधः । ननु चर्मादेर्घात्यव्याघ्रादेश्च यः समवायादिसंबन्धः स एव सप्तम्यर्थः किं न स्यात्? तत्सत्त्वे एव "निमित्तात्कर्मयोगे" इतिवार्तिकेन सप्तमीविधानादित्याशङ्क्याह— चर्मादेरिति । स्वरूपसन्निति— यदि चर्मद्विपिनोः संबन्धो न स्यात्तदा यथा वेतनधान्ययोः संबन्धाभावात् 'वेतनेन धान्यं लुनाति' इत्यत्र फलभूतवेतनवाचकवेतनपदात्तृतीयैव "हेतौ" इतिसूत्रेण भवति तथात्रापि चमपदोत्तरं तृतीयैव स्यान्न सप्तमी, चर्मादेर्घात्यव्याघ्रादेश्च परस्परं संबन्धसत्त्वे एव सप्तमीविधानादिति स संबन्धः सप्तम्याः साधुत्वार्थं स्वरूपसन्नपेक्षितोस्ति न तु तस्य शाब्दबोधे प्रकारतया भानापेक्षापि येन तस्य सप्तम्यर्थत्वं स्वीक्रियेतेत्यर्थः ।

प्रयोगान्तरमुदाहरति— गोष्विति । सूत्रार्थमाह— तथा चेति, यद्विशेषणम्=गोविशेषणं कृदन्तार्थः= दुह्यमानपदार्थस्तत्र विशेषणतामापन्ना या दोहनक्रिया तया क्रियान्तरस्य=गमनस्य व्यावर्तनम्=कालिकव्यवच्छेदः क्रियते इति तद्वाचकपदात्=गोपदात्सप्तमी भवतीत्यर्थः । उक्तसूत्रार्थस्योक्तोदाहरणे समन्वयमाह— उक्तस्थले इति । अत इति— व्यावर्तकं यद्दोहनसमानकालिकत्वं विशेषणं तत्प्रविष्टा=तद्विशेषणभूता या ताद्दशक्रिया=दोहनक्रिया तस्या अपि व्यावर्तकतया तत्कर्मणाऽभेदान्वयिनी या गौस्तद्वाचकपदात् सप्तमी जातेत्यर्थः । परिहारायात्र मतान्तरं प्रदर्शयति— अतस्ताद्दशेति, ताद्दशसप्तम्याः=अत्रत्यगोपदोत्तरसप्तम्याः । तत्र=समानका-

समानकालीनत्वादिकमात्रमर्थस्तत्र दुह्याद्युपस्थापितदोहनादेर्निरूपकत्वेनाऽन्वयाद् दोहनसमानकालीनत्वादिकं गमनादौ लभ्यते इति न युक्तम्— दुह्याद्युपस्थापितक्रियायाः कृदन्तार्थविशेषणतयोपस्थितायाः समानकालीनत्वादिविशेषणत्वासंभवात्. प्रकृत्यर्थगवादिनाऽनन्वितार्थस्य सप्तम्या बोधनासंभवाच्च । किं तु समभिव्याहृतदोहनादिक्रियैव सप्तम्यर्थस्तस्याश्च समानकालीनत्वादिकं क्रियान्तरे संबन्धः, तत्र वर्तमानार्थककृत्समभिव्याहारस्थले समानकालीनत्वम्. 'दोग्धव्यासु गतः' इत्यादिभविष्यदर्थकृत्स्थले प्राक्कालीनत्वम्. 'दुग्धासु गतः' इत्यादावतीतार्थकृत्स्थले उत्तरकालीनत्वं संबन्धतया भासते । 'पाथसि पीते तृषा शाम्यति' इत्यादावऽतीतार्थककृत्समभिव्याहारात् कार्यकारणभावोऽपि संबन्धतया भासते इत्यादिकमूहनीयम् ।

---

लीनत्वे । समानकालीनत्वस्य निरूपकं दोहनमेवात्रेति समानकालीनत्वे निरूपकत्वेन रूपेण दोहनस्यान्वयस्तस्मादित्यर्थः । परिहरति— इति न युक्तमिति । अयुक्तत्वे हेतुमाह— दुह्यादीति कृदन्तार्थो यो दुह्यमानपदार्थो गोपदार्थस्तद्विशेषणतयोपस्थिताया दोहनक्रियायाः समानकालीनत्वे विशेषणत्वं न संभवतीत्यर्थः "एकत्र विशेषणत्वेनोपस्थितस्यान्यत्र विशेषणत्वस्याव्युत्पन्नत्वात्" इतिव्युत्पत्तिविरोधादिति शेषः । किं च समानकालीनत्वं दोहने गमने च वर्तते न तु गवीति कथं तस्य गोपदोत्तरसप्तम्या बोधनं स्यात् प्रकृत्यर्थसंबद्धपदार्थस्यैव तदुत्तरविभक्त्या बोधनस्य व्युत्पन्नत्वादित्याशयेनाह—प्रकृत्यर्थेति । स्वयं सप्तम्यर्थमाह—किं त्विति, तस्याः सप्तम्यर्थभूतसमभिव्याहृतदोहनादिक्रियायाः समानकालिकत्वसंबन्धेन क्रियान्तरे— गमनादावन्वयस्तथा च दुह्यमानगोवृत्तिदोहनक्रियासमानकालिकं गमनमिति शाब्दबोधः । दुह्यमानपदोत्तरविशेषणसप्तमी तु साधुत्वार्थकत्वाद् निरर्थिकैवेत्युक्तमेव । सप्तम्यर्थदोहनक्रियाया गमनादौ समानकालिकत्वसंबन्धेनान्वयो हि वर्तमानार्थककृत्समभिव्याहारस्थले एव भवति यथात्र 'गोषु दुह्यमानासु गतः' इत्यत्र—अत्र वर्तमानार्थकशानच्प्रत्ययस्य सत्त्वात्, 'दोग्धव्यासु गोषु गतः' इत्यादिभविष्यदर्थककृत्समभिव्याहारस्थले तु सप्तम्यर्थदोहनक्रियाया गमनादौ प्राक्कालिकत्वसंबन्धेनान्वयः— दोहनात् प्रागेव गतत्वात्, तथा च दोग्धव्यगोवृत्तिदोहनक्रियाप्राक्कालिकं गमनमिति शाब्दबोधः । 'गोषु दुग्धासु गतः' इत्याद्यऽतीतार्थककृत्समभिव्याहारस्थले तु सप्तम्यर्थदोहनक्रियाया गमनादावुत्तरकालिकत्वसंबन्धेनान्वयस्तथा च दुग्धगोवृत्तिदोहनक्रियोत्तरकालिकं गमनमिति शाब्दबोध इत्याशयेनाह—तत्रेति । प्रयोगान्तरमुदाहरति—पाथसीति, तृषाशमनरूपकार्यस्य जलपानं कारणमित्यर्थः । जलपानजन्यं तदुत्तरकालिकं च तृषाशमनमिति शाब्दबोधः ।

'गुणान्यत्वे सति सत्त्वात्' इत्यादौ 'सति' इत्यनन्तरम् 'सतः' इत्यध्याहार्यम्, अन्यथा लक्षणीयक्रियाऽभावेनोक्तसूत्राविषयतया सप्तम्यनुपपत्तेः, तत्र चासूधातोरर्थ आधारता, गुणान्यत्वाद्याधारतायाश्च सत्ताधारतायां तद्वन्निष्ठत्वं संबन्धतया भासते इतिचिन्तामणिकारोक्तसामानाधिकरण्यलाभनिर्वाहः। 'शयानेन चैत्रेण भुक्तम्' इत्यादौ शयनभोजनादिक्रिययोः समानकालीनत्वभानेपि तत्र लट्प्रत्ययेनैव समभिव्याहाराद् भोजनादिसमानकालीनत्वं शयनादिक्रियायां बोध्यतेऽतो न सप्तमी–अन्यतस्तदनभिधाने एव सप्तमीविधानात् ॥

॥ इति सप्तम्यर्थविवेचनं समाप्तम् ॥

---

प्रयोगान्तरमुदाहरति–गुणान्यत्वे इति । 'सतः' इत्यध्याहाराभावे बाधकमाह=अन्यथेति, "यस्य च भावेन भावलक्षणम्" इतिसूत्रेणैकपदार्थक्रियया क्रियान्तरस्य लक्षणे=व्यावर्तने सप्तमी विधीयते तत्र क्रियान्तरस्य व्यावर्त्यस्याभावे कस्य व्यावर्तनं स्यादिति व्यावर्त्यक्रियाबोधकस्य 'सतः' इति पदस्याध्याहारः कर्तव्य एव. अन्यथा सप्तम्येव न स्यादित्यर्थः । 'सति सतः' इत्यत्र प्रकृतिभूताऽसूधातोरर्थमाह–तत्रेति । गुणान्यत्वं सत्त्वं चैकस्मिन्नेव वर्तेते इति गुणान्यत्वाधारतायाः सत्त्वाधारतायां तद्वन्निष्ठत्वेन=गुणान्यत्वाधारतावन्निष्ठत्वेन संबन्धेन ( सामानाधिकरण्येन ) अन्वय इत्युभयोराधारतयोः सामानाधिकरण्यलाभ इत्यर्थः । सत्त्वात् ( सत्ताश्रयत्वात् ) इतिपञ्चम्यन्तसमभिव्याहारहेतोः 'सतः' इति षष्ठ्यन्तं पक्षस्य बोधकम्, सतो नाम विद्यमानस्य सत्तारूपक्रियाविशिष्टस्येति यावत् । शयानेनेति । समभिव्याहारात्=स्वसमभिव्याहारात्, स्वं लट् । सप्तम्यभावे हेतुमाह–अन्यत इति । तदनभिधाने=समानकालिकत्वानभिधाने । अत्र भोजनक्रिया शयनक्रिया चैकस्मिन्नेव चैत्रेस्ति कालभेदबोधकं च नास्तीति लट्प्रत्ययेन समानकालिकत्वं बोधयितुं शक्यते 'गोषु दुह्यमानासु गतः' इत्यत्रापि यद्यपि लट्प्रत्ययोस्ति तथापि दोहनगमनक्रिययोरधिकरणभेदात् समानकालिकत्वं लटा न बोधयितुं शक्यते इति तत्र सप्तमी जातेत्यऽभिप्रायः प्रतिभाति । वस्तुतस्त्वत्र कर्तृतृतीयया सप्तम्या बाधो गतः, 'दुह्यमानासु' इत्यत्र तु कर्तृतृतीयायाः प्राप्तिर्नास्तीति 'गोषु दुह्यमानासु सतीषु गतः' इत्याकारकार्थस्य विवक्षितत्वात् "यस्य च भावेन" इत्यनेन सतिसप्तमी जातेत्यर्थः ॥

॥ इति व्युत्पत्तिवादादर्शे सप्तमीकारकम् ॥

---

## अथ संबोधनप्रथमा

'चैत्र त्वया भुज्यताम्' इत्यादौ "संबोधने च" इति प्रथमा संबोधनमेवाह। तच्च वक्तुरव्यवहितशब्दजन्यबोधाश्रयत्वेनेच्छा। प्रथमार्थतादृशेच्छाया विषयतासंबन्धेन प्रकृत्यर्थविशेषणतया भानम्।

अथ संबोध्यत्वज्ञानं विनापि 'त्वया भुज्यताम्' इत्यादिवाक्याधीनस्य चैत्रादेर्वाक्यार्थबोधस्य भोजनादिप्रवृत्तेश्च निर्वाहात् 'चैत्र' इत्यादिप्रथमान्तपदप्रयोगोऽनर्थक इति चेत् ?, न– संबोध्यतानुमापकाऽसाधारणाभिमुख्यादिविरहे विशिष्य चैत्रत्वाद्यवच्छिन्ने युष्मत्पदशक्तिग्रहनिर्वाहस्यैव तत्प्रयोजनत्वात्, चैत्रत्वाद्यवच्छिन्ने संबोध्यत्वग्रहं विना संबोध्यतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नवाचकतत्पदस्य विशिष्य चैत्रत्वाद्यवच्छिन्ने शक्तेर्निश्चेतुमशक्यत्वात्।

न चैवमपि यत्रानन्तरवाक्यं न युष्मच्छब्दघटितम् 'चैत्राऽत्र घटोऽस्ति' इत्यादौ तत्र संबोधनपदसार्थक्यं दुरुपपादमेवेति वाच्यम्, तत्रापि तत्तद्वाक्ये

---

क्रमप्राप्तं संबोधनप्रथमार्थनिरूपणमारभते– चैत्रेत्यादिना। संबोधनस्वरूपमाह– तच्चेति। तत्=संबोधनम्। अव्यवहितशब्दः=त्वयेतिशब्दः। त्वयेतियुष्मच्छब्दजन्यो बोधश्चैत्रसमवेतो भवत्वित्याकारकेच्छा वक्तुर्वर्तते एतादृशेच्छा विषयतासंबन्धेन चैत्रे वर्तते चैत्रस्य विषयत्वादित्याह– प्रथमार्थेति, तथा चात्र 'त्वयेतिशब्दजन्यबोधाश्रयत्वप्रकारिका येच्छा तादृशेच्छाविषयीभूतचैत्रकर्तृकभोजनव्यापारो भवतु' इति शाब्दबोधस्याकारः। अभिमुखीकरणेच्छाविषयत्वं संबोधनप्रथमार्थ इति युक्तमुत्पश्यामि।

शङ्कते–अथेति। संबोध्यत्वज्ञानमिति–चैत्रादेः स्वस्मिन् संबोध्यत्वज्ञानं विनापीत्यर्थः। चैत्रादेरिति कर्तृत्वं षष्ठ्यर्थः। परिहरति– नेति, संबोधनकर्तुः (वक्तुः) संबोध्यतानुमापकं यदऽसाधारणं प्रेक्षणादिरूपमाभिमुख्यं तत्सत्त्वे तु तेनैव त्वयेत्यादियुष्मच्छब्दस्य चैत्रादौ शक्तिग्रहः संभवतीति संबोधनान्तं चैत्रेत्यादिपदमनर्थकमेव यद्यपि तथापि तादृशाभिमुख्याभावे तु संबोधनान्तपदं विना त्वयेत्यादियुष्मच्छब्दस्य चैत्रादौ शक्तिग्रहो न संभवतीति युष्मच्छब्दशक्तिग्रहनिर्वाह एव तत्प्रयोजनम्=चैत्रेत्यादिसंबोधनान्तपदप्रयोगप्रयोजनम्–संबोध्यतावच्छेदकत्वोपलक्षितधर्मावच्छिन्ने एव युष्मच्छब्दशक्तिस्वीकारादित्यर्थः। उक्तार्थमेव विशदयति–चैत्रत्वाद्यवच्छिन्ने इति। तत्पदस्य=युष्मच्छब्दस्य।

पुनराशङ्कते–न चैवमपीति। युष्मच्छब्दशक्तिग्रहार्थमेव संबोधनपदसार्थक्यस्योक्तत्वादत्र च युष्मच्छब्दस्यासत्त्वादिति शेषः। उत्तरमाह–तत्रापीति, तत्रापि=युष्मच्छब्दरहितेपि तद्वाक्ये='चैत्रात्र घटोऽस्ति' इति वाक्ये। अत्र स्वं वक्ता. स्वीयो यो घटानयनादिरूपो वाक्यार्थस्त-

स्वीयवाक्यार्थबोधार्थोच्चरितत्वरूपतात्पर्यनिश्चयार्थमेव तत्पदप्रयोगात् । तादृश-तात्पर्यनिश्चयं विना श्रुतादपि तत्तद्वाक्याच्चैत्रादेः शाब्दबोधासंभवात् । चैत्रस्याऽश्वानयनादिबोधाय मैत्रस्य च लवणानयनादिबोधायोच्चरितात् 'सैन्धवमानय' इतिवाक्याद् वैपरीत्येन चैत्रमैत्रयोस्तत्तद्वाक्यार्थबोधवारणाय तदीयतदर्थबोधे तदीयतद्बोधार्थोच्चरितत्वरूपतात्पर्यनिश्चयस्य हेतुताया आवश्यकत्वात् ।

"संख्यातिरिक्तसुबर्थः प्रकृत्यर्थविशेष्यतयैव भासते" इतिनियमे संख्याभेदवत् संबोधनभेदोपि निवेशनीयः. अतः संबोधनस्य प्रकृत्यर्थविशेषणतया भानेपि न क्षतिः । संबोधनस्य ( अपि ) प्रकृत्यर्थविशेष्यतयैव वा भानमुपेयम् । वस्तुतो नामार्थस्य प्रत्ययार्थमन्तरा कृत्वैव क्रियान्वय इत्यनुरोधात् सुबर्थकर्मत्वादेः प्रकृत्यर्थविशेष्यतयैव भानमुपेयते न तूक्तनियमानुरोधेन– उक्तनियमे

---

द्बोधार्थं यदुच्चरितत्वं तादृशोच्चरितत्वरूपतात्पर्यस्य निश्चयश्चैत्रस्य भवत्वित्येतदर्थमेव तत्र चैत्रेत्यादिसंबोधनपदं प्रयुज्यते– अन्यथा 'अत्र घटोस्ति तमानय' इत्यादिवाक्यजन्यार्थबोधः कस्यापि न भवेदित्यर्थः । चैत्रादेः स्वसमवेतबोधोत्पत्त्यर्थोच्चरितत्वरूपतात्पर्यनिश्चयाभावेऽनिष्टापत्तिमाह– तादृशतात्पर्येति । मा भवतु तात्पर्यनिश्चय इत्याशङ्क्य वाक्यार्थबोधं प्रति तात्पर्यनिश्चयस्यावश्यकतामाह–चैत्रस्येत्यादिना । अत्र वैपरीत्येन नाम चैत्रस्य लवणानयनबोधस्य मैत्रस्य चाश्वानयनबोधस्य वारणायेत्यर्थः । तदीयतदर्थबोधे=श्रोतुरुक्तवाक्यार्थबोधं प्रतीत्यर्थः । तदीयतद्बोधार्थम्=श्रोतुरुक्तवाक्यार्थबोधार्थमुच्चरितत्वरूपतात्पर्यनिश्चयस्य हेतुताऽवश्यमस्त्येवेति तात्पर्यनिश्चयस्य वाक्यार्थबोधं प्रति हेतुत्वे सिद्धे 'चैत्रात्र घटोस्ति' इत्यादिवाक्येपि युष्मच्छब्दरहिते एतद्वाक्यार्थबोधाय तात्पर्यनिश्चयार्थं चैत्रेतिसंबोधनपदस्यावश्यकतास्त्येवेत्यर्थः ।

ननु "प्रथमार्थतादृशेच्छाया विषयतासंबन्धेन प्रकृत्यर्थविशेषणतया भानम्" इत्यादिना संबोधनरूपप्रथमार्थस्य प्रकृत्यर्थविशेषणतया भानं यदुक्तं तन्न संभवति– संख्यातिरिक्तसुबर्थस्य प्रकृत्यर्थविशेष्यतयैव भानस्वीकारादित्याशङ्क्याह– संख्यातिरिक्तेति, तथा च संख्यासंबोधनाभ्यामतिरिक्त एव सुबर्थः प्रकृत्यर्थविशेष्यतया भासते इति नियमो जात इति संबोधनस्य प्रकृत्यर्थविशेषणतयापि भाने क्षतिः=नियमविरोधो नास्तीत्यर्थः । पक्षान्तरमाह– संबोधनस्येति । स्वमतमाह– वस्तुत इति, संख्यातिरिक्तसुबर्थस्य कर्मत्वादेः प्रकृत्यर्थविशेष्यतयैव भानं भवतीत्यत्र "नामार्थस्य प्रत्ययार्थमन्तरा कृत्वैव क्रियायामन्वयः" इत्ययमेव नियमो बीजमस्ति न तूक्तनियमः="संख्यातिरिक्तसुबर्थः प्रकृत्यर्थविशेष्यतयैव भासते" इति नियमः स्वातन्त्र्येण बीजमस्ति– अस्मिन्नियमे मानाभावात्, "नामार्थस्य प्रत्ययार्थमन्तरा कृत्वैव क्रियान्वयः" इतिनियमे स्वीकृते तु सुबर्थकर्मत्वादेः क्रियायामन्वयः कर्मत्वादौ च प्रकृत्यर्थ-

मानाभावात् । संबोधनविभक्त्यन्तप्रकृत्यर्थस्यान्यत्र विशेषणतयाऽन्वयात् संबोधनस्य विशेष्यतया भानं निर्युक्तिकमिति कृतं विस्तरेण ॥

॥ इति संबोधनप्रथमार्थविवेचनं समाप्तम् ॥

---

स्यान्वय इत्यर्थादेव सुबर्थकर्मत्वादेः प्रकृत्यर्थविशेष्यत्वं प्राप्तमित्यर्थः । संबोधनस्य प्रकृत्यर्थविशेष्यतया भाने "एकत्र विशेषणतयान्वितस्य नाऽन्यत्र विशेषणत्वम्" इतिव्युत्पत्तिविरोधमप्याह- संबोधनविभक्त्यन्तेति, प्रकृत्यर्थस्य चैत्रादेः संबोधने विशेषणत्वे एव संबोधनस्य प्रकृत्यर्थविशेष्यत्वं स्यात् तच्च न संभवति- प्रकृत्यर्थस्य चैत्रादेरन्यत्र=भोजनव्यापारादौ कर्तृत्वादिद्वारा विशेषणत्वेनान्वयो भवतीति तस्य चैत्रस्य संबोधने विशेषणतयाऽन्वयो नैव संभवतीति न संबोधनस्य प्रकृत्यर्थविशेष्यत्वं किं तु प्रकृत्यर्थविशेषणत्वमेवेत्यर्थः ॥

टीका व्युत्पत्तिवादस्य ह्याऽऽदर्शेतिसमाह्वया ।
कारकान्ता गता पूर्तिं सुदर्शनविनिर्मिता ॥

॥ इति संबोधनप्रथमा ॥

---

# अथ स्त्रीप्रत्ययाः

प्रातिपदिकप्रकृतिकाः "स्त्रियाम्" इत्यनेन विहिताष्टाबादयः क्वचित् स्त्रीत्वं प्रकृत्यर्थविशेषणतया बोधयन्ति- 'अजाऽश्वा शूद्रा श्यामा चपला ब्राह्मणी गौरी सुकेशी गर्भिणी' इत्यादौ । स्त्रीत्वं च योनिमत्त्वम् । न च स्त्रीपरपदात् साधुत्वार्थष्टाबादिप्रत्ययो न तु स्त्रीत्वं तस्यार्थः, क्वचित् स्त्रीत्वबोधश्च स्त्रीप्रत्ययप्रकृतितात्पर्यविषयत्वरूपलिङ्गज एवेति वाच्यम्, खट्वादौ व्यभिचारेण तादृशहेतोः स्त्रीत्वासाधकत्वात् । प्राणित्वेन विशेषणेपि देवतादौ व्यभिचारात् । वस्तुतस्तु 'अजवत्यप्यऽजा नास्ति' इत्यादिप्रयोगात् स्त्रीत्वस्य नञर्थान्वयितावच्छेदकतया भानमावश्यकम्. अन्यथा पुंसाधारणजातिविशेषाद्यवच्छिन्नाभावस्य बाधेन तादृशप्रयोगस्य प्रामाण्यानुपपत्तेः ।

---

क्रमप्राप्तं स्त्रीप्रत्ययार्थनिरूपणमारभते- :प्रातिपदिकेत्यादिना । कचिदिति- 'अजा' इत्यादावेव स्त्रीप्रत्यया योनिमत्त्वरूपं स्त्रीत्वं बोधयन्ति न तु 'खट्वा' इत्यादौ तत्र योनिमत्त्वरूपस्त्रीत्वस्यैव बाधेन तद्बोधनासंभवादिति 'खट्वा' इत्यादौ साधुत्वार्थमेव टाबादयो भवन्तीत्यर्थः । उदाहरति- अजेति । स्त्रीत्वस्वरूपमाह- स्त्रीत्वमिति । योनिमत्त्वम्=भगवत्त्वम् । प्रत्ययानां द्योतकत्ववादी शङ्कते- न चेति, स्त्रीपरपदात्=स्त्रीवाचकादऽजादिपदात् । तस्य= स्त्रीप्रत्ययस्य । कचित्='अजा' इत्यादौ स्त्रीत्वबोधो हि स्त्रीप्रत्ययप्रकृतिभूतपदस्य यत् स्त्रीत्वबोधानुकूलं तात्पर्यं तादृशतात्पर्यविषयत्वरूपाल्लिङ्गात्=हेतोरेव भवति तस्याजादौ सत्त्वात् न तु स्त्रीप्रत्ययेनेत्यर्थः । अत्र च पूर्वपक्षे "कचित्" इतिपदमसंगतत्वात् प्रक्षिप्तमेवेति प्रतिभाति । परिहारमाह- खट्वादाविति, योनिमत्त्वरूपस्त्रीत्वरहितपदार्थेपि खट्वादौ स्त्रीप्रत्ययप्रकृतिभूतखट्वादिपदतात्पर्यविषयत्वरूपो हेतुरस्त्येव न चास्ति तत्र खट्वादौ स्त्रीत्वमिति हेतोर्व्यभिचारित्वं प्राप्तं व्यभिचारिणश्च नैव साधकत्वं भवतीत्यर्थः । ननु प्राणित्वसमानाधिकरणं यत् स्त्रीप्रत्ययप्रकृतिभूतपदतात्पर्यविषयत्वं तत् स्त्रीत्वानुमापकं लिङ्गमिति वक्ष्यामः खट्वादौ च प्राणित्वस्याभावात् प्राणित्वसमानाधिकरणं स्त्रीप्रत्ययप्रकृतितात्पर्यविषयत्वं नास्तीति न व्यभिचारित्वमित्याशङ्क्याह- प्राणित्वेनेति, एवमपीन्द्रादिदेवतायां प्राणित्वसत्त्वात्प्राणित्वसमानाधिकरणं स्त्रीप्रत्ययप्रकृतिभूतदेवतापदतात्पर्यविषयत्वं लिङ्गं त्वस्ति नास्ति चानुमेयं स्त्रीत्वम्- इन्द्रादिदेवतानां पुंस्त्वविशिष्टत्वाद् देवतापदस्य पुंस्त्वविशिष्टव्यक्तिवाचकत्वाच्च देवतादौ व्यभिचारित्वं प्राप्तमित्यर्थः । स्त्रीप्रत्ययस्य स्त्रीत्ववाचकत्वे युक्त्यन्तरमाह- वस्तुतस्त्विति । नञर्थेति- 'अजा नास्ति' इत्यत्र स्त्रीत्वविशिष्टाजात्वावच्छिन्नप्रतियोगिताकाभावस्य प्रतीयमानस्य प्रतियोगित्वसंबन्धेनाजायामन्वयेन स्त्रीत्वमन्वयितावच्छेदकतया भासते तद्भानं च स्त्रीप्रत्ययादेव वक्तव्यमिति स्त्रीप्रत्ययानां स्त्रीत्ववाचकत्वं प्राप्तमेवेत्यर्थः । स्त्रीत्वभानाभावे बाधकमाह- अन्यथेति, अजवति देशेऽजत्वावच्छिन्नप्रति-

न च प्रातिपदिकार्थ एव स्त्रीत्वं तस्य च तदर्थे एव जात्यादिमति विशेषणत्वेनान्वयः स्त्रीप्रत्ययास्तु द्योतका एव. अत एव—

" स्वार्थो द्रव्यं च लिङ्गं च संख्या कर्मादिरेव च ।
अमी पञ्चैव नामार्थास्त्रयः केषांचिदग्रिमाः ॥"

इतिशाब्दिकानां कारिकापि संगच्छते, तत्र- स्वार्थः=जात्यादिरूपो गवादिपदमुख्यार्थः, द्रव्यम्=गवादिरूपस्तद्धर्मी तन्मते औपचारिको गवादिपदार्थः, लिङ्गस्य प्रातिपदिकार्थत्वमावश्यकमेव- ' नात्र ब्राह्मणोऽपि तु ब्राह्मणी ' इत्यादौ पुंस्त्वबोधकपदान्तराभावेन तद्बोधानुपपत्तेः । ब्राह्मणादिपदाच्च जात्यादेर्द्रव्यस्य च भानं नियतमेव लिङ्गभानं तात्पर्ययोग्यताधीनं काचित्कम्- ' ब्राह्मणी ' इत्यादौ पुंस्त्वाद्यबोधादिति वाच्यम्, उक्तयुक्त्या पुंस्त्वस्य प्रातिपदिकार्थत्वेऽप्यनन्तानां प्रातिपदिकपदानां स्त्रीत्वार्थकत्वे गौरवात् लाघवेनाल्पीयसां स्त्रीप्रत्ययानां तदर्थकत्वकल्पनौचित्यात्. अत एव स्त्रीत्वसंग्रहाय " प्रातिपदिकार्थ " इत्यादिसूत्रे लिङ्गग्रहणम्, अन्यथा प्रातिपदिकार्थे एव तदन्तर्भावेन पृथक् तदुपादानानुपपत्तेः ।

क्वचित् स्त्रीप्रत्ययः स्त्रीत्वं भार्यात्वेन प्रकृत्यर्थविशेष्यतया बोधयति-

---

योगिताकाभावस्य बाधितत्वेन तद्बोधने ' अजा नास्ति ' इति वाक्यस्य प्रामाण्यं न स्यादेव. अस्ति च प्रामाण्यमित्युक्तस्थले स्त्रीत्वभानमावश्यकमित्यर्थः ।

वैयाकरणमतेनाशङ्कते—न चेति । तस्य=स्त्रीत्वस्य । तदर्थे=प्रातिपदिकार्थे।अत एव=स्त्रीत्वस्य प्रातिपदिकार्थत्वादेव । कर्मादि=कर्मत्वादिकमपि प्रातिपदिकार्थ एव द्वितीयादिविभक्तीनामपि द्योतकत्वस्वीकारात् । केषांचित्=केषांचिन्मते । अग्रिमाः=स्वार्थद्रव्यलिङ्गानि । उक्तकारिकां व्याचष्टे—तत्रेत्यादिना । जात्यादिरूपः=गोत्वादिरूपः । तद्धर्मी=गोत्वाद्याश्रयभूता व्यक्तिः । तन्मते=वैयाकरणमते । मीमांसकमतवदिति शेषः । लिङ्गस्य प्रातिपदिकार्थत्वमाह—लिङ्गस्येति । तद्बोधानुपपत्तेः=लिङ्गबोधानुपपत्तेर्लिङ्गमपि प्रातिपदिकार्थो भवत्येवेत्यर्थः । स्वार्थद्रव्यलिङ्गानां भानस्य विशेषमाह—ब्राह्मणादिपदादिति । लिङ्गभानम्=लिङ्गविशेषभानम् । 'ब्राह्मणः' इत्यत्र तात्पर्ययोग्यताभ्यां पुंस्त्वभानं भवति 'ब्राह्मणी' इत्यत्र च स्त्रीत्वभानमित्यर्थः । उक्ते हेतुमाह— ब्राह्मणीति । परिहरति- उक्तयुक्त्येति, उक्तयुक्त्या=" नात्र ब्राह्मणः " इत्यादियुक्त्या । तदर्थकत्व=स्त्रीत्वार्थकत्व । पुंप्रत्ययास्तु न सन्ति येषां पुंस्त्वबोधकत्वं स्यादिति पुंस्त्वं प्रातिपदिकार्थ:एव स्त्रीप्रत्ययास्तु पृथक् सन्तीति तेषामेव स्त्रीत्वबोधकत्वं युक्तमुक्तलाघवादिति भावः । स्त्रीप्रत्ययानां स्त्रीत्वबोधकत्वे मानमाह— अत एवेति । अत एव=स्त्रीप्रत्ययानां स्त्रीत्वबोधकत्वादेव । विपक्षे बाधकमाह— अन्यथेति, यदि स्त्रीत्वं प्रातिपदिकार्थ एव स्यात्तदा प्रातिपदिकार्थग्रहणेनैव स्त्रीत्वस्य प्राप्तत्वात् लिङ्गग्रहणमनर्थकं स्यादित्यर्थः । तदन्तर्भावेन=तस्य स्त्रीत्वस्यान्तर्भावेन ।

विशेषान्तरमाह—क्वचिदिति । क्वचित्=" पुंयोगादाख्यायाम् " इत्यादिसूत्रविहितप्रत्ययस्थले । " स्त्रीत्वम् " इत्यत्र " स्त्रियम् " इति पाठस्तु न युक्तः—स्त्रीप्रत्ययानां स्त्रीत्वबोध-

' आचार्याणी ' ' मनावी ' ' शूद्री ' इत्यादौ । भार्यात्वं संबन्धविशेषः, तत्रैव च निरूपकत्वेन प्रकृत्यर्थान्वयः । खट्वाऽटवीदेवतादिपदे च स्त्रीप्रत्यया नार्थबोधकाः—तत्र प्रकृत्यर्थे योनिमत्त्वरूपस्त्रीत्वस्याऽयोग्यतयाऽनन्वयात् । न च " शब्दगतं स्त्रीत्वादिरूपधर्मान्तरमेव तत्र परम्परासंबन्धेनाऽर्थगततया भासते " इतिश्रीपतिदत्तोक्तं युक्तम्—तद्भाने मानाभावात् । " यूस्त्र्याख्यौ " इत्यत्र स्त्र्याख्यपदं स्त्रीलिङ्गशब्दपरं न तु स्त्रीत्वविशिष्टार्थकशब्दपरं तेनाऽटव्यादिशब्दानां स्त्रीत्वविशिष्टाऽबोधकत्वेपि न नदीसंज्ञानुपपत्तिः, अत एव श्रीभूप्रभृतीनां स्त्रीप्रत्ययान्तत्वाभावेन स्त्रीत्वविशिष्टाऽबोधकत्वेपि नदीसंज्ञाप्रसक्तया " नेयङुवङ्स्थानौ " इतिनिषेधसंगतिः । न चैवम् ' सेनान्ये स्त्रियै ' इत्यादावपि नदीसंज्ञा स्यात् सेनान्यादिशब्दस्य तत्र विशेष्यनिघ्नतया स्त्रीलिङ्गत्वादिति वाच्यम्, प्रयोगानुसारेण विशेष्यसमभिव्याहारानधीनायाः स्त्रीलिङ्गताया विवक्षणीयत्वादिति संक्षेपः ॥

॥ इति स्त्रीप्रत्ययविवेचनं समाप्तम् ॥

---

कत्वस्यैवोक्तत्वात् । भार्यात्वेन विशेषरूपेण न तु स्त्रीत्वेन सामान्यरूपेणेति भावः । भार्यात्वमाह—भार्यात्वमिति । तत्र=भार्यात्वे । प्रकृत्यर्थस्य=आचार्यादेर्निरूपकत्वेन रूपेणान्वयः प्रकृत्यर्थाचार्यादेरेव तत्र भार्यात्वनिरूपकत्वात्, निरूपितत्वं च तत्र संबन्धः । आचार्याणीत्यस्य आचार्यभार्या आचार्यनिरूपितभार्यात्ववती वेत्यर्थः । विशेषान्तरमाह—खट्वेति । अर्थबोधकाः=स्त्रीत्वबोधकाः । प्रकृत्यर्थे=खट्वादिपदार्थे । शङ्कते— न चेति । धर्मान्तरम्=योनिमत्त्वाद्भिन्नम् । तत्र=खट्वादौ । परम्परासंबन्धेन=स्वाश्रयशब्दवाच्यत्वसंबन्धेन. स्वं स्त्रीत्वरूपधर्मान्तरं तदाश्रयो यः खट्वादिशब्दस्तद्वाच्यत्वं खट्वादिपदार्थेऽस्त्येवेति तेन संबन्धेनेत्यर्थः । अर्थगततया=खट्वादिपदार्थे । परिहरति— तद्भाने इति । तद्भाने=शब्दगतधर्मस्य तद्वाच्यार्थगततया भाने । विषयान्तरमाह— यूस्त्र्याख्याविति । फलमाह— तेनेति । अत एव=" यूस्त्र्याख्यौ नदी " इतिसूत्रे स्त्र्याख्यपदस्य स्त्रीलिङ्गशब्दपरत्वादेव श्रीभूप्रभृतिशब्दानां स्त्रीलिङ्गत्वान्नदीसंज्ञा प्राप्ता तस्याः " नेयङुवङ्स्थानौ " इत्यनेन निषेधः क्रियते, यदि स्त्र्याख्यपदं स्त्रीत्वविशिष्टार्थकशब्दपरं स्यात्तदा श्र्यादिशब्दानां स्त्रीत्वविशिष्टार्थकत्वाभावेन नदीसंज्ञाप्राप्तेरभावान्नदीसंज्ञानिषेधोऽसंगत एव स्यादित्यर्थः । ननु यदि स्त्र्याख्यपदं स्त्रीलिङ्गशब्दपरमेव तदा ' सेनान्ये स्त्रियै ' इत्यत्र सेनानीशब्दस्यापि नदीसंज्ञा स्यात्तया च नदीकार्यं स्यादित्याशङ्क्याह— न चेति । परिहारमाह— प्रयोगेति, तेषां स्त्रीलिङ्गशब्दानां नदीसंज्ञा भवति येषां विशेष्यसमभिव्याहारं विनापि स्त्रीलिङ्गत्वं भवति यथा गौर्यादिशब्दानां सेनानीशब्दस्य त्वत्र स्त्रीशब्दसमभिव्याहारादेव स्त्रीलिङ्गत्वमस्ति न तु स्वातन्त्र्येणेति न सेनानीशब्दस्य नदीसंज्ञाप्राप्तिसंभवो येन नदीकार्येणाऽऽडागमेन ' सेनान्यै ' इति प्रयोगः स्यादित्यर्थः ॥

॥ इति व्युत्पत्तिवादादर्शे स्त्रीप्रत्ययाः ॥

## अथ तद्धितप्रत्ययाः

तद्धितप्रत्यया अपि नामप्रकृतिकाः क्वचित् प्रकृत्यर्थेन स्वार्थैकदेशस्य क्वचिच्च तेन स्वार्थस्यान्वयबोधं जनयन्ति । तत्र 'गार्गिः' इत्यत्रापत्यार्थविहिततद्धितार्थस्याऽपत्यस्यैकदेशे जन्यत्वे निरूपकतया प्रकृत्यर्थगर्गाद्यन्वयः । 'गार्ग्यः' इत्यादौ तद्धितार्थगोत्रापत्यैकदेशपुत्रत्वघटकजन्यत्वे तथा तदन्वयः । 'गार्ग्यायणः' इत्यादौ तद्धितार्थस्य युवापत्यस्यैकदेशे जन्यत्वे गार्ग्यस्य "जीवति तु वंश्ये युवा" इतिपरिभाषितयुवार्थघटकजीवने च गर्गादेरन्वयस्तेन 'गर्गादिजीवनकालीनो गर्गगोत्रापत्यस्यापत्यमयम्' इति बोधः ।

'माञ्जिष्ठं वासः' इत्यत्र "तेन रक्तम्" इत्यर्थे तद्धितो विहितः, तत्संबन्धाधीनतदीयरूपारोपविषयत्वं तेन रक्तत्वम् । 'शङ्खः पीतः' इत्यारोपमादाय शङ्खादेरारोप्यपीतिमाद्याश्रयहरितालादिरक्तत्वस्य वारणायाऽधीनान्तमारोपे विशेषणम् । पटादेश्चक्षुरादिना रक्तत्वस्य वारणाय तदीयत्वं रूप-

---

क्रमप्राप्तं तद्धितप्रत्ययार्थनिरूपणमारभते—तद्धितेत्यादिना । अपीति—यथा स्त्रीप्रत्यया नामप्रकृतिकास्तथा तद्धितप्रत्यया अपि नामप्रकृतिका इत्यर्थः । तेन=प्रकृत्यर्थेन सह । उक्तान्वयबोधमुदाहरति—तत्रेति । तज्जन्यत्वमेत्र तदपत्यत्वमस्तीति जन्यत्वमपत्यैकदेश एव तच्च जन्यत्वमत्र गर्गनिरूपितमेवेति तत्र निरूपकत्वेन रूपेण गर्गस्यान्वयः, गर्गनिरूपितजन्यताश्रयो गार्गिरिति शाब्दबोधः । गार्ग्य इति गर्गस्य पौत्रपरस्तत्र तद्धितप्रत्ययार्थभूतं यद् गोत्रापत्यम् (पौत्रः) तदेकदेशभूतं यत् पुत्रत्वं तद्घटकजन्यत्वे तथा=निरूपकतया तदन्वयः=गर्गान्वयस्तथा च गर्गनिरूपितजन्यताश्रयपुत्रापत्यमिति शाब्दबोधः । गर्गप्रपौत्रो गार्ग्यायणस्तत्र गर्गपौत्रभूतगार्ग्यनिरूपितजन्यता वर्तते, जीवनं च तत्र गर्गस्यापेक्षितमिति जीवने गर्गान्वय इत्यर्थः ।

प्रत्ययान्तरमुदाहरति—माञ्जिष्ठमित्यादिना । तेन रक्तत्वपदार्थमाह— तत्संबन्धेति, तत्संबन्धाधीनः=मञ्जिष्ठासंबन्धाधीनो यस्तदीयरूपारूपः=मञ्जिष्ठारागारोपस्तद्विषयत्वमित्यर्थः । मञ्जिष्ठया रक्ते वस्त्रे मञ्जिष्ठासंबन्धोपि वर्तते वस्त्रोपरिस्थितमञ्जिष्ठावयवानामेव रूपस्य वस्त्रगततया भानं भवतीति मञ्जिष्ठारूपारोपविषयत्वमपि वर्तते इत्यर्थः । 'पीतः शङ्खः' इत्यत्र यद्यपि शङ्खे पीतरूपारोपोस्त्येव तच्च पीतरूपं हरिताले वास्तवमप्यस्त्येव तथापि स पीतरूपारोपो हरितालसंबन्धप्रयुक्तो नास्तीति तद्वारणाय "तत्संबन्धाधीन" इत्युक्तम्. अन्यथा 'हारितालः शङ्खः' इत्यपि स्यादित्यर्थः । चक्षुषि विकारे सत्यपि वस्त्रस्य रक्तत्वं प्रतीयते तद्वारणाय तदीयत्वं रूपविशेषणमुक्तमित्याह— पटादेरिति, तत्र पटे प्रतीयमानं रूपं चाक्षुषं न भवतीति न 'चाक्षुषं वासः' इति प्रयोगापत्तिरित्यर्थः । किं वा तदीयेतिविशेषणं त्यक्त्वा

विशेषणम् । अत्र च रागकरणस्य मञ्जिष्ठादेः प्रकृत्यर्थस्य तद्धितार्थैकदेशसंबन्धे प्रतियोगितया रूपे चाश्रयतयाऽन्वयः ।

'शूल्यम्' 'उख्यम्' इत्यादौ तद्धितार्थसंस्कृतैकदेशे पाकादिरूपसंस्कारे शूलोखादेः प्रकृत्यर्थस्याधिकरणत्वेनान्वयः ।

'पौषी रात्रिः' इत्यादौ नक्षत्रयुक्तकालार्थे तद्धितः, कालस्य नक्षत्रयुक्तत्वं च तन्नक्षत्रशशिभोगाश्रयत्वं तदेकदेशे शशिभोगे कर्मतया तन्नक्षत्रान्वयः ।

'पौषो मासः' 'पौषो वर्षः' इत्यादौ "साऽस्मिन्" इत्यनेन विहितस्य तद्धितस्य पौर्णमासीघटितत्वावच्छिन्नोऽर्थः, पौर्णमास्यां प्रकृत्यर्थपौष्यादेरभेदेनान्वयः । पौषादिपदं च न केवलं यौगिकम्- 'पौषः पक्षः' इत्यादिव्यवहारविरहात्, अतो रूढमपि, अत एव सूत्रे संज्ञाग्रहणम् । रूढिनिरूपकतावच्छेदकं

---

"तत्संबन्धाधीनरूपारोपविषयत्वं तेन रक्तत्वम्" इत्युक्ते पटादौ यः खलु रूपारोपः स चक्षुस्संबन्धाधीन एव भवतीति चक्षुस्संबन्धाधीनरूपारोपविषयत्वं पटे प्राप्तं तदेव च तेन रक्तत्वमिति पटादेश्चक्षुरादिनापि रक्तत्वं प्राप्नुयात् तेन च 'चाक्षुषं वासः' इति प्रयोगः स्याद् न चैतदिष्टमिति तदीयत्वं रूपविशेषणं दत्तं तथा चारोप्यमाणं रूपं न चक्षुषः किं तु मञ्जिष्ठादेरेवेति न पटादेश्चक्षुरादिना रक्तत्वापत्तिरित्यर्थः । 'माञ्जिष्ठम्' इत्यत्र तद्धितप्रत्ययार्थस्तेन रक्तत्वं तच्च तत्संबन्धाधीनतदीयरूपारोपविषयत्वं तदेकदेशभूते=तद्घटके संबन्धपदार्थे प्रकृत्यर्थमञ्जिष्ठायाः प्रतियोगितयाऽन्वयस्तद्घटकरूपे चाश्रयतयान्वय इत्याह— अत्रेति । तथा च 'मञ्जिष्ठाप्रतियोगिकसंबन्धाधीनो यो मञ्जिष्ठाश्रितरूपस्यारोपस्तद्विषयः पटः' इति शाब्दबोधः ।

प्रत्ययान्तरमुदाहरति— शूल्यमिति । शूले संस्कृतं शूल्यमित्यर्थः । शूलाधिकरणकसंस्कारवदिति बोधः ।

प्रत्ययान्तरमुदाहरति—पौषीति, "नक्षत्रेण युक्तः कालः" इतिसूत्रविहितोऽण्प्रत्ययः । सूत्रोक्तं कालस्य नक्षत्रयुक्तत्वं निर्वक्ति—कालस्येति, नक्षत्राणि हि राश्यवान्तरस्थानानि तथा च यदा पुष्यनक्षत्रे शशी भवति तदा पुष्यनक्षत्रमित्युच्यते तथा च तन्नक्षत्रकर्मकः शशिकर्तृको यो भोगस्तदाश्रयत्वं कालेऽप्यस्त्येव कालस्य सकलाश्रयत्वादिति तदेव कालस्य तन्नक्षत्रयुक्तत्वं तदेकदेशभूतभोगकर्मत्वं तन्नक्षत्रे एवेत्यर्थः । पुष्ययुक्ता हि रात्रिः पौषीत्युच्यते ।

प्रयोगान्तरमुदाहरति— पौष इति, पुष्येण युक्ता पौर्णमासी पौषी सा यस्मिन् मासे वर्षे वा स मासो वर्षो वा पौष इत्युच्यते । पौर्णमासीघटितत्वावच्छिन्नः=पौर्णमासीघटितः । अभेदान्वय इति—पौषी चासौ पौर्णमासीत्यभेदान्वयः । तथा च पौष इत्यस्य पुष्यनक्षत्रयुक्तपौर्णमासीघटित इत्यर्थः । अत्र पौषादिपदं योगरूढमेवेत्याह— पौषादीति । अत एव=पौषादिपदस्य योगरूढत्वादेव । रूढं वा योगरूढं वा पदं संज्ञेत्युच्यते न तु यौगिकमपीत्यर्थः

च मासनिष्ठशुक्लप्रतिपदादिदर्शान्ततिथिसमुदायत्वं न तु त्रिंशत्तिथिरूपमासत्व-मात्रम्-'यत्किंचित्तिथ्यवधिकत्रिंशत्तिथिसमुदाये मासव्यवहारेपि चान्द्रसौरपौषादिवहिर्भूतपौष्यादिघटितत्रिंशत्तिथ्यन्तर्गततिथिषु पौषादिव्यवहाराविरहात् ।

अथैवमपि सौरे पौषादिव्यवहारस्य निर्विवादतया धनुःस्थरविविशिष्टत्वमेव न कथं पौषादिपदशक्यतावच्छेदकमुपेयते इतिचत् ?, न- सौरे पौषादौ पौष्यादिपूर्णिमाया अलाभे योगरूढिलभ्यपौषपदार्थविलोपापत्तेः । न च तत्र रूढिमात्रमवलम्ब्यैव पौषादिव्यवहारः सौरपौषादौ मुख्य इति वाच्यम्, तथा सति योगार्थव्युत्पादनवैयर्थ्यात् ।

अथ विलुप्यतां वर्षविशेषे पौषादिपदमुख्यार्थः ( व्यवहारः ) का क्षतिः ?

---

" सास्मिन् " इति सूत्रे तु संज्ञाग्रहणं नास्ति किं तु " संज्ञायां श्रवणाश्वत्थाभ्याम् " इति-सूत्रात् संज्ञापदमनुवर्त्यते । ननु मासपरपौषपदस्य कुत्र रूढिरस्तीति जिज्ञासायामाह- रूढि-निरूपकतेति, व्यवच्छेद्यमाह- न त्विति, यद्यपि कृष्णचतुर्थ्यादितिथिमारभ्य तदग्रिमकृष्णतृतीयादितिथिपर्यन्तं त्रिंशत्तिथिषु मासत्वव्यवहारो भवति तथापि चान्द्रसौरमासत्वव्यवहारस्तु नैव भवति चान्द्रमासव्यवहारस्य प्रतिपदमारभ्यैव प्रवृत्तत्वात् सौरमासव्यवहारस्य च संक्रान्तिमारभ्यैव प्रवृत्तत्वादिति चान्द्रसौरमासभूतपौषादिबहिर्भूतासु पौष्यादि=पुष्ययुक्तपूर्णिमाघटितत्रिंशत्तिथ्यन्तर्गततिथिषु पौषादिव्यवहाराभावात् पौषादिपदरूढिनिरूपकतावच्छेदकं मासनिष्ठशुक्लप्रतिपदादिदर्शान्ततिथिसमुदायत्वमेव न तु त्रिंशत्तिथिरूपमासत्वमात्रमित्यर्थः । अत्र "तिथ्यन्तर्गत" इति पाठस्त्वधिक एव प्रतिभाति ।

ननु सौरमासेपि पौषव्यवहारो भवत्येव तादृशसौरे पौषमासे कालिकसंबन्धेन धनुस्स्थरविविशिष्टत्वस्य सत्त्वाद् धनुस्स्थरविविशिष्टत्वमेव पौषपदशक्यतावच्छेदकमस्तु न तूक्तं मासनिष्ठशुक्लप्रतिपदादिदर्शान्ततिथिसमुदायत्वमित्याशङ्कते- अथैवमिति । परिहरति- नेति, धनुस्स्थरविविशिष्टत्वस्य पौषपदशक्यतावच्छेदकत्वे यदा सौरे पौषमासे पुष्ययुक्ता पूर्णिमा स्यात्तदैव तत्र पौषव्यवहारः स्यान्न तु पुष्ययुक्तपूर्णिमाया अलाभेपि. यस्मिंश्च मासे पुष्ययुक्ता पूर्णिमा तस्मिन् धनुस्स्थरविविशिष्टत्वस्याभावादिति पौषपदार्थस्याऽभाव एव प्रसज्येत, योगरूढिपक्षे तु मासनिष्ठशुक्लप्रतिपदादिदर्शान्ततिथिसमुदायत्वस्य पौषपदशक्यतावच्छेदकत्वेन पौषपदार्थविलोपापत्तिर्नास्तीत्यर्थः । पुनराशङ्कते- न चेति, तत्र=पौष्यादिपूर्णिमाया अलाभस्थले । रूढीति- पौषपदनिष्ठरूढिमात्रमवलम्ब्येत्यर्थः । परिहारहेतुमाह- तथा सतीति, " सास्मिन् " इतिसूत्रेण योगार्थव्युत्पादनस्य=यस्मिन् मासे पुष्ययुक्ता पूर्णिमा स मासः पौष इति योगार्थव्युत्पादनस्य रूढिमात्रपक्षे वैयर्थ्यं स्यादित्यर्थः ।

ननु वर्षविशेषे=कस्मिंश्चिद्वर्षे नाम यस्मिन् वर्षे सौरपौषमासे ( धनुस्स्थरविविशिष्टकाले ) पुष्ययुक्तपूर्णिमा नोपलभ्येत तादृशवर्षे=तादृशवर्षघटकसौरपौषमासे विलुप्यतां पौषादिपदमु-

**तत्र लक्षणया सौरमासे पौषव्यवहारस्योपगन्तव्यत्वात् स्थलपद्मादौ पङ्कजव्यवहारवदिति चेत् ?, तर्हि तत्र पौषादिपदमुख्यार्थमासनिमित्तकाऽऽब्दिकश्राद्धादिविलोपप्रसङ्गः ।**

**यथाश्रुतशूलपाणिग्रन्थानुसारिणस्तु— धनुरादिस्थरव्यारब्धशुक्लप्रतिपदादिदर्शान्तेषु धनुरादिस्थरविसमाप्यमकरादिस्थरविसंक्रान्तिमन्मासभिन्नधनुरादिस्थरव्यऽधिकरणशुक्लप्रतिपदादिदर्शान्तेषु वा पौषादिपदस्य रूढत्वमेव स्वीकुर्वन्ति न तु यौगिकत्वम्— "अन्त्योपान्त्यौ त्रिभौ ज्ञेयौ" इतिवचनात्, पौषादिमासीय-**

---

स्यार्थः=पुष्ययुक्तपूर्णिमाघटितत्वलक्षणपौषादिपदमुख्यव्यवहार एतावतापि क्षतिर्नास्ति— तत्र= एतादृशोक्तवर्षे नाम पुष्ययुक्तपूर्णिमारहितवर्षघटके पुष्ययुक्तपूर्णिमारहितसौरपौषमासे लक्षणया पौषव्यवहारो भविष्यति— एतादृशमासस्य पुष्ययुक्तपूर्णिमाघटितमाससदृशत्वात्, यथा स्थलपद्मादौ पङ्कजनिकर्तृत्वाभावेपि लक्षणया सादृश्यात् पङ्कजपदप्रयोगो भवति तथा, उक्तं सूत्रे योगार्थव्युत्पादनं च न व्यर्थम्— यस्मिन् वर्षे सौरपौषमासे पुष्ययुक्ता पूर्णिमा स्यात् तत्र मुख्यपौषपदव्यवहारलाभेन उक्तयोगार्थव्युत्पादनस्य सार्थक्यादित्याशङ्कते— अथेति । उत्तरमाह— तर्हीति, एवं हि तत्र=यस्मिन् वर्षे सौरपौषमासे पुष्ययुक्ता पूर्णिमा न स्यात्तादृशसौरपौषमासे पौषपदस्य लक्षणाश्रयणात् तादृशसौरपौषमासस्य मुख्यपौषमासत्वाभावात् तत्र प्राप्तस्याब्दिकश्राद्धादेर्विलोप एव स्यात्— आब्दिकश्राद्धादेर्मुख्यपौषादिमासनैमित्तिकत्वात्, लक्ष्यार्थस्य च व्यवहारप्रयोजकत्वाभावात्, तादृशोक्तवर्षे च पौषादिपदमुख्यार्थभूतपौषमासस्य पुष्ययुक्तपूर्णिमायुक्तस्याभावादिति दोषः स्यात्, न चाब्दिकश्राद्धादिविलोप इष्ट इति पौषपदशक्यतावच्छेदकं शुक्लप्रतिपदादिदर्शान्ततिथिसमुदायत्वमेव न तु धनुस्स्थरविविशिष्टत्वमित्यर्थः । उक्ततिथिसमुदायस्तु पौषादिपदस्य मुख्यार्थ एव तस्य च प्रतिवर्षं लाभान्न श्राद्धादिविलोपापत्तिरिति ।

मतान्तरमाह— यथाश्रुतेति । धनुरिति— धनुरादिस्थरव्यारब्धेषु शुक्लप्रतिपदमारभ्य दर्शान्तेषु मासेषु किं वा धनुरादिस्थरविसमाप्या ये मकरादिस्थरविसंक्रान्तिमन्माघादिमासभिन्ना धनुरादिस्थरव्यधिकरणीभूताः शुक्लप्रतिपदमारभ्य दर्शान्ता मासास्तेषु पौषादिपदानां रूढत्वमेव न तु यौगिकत्वमित्यर्थः । धनुरादिस्थरव्यारब्धशुक्लप्रतिपदमारभ्य माघादिमासीयदर्शान्तदिनेषु पौषादिपदानां रूढित्वनिरासाय मकरादिस्थरविसंक्रान्तिमन्मासभिन्नेतिविशेषणं द्वितीयपक्षे प्रक्षिप्तम् । उक्ते प्रमाणमाह— अन्त्येति, तथा हि—

" अन्त्योपान्त्यौ त्रिभौ ज्ञेयौ फाल्गुनश्च त्रिभो मतः ।
शेषा मासा द्विभा ज्ञेयाः कृत्तिकादिव्यवस्थया ॥ "

अस्यार्थः—कार्तिकमासमारभ्य गणनयाऽन्त्यो मास आश्विन उपान्त्यश्च भाद्रपदः फाल्गुनश्चेते त्रयो मासास्त्रिभाः=नक्षत्रत्रयप्रयुक्ता विज्ञेयाः शेषा मासा द्विभाः=नक्षत्रद्वयप्रयुक्ता विज्ञेया यथा चैत्रस्य पूर्णिमा चित्रानक्षत्रेण वा स्वातिनक्षत्रेण वा युक्ता भवतीति, द्विभत्वम्, आश्विनस्य

पौर्णमास्यां पुष्यादियोगस्यानियमात् । न च योगानादरे लाघवात् तत्तद्राशिस्थरविविशिष्टकालरूपसौरादिमासे एव पौषादिपदशक्तिरुचितेति वाच्यम्, " सा वैशाखस्याऽमावास्या या रोहिण्या संबध्यते " इत्यादिश्रुतिबलाच्चान्द्रे एव वैशाखादिपदशक्तिसिद्धेः ।

वस्तुतः " नक्षत्रेण युक्तः कालः " इत्यत्र नक्षत्रयोगयोग्यत्वमेव विवक्षितम्- पुष्याद्ययुक्तायामपि पौषादिपूर्णिमायां पौष्यादिव्यवहारात्, अन्यथा " माघ्यां यदि मघा नास्ति " इत्यादेरसंगत्यापत्तेः । पुष्यादियोगयोग्यता च

---

पूर्णिमा रेवत्या वाऽश्विन्या वा भरण्या वा संयुक्ता भवतीति त्रिभत्वं प्राप्तम्, एवमन्यत्रापि ज्ञेयम्- कालमाधवेप्युक्तम्- " दर्शान्तानां वा पूर्णिमान्तानां वा मासविशेषाणां चैत्रादिसंज्ञा नक्षत्रप्रयुक्ता यस्मिन्मासे पूर्णिमा चित्रानक्षत्रेण युज्यते स चैत्रः, एवं वैशाखादिषूह्येयम्, चित्राविशाखादियोगस्योपलक्षणत्वात् क्वचित् चित्रादिप्रत्यासन्नस्वात्यनुराधादियोगेपि चैत्रवैशाखादिसंज्ञा न विरुध्यते । चैत्रादिश्रावणान्तानां चित्रादिनक्षत्रद्वन्द्वं प्रयोजकं भाद्रपदाश्वयुजोस्तु शतभिषारेवत्यादिकम् ( यथासंख्यम् ) त्रिकं कार्तिकादिमाघान्तानां कृत्तिकादिद्वन्द्वं फाल्गुनस्य पूर्वाफल्गुन्यादित्रयमिति विवेकः " इति संकर्षणकाण्डेप्युक्तम्-

" द्वे द्वे चित्रादिताराणां परिपूर्णेन्दुसंगमे ।
मासाश्चैत्रादयो ज्ञेयाः, त्रिकैः षष्ठान्त्यसप्तमाः " इति ।

षष्ठः=भाद्रपदः । सप्तमः=आश्विनः । अन्त्यः=फाल्गुनः । चैत्रादत्र गणना कर्तव्येत्यलम् । रूढत्वस्वीकारे हेतुमाह- पौषादीति, पुष्यादियोगसत्त्वे एव पौषादिपदस्य यौगिकत्वं संभवति न च पौषादिपौर्णिमायां पुष्यादियोगो नियत इति रूढत्वमेव युक्तमित्यर्थः । केवलरूढित्वस्वीकारपक्षे शङ्कते- न चेति, योगानादरे=यौगिकत्वास्वीकारे । उक्तधनुरादिस्थरव्यारब्धशुक्लप्रतिपदादिदर्शान्तेषु पौषादिपदशक्तिस्वीकारे गौरवमस्ति- शक्यतावच्छेदकस्य गुरुत्वात् तत्तद्राशिस्थरविविशिष्टकालरूपसौरादिमासे पौषादिपदशक्तिस्वीकारे च लाघवमस्ति- शक्यतावच्छेदकस्य लघुत्वादित्यर्थः । परिहारहेतुमाह- सेति, " सा वैशाखस्य " इत्यादिश्रुत्या चान्द्रमासे एव वैशाखादिपदशक्तिः सिध्यतीति न सौरमासे पौषादिपदानामपि शक्तिरित्यर्थः । अमावास्याया रोहिण्या संबन्धश्चान्द्रवैशाखे एव संभवति न तु नियमेन सौरवैशाखेपि- सौरवैशाखस्य ज्येष्ठचैत्रयोरप्युत्कर्षापकर्षसंभवात्, किं वाऽमावास्यापूर्णिमादिव्यवहारश्चान्द्रमासप्रयोजक एव न तु सौरमासप्रयोजक इत्यमावास्याग्रहणादनया श्रुत्या चान्द्रवैशाखादौ वैशाखादिपदशक्तिसिद्धिरिति भावः प्रतीयते ।

स्वाभिप्रायमाह- वस्तुत इति, पुष्यनक्षत्रयोगयोग्यत्वं तु प्रत्येकपौषस्य पूर्णिमायामस्त्येवेत्यर्थः । उक्ते हेतुमाह- पुष्यादीति । योगयोग्यत्वग्रहणाभावे बाधकमाह- अन्यथेति, यदि नियमेन तत्तत्पूर्णिमायां तत्तन्नक्षत्रयोगः स्यात्तदा " माघ्यां यदि मघा नास्ति " इति माघी-

धनुरादिस्थरव्यारब्धपक्षीयत्वं तद्रूपाक्रान्तपौर्णमासीघटितत्वरूपयोगलभ्यताव- च्छेदकं नियतमेव पौषादेरिति नोक्तानुपपत्त्या यौगिकत्वनिराकरणसंभवस्तत्प- दानाम् ।

अथैवं निरुक्तरूपस्य पुष्याद्यघटिततया तेन रूपेण पूर्णिमाबोधकपौष्यादि- शब्दानां यौगिकत्वप्रसक्तिरेव नास्ति, 'पौषी रात्रिः' इत्यादौ पुष्यादियोग एव प्रतीयते न तु निरुक्तं योग्यत्वम्—मकरादिस्थरव्यारब्धकृष्णपक्षीयरात्र्यादावपि तथाव्यवहारादिति "नक्षत्रेण युक्तः कालः" इत्यत्र योग एव विवक्षणीयो न तु योगयोग्यत्वमिति पौर्णमास्यां पौष्यादिपदस्य न यौगिकत्वसंभव इति चेत्?, भवतु पौष्यादिपदं निरुक्तरूपावच्छिन्नपूर्णिमारूढमेव । पौषादिपदानां तु तद्योगपुरस्कारेण मासवाचकत्वे बाधकाभावाद् यौगिकत्वं कथं प्रत्याख्येयम्?।

---

र्णिमायां मघानक्षत्रयोगप्रतिषेधनिर्देशो नोपपद्येतेत्यर्थः । उक्तस्य नक्षत्रयोगयोग्यत्वस्य स्वरूप- ाह— पुष्यादियोगेति, धनुस्संक्रान्त्यारब्धमासीयपक्षे प्राप्तत्वमेव पूर्णिमायाः पुष्ययोगयोग्यत्वं ज्ञेय- ित्यर्थः । अत्र योगार्थतावच्छेदकमाह— तद्रूपाक्रान्तेति, तद्रूपाक्रान्ता=धनुरादिस्थरव्यारब्धपक्षी- त्वरूपाक्रान्ता या पौर्णमासी तद्घटितत्वरूपं यद् योगलभ्यतावच्छेदकम्=योगलभ्यार्थतावच्छेदकं ु पौषादेर्नियतमेवास्ति— धनुरादिस्थरव्यारब्धपक्षीयत्वरूपाक्रान्तपौर्णमासीघटितत्वस्य पौषादिषु ियमेन संभवात् धनुरादिसंक्रमणानां चान्द्रपौषादिमासपूर्णिमातिक्रमणासंभवात् प्रत्येकमासस्य पूर्णि- ायां तत्तत्सौरचान्द्रमासानां सामानाधिकरण्यनियमात् पूर्णिमायां धनुरादिस्थरव्यारब्धपक्षीयत्व- (धनुरादिमासीयपक्षवृत्तित्वमेव) पुष्यादियोगयोग्यत्वम्, पौषादिमासे च तादृशपूर्णिमाघटि- त्वमेव यौगिकपौषादिपदार्थतावच्छेदकं विज्ञेयं तच्च पौषादौ नियतमेवेति उक्तानुपपत्त्या=पौषा- ासीयपौर्णमास्यां पुष्यादियोगनियमानुपपत्त्या ( पुष्यादियोगनियमाभावेन ) तत्पदानाम्= ादिपदानां यौगिकत्वस्य निराकरणं न संभवति— प्रकारान्तरेण पुष्यादियोगयोग्यत्वस्य प्रति- ादितत्वादेवेत्यर्थः । "तत्पदानाम्" इत्यत्र "तत्तत्पदानाम्" इत्येव पाठो युक्तः ।

शङ्कते— अथेति । निरुक्तरूपस्य=धनुरादिस्थरव्यारब्धपक्षीयत्वरूपस्य । यदि निरुक्तरूपस्य ्यादिघटितत्वं स्यात्तदा तेन रूपेण पूर्णिमाबोधकपौष्यादिशब्दानां यौगिकत्वं प्राप्नुयादपि त्वन्मते ैवमस्तीत्यर्थः । ननु पौष्यादिशब्दानां निरुक्तरूपपुरस्कारेणैव यौगिकत्वमस्ति न तु पुष्यादि- ोगेत्याशङ्क्य परिहरति— पौषीति । निरुक्तयोगार्थप्रतीत्यभावे हेतुमाह— मकरादीति, यदि ुष्यादिपदेन निरुक्तं धनुरादिस्थरव्यारब्धपक्षीयत्वमेव प्रतीयेत तदा पौष्यादिपदानां मकरादिस्थर- ्यारब्धकृष्णपक्षीयरात्र्यां तथा व्यवहारः=प्रयोगो न स्यात्. भवति च मकरस्थरव्यारब्धकृष्णप- क्षीयरात्र्यामपि पुष्यादियोगेन पौष्यादिपदप्रयोग इत्यर्थः, तस्मात् "नक्षत्रेण" इतिसूत्रे युक्त- स्य योग एवार्थो न तु योगयोग्यत्वमिति पूर्णिमायां पौष्यादिपदस्य रूढिरेव न यौगि-

न च "सास्मिन् पौर्णमासी" इतिसूत्रस्य 'अस्मिन् पौष्यादिपूर्णिमायोग्यता' इत्यर्थविवक्षया धनुरादिराशिस्थरव्यारब्धशुक्लप्रतिपदादिदर्शान्ते ताद्धितान्तसमुदायरूढिग्राहकतयोपपत्तौ योगरूढिस्वीकारोऽनुचित इतिवाच्यम्, केवलरूढिपक्षे समुदायशक्यतावच्छेदकशरीरे आरब्धान्तविशेषणप्रक्षेपेण गौरवात्, पौषतैषमाघादिनानापदानां गुरुधर्मावच्छिन्ने शक्तिकल्पनमपेक्ष्य "सास्मिन्" इत्यर्थेऽणः प्रत्ययस्यैकशक्तिकल्पनाधिक्यस्योचितत्वात् ।

न च योगरूढिपक्षे पौषादिपदानां योगार्थरूढचर्थाभेदान्वयबोधजनकत्वकल्पनाधिक्येन गौरवमिति वाच्यम्, भवन्मतेपि तत्तदर्थे यौगिकरूढत्वभ्रमदशायां सति च तत्तदर्थाभेदान्वयपरत्वग्रहे तथान्वयबोधस्य दुरपह्नवतया तत्र तादृशबोधहेतुताकल्पनस्यावश्यकत्वादिति दिक् ।

---

त्वम्, यौगिकत्वं तु पुष्ययुक्तायां पूर्णिमाभिन्नायामेव तिथावित्यर्थः । किंचित्स्वीकुर्वन्नुत्तरमाह– भवत्विति । निरुक्तरूपावच्छिन्नपूर्णिमारूढम्=धनुरादिस्थरव्यारब्धपक्षीयत्वरूपावच्छिन्नपूर्णिमारूढम् । पौषीपदस्य केवलरूढत्वे सिद्धेऽपि मासादिपरपौषादिपदानां तु योगरूढत्वमेव– निरुक्तरूपावच्छिन्नपौणमासीयोगपुरस्कारेणैव मासादिवाचकत्वादित्यर्थः । आदिपदेन वर्षो ग्राह्यः ।

पुनराशङ्कते– न चेति । रूढिग्राहकता ह्युक्तसूत्रस्य ज्ञेया । तद्धितान्तसमुदायस्य=पौष इत्यादि पदस्य । अनुचित इति– योगरूढिपक्षे यौगिकार्थानुसंधानापत्त्या गौरवादित्यर्थः । परिहारमाह– केवलेति । समुदायशक्यतावच्छेदकशरीरे=पौषेत्यादितद्धितान्तसमुदायशक्यतावच्छेदके । त्वया हि धनुरादिस्थरव्यारब्धशुक्लप्रतिपदादिदर्शान्ते काले पौषादिपदस्य रूढिरूपा शक्तिरुक्तेति तत्रारब्धान्तस्य=धनुरादिस्थरव्यारब्धेतिविशेषणस्य प्रक्षेपेण गौरवं तव मतेऽप्यस्त्येवेत्यर्थः । अनेकेषां तद्धितान्तसमुदायानां धनुरादिस्थरव्यारब्धशुक्लप्रतिपदादिदर्शान्तकाले शक्तिकल्पनापेक्षयाऽण्प्रत्ययस्यैव "सास्मिन्" इत्यर्थे शक्तिकल्पना युक्ता– अण्प्रत्ययस्यैकत्वात् तद्धितान्तसमुदायानां पौषतैषमाघादीनां नानात्वादित्यर्थः । तस्मात् पौषादिपदानां तु योगरूढत्वमेव न तु केवलरूढत्वमिति भावः ।

ननु योगरूढिपक्षे य एव यौगिकार्थः स एव रूढार्थ इति तयोरभेदेनैवान्वयः स्यादिति पौषादिपदानां योगार्थरूढचर्थयोरभेदान्वयबोधजनकत्वेनैव गौरवं स्यादित्याशङ्क्याह– न चेति । उत्तरमाह– भवन्मतेपीति । तत्तदर्थे=पौषमासादौ । तत्तदर्थाभेदान्वयपरत्वग्रहे=योगार्थरूढचर्थाभेदान्वयपरत्वग्रहे । तथान्वयबोधस्य=अभेदान्वयबोधस्य । तत्र=पौषादिपदे । तादृशबोधहेतुताकल्पनस्य=योगार्थरूढचर्थाभेदान्वयबोधजनकत्वकल्पनस्यावश्यकत्वादुक्तं गौरवं भवन्मतेऽप्यस्त्येवेति पौषादिपदानां योगरूढत्वमेव युक्तं न तु केवलरूढत्वमित्यर्थः । प्रकृतवादमुपसंहरति–इति दिगिति ।

'वैष्णवी ऋक्' 'ऐन्द्रं हविः' इत्यादौ देवतार्थविहिततद्धितस्य तद्देवताकत्वमर्थः। मन्त्रस्य तद्देवताकत्वं तदुद्देश्यकत्यागकरणत्वेन वेदबोधितत्वम् ।

अथ मन्त्रस्य त्यागकरणत्वं बाधितमेव- विनापि मन्त्रमिच्छाविशेषरूपस्य तस्योत्पत्त्या व्यभिचारात्, इष्टसाधनताज्ञानघटितक्लृप्तसामग्र्या अन्यथासिद्धत्वाच्चेति मन्त्रस्य करणतां कथं वेदो बोधयेद् ? बोधयन् वा प्रमाणं भवेत् ?, सत्यम्- मन्त्रस्य त्यागकरणत्वं त्यागाङ्गोच्चारणकत्वं न तु तज्जनकत्वमतो न दोषः । हविषस्तद्देवताकत्वं च तदुद्देश्यकत्यागकर्मत्वम्- तत्त्यागोद्देश्यताया एव तद्देवतात्वपदार्थत्वात् । न चैवं घृतादिसंप्रदानब्राह्मणस्य घृतादिदेवतात्वापत्तिः, उद्देश्यपदेन वेदबोधितद्रव्यस्वामित्वप्रकारेणेच्छाविषयताया एव विवक्षितत्वात् संप्रदाने च स्वामित्वस्याऽबोधितत्वात् ।

न च त्यागोद्देश्यतायाश्चतुर्थ्याऽपि बोधनात् तद्धितचतुर्थ्योर्देवतात्वबोधकतायामविशेषात्-

---

प्रयोगान्तरमुदाहरति- वैष्णवीति, विष्णुर्देवताऽस्या इति वैष्णवी । तद्धितस्य="सास्य देवता" इतिसूत्रविहिततद्धितस्य । मन्त्रनिष्ठं तद्देवताकत्वपदार्थमाह- मन्त्रस्येति । मन्त्रेणैव हविरादित्यागः क्रियते इति मन्त्रस्य करणत्वम् ।

मन्त्रस्य त्यागकरणत्वं न संभवतीत्यभिप्रायेणाशङ्कते- अथेति । तस्य=त्यागस्य । त्यागस्येच्छाविशेषरूपत्वं पूर्वमेवोक्तम् । इष्टेति- कारणीभूतेष्टसाधनताज्ञानादिनैव त्यागसंभवे मन्त्रस्याऽन्यथासिद्धत्वं तेन च करणत्वाभाव इत्यर्थः । करणताम्=त्यागकरणताम् । उत्तरमाह- सत्यमित्यादिना । त्यागाङ्गेति-त्यागाङ्गभूतं यदुच्चारणं तादृशोच्चारणकत्वम्=तादृशोच्चारणकर्मत्वमेव त्यागकरणत्वं तच्च मन्त्रेऽस्त्येव । तज्जनकत्वम्=त्यागजनकत्वम् । न दोष इति- उक्तान्यथासिद्धत्वेपि मन्त्रस्य त्यागकरणत्वे एतद्रीत्या न दोष इत्यर्थः । हविर्निष्ठं तद्देवताकत्वपदार्थमाह- हविष इति, इन्द्रादिदेवतोद्देश्यकत्यागकर्मत्वं चास्त्येव हविषः । नन्वेवं हविष उद्देश्यतयैव संबन्धः न तु देवतयेति कथमुक्तसूत्रेण तद्देवताकत्वे प्रत्ययः स्यादित्याशङ्क्य त्यागोद्देश्यत्वस्यैव देवतात्वमाह- तत्त्यागेति, देवतायां त्यागोद्देश्यतायाः सत्त्वात् त्यागोद्देश्यत्वमेव देवतात्वमित्यर्थः। नन्वेवं ब्राह्मणाय घृते दत्ते तादृशघृतदेवतात्वं ब्राह्मणस्य स्यात्- ब्राह्मणस्यैव तत्र घृतत्यागोद्देश्यत्वादित्याशङ्क्याह- न चैवमिति । परिहारहेतुमाह- उद्देश्यपदेनेति, वेदबोधितं यद् द्रव्यस्वामित्वं तत्प्रकारेण=तत्प्रकारिका येच्छाविषयता=इच्छीयविषयता सैवोद्देश्यतात्र ग्राह्या सा चेन्द्रादिदेवतास्वेवास्ति- इन्द्रादीनामेव वेदेन हविरादिस्वामित्वस्य बोधितत्वात्, संप्रदानभूतब्राह्मणादीनां च घृतादिस्वामित्वं तु वेदेन न बोधितमिति न ब्राह्मणादीनां घृतादिदेवतात्वापत्तिरित्यर्थः ।

ननु त्यागोद्देश्यत्वं यथा तद्धितप्रत्ययेन बोध्यते तथा चतुर्थ्यापि बोध्यते एव "इन्द्राय स्वाहा" इत्यादौ तथा च मीमांसकैः "तद्धितेन चतुर्थ्या वा" इत्यादिना कथं तद्धिता-

" तद्धितेन चतुर्थ्या वा मन्त्रलिङ्गेन वा पुनः ।
देवतासङ्गतिस्तत्र दुर्बलं तु परं परम् ॥ "

इत्यनेन विरोध इति वाच्यम्, त्यागोद्देश्यतायां वेदमेयत्वस्याधिकस्य निवेशनीयतया चतुर्थ्या तदंशाऽबोधनेन तस्योपायान्तरबोध्यतया चतुर्थ्यधीनदेवतात्वबोधस्य विलम्बिततया तद्धितापेक्षया चतुर्थ्या जघन्यतोपपत्तेः । देवतार्थविहिततद्धितेन तु देवतात्वघटकतदंशस्यापि बोधनात् ।

अथ चतुर्थ्या वेदमेयत्वांशस्य साक्षादबोधनेपि त्यागोद्देश्यत्वस्य साक्षाद् बोधनेन पित्रादीनां साहित्यावच्छिन्नानाम् " पितृभ्यो दद्यात् " इति चतुर्थ्यधीनत्यागोद्देश्यताबोधस्य " पितरो देवता " इति तद्धितसमानार्थकदेवतापदाधीनानपेक्षत्यागोद्देश्यत्वबोधापेक्षयाऽविलम्बितत्वेन " साहित्यावच्छिन्नानां निरपेक्षाणां वा श्राद्धोद्देश्यत्वम् " इत्यत्र चतुर्थ्यपेक्षया देवतापदस्य बलवत्त्वरूपं

---

पेक्षया चतुर्थ्या दुर्बलत्वमुक्तमित्यभिप्रायेणाशङ्कते- न चेति । सङ्गतिः=प्रतीतिः प्राप्तिर्वा । विरोधप्राप्तौ वा शङ्काभिप्रायो विज्ञेयः । परिहारमाह- त्यागोद्देश्यतायामिति । वेदमेयत्वस्य= वेदबोधितत्वस्य । तदंशाबोधनेन=वेदमेयत्वाबोधनेन । तस्य=वेदमेयत्वस्य । उपायान्तरबोध्यतयेति- चतुर्थ्यन्तस्मृतिवचनेन श्रुतिकल्पना कर्तव्या तया च कल्पितश्रुत्या वेदमेयत्वबोधः संभवतीत्यर्थः । विलम्बिततया=श्रुतिकल्पनया विलम्बः । चतुर्थ्यन्तपदेन स्मृतिभूतत्वाद् वेदमेयत्वबोधनार्थं श्रुतेः कल्पना कर्तव्येति विलम्बो भवति. तद्धितप्रत्ययान्तपदस्य श्रुतिभूतत्वाद् वेदमेयत्वबोधनार्थं श्रुतिकल्पना न कर्तव्येति शीघ्रकरत्वमस्तीत्येतद् विलम्बापेक्षयैव तद्धितापेक्षया चतुर्थ्या दुर्बलत्वमुक्तमित्यभिप्रायः । देवतात्वघटकतदंशस्यापीति- उद्देश्यत्वमेव देवतात्वमुक्तमिति देवतात्वघटकस्य नाम उद्देश्यताघटकस्य तदंशस्य=वेदमेयत्वस्यापि तद्धितेन स्वयमेव बोधनादुक्तविलम्बापत्तिर्वाक्यार्थबोधे नास्तीति चतुर्थ्यपेक्षया तद्धितस्य प्रबलत्वं प्राप्तमित्यर्थः ।

शूलपाणिग्रन्थानुपपत्तिमुद्दिश्याशङ्कते- अथेति, चतुर्थ्या वेदमेयत्वस्य स्वयमबोधनेपि " पितृभ्यो दद्यात् " इत्यादौ त्यागोद्देश्यत्वं तु पित्रादीनां स्वयमेव बोध्यते एव स उद्देश्यत्वबोधश्च " पितरो देवता " इत्यत्र तद्धितप्रत्ययसमानार्थकेन देवतापदेन जन्यो यो निरपेक्षस्त्यागोद्देश्यत्वबोधस्तदपेक्षयाऽविलम्बित एवेति देवतापदापेक्षया चतुर्थ्या एव त्यागोद्देश्यत्वबोधने बलवत्त्वं वस्तुतः प्राप्तमेवं स्थितेपि यच्छूलपाणिना " साहित्यावच्छिन्नानाम् " इतिग्रन्थे देवतापदस्य बलवत्त्वमुक्तं तन्न सङ्गच्छते इत्यर्थः । " पितरो देवता " इत्यत्र देवतापदेन स्यउयमानद्रव्ये पितृदेवताकत्वं बोध्यते तदेव तद्धितप्रत्ययेनापि बोधनीयमिति देवतापदस्य तद्धितसमानार्थकता, किं चैतद्वाक्यस्य वेदीयत्वात् श्रुतिकल्पनापेक्षाभावेन सापेक्षत्वाभावात् निरपेक्ष एव त्यागोद्देश्यत्वबोधो जायते इत्युक्तम्- निरपेक्षत्यागेति । चतुर्थ्याः संप्रदानार्थकत्वात् संप्रदानत्वस्योद्देश्यत्वगर्भत्वाच्चतुर्थ्या स्वयमविलम्बेनोद्देश्यत्वं बोध्यते देवतापदे तु तथा

शूलपाणिपर्यालोचितं विनिगमकं न संगच्छते इति चेत् ?, न– " पितृभ्यो दद्यात् " इतिचतुर्थ्या साहित्यावच्छिन्नस्य त्यागोद्देश्यताबोधे तत्र वेदसमानार्थकस्मृतिवाक्यजन्यत्वग्रहे सत्येवाऽप्रामाण्यशङ्कानुदयः. तादृशग्रहश्च विलम्बितः । देवतापदात् त्यागोद्देश्यताबोधश्च तदुद्देश्यतांशे वेदबोधितत्वावगाही स्वस्मिन्नऽप्रामाण्यशङ्काव्युदासाय न ज्ञानान्तरमपेक्षते–स्वस्यैव स्वात्मकोद्देश्यताबोधांशेऽप्रामाण्यव्यावर्तकवेदजन्यत्वावगाहनात्, अप्रामाण्यशङ्काकलङ्कितश्च बोधो जातोप्यऽकिंचित्कर इति देवतापदस्य झटिति निश्चीयमानप्रामाण्यबोधजनकतया बलवत्त्वेन विनिगमनाया उपपत्तेः ।

एवं श्राद्धार्थावाहनप्रकाशकात् " पितरः " इत्यादिमन्त्राद् बहुवचनोपस्थापितसाहित्यावच्छिन्नाऽऽवाहनबोधेन साहित्यावच्छिन्नानां श्राद्धदेवतात्वलाभेपि मन्त्रलिङ्गस्य विपक्षबाधकतर्कादिसापेक्षव्याप्तिनिश्चयाधीनतया सुतराम् " पितरो देवता " इत्यतो दुर्बलतेति बोध्यम् ।

---

सामर्थ्यं नास्तीत्युद्देश्यत्वबोधने देवतापदापेक्षया चतुर्थ्या एव बलवत्त्वमिति शङ्काभिप्रायः । परिहरति– नेति, " पितृभ्यो दद्यात् " इत्यत्र चतुर्थ्या स्वयं शीघ्रमेव पित्रादीनां त्यागोद्देश्यत्वबोधनेप्येतद्वाक्यजन्योद्देश्यताबोधे प्रामाण्यग्रहार्थं वेदसमानार्थकस्मृतिवाक्यजन्यत्वग्रहस्यापेक्षास्ति तादृशग्रहश्च=वेदसमानार्थकस्मृतिवाक्यजन्यत्वग्रहश्चैतद्वाक्ये स्मृतिवाक्यत्वग्रहसापेक्षतया विलम्बेन भवति, देवतापदाच्च जायमानस्त्यागोद्देश्यताबोधस्तदुद्देश्यतांशे=त्यागोद्देश्यतांशे ( विषयत्वं सप्तम्यर्थः ) स्वस्मिन्नप्रामाण्यशङ्काव्युदासाय ज्ञानान्तरं नापेक्षते स्वस्मिन् वेदबोधितत्वावगाहित्वादित्येवंरीत्या त्यागोद्देश्यताबोधनेपि चतुर्थ्यपेक्षया देवतापदस्य बलवत्त्वमस्त्येवेति शूलपाण्युक्तं देवतापदस्य बलवत्त्वं युक्तमेवेत्यर्थः । किं च चतुर्थ्याऽप्रामाण्यशङ्काकलङ्कितो जातोपि बोधो न कार्यकारी संभवतीत्याह–अप्रामाण्यशङ्केति ।

उक्तरीत्या तद्धितापेक्षया तद्धितसमानार्थकदेवतापदापेक्षया च चतुर्थ्या दुर्बलत्वं प्रतिपाद्य मन्त्रलिङ्गस्य दुर्बलत्वं प्रतिपादयति– एवमित्यादिना । " पितरः " इत्यादिमन्त्रात्=" आयन्तु नः पितरः " इत्यादिमन्त्रात् । विपक्षेति–विपक्षबाधको यस्तर्कस्तत्सापेक्षा या व्याप्तिस्तादृशव्याप्तिनिश्चयाधीनमेव लिङ्गं भवतीति मन्त्रलिङ्गस्योक्ततर्कव्याप्त्यादिबहुसापेक्षतया दुर्बलत्वमित्यर्थः। वस्तुतस्तु " सामर्थ्यं सर्वशब्दानां लिङ्गमित्यभिधीयते " इतिपारिभाषिकलिङ्गपदार्थमज्ञात्वैव न्यायशास्त्रसंस्कारवशाल्लिङ्गपदेनानुमापकलिङ्गं विज्ञाय व्याप्त्यादिसापेक्षतया दुर्बलत्वप्रतिपादनं गदाधरभट्टाचार्यस्येति ध्येयम् । मीमांसकैस्त्वत्र " चतुर्थीतः संप्रदानैकदेशतया देवतात्वप्रतीतिरेव मन्त्रवर्णात्तु न देवतात्वं प्रतीयते किं त्वधिष्ठानमात्रमतश्च मन्त्रवर्णश्चतुर्थीतो दुर्बलः " इत्याद्युक्तं विस्तरस्तु मीमांसाग्रन्थेष्वेव द्रष्टव्यः ।

'कापोतम्' 'राजतम्' 'जनता' इत्यादौ समूहार्थविहितस्य तद्धितस्य पर्याप्तसमुदायत्वावच्छिन्नोऽर्थः, पर्याप्तौ प्रकृत्यर्थकपोतत्वाद्यवच्छिन्नस्यान्वयः । कपोतशुकसारिकादिपर्याप्तसमुदायत्वस्य पर्याप्तिश्च न न्यूनवृत्तिकपोतत्वादिनाऽवच्छिद्यते. अतो न तादृशसमुदाये कापोतादिव्यवहारः । पर्याप्त्यवच्छेदकत्वे चाऽन्यूनवृत्तित्वमेव तन्त्रं न त्वऽनतिरिक्तवृत्तित्वमपि. अन्यथाऽऽकाशत्वादेरिव घटत्वादेरपि द्वित्वादिपर्याप्त्यवच्छेदकता न स्यात् ( तथा च ) 'आकाशौ' इतिवत् 'घटौ' इत्यपि न स्यात् । इत्थं च कपोतमात्रवृत्तिशतत्वादिपर्याप्तावप्यऽतिरिक्तवृत्तिकपोतत्वाद्यवच्छिन्नत्वनिर्वाहात् कपोतशतादावपि कापोतादिव्यवहारोपपत्तिः । पर्याप्त्यतिप्रसक्तधर्मस्य तदनवच्छेदकत्वे गत्यन्तरं चिन्तनीयम् ॥

॥ इति तद्धितप्रत्ययार्थविवेचनं समाप्तम् ॥

---

प्रयोगान्तरमुदाहरति– कापोतमित्यादिना । पर्याप्तसमुदायत्वावच्छिन्नः=कपोतादिपर्याप्तसमुदायः । पर्याप्ताविति–कपोतादिपर्याप्तावित्यर्थः कपोतत्वाद्यवच्छिन्नपर्याप्तिकः समुदाय इति यावत् । ननु कपोतशुकसारिकादिसमुदायेऽपि कपोतानां समूहस्य सत्त्वात्तत्र 'कापोतम्' इति प्रयोगः कथं न भवतीत्याशङ्क्याह– कपोतशुकेति, पर्याप्त्यवच्छेदकत्वं न्यूनवृत्तिधर्मस्य न भवति कपोतशुकसारिकादिसमुदायस्थले च कपोतत्वं न्यूनवृत्त्येवेति कपोतत्वस्य पर्याप्त्यवच्छेदकत्वाभावादेव न तत्र कापोतादिव्यवहारः–पर्याप्तिर्यद्धर्मावच्छिन्ना भवति तद्धर्मावच्छिन्नसमुदायस्यैव व्यवहारास्पदत्वात् तद्धर्मावच्छिन्नवाचकादेव समूहार्थकतद्धितप्रत्ययप्राप्तिसंभवादित्यर्थः । प्रसङ्गसंगत्या पर्याप्त्यवच्छेदकस्वरूपमाह– पर्याप्त्यवच्छेदकत्वे इति । अनतिरिक्तवृत्तित्वम्=अतिरिक्तवृत्तित्वाभावः, अनतिप्रसक्तत्वमिति यावत् । विपक्षे बाधकमाह–अन्यथेति । घटत्वादेरिति–अतिप्रसक्तधर्मस्य पर्याप्त्यवच्छेदकत्वाभावे हि 'द्वौ घटौ' इत्यत्र घटत्वस्य द्वित्वपर्याप्त्यवच्छेदकत्वं यदिष्टं तन्न स्याद् घटत्वस्य तृतीयादिघटेष्वपि सत्त्वात् तथा च 'घटौ' इतिप्रयोगोऽपि न स्यादिति पर्याप्त्यवच्छेदकत्वे तद्धर्मस्यान्यूनवृत्तित्वमेव प्रयोजकं न त्वनतिप्रसक्तत्वमपीत्यर्थः । प्रकृतमाह– इत्थमिति, एवं हि शतसंख्याककपोतानामपि समुदाये 'कापोतम्' इति व्यवहार उपपद्यते– एकत्रीभूतशतकपोतातिरिक्तकपोतेष्वपि कपोतत्वस्य सत्त्वेऽपि कपोतमात्रवृत्तिशतत्वादिपर्याप्त्यवच्छेदकत्वसंभवात्–अन्यूनवृत्तित्वादित्यर्थः । तदनवच्छेदकत्वे=पर्याप्त्यनवच्छेदकत्वे । गत्यन्तरमिति–तादृशसंख्याकव्यक्तित्वस्यैव पर्याप्त्यवच्छेदकत्वं वक्तव्यम्–तस्य तादृशसंख्याकपर्याप्त्यपेक्षयाऽतिरिक्तवृत्तित्वाभावादित्यर्थः । किं वातिप्रसक्तधर्मस्य स्वरूपसंबन्धलक्षणमवच्छेदकत्वं वक्तव्यं तच्च तस्य संभवत्येवेति ॥

॥ इति व्युत्पत्तिवादादर्शे तद्धितप्रत्ययाः ॥

---

# अथ धातुप्रत्ययाः

धातुप्रकृतिकाश्च लकारकृत्सन्यङ्णिच्प्रभृतयः प्रत्ययाः केचिद्धात्वर्थान्वितमधिकमर्थं ब्रुवते. अर्थान्तरमऽनभिदधानाश्च केचिदाकाङ्क्षानिर्वाहकतया प्रकृतिभिः स्वीयार्थबोधने एवोपकुर्वते । तत्र लडादिदशलकाराणाम् " लः कर्मणि च भावे चाऽकर्मकेभ्यः " इतिसूत्रेण कर्तृकर्मभावेष्वनुशिष्टानां कर्तृत्वसामान्यमर्थः– तावन्मात्राभिधानेनैव प्रथमान्तपदोपस्थाप्ये विशेषणतया तदन्वयेन कृतिविशिष्टस्य कर्तुबोधनिर्वाहात् । लकारस्य तद्बोधकतया न " लः कर्मणि " इतिसूत्रविरोधः–बोधकताया एव तत्र सप्तम्यर्थत्वात्. न तु वाचकतायाः, गौरवेण विशिष्टधर्मिणि शक्तेर्बाधात् । ' मैत्रः पचति ' इत्यादौ लकारे प्रथमान्तपदसामानाधिकरण्यप्रवादस्याऽभेदेन तदर्थान्वितस्वार्थबोधपरत्वाभावेपि कथंचिदुपपादनसंभवात् ।

---

क्रमप्राप्तं धातुप्रकृतिकप्रत्ययार्थनिरूपणमारभते–धातुप्रकृतिका इत्यादिना । केचित्=सनादयः । अधिकम्=इच्छादिरूपमधिकमर्थम् । केचित्=भावार्थकप्रत्ययाः । आकाङ्क्षानिर्वाहकतयेति– यथा ' अनुभूयते ' इत्यादौ भावार्थविषयकशाब्दबोधं प्रति यगुत्तरतिप्पदज्ञानत्वेन कारणत्वमस्तीति भूधातूत्तरप्राप्तभावार्थकयक्प्रत्ययस्य केवलमाकाङ्क्षामात्रनिर्वाहकत्वमस्ति भावस्य धात्वर्थत्वादेवेत्यर्थः । विशेषनिरूपणमारभते– तत्रेति । तत्र=धातुप्रकृतिकप्रत्ययेषु । कर्तृत्वमिति– कर्तरि प्राप्तानां लकाराणां कर्तृत्वे एव शक्तिर्लाघवान्न तु कर्तरि गौरवात् कर्तृव्यक्तीनां नानात्वादित्यर्थः । ननु यदि लकारस्य कर्तृत्वे एव शक्तिस्तदा ' पचति ' इत्यादौ कर्तृबोधानुपपत्तिरित्याशङ्क्याह– तावन्मात्रेति, तावन्मात्राभिधानेन=कर्तृत्वमात्राभिधानेन, तदन्वयेन=कर्तृत्वान्वयेन, ' चैत्रः पचति ' इत्यादौ लकारेण कर्तृत्वे उपस्थिते तस्य प्रथमान्तपदोपस्थितचैत्रे विशेषणत्वेन रूपेणान्वयो भविष्यत्येवेति कृतिविशिष्टस्य=कर्तृत्वविशिष्टस्य कर्तुर्न बोधानुपपत्तिरित्यर्थः । कर्तृत्वं च कृतिरेव । नन्वेवमन्वयबलेन कर्तृबोधे प्राप्ते " लः कर्मणि " इति सूत्रविरोधः स्यादित्याशङ्क्याह– लकारस्येति, लकारस्य कर्तृबोधकत्वं त्वस्त्येव लकारस्य शक्तिः कर्तृत्वे एवेत्युच्यते न तु कर्त्रऽबोधकत्वमपीत्यर्थः । उक्तार्थमुपपादयति– बोधकताया इति । तत्र=उक्तसूत्रे । विशिष्टधर्मिणि=कर्तृत्वविशिष्टे कर्तरि । ननु " तिङ्समानाधिकरणे प्रथमा " इत्यादिवचनैस्तिङः प्रथमायाश्च सामानाधिकरण्यमुक्तं यत्र कर्तरि तिङ् तत्र प्रथमापि कर्तरि यत्र च कर्मणि तिङ् तत्र प्रथमापि कर्मणि यथा ' चैत्रः पचति ' ' पच्यते ओदनः ' इत्यर्थः तिङ्बोध्यकारकबोधिका प्रथमेति यावत् तथा च ' चैत्रः पचति ' इत्यत्र प्रथमा कर्तरि भवतीति तिङोपि कर्तृवाचकत्वे एव प्रथमासामानाधिकरण्यं स्यादिति लकारस्य कर्तृवाचकत्वमावश्यकमेवेत्याशङ्क्याह– मैत्र इति, तदर्थान्वित=कर्तृपदार्थान्वित । कथंचिदिति–

तृतीयायाः साधुतानियामकं लकारादिना कर्तुरनभिधानमपि कर्तृत्वविशिष्टाऽबोधनमेव न तु विशिष्टशक्त्या विशिष्टाऽबोधनपर्यन्तम्. अतो विशिष्टस्य लकारावाच्यत्वेपि ' चैत्रः पचति ' इत्यादौ न तृतीयापत्तिः- अन्वयबलेन विशिष्टबोधात् । ' चैत्रः पक्ता ' इत्यादौ कृत्प्रत्ययस्य धर्मिणि शक्तावपि न क्षतिः । शक्त्यधीनविशिष्टबोधसाधारणबोधस्यैवाऽनभिधानपदार्थप्रतियोगित्वात् " अनभिहिते कर्तरि तृतीया " इत्यनुशासनेपि सप्तम्यर्थो बोधकत्वमेव तथा च ' चैत्रेण पच्यते ' इत्यादौ तृतीयार्थकर्तृत्वस्य प्रकृत्यर्थविशेष्यतयैव भानान्न कर्तृत्वविशिष्टधर्मिबोधकत्वमिति सूत्राविरोधः ।

यदि च तत्र कर्त्रादिपदं धर्मपरं तथा च समभिव्याहृतलकाराद्यनभिहितं कर्तृत्वं

---

तादृशप्रथमान्तपदसामानाधिकरण्यमपि लकारबोध्यकर्तृपदार्थमाश्रित्यैवोक्तं न तु लकारवाच्यकर्तृपदार्थमाश्रित्य. कर्तृबोधकत्वं तु स्वीकृतमेवेति न प्रथमान्तपदसामानाधिकरण्यप्रवादानुपपत्तिः।

विशेषान्तरमाह- तृतीयाया इति, किं वा ननु लकारस्य कर्त्रवाचकत्वे " अनभिहिते कर्तरि तृतीया स्यात् " इतिनियमेन ' चैत्रः पचति ' इत्यत्रापि चैत्रपदोत्तरं तृतीया स्यात्- अत्रापि शक्त्या लकारेण कर्त्रभिधानाभावादित्याशङ्क्याह- तृतीयाया इति । विशिष्टशक्त्या= कर्तृत्वविशिष्टनिरूपितशक्त्या । विशिष्टावोधनपर्यन्तम्=कर्तृत्वविशिष्टाबोधनम् । तृतीयापत्त्यभावे हेतुमाह- अन्वयेति, अत्रान्वयबलेन कर्तृत्वविशिष्टस्य बोधो भवत्येवेति न तृतीयापत्तिः- यत्रान्वयबलेनापि कर्तृत्वविशिष्टस्य बोधो न भवति तत्रैव तृतीयापत्तिस्वीकाराद् यथा- ' चैत्रेण पच्यते ' इत्यादावित्यर्थः । चैत्र इति- ' चैत्रः पक्ता ' इत्यादौ पक्त्रादिपदानां चैत्रपदसामानाधिकरण्याद् विवशं कर्तृत्वविशिष्टेपि शक्तिः स्वीक्रियते- कर्तृत्वे शक्तिस्वीकारासंभवात्, कर्तृत्वस्य चैत्रादिनाऽभेदान्वयासंभवादित्यर्थः । " अनभिहिते " इतिवचनेपि बोधकत्वमेव सप्तम्यर्थो न तु वाचकत्वमित्याह- शक्त्यधीनेति, अनभिधानं हि बोधाभाव एव बोधाभावप्रतियोगी च बोध एव स च बोधः शक्त्यधीनो यः कर्तृत्वविशिष्टबोधस्तत्साधारण एव गृह्यते तथा च क्वचिच्छक्त्याऽनभिधानं क्वचिदन्वयबलेन चानभिधानं ग्राह्यमित्यर्थः । फलमाह- तथा चेति, " अनभिहिते कर्तरि " इत्यत्र कर्तृपदं कर्तृत्वविशिष्टधर्मिपरमेव ' चैत्रेण पच्यते ' इत्यत्र च तृतीयार्थभूतकर्तृत्वस्य प्रकृत्यर्थभूतचैत्रविशेष्यतयैव भानं भवति ' चैत्रवृत्तिकृतिजन्यविक्लित्यनुकूलव्यापारः ' इतिबोधोदयादिति लकारस्यात्र कर्तृत्वविशिष्टधर्मिबोधकत्वाभावाच्चैत्रपदात्तृतीया प्राप्तेति " अनभिहिते " इतिसूत्रविरोधोपि नास्ति- सूत्रेण लकारस्य कर्तृत्वविशिष्टधर्म्यऽबोधकत्वे एव कर्तृवाचकपदात्तृतीयाविधानादित्यर्थः । कर्तृत्वस्य विशेष्यत्वाद् धर्मिणः कर्तृत्वविशिष्टत्वमेव नास्ति येन तदभिधानमापद्येतेति भावः ।

परिहाराय पक्षान्तरमुत्थापयति- यदि चेति । तत्र=तृतीयाविधायकसूत्रे । धर्मपरम्=कर्तृत्वपरं न तु कर्तृत्वविशिष्टपरम् । कर्तृपदस्य धर्मपरत्वे सूत्रार्थमाह- तथा चेति, " अनभि

तृतीयार्थ इति सूत्रार्थः ' चैत्रेण पच्यते ' इत्यादौ कर्तृत्वस्य तृतीयामात्रार्थत्वाल्लकारेण तदनभिधानं सुघटमित्युच्यते ? तदा तत्रानभिधानशब्दार्थो भवतैव निर्वक्तव्यः, न तावदऽवाचकत्वं तदर्थः– लकारसामान्यस्यैव कर्तृत्वशक्तत्वेनाऽनुक्त्यऽसंभवात्, कर्तरि यकोऽसाधुत्वादेव ' चैत्रः पच्यते ' इत्यादिप्रयोगवारणात्, यगाद्यनुत्तरत्वस्य कर्तृत्वशक्ततावच्छेदककोटावनिवेशात्, तत्र तन्निवेशे ' पच्यन्ते माषाः ' ' भिद्यते कुसूलः ' ' लूयते केदारः ' इत्यादौ कर्मकर्तुर्माषकुसूलकेदारादेः कर्तृत्वबोधानुपपत्तिः । न च तत्र ' स्वयमेव ' इत्यस्याऽध्याहारेणाऽव्ययस्वयंपदोत्तरतृतीयया कर्तृत्वं बोध्यते न तु लकारेणेति वाच्यम्, ' स्वयम् ' इत्याद्यऽध्याहारं विनापि तत्र कर्तृत्वबोधाभ्युपगमात् । तत्र लकारेण कर्तृत्वाबोधने कर्मकर्तुः " कर्मवत्कर्मणा तुल्यक्रियः " इत्यतिदेशसूत्रवैयर्थ्यापातात्, लकारस्य कर्मत्वबोधकतयैव यगात्मनेपदचिण्चिण्वद्भावरूपातिदेशफलनिर्वाहात् ।

न च कर्मकर्तरि लकाराधीनकर्मत्वबोधस्याप्यावश्यकता वस्तुगत्या कर्तुः

---

हिते " इत्यस्य ' लकारेण कर्तृत्वानभिहिते तृतीया ' इत्यर्थे जाते लकारानभिहितं कर्तृत्वमेव तृतीयार्थः स्यादित्यर्थः । फलमाह– चैत्रेणेति, कर्तृत्वस्य लकारार्थत्वाभावाल्लकारेणाऽनभिधानं प्राप्तमेव तथा च तृतीयोपपत्तिरित्यर्थः । उक्तपक्षे स्वं चोद्यमाविष्करोति– तदेति । तदर्थः= अनभिधानपदार्थः । अनुक्त्यऽसंभवात्=अवाचकत्वासंभवात् । ननु लकारस्य कर्तृत्वे शक्तिस्वीकारे कर्तृत्ववाचकत्वेपि कर्तृवाचकत्वाभावात् यक्प्रत्ययेन ' चैत्रः पच्यते ' इत्यपि प्रयोगः स्यादित्याशङ्क्याह– कर्तरीति । ननु यगनुत्तर ( यग्रहित ) लकारस्यैव कर्तृत्वे शक्तिः स्वीक्रियतां ' पच्यते ' इत्यत्र च यगुत्तरत्वान्न कर्तृत्वबोधकत्वं स्याल्लकारस्येति न ' चैत्रः पच्यते ' इति प्रयोगापत्तिरित्याशङ्क्याह– यगाद्यनुत्तरेति । विपक्षे बाधकमाह– तत्रेति, यदि तत्र=कर्तृत्वशक्ततावच्छेदककोटौ तन्निवेशः=यगाद्यनुत्तरत्वनिवेशः स्यात्तदा ' पच्यन्ते माषाः ' इत्यादौ यगुत्तरत्वस्यैव सत्त्वेन यगनुत्तरत्वस्याऽसत्त्वात् कर्मकर्तृभूतमाषादेः कर्तृत्वं न प्रतीयेत न चैतदिष्टमित्यर्थः । ननु ' पच्यन्ते माषाः ' इत्यत्र लकारेण माषादीनां कर्तृत्वाबोधनेप्यध्याहृतस्वयंपदोत्तरप्राप्तलुप्ततृतीयया कर्तृत्वं बोध्यते इत्याशङ्क्याह– न चेति । उत्तरमाह= स्वयमिति । ' पच्यन्ते माषाः ' इत्यत्र लकारस्य कर्तृत्वबोधकत्वे सूत्रं प्रमाणयति– तत्रेति, वैयर्थ्यापातादिति– तत्र लकारस्य कर्तृत्वबोधकत्वेन माषादीनां कर्तृत्वे प्राप्ते तदपवादेन कर्मतुल्यत्वं विधीयते लकारस्य कर्तृत्वाबोधकत्वे माषादीनां कर्तृत्वाप्राप्तौ तदपवादं कृत्वा कर्मत्वबोधनं व्यर्थमेव स्यात्– अप्राप्तस्यापवादासंभवादित्यर्थः । यदा च सूत्रेण माषादीनां कर्मत्वं प्राप्तं तदा लकारस्यापि कर्मत्वबोधकत्वं प्राप्तं कर्मत्वबोधकत्वे च कर्मत्वातिदेशफलभूता यगादिप्राप्तिरुपपद्यते इत्याह– लकारस्येति । आशङ्कते– न चेति । वस्तुगत्येति– यदि कर्तुः कर्मत्वे सति यगादिकं स्यात्तदा ' चैत्रः

कर्मत्वातिदेशे ' चैत्रः स्वं पश्यति स्वं हन्ति ' इत्यादावपि यगात्मनेपदादि-प्रसङ्गाल्लकारेण कर्मत्वविवक्षायामेव कर्मत्वातिदेशस्य स्वीकरणीयत्वात् तथा च त्वन्मतेपि कर्मत्वातिदेशाऽसंगतिरिति वाच्यम्, कर्मत्वविवक्षायामपि कर्तृत्व-विवक्षणे कर्तृकर्मादिसंज्ञासमावेशविरोधेन परत्वात् कर्तृसंज्ञया कर्मसंज्ञाया बाधेना-त्मनेपदचिण्वद्भावाद्यनुपपत्तेः । "कर्तरि शप्" इत्याद्यपवादविषयतया यकोप्य-निर्वाहादतिदेशसार्थकत्वात् ।

न च कर्मत्वकर्तृत्वयोरुभयोस्तत्र बोधस्वीकारे तदेकतरस्याख्यातार्थतयोद्दे-श्यतावच्छेदकतया भानासंभवात् समूहालम्बनबोध एव स्वीकरणीय इति वाक्य-भेदापत्तिरिति वाच्यम्, एकत्र द्वयमितिरीत्या तदुभयबोधस्य समूहालम्बनवि-लक्षणस्य स्वीकारात् । यदि च विधेयद्वयज्ञानं समूहालम्बनात्मकमेव अत एव ' विधेयभेदे वाक्यभेदः ' इति मीमांसकसिद्धान्तोपीत्युच्यते ? तदाऽस्तु धातो-

---

स्वं पश्यति ' इत्यादावपि यगादिकं स्यात् कर्तृभूतचैत्रादेरेव कर्मत्वात्. न चैतदिष्टमिति लका-रेणैव कर्मत्वाभिधाने कर्तुः कर्मत्वातिदेशो वक्तव्यस्तथा च त्वन्मतेपि कर्मत्वातिदेशासंगतिरेव— लकारस्य तत्र त्वन्मते कर्तृत्वबोधकत्वेन कर्मत्वाभिधायकत्वाभावादिति कर्मकर्तृस्थले लकारस्य कर्म-त्वबोधकत्वमप्यावश्यकमेवेत्यर्थः । उत्तरमाह—कर्मत्वेति, यदि लकारेण कर्मत्वविवक्षायामेव कर्म-त्वातिदेशः स्यात्तदापि कर्मकर्तृस्थलत्वात् कर्तृत्वविवक्षाऽपि प्राप्तेव तत्रैकस्यैव कर्तृसंज्ञा कर्मसंज्ञा च न संभवतीति परत्वात् कर्तृसंज्ञया कर्मसंज्ञाया बाधे जाते कर्मत्वप्रयुक्तात्मनेपदचिण्वद्भावा-दिकं नोपपद्यते तथा यगपि नोपपद्यते "कर्तरि शप्" इत्यनेन बाध्यमानत्वादित्यतिदेशस्य= "कर्मवत्कर्मणा" इतिसूत्रस्य ' पच्यन्ते माषाः ' इत्यादौ माषादीनां कर्तृत्वसत्त्वेपि यगादि-विधायकत्वेन सार्थकत्वमित्यर्थः ।

ननु ' पच्यन्ते माषाः ' इत्यत्र यदि माषाणां कर्मत्वेन च कर्तृत्वेन च बोधः स्यात्तदोभयोरेव कर्मत्वकर्तृत्वयोराख्यातार्थत्वेन विशेषाभावादेकतरस्योद्देश्यतावच्छेदकतया भानं न संभवति येन कर्तृत्वविशिष्टमाषव्यक्तिमुद्दिश्य कर्मत्वविधानम्=कर्मत्वातिदेश उपपद्येत, तथा चात्र ' माषक-र्तृको व्यापारो माषकर्मकश्च व्यापारः ' इत्येवं समूहालम्बनबोधः स्वीकर्तव्यस्तेन च वाक्य-भेदः प्राप्त इत्याशङ्क्याह— न चेति । परिहारमाह— एकत्रेति, यथा " एकत्र द्वयम् " इति-रीत्या ' नीलः सुन्दरो घटः ' इत्यत्रैकस्मिन्नेव घटे नीलत्वं सुन्दरत्वं चास्तीति नीलत्वावच्छि-न्नप्रकारतानिरूपितायाः सुन्दरत्वावच्छिन्नप्रकारतानिरूपितायाश्च घटनिष्ठविशेष्यताया एकत्वान्न वाक्यभेदो न वा समूहालम्बनात्मकबोधस्तथा प्रकृतेपि कर्मत्वनिष्ठप्रकारतानिरूपितायाः कर्तृत्वनिष्ठप्रकारतानिरूपितायाश्च माषनिष्ठविशेष्यताया एकत्वान्न वाक्यभेदो न वा समूहाल-म्बनबोध इत्यर्थः । ननु विधेयद्वयज्ञानं समूहालम्बनात्मकमेव भवतीति कर्मत्वकर्तृत्वयोर्विधाने वाक्यभेदः स्यादेवेत्याशङ्कते— यदीति । उत्तरमाह— तदेति, धातोः सामान्यतः क्रियायां

रेव स्वकर्मकक्रियायां लक्षणा, कर्तृत्वसंबन्धमध्ये एव वा स्वनिरूपकक्रिया-कर्मत्वस्याप्यन्तर्भावः । स्नुनमोरकर्मकत्वेपि 'प्रस्नुते गौः' 'प्रास्नोष्ट गौः' 'नमते दण्डः' 'अनंस्त दण्डः' इत्यादौ ण्यर्थान्तर्भावेनैव कर्मकर्तृतानिर्वाहेण "न दुहस्नुनमां यक्चिणौ" इति यक्चिण्निषेधोपपत्तिः ।

एवं 'चैत्रेण पक्ष्यते' इत्यादौ कर्तृत्ववाचकताया दुरपह्नवत्वात् तृतीयानुपपत्तिः—'चैत्रः पक्ष्यते' इत्यादौ लकारेण कर्तृत्वबोधनात् स्याद्युत्तरलकारसाधारणरूपस्य तद्वाचकतावच्छेदकताध्रौव्याच्च ।

नापि तदऽबोधकत्वं तदनभिधानम्—'चैत्रेण पच्यते' इतिवाक्यजबोधे

---

शक्तावपि माषादिकर्मकक्रियायां लक्षणा तथा च लक्षणया माषादिकर्मकव्यापारस्य बोध उपपन्न इत्यर्थः । पक्षान्तरमाह— कर्तृत्वेति, स्वं कर्तृत्वं कर्तृत्वनिरूपिका या क्रिया तत्कर्मत्वस्य कर्तृत्वसंबन्धे एवाऽन्तर्भावः कर्तव्यस्तथा च स्वनिरूपकक्रियाकर्मत्वसंबन्धेनात्र माषादिलक्षणकर्तरि कर्तृत्वस्यान्वयः कर्तव्य इति कर्तृत्वमात्रस्य विधेयत्वेन विधेयभेदाभावान्न वाक्यभेदप्रसङ्गः, कर्मत्वस्य माषादौ संसर्गविधयापि भानसंभवादित्यर्थः, अत्र स्वं माषादिनिष्ठं कर्तृत्वं तन्निरूपिका या पाकादिक्रिया तत्कर्मत्वं माषादावस्त्येवेति तेन कर्मत्वरूपसंबन्धेन माषादौ कर्तृत्वान्वय इत्यन्वयः । ननु स्नुनमोर्धात्वोर्यदि सकर्मकत्वं स्यात्तदा कर्मकर्तृविवक्षायां यगादिप्राप्तौ सत्याम् "न दुहस्नुनमाम्" इत्यनेन यगादिनिषेध उपपद्येतापि न च यगादिप्राप्तिरस्ति— स्नुनमोरकर्मकत्वादित्याशङ्क्याह— स्नुनमोरिति, स्नुनमोरकर्मकत्वेपि तदर्थे ण्यर्थान्तर्भावेन कर्मकर्तृत्वमुपपद्यते ण्यर्थभावनायाः सकर्मकत्वादिति सकर्मकत्वे प्राप्ते कर्मकर्तृत्वविवक्षायां यगादिप्राप्तौ सत्याम् "न दुहस्नुनमाम्" इत्यनेन यगादिनिषेध उपपन्न एवेत्यर्थः । नम् धातोः सामान्यतः सकर्मकत्वेपि दण्डादीनां स्वयमेव नमने 'नमते दण्डः' इत्यादावकर्मकत्वमेव विज्ञेयं कर्माभावात् ।

"न च कर्मकर्तरि" इत्यनेनाऽऽरब्धामप्रकृतचिन्तां परिसमाप्य प्रकृतमाह— एवमिति, यथा "कर्मवत्कर्मणा" इतिसूत्रवैयर्थ्यापत्तिरेवमिति पूर्वेण संगतिः । तृतीयानुपपत्तिरिति— "अनभिहिते कर्तरि" इत्यत्रेदानीं कर्तृपदं कर्तृत्वपरमेवेत्यनभिहिते कर्तृत्वे तृतीया संभवति न चात्र—लकारस्य कर्तृत्ववाचकत्वेन कर्तृत्वाभिधानस्यैव सत्त्वादित्यर्थः । 'चैत्रेण पक्ष्यते' इत्यत्र लकारस्य कर्तृत्ववाचकत्वे हेतुमाह— चैत्र इति, 'चैत्रः पक्ष्यते' इति लृट्प्रयोगे लकारस्य कर्तृत्ववाचकत्वमस्त्येव 'पक्ष्यते' इत्येव च प्रयोगः 'चैत्रेण पक्ष्यते' इत्यत्राप्यस्त्येवेत्यत्र कथं न कर्तृत्ववाचकत्वं स्यात्, उक्ते हेतुमाह— स्याद्युत्तरेति, स्याद्युत्तरलकारसाधारणमेव 'पक्ष्यते' इति रूपं तद्वाचकतायाः=कर्तृत्ववाचकताया अवच्छेदकमस्ति, तादृशरूपाक्रान्तिश्चोभयत्र तुल्यैवेति कथमेकत्र लकारस्य कर्तृत्ववाचकत्वमेकत्र च कर्तृत्वावाचकत्वमिति वैषम्यं स्यादित्यर्थः।

पक्षान्तरं परिहरति— नापीति । तदबोधकत्वम्=कर्तृत्वाबोधकत्वम् । तदनभिधानम्=कर्तृ-

कर्तृत्वविषयके तादृशवाक्यघटकसकलपदानामेव जनकतया तद्घटकलकारस्यापि कर्तृत्वबोधकतया वाङ्मात्रेणाऽप्रत्याख्येयत्वात् ।

नापि तद्विषयत्वाप्रयोजकत्वं लादीनां तदनभिधायकत्वम् 'चैत्रेण पच्यते' इत्यादौ धात्वर्थविशेषणतया कर्तृत्वविषयता तृतीयाप्रयोज्यैव न त्वाख्यातप्रयोज्या— आख्यातस्याश्रयतासंबन्धावच्छिन्नकर्तृत्वप्रकारताया एव कार्यतावच्छेदकत्वादित्यपि सम्यक्— 'पचति' इत्यवान्तरवाक्यार्थबोधासंग्राहकतया प्रकारताया एवाख्यातजन्यतावच्छेदकत्वासंभवात्, प्रथमान्तपदसमभिव्याहारज्ञानस्य योग्यताज्ञानादेर्वा जन्यतायामुक्तप्रकारताया अवच्छेदकत्वात् ।

---

त्वानभिधानम् । "अनभिहिते कर्तरि" इत्यत्रेति शेषः । बोधे इतिनिरूपितत्वं सप्तम्यर्थस्तथा चोक्तवाक्यघटकसकलपदानामेव कर्तृत्वविषयकबोधनिरूपितजनकतयेत्यर्थः । 'चैत्रेण पच्यते' इतिवाक्यस्य कर्तृत्वबोधकत्वे वाक्यघटकलकारस्यापि कर्तृत्वबोधकत्वं प्राप्तमेवेति तृतीयानुपपत्तिः—तृतीयाप्रापकस्य कर्तृत्वाबोधकत्वस्याऽसत्त्वादित्यर्थः ।

ननु कर्तृत्वविषयत्वाऽप्रयोजकत्वमेव लादीनां कर्तृत्वानभिधायकत्वमिति वक्ष्यामः 'चैत्रेण पच्यते' इत्यत्र च या धात्वर्थविशेषणतया कर्तृत्वविषयता ( कृतिनिष्ठा प्रकारता ) भासते 'चैत्रसमवेतकृतिजन्यः पाकः' इतिबोधोदयात् सा तृतीयाप्रयोज्यैवास्ति न तु लकारप्रयोज्या— लकारस्याऽऽश्रयतासंबन्धावच्छिन्नकर्तृत्वप्रकारतामात्रप्रयोजकत्वात्. अर्थादाख्यातेनाश्रयतासंबन्धेन कर्तृत्वं कर्तरि विशेषणतया बोध्यते न तु धात्वर्थव्यापारे. तृतीययैव व्यापारे कर्तृत्वं विशेषणतया बोध्यते इति लकारस्य तद्विषयत्वाप्रयोजकत्वाल्लकारेण कर्तृत्वानभिधानं प्राप्तमिति न तृतीयानुपपत्तिरित्याशङ्क्याह— नापीति । परिहारमाह— पचतीति । यद्यपि 'चैत्रः पचति' इत्यत्र चैत्रपदसमभिव्याहारात् चैत्रे कृतिः प्रकारतया भासते 'पाकानुकूलकृतिमांश्चैत्रः' इतिबोधोदयादित्यत्र कर्तृत्वप्रकारताविषयकबोधजनकत्वरूपं कर्तृत्वप्रकारताप्रयोजकत्वमाख्यातस्यास्ति तथापि 'चैत्रः पचति' इतिवाक्यस्य यदवान्तरवाक्यम् 'पचति' इति वाक्यं तज्जन्यबोधे तु कृतिः प्रकारतया न भासते कृत्याश्रयीभूतकर्तुरनुपस्थितत्वात् 'पाकानुकूला कृतिः' इत्येतावन्मात्रबोधोदयादित्येतादृशबोधाऽसंग्रहप्रसङ्गात् कर्तृत्वप्रकारतैवाख्यातेन बोध्यते इति न स्वीकर्तुं शक्यते, किं त्वेतादृशी=आश्रयत्वसंबन्धावच्छिन्ना कर्तृत्वप्रकारता तु प्रथमान्तपदसमभिव्याहारज्ञानेन वा कर्तृत्वप्रकारताविषयकयोग्यताज्ञानेन वा बोध्यते इत्येव युक्तं तथा चोक्तधात्वर्थविशेषणीभूता कर्तृत्वविषयतापि लकारप्रयोज्यैवेति 'चैत्रेण पच्यते' इत्यत्र कर्तृत्वानभिधानाभावात् तृतीयानुपपत्तिस्तदवस्थैवेत्यर्थः । प्रकारताया इति वाक्यस्य 'प्रकारताया आख्यातजन्यतावच्छेदकत्वस्यैवासंभवात्' इत्यन्वयः । "जन्यतायामुक्तप्रकारताया अवच्छेदकत्वात्" इत्यस्य 'उक्तप्रकारताया योग्यताज्ञानादिजन्यतावच्छेदकत्वात्' इत्यर्थः ।

यदि च प्रथमान्तपदसमभिव्याहृताख्यातपदजन्यतावच्छेदकतयैव धर्मिविषयतानिरूपितकर्तृत्वविषयताया आख्यातप्रयोज्यत्वं कर्तृत्वविषयतासामान्यं च नाख्यातपदज्ञानसामान्यजन्यतावच्छेदकं तादृशसामान्यकार्यकारणभावे मानाभावादित्युच्यते ?, तदापि ' चैत्रेण पच्यते तण्डुलः ' इत्यादिवाक्यार्थबोधस्य परस्परसमभिव्याहृतपदसमूहरूपवाक्यज्ञानहेतुकतया तद्वाक्यार्थविषयतान्तःपातिकर्तृत्वविषयताया वाक्यघटकाख्यातप्रयोज्यत्वं दुर्वारमेवेति ।

मैवम्—" अनभिहिते कर्तरि तृतीया " इत्यस्य ' कर्तृत्वविशेष्यतया प्रातिपदिकार्थेऽविवक्षिते सति तृतीया ' इत्यर्थः ' प्रातिपदिकार्थविशेषणतयैव कर्तृत्वेऽविवक्षिते ' इतियावत्, अवधारणतया च ' प्रातिपदिकार्थविशेष्यतया कर्तृत्वे विवक्षिते तदुत्तरं तृतीया ' इतिपर्यवसितम् ।

---

ननु न कर्तृत्वविषयतामात्रमाख्यातमात्रप्रयोज्यं भवति येन ' चैत्रेण पच्यते ' इत्यत्र धात्वर्थविशेषणीभूताया अपि कर्तृत्वविषयताया आख्यातप्रयोज्यत्वापत्त्या तृतीयाऽनुपपत्तिः स्यात् किंतु कर्तृभूतो यश्चैत्रादिरूपो धर्मी तन्निष्ठविषयता ( विशेष्यता ) निरूपिता या कर्तृत्वविषयता ( कृतिनिष्ठा प्रकारता ) तस्या एव प्रथमान्तपदसमभिव्याहृताख्यातप्रयोज्यत्वमस्तीत्येतादृशविशेषरूप एव कार्यकारणभावः स्वीक्रियते, कर्तृत्वविषयतासामान्यमाख्यातपदज्ञानसामान्यप्रयोज्यमिति सामान्यकार्यकारणभावे मानाभावात् तथा च प्रयोजकीभूताख्याते प्रथमान्तपदसमभिव्याहृतत्वमपेक्ष्यते प्रयोज्यभूतकर्तृत्वविषयतायां च प्रथमान्तपदसमभिव्याहृताख्यातपदजन्यतावच्छेदकत्वम् ( बोध्यत्वम् ) धर्मिविषयतानिरूपितत्वं चापेक्ष्यते ' चैत्रेण पच्यते ' इत्यत्र च प्रथमान्तपदाभावेन प्रथमान्तपदसमभिव्याहृतमाख्यातमेव नास्ति यस्य कर्तृत्वविषयताप्रयोजकत्वं स्यात्तेन च कर्तृत्वाभिधानप्राप्त्या तृतीयानुपपत्तिः स्यादित्याशङ्क्याह— यदीति । उत्तरमाह— तदापीति, ' चैत्रेण पच्यते तण्डुलः ' इत्येतद्वाक्यजन्यो बोध एतद्वाक्येनैव जन्यते एतद्वाक्यं चैतद्वाक्यघटकपदसमूहरूपमेवेति वाक्ये आख्यातपदमपि वर्तते एतद्वाक्यजन्यबोधे च कर्तृत्वविषयतापि भासते एवेति एतद्वाक्यस्यैतद्वाक्यार्थप्रयोजकत्वे एतद्वाक्यघटकाख्यातस्यैतद्वाक्यार्थघटककर्तृत्वविषयताप्रयोजकत्वं प्राप्तमेवेति तृतीयानुपपत्तिस्तदवस्थैव— तृतीयाप्रयोजकस्य कर्तृत्वविषयत्वाप्रयोजकत्वरूपस्य कर्तृत्वानभिधायकत्वस्य लकारे प्राप्त्यऽभावादित्यर्थः ।

" अनभिहिते कर्तरि तृतीया " इत्यत्राऽनभिहितपदस्य उक्ताऽवाचकत्वाद्यर्थकत्वे उक्तानुपपत्तीनां सत्त्वान्न तथा व्याख्या कर्तव्या किं तु प्रदर्श्यमानरीत्यत्रोक्तवचनव्याख्या कर्तव्येत्यभिप्रायेणाह— मैवमिति, ' चैत्रेण पच्यते ' इत्यत्र ' चैत्रवृत्तिकृतिजन्यो व्यापारः ' इति वा ' चैत्रवृत्तिकृतिजन्यपाकजन्यविक्लित्त्याश्रयस्तण्डुलः ' इति वा बोधोदयात् कृतेः=कर्तृत्वस्य प्रातिपदिकार्थे चैत्रे विशेषणत्वं नास्ति— व्यापारे विशेषणत्वात् प्रातिपदिकार्थस्य च कृतिवि-

अत्रैवम् ' चैत्रः पचति ' इत्यादावाऽऽख्यातेन कर्तृत्वबोधनात् " उक्तार्थानामप्रयोगः " इतिन्यायात् तृतीयापत्तिविरहात् ' प्रातिपदिकार्थान्वयितया कर्तृत्वविवक्षायाम् ' इत्येव सम्यक् किं विशेष्यतयाऽन्वयित्वपर्यन्तनिवेशनेनेति " अनभिहिते " इत्यनुवृत्तिरफला-तावत्पर्यन्तलाभस्यैव तदनुवृत्तिफलत्वादिति नाशङ्क्यम्, ' संख्यातिरिक्तसुबर्थस्य प्रकृत्यर्थविशेष्यतयैवान्वयः ' इतिव्युत्पत्तिसूचकत्वेन विशेष्यतयान्वयित्वपर्यन्तस्यावश्यं विवक्षणीयत्वात् । यथाश्रुतसूत्रार्थानुरोधेन कर्तरि लकारतृतीयाविभक्त्योः शक्तिवादिभिर्वैयाकरणैरपि 'प्रातिपदिकार्थविशेष्यतया कर्तरि विवक्षिते तृतीया ' इत्येव सूत्रार्थो वाच्यः, अन्यथा

---

शेष्यत्वं नास्ति किं तु कृतेरेव प्रातिपदिकार्थविशेष्यत्वमस्ति चैत्रस्य कृतौ विशेषणत्वादित्यत्र चैत्रपदात् तृतीया प्राप्तेत्यर्थः । अवधारणतया=" प्रातिपदिकार्थविशेषणतयैव " इत्यत्रत्यैवकारार्थेन नियमेन । कर्तृत्वस्य प्रातिपदिकार्थविशेषणत्वेनाऽविवक्षानियमे उक्ते सति प्रातिपदिकार्थविशेष्यत्वेन विवक्षा प्राप्तैवेत्यर्थः । तदुत्तरम्=कर्तृवाचकपदोत्तरम् ।

ननु " प्रातिपदिकार्थविशेष्यतया कर्तृत्वे विवक्षिते कर्तृपदोत्तरं तृतीया " इत्येवं विशेष्यतयाऽन्वयित्वपर्यन्तनिवेशो व्यर्थ एव गौरवग्रस्तो वेति तस्य स्थाने " प्रातिपदिकार्थान्वयितया कर्तृत्वविवक्षायां तृतीया " इत्येव वक्तव्यं तथा च ' चैत्रेण पच्यते ' इत्यत्र प्रातिपदिकार्थभूतचैत्रस्य कर्तृत्वे=कृतावन्वयस्य सत्त्वेन कृतेः प्रातिपदिकार्थान्वयितया विवक्षितत्वात् चैत्रपदात्तृतीया प्राप्नोत्येव- चैत्रवृत्तिकृतिजन्यो व्यापार इति बोधोदयात्, यद्यपि ' चैत्रः पचति ' इत्यत्रापि ' पाकानुकूलकृतिमांश्चैत्रः ' इतिबोधोदयात् कृतेः प्रातिपदिकार्थे चैत्रे विशेषणतयान्वयित्वात्तृतीयापत्तिरस्ति तथापि " उक्तार्थानामप्रयोगः " इतिनियमोऽस्ति ' चैत्रः पचति ' इत्यत्र चाख्यातं कर्तृत्वबोधकमस्त्येवेति कर्तृत्वबोधिकायास्तृतीयाया आपत्तिर्नास्त्येवेति सर्वं सुस्थम्, एवं च " अनभिहिते कर्तरि " इत्यत्र " अनभिहिते " इत्यस्यानुवृत्तिरपि न कर्तव्या- तावत्पर्यन्तलाभस्य=विशेष्यतयान्वयित्वपर्यन्तलाभस्यैव तदनुवृत्तिफलत्वात्=" अनभिहिते " इत्यनुवृत्तिफलत्वात्, विशेष्यतयान्वयित्वपर्यन्तनिवेशस्य च त्यक्तत्वादित्याशयेनाशङ्कते- अत्रैवमित्यादिना, नाशङ्क्यमित्यन्तम् । उत्तरमाह- संख्यातिरिक्तेति, " प्रातिपदिकार्थविशेष्यतया कर्तृत्वे विवक्षिते तृतीया " इत्युक्ते 'चैत्रेण पच्यते' इत्यादौ तृतीयार्थकर्तृत्वस्य प्रातिपदिकार्थभूतप्रकृत्यर्थविशेष्यत्वं प्राप्तं तेन च " संख्यातिरिक्तसुबर्थस्य प्रकृत्यर्थविशेष्यतयैवान्वयो भवति " इति व्युत्पत्तेः समर्थनं भवति, त्वदुक्तेन " प्रातिपदिकार्थान्वयितया कर्तृत्वविवक्षायां तृतीया " इत्यनेनोक्तव्युत्पत्तिसमर्थनं न संभवति- प्रातिपदिकविशेषणस्यापि प्रातिपदिकार्थान्वयित्वाऽक्षतेरित्यर्थः । यथाश्रुतेति- सूत्रे " कर्तरि " इतिपदमस्तीति कर्तृत्वविशिष्टे कर्तर्येव लकारस्य तृतीयायाश्च शक्तिर्न तु कर्तृत्वे इतिवैयाकरणमतम् । प्रातिपदिकार्थविशेष्यतयेति- यथा ' नीलो घटः ' इत्यत्र नीलपदार्थस्य घटपदार्थस्य चाभेदेपि नीलत्वघटत्व-

'चैत्रेण पच्यते' इत्यादौ कर्तुरनभिधानस्योक्तक्रमेण कर्तृत्वानभिधानवद् दुर्वचत्वापत्तेरित्यलमधिकेन ।

अथ "अनभिहिते कर्तरि तृतीया" इत्यस्योक्तार्थकत्वे चैत्रादिकर्तृकत्व-विशेषितपाकादिविवक्षया 'चैत्रेण पचति' इत्यादिप्रयोगापत्तिः, न च परस्मै-पदार्थकर्तृत्वान्वयिविशेष्यविरहान्न तथाप्रयोगः– विशेष्यतयापि कर्तृत्वबोधसंभवात् । चैत्रमैत्रोभयकर्तृकपाकस्थले चैत्रकर्तृकपाककर्ता मैत्र इत्यन्वयतात्पर्येण 'चैत्रेण पचति मैत्रः' इतिप्रयोगस्य दुर्वारत्वाच्च ।

न च कर्तृत्वातिरिक्ते विशेषणतापन्नायां कर्तृत्वे वा विशेषणातानापन्नायामेव

योर्धर्मयोर्भेदात् नीलत्वावच्छिन्ना प्रकारता भवति घटत्वावच्छिन्ना च विशेष्यता भवति तथा 'चैत्रेण पच्यते' इत्यादावपि प्रातिपदिकार्थस्य कर्तुश्चाभेदेपि चैत्रत्वकर्तृत्वयोर्धर्मयो-र्भेदात् चैत्रत्वावच्छिन्नाप्रकारता कर्तृत्वावच्छिन्ना च विशेष्यता ज्ञेया तथा च 'चैत्रत्वाद्यव-च्छिन्नप्रकारतानिरूपितकर्तृत्वावच्छिन्नविशेष्यतायां विवक्षितायां तृतीया' इत्येवं वैयाकरणैः "अनभिहिते कर्तरि" इतिसूत्रस्यार्थो वक्तव्य इत्यर्थः । विपक्षे बाधकमाह– अन्यथेति, अन्यथा यथोक्तरीत्या कर्तृत्वानभिधानं दुर्वचमेवेति प्रदर्शितं तथा कर्त्रऽनभिधानमपि ताभिरेव शङ्काभिर्दुर्वचमेव स्यादित्यर्थः ।

ननु "अनभिहिते कर्तरि" इत्यस्योक्तार्थकत्वे= "प्रातिपदिकार्थविशेष्यत्वेन कर्तृत्वविव-क्षायां तृतीया" इत्यर्थस्वीकारेपि विवक्षायाः स्वाधीनत्वेन 'चैत्रः पचति' इत्यत्रापि कर्तृत्वस्य चैत्रविशेष्यतया विवक्षासंभवात् प्रातिपदिकार्थचैत्रविशेष्यभूतकर्तृत्वस्य पाके विशेषणत्वविवक्षासंभ-वाच्च 'चैत्रेण पचति' इतिप्रयोगापत्तिः स्यादित्याशङ्कते–अथेति । ननु 'पचते' इतिपरस्मैपदस्यार्थ-भूतं यत्कर्तृत्वं तादृशकर्तृत्वस्य विशेष्यतयान्वयी प्रथमान्तपदार्थ एव भवति 'चैत्रेण पचति' इत्यत्र च परस्मैपदार्थकर्तृत्वस्य विशेष्यभूतश्चैत्रादिः प्रथमान्तपदार्थो नास्त्येवेति तदभावादेव 'चैत्रेण पचति' इतिप्रयोगापत्तिर्नास्तीत्याशङ्क्याह– न चेति । उत्तरमाह– विशेष्यतयेति, परस्मै-पदार्थकर्तृत्वस्य विशेषणतयैव बोधो भवतीत्यत्र श्रुत्यभावात् 'पाकानुकूला चैत्रसमवेता कृतिः' इत्येवं विशेष्यतयापि बोधसंभवात् 'चैत्रेण पचति' इतिप्रयोगापत्तिस्तदवस्थैवे-त्यर्थः । "प्रातिपदिकार्थविशेष्यतया कर्तृत्वे विवक्षिते तृतीया" इत्युक्तसूत्रार्थस्वीकारे दोषान्त-रमाह– चैत्रमैत्रेति, यत्र चैत्रमैत्राभ्यां पाकः क्रियते तत्र तादृशपाके उभयकर्तृकत्वमस्त्येवेति चैत्रसमवेतकर्तृत्वस्य पाके विशेषणतयाऽन्वयविवक्षासंभवात् तादृशपाककर्तृत्वेन च मैत्रविवक्षा-संभवात् 'चैत्रकर्तृकपाककर्ता मैत्रः'=चैत्रकर्तृकपाकानुकूलकृतिमान्मैत्रः इत्यन्वयतात्पर्येण 'चैत्रेण पचति मैत्रः' इतिप्रयोगापत्तिः स्यादेव न चैतदिष्टमित्यर्थः ।

आशङ्कते– न चेति, तथा च 'चैत्रेण पच्यते तण्डुलः' इत्यत्र 'चैत्रवृत्तिकृतिजन्य-व्यापारजन्यविक्लित्त्याश्रयस्तण्डुलः' इतिबोधोदयात् चैत्रः कृतौ कृतिश्च व्यापारे व्यापारश्च

**क्रियायां तृतीयार्थकर्तृत्वान्वयो व्युत्पन्न इतिवाच्यम्, 'चैत्रेण पाचयति मैत्रः' इत्यादौ ण्यर्थकर्तृत्वविशेषणतापन्ने पाकादौ चैत्रादिकर्तृकत्वान्वयेन तादृशव्युत्पत्तेरसिद्धेः । न च लकारार्थकर्तृत्वविशेषणतानापन्नक्रियाविशेषणतया कर्तृत्वबोधकत्वं सुपां व्युत्पन्नमिति न कश्चिद्दोष इति वाच्यम्, उक्तस्थले 'चैत्रेण पक्वान् मैत्रः' इतिप्रयोगापत्तेः ।**

---

विक्लित्तौ विक्लित्तिश्च तण्डुले विशेषणमस्तीत्यत्र कर्तृत्वातिरिक्तभूतायां विक्लित्तौ विशेषणतापन्नायां क्रियायां तृतीयार्थकर्तृत्वस्यान्वयोस्ति किं वात्र क्रियाया विक्लित्तौ विशेषणत्वेन कर्तृत्वे विशेषणत्वं नास्तीति कर्तृत्वे विशेषणतानापन्नायामेव क्रियायां तृतीयार्थकर्तृत्वस्यान्वयोस्तीत्यत्र तृतीया उपपद्यते 'चैत्रेण पचति मैत्रः' इत्यत्र च 'चैत्रकर्तृकपाककर्ता मैत्रः' इत्यन्वयतात्पर्ये 'चैत्रकर्तृकपाकानुकूलकृतिमान् मैत्रः' इतिबोधसंभवात् क्रियायाः कर्तृत्वे विशेषणत्वं प्राप्तमिति तादृश्यां कर्तृत्वविशेषणतापन्नक्रियायां तृतीयार्थकर्तृत्वस्यान्वयो न संभवतीति न, 'चैत्रेण पचति मैत्रः' इति 'चैत्रेण पचति' इति वा प्रयोगापत्तिरित्यर्थः । उत्तरमाह— चैत्रेणेति, 'चैत्रेण पाचयति मैत्रः' इत्यत्र 'चैत्रवृत्तिकृतिजन्यो यः पाकस्तादृशपाकानुकूलकृतिमान् मैत्रः' इतिबोधोदयात् मैत्रवृत्ति यद् ण्यर्थभूतं कर्तृत्वं तत्र विशेषणतापन्नायामेव पाकक्रियायां चैत्रवृत्तितृतीयार्थभूतकर्तृत्वस्यान्वयोस्त्येवेत्युक्तव्युत्पत्तिर्न स्वीकर्तुं शक्यते तथा च 'चैत्रेण पचति मैत्रः' इतिप्रयोगापत्तिस्तदवस्थैवेत्यर्थः । ननु लकारार्थभूतं यत् कर्तृत्वं तादृशकर्तृत्वे विशेषणतानापन्ना या क्रिया तद्विशेषणतया सुपां कर्तृत्वबोधकत्वं स्वीक्रियते लकारार्थकर्तृत्वविशेषणतानापन्नक्रियायां तृतीयार्थकर्तृत्वान्वयो व्युत्पन्न इति यावत् तथा च 'चैत्रेण पाचयति मैत्रः' इत्यत्र हि ण्यर्थकर्तृत्वविशेषणतापन्नायां पाकक्रियायां चैत्रवृत्तितृतीयार्थकर्तृत्वस्यान्वयोस्ति न तु लकारार्थकर्तृत्वविशेषणतापन्नायां पाकक्रियायामित्यत्र युक्तैव तृतीया, 'चैत्रेण पचति मैत्रः' इत्यत्र तु चैत्रवृत्तिकृतिजन्यपाकानुकूलकृतिमान् मैत्रः' इति बोधोदयात् मैत्रवृत्ति यल्लकारार्थभूतं कर्तृत्वं तत्र विशेषणतापन्नायामेव पाकक्रियायां चैत्रवृत्तितृतीयार्थकर्तृत्वस्यान्वयो वक्तव्यः स तु न संभवतीति नात्र चैत्रपदात् तृतीयापत्तिः न वा 'चैत्रेण पचति मैत्रः' इतिप्रयोगापत्तिश्च, एवम् 'चैत्रेण पचति' इत्यत्रापि 'चैत्रसमवेता पाकानुकूला कृतिः' इत्येवं कृतिविशेष्यकबोधस्वीकारेपि तत्र कृतिः=कर्तृत्वं लकारार्थ एव तादृशलकारार्थकृतौ विशेषणतापन्नायामेव पाकक्रियायां चैत्रवृत्तितृतीयार्थकर्तृत्वस्यान्वयो वक्तव्यः स तु न संभवतीति न 'चैत्रेण पचति' इतिप्रयोगापत्तिरपीत्याशङ्क्याह— न चेति । उत्तरमाह— उक्तस्थले इति, एवमप्युक्तस्थले=चैत्रमैत्रोभयकर्तृकपाकस्थले 'चैत्रेण पक्वान् मैत्रः' इति प्रयोगः स्यादेव— अत्र मैत्रवृत्ति यत् कर्तृत्वं तल्लाकारार्थभूतं नास्ति कृदर्थत्वादिति लकारार्थकर्तृत्वविशेषणतानापन्नायामेव पाकक्रियायां चैत्रवृत्तितृतीयार्थकर्तृत्वस्यान्वयसंभवादित्यर्थः, न चायं प्रयोग इष्टः— उक्तस्थले 'चैत्रमैत्रौ पक्वन्तौ' इति प्रयोगस्येष्टत्वादिति भावः ।

मैवम्— आश्रयातिरिक्ताविशेषणतापन्नकर्तृत्वविशेषणतानापन्नक्रियायामेव विशेषणतया कर्तृत्वं तृतीयया बोध्यते इति नियमः 'चैत्रेण पाचयति' इत्यादौ कर्तृत्वनिर्वाहकव्यापारो णिजर्थस्तत्राश्रयातिरिक्ते व्यापारे विशेषणं कर्तृत्वमिति तद्विशेषणतापन्नक्रियायां तृतीयार्थकर्तृत्वविशेषणत्वे न किंचिद् बाधकम्। 'चैत्रेण पचति मैत्रः' इत्यादयश्च न प्रयोगाः— तत्राश्रये एव कृतेर्विशेषणतया तद्विशेषणतापन्नक्रियायां तृतीयया कर्तृत्वबोधनाऽसंभवात् । कृतिविशेष्यकबोधाभिप्रायेण 'चैत्रेण पचति' इतिवारणायाऽऽश्रयविशेषणत्वमुपेक्ष्याऽऽश्रयातिरिक्ताऽविशेषणत्वं निवेशितम् । "अनभिहिते कर्तरि तृतीया" इत्यस्यापि 'निरुक्तक्रियाविशेषणतया प्रातिपदिकार्थान्वयिकर्तृत्वविवक्षायां तदुत्तरं तृतीया भवति' इत्येवार्थ इति दिक् ।

---

अथेत्यादिना शङ्कितं परिहरन् समाधत्ते— मैवमित्यादिना, आश्रयातिरिक्ताऽविशेषणतापन्नं यत् कर्तृत्वं तादृशकर्तृत्वविशेषणतानापन्नक्रियायां तृतीयार्थकर्तृत्वस्यान्वयो भवतीति नियमः, 'चैत्रेग पाचयति मैत्रः' इत्यत्राश्रयातिरिक्ते व्यापारे विशेषणं कर्तृत्वं न त्वाश्रयातिरिक्ताऽविशेषणतापन्नमिति चैत्रवृत्तिकृतिजन्यो यः पाक इत्येवं व्यापारविशेषणतापन्नं यत्कर्तृत्वं तादृशकर्तृत्वविशेषगतापन्नपाकक्रियायां चैत्रवृत्तितृतीयार्थकर्तृत्वस्य विशेषणतयान्वयेपि नोक्तनियमव्यभिचार इत्यर्थः । 'चैत्रेण पचति मैत्रः' इतिप्रयोगापत्त्यऽसंभवमाह— चैत्रेणेति, अत्र मैत्रवृत्तिकर्तृत्वं तिबर्थाश्रये विशेषगमेव— आश्रयविशेषणतापन्नकर्तृत्वे विशेषणतापन्नक्रियायां च तृतीयार्थकर्तृत्वस्यान्वयो न व्युत्पन्न इति 'चैत्रेण पचति मैत्रः' इतिप्रयोगापत्तिर्नास्तीत्यर्थः । अत्र 'चैत्रवृत्तिकृतिजन्यव्यापारानुकूलकृतिमान् मैत्रः' इत्यन्वयबोधविवक्षया पाकस्याश्रयविशेषगतापन्नकर्तृत्वे विशेषणत्वमस्ति विशेषणतापन्नतादृशपाके एव तृतीयार्थकर्तृत्वस्यान्वयो वक्तव्यः स च न संभवति— उक्तनियमविरोधादिति भावः । कृतिविशेष्यकबोधाभिप्रायेणापि 'चैत्रेण पचति' इतिप्रयोगापत्त्यऽसंभवमाह— कृतिविशेष्यकेति, 'आश्रयविशेषणतापन्नकर्तृत्वे विशेषणतानापन्नक्रियायामेव तृतीयार्थकर्तृत्वस्यान्वयो भवति' इत्येवं नियमस्वीकारे 'चैत्रेण पचति' इत्यत्र 'कृतिमच्चैत्रवृत्तिकृतिजन्यपाकानुकूला कृतिः' इत्येवं कृतिविशेष्यकबोधस्वीकारे आश्रयविशेषणतापन्नं यत्कर्तृत्वं तादृशकर्तृत्वेऽत्र विशेषणताऽनापन्नैव पाकक्रियेति तादृशपाकक्रियायां चैत्रवृत्तितृतीयार्थकर्तृत्वस्यान्वयः कर्तव्योऽस्तीत्युक्तनियमेनात्र तृतीयापत्त्या 'चैत्रेण पचति' इति प्रयोगः स्यादेव यदा च 'आश्रयातिरिक्ताऽविशेषणतापन्नकर्तृत्वे विशेषणतानापन्नक्रियायां तृतीयार्थकर्तृत्वस्यान्वयो भवति' इत्युच्यते तदा तूक्तकृतिविशेष्यकबोधस्वीकारेपि कर्तृत्वस्याश्रयातिरिक्ते पाकव्यापारे विशेषणत्वादेवात्राऽऽश्रयातिरिक्ताऽविशेषणतापन्नत्वं नास्तीति व्यापारविशेषणतापन्नकर्तृत्वे विशेषणतानापन्नक्रियायामपि तृतीयार्थकर्तृत्वान्वयस्य नियमविरुद्धत्वात् तृतीयापत्तिस्तथा 'चैत्रेण पचति' इतिप्रयोगापत्तिश्च नास्त्ये-

कर्तृत्वं च 'चैत्रः पचति' इत्यादौ क्रियानुकूला कृतिरेव तस्याश्चाऽनुकूलकृतित्वेन कृतित्वमात्रेण वाऽऽख्यातवाच्यता । 'रथो गच्छति' 'काष्ठं पचति' इत्यादौ च क्रियानुकूलव्यापाररूपे कर्तृत्वे निरूढलक्षणा । कृतित्वजातेः प्रवृत्तिनिमित्तत्वे लाघवात् ।

मीमांसकास्तु— व्यापारत्वेनैव शक्तिः— 'पचति' इत्यादावपि तेनैव रूपेण बोधोपगमात् । एवं चाऽचेतनेपि प्रयोगो मुख्य एव । कृतित्वस्य लाघवं चाऽकिंचित्करम् । यत्र लघुगुरुरूपाभ्यां बोधो निर्विवादस्तत्रैव लघुरूपावच्छिन्ने शक्त्युपगमात्, प्रकृते च कृतित्वेन बोधस्य सविवादत्वात् । तथापि तदवच्छिन्ने

---

वेत्यर्थः । उक्तनियमानुकूल्येनोक्तसूत्रस्याप्यर्थमाह— अनभिहिते इति । निरुक्तक्रियाविशेषणतयेति— 'आश्रयातिरिक्ताविशेषणतापन्नकर्तृत्वे विशेषणतानापन्नक्रियायां विशेषणतया प्रातिपदिकार्थान्वयि ( वृत्ति ) कर्तृत्वस्य विवक्षायां चैत्रादिपदोत्तरं तृतीया भवति' इत्यन्वयः सूत्रार्थश्च ज्ञेयः । 'चैत्रेण पच्यते' इत्यत्र 'चैत्रवृत्तिकृतिजन्यः पाकव्यापारः' इतिबोधोदयात् आश्रयातिरिक्ते व्यापारादावऽविशेषणतापन्ने कर्तृत्वे विशेषणतानापन्नत्वं पाकक्रियायामस्त्येव तत्रैव च तृतीयार्थकर्तृत्वस्यान्वयः कर्तव्योस्तीति न तृतीयानुपपत्तिः ।

कर्तृत्वस्वरूपमाह— कर्तृत्वमिति, 'चैत्रः पचति' इत्यादौ क्रियानुकूला कृतिरेव कर्तृत्वं ज्ञेयं तस्याः=क्रियानुकूलकृतेश्चानुकूलकृतित्वेन केवलकृतित्वेन वा रूपेणाख्यातवाच्यता, तत्र केवलकृतित्वस्याख्यातवाच्यतेऽनुकूलतासंबन्धेन तत्र कृतौ पाकाद्यन्वयः, अनुकूलकृतित्वेनाख्यातवाच्यतापक्षे च जनकतासंबन्धेन विशेष्यतासंबन्धेन वा कृतौ पाकाद्यन्वयः, 'पाकानुकूलकृतिमांश्चैत्रः' इति बोधः । रथाद्यचेतनपदार्थेषु यत्नरूपकर्तृत्वस्यासंभवात् 'रथो गच्छति' इत्यादौ गमनाद्यनुकूलव्यापाररूपे कर्तृत्वे आख्यातस्य निरूढलक्षणा रथादौ व्यापाररूपकर्तृत्वसत्त्वे बाधकाभावात्, कृतावाख्यातस्य शक्तेर्लक्षणायाश्च स्वीकारे कृतित्वजातेरेकायाः प्रवृत्तिनिमित्तत्वसंभवाल्लाघवमस्ति, कृतिविशिष्टे शक्तिस्वीकारे नाना कृतिव्यक्तीनां प्रवृत्तिनिमित्तत्वापत्त्या गौरवं स्यादित्यन्वयः ।

मीमांसकमतमाह— मीमांसकास्त्वित्यादिना । व्यापारत्वेनेति— आख्यातस्य लकारस्य वा व्यापारत्वेन रूपेण व्यापारे शक्तिरित्यर्थः । 'पचति' इत्यादावप्याख्यातात् तेनैव=व्यापारत्वेनैव रूपेण बोधस्वीकारात् । अपि शब्दात् 'पच्यते' इत्यादौ तु व्यापारत्वेन रूपेणाख्याताद्बोधस्योभयसंमतत्वमेवेति व्यज्यते । व्यापारे शक्तिस्वीकारे विशेषान्तरमाह— एवं चेति, 'रथो गच्छति' इत्यादिप्रयोगोपि मुख्य एव— अचेतनेपि रथादौ व्यापारस्य बाधाभावादित्यर्थः । नैयायिकेन कृतौ शक्तिस्वीकारे यल्लाघवमुक्तं तत्राह— कृतित्वस्येति । ननु लघुरूपावच्छिन्ने एव शक्तिस्वीकार उचितः कृतित्वं च व्यापारत्वापेक्षया लघुरूपमित्याशङ्क्याह— यत्रेति। कम्बुग्रीवादिमत्त्वापेक्षया घटत्वं लघुरूपमिति घटत्वावच्छिन्ने शक्तिः । प्रकृते='पचति' इत्यादौ

शक्त्युपगमे तत्राऽमुख्यार्थेऽनादितात्पर्यकल्पनायां गौरवात् । एवम् 'बीजादिनाऽङ्कुरः कृतः' इत्यादौ विनापि यत्नं कृञः प्रयोगात् तस्यापि व्यापारसामान्यार्थकता, अतः करोतिविवरणीयार्थकत्वेपि नाख्यातस्य यत्नत्वावच्छिन्नवाचकता न वा 'किं करोति ?' 'पचति' इतिप्रश्नोत्तरयोः समानप्रकारकबोधजनकत्वानुरोधेन तथात्वम् ।

अत्र केचित् 'पचति' इतिवाक्यजन्यबोधे सति यत्नत्वावच्छिन्ने वर्तमानत्वसंशयानुदयात् तत्र यत्नत्वावच्छिन्ने वर्तमानत्वबोधकत्वसिद्धौ तदवच्छिन्ने शक्तिर्लाघवात् सिद्ध्यति. न हि यत्नाऽविनाभूतक्रियाविशेषलिङ्गकानुमानलभ्येन यत्नत्वावच्छिन्नेन समं वर्तमानत्वान्वयबोधकत्वमाऽऽख्यातस्यार्थाध्याहारमतेपि संभवति– लडादिजन्यवर्तमानत्वान्वयबोधे लडादितत्समभिव्याहृतधात्वन्यतर-

---

कृतित्वेन बोधस्य सविवादत्वान्न कृतित्वावच्छिन्ने शक्तिस्वीकार उचित इत्यर्थः । विपक्षे बाधमाह– तथापीति, कृतित्वेन बोधस्य सविवादत्वेपि तदवच्छिन्ने=कृतित्वावच्छिन्ने शक्तिस्वीकारे रथो गच्छति' इत्यादावऽमुख्यार्थे व्यापारे निरूढलक्षणापत्त्या गौरवमित्यर्थः । यथाऽऽख्यातस्य व्यापारवाचकता तथा कृधातोरपि व्यापारवाचकत्वमेव न तु यत्नवाचकत्वमित्याह– एवमिति । स्य=कृञः । नैयायिकैः 'पचति' इत्यस्य 'पाकं करोति' इत्येवं विवरणात् करोतेश्च यत्नवाचकत्वात् करोतिना विव्रियमाणाख्यातस्यापि यत्नवाचकत्वं प्राप्तं यत्न एव च कृतिरित्युक्तं तत् परिहरन्नाह–अत इति, करोतेरेव यत्नवाचकत्वं नास्ति येन तेन विव्रियमाणाख्यातस्य यत्नवाचकत्वं स्यात्. किं तु करोतेरप्युक्तरीत्या व्यापारवाचकत्वात् तेन विव्रियमाणाख्यातस्यापि व्यापारवाचकत्वमेव प्राप्तमित्यर्थः । एवम् 'किं करोति' इति प्रश्ने 'पचति' इत्युत्तरं दीयते प्रश्नोत्तरवाक्ययोश्च समानविषयकत्वनियमात् समानप्रकारकबोधजनकत्वमस्ति तथा च 'किं करोति' इत्यस्य कृतित्वप्रकारकबोधजनकत्वेन 'पचति' इत्यत्राख्यातस्यापि कृतित्वप्रकारकबोधजनकत्वं प्राप्तमिति कृतावेव शक्तिरिति यदुक्तं नैयायिकैस्तत्परिहरन्नाह– न वेति । 'किं करोति' इत्यस्य कृतित्वप्रकारकबोधजनकत्वमेव नास्ति किं तु व्यापारत्वप्रकारकबोधजनकत्वमेव तथा च तदुत्तरवाक्यस्य 'पचति' इत्यादेरपि व्यापारत्वप्रकारकबोधजनकत्वं न कृतित्वप्रकारकबोधजनकत्वमित्यर्थः । तथात्वम्=यत्नार्थकत्वम् ।

मीमांसकपराकर्तृमतविशेषमनुवदति–अत्रेति । सति=जाते । तत्र='पचति' इतिवाक्यजन्यबोधकाले । यत्नत्वावच्छिन्ने=यत्ने=कृतौ । ननु यत्नं विना क्रिया न संभवतीति क्रियया यत्नानुमानं भवति तथा चानुमानेनाध्याहृते एव यत्ने लडर्थवर्तमानत्वस्यान्वयो भवतीत्याशङ्क्याह– न हीति । परिहारहेतुमाह– लडादीति, आख्यातार्थवर्तमानत्वान्वयं प्रति लडादिजन्या तत्समभिव्याहृतधातुजन्या वा या विशेष्यस्य=यत्नस्योपस्थितिस्तस्याः कारणत्वमावश्यकं तथा च 'पचति' इत्यत्र लडुपस्थितवर्तमानत्वस्य लडुपस्थितयत्नेऽन्वयः 'करोति'

जन्यविशेष्योपस्थितेः कारणताया आवश्यकत्वात्, अन्यथा निराकाङ्क्षयत्नादिपदमात्राद् यत्नाद्युपस्थितावपि तत्र वर्तमानत्वादेर्लडादितो बोधप्रसङ्गात् ।

न चार्थाध्याहारवादिनाम् ‘ द्वारं पिधानं कृतिः ’ इत्यादितो द्वारकर्मककृतेरिव ‘ पचति यत्नः ’ इत्यादितः ‘ पाकयत्नो वर्तमानः ’ इत्याद्याकारको वर्तमानत्वादेर्बोध इष्ट एवेति वाच्यम्, परस्परसाकाङ्क्षपदार्थद्वयान्वयबोध एवाऽध्याहृतस्येव निराकाङ्क्षपदादुपस्थितस्याऽर्थस्य विषयतायास्तैरुपगमात्, तत्रान्वयानुभावकसाकाङ्क्षपदसत्त्वात्, प्रकृते चान्वयबोधस्याऽऽकाङ्क्षानुपयोगिपदार्थद्वयविषयकत्वेन तेषामप्यऽसंमतत्वात् । तत्स्वीकारे निराकाङ्क्षस्याप्यनुभावकत्वस्वीकारापत्तेः, शाब्दबोधे आकाङ्क्षानुपयोगप्रसङ्गाच्चेति । तन्न-तत्र तात्पर्यलिङ्गेन यत्नत्वावच्छिन्ने वर्तमानत्वानुमितेरेवोपगमात्. तादृशवर्तमानत्वप्रतीतौ शाब्दत्वप्रतीतेः सविवादत्वादित्याहुः ।

---

इत्यत्र च लडुपस्थितवर्तमानत्वस्य धातूपस्थितयत्नेऽन्वयः संभवति न त्वऽध्याहृतयत्नेपि- “ शाब्दी ह्याकाङ्क्षा शब्देनैव प्रपूर्यते ” इतिनियमादित्यर्थः । विपक्षे बाधकमाह- अन्यथेति ।

नन्वर्थाध्याहारवादिनाम् ‘ पचति यत्नः ’ इत्यादौ निराकाङ्क्षयत्नादिपदोपस्थितयत्नादावप्याख्यातार्थवर्तमानत्वस्य ‘ पाकयत्नो वर्तमानः ’ इत्येवमन्वय इष्ट एवेत्याशङ्क्याह- न चेति । परिहारहेतुमाह- परस्परेति, अध्याहृतार्थस्य परस्परसाकाङ्क्षपदार्थद्वयान्वयबोधे एव यथा शाब्दबोधविषयता तैः=मीमांसकैः स्वीक्रियते तथा तैर्निराकाङ्क्षपदादुपस्थितस्यार्थस्यापि या विषयता स्वीक्रियते सा परस्परसाकाङ्क्षपदार्थद्वयान्वयबोधे एव स्वीक्रियते यथा ‘ द्वारम् ’ इत्युक्तेऽध्याहृतपिधानपदार्थस्य. न तु परस्परनिराकाङ्क्षपदार्थान्वयबोधेपि तथा च ‘ पचति ’ इत्यादावुक्तरीत्याऽध्याहृतयत्ने नाख्यातार्थवर्तमानत्वान्वयः संभवतीत्यर्थः । तत्रेति- तत्र=‘ द्वारं पिधानं कृतिः ’ इत्यत्राऽन्वयानुभावकसाकाङ्क्षपदस्य=शाब्दबोधजनकसाकाङ्क्षपदस्य सत्त्वात् द्वारकर्मककृतेर्बोध इष्टः प्रकृते=‘ पचति यत्नः ’ इत्यत्र चान्वयबोध आकाङ्क्षानुपयोगिभूतं यत् ‘पचति यत्नः’ इतिपदद्वयं तदर्थविषयक एव वक्तव्यो न चाकाङ्क्षानुपयुक्तपदजन्यस्तदर्थविषयकः शाब्दबोधस्तेषाम्=मीमांसकानामपि संमत इति ‘ पचति यत्नः ’ इत्यत्र जायमानान्वयबोधस्याकाङ्क्षानुपयोगिपदार्थद्वयविषयकत्वेन ( हेतुना ) असंमतत्वादित्यर्थः । विपक्षे बाधकमाह- तत्स्वीकारे इति, तत्स्वीकारे=आकाङ्क्षानुपयोगिपदार्थद्वयविषयकशाब्दबोधस्वीकारे साकाङ्क्षस्यैव शाब्दबोधजनकत्वं भवतीति नियमभङ्गापत्त्या निराकाङ्क्षपदस्याप्यनुभावकत्वं शाब्दबोधजनकत्वमापद्येत तेन च शाब्दबोधे आकाङ्क्षाया अनुपयोगः प्रसज्येत न चैतदिष्टं तस्मात् ‘ पचति ’ इत्यत्राध्याहृतयत्ने आख्यातार्थवर्तमानत्वान्वयासंभवादाख्यातस्य यत्नवाचकत्वमावश्यकमित्यर्थः । अथेत्यादिना शङ्कितं परिहरति- तन्नेति । यत्नकार्यभूतव्यापारस्य वर्तमानत्वेन तत्कारणीभूतयत्नस्यापि वर्तमानत्वमनुमीयते एव न तु शब्दाद्विज्ञायते इत्येव

अत्र नैयायिकाः– 'रथो गच्छति' इत्यादावाऽऽश्रयत्वमेवाख्यातार्थो न तु व्यापारः– अन्यदीयगमनानुकूलनोदनादिलक्षणव्यापारवति 'गच्छति' इत्यप्रयोगात् । एवं च 'काष्ठं पचति' इत्यादिप्रयोग एव व्यापारशक्तिमाख्यातस्य साधयेद् यदि स्वारसिकः स्यात् तदेव न, न हि 'चैत्रः पचति' इत्यादिप्रयोगेण 'काष्ठं पचति' इत्यादिप्रयोगस्याविशेषः । एवमचेतने स्वरसतः कर्तृपदाप्रयोगात् कृत्नोपि यत्नत्वविशिष्टोर्थः । एवम् 'चैत्र एव पचति पाककर्ता न त्वचेतनं काष्ठादि' इत्यादिप्रयोगात् लकारस्य कृत्नश्च यत्नत्वविशिष्टार्थकताया आवश्यकत्वाल्लाघवात् तत्रैव शक्तिः. व्यापारे लक्षणेति ।

न च यत्नत्वस्याख्यातावाच्यनिवृत्तिजीवनयोनियत्नसाधारणतया लकारशक्यतावच्छेदकत्वाऽसंभव इति वाच्यम्, निवृत्त्यादियत्नस्याख्यातवाच्यतो-

---

स्वीक्रियते तादृश=उक्तवर्तमानत्वप्रतीतिः शब्दादेव जायते इत्यस्य विवादग्रस्तत्वेन स्वीकर्तुमशक्यत्वात्. तथा च नाख्यातस्य कृत्नो वा यत्नवाचकत्वापत्तिः किं तु व्यापारसामान्यवाचकत्वमेव सिद्धमित्यर्थः । "शाब्दत्वप्रतीतेः" इत्यत्र "शाब्दप्रतीतित्वस्य" इत्येवं पाठो युक्तः ।

नैयायिकमतमाह– अत्रेत्यादिना । 'रथो गच्छति' इत्यत्र व्यापारस्तु धात्वर्थ एवाश्रयत्वं चाख्यातार्थ इति 'गमनरूपव्यापाराश्रयो रथः' इति बोधो जायते । व्यापारस्याख्यातार्थत्वाभावे हेतुमाह– अन्येति, यदि व्यापार आख्यातार्थः स्यात् तदा 'गच्छति' इत्यनेन 'गमनानुकूलव्यापारवान्' इतिबोधोदयाद् अन्यदीयगमनानुकूलस्य नोदनस्यापि व्यापारत्वात् तद्वत्यपि 'गच्छति' इतिप्रयोगः स्याद् न चैतदिष्टम्, आश्रयत्वस्याख्यातार्थत्वे तु गमनाश्रयत्ववत्येव 'गच्छति' इतिप्रयोगः संभवति स चेष्ट एव न तूक्तनोदनादिव्यापारवत्यपीत्यर्थः । मीमांसकमतमाक्षिपति– एवं चेति । व्यापारशक्तिम्=व्यापारे शक्तिमित्यर्थः । स्वारसिकः=मुख्यः । उक्तस्वारसिकत्वाभावमेवाह– न हीति । अविशेष इति– 'चैत्रः पचति' इति मुख्यः प्रयोगः–चैत्रे तिबर्थकृतेः सत्त्वात् 'काष्ठं पचति' इति च गौणः प्रयोगः– काष्ठे कृतेरसंभवेनात्र तिपो व्यापारे लक्षणास्वीकारादित्यर्थः । उक्तमन्यत्रातिदिशति– एवमिति, अचेतने=बीजादौ 'बीजेनाङ्कुरः कृतः' इत्येवम् । स्वरसतः=मुख्यार्थतात्पर्येण । यत्नत्वविशिष्टः=यत्नः । उपसंहरति– एवमिति । 'पचति' इत्यनेन लकारस्य 'पाककर्ता' इत्यनेन च कृत्नो यत्नार्थकत्वं सिद्धम् । तत्र=यत्ने ( कृतौ ) ।

ननु यत्नो हि त्रिविधस्तदुक्तम्–

" प्रवृत्तिश्च निवृत्तिश्च तथा जीवनकारणम् ।
एवं प्रयत्नत्रैविध्यं तान्त्रिकैः परिदर्शितम् ॥ " इति ।

तथा च यत्नत्वमाख्याताऽवाच्यनिवृत्तिजीवनकारणयत्नयोरपि सत्त्वादतिप्रसक्तमेव. अतिप्रसक्तधर्मस्य चावच्छेदकत्वं न भवतीति कथं यत्नत्वस्य लकारशक्यतावच्छेदकत्वं स्यादित्याशङ्-

पगमे क्षतिविरहात्, निवृत्त्यादेः पाकानुकूलताविरहेण तत्काले 'पचति' इति प्रयोगापत्तिविरहात् । इष्टसाधनताज्ञानजन्यतावच्छेदकप्रवृत्तित्वजातेरेव वाख्यातपदप्रवृत्तिनिमित्तत्वमुपगम्यते, अत एवेश्वरकृतेर्जन्यमात्रजनकत्वेपि, 'ईश्वरः पचति' 'ईश्वरो भुङ्क्ते' इत्यादयो न प्रयोगाः ।

न चैवम् 'ईश्वरो वेदं वक्ति' 'मथुरायां कृष्णो विहरति' इत्यादिप्रयोगानुपपत्तिः, अत्राख्यातस्य लक्ष्यार्थव्यापारबोधकतोपगमात् । ईश्वरकृतिसाधारणधर्मस्याऽऽख्यातप्रवृत्तिनिमित्तत्वेपि तत्र व्यापारलक्षणाया आवश्यकत्वात्, तथा हि- 'आत्मा पचति' 'शरीरं पचति' इत्यादिस्वारसिकप्रयोगविरहादाऽऽख्यातार्थकृतेरुद्देश्यतावच्छेदकशरीरविशेषावच्छेदेन समवायेनाऽन्वयनियमः स्वीकरणीयः- चैत्रादिपदस्य शरीरविशेषविशिष्टात्मपरतया 'चैत्रः पचति' इत्यादौ शरीरविशेषात्मकोद्देश्यतावच्छेदकावच्छेदेनात्मनि समवायेनान्वयसं-

---

क्याह- न चेति । उत्तरमाह- निवृत्त्यादीति । 'न पचति' इत्यादौ निवृत्त्यनुकूलः 'जीवति' इत्यादौ जीवनानुकूलोपि यत्नः प्रतीयते एवाख्यातेनेत्यर्थः । ननु यदि निवृत्त्यनुकूलोपि यत्न आख्यातार्थस्तदा पाकनिवृत्तिकाले 'पचति' इति प्रयोगः कथं न स्यादित्याशङ्क्याह- निवृत्त्यादेरिति । तत्काले=पाकनिवृत्तिकाले । पक्षान्तरमाह- इष्टेति, इष्टसाधनताज्ञानेन प्रवृत्तिर्भवतीति प्रवृत्तेरिष्टसाधनताज्ञानजन्यत्वादिष्टसाधनताज्ञानजन्यतावच्छेदकं जातिरूपं प्रवृत्तित्वमेव तदेवाख्यातपदप्रवृत्तिनिमित्तम्, प्रवृत्तावाख्यातस्य शक्तिरित्यर्थः । अत एव=इष्टसाधनताज्ञानजन्यतावच्छेदकप्रवृत्तित्वस्यैवाख्यातपदप्रवृत्तिनिमित्तत्वादेव. यद्यपीश्वरकृतेः कार्यमात्रं प्रति कारणत्वं तथापि 'ईश्वरः पचति' इत्यादयो न प्रयोगाः- ईश्वरकृतेर्नित्यत्वेनेष्टसाधनताज्ञानजन्यत्वाभावाद् आख्यातार्थत्वाऽसंभवात्, इष्टसाधनताज्ञानजन्याया एव प्रवृत्तिरूपकृतेराख्यातार्थत्वस्वीकारादित्यर्थः ।

नन्वेवम् 'ईश्वरो वेदं वक्ति' इत्यादिप्रयोगोपि न स्यात्तत्रापीश्वरकृतेर्नित्यत्वेनेष्टसाधनताज्ञानजन्यत्वाभावेनाख्यातार्थत्वासंभवादित्याशङ्क्याह- न चेति । उत्तरमाह- अत्रेति, ईश्वरव्यापारस्येष्टसाधनताज्ञानजन्यत्वादत्र चाख्यातस्य लक्षणया व्यापारमात्रबोधकत्वान्न प्रयोगानुपपत्तिरित्यर्थः । ननु 'ईश्वरो वेदं वक्ति' इत्यादावाख्यातस्य व्यापारे लक्षणास्वीकारापेक्षया परमेश्वरकृतिसाधारणस्य यत्नत्वधर्मस्यैवाख्यातपदप्रवृत्तिनिमित्तत्वमुपगम्यतां तथा चोक्तस्थले आख्यातेन तादृशयत्नत्वाद्यवच्छिन्नस्य प्रतीतिसंभवाल्लक्षणापत्तिर्व्यापारे न स्यादित्याशङ्क्याह- ईश्वरेति । तत्र='ईश्वरो वेदं वक्ति' इत्यादौ । उक्तस्थले व्यापारे लक्षणावश्यकत्वमुपपादयति- तथा हीत्यादिना । 'आत्मा पचति', इत्यादिर्मुख्यार्थतात्पर्येण प्रयोगो न भवतीत्याख्यातार्थकृतेरुद्देश्यतावच्छेदकीभूतशरीरविशेषावच्छेदेनात्मनि समवायसंबन्धेनान्वयो भवतीति स्वीकार्यम्, 'चैत्रः पचति' इत्यादौ चैत्रमुद्दिश्य पाकानुकूलकृतेर्विधानाच्छरीरविशेषावच्छिन्न एव चैत्रात्मोद्देश्य उद्देश्यतावच्छेदकं च शरीरमेवेत्यर्थः । उक्तस्वीकारे हेतुमाह- चैत्रादिपदस्येति,

भवात् । 'गौरः पचति' इत्यादावपि गौरादिपदस्य गौरशरीराद्यवच्छिन्नात्मनि आख्यातस्यैव वा व्यापारे लक्षणोपगमात् । एवं चेश्वरकृतेः शरीरानवच्छिन्नत्वादुक्तस्थले कृतेस्तथान्वयासंभव इति व्यापारलक्षणाऽऽवश्यकी ।

ईश्वरकृतिसाधारणयत्नत्वावच्छिन्न एव वाख्यातार्थः, असाधारणानुकूलत्वं हि यत्ने क्रियायाः संबन्धतया भासते न त्वऽनुकूलतामात्रम्— असाधारणानुकूलताया एवाकाङ्क्षानिरूपकत्वोपगमात् । अतोऽस्मदादिकर्तृकपाकादिक्रियानुकूलकृतिमादाय न 'ईश्वरः पचति' इतिप्रयोगः । वेदवचनादौ चेश्वरकृतेरेवाऽसाधारणकारणत्वात् 'ईश्वरो वेदं वक्ति' इत्यादयः प्रयोगा इत्यपि केचित् ।

---

शरीरविशेषात्मकः=शरीरविशेषरूपो य उद्देश्यतावच्छेदकस्तदवच्छेदेनात्मनि समवायेन कृतेरन्वयसंभवादित्यन्वयः । अत्र 'कृतेः' इति शेषः । 'गौरः पचति' इत्यादौ गौरादिपदस्य गौरशरीरावच्छिन्नात्मनि लक्षणा तत्र च कृतेरन्वयः संभवत्येव. किं वात्राख्यातस्यैव व्यापारे लक्षणा व्यापारस्तु जडे शरीरेपि संभवत्येवेत्याह— गौर इति । चैत्रादिपदं तु शरीरावच्छिन्नात्मवाचकमेवेति न चैत्रादिपदस्य शरीरावच्छिन्नात्मनि लक्षणापत्तिराख्यातस्य वा व्यापारे लक्षणापत्तिः, गौरादिपदं तु गौरत्वादिगुणपुरस्कारेण प्रवृत्तं गौरत्वादिधर्मवतः शरीरस्यैव वाचकमिति गौरशरीरावच्छिन्नात्मनि लाक्षणिकमेवेति विवेकः । उपसंहरति— एवं चेति, उक्तप्रकारेण शरीरावच्छिन्नकृतेरेवाख्यातार्थत्वाद् ईश्वरकृतेश्च शरीरानवच्छिन्नत्वेनाख्यातार्थत्वाभावादुक्तस्थले=' ईश्वरो वेदं वक्ति ' इत्यादावीश्वरकृतेः शरीरावच्छेदेनेश्वरेऽन्वयाऽसंभवादाख्यातस्य व्यापारे लक्षणाऽवश्यं स्वीकार्येत्यर्थः । किं वेश्वरस्य शरीरावच्छिन्नत्वाभावादऽत्राख्यातस्य व्यापारे लक्षणैवेत्यर्थः ।

पक्षान्तरमाह— ईश्वरकृतीति । असाधारणानुकूलत्वम्=असाधारणकारणत्वम् । 'चैत्रः पचति' इत्यादौ यत्ने क्रियाया असाधारणानुकूलत्वसंबन्धेनान्वयः स्वीकार्यः चैत्रकर्तृकपाकं प्रत्यसाधारणानुकूलत्वं हि चैत्रवृत्तियत्नस्यैव भवति नेश्वरवृत्तियत्नस्यापि तस्य कार्यमात्रसाधारणत्वादिति देवदत्ते पचति सति 'ईश्वरः पचति' इतिप्रयोगापत्तिर्नास्तीत्यर्थः । यदि क्रियाया यत्नेऽनुकूलतामात्रसंबन्धेनान्वयः स्वीकृतः स्यात्तदेश्वरयत्नस्यापि देवदत्तकर्तृकपाकं प्रत्यनुकूलत्वात् ( कारणत्वात् ) तादृशपाकस्यानुकूलतासंबन्धेनेश्वरयत्नेऽप्यन्वयसंभवाद् देवदत्ते पचति सति 'ईश्वरः पचति' इतिप्रयोगापत्तिः स्यादपि न चाऽनुकूलतामात्रं संबन्ध इत्याह— न त्विति । असाधारणानुकूलतायाः संबन्धत्वे हेतुमाह— असाधारणेति, आकाङ्क्षानिरूपकस्यैव संबन्धत्वसंभवादसाधारणानुकूलताया एवाकाङ्क्षानिरूपकत्वात्संबन्धत्वमित्यर्थः । फलमाह— अत इति, ईश्वरकृतावस्मदादिकर्तृकपाकक्रियानुकूलत्वे सत्यप्यऽसाधारणानुकूलत्वाभावान्न तादृशेश्वरकृतिमादाय 'ईश्वरः पचति' इति प्रयोगो भवति— ईश्वरकृतेः सर्वकार्यसाधारणानुकूलत्वात्, असाधारणानुकूलकृतिमादायैव च 'पचति' इत्यादिप्रयोगस्येष्टत्वादित्यर्थः । 'ईश्वरो वेदं

अथ कृतेराख्यातस्य कृञश्च वाच्यत्वे 'करोति' इत्यादौ कृतेर्द्विधा भानं स्यात्— धातुप्रत्यययोर्द्वयोः कृतिबोधकत्वादितिचेत् ?, न— 'एकः' 'द्वौ' इत्यादावेकत्वद्वित्वादिबोधकप्रकृतिप्रत्ययोभयसत्त्वेप्येकधैवैकत्वादिधीवत् प्रकृतेपि बाधकाभावात्, तत्र विभक्तेः साधुत्वार्थकत्वे प्रकृतेपि तथात्वात् ।

अथ तर्हि 'करोति चैत्रः' इत्यादौ प्रातिपदिकार्थे साक्षादेव कृत्यन्वयः स्यात्. स च 'नामार्थधात्वर्थयोर्भेदेन साक्षादन्वयस्याऽव्युत्पन्नत्वात्' न संभवति, नामार्थधात्वर्थयोः साक्षादन्वयोपगमे कर्मतादिबोधकविभक्तेरसत्त्वेपि 'तण्डुलः पचति' इत्यादौ कर्मतादिसंबन्धेन तण्डुलादेः पाकादावन्वयसंभवेन तादृशवाक्यात् तण्डुलकर्मकपाकादिबोधापत्तेः । न च प्रातिपदिकार्थप्रकारकक्रियान्वयबोध एवाऽव्युत्पन्नो न तु क्रियाप्रकारकप्रातिपदिकार्थविशेष्यकबोधोपीति वाच्यम्, 'घटः करोति' इत्यादितः कर्मतादिसंबन्धेन कृत्यादेर्घटादावन्वयाभावात्,

---

वक्ति' इत्यादिप्रयोगस्तूपपद्यते— वेदवचनादावीश्वरकृतेरेवाऽसाधारणानुकूलत्वादित्याह— वेदवचनादाविति ।

शङ्कते— अथेति । कृतेरिति— आख्यातकृञोः कृतिवाचकत्वे इत्यर्थः । परिहरति— नेति, यथा 'एकः' इत्यत्र प्रकृतिप्रत्यययोरुभयोरप्येकत्वबोधकत्वेप्येकत्वस्यैकधैव भानं यथा च 'द्वौ' इत्यत्र प्रकृतिप्रत्यययोरुभयोरपि द्वित्वबोधकत्वेपि द्वित्वस्यैकधैव भानं तथा 'करोति' इत्यत्र प्रकृतिप्रत्यययोरुभयोरपि कृतिबोधकत्वेप्येकधैव कृतिभानं भवति बाधकाभावादित्यर्थः । तत्र= 'एकः' 'द्वौ' इत्यादौ यदि विभक्तेः साधुत्वार्थकत्वमेव न त्वेकत्वादिबोधकत्वं तदा प्रकृते= 'करोति' इत्यत्राख्यातस्यापि साधुत्वार्थकत्वमेव न कृत्यर्थकत्वमित्याह— तत्रेति ।

ननु यदि 'करोति चैत्रः' इत्यादावाख्यातस्य साधुत्वार्थकत्वं तदाऽऽख्यातोपस्थितार्थाभावेन तत्र कृधात्वर्थकृतेरन्वयासंभवादाश्रयतासंबन्धेन साक्षाच्चैत्रे नामार्थे एवान्वयो वक्तव्यः स तु न संभवतीत्याशङ्कते— अथेति । नामार्थधात्वर्थयोः साक्षादन्वयोपगमे बाधकमाह— नामार्थेति । कर्मतादिसंबन्धेनेत्यस्य स्वकर्मकत्वसंबन्धेनेत्यर्थः । किं वा तण्डुलवृत्तिकर्मतापि निरूपकत्वसंबन्धेन पाकादावस्त्येव तेन संबन्धेन पाके साक्षादेव तण्डुलान्वयः स्याद्. न चैतदिष्टमित्यर्थः । नामार्थधात्वर्थयोर्भेदेन साक्षादन्वयस्याव्युत्पन्नत्वे तु 'तण्डुलं पचति' इत्यादौ तण्डुलस्य कर्मतायां कर्मतायाश्च पाकेन्वयः स्वीक्रियते इत्यादिकं पूर्वप्रतिपादितमेव स्मर्तव्यम् । ननु प्रातिपदिकार्थस्य प्रकारतया साक्षात् क्रियायामन्वयो न भवति क्रियायास्तु प्रकारतया प्रातिपदिकार्थे साक्षादप्यन्वयो भवत्येव तथा च 'तण्डुलः पचति' इत्यत्र तण्डुलस्य साक्षात्पाकेऽन्वयाऽसंभवेपि 'करोति चैत्रः' इत्यत्र धात्वर्थकृतेः साक्षादपि चैत्रेऽन्वयः संभवत्येव बाधकाभावादित्याशङ्क्याह— न चेति । उत्तरमाह— घट इति, यदि क्रियायाः प्रातिपदिकार्थे साक्षादपि भेदान्वयः स्यात्तदा 'घटः करोति' इत्यत्र धात्वर्थकृतेः कर्मतासंबन्धेन घटेऽन्वया-

क्रियाप्रकारकनामार्थविषयकबोधस्याऽव्युत्पन्नत्वादितिचेत् ?, न– उक्तातिप्रसङ्गवारणाय धातोः कर्मतादिसंबन्धेन क्रियान्वयाऽबोधकत्वव्युत्पत्तेरुपगमाद् न त्वाश्रयतासंबन्धेन कृत्यादिरूपक्रियान्वयाऽबोधकत्वव्युत्पत्तेरित्यदोषात् ।

न च तादृशातिप्रसङ्गवारणाय धातुजन्यकृत्यादिप्रकारकान्वयबोधे प्रत्ययजन्यविशेष्योपस्थितेर्हेतुता वाच्या तादृशकारणाभावात् प्रातिपदिकार्थविशेष्यकबोधोपि न संभवतीति वाच्यम्, कर्मत्वादिसंबन्धेन कृत्यादिप्रकारकबोधस्याऽप्रसिद्ध्या सामग्र्यऽकल्पनेनाऽऽपादकाभावात् तादृशकारणताया अकल्पनात् ।

न च 'क्रियते चैत्रः' इत्यादौ कृत्यादिप्रकारकान्वयबोधवारणायैवोक्तकारणताकल्पनमावश्यकमिति वाच्यम्, सति तात्पर्ये इष्टत्वात् । कर्तृविशेष्य-

---

पत्त्यात्र घटकर्मककृतेर्बोधः आपद्येत न चैत्रमस्ति तस्मात् क्रियाया अपि प्रातिपदिकार्थे साक्षाद् भेदान्वयो नैव भवति तथा च 'करोति चैत्रः' इत्यत्रापि कृतेश्चैत्रे साक्षादन्वयवारणायाख्यातस्य सार्थकत्वं स्वीकर्तव्यं येनाख्यातार्थे एव कृतेः साक्षादन्वयः स्यादित्यर्थः । परिहरति– नेति । उक्तातिप्रसङ्गवारणाय='घटः करोति' इत्यादौ धात्वर्थकृतेः कर्मतासंबन्धेन घटेऽन्वयापत्तिवारणाय धातुः कर्मतादिसंबन्धेन प्रातिपदिकार्थे स्वार्थक्रियान्वयं न बोधयति. आश्रयतासंबन्धेन तु बोधयति इति व्युत्पत्तिः स्वीक्रियते तथा च 'घटः करोति' इत्यत्र धात्वर्थक्रियायाः कर्मतासंबन्धेन घटेऽन्वयापत्तिर्नास्ति, 'करोति चैत्रः' इत्यत्र त्वाश्रयतासंबन्धेनैव धात्वर्थकृतेश्चैत्रेन्वय इष्टस्तत्र च बाधकाभावात् नानुपपत्तिरित्यर्थः । न त्विति– 'आश्रयतासंबन्धेन कृत्यादिरूपक्रियान्वयाऽबोधकत्वव्युत्पत्तेस्त्वनुपगमात्' इत्यन्वयः ।

ननु धात्वर्थकृत्यादिप्रकारकान्वयबोधं प्रति प्रत्ययजन्याया विशेष्योपस्थितेः कारणत्वं वक्ष्यामस्तथा च 'घटः करोति' इत्यत्र घटस्य प्रत्ययेनोपस्थितेरभावान्न घटे कृत्यन्वयापत्तिः 'घटं करोति चैत्रः' इत्यत्र च द्वितीयोपस्थितकर्मतायां कृत्यन्वयः स्यादेवेत्याशङ्क्याह– न चेति । प्रातिपदिकार्थेति– धात्वर्थप्रकारकप्रातिपदिकार्थविशेष्यकेत्यर्थः । उत्तरमाह– कर्मत्वादीति, यदि कृतेः कर्मतासंबन्धेन साक्षात् प्रातिपदिकार्थेऽन्वयबोधः प्रसिद्धः स्यात्तदा तदापादकसामग्र्या तदापत्तौ प्राप्तायां त्वदुक्तरीत्या कार्यकारणभावकल्पनेन तन्निरोधः क्रियेतापि न च कर्मत्वादिसंबन्धेन कृत्यादिप्रकारकबोधः प्रसिद्ध इत्यर्थः । सामग्रीति– प्रसिद्धस्यैव सामग्री प्रकल्प्यते न त्वप्रसिद्धस्येत्यर्थः । तादृशकारणतायाः=धातुजन्येत्यादिनियमस्य ।

ननु कृत्यादिप्रकारकान्वयबोधं प्रति प्रत्ययजन्यविशेष्योपस्थितेः कारणत्वकल्पने तु 'क्रियते चैत्रः' इत्यत्र चैत्रस्य प्रत्ययजन्योपस्थितेरभावात् कृतिप्रकारकचैत्रविशेष्यकबोधस्यापत्तिर्नास्ति. उक्तकारणाऽकल्पने च स्यादेवेत्युक्तकारणकल्पनावश्यकतेत्याशङ्क्याह– न चेति । अभ्युपगम्याह– सतीति, 'क्रियते चैत्रः' इत्यत्रापि कृतिप्रकारकचैत्रविशेष्यकबोधतात्पर्ये सति तादृशबोध इष्ट एवेत्यर्थः । नन्वेवम् 'क्रियते चैत्रः' इतिप्रयोगः कथं न क्रियते ? इत्याशङ्क्या-

कान्वयबोधपरधातूत्तरयकोऽसाधुत्वादेव प्रामाणिकानां न तथाप्रयोगः । 'करणं चैत्रः' इत्यादौ चैत्रादौ धात्वर्थकृतेराश्रयतासंबन्धेनाऽन्वयबोधवारणाय तादृश-कार्यकारणभावकल्पनमित्यपि न- तादृशाऽन्वयबोधे आख्यातान्तधातुनामस-मभिव्याहारज्ञानहेतुतयैवोक्तस्थले तादृशबोधवारणसंभवात् ।

दीधितिकृतस्तु- 'गच्छति' 'जानाति' 'करोति' इत्यादावाख्यातस्या-श्रयत्वे निरूढलक्षणायाः स्वीकारान्न नामार्थे क्रियायाः साक्षादन्वय इत्याहुः । तन्मते यद्यप्याश्रयत्वसंबन्धस्याधिकस्य 'जानाति चैत्रः' इत्यादिवाक्यजन्य-बोधविषयताकल्पनेन गौरवं तथापि यत्र ज्ञाधातोर्ज्ञानाद्याश्रयत्वे लक्षणाग्रहः शक्ति-भ्रमो वा तत्र चैत्रादिविशेष्यको ज्ञानाद्याश्रयत्वप्रकारको बोध आश्रयतायाः संस-र्गतावादिनामप्यनुमतः । चैत्रादिविशेष्यकाश्रयतासंसर्गकज्ञानादिप्रकारकशाब्द-

---

ह- कर्तृविशेष्यकेति, कर्तृविशेष्यकबोधविवक्षायां शप् भवति न तु यगिति हेतोः प्रामाणिका-स्तथा='क्रियते चैत्रः' इति प्रयोगं न कुर्वन्तीत्यर्थः । चैत्रस्य कर्मत्वविवक्षायां तु 'क्रियते चैत्रः' इति प्रयोगः साधुरेव । पुनराशङ्कते- करणमिति, कृतिप्रकारकान्वयबोधं प्रति प्रत्ययजन्य-विशेष्योपस्थितेः कारणत्वे तु 'करणं चैत्रः' इत्यत्र चैत्रस्य प्रत्ययेनोपस्थितेरभावान्नाश्रयता-संबन्धेन कृतेश्चैत्रेऽन्वयापत्तिरित्यर्थः । परिहरति-नेति । तादृशाऽन्वयबोधे=कृतिप्रकारकप्राति-पदिकार्थविशेष्यकशाब्दबोधं प्रत्याख्यातान्तधातुनाम्नोः समभिव्याहारज्ञानस्य हेतुतास्ति. उक्त-स्थले='करणं चैत्रः' इत्यत्र चाख्यातान्तधातुसमभिव्याहारस्याभावात् तादृशबोधस्य=कृति-प्रकारकचैत्रविशेष्यकबोधस्य वारणं संभवतीति न त्वदुक्तप्रत्ययजन्यविशेष्योपस्थितेः कारणत्व-कल्पनावश्यकतेत्यर्थः ।

दीधितिकारमतमाह- दीधितीति । गच्छति='रथो गच्छति' इत्यत्र गमनस्याश्रयत्वे आश्रयत्वस्य च स्वरूपसंबन्धेन रथेऽन्वयः । एवम् 'जानाति' इत्यत्राश्रयत्वे ज्ञानस्य, 'करोति' इत्यत्राश्रयत्वे कृतेरन्वयस्तादृशाश्रयत्वस्य च चैत्रादान्वय इत्यर्थः । नेति-धात्वर्थक्रियाया आ-ख्यातार्थाश्रयत्वे एव साक्षादन्वयो न तु चैत्रादिनामार्थे इत्यर्थः । दीधितिकारमतमालोचयति-तन्मते इत्यादिना, 'जानाति चैत्रः' इत्यत्राश्रयत्वस्याख्यातार्थत्वे आख्यातार्थत्वेन प्रकारी-भूततादृशाश्रयत्वस्य चैत्रे स्वरूपसंबन्धेनान्वयः स्यादिति तस्याश्रयत्वसंबन्धस्यापि शाब्दबोध-विषयत्वापत्त्या गौरवम्, एतद्गौरवमाश्रयत्वस्य संसर्गतावादे यद्यपि नास्ति तथापि ज्ञाधातोर्ज्ञा-नाश्रयत्वे लक्षणाग्रहे शक्तिभ्रमे वा चैत्रविशेष्यकज्ञानाश्रयत्वप्रकारकबोधस्याऽऽश्रयत्वसंसर्गतावादि-नापि स्वीकार्यत्वादाश्रयत्वसंबन्धस्याधिकस्य शाब्दबोधविषयत्वापत्तिरस्त्येवेति न दीधितिकृ-न्मते प्राप्तं गौरवमाश्रयत्वे आख्यातलक्षणास्वीकारे बाधकं संभवतीत्यर्थः । ज्ञानस्याश्रयतासंब-न्धेन चैत्रादावन्वयस्तु दीधितिकारमते कचिदपि प्रसिद्धो नास्ति- आश्रयत्वस्याख्यातार्थत्वेन प्रकारत्वस्वीकारात्. तथा च तथाविधशाब्दबोधाङ्गीकर्तुः=चैत्रादिविशेष्यकाश्रयत्वसंसर्गकज्ञा-

बोधस्तु दीधितिकारमते क्वचिदपि न प्रसिध्यतीति तादृशशाब्दबोधे योग्यताज्ञानादेर्हेतुताकल्पनं तथाविधशाब्दबोधाङ्गीकर्तुर्मणिकारस्य मते आवश्यकमिति गौरवम् ।

वस्तुतस्तु– 'चैत्रेण ज्ञायते घटः' इत्यादौ कर्मप्रत्ययस्थले यावतां पदार्थानां प्रकारता तावताम् 'चैत्रो जानाति घटम्' इत्यादिकर्तृप्रत्ययस्थले तथात्वं परं तु विशेष्यविशेषणभाववैपरीत्यम्, एवं कर्मप्रत्ययस्थले यस्य ससंबन्धिकपदार्थस्य यदंशे विशेष्यता कर्तृप्रत्ययस्थले तन्निरूपकतायास्तदंशे प्रकारतेत्यनुभवस्य दुरपह्नवत्वाभिप्रायेणाऽऽश्रयत्वस्याख्यातार्थतां दीधितिकार उररीचकार । 'चैत्रेण ज्ञायते' इत्यत्राधेयत्वरूपतृतीयार्थस्य चैत्रविशेष्यत्वात् 'चैत्रो जानाति' इत्यत्राधेयतानिरूपकत्वरूपाधारतायाश्चैत्रांशेऽप्रकारत्वे तादृशानुभवविरोधात् ।

---

नादिप्रकारकशाब्दबोधाङ्गीकर्तुर्मणिकारस्य मते तादृशशाब्दबोधे=चैत्रादिविशेष्यकाश्रयत्वसंसर्गकज्ञानादिप्रकारकशाब्दबोधं प्रति तादृशयोग्यताज्ञानादेरऽवश्यं हेतुत्वं कल्पनीयमिति तादृशहेतुत्वकल्पनेन गौरवमित्यर्थः ।

आश्रयत्वस्याख्यातार्थतास्वीकारस्य दीधितिकाराभिप्रायमुद्घाटयति– वस्तुतस्त्वित्यादिना । यावतामिति– 'चैत्रेण ज्ञायते घटः' इत्यत्र 'चैत्रवृत्तिर्या ज्ञानाश्रयता तन्निरूपकं यज्ज्ञानं तद्विषयो घटः' इतिबोधोदयाच्चैत्रज्ञानाश्रयतानां प्रकारत्वमस्तीति कर्तृप्रत्ययस्थलेपि तावतां पदार्थानां तथात्वम्=प्रकारत्वं भवत्येव न तु संसर्गत्वं किं तु विशेष्यविशेषणभावे वैपरीत्यं भवति तथा कर्मप्रत्ययस्थले चैत्र आश्रयतायामाश्रयता ज्ञाने ज्ञानं च घटे विशेषणं भवति कर्तृप्रत्ययस्थले च 'घटविषयकज्ञानाश्रयतावांश्चैत्रः' इतिबोधोदयाद् घटो ज्ञाने ज्ञानमाश्रयतायामाश्रयता च चैत्रे विशेषणं भवतीति कर्मप्रत्ययस्थले ज्ञाने विशेषणतां याश्रयता प्राप्ता सा कर्तृप्रत्ययस्थले ज्ञानविशेष्यतां प्राप्तेति विशेष्यविशेषणभावमात्रवैपरीत्यमस्ति प्रकारत्वं तूभयत्र तुल्यमेवेत्यनुभवेन दीधितिकार आश्रयत्वस्याख्यातार्थतां स्वीकरोति । हेत्वन्तरमाह– एवमिति । ज्ञानमाश्रयत्वादिकं च किंचिन्निरूपितमेव भवतीति ज्ञानादयः पदार्थाः ससंबन्धिका एव तथा च 'चैत्रेण ज्ञायते घटः' इतिकर्मप्रत्ययस्थले यस्य=तृतीयार्थभूतवृत्तित्वरूपाधेयत्वस्य यदंशे=चैत्रांशे विशेष्यतास्ति 'चैत्रो जानाति घटम्' इतिकर्तृप्रत्ययस्थले तदंशे=चैत्रांशे तन्निरूपकतायाः=आधेयत्वनिरूपकतायाः=आधेयत्वनिरूपकत्वरूपमेवाधारत्वं भवतीत्याधेयत्वनिरूपकत्वरूपाधारतायाः प्रकारत्वं भवत्येव तन्निरूपकताया अप्रकारत्वे उक्तानुभवविरोधादिति 'जानाति' इत्यत्राधारतायाः प्रकारत्वं प्राप्तम्. आधारत्वं चाश्रयत्वमेव प्रकारत्वं च पदेनोपस्थितस्यैव भवतीति तदुपस्थित्यर्थमाश्रयत्वस्याख्यातार्थतां दीधितिकारः स्वीकरोतीत्यभिप्रायः । स्वयमेवोक्तमुदाहरति– चैत्रेणेति । अत्र प्रकारता विशेष्यविशेषणोभयसाधारणा संसर्गताविरुद्धा पदेनोपस्थितत्वेन रूपेण विषयतारूपा ग्राह्या एतद्विषयस्याग्रे "संसर्ग एव न तु विशेष्यम्" इत्यनेन विशेष्यत्वेनाभिमताधेयत्वस्य संसर्गत्वशङ्कया स्पष्टत्वात् ।

न च ' चैत्रेण ज्ञायते ' इत्यत्राप्याधेयत्वं संसर्ग एव न तु विशेष्यमिति वाच्यम्, तथा सति ' आत्मना ज्ञायते न घटेन ' इत्यादौ घटादिवृत्तित्वाभावबोधानुपपत्तेः- आधेयत्वस्य तृतीयार्थताविरहेण तृतीयान्ताद् घटादिवृत्तित्वरूपप्रतियोग्यनुपस्थितेः, आधेयत्वसंबन्धस्याभावप्रतियोगितानवच्छेदकतया च तत्संबन्धावच्छिन्नघटाभावबोधस्य तत्रोपगमासंभवात्। तादृशसंबन्धस्याभावप्रतियोगितावच्छेदकत्वे ' ज्ञाने न घटः ' इत्यादिवाक्यजन्यप्रत्यये ज्ञानाद्यधिकरणकतादृशसंबन्धावच्छिन्नघटाद्यभावस्याप्यवगाहनसंभवाद् ' घटे ज्ञानं न वा ' इत्यादिसंशयनिरासाय कदाचित् ' ज्ञान न घटः ' इत्यादिकमपि प्रयुज्येत। अत एवानुकूलकृतिमत्त्वादिरूपकर्तृत्वादेरपि ' चैत्रः पचति ' इत्यादौ प्रकारता मणिकृतापि स्वीक्रियते न तु संसर्गता- ' न पचति ' इत्यादावन्वयबोधाऽनिर्वाहात्. तादृशसंबन्धस्य वृत्त्यनियामकतयाऽभावप्रतियोगितानवच्छेदकत्वेन तत्संबन्धावच्छिन्नक्रियाविरहप्रत्ययस्य तत्रोपगमासंभवात्।

---

यदुक्तम् " आधेयत्वरूपतृतीयार्थस्य चैत्रविशेष्यत्वात्" इति तत्राशङ्कते- न चेति। परिहारमाह- तथेति। तथा सति=आधेयत्वस्य संसर्गत्वोपगमे सति। ' न घटेन ज्ञायते ' इत्यत्राधेयत्वस्य तृतीयार्थत्वे तु ' घटेन ' इतितृतीयान्ताद् घटवृत्तित्वस्योपस्थितौ सत्यां नञा ज्ञाने तदभावबोधनं संभवति. आधेयत्वस्य संसर्गत्वे तु तृतीयार्थत्वं न स्यादिति ज्ञाने घटवृत्तित्वाभावबोधनं न संभवतीत्यर्थः। ननु ' आत्मना ज्ञायते न घटेन ' इत्यत्र ज्ञाने आधेयत्वसंबन्धावच्छिन्नप्रतियोगिताकघटाभावं वक्ष्यामस्तथा च नोक्तानुपपत्तिः- घटस्य घटपदेनोपस्थितत्वान्नञा ज्ञाने तदभावबोधनसंभवादित्याशङ्क्याह- आधेयत्वसंबन्धस्येति। अत्र ' वृत्त्यनियामकत्वेन ' इति शेषः। तत्संबन्धावच्छिन्न=आधेयत्वसंबन्धावच्छिन्न। विपक्षे बाधकमाह- तादृशेति, वृत्त्यनियामकस्याधेयत्वसंबन्धस्याभावप्रतियोगितावच्छेदकत्वे हि 'ज्ञाने न घटः' इत्यत्र ज्ञाने आधेयतासंबन्धेन घटाभावबोधापत्त्या ' घटे ज्ञानं न वा ' इत्याकारकसंशयनिरासाय 'ज्ञाने न घटः' इत्यपि वाक्यं प्रयुज्येत तेन च वाक्येन ज्ञाने आधेयतासंबन्धेन घटाभावबोधोत्पत्त्या ' घटे ज्ञानं न वा ' इतिसंशयनिरासोपि स्यादेव न चैवमस्ति नापि ' ज्ञाने न घटः ' इति प्रयुज्यते तस्मात् ' चैत्रेण ज्ञायते ' इत्यत्राधेयत्वं चैत्रविशेष्यं तृतीयार्थश्च न तु संसर्ग इत्यर्थः। वृत्त्यनियामकसंबन्धस्याभावप्रतियोगितावच्छेदकत्वं न भवतीत्यत्र मानमाह- अत एवेति, अत एव=वृत्त्यनियामकसंबन्धस्याभावीयप्रतियोगितानवच्छेदकत्वादेव। कर्तरि विद्यमानमनुकूलकृतिमत्त्वमेव कर्तृत्वं तस्य संसर्गत्वे ' चैत्रः पचति ' इत्यत्र तादृशकर्तृत्वसंबन्धेन चैत्रे क्रियान्वये संभवत्यपि ' न पचति ' इत्यत्र चैत्रे कर्तृत्वसंबन्धावच्छिन्नप्रतियोगिताकक्रियाभावो वक्तव्यः स तु न संभवति कर्तृत्वस्य वृत्त्यनियामकत्वादिति कर्तृत्वस्य प्रकारत्वं स्वीकृतं प्रकारत्वे तु पाककर्तृत्वस्याश्रयतासंबन्धेनाभावबोधः संभवत्येव- आश्रयत्वस्य वृत्तिनियामकत्वात्, तथा

**एवम्— ' चैत्रेण ज्ञायते ' इत्यादावाधेयत्वस्य तृतीययाऽविवक्षणे प्रातिपदिकार्थमात्रविवक्षया तद्विषयानुशिष्टप्रथमैव स्यात् । ' जानाति चैत्रः ' इत्यादौ चाख्यातेन कर्तृत्वाविवक्षणे धात्वर्थरूपभावमात्रपरतया परस्मैपदस्य श्नादिविकरणस्य चाऽसाधुतापत्तिः—" भावकर्मणोः " इत्यात्मनेपदविधायकानुशासनविषयत्वात् , " कर्तरि " इत्यधिकारीयश्नयादिभ्यः श्नेत्यनुशासनाविषयत्वाच्चेति तत्राख्यातस्य कर्तृत्वबोधकतायुक्तिस्तु न साधीयसी— इतराविशेषणतया क्रियाबोधपरत्वरूपभावविवक्षाया आत्मनेपदानुशासनविषयतोपगमादुक्तस्थले परस्मैपदसाधुतायाः. तादृशभावविवक्षादिविरहस्य श्नाद्यनुशासनविषयत्वोपगमेन श्नादिविकरणस्य साधुतायाश्च निर्वाहसंभवात् ।**

---

कर्तृत्ववदाधेयत्वस्यापि प्रकारत्वमेव युक्तं न संसर्गत्वमित्यर्थः । तादृशसंबन्धस्य=अनुकूलकृतिमत्त्वरूपकर्तृत्वसंबन्धस्य ।

आधेयत्वस्य तृतीयार्थत्वाभावे दोषान्तरमाह— एवमिति, तद्विषयानुशिष्ट=प्रातिपदिकार्थमात्रविषयानुशिष्ट । तथा च ' चैत्रो ज्ञायते ' इति स्यात् ' चैत्रेण ज्ञायते ' इति न स्यात्. न चैतदिष्टम् । कर्तृत्वस्याख्यातार्थत्वाभावे दोषमाह— जानातीति । अविवक्षणेति— कर्तृत्वस्याख्यातार्थत्वाभावे इत्यर्थः । कर्तृत्वविवक्षायामेव परस्मैपदस्य श्नाप्रत्ययस्य च साधुत्वात् । परस्मैपदस्यासाधुतापत्तौ हेतुमाह— भावकर्मणोरिति । श्नाविकरणस्याऽसाधुतापत्तौ हेतुमाह— कर्तरीति । इत्येवमाख्यातस्य कर्तृत्वबोधकतायुक्तिमुक्तामस्वीकुर्वन्नाह— इति तत्राख्यातस्येति, न साधीयसीति— आख्यातस्य कर्तृत्वाबोधकत्वेपि यत्र धात्वर्थस्येतरविशेषणत्वं न भवति तत्रात्मनेपदं भवति यथा 'ज्ञायते' इत्यत्र धात्वर्थस्यैव प्रधानत्वात् यत्र चेतरविशेषणत्वं भवति तत्र परस्मैपदं भवति यथा 'जानाति' इत्यत्र धात्वर्थस्य प्रथमान्तार्थे विशेषणत्वादित्येवंयुक्त्या व्यवस्थासंभवान्नोक्ता युक्तिः साधीयसीत्यर्थः । एतदेवोपपादयति— इतरेति । क्रियैव भाव इति क्रियाबोधपरत्वरूपैव भावविवक्षा ज्ञेया सा यत्रेतराऽविशेषणतया भवति तत्रैवात्मनेपदं भवतीत्युक्तस्थले= ' जानाति चैत्रः ' इत्यत्र धातोश्चैत्रविशेषणतयैव क्रियाबोधपरत्वमस्तीत्यात्मनेपदाऽप्राप्त्या परस्मैपदस्य साधुतानिर्वाहः संभवति तथा तादृशभावविवक्षादिविरहस्य=इतराविशेषणतया क्रियाबोधपरत्वरूपभावविवक्षा यत्र न भवति तत्र श्नादिविकरणं भवतीति ' जानाति ' इत्यत्र धात्वर्थज्ञानस्य चैत्रे विशेषणत्वादितराविशेषणतया धातोः क्रियाबोधपरत्वं नास्तीति श्नादिविकरणस्य साधुतानिर्वाहः संभवत्येवेत्यर्थः । यद्याख्यातस्य कर्तृत्ववाचकत्वं विना ' जानाति ' इत्यादौ परस्मैपदस्य साधुत्वं नोपपद्येत तदा परस्मैपदसाधुत्वार्थमाख्यातस्य कर्तृत्ववाचकत्वमुक्तयुक्त्या प्राप्नुयात्. उक्तयुक्तेश्च साधीयसीत्वं स्यादपि न चैवमस्ति— आख्यातस्य कर्तृत्वाऽवाचकत्वेपि मदुक्तयुक्त्या परस्मैपदश्नादिविकरणयोः ' जानाति ' इत्यादौ साधुत्वसंभवादित्याक्षेपाभिप्रायः । तस्मात्— ' जानाति ' इत्यत्र नाख्यातस्य कर्तृत्ववाचकत्वं किं त्वाश्रयत्वार्थकत्वमेव पूर्वोक्तं विज्ञेयम् ।

'पचन् पचति' इत्यादाविवोद्देश्यतावच्छेदकविधेयाऽभेदेन 'जानन् जानाति' इत्यादेर्निराकाङ्क्षतानिर्वाहायापि 'जानाति' इत्यादावाख्यातस्याश्रयतार्थकतोपगम आवश्यकः, अन्यथा कृदन्तप्रतिपाद्यतावच्छेदकज्ञानाश्रयत्वरूपोद्देश्यतावच्छेदकस्य ज्ञानादिरूपविधेयभिन्नतया निराकाङ्क्षताविरहेण तथाप्रयोगापत्तेः। एतेन तत्राश्रयतायाः प्रकारतोपगमे 'जानाति चैत्रः' इत्यादिवाक्यज्ञानघटितशाब्दसामग्र्या भिन्नविषयकप्रत्यक्षादिप्रतिबन्धकतायामाख्यातजन्याश्रयत्वोपस्थित्यादिरूपाधिककारणानां निवेशे गौरवेणाश्रयतायाः संसर्गत्वमेवोचितमित्यादिकमनुपादेयम्।

'नश्यति' इत्यादौ प्रतियोगित्वरूपकर्तृत्वमाख्यातार्थः, तादृशसंबन्धस्य

---

'जानाति' इत्यत्राख्यातस्याश्रयत्वार्थकत्वे उपपत्तिमाह- पचन्निति, 'पचन् पचति' इति प्रयोगो न भवति तत्कस्य हेतोः? 'पचन्' इत्यनेन पचन्तमुद्दिश्य 'पचति' इत्यनेन पाककृतेरेव विधेयत्वात् पचतश्चोद्देश्यत्वे उद्देश्यतावच्छेदकं पाककृतिरेव स्यात् तत्र चोद्देश्यतावच्छेदकविधेययोरभेदः प्राप्तस्तत्र च शाब्दबोधस्यानिष्टत्वादित्यर्थः। अभेदेनेति-उद्देश्यतावच्छेदकविधेययोरभेदेन निराकाङ्क्षतानिर्वाहायेत्यर्थः। एवं 'जानन् जानाति' इत्यस्य निराकाङ्क्षतानिर्वाहाय=शाब्दबोधानुपयुक्तत्वनिर्वाहाय 'जानाति' इत्यत्राख्यातस्याश्रयत्वार्थकत्वं स्वीकार्यं तथा च 'जानन्' इत्यनेन ज्ञानाश्रयमुद्दिश्य 'जानाति' इत्यनेन ज्ञानाश्रयत्वं विधेयं ज्ञानाश्रयस्य चोद्देश्यत्वे ज्ञानाश्रयत्वमेवोद्देश्यतावच्छेदकं स्यात्तत्रोद्देश्यतावच्छेदकविधेययोरैक्यापत्त्या शाब्दबोधस्यानिष्टत्वात् 'जानन् जानाति' इतिप्रयोगापत्तिर्नास्तीत्यर्थः। विपक्षे बाधकमाह- अन्यथेति, अन्यथा=यदि 'जानाति' इत्यत्राख्यातस्याश्रयत्वार्थकत्वं न स्यात्तदा 'जानन्' इत्यत्रोद्देश्यतावच्छेदकं तु कृदन्तं यत् 'जानन्' इतिपदं तत्प्रतिपाद्यो यो ज्ञानाश्रयस्तन्निष्ठप्रतिपाद्यतायाः अवच्छेदकं ज्ञानाश्रयत्वं 'जानाति' इत्यनेन ज्ञानाश्रयत्वस्य विधेयत्वाभावे ज्ञानमेव विधेयं स्यात् तत्र ज्ञानाश्रयत्वज्ञानयोरुद्देश्यतावच्छेदकविधेययोर्भेदापत्त्या शाब्दबोधसंभवेन साकाङ्क्षत्वापत्त्या 'जानन् जानाति' इति प्रयोगः स्यादेव, न चैतदिष्टमित्यत्राख्यातस्याश्रयत्वार्थकत्वमावश्यकमित्यर्थः। एतेनेति- प्रकारत्वं पदेनोपस्थितस्यैव भवतीति प्रकारत्वात् प्रतिबन्धककोटिप्रविष्टाश्रयताया अप्याख्यातेनोपस्थित्यपेक्षा स्यात् प्रतिबन्धकत्वकल्पना च स्यादित्यर्थः। अनुपादेयमिति-यद्याश्रयत्वस्य संसर्गत्वं स्यान्न त्वाख्यातबोध्यत्वं तदोक्तरीत्या 'जानन् जानाति' इत्यपि प्रयोगः स्यादेव न चैतदिष्टमित्याश्रयत्वस्याख्यातबोध्यत्वमेव स्वीकार्यं न संसर्गत्वमित्यर्थः।

नश्यतीति- अत्र नाशप्रतियोगित्वमेव कर्तृत्वं तदप्याख्यातार्थ एव न संसर्ग इत्यर्थः। उक्तमुपपादयति-तादृशेति, तादृशसंबन्धस्य=प्रतियोगित्वरूपकर्तृत्वरूपसंबन्धस्याऽभावप्रतियोगितानवच्छेदकत्वेन 'न नश्यति' इत्यत्र प्रतियोगित्वरूपकर्तृत्वसंबन्धावच्छिन्नप्रतियोगि-

वृत्त्यनियामकतयाऽभावप्रतियोगितानवच्छेदकत्वेन 'न नश्यति' इत्यादौ नाशप्रतियोगित्वाभावबोधस्यैव स्वीकरणीयतया न संसर्गतासंभवः ।

अथाख्यातस्य कर्तृत्वशक्ततावच्छेदकं रूपं दुर्वचम् । न च तिङ्त्वं तथा–तिप्तसादिसाधारणतिङ्त्वस्य दुर्वचत्वात् । न च पाणिनीयसंकेतसंबन्धेन तिङ्पदवत्त्वमेव तिङ्त्वं. तिबाद्यष्टादशसु तत्पदसंकेतग्राहकं च "आदिरन्त्येन" इतिसूत्रमेव तत्संकेतमविदुषामनधीतपाणिनीयतन्त्राणां तिप्त्वादिना शक्तिभ्रमादेव शाब्दबोध इति वाच्यम्, एवं सति घटादिवाचकघटादिपदेष्वपि कस्यचिच्छब्दस्य पुरुषविशेषीयसंकेतसंभवेन तुल्ययुक्त्या तत्रापि तच्छब्दस्यैव शक्ततावच्छेदकतापत्त्या तिबादिषु पाणिनेस्तिङ्पदसंकेतवत् तत्र शब्दान्तरसंकेतस्याप्यन्यपुरुषीयस्य संभवात् तत्तच्छब्दानामपि प्रवृत्तिनिमित्ततायाः सुवचत्वाद् विनिगमनानुपपत्तेः ।

---

कनाशाभावस्य घटादौ नञा बोधनासंभवाद् नाशप्रतियोगित्वाभावस्यैव नञा बोधः स्वीकर्तव्य ति न प्रतियोगित्वरूपकर्तृत्वस्यापि संसर्गत्वं संभवति. किं तु प्रकारत्वमेव तेन चाख्यार्थत्वं प्राप्तमित्यर्थः ।

उक्तक्रमेणाख्यातस्य कर्तृत्वे शक्तिरिति ज्ञाते संप्रति शक्ततावच्छेदकज्ञानार्थमाशङ्कते—अथेति, ाख्याते कर्तृत्वनिरूपिता या शक्तता सा केन रूपेणास्तीति जिज्ञासास्ति । न चेति, तथा= र्तृत्वशक्ततावच्छेदकम् । दुर्वचत्वादिति— तिप्तसाद्यानुपूर्वीणां विभिन्नरूपत्वेन तिङ्त्वस्य साधारणत्वाऽसंभवादित्यर्थः । ननु पाणिनिसंकेत आश्रयतासंबन्धेन तिङि संज्ञिनि वर्तत एवेति ाणिनिसंकेतसंबन्धेन तिङ्पदवत्त्वं तिङ्पदबोध्ये तिङि यदस्ति तदेव तिङ्त्वं ज्ञेयं तिबाद्यष्टादशसु ्पदसंकेतग्राहकम्=तिङ्पदसंकेतग्राहकं : च " अन्त्येनेतासहितआदिर्मध्यगानां स्वस्य च ा स्यात् " इतिवृत्त्युक्तरीत्या " आदिरन्त्येन " इतिसूत्रमेवेत्यर्थः । नन्वेवं तिङ्पदस्य बाद्यष्टादशसु संकेतमस्तीतिज्ञानरहितानामवैयाकरणानां तिङ्पदसंकेतग्रहो न स्यात्तेन च ाब्दबोधानुपपत्तिरित्याशङ्क्याह— तत्संकेतमविदुषामिति, तेषां तिप्त्वमेव शक्ततावच्छेदकम् पचति ' इत्यादौ श्रूयमाणतिप एव कर्तृत्वे शक्तिरिति भ्रमादेव कर्तृत्वविषयकशाब्दबोधो भवीत्याशङ्क्याह— न चेति । उत्तरमाह— एवमिति, यदा केनचित् पुंसा मदुक्तपटपदेन त्वया टपदं ज्ञेयमिति संकेतः कृतस्तदा तत्पुरुषीयसंकेतसंबन्धस्यापि संभवित्वात् तत्पुरुषीयसंकेतसंबन्धेन घटपदस्य पटपदवत्त्वं प्राप्तमिति तत्र पटपदस्यैव शक्ततावच्छेदकत्वं भवेन्न तु घटपदत्वस्य न तदिष्टमित्यर्थः, किं च यथा पाणिनिना तिबादिषु तिङ्पदसंकेतः कृतस्तथान्येन व्याकणनिर्मात्रा तिबादिषु डिङ्पदसंकेतोपि कर्तुं शक्यते इति तत्संकेतसंबन्धेन डिङ्पदवत्त्वपि तिङ्त्वं स्यादिति तत्तच्छब्दानाम्=पटतिङ्डिङादिशब्दानां शक्ततावच्छेदकतापत्त्या तत्तब्दानां प्रवृत्तिनिमित्तत्वं स्यादेव न चैतदिष्टम्, तिङ्पदस्यैव प्रवृत्तिनिमित्तत्वं न डिङ्पद-

अत्र केचित्—तिबादिस्थानिनो लकारस्यैव लत्वजातिपुरस्कारेण कृतिवाचकता, 'पचति' इत्यादौ लकाराऽश्रवणेऽप्याऽऽदेशेन तिबादिना स्थानिनः स्मरणात् तत एवार्थोपस्थितिः। आदेशादेशिभावमविदुषां तु तिप्त्वादिना शक्तिभ्रमादेवार्थोपस्थितिः। यत्र तिबादेर्लादेशत्वज्ञानं नास्ति श्रुतलकाराच्चार्थोपस्थितिस्तत्र 'पचति' इत्यादिवाक्याच्छाब्दबोधवारणाय 'पचति' इत्याद्यानुपूर्वीज्ञानजन्यबोधे तिबादेर्लादेशत्वज्ञानमपि हेतुः। न चोक्तस्थले धातुसाकाङ्क्षत्वज्ञाने भवत्येव शाब्दबोधस्तदऽसत्त्वे च कारणाभावादेव नापत्तिरिति वाच्यम्, 'पचति' इत्यादौ तिबादिना कारस्योपस्थापनेऽपि तत्तद्धातुसाकाङ्क्षतया तत्स्मारकाभावेन तच्छाब्दबोधानुपपत्तेः— लकारे धातुसाकाङ्क्षत्वग्रहस्य शाब्दबोधहेतुत्वाऽसंभवात्। न हि तत्तद्धातुसाकाङ्क्षत्वेन लस्तिबादिस्थानिता येन तद्रूपावच्छिन्नमेव तिबादिः

---

स्येत्यत्र च विनिगमनानुपपत्तिः=विनिगमनाविरह एवेति न तिङ्पदवत्त्वरूपं तिङ्त्वं शक्तावच्छेदकं संभवतीत्यर्थः।

उक्तशक्तावच्छेदकनिरूपणे कस्यचिन्मतमनुवदति—अत्रेति। लत्वजातीति—कर्तृत्वशक्तावच्छेदकं लत्वमेवेत्यर्थः। ननु लत्वस्य शक्तावच्छेदकत्वे लकारस्यैव कर्तृत्वे शक्तिरिति प्राप्तं तथा च 'पचति' इत्यादौ कर्तृत्वबोधानुपपत्तिः—लकारस्याऽश्रवणादित्याशङ्क्याह— पचतीति। स्थानिनः=लकारस्य। ततः=लकारस्मरणात्। पदज्ञानस्यैवार्थोपस्थितिकारणत्वात् लस्मरणस्यापि ज्ञानरूपत्वात् कर्तृत्वोपस्थापकत्वं युक्तमेवेत्यर्थः। ननु लकारस्य तिबादिरादेशो भवतीति ज्ञाने सति तिबादिना लकारस्मरणं संभवति न त्वादेशादेशिभावज्ञानं विनापीत्यादेशादेशिभावज्ञानशून्यानां तिबादिना लकारस्मरणासंभवात् 'पचति' इत्यादौ कर्तृत्वोपस्थितिर्न स्यादित्याशङ्क्याह— आदेशेति, आदेशादेशिभावमविदुषां तु तिबादीनामेव कर्तृत्वे शक्तिरिति भ्रमादेव तिबादिना कर्तृत्वोपस्थितिः संभवतीत्यर्थः। यत्रेति—यत्र तिबादेर्लादेशत्वज्ञानं तु नास्ति वाक्यान्तरघटकेन श्रुतेन च लकारेण कर्तृत्वोपस्थितिर्भवति तत्र 'पचति' इत्यादिवाक्याच्छाब्दबोधवारणाय तिबादेर्लादेशत्वज्ञानमपि हेतुत्वेन स्वीकार्यं तथा चोक्तस्थले हेतुभूतस्य तिबादेर्लादेशत्वज्ञानस्याभावादेव न शाब्दबोधापत्तिरित्यर्थः। ननु 'पचति' इत्यादिवाक्यजन्यबोधे तिबादेर्लादेशत्वज्ञानस्य न हेतुत्वं स्वीकार्यं किं तु धातुसाकाङ्क्षत्वज्ञानस्यैवान्वयव्यतिरेकाभ्यां हेतुत्वं युक्तं तथा च धातुसाकाङ्क्षत्वज्ञाने सति शाब्दबोधो भवति धातुसाकाङ्क्षत्वज्ञानाभावे च न भवतीत्याशङ्क्याह— न चेति। तिबादेर्धातुसाकाङ्क्षत्वज्ञानं च धातूत्तरवर्तित्वज्ञानमेवेत्यर्थः। परिहारहेतुमाह— पचतीति, 'पचति' इत्यादौ तिबादिना वाऽन्येन वा लकारस्य तत्तद्धातुसाकाङ्क्षत्वेन रूपेण स्मरणाऽसंभवात् सर्वदैव शाब्दबोधानुपपत्तिः स्यादिति न धातुसाकाङ्क्षत्वज्ञानस्य शाब्दबोधहेतुत्वं संभवतीत्यर्थः। उक्तमेवाऽऽक्षेपेणाह— न हीति। तद्रूपावच्छिन्नम्=धातुसाकाङ्क्षत्वविशिष्टम्। लत्वेनेति— लत्वेनैव रूपेण लकारस्य

स्मारयेत्. अपि तु लत्वेनैव तथात्वमिति । एवं तत्तद्धातुपदाव्यवहितोत्तरत्वरूप-तत्साकाङ्क्षत्वेन येन पुंसा न लकारः श्रुतस्तस्य तेन रूपेण तत्तत्स्मरणाऽसंभव इति ।

अत्रेदं चिन्त्यते—लकारतिबाद्योरनतिप्रसक्तस्थान्यादेशभावस्य दुर्वचत्वात् तिबादिस्मारितलकारस्य वाचकत्वं न विचारसहम्, तिबादेरेव यत्र वाचकता-भ्रमस्तदनुरोधेन 'पचति' इत्याद्यानुपूर्वीज्ञानस्य तिबादिजन्योपस्थितिसहकारेण शाब्दबोधोपधायकताकल्पनस्यावश्यकत्वात्. लकारजन्योपस्थितिसहकृततादृ-शानुपूर्वीज्ञानतिबादिधर्मिकलादेशत्वज्ञानघटितसामग्र्यन्तरकल्पने गौरवेण लाघवा-त्तिबादेरेव ताद्रूप्येण शक्तिकल्पनाया उचितत्वं चेति दिक् ।

आख्यातसामान्यस्य कर्तृत्वे इव तद्विशेषस्यात्मनेपदस्य कर्मत्वे शक्तिः, न तु यथाश्रुतग्राहिवैयाकरणमते इव कर्मरूपधर्मिवाचकत्वं गौरवात्, प्रथमा-

---

तथात्वम्=तिबादिस्थानितास्तीति तिबादिना लकारस्य लत्वेनैव रूपेण स्मरणं संभवति तथ च तिबादेर्लादेशत्वज्ञानमेव शाब्दबोधकारणं न तु तद्धातुसाकाङ्क्षत्वज्ञानमित्यर्थः । यथानुभव-मेव स्मरणनियमोस्तीति पदस्यापि येन रूपेण श्रवणं तेनैव रूपेण स्मरणमपि संभवति लकारे तत्तद्धातुसाकाङ्क्षत्वं च तत्तद्धातुपदाव्यवहितोत्तरत्वमेव तथा च लकारस्य तत्तद्धातुपदाव्यवहितो-त्तरत्वेन श्रवणाभावे तेन रूपेण स्मरणमपि न संभवतीति शाब्दबोधानुपपत्तिरेवेत्याह— एवमिति ।

अत्रेदमिति, अनतिप्रसक्तेति— केनचित् "लट् लिट्" इत्यादिस्थाने 'सट् सिट्' इत्यादि यदि पठितं स्यात्तदा सडादीनामपि स्थानित्वं स्यादेव तथा "तिप् तस्" इत्यादिस्थाने 'तिट् तः' इत्यादिपाठे तिडादीनामप्यादेशत्वं स्यादेवेत्यनतिप्रसक्तस्य स्थानादेशभावस्य दुर्व-चत्वं तथा च तिडादिस्मारितलकारस्यापि कर्तृत्वादिवाचकत्वापत्त्या तिबादिस्मारितस्यैव वाच-कत्वमिति न संभवतीति प्रयोगे श्रूयमाणतिबादेरेव कर्तृत्वे शक्तिः स्वीकार्येत्यर्थः । तिबादेः शक्तिमुपपादयति— तिबादेरेवेति, तदनुरोधेन=उक्तवाचकताभ्रमानुरोधेन । तिबादिजन्योप-स्थितिसहकारेण=तिबादिजन्यकर्तृत्वोपस्थितिसाहाय्येन । उपधायकता=जनकता । तव मते 'पचति' इत्यादिवाक्यजन्यबोधं प्रति लकारजन्यकर्तृत्वोपस्थितिसहकृता तथा तादृशानुपूर्वी= 'पचति' इत्याद्यानुपूर्वीज्ञानेन तिबादिधर्मिकलादेशत्वज्ञानेन=तिबादौ लादेशत्वज्ञानेन च घटिता या सामग्रीस्तस्याः कारणत्वकल्पने गौरवं स्यादिति लाघवात्तिबादेरेव ताद्रूप्येण=तिप्त्वा-दिरूपेण कर्तृत्वे शक्तिकल्पनमुचितमित्यर्थः ।

परस्मैपदाख्यातस्य कर्तृत्वे शक्तिं निरूप्य संप्रत्यात्मनेपदाख्यातस्य कर्मत्वे शक्तिमाह— आख्या-तेत्यादिना । 'कुरुते' इत्यादावात्मनेपदस्यापि कर्तृत्वे शक्तिरस्तीति कर्मत्वे शक्तौ यक्सम-भिव्याहारस्य सहकारित्वं ज्ञेयम् । गौरवादिति— कर्मणि शक्तौ शक्यतावच्छेदकं कर्मत्वं

न्तपदार्थे कर्मत्वान्वयबलादेव कर्मताविशिष्टधर्मिलाभसंभवात् ।

न चात्मनेपदस्य शानच्प्रत्ययस्य धर्मिणि शक्तेः 'पच्यमानमानय' इत्यादौ पच्यमानादिनिष्ठानयनकर्मत्वाद्यनुरोधेनावश्यकत्वात् तत एवोपपत्तावाख्यातरूपात्मनेपदस्य धर्मवाचकत्वं निर्युक्तिकमिति वाच्यम्, तङ्शानच्साधारणस्यात्मनेपदत्वस्य शक्ततावच्छेदकत्वे एव तथोक्तिसंभवात्. तादृशात्मनेपदत्वस्य चाऽगुरोर्निर्वचनासंभवात्, पाणिन्यादिसंकेतसंबन्धेनात्मनेपदवत्त्वस्य शक्ततावच्छेदकताया उक्तरीत्याऽनवकाशात् । अतस्तादीनां तत्तद्रूपेण शक्तिकल्पनस्यावश्यकतया लाघवात् कर्मत्वे एव तत्कल्पनात् ।

कर्मत्वं च 'त्यज्यते ग्रामः' 'गम्यते ग्रामः' इत्यादौ धात्वर्थतावच्छेदकीभूतसंयोगविभागादिरेव विशेष्यतया तङ्वाच्यः । 'चैत्रेण गम्यते ग्रामः'

---

तच्च संयोगविभागादिलक्षणफलरूपत्वान्नानैवेति गौरवम्, कर्मत्वे शक्तौ च शक्यतावच्छेदकं कर्मत्वत्वं तच्चैकमेवेति लाघवम् । ननु कर्मत्वे शक्तौ कर्मपदार्थबोधो न स्यादित्याशङ्क्याह— प्रथमान्तेति । उपस्थितकर्मत्वस्य धर्मत्वेन क्वचिदप्यन्वयोऽवश्यंभावीति प्रथमान्तपदार्थेऽन्वयः स्यादेव तेन चान्वयेन कर्मत्वविशिष्टकर्मपदार्थभानं संभवत्येवेत्यर्थः ।

ननु 'पच्यमानं तण्डुलमानय' इत्यादौ सामानाधिकरण्यानुरोधात् शानच्प्रत्ययरूपस्यात्मनेपदस्य धर्मिणि=कर्मणि शक्तेरावश्यकतास्ति अन्यथा—शानच्प्रत्ययोपस्थितकर्मत्वस्य कर्मभूततण्डुलादिनाऽभेदाऽसंभवात्सामानाधिकरण्यं न स्यात् तथा च ततः=शानच्प्रत्ययस्य कर्मणि शक्तिस्वीकारावश्यकत्वादेव 'पच्यते' इत्यादावप्यात्मनेपदस्य कर्मणि शक्त्युपपत्तौ सत्यामात्मनेपदस्य धर्मवाचकत्वम्=कर्मत्ववाचकत्वं न युक्तम्—अर्धजरतीयत्वस्याऽन्याय्यत्वादित्याशङ्क्याह— न चेति । उत्तरमाह—तङ्शानचिति, यदि तङि शानच्प्रत्यये चैकरूपमेवात्मनेपदत्वं यात्तदा 'शानच्प्रत्ययस्यात्मनेपदरूपस्य कर्मणि शक्तिरस्तीति तङ्रूपात्मनेपदस्यापि कर्मण्येव शक्तिर्युक्ता' इति कथनं युक्तिसंगतं स्यादपि न चैवमस्ति— तादृशात्मनेपदत्वस्य=तङ्शानच्साधारणात्मनेपदत्वस्याऽगुरोर्निर्वचनासंभवादित्यर्थः । यदि पाणिनिसंकेतसंबन्धेनात्मनेपदवत्त्वं कर्मत्वनिरूपितशक्ततावच्छेदकमित्युच्यते तदा "एवं सति घटादिवाचक ५७३" इत्याद्युक्तदोषः प्रसज्येतेति तदपि न संभवतीत्याह— पाणिन्यादीति । उपसंहरति—अत इति, उक्तरीत्या सर्वानुगतात्मनेपदत्वस्य निर्वचनासंभवेनात्मनेपदत्वेन रूपेणात्मनेपदस्य क्वचिदपि शक्तिकल्पनाया असंभवात् तादीनामेव तत्तद्रूपेण=तत्वादिना रूपेणैव शक्तिकल्पनं कर्तव्यमिति शानच्प्रत्ययस्याऽगत्या पृथगेव कर्मणि शक्तिस्वीकारेपि तादीनां लाघवात् कर्मत्वे एव तत्कल्पनात्=शक्तिकल्पना युक्ता—तत्वादीनां पृथगेव शक्ततावच्छेदकत्वादित्यर्थः ।

कर्मत्वस्वरूपमाह— कर्मत्वमिति । विशेष्यतयेति—कर्मत्वे शक्तिस्वीकारात्तस्य विशेष्यतया तङ्वाच्यत्वम् । चैत्रेणेत्यादिवाक्यार्थघटकपदार्थानामन्वयमाह— इत्यत्रेति । तस्य=आधे-

इत्यत्र तृतीयार्थस्तत्कर्तृकत्वरूपमाधेयत्वं तस्य धात्वर्थे संयोगात्मकफलावच्छिन्ने स्पन्दलक्षणे व्यापारे तस्य च जन्यतासंबन्धेनात्मनेपदार्थसंयोगरूपफले तस्य चाश्रयतासंबन्धेन प्रथमान्तपदोपस्थाप्यग्रामेऽन्वय इति चैत्रवृत्तिर्यः संयोगावच्छिन्नस्पन्दस्तज्जन्यसंयोगवान् ग्राम इत्याकारकः शाब्दबोधः । 'चैत्रेण त्यज्यते ग्रामः' इत्यत्र संयोगस्थाने विभागमन्तर्भाव्य बोध उपपादनीयः ।

अथ चैत्रनिष्ठक्रियाजन्यसंयोगविभागादेर्ग्रामादाविव चैत्रादावपि सत्त्वात् 'चैत्रेण त्यज्यते गम्यते चैत्रः' इत्यपि स्यात्, न स्याच्च 'चैत्रेण न गम्यते न त्यज्यते चैत्रः' इत्यादीति चेत् ?, अत्र दीधितिकारप्रभृतयः— फलमिव तत्र क्रियान्वयि परसमवेतत्वमपि कर्माख्यातार्थः, परत्वे च भेदरूपे प्रतियोगितया फले आश्रयतयान्वयिनः प्रथमान्तपदोपस्थाप्यस्यान्वयः— चैत्रे चैत्रान्यसमवेतक्रियाजन्यसंयोगादिमत्त्वस्याऽन्वयाऽयोग्यत्वात्, तादृशसंयोगाद्यभावस्य च तत्रान्वययोग्यत्वान्न तत्रापत्त्यनुपपत्त्योरवकाश इत्याहुः ।

तत्रेदं चिन्तयन्ति— प्रथमान्तपदोपस्थाप्यकर्मणोऽन्वयितावच्छेदकावच्छिन्न-

---

त्वस्य । तस्य=व्यापारस्य च । तस्य=संयोगादिरूपफलस्य । वाक्यार्थमाह— चैत्रवृत्तिरिति । अन्तर्भाव्येति— 'चैत्रवृत्तिविभागानुकूलव्यापारजन्यविभागाश्रयो ग्रामः' इतिशाब्दबोध इत्यर्थः ।

शङ्कते— अथेति । 'चैत्रेण त्यज्यते गम्यते चैत्रः' इति— 'चैत्रेण त्यज्यते चैत्रः' 'चैत्रेण गम्यते चैत्रः' इत्यपि स्यादित्यर्थः । 'चैत्रेण न गम्यते चैत्रः' 'चैत्रेण न त्यज्यते चैत्रः' इति च न स्यात्— चैत्रनिष्ठक्रियाजन्यसंयोगविभागादेश्चैत्रे सत्त्वादेवेत्यर्थः । अस्य दीधितिकारमतेनोत्तरमाह— अत्रेति । क्रियान्वयीति—क्रियायां संयोगाद्याश्रयीभूतग्रामाद्यपेक्षया यः परश्चैत्रादिस्तत्समवेतत्वमपि भासते तदपि कर्माख्यातस्यार्थ इत्यर्थः । फले आश्रयतयान्वयिनः=फलाश्रयस्य प्रथमान्तपदोपस्थाप्यस्य ग्रामादेर्भेदरूपे परत्वे प्रतियोगितयान्वयः— स च भेदः प्रथमान्तपदोपस्थाप्यग्रामादिप्रतियोगिको ग्राह्य इत्यर्थः । उक्तस्य फलमाह— चैत्रेति, 'चैत्रेण गम्यते चैत्रः' इत्यत्र चैत्रे चैत्रसमवेतक्रियाजन्यसंयोगादेरेवान्वयः कर्तव्यः स च नेष्टः— क्रियायां परसमवेतत्वनिवेशात्, अत्र चैत्रे चैत्रान्यसमवेतक्रियाजन्यसंयोगादेरन्वययोग्यतैव नास्ति—उपस्थित्यभावात् चैत्रवृत्तिसंयोगजनकक्रियायाश्च चैत्रान्यसमवेतत्वाभावादित्यापत्तिः=' चैत्रेण गम्यते चैत्रः ' इति प्रयोगापत्तिर्नास्ति, तादृशसंयोगाद्यभावस्य=चैत्रान्यसमवेतक्रियाजन्यसंयोगाद्यभावस्य च तत्र=चैत्रेऽन्वययोग्यत्वात्=अन्वयसंभवात् 'चैत्रेण न गम्यते चैत्रः' इत्यादिप्रयोगस्यानुपपत्तिरपि नास्तीत्यर्थः । ग्रामे च ग्रामान्यचैत्रवृत्तिक्रियाजन्यसंयोगाद्याश्रयत्वस्य सत्त्वात् 'चैत्रेण गम्यते ग्रामः' 'चैत्रेण त्यज्यते ग्रामः' इत्युपपद्यते एव ।

यदुक्तं भेदे प्रथमान्तपदोपस्थाप्यस्य प्रतियोगितयान्वयस्तत्राशङ्कते— तत्रेदमित्यादिना, भेदे प्रथमान्तपदोपस्थाप्यकर्मणोऽन्वयितावच्छेदकानवच्छिन्नप्रतियोगितया वाऽन्वयितावच्छेदकावच्छि-

त्वाऽविशेषितप्रतियोगितया भेदांशेऽन्वयोपगमेपि चैत्रेपि चैत्रस्य द्वित्वादिना भेदसंभवेन तत्समवेतक्रियायां परसमवेतत्वाक्षतेरुक्तदोषोद्धारासंभवः । अन्वयितावच्छेदकावच्छिन्नप्रतियोगितया तत्र तद्भानस्वीकारे ? 'चैत्रेण द्रव्यं गम्यते' इत्यादावनुपपत्तिः-द्रव्यत्वावच्छिन्नभिन्नसमवेतत्वादेः क्रियादौ बाधात् ।

न च तत्र द्रव्यपदं लक्षणया चैत्रान्यद्रव्यपरमिति वाच्यम्, 'मल्लेन गम्यते मल्लः' इत्यादौ मल्लपदस्य मल्लान्यमल्लपरत्वासंभवात्, मल्लान्यसमवेतमल्लवृत्तिक्रियाया अप्रसिद्ध्याऽनुपपत्तितादवस्थ्यात्, अननुगतमल्लगततत्तद्व्यक्तित्वोपस्थित्यनैयत्यात्, कर्मव्यक्तिभिन्नमल्लत्वेन लक्षणाग्रहस्य तादृशवाक्यज-

---

न्नप्रतियोगितया वान्वय उपगम्यते इत्येवं द्विधा विकल्प्य प्रथमे दोषमाह- प्रथमान्तेति । द्वित्वादिनेति- चैत्रे चैत्रभेदाभावेपि चैत्रवटोभयभेदस्य सत्त्वेन चैत्रभेदप्राप्तौ तत्समवेतक्रियायाम्=चैत्रसमवेतक्रियायां परसमवेतत्वाक्षतेः=चैत्रापेक्षया परसमवेतत्वप्राप्त्या चैत्रे परसमवेतक्रियाजन्यसंयोगविभागाद्याश्रयत्वप्राप्त्या उक्तदोषोद्धारासंभवः=चैत्रेण गम्यते चैत्रः ' इत्यादिप्रयोगापत्तिस्तदवस्थैव 'चैत्रेण न गम्यते चैत्रः' इत्यादिप्रयोगानुपपत्तिश्च तदवस्थैवेत्यर्थः । द्वितीयपक्षे दोषमाह- अन्वयितेति, यद्यऽन्वयितावच्छेदकावच्छिन्नप्रतियोगितया प्रथमान्तपदोपस्थाप्यस्य तत्र=भेदेऽन्वय उपगम्यते ? तदोक्तदोषोद्धारसंभवेपि 'चैत्रेण द्रव्यं गम्यते' इत्यादिप्रयोगो नोपपद्येत-क्रियायां प्रथमान्तपदोपस्थाप्यभिन्नसमवेतत्वस्य विवक्षितत्वात् चैत्रेपि द्रव्यत्वस्य सत्त्वेन क्रियायां द्रव्यत्वावच्छिन्नभिन्नसमवेतत्वस्याभावात्, द्रव्ये द्रव्यत्वावच्छिन्नभिन्नसमवेतक्रियाजन्यसंयोगाश्रयत्वाभावादित्यर्थः ।

ननु तत्र='चैत्रेण द्रव्यं गम्यते' इत्यत्र द्रव्यपदं लक्षणया चैत्रान्यद्रव्यपरं ग्राह्यं तथा च द्रव्यपदवाच्यस्य चैत्रस्य च भेदे प्राप्ते द्रव्ये तदन्यचैत्रवृत्तिक्रियाजन्यसंयोगाश्रयत्वसंभवात् 'चैत्रेण द्रव्यं गम्यते' इत्यादिप्रयोगानुपपत्तिर्नास्तीत्याशङ्क्याह- न चेति । उत्तरमाह- मल्लेनेति, 'चैत्रेण द्रव्यं गम्यते' इत्यत्र द्रव्यपदस्य लक्षणया चैत्रान्यद्रव्यपरत्वेपि मल्लपदस्य मल्लत्वावच्छिन्नवाचकत्वेन मल्लान्यमल्लपरत्वाऽसंभवात् 'मल्लेन गम्यते मल्लः' इतिप्रयोगो नोपपद्येत- मल्लान्यसमवेतायाः क्रियाया मल्लवृत्तित्वासंभवात् मल्लवृत्तिक्रियायाश्च मल्लान्यसमवेतत्वासंभवादित्यर्थः, अपेक्ष्यते च क्रियायां प्रथमान्तार्थमल्लान्यसमवेतत्वं तदत्र न संभवतीति भावः । ननु तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदमत्र ग्रहीष्यामस्तथा, च तन्मल्लव्यक्त्यास्तन्मल्लव्यक्तेर्भिन्नत्वान्नानुपपत्तिरित्याशङ्क्याह- अननुगतेति । उपस्थित्यनैयत्यात्=तद्व्यक्तित्वोपस्थितेरनियतत्वात्=कारणाभावेनासंभवात् । नन्वत्रापि तृतीयान्तमल्लपदस्य कर्मभूतमल्लव्यक्तिभिन्नपरत्वमेव लक्षणयेति नोक्तप्रयोगानुपपत्तिरित्याशङ्क्याह- कर्मेति, 'मल्लेन गम्यते मल्लः' इतिवाक्यजन्यशाब्दबोधानन्तरमेव मल्लपदस्य मल्लान्यमल्ले तात्पर्यग्रहे सत्युक्तलक्षणाग्रहः संभवति न तु वाक्यार्थबोधात् पूर्वम्, वाक्यार्थबोधकारणीभूतलक्षणाग्रहेण च वाक्यार्थबोधात्पूर्वमेव भवितव्यं तद-

न्यधीपूर्वं नियमतोऽसंभवात् । न च फलविशेष्यव्यक्तीनां तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगितासंबन्धेन परत्वेऽन्वयात् संबन्धोपस्थितेश्चानपेक्षणान्नाऽनुपपत्तिरिति वाच्यम्, संसर्गतात्पर्यज्ञानानुरोधेन तदुपस्थितेरपि शाब्दबुद्धावऽपेक्षणीयत्वात् । 'तद्व्यक्त्या तद्व्यक्तिर्न गम्यते' इत्यादावभावप्रतियोगिकोटिप्रविष्टतद्व्यक्तित्वावच्छिन्नभिन्नसमवेततद्व्यक्तिसमवेतक्रियाया अप्रसिद्धेः ।

ये तु फलं भेदश्च कर्मप्रत्ययार्थः, फले जन्यतासंबन्धेन भेदे च स्वावच्छिन्नप्रतियोगिताकत्वसंबन्धेन क्रियाया अन्वयः, भेदफलयोश्च कर्मण्याश्रयतासंबन्धेनान्वयः, चैत्रसमवेतक्रियावच्छिन्नभेदस्य चैत्रो नाश्रय इति तादृशक्रियाजन्यफलाश्रयत्वेपि तस्य 'चैत्रेण चैत्रो गम्यते' इति न प्रयोगः । 'मल्लो मल्लेन गम्यते' इत्यादेरेकमल्लादिनिष्ठक्रियावच्छिन्नभेदसहितस्य तज्जन्यफलस्य

---

संभवाद्यमपि पक्षो न युक्त इत्यर्थः । ननु फलविशेष्यव्यक्तीनाम्=प्रथमान्तार्थग्रामादीनां यो भेदरूपपरत्वेऽन्वय उक्तः स तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगितासंबन्धेन कर्तव्य इति तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेद एव भेदपदेन ग्राह्यतां प्राप्तस्तादृशभेदश्च मल्लस्य मल्लान्तरेस्त्येव तद्व्यक्तित्वस्य संबन्धकोटिप्रवेशात्तदुपस्थित्यपेक्षा नास्तीति न 'मल्लेन गम्यते मल्लः' इतिप्रयोगानुपपत्तिरित्याशङ्क्याह— न चेति ।उत्तरमाह—संसर्गतात्पर्येति, संसर्गविषयकतात्पर्यज्ञानापेक्षायां सत्यां संसर्गोपस्थितेरपि शाब्दबोधकारणत्वस्य निर्विवादतया तद्व्यक्तित्वोपस्थितेरप्यपेक्षा प्राप्तैव न च तदुपस्थितिः संभवतीति 'मल्लेन गम्यते मल्लः' इतिप्रयोगानुपपत्तिस्तदवस्थैवेत्यर्थः । दोषान्तरमाह— तद्व्यक्त्येति, 'तद्व्यक्त्या तद्व्यक्तिर्न गम्यते' इत्यत्र प्रथमान्तार्थतद्व्यक्तिभिन्नतद्व्यक्तिसमवेतक्रियाजन्यसंयोगस्याभावः प्रथमान्तार्थतद्व्यक्तौ प्रतीयते प्रतीयमानैतादृशाभावस्य प्रतियोगिकोटौ प्रविष्टं यत् तद्व्यक्तित्वावच्छिन्नं तद्भिन्नसमवेतायाः क्रियायास्तद्व्यक्तिसमवेतत्वं न संभवति तद्व्यक्तिसमवेतायाश्च क्रियायास्तद्व्यक्तित्वावच्छिन्नभिन्नसमवेतत्वं न संभवतीति तद्व्यक्तित्वावच्छिन्नभिन्नसमवेतत्वे सति तद्व्यक्तिसमवेतत्वस्य तत्क्रियायामप्रसिद्धेः 'तद्व्यक्त्या तद्व्यक्तिर्न गम्यते' इतिप्रयोगानुपपत्तिरप्यस्तीत्यर्थः ।

दूषयितुं मतान्तरमनुवदति— ये त्वित्यादिना । फलस्य संयोगादिरूपत्वेन क्रियाजन्यत्वान्यतासंबन्धेन फले क्रियान्वयः । भेदश्च संयोगाद्यनुकूलक्रियावानेति ग्राह्यस्तत्र प्रतियोगी तादृशक्रियावान् प्रतियोगितावच्छेदिका च क्रियैवेति प्रतियोगितायाः क्रियावच्छिन्नत्वात् स्वावच्छिन्नप्रतियोगिताकत्वसंबन्धेन क्रियाया भेदेऽन्वयः स्वं क्रिया । कर्मणि=प्रथमान्तपदार्थे ग्रामादौ । तथा च तस्य=चैत्रस्य चैत्रसमवेतक्रियाजन्यसंयोगादिरूपफलाश्रयत्वेपि संयोगानुकूलक्रियावानेत्याकारको यश्चैत्रसमवेतक्रियावच्छिन्नभेदस्तदाश्रयत्वाभावात् 'चैत्रेण गम्यते चैत्रः' इतिप्रयोगापत्तिर्नास्ति, एकमल्लनिष्ठा या संयोगानुकूलक्रिया तदवच्छिन्नभेदस्य= क्रियावानेत्याकारकस्य भेदस्य तज्जन्यफलस्य=एकमल्लनिष्ठक्रियाजन्यसंयोगरूपफलस्य च मल्लान्तरे=

मल्लान्तरे सत्त्वान्नानुपपत्तिरिति ब्रुवते । तन्मतेपि 'चैत्रेण चैत्रो न गम्यते' इत्यादेरनुपपत्तिर्दुर्वारैव— चैत्रे चैत्रसमवेतक्रियावच्छिन्नभेदाभावसत्त्वेपि तादृशक्रियाजन्यफलाभावस्य बाधात् ।

न च फलाभावो नञा न तत्र प्रत्याय्यः. अपि तु भेदाभाव एव कर्मणीति वाच्यम्, यदा चैत्रेण ग्रामो न गम्यते तदापि तादृशप्रयोगानुपपत्तेः— तादृशभेदाभावस्य ग्रामे बाधात् । न च भेदस्य सामानाधिकरण्यसंबन्धेन फलेऽन्वयस्तादृशसंबन्धेन क्रियावच्छिन्नभेदविशिष्टस्य क्रियाजन्यफलस्यैव चाभावो नञा कर्मणि प्रत्याय्यते इति न दोषः— विशिष्टाभावस्योभयत्र सत्त्वादिति

---

द्वितीयमल्ले सत्त्वात् 'मल्लो मल्लेन गम्यते' इतिप्रयोगानुपपत्तिरपि नास्तीत्यर्थः । उक्तं दोषमुद्घाटयति— तन्मतेपीति । अनुपपत्तौ हेतुमाह— चैत्रेति, संयोगानुकूलक्रियावान्नेत्याकारको भेदश्चैत्रे नास्तीति चैत्रे चैत्रसमवेतक्रियावच्छिन्नभेदाभावस्त्वऽस्ति तादृशक्रियाजन्यसंयोगादिरूपफलस्य चैत्रेपि सत्त्वात् तदभावस्तु नास्तीत्यन्वयः, 'चैत्रेण गम्यते ग्रामः' इत्यादौ प्रथमान्तपदार्थे कर्मभूते ग्रामादावुक्तस्य भेदस्य फलस्य चाश्रयत्वमपेक्ष्यते. अस्ति चात्र ग्रामे तादृशभेदफलयोराश्रयत्वमिति 'चैत्रेण गम्यते ग्रामः' इत्यादिप्रयोग उपपद्यते. नञ्समभिव्याहारस्थले च कर्मभूतप्रथमान्तपदार्थे तादृशभेदफलयोरुभयोरप्यभावोऽपेक्ष्यते 'चैत्रेण चैत्रो न गम्यते' इत्यत्र च प्रथमान्तपदार्थचैत्रे तादृशभेदाभावस्य सत्त्वेपि तादृशफलाभावो नास्ति चैत्रसमवेतक्रियाजन्यसंयोगस्य चैत्रेपि सत्त्वादिति 'चैत्रेण चैत्रो न गम्यते' इतिप्रयोगानुपपत्तिरस्त्येवेति भावः ।

ननु तत्र='चैत्रेण चैत्रो न गम्यते' इत्यत्र कर्मणि=प्रथमान्तार्थचैत्रे नञा फलाभावविषयकबोध इष्ट एव नास्ति येन चैत्रे चैत्रसमवेतक्रियाजन्यसंयोगरूपफलाभावस्योक्तरीत्या बाधादनुपपत्तिः स्यात् किं तु भेदाभावविषयकबोध एवेष्टः स तु नञा संभवत्येव चैत्रे उक्तभेदाभावस्य सत्त्वादेवेत्याशङ्क्याह— न चेति । परिहारमाह— यदेति, यदि नञा कर्मणि त्वदुक्तरीत्या भेदाभाव एव प्रत्याय्यते तदा यदा चैत्रेण ग्रामो न गम्यते तदापि तादृशप्रयोगस्य='चैत्रेण ग्रामो न गम्यते' इतिप्रयोगस्यानुपपत्तिः स्यात्— संयोगानुकूलक्रियाया ग्रामेऽसत्त्वेन संयोगानुकूलक्रियावान्नेति भेदस्यैव ग्रामे सत्त्वात् तादृशभेदाभावस्य चासत्त्वात् कथं कर्मभूतग्रामे नञा तादृशभेदाभावः प्रत्याय्येतेत्यर्थः । ननु ग्रामादौ भेदफलयोः सामानाधिकरण्यमस्त्येवेति तादृशसंबन्धेन=सामानाधिकरण्यसंबन्धेन क्रियावच्छिन्नस्य यो भेदस्तद्विशिष्टस्य क्रियाजन्यफलस्यैवाभावो नञा प्रत्याय्यते इति न दोषः='चैत्रेण चैत्रो न गम्यते' 'चैत्रेण ग्रामो न गम्यते' इति प्रयोगयोरनुपपत्तिर्नास्तीत्यर्थः । दोषाभावे हेतुमाह— विशिष्टेति । उभयत्रेति— 'चैत्रेण चैत्रो न गम्यते' इत्यत्र चैत्रे शुद्धफलाभावस्य बाधेपि भेदाभावस्य सत्त्वेन तादृशभेदविशिष्ट (समानाधिकरण )फलस्य बाधेन तादृशभेदविशिष्टफलाभावस्य बाधो नास्तीति नञा प्रत्यायनं संभवत्येवेति न

वाच्यम्, एवमपि मल्लेन यत्रापरमल्लो न गम्यते. अपि तु ग्रामादिरेव तत्र ग्रामाद्यऽगन्तरि मल्ले मल्लान्तरनिष्ठक्रियावच्छिन्नभेदसहितस्य स्वात्मकमल्लनिष्ठ-क्रियाजन्यग्रामादिसंयोगस्य सत्त्वेन विशिष्टाभावबाधात् 'मल्लेन मल्लो न गम्यते' इत्यादेरनुपपत्तिः ।

यदि च फलमेव कर्माख्यातार्थस्तस्याऽऽश्रयत्वस्वानुकूलक्रियावच्छिन्नभेदवत्त्वो-भयसंबन्धेन कर्मण्यऽन्वयः, नञ्समभिव्याहारे च तदुभयसंबन्धावच्छिन्नक्रिया-

---

: चैत्रेण चैत्रो न गम्यते ' इतिप्रयोगानुपपत्तिः, ' चैत्रेण ग्रामो न गम्यते ' इत्यत्र च ग्रामे उक्तभेदस्यैव सत्त्वेन भेदाभावस्य बाधेपि तादृशभेदविशिष्टफलाभावस्य बाधो नास्त्येव— ग्रामे चैत्रसमवेतक्रियाजन्यसंयोगस्याऽसत्त्वादिति तादृशभेदविशिष्टफलाभावो ग्रामे नञा प्रत्याययितुं शक्यते एवेति न ' चैत्रेण ग्रामो न गम्यते ' इतिप्रयोगानुपपत्तिरपीत्याशङ्क्याह— न चेति । परिहारमाह— एवमपीति, उक्तरीत्या नञा भेदसहितफलाभावबोधनेपि यत्र मल्लेन मल्लो न गम्यते किं तु ग्रामो गम्यते तत्र ' मल्लेन मल्लो न गम्यते ' इतिप्रयोगानुपपत्तिरस्त्येवेत्यन्वयः । अत्र हेतुमाह— ग्रामाद्यगन्तरीति, ग्रामाद्यगन्तरि मल्ले मल्लान्तरनिष्ठा=ग्रामादिगन्तृमल्लनिष्ठा या क्रिया तदवच्छिन्नो यः क्रियावान्नेतिभेदः स वर्तते एव. अथ च ग्रामाद्यगन्तरि मल्ले मल्लत्वेन रूपेण स्वात्मको यो ग्रामगन्ता मल्लस्तन्निष्ठो यः क्रियाजन्यो ग्रामादिसंयोगस्तस्यापि सत्त्वाद् भेदसमानाधिकरणः संयोग एव प्राप्तो न तु तादृशविशिष्टस्य=भेदसहितस्य संयोगस्याभाव इति नञा तादृशविशिष्टाभावस्याऽसतो बोधनासंभवात् ' मल्लेन मल्लो न गम्यते ' इति प्रयोगो नोपपद्यते इत्यर्थः । यद्यप्यत्र ग्रामसंयोगो ग्रामगन्तृमल्ले एव नाऽगन्तृमल्लेपि तथापि ग्रामगन्तृमल्लस्य स्वात्मकत्वात् ( मल्लत्वेन रूपेण ग्रामागन्तृमल्लरूपत्वात् ) ग्रामगन्तृमल्लनिष्ठो ग्रामसंयोगो ग्रामाऽगन्तृमल्लेऽस्त्येव—मल्लत्वावच्छिन्नसमवेतस्यैव संयोगस्यात्र ग्राह्यत्वाद् अत एवोक्तम्— " स्वात्मकमल्लनिष्ठ " इति । " ग्रामाद्यगन्तरि " इत्यस्य स्थाने " ग्रामादिगन्तरि " इति पाठस्तु प्रामादिक एव प्रतिभाति— प्रथमान्तमल्लपदार्थे एव विशिष्टाभावबाधस्य प्रतिपाद्यत्वात् तस्मिन् ग्रामगन्तृत्वाभावादित्यवधेयम् । " ग्रामादिगन्तरि " इतिपाठस्य साधुत्वे तु एको मल्लः प्रथमं ग्रामं गच्छति द्वितीयश्च तत्पश्चाद् ग्राममेव गच्छति नाग्रेसरमल्लं तत्र यो ग्रामादिगन्ता नाम प्रथमं ग्रामं गन्ता स एव प्रथमान्तमल्लपदार्थस्तस्मिन् ग्रामादिगन्तरि मल्ले उक्तरीत्या मल्लान्तरनिष्ठक्रियावच्छिन्नभेदसहितस्य स्वात्मकमल्लनिष्ठक्रियाजन्यग्रामादिसंयोगस्य सत्त्वेन विशिष्टाभावबाधात् ' मल्लेन मल्लो न गम्यते ' इत्यादेरनुपपत्तिरित्येवं ग्रन्थाभिप्रायो विज्ञेयः । अत्र पश्चाद् ग्रामगन्ता तृतीयान्तमल्लपदार्थः ।

दूषयितुं मतान्तरमनुवदति— यदीत्यादिना, तस्य=संयोगादिरूपफलस्य । कर्मणि=ग्रामादौ । ग्रामादावाश्रयत्वमपि वर्तते स्वं फलं तज्जनकक्रियावच्छिन्नो यः क्रियावान्नेति भेदः सोपि वर्तते एवेत्येतादृशोभयसंबन्धेन ग्रामादौ फलान्वय इष्टः । ' मल्लेन मल्लो न गम्यते ' इत्यादिनञ्सम-

जन्यफलाभाव एव तत्रान्वेतीत्युच्यते ?, तदापि यत्र चैत्रमैत्रयोरुभयकर्मजसंयोगस्तत्र चैत्रनिष्ठतादृशसंयोगस्य चैत्रे आश्रयत्वस्वानुकूलक्रियावच्छिन्नभेदवत्त्वोभयसंबन्धेन सत्त्वात् 'चैत्रेण चैत्रो न गम्यते' इत्यस्यानुपपत्तिः 'चैत्रेण चैत्रो गम्यते' इत्यापत्तिश्च।

अत्रोच्यते- भेदः फलं च कर्माख्यातार्थः, स्वावच्छिन्नप्रतियोगिताकत्वसंबन्धेन चैत्रादिनिष्ठक्रियाविशेषितभेदस्य स्वसामानाधिकरण्यस्वप्रतियोगितावच्छेदकजन्यत्वोभयसंबन्धेन फलेन्वयः, विशिष्टफलस्य नञऽसमभिव्याहारे विशिष्टफलाभावस्य नञ्समभिव्याहारे च कर्मण्यऽन्वयः। चैत्रमैत्रयोरुभयकर्मजसंयोगस्थले चैत्रवृत्तिक्रियावच्छिन्नभेदस्य चैत्रेऽसत्त्वेन विशिष्टफलाभावोऽक्षतः।

---

भिव्याहारे चोक्तोभयसंबन्धेन क्रियाजन्यफलाभाव एव तत्र=प्रथमान्तार्थकर्मण्यऽन्वेति=नञा बोध्यते इत्यन्वयस्तथा च 'मल्लेन मल्लो न गम्यते' इत्यत्र मल्ले मल्लान्तरनिष्ठक्रियाजन्यसंयोगो नास्तीति तदभाव एव नञा बोध्यते इति नैतत्प्रयोगानुपपत्तिरित्यर्थः। अत्र दोषमुद्‌घाटयति- तदापीति, चैत्रनिष्ठस्य तादृशसंयोगस्य=उभयकर्मजसंयोगस्य चैत्रे आश्रयत्वस्वानुकूलक्रियावच्छिन्नभेदवत्त्वोभयसंबन्धेन सत्त्वमेवास्ति- चैत्रे आश्रयत्वस्यापि सत्त्वात् तादृशसंयोगजनिका या मैत्रनिष्ठा क्रिया तदवच्छिन्नो यो मैत्रनिष्ठक्रियावान्नेतिभेदस्तस्यापि च सत्त्वादिति नञा तदुभयसंबन्धावच्छिन्नफलाभावस्य चैत्रे बोधनासंभवात् 'चैत्रेण चैत्रो न गम्यते' इतिप्रयोगो नोपपद्येत. चैत्रे तादृशसंयोगस्य सत्त्वेन 'चैत्रेण चैत्रो गम्यते' इतिप्रयोगश्चापद्येतेत्यर्थः।

निर्वक्तुमारभते- अत्रोच्यत इत्यादिना, भेदः फलं च पृथक् पृथगेव कर्माख्यातार्थ इत्यर्थः। क्रियाविशेषितभेदस्य=क्रियाविशिष्टभेदस्य। स्वं क्रिया, क्रियावान्नेतिभेदस्य प्रतियोगितावच्छेदिका क्रियैवेति स्वावच्छिन्नप्रतियोगिताकत्वसंबन्धेन क्रियाया भेदेऽन्वयस्तादृशक्रियाविशिष्टभेदस्य च स्वसामानाधिकरण्यस्वप्रतियोगितावच्छेदकजन्यत्वैतदुभयसंबन्धेन फलेऽन्वयः, यत्र ग्रामादौ फलं भवति तत्रैव भेदोपीति फले भेदसामानाधिकरण्यमप्यस्ति भेदस्य प्रतियोगितावच्छेदकीभूता या क्रिया तज्जन्यत्वमपि संबन्धभूतमस्त्येव. स्वं स्वं भेदः। तादृशोभयसंबन्धेन भेदविशिष्टफलस्य 'चैत्रेण गम्यते ग्रामः' इत्यादौ नञऽसमभिव्याहारे कर्मणि ग्रामादावन्वयः, 'चैत्रेण चैत्रो न गम्यते' इत्यादौ नञ्समभिव्याहारे च कर्मणि प्रथमान्तार्थे चैत्रादावुक्तोभयसंबन्धेन भेदविशिष्टस्य फलस्याभावोऽन्वेति तथा च चैत्रमैत्रयोरुभयकर्मजसंयोगस्थले चैत्रे चैत्रवृत्तिक्रियावच्छिन्नभेदः=चैत्रवृत्तिक्रियावान्नेतिभेदो नास्तीति चैत्रनिष्ठसंयोगे तादृशभेदसामानाधिकरण्यमपि न संभवतीति चैत्रे भेदसमानाधिकरणस्य विशिष्टफलस्य संयोगस्याभावोस्त्येव स एव संयोगाभावो नञा प्रत्याय्यते इति 'चैत्रेण चैत्रो न गम्यते' इतिप्रयोगस्यानुपपत्तिर्नास्ति, चैत्रे भेदसमानाधिकरणसंयोगस्यासत्त्वात् 'चैत्रेण चैत्रो गम्यते' इतिप्रयोगस्यापत्तिरपि

यत्र मल्लेन ग्रामो गम्यते न तु मल्लान्तरं तत्र मल्लनिष्ठग्रामसंयोगे मल्लान्तरनिष्ठक्रियावच्छिन्नभेदसामानाधिकरण्यस्य तन्मल्लान्तर्भावेन सत्त्वेपि तादृशभेदप्रतियोगितावच्छेदकमल्लान्तरनिष्ठक्रियाजन्यत्वस्याऽसत्त्वात् तद्घटितोभयसंबन्धेन मल्लनिष्ठक्रियावच्छिन्नभेदविशिष्टस्य फलस्याभावो मल्लेऽक्षत एवेति न कश्चिद् दोषः ।

कर्तृप्रत्ययस्थले चाधेयतया प्रकृत्यर्थान्वितस्य फलस्य भेदरूपाऽपरार्थे सामानाधिकरण्यस्वजनकक्रियावच्छिन्नप्रतियोगिताकत्वोभयसंबन्धेनान्वयः, तादृशभेदस्य च स्वप्रतियोगितावच्छेदकत्वसंबन्धेन क्रियायाम् । यत्र चैत्रक्रियया

---

नास्तीत्यर्थः । " एवमपि मल्लेन यत्रापरमल्लो न गम्यते " इत्याद्युक्तदोषं परिहरति—त्रेति, उक्तस्थले मल्लनिष्ठग्रामसंयोगे नाम प्रथमान्तार्थमल्लनिष्ठग्रामसंयोगे तन्मल्लान्तर्भावेन=तृतीयान्तार्थमल्लान्तर्भावेन मल्लान्तरनिष्ठा=तृतीयान्तार्थग्रामगन्तृमल्लनिष्ठा या गमनक्रिया तदवच्छिन्नः=तादृशक्रियावच्छिन्नप्रतियोगिताको यः क्रियावान्नेत्याकारकभेदस्तादृशभेदसामानाधिकरण्यमस्त्येव एतादृशभेदस्य ग्रामसंयोगस्य च प्रथमान्तार्थमल्ले सत्त्वादेव अथापि एतादृशस्य प्रथमान्तार्थमल्लनिष्ठस्य भेदस्य प्रतियोगितावच्छेदकीभूता या मल्लान्तरनिष्ठा=तृतीयान्तार्थमल्लनिष्ठा क्रिया तज्जन्यत्वं तु नास्ति— प्रथमान्तार्थमल्लनिष्ठग्रामसंयोगस्य प्रथमान्तार्थमल्लसमवेतग्रामगमनक्रियाजन्यत्वात् तथा च फले स्वप्रतियोगितावच्छेदकजन्यत्वस्य संबन्धैकदेशस्याभावात् उक्तोभयसंबन्धेन फले भेदान्वयो न संभवतीति तद्घटितोभयसंबन्धेन=उक्तजन्यत्वघटितोभयसंबन्धेन मल्लनिष्ठा=तृतीयान्तार्थमल्लनिष्ठा या क्रिया तदवच्छिन्नभेदविशिष्टं यत्फलं संयोगस्तदभावः प्रथमान्तार्थमल्लेऽक्षत एवेति तादृशफलाभावमादाय न कश्चिद्दोषः=' मल्लेन मल्लो न गम्यते ' इतिप्रयोगस्यानुपपत्तिर्नास्तीत्यर्थः । वस्तुतस्तु " तन्मल्लान्तर्भावेन " इति विशेषणस्य सार्थक्यं चिन्त्यम् ।

कर्माख्यातार्थमुक्त्वा संप्रति कर्तृप्रत्ययस्थले=' चैत्रो ग्रामं गच्छति ' इत्यादौ कर्मप्रत्ययस्य द्वितीयाया अर्थमाह— कर्तृप्रत्ययेति, प्रकृत्यर्थस्य ग्रामादेः फले=संयोगादावाधेयत्वसंबन्धेनान्वयो भवतीत्याधेयतया प्रकृत्यर्थान्वितस्य फलस्य भेदरूपे कर्मप्रत्ययार्थे सामानाधिकरण्यस्वजनकक्रियावच्छिन्नप्रतियोगिताकत्वैतदुभयसंबन्धेनान्वयो भवति— फलं भेदश्च कर्मप्रत्ययार्थ इत्युक्तमेव ग्रामे संयोगादिरूपफलमपि भवति क्रियावान्नेतिभेदोपि भवतीति भेदे फलसामानाधिकरण्यं वर्तते स्वं फलं क्रियावान्नेतिभेदप्रतियोगिनि चैत्रादौ प्रतियोगितापि वर्तते क्रियापि वर्तते सैव च क्रिया फलजनिकेति प्रतियोगिता स्वजनकक्रियावच्छिन्ना जातेति भेदे स्वजनकक्रियावच्छिन्नप्रतियोगिताकत्वमपि वर्तते इति तादृशोभयसंबन्धेन फलस्य भेदेऽन्वयः, तादृशभेदस्य=उक्तोभयसंबन्धेन फलविशिष्टभेदस्य स्वप्रतियोगितावच्छेदकत्वसंबन्धेन क्रियायाम्=संयोगादिरूपफलजनकक्रियायामन्वयः, स्वं भेदः भेदप्रतियोगितावच्छेदकत्वं क्रियायामस्ती-

ग्रामे न संयोगः अपि त्वन्यत्र तत्र 'ग्रामं गच्छति चैत्रः' इतिप्रयोगवारणाय स्वजनकक्रियावच्छिन्नप्रतियोगिताकत्वस्य. 'चैत्रो ग्रामं गच्छति' इत्यादौ 'चैत्रश्चैत्रं गच्छति' इतिप्रयोगवारणाय सामानाधिकरण्यस्य. संबन्धमध्ये निवेशः। चरमस्थले चैत्रग्रामसंयोगस्य ग्रामनिष्ठचैत्रक्रियावच्छिन्नभेदे संबन्धद्वयसत्त्वेपि चैत्रवृत्तित्वविशिष्टस्य तत्संयोगस्य तादृशभेदे सामानाधिकरण्यविरहाच्चैत्रक्रियायां तद्भेदप्रतियोगितावच्छेदकत्वसत्त्वेपि नातिप्रसङ्गः।

---

त्युक्तमेव, तथा च 'ग्रामं गच्छति चैत्रः' इत्यत्राधेयतासंबन्धेन ग्रामविशिष्टो यः संयोगस्तद्विशिष्टो यो भेदस्तद्विशिष्टा या क्रिया तादृशक्रियानुकूलकृतिमांश्चैत्र इतिशाब्दबोधाकार इत्यन्वयः। फलस्य भेदे यः सामानाधिकरण्यस्वजनकक्रियावच्छिन्नप्रतियोगिताकत्वैतदुभयसंबन्धेनान्वय उक्तस्तत्रैतादृशसंबन्धकल्पनायाः फलमाह—यत्रेति, यदि फलस्य भेदे केवलसामानाधिकरण्यसंबन्धेनान्वय उक्तः स्यात्तदा यदा चैत्रक्रियया ग्रामे न संयोगः. अपि त्वन्यत्रैव संयोग उत्पन्नस्तदापि 'ग्रामं गच्छति चैत्रः' इतिप्रयोगः स्यात्— ग्रामे क्रियावान्नेति भेदस्यापि सत्त्वात् तादृशभेदे सामानाधिकरण्यसंबन्धेन ग्रामे यश्चैत्रान्यवृत्तिक्रिययोत्पन्नः संयोगस्तदन्वयसंभवात् तादृशसंयोगविशिष्टभेदस्य क्रियायामन्वयसंभवात् तादृशक्रियायाश्चैत्रे सत्त्वादेव, यदा च स्वजनकक्रियावच्छिन्नप्रतियोगिताकत्वस्य संबन्धे निवेशस्तदा ग्रामवृत्तितादृशसंयोगस्य चैत्रवृत्तिक्रियायां जनकत्वं नास्तीति भेदे स्वजनकक्रियावच्छिन्नप्रतियोगिताकत्वस्याभावात् तेन संबन्धेन भेदे फलान्वयो न संभवतीति तादृशभेदविशिष्टक्रियायाश्चैत्रेऽसत्त्वान्नोक्तस्थले 'चैत्रो ग्रामं गच्छति' इतिप्रयोगापत्तिरित्यर्थः। उक्तसंबन्धे सामानाधिकरण्यनिवेशस्य फलमाह— चैत्र इत्यादिना यदि फलस्य भेदे केवलस्वजनकक्रियावच्छिन्नप्रतियोगिताकत्वसंबन्धेनान्वय उक्तः स्यात्तदा यदा चैत्रो ग्रामं गच्छति तदा 'चैत्रश्चैत्रं गच्छति' इत्यपि प्रयोगः स्यात्— ग्रामवृत्तिर्यः क्रियावान्नेतिभेदस्तत्प्रतियोगितावच्छेदकीभूतायाश्चैत्रनिष्ठायाः क्रियायाश्चैत्रवृत्तिसंयोगजनकत्वात् फलस्य भेदे स्वजनकक्रियावच्छिन्नप्रतियोगिताकत्वसंबन्धेनान्वयसंभवात् तादृशफलविशिष्टभेदस्य चैत्रवृत्तिक्रियायामन्वयसंभवात्, यदा च सामानाधिकरण्यस्य संबन्धे निवेशस्तदा भेदस्तु ग्रामे एव चैत्रवृत्तिसंयोगश्च चैत्रे एवेति भेदफलयोः सामानाधिकरण्याभावान्नोक्तस्थले 'चैत्रश्चैत्रं गच्छति' इतिप्रयोगापत्तिरित्यर्थः, एतदापत्तिपरिहारं स्वयमप्याह—चरमेति। यद्यपि यः खलु चैत्रग्रामसंयोगस्तस्य ग्रामनिष्ठे चैत्रवृत्तिक्रियावच्छिन्नभेदे उक्तसंबन्धद्वयमस्ति—उभयोरपि भेदसंयोगयोर्ग्रामे सत्त्वादेव चैत्रवृत्तिक्रियायां च तादृशभेदप्रतियोगितावच्छेदकत्वमप्यस्ति तथापि चैत्रवृत्तित्वविशिष्टस्य=चैत्रवृत्तिग्रामसंयोगस्य तादृशभेदे सामानाधिकरण्यं नास्ति— संयोगस्य चैत्रवृत्तित्वाद् भेदस्य ग्रामवृत्तित्वादिति चैत्रे ग्रामं गच्छति 'चैत्रश्चैत्रं गच्छति' इति प्रयोगापत्तिर्नास्तीत्यन्वयः।

'चैत्रश्चैत्रं न गच्छति' इत्यादौ च तादृशभेदान्वितक्रियाकर्तृत्वाभाव एव चैत्रे प्रतीयते न तु क्रियायां द्वितीयार्थविशिष्टभेदस्य प्रतियोगितावच्छेदकत्वसंबन्धावच्छिन्नाभावः-तादृशसंबन्धस्य वृत्त्यनियामकत्वात् । यदि तात्पर्यविशेषवशात् क्रियानुयोगिकोप्यभावः क्वचित् प्रतीयते इत्यनुभवसिद्धम् ? तदा प्रतियोगितावच्छेदकत्वेपि द्वितीयाद्यर्थत्वमुपगम्य विशिष्टभेदप्रतियोगितावच्छेदकत्वाभावान्वय एव तत्रोपगन्तव्य इति दिक् ।

फलावच्छिन्नव्यापारबोधकधातूनां फले व्यापारे च शक्तिद्वयम् । कर्त्राख्यातस्थले फलं धात्वर्थव्यापारविशेषणतया भासते तत्र द्वितीयार्थाधेयत्वान्वयः । कर्माख्यातस्थले फलं धात्वर्थव्यापारस्य विशेष्यतया भासते. तस्य विशेष्यतयाऽऽख्यातार्थ आश्रयत्वम् ( भासते ) तद्विशेष्यतया कर्म ( भासते ) इतिदीधितिकृतः ।

केचित्तु संयोगादिरूपफलावच्छिन्नव्यापारबोधकानां गमिप्रभृतीनां कर्म-

---

नञ्समभिव्याहारस्थलीयोपपत्तिमाह- चैत्र इति, 'चैत्रश्चैत्रं न गच्छति' इत्यत्र च स्वप्रतियोगितावच्छेदकत्वसंबन्धेन तादृशभेदविशिष्टायाः क्रियायाः कर्तृत्वाभाव एव चैत्रे प्रतीयते अस्ति चात्र चैत्रे चैत्रवृत्तिसंयोगविशिष्टभेदविशिष्टक्रियाकर्तृत्वाभाव इति नानुपपत्तिः, न तूक्तस्थले क्रियायां द्वितीयार्थेन फलेन संयोगेन विशिष्टभेदस्य स्वप्रतियोगितावच्छेदकत्वसंबन्धेनाभावः प्रतीयते तादृशसंबन्धस्य=प्रतियोगितावच्छेदकत्वसंबन्धस्य वृत्त्यनियामकत्वेनाऽभावीयप्रतियोगितावच्छेदकत्वाऽभावादित्यर्थः । पक्षान्तरमाह- यदीति, यदि तात्पर्यविशेषवशात् क्वचित् क्रियानुयोगिकोप्यभावः=क्रियायामुक्तद्वितीयार्थविशिष्टभेदस्याभावः प्रतीयते तदा प्रतियोगितावच्छेदकत्वस्यापि द्वितीयादिकर्मप्रत्ययार्थत्वमुपगम्य 'चैत्रश्चैत्रं न गच्छति' इत्यादौ तत्र=चैत्रादिवृत्तिक्रियायामुक्तद्वितीयार्थविशिष्टभेद ( फलविशिष्टभेद ) प्रतियोगितावच्छेदकत्वस्यैवाभावः स्वीकर्तव्यो न तु प्रतियोगितावच्छेदकत्वसंबन्धेनोक्तभेदाभावः-प्रतियोगितावच्छेदकत्वसंबन्धस्य वृत्त्यनियामकत्वादित्यर्थः ।

दीधितिकारमतमाह- फलावच्छिन्नेति, गम्यादीनां संयोगादिरूपफलावच्छिन्नव्यापारबोधकत्वं पूर्वमेवोक्तम् । कर्त्राख्यातस्थले=' ग्रामं गच्छति चैत्रः ' इत्यादौ । तत्र=फले । ' ग्रामवृत्तिसंयोगजनकव्यापारानुकूलकृतिमांश्चैत्रः ' इतिबोधोदयात् फलस्य व्यापारविशेषणत्वं स्पष्टमेव । कर्मेति- कर्माख्यातस्थले=' चैत्रेण गम्यते ग्रामः ' इत्यादौ । तस्य=संयोगादिरूपफलस्य । भासते इत्यनुवर्तनीयम् । तद्विशेष्यतया=आश्रयत्वविशेष्यतया । अत्रापि भासते इत्यनुवर्तनीयम् । अत्र ' चैत्रवृत्तिव्यापारजन्यसंयोगाश्रयत्ववान् ग्रामः ' इतिबोधोदयाद् व्यापारविशेष्यत्वं संयोगे संयोगविशेष्यत्वमाश्रयत्वे आश्रयत्वविशेष्यत्वं कर्मणि ग्रामे स्पष्टमेवेत्यन्वयः ।

परिहाराय मतान्तरमनुवदति- केचित्त्विति । गम्यादीनां संयोगाद्यनुकूलव्यापारबोध-

प्रत्ययापेक्षया बहूनां फले शक्तिकल्पनामपेक्ष्य कर्मप्रत्ययानां फले शक्तिकल्पनमेव लघीयः, धातूनां च व्यापारमात्रवाचिता। धातोः फलबोधकतामते नामार्थधात्वर्थयोराधाराधेयभावसंबन्धेन साक्षादन्वयासंभवात् फलाश्रयत्वस्य कर्मणि प्रकारतया भानस्योपगन्तव्यतया तत्संसर्गस्याधिकस्य भानकल्पनेनापि गौरवम्, फलस्य प्रत्ययार्थत्वे च तदाश्रयत्वं संबन्ध एवेति लाघवम्।

न च धातूनां व्यापारमात्रवाचित्वे 'ग्रामं त्यजति' इत्यादितोपि 'ग्रामं गच्छति' इत्यादित इव संयोगादिरूपफलावच्छिन्नस्पन्दबोधापत्तिः, 'ग्रामस्त्यज्यते' इत्यादितोपि 'ग्रामो गम्यते' इत्यत इव स्पन्दजन्यसंयोगादिमत्त्वेन भानप्रसङ्ग इति वाच्यम्, कर्मप्रत्ययस्य संयोगविभागादिरूपनानाफलवाचित्वेपि तत्तत्फलबोधे धातुविशेषसमभिव्याहारज्ञानस्यापेक्षयाऽतिप्रसङ्गविरहात्। 'त्यज-

---

कत्वात् संयोगादिरूपफलावच्छिन्नव्यापारबोधकत्वम्। कर्मप्रत्ययानां संख्या न्यूनास्ति तदपेक्षया गम्यादीनां संख्याऽधिकास्तीत्युक्तम्—"बहूनाम्" इति। एवकारो भिन्नक्रम इति कर्मप्रत्ययानामेवेत्यन्वयः। धातोः फलबोधकतामते गौरवं प्रदर्शयति— धातोरिति, नामार्थस्य=कर्मभूतग्रामादेः, धात्वर्थस्य=फलरूपसंयोगादेश्च परस्परं साक्षाद् भेदेनान्वयासंभवात् फलस्य प्रत्ययार्थाश्रयत्वेऽन्वयः कर्तव्यः फलाश्रयत्वस्य कर्मणि ग्रामादौ प्रकारतयान्वयः कर्तव्य इति तत्संसर्गस्य=फलाश्रयत्वसंबन्धस्याप्यधिकस्य शाब्दबोधविषयत्वं स्यादिति गौरवम्, फलस्य प्रत्ययार्थत्वस्वीकारे तु प्रत्ययार्थत्वात् फलस्य ग्रामादौ कर्मण्याश्रयत्वसंबन्धेन साक्षादन्वयः संभवति बाधकाभावात् धात्वर्थनामार्थयोरेव साक्षाद् भेदान्वयस्य व्युत्पत्तिविरुद्धत्वात् संबन्धभूताश्रयत्वस्य संबन्धान्तरभानकल्पनापत्तिर्नास्तीत्यस्मन्मते लाघवमिति कर्मप्रत्ययानामेव फले शक्तिर्न तु गम्यादिधातूनामित्यर्थः।

ननु तव मते धातूनां व्यापारमात्रवाचकत्वात् तादृशव्यापारमात्रबोधकत्वस्य त्यजिगमिप्रभृतिषु सर्वेष्वेव धातुषु साधारणत्वात् 'गच्छति' इत्यत इव 'त्यजति' इत्यतोपि संयोगानुकूलव्यापारबोधः स्यात् 'गम्यते' इत्यत इव 'त्यज्यते' इत्यतोपि ग्रामादेः संयोगादिमत्त्वेन भानं स्यादित्याशङ्क्याह— न चेति। उत्तरमाह— कर्मप्रत्ययस्येति, यद्यपि कर्मप्रत्ययस्यैव फलवाचकत्वं न तु धातूनां तथापि कर्मप्रत्ययस्य संयोगविभागादिरूपफलबोधने धातुविशेषसमभिव्याहारज्ञानस्यापेक्षास्तीति गमिसमभिव्याहारे कर्मप्रत्ययेन संयोगरूपमेव फलं बोध्यते त्यजिसमभिव्याहारे च कर्मप्रत्ययेन विभागरूपमेव फलं बोध्यते इत्युक्तस्य धातूनां समानाकारबोधजनकत्वस्यातिप्रसङ्गः=आपत्तिर्नास्तीत्यर्थः। पूर्वोत्तरपक्षौ चैतौ परस्परमसंबद्धार्थकाविति विभावनीयम्। किं वा वाक्यान्तरयोजनया व्याख्येयौ। ननु 'ग्रामं गच्छति' 'ग्रामं त्यजति' इत्यादिकर्मसमभिव्याहारस्थले कर्मप्रत्ययेन संयोगादिरूपफलविशेषोपस्थितौ धातूनां तदनुकूलव्यापारबोधकत्वेन त्वदुक्तरीत्या [illegible] संभवति यत्र हि '[illegible]ति' 'गच्छति' इत्यादौ कर्मस-

ति ' ' गच्छाति '- ' स्पन्दते ' ' त्यागः ' ' गमनम् ' ' स्पन्दः ' इत्यादौ कर्मासमभिव्याहृते बोधवैलक्षण्यं च तत्तद्धातूनां फलविशेषावच्छिन्नव्यापारलक्षणोपगमेनोपपादनीयम् । फलान्वितस्वार्थव्यापारबोधकत्वं सकर्मकत्वं गम्यादेः स्वभावाधीनं तदभावात् स्पन्दिप्रभृतिष्वऽकर्मकत्वव्यवहार इत्याहुः।

तन्न- यागमिप्रभृतीनामिव त्यजिगमिप्रभृतीनामपि पर्यायतेतिभ्रमदशायाम् ' याति ' ' गच्छाति ' इत्यादाविव ' त्यजति ' ' गच्छाति ' इत्यादितोप्यऽविलक्षणबोधोत्पत्त्या धातुविशेषसमभिव्याहारस्य फलविशेषबोधनियामकताकल्पनाऽसंभवात् । न च ' ग्रामं त्यजति ' इत्यादितः संयोगावच्छिन्नव्यापारबोधस्तात्पर्यसत्त्वे इष्यत एव- त्वन्मतेपि तात्पर्यानुरोधेन लक्षणया तद्बोधोत्पत्तेराऽवश्यकत्वात्, परं तु तत्र विभागादिरूपफले एव फलप्रत्ययतात्पर्यस्यानादितया संयोगादिरूपफलप्रत्यायनेच्छया स्वरसतो न तादृशप्रयोग इति वाच्यम्, विना

---

मभिव्याहारो नास्ति तत्र कथं धातूनां विलक्षणबोधजनकत्वव्यवस्था स्यात् ? व्यापारमात्रवाचकत्वेन त्यजिगम्यादीनां समानाकारबोधजनकत्वप्रसङ्गादित्याशङ्क्याह- त्यजतीति, कर्मसमभिव्याहाराभावस्थले गम्यादीनां संयोगादिरूपफलविशेषानुकूलव्यापारे लक्षणा स्वीकार्येति न समानाकारकबोधजनकत्वप्रसङ्ग इत्यर्थः । ननु धातूनां व्यापारमात्रवाचकत्वे गम्यादीनां स्पन्द्यादीनां च तुल्यत्वप्राप्त्या स्पन्द्यादीनामपि सकर्मकत्वं स्यान्न चैतदिष्टमित्याशङ्क्याह- फलान्वितेति, गम्यादीनां व्यापारमात्रवाचकत्वेपि जनकतासंबन्धेन फलान्वितस्वार्थव्यापारबोधकत्वं नैसर्गिकमेवेति गम्यादीनां सकर्मकत्वं स्पन्द्यादिषु तु तदभावात्=फलान्वितव्यापारबोधकत्वं नास्तीति न तेषां सकर्मकत्वं किं त्वऽकर्मकत्वमेवेत्यर्थः । स्पन्द्यादिबोध्यव्यापारे जनकतासंबन्धेनापि फलान्वयो न संभवतीति तेषामकर्मकत्वमिति यावत् ।

धातोर्व्यापारमात्रवाचितामतं परिहरति- तन्नेति, येतिगमनार्थको धातुः । पर्यायताभ्रमदशायां त्यजिगम्योः समानाकारकबोधजनकत्वं सर्वप्रसिद्धमेवेति धातुविशेषसमभिव्याहारस्य फलविशेषबोधनियामकत्वं त्वदुक्तं न संभवति- ' त्यजति ' इत्यत्रोक्तपर्यायताभ्रमदशायां गमिसमभिव्याहाराभावेपि संयोगरूपफलबोधस्येष्टत्वादिति न धातूनां व्यापारमात्रवाचिता किं तु फलवाचकतापि स्वीकार्येति फलानां संयोगादीनां विलक्षणत्वाद् धातूनां विलक्षणबोधजनकत्वं सिध्यतीत्यर्थः । शङ्कते- न चेति, तद्बोधोत्पत्तेः=त्यज्यादिभ्यः संयोगाद्यवच्छिन्नव्यापारबोधोत्पत्तेः । ननु यदि त्यजधातोस्तात्पर्यसत्त्वे संयोगावच्छिन्नव्यापारबोधकत्वं त्वन्मतेस्ति तदा ' ग्रामं गच्छति ' इत्यस्य स्थाने स्वरसतः ' ग्रामं त्यजति ' इतिप्रयोगस्त्वया कथं न क्रियते ? इत्याशङ्क्याह- परं त्विति, ' ग्रामं त्यजति ' इत्यत्र फलप्रत्ययतात्पर्यस्य=कर्मप्रत्ययस्यानादितात्पर्यं विभागरूपफले एवास्तीति न संयोगरूपफलप्रत्यायनेच्छया स्वरसतस्तादृशप्रयोगः= ' ग्रामं त्यजति ' इति प्रयोगो भवतीत्यर्थः । परिहारमाह- विनेति । धातोरिति- धातोः

शक्तिभ्रमं लक्षणाग्रहं च 'ग्रामं त्यजति' इत्यादितः सत्यपि तात्पर्ये संयोगावच्छिन्नव्यापाराऽप्रतीतेरानुभविकतया धातोः फलविशेषवाचिताया आवश्यकत्वात्।

'ज्ञायते इष्यते क्रियते घटः' इत्यादौ विषयत्वरूपं कर्मत्वं तङर्थः। न च कृतिविषयतायाः फलतत्साधनतदुपादानसाधारणतया यत्र 'घटः क्रियते' इत्यादि प्रयुज्यते तत्र 'जलाहरणं क्रियते' 'कपालं क्रियते' इत्यादिप्रयोगस्यापत्तिरिति वाच्यम्, कृत्यर्थकधातुसमभिव्याहृतकर्मप्रत्ययस्य चिकीर्षाप्रयोज्यसाध्यताख्यविलक्षणविषयत्वमेवार्थ उक्तस्थले च कपालादौ कृतेस्तादृशविषयत्वाभावान्नोक्तप्रयोगप्रसङ्गः। 'काशाः कटाः क्रियन्ते' इत्यादौ साध्यताख्यविषयताश्रयकर्मान्तरसमभिव्याहृतकर्मप्रत्ययेन व्यापार्यतारूपविषयतापि प्रत्याय्यतेऽत उपादानतया कृतिविषयकाशादौ साध्यतारूपकृतिविषयताविरहेऽपि न तादृशप्रयोगानुपपत्तिः। तादृशकर्मसमभिव्याहाररूपतत्प्रयोजकविरहात् 'काशाः क्रियन्ते' इत्यादौ काशादौ व्यापार्यताबोधानुपपत्तेर्न तादृशप्रयोग इति।

---

फलवाचकत्वे तु त्यज्यादीनां विभागादिरूपफलवाचकत्वात् संयोगादिरूपफलप्रत्यायनेच्छया शक्तिभ्रमं लक्षणाग्रहं वा विना त्यज्यादीनां प्रयोगो न भवतीति धातूनां विलक्षणबोधजनकत्वव्यवस्था संभवति न तु व्यापारमात्रवाचकत्वेपीति धातोः फलविशेषवाचकत्वमावश्यकमेवेत्यर्थः।

ज्ञादिधातूत्तरकर्मप्रत्ययार्थमाह– ज्ञायत इत्यादिना। 'ज्ञायते घटः' इत्यस्य 'ज्ञानविषयो घटः' इत्यर्थः, एवमग्रेपि। ननु कृतिविषयता हि फले फलसाधने फलसाधनोपादानकारणे च तुल्यरूपैवेति 'घटः क्रियते' इत्यत्र 'जलाहरणं क्रियते' इत्यपि प्रयोगः स्यादित्याशङ्क्याह– न चेति। 'जलाहरणम्' इति फलम्, 'घटः' इति तत्साधनम्, 'कपालम्' इति फलसाधनोपादानमिति विवेकः। उत्तरमाह– कृत्यर्थकेति, चिकीर्षाप्रयोज्या या साध्यताख्या विलक्षणविषयता सा कृत्यर्थकधातुसमभिव्याहृतकर्मप्रत्ययार्थोऽस्ति. उक्तस्थले= 'घटः क्रियते' इत्यत्र च कृतेः=कृतिनिरूपिता तादृशविषयता=चिकीर्षाप्रयोज्यसाध्यताख्यविषयता घटे एवास्ति न तु कपालादाविति 'कपालं क्रियते' इत्यादिप्रयोगापत्तिर्नास्तीत्यर्थः। काशा इति– 'काशाः कटाः क्रियन्ते' इत्यत्र साध्यताख्यविषयताश्रयो यः काशापेक्षया कर्मान्तरं कटस्तत्समभिव्याहृतेन 'क्रियन्ते' इतिकृधातूत्तरकर्मप्रत्ययेन व्यापार्यतारूपविषयता=व्यापारविषयता ( व्यापारकर्मत्वम् ) अपि प्रत्याय्यते साध्यताख्यविषयतापि प्रत्याय्यते तत्र साध्यताख्यविषयता कटेऽस्ति काशे च साध्यताख्यविषयताया असत्त्वेपि व्यापरविषयतास्त्येव– कटानुकूलव्यापारकर्मत्वादिति काशानामपि कर्मत्वप्राप्त्या 'काशाः कटाः क्रियन्ते' इतिप्रयोगानुपपत्तिर्नास्ति, अन्यथा काशे साध्यताविरहात् काशानां कर्मत्वासंभवादेतादृशप्रयोगो नोपपद्येतेत्यर्थः। किं वा ननु काशेषु साध्यताख्यविषयताविरहेण कर्मत्वासंभवात् 'काशाः कटाः क्रियन्ते' इति प्रयोगो नोपपद्येतेत्याशङ्क्याह– काशा इति। साध्य-

'काशाः कटाः क्रियन्ते' इत्यादावपि विशेष्यभेदेन वाक्यार्थभेदात् कर्मद्वयवाचकपदयोः समभिव्याहारे व्यापार्यताबोधानुपपत्तिः, एवम्- 'क्रियते' इत्यत्र विषयतायाः कर्मप्रत्ययार्थत्वे पाकानुपधायककृतिमादाय 'पाकोऽकारि' इत्यादिप्रयोगापत्तिरित्यादिकं तु दूषणं निराकृतमधस्तात् ।

कर्तृकर्मवत् कालविशेषेऽनुशिष्टा लडादयः कालविशेषमपि बोधयन्ति । तत्र लट्प्रत्ययस्य वर्तमानकाले शक्तिः, 'पचति' इत्यादौ कृत्यादिरूपव्यापारबोधकप्रत्ययोपस्थाप्यकालस्तादृशव्यापार एवान्वेति न तु क्रियायाम्- यदा

ताख्यविषयताश्रयकर्मसमभिव्याहृतेनैव कर्मप्रत्ययेन व्यापार्यतारूपविषयता प्रत्याय्यते नान्यथेति 'काशाः क्रियन्ते' इत्येतादृशप्रयोगापत्तिर्नास्ति- अत्र काशेषु साध्यताख्यविषयतापि नास्ति साध्यताख्यविषयताश्रयीभूतकटरूपकर्मान्तरसमभिव्याहाराभावात् कर्मप्रत्ययेन व्यापार्यतारूपविषयता च न प्रत्याय्यते यस्याः काशेष्वन्वयः स्यादिति न 'काशाः क्रियन्ते' इतिप्रयोगापत्तिरित्यर्थः ।

ननु 'काशाः कटा क्रियन्ते' इत्यत्र काशानां व्यापार्यत्वात् कटस्य च साध्यत्वाद् विशेष्यभेदेन वाक्यार्थभेदः स्यादिति कर्मद्वयवाचकपदयोः समभिव्याहारे कर्मप्रत्ययेन व्यापार्यताबोधो नोपपद्यते इत्याशङ्क्याह- काशा इति । "इत्यादिकं तु दूषणं निराकृतमधस्तात्" इत्यनेनान्वयः । अधस्तात्=द्वितीयाकारके कृत्यर्थकधातुनिरूपणे ३४३ । वाक्यार्थभेदापत्तौ हि 'काशाः कटाः क्रियन्ते' इत्येकवाक्यार्थस्थाने 'काशाः क्रियन्ते' कटाः क्रियन्ते' इत्येवं प्रयोगद्वयमापद्येत न चैतदिष्टमिति तत्रेवात्रापि व्यापार्यतारूपविषयताकत्वविशिष्टे व्यापारे साध्यतारूपविषयताकत्वस्यान्वयस्वीकारान्न विशेष्यताभेदस्तथा च न वाक्यार्थभेदापत्तिर्वाक्यार्थभेदापत्त्यभावाच्च व्यापार्यताबोधानुपपत्तिर्नास्तीत्यर्थः । ननु 'क्रियते' इत्यत्र यदि विषयतामात्रं कर्मप्रत्ययार्थस्तदा पाकाऽजनककृतिमादायापि 'पाकोऽकारि' इतिप्रयोगः स्यादेव- पाकाजनककृतिविषयत्वस्यापि पाके संभवादित्याशङ्क्याह- क्रियते इति । अधस्तात्="असाधारणानुकूलत्वं हि यत्ने क्रियायाः संबन्धतया भासते ९६९" इत्यादिना । तथा च पाकादीनां कृतावसाधारणानुकूलत्वसंबन्धेनान्वयस्येष्टत्वात् पाकानुपधायककृतौ चाऽसाधारणाऽनुकूलत्वं नास्तीति तादृशसंबन्धेन पाकान्वयासंभवाद् न पाकानुपधायककृतिमादाय 'पाकोऽकारि' इत्यादिप्रयोगापत्तिरित्यभिप्रायः प्रतीयते ।

लकाराणां कालविशेषबोधकत्वं व्युत्पादयति-कर्तृकर्मवदित्यादिना । लटो वर्तमानकालबोधकत्वमाह- तत्रेति । 'पचति' इत्यादावाख्यातस्यैव कृतिबोधकत्वं वर्तमानकालबोधकत्वं चास्तीति कृतिरूपव्यापारबोधको य आख्यातप्रत्ययस्तदुपस्थाप्यकालस्य तादृशव्यापारे=आख्यातोपस्थाप्यकृतिरूपव्यापारे एवान्वयो भवति न तु धात्वर्थक्रियायामित्यन्वयः । उक्ते हेतुमाह- यदेति, यद्याख्यातोपस्थाप्यकालस्य धात्वर्थव्यापारेऽन्वयः स्यात्तदा

पुरुषो यत्नशून्यस्तदधीनाग्निसंयोगादिरूपः पच्यादेरर्थो विद्यते तदा ' अयं न पचति ' इतिप्रयोगात्, ' अयं पचति ' इत्युक्ते ' इदानीमयं पाकयत्नवान्न वा ' इतिसंशयनिवृत्तेः। पूर्वापरीभावापन्नस्थाल्यारोपणादिव्यापाराणां विशिष्य पच्याद्यर्थघटकत्वेन प्रत्येकतद्व्यापारेषु कालान्वयबोधापेक्षया कृत्यादिरूपैकार्थे तदन्वयस्यैव लाघवेनोचितत्वाच्च।

वर्तमानकालश्च तत्तच्छब्दप्रयोगाधिकरणकालरूपस्तत्तच्छब्दार्थः, अतो नैककालप्रयुक्तलडादितोऽपरलडादिप्रयोगाधिकरणकालीनत्वस्य कृत्यादावन्वयः। स्वप्रयोगाधिकरणकालत्वेन स्ववाच्यत्वे स्वत्वाननुगमाच्छक्त्यानन्त्यं सामान्यतो व्युत्पत्तेर्दुर्घटतयाऽपूर्वव्यक्तिबोधानुपपत्तिः सर्वनामविचारदर्शितरीत्या समाधास्यते- विशिष्य तत्तकालत्वावच्छिन्नबोधस्यानुभवसिद्धतया सर्वनामशक्तौ बुद्धि-

---

पच्यादिधात्वर्थस्याग्निसंयोगादिरूपस्य सत्त्वे यत्नस्य चासत्त्वेपि ' पचति ' इति प्रयोगः स्यात् ' न पचति ' इतिप्रयोगो न स्यात् भवति च यत्नशून्यदशायां ' न पचति ' इतिप्रयोगस्तस्माज्ज्ञायते कालस्य कृतावेवान्वयो भवति न तु क्रियायामित्यन्वयः। हेत्वन्तरमाह- अयं पचतीति, ' पचति ' इत्युक्ते वर्तमानकाले पाककर्तरि यत्नवत्त्वनिश्चय एव भवति न तु ' पाकयत्नवान्न वा ' इति यत्नवत्त्वसंशय इत्येतस्मादपि विज्ञायते आख्यातोपस्थाप्यकालस्याख्यातोपस्थाप्यकृतावेवान्वयो भवतीति अन्यथा ' पचति ' इत्युक्तेपि ' पाकयत्नवान्न वा ' इति संशयः स्यादेवेत्यन्वयः। उक्ते विनिगमनामप्याह- पूर्वापरीति, पच्याद्यर्थभूता हि पूर्वापरीभावापन्नाः स्थाल्यारोपणादयो बहवो व्यापाराः सन्ति प्रत्येकं तादृशव्यापारेषु कालान्वयापेक्षया कृतिरूपे एवैकस्मिन् पदार्थे आख्यातार्थभूते तदन्वये=कालान्वये लाघवमस्तीति कृतावेव कालान्वय उचितो न तु धात्वर्थक्रियायामित्यर्थः। "कालान्वयबोधापेक्षया" इत्यत्र ' कालान्वयापेक्षया ' इतिपाठो युक्तः।

वर्तमानकालं निर्वक्ति- वर्तमानकाल इत्यादिना। तत्तच्छब्दार्थः=तत्तदाख्यातार्थः। 'पचति' इतिप्रयोगाधिकरणकाल एव ' पचति ' इतिपदघटकाख्यातार्थः स एवात्र वर्तमानकाल इति तस्यैवैतत्कालिककृतावन्वय इति न प्रयोगान्तराधिकरणीभूतकालस्य प्रयोगान्तरघटकाख्यातार्थकृतावन्वय इत्याह- अत इति। स्वप्रयोगेति- स्वप्रयोगाधिकरणकालः स्ववाच्यः ( आख्यातवाच्यः ) इत्येवमुक्ते स्वपदार्थाननुगमाच्छक्त्यानन्त्यं स्यात् किं च सामान्यतो लडादीनां तदर्थभूतकाले व्युत्पत्तिः=शक्तिग्रहो न स्यादित्यऽपूर्वव्यक्तेः=अगृहीतशक्तिककालस्य या बोधानुपपत्तिः सा सर्वनामशक्तिग्रहरीत्या लडादीनामपि तदर्थकाले शक्तिग्रहं व्युत्पाद्य समाधास्यते इत्यन्वयः। तादृशाभिप्रेतरीतिमाह- विशिष्येति, ' पचति ' इत्याद्युक्ते तत्तत्कालस्य विशेषरूपेण बोधो भवत्येवेति यथा तत्पदस्य बुद्धिस्थत्वोपलक्षितधर्मावच्छिन्ने शक्तिरस्ति तथात्रापि शब्दप्रयोगाधिकरणत्वोपलक्षितधर्मावच्छिन्ने ( वर्तमानकाले ) लटः शक्तिरस्तीति नाऽपूर्वका-

स्थत्ववच्छब्दप्रयोगाधिकरणत्वमुपलक्षणविधया व्यावर्तकं वाच्यम् । न च तत्तत्कालत्वस्यैवमप्यऽवाच्यत्वे तद्भानानुपपत्तिरसमाधेयैवेति वाच्यम्, शब्दप्रयोगाधिकरणवृत्तिकालत्वव्याप्यधर्मत्वेन तत्तत्कालत्वानामेवोपलक्षणीयत्वात् ।

अथ शब्दप्रयोगाधिकरणवृत्तिकालत्वव्याप्यधर्मो वर्षत्वादिकमपि. कालद्वयावृत्तिधर्मत्वनिवेशेप्येतद्रूपमासत्वादिव्यावर्तनमशक्यम्, क्षणद्वयावृत्तिक्षणवृत्तिधर्मत्वेन तद्व्यावर्तने चाऽध्ययनाद्यनधिकरणेप्यऽध्ययनाद्यधिकरणस्थूलकालान्तर्गतक्षणेऽसमाप्तारब्धाध्ययने पुंसि 'चिन्तामणिमयमधीते' इत्यादिप्रयोगानुपपत्तिः ।

---

व्यक्तिबोधानुपपत्तिरित्यर्थः . । ननु तत्तच्छब्दप्रयोगाधिकरणत्वोपलक्षितधर्मावच्छिन्नस्य वाच्यत्वे हि तत्तत्कालव्यक्तीनामेव वाच्यत्वं स्यात् तत्तत्कालव्यक्तीनां चानन्त्यादऽपूर्वकालव्यक्तिभानानुपपत्तिरस्त्येव, न चोक्तरीत्या कालत्वस्य वाच्यत्वं प्राप्तं येन कालत्वेन रूपेणाऽपूर्वकालव्यक्तेरपि बोधः स्यादित्याशङ्कयाह— न चेति । उत्तरमाह— शब्दप्रयोगेति, शब्दप्रयोगाधिकरणीभूतो यः कालस्तद्वृत्तिर्यः कालत्वव्याप्यधर्मस्तेन कालत्वव्याप्यधर्मत्वेन सामान्यरूपेण तत्तत्कालत्वानामेव शब्दप्रयोगाधिकरणत्वमुपलक्षणं स्वीक्रियते इति तत्कालत्वस्य वाच्यत्वं प्राप्तमेवेति नाऽपूर्वकालव्यक्तिज्ञानानुपपत्तिः— कालत्वेन रूपेण तासामप्याख्यातजन्यबोधविषयत्वसंभवादित्यर्थः प्रतिभाति । "तत्तत्कालत्वस्यैवमपि" इत्यत्र "तत्कालस्यैवं सति' इत्यपि पाठो दृश्यते ।

शङ्कते— अथेति, शब्दप्रयोगाधिकरणीभूतो यः कालस्तद्वृत्तिकालत्वेन व्याप्यमेव वर्षत्वादिकमिति 'पचति' इत्युक्ते पाकानुकूलकृतौ वर्षस्याप्यन्वयः स्यात्. न च वर्षपर्यन्तं तादृशकृतिरनुवर्तते इत्यर्थः, ननु शब्दप्रयोगाधिकरणवृत्तिकालत्वव्याप्यधर्मो हि कालद्वयाऽवृत्तिरेव धर्मो गृह्यते वर्षत्वं तु शब्दप्रयोगाधिकरणकाले शब्दप्रयोगानधिकरणकाले च वर्तते— वर्षस्य सखण्डकालत्वादिति वर्षत्वादिकं न गृह्यते इति नोक्तदोषापत्तिरित्याह— कालद्वयेति । अत्रापि दोषमाह— एतद्रूपेति, मासकालस्त्वखण्ड एवेति मासत्वं कालद्वयावृत्त्येवेति मासत्वग्रहणे प्राप्ते उक्तरीत्या पाकादिकृतौ मासाद्यखण्डकालस्यान्वयः स्यादेव न चैतदिष्टमित्यर्थः । ननु शब्दप्रयोगाधिकरणवृत्तिकालत्वव्याप्यधर्मो हि क्षणद्वयावृत्तिक्षणवृत्तिधर्मो गृह्यते तादृशधर्मश्च क्षणत्वमेव क्षणत्वावच्छिन्नकालस्य च पाककृत्यादावन्वय इष्ट एव, मासत्वादिकं च क्षणवृत्त्यपि न क्षणद्वयावृत्तीति न पाकादिकृतौ मासाद्यऽन्वयापत्तिरित्याह— क्षणद्वयेति । तद्व्यावर्तने=मासत्वादिव्यावर्तने । अत्रापि दोषमाह— अध्ययनेति, एवं हि 'अधीते' इत्यत्राध्ययनानुकूलकृतावपि क्षणकालस्यैवान्वयः स्यादित्यऽध्ययनाधिकरणीभूतस्थूलकालान्तर्गतेऽध्ययनानधिकरणे क्षणे (शयनादिक्षणे) 'अधीते' इतिप्रयोगानुपपत्तिः स्यात्. न चैतदिष्टम्— तादृशाध्ययनानधिकरणेपि क्षणे 'अधीते' इतिप्रयोगस्येष्टत्वादित्यर्थः ।

यदि च स्वप्रागभावानधिकरणस्वाश्रयकर्तृकप्रकृतक्रियानाशप्रागभावाधिकरणशब्दप्रयोगाधिकरणकाल एव वर्तमानकाल आधेयतासंबन्धेन कृतावन्वेत्यऽतो नोक्तस्थले 'चिन्तामणिमयमधीते' इत्यादिप्रयोगानुपपत्तिः, आरम्भावधिसमाप्तिपर्यन्तस्य स्थूलकालस्यापि तथात्वेन शब्दप्रयोगाधिकरणक्षणादिरूपान्तरालकालेऽध्ययनाद्यनुकूलकृतिविच्छेदेऽपि शब्दप्रयोगाधिकरणत्वोपलक्षिततादृशस्थूलकालवृत्तित्वस्यापि तादृशक्रियानुकूलकृतावऽबाधेन योग्यतानिर्वाह इत्युच्यते ? तदा यः समग्रचिन्तामणिमधीत्य किंचित्कालोत्तरं पुनश्चिन्तामणिमध्येष्यते तत्रान्त-

---

दूषयितुं परिष्कारान्तरमनुवदति— यदीत्यादिना । स्वं स्वं कृतिः, 'अधीते' इत्यत्राध्ययनानुकूलकृतिप्रागभावानधिकरणं तथाध्ययनानुकूलकृत्याश्रयश्चैत्रस्तत्कर्तृकप्रकृता याध्ययनक्रिया तन्नाशप्रागभावाधिकरणं च यः शब्दप्रयोगाधिकरणकालः स एव वर्तमानकालस्तस्य कृतावाधेयतासंबन्धेनान्वयः— कृतेस्तादृशकाले वर्तमानत्वादिति उक्तस्थले=अध्ययनाधिकरणस्थूलकालान्तर्गतेऽध्ययनानधिकरणक्षणे 'अधीते' इतिप्रयोगानुपपत्तिर्नास्तीत्यर्थः । अत्र विवक्षितकृतेः पूर्वकालस्य व्यावृत्त्यर्थं स्वप्रागभावानधिकरणेत्युक्तमुत्तरकालव्यावृत्त्यर्थं च नाशप्रागभावाधिकरणेत्युक्तम्— उत्तरकाले नाशस्यैव सत्त्वेन नाशप्रागभावासंभवादिति विशेषणद्वयेन विवक्षितकृत्यनुवृत्तिकाल एव ग्रहीतुं शक्यते इति भावः । प्रयोगानुपपत्तेरभावमुपपादयति— आरम्भेति, तथात्वेन=स्वप्रागभावानधिकरणस्वाश्रयकर्तृकप्रकृतक्रियानाशप्रागभावाधिकरणशब्दप्रयोगाधिकरणकालरूपत्वेन विवक्षिताध्ययनादिकृत्यनुवृत्तिकालत्वेनेति यावत् 'अधीते' इत्यादिशब्दप्रयोगाधिकरणीभूतो यः क्षणादिरूपोऽन्तरालकालोऽध्ययनरहितकालस्तत्राध्ययनाद्यनुकूलकृतेर्विच्छेदेऽपि=अभावेऽपि शब्दप्रयोगाधिकरणत्वोपलक्षितो यस्तादृशस्थूलकालः=उक्तारम्भावधिसमाप्तिपर्यन्तः स्थूलकालस्तद्वृत्तित्वं तादृशक्रियानुकूलकृतौ=अध्ययनाद्यनुकूलकृतावस्त्येवेति न योग्यतानुपपत्तिरपि तथा चाध्ययनाधिकरणस्थूलकालान्तर्गताध्ययनानधिकरणक्षणेऽपि न 'अधीते' इतिप्रयोगानुपपत्तिः— 'अधीते' इत्यत्राध्ययनारम्भावधिसमाप्तिपर्यन्तस्यैव स्थूलकालस्य वर्तमानत्वेनाभिप्रेतत्वात् । एवमेवान्यत्रापि विवक्षितक्रियारम्भावधितादृशक्रियासमाप्तिपर्यन्तस्यैव कालस्य वर्तमानकालत्वं ज्ञेयं स च कालः क्षणमात्ररूपो वा स्याद् वर्षरूपो वा स्यादित्यर्थः । अत्रापि दोषमुद्घाटयति— तदेति, एवं हि यत्रैकदा चिन्तामणिरधीता पुनरपि कालान्तरेऽध्येतव्यास्ति तत्रान्तरालदशायाम्=चिन्तामणेः प्रथमाध्ययनानन्तरं द्वितीयाध्ययनाच्च पूर्वमपि 'चिन्तामणिमधीते' इतिप्रयोगापत्तिः स्यादेव— एतादृशान्तरालकालेऽप्यध्ययनानुकूलकृतिप्रागभावानधिकरणत्वमस्त्येव— प्रथमाध्ययनानुकूलकृतेर्जातत्वात् तादृशाध्ययनानुकूलकृत्याश्रयीभूतचैत्रादिकर्तृकप्रकृताध्ययनक्रियानाशप्रागभावाधिकरणत्वमप्यस्त्येव—भाविद्वितीयाध्ययनक्रियानाशस्याऽजातत्वेन तत्प्रागभावाधिकरणत्वस्य सत्त्वादित्यर्थः । अत्र द्वितीयाध्ययनक्रिया येन न ग्राह्या स्यादेतादृशनिवेशस्तु नास्त्ये-

रालदशायामपि 'अयं चिन्तामणिमधीते' इतिप्रयोगापत्तिः । यदि स्तुतिपाठादिविच्छेददशायामपि 'प्रत्यहमयं स्तुतिं पठति' इत्यादिवदुक्तस्थलेऽपि दर्शितप्रयोग इष्ट एवेत्युच्यते ? तदापि स्वपदेन विशिष्य तत्तत्कृतीनामुपादानेनाऽननुगमो दुरुद्धर एवेतिचेत् ?,

न- शब्दप्रयोगाधिकरणवृत्तिकालत्वव्याप्यधर्मत्वेनोपलक्षणेनाऽनुगतीकृततत्तत्क्षणदिनमासवर्षत्वाद्यवच्छिन्ने एव काले लटः शक्तिः । क्रियारम्भात् पूर्वं कर्मसमाप्त्युत्तरं च 'अधीते' 'पचति' इत्यादिप्रयोगवारणाय कृत्यादिरूपव्यापारे तादृशकालस्य स्ववृत्तिप्रागभावाऽप्रतियोगित्वस्ववृत्तिध्वंसाऽप्रतियोगिप्रकृतक्रियाकर्तृनिष्ठत्वाभ्यां विशेषितेनाधेयतासंबन्धेनाऽन्वयनियम उपगन्तव्यः, तत्तत्क्रियारम्भपूर्वमपि तत्समाप्त्युत्तरमपि वा वर्तते यस्तत्तत्क्रियानुकूलकृत्य-

---

ति विशेयम् । ननु यथा स्तुतिपाठविच्छेददशायामपि 'प्रत्यहं स्तुतिं पठति' इतिप्रयोग स्तथा उक्तस्थले=प्रथमाध्ययनानन्तरं द्वितीयाध्ययनारम्भात् पूर्वमेतादृशान्तरालदशायामपि अधीते' इतिप्रयोग इष्ट एवेति प्रयोगापत्तिर्न दोष इत्याशङ्क्याह- यदीति । अत्र दोष-ह-तदापीति, उक्ते "स्वप्रागभावानधिकरणस्व" इत्यादिपरिष्कारे स्वपदेन विशेषरू-वे तत्तत्कृतीनां ग्रहणापत्त्याऽननुगमस्त्वऽपरिहार्य एवेत्यर्थः ।

अथेत्यादिना शङ्कितं परिहरति- नेति, 'अधीते' इत्यादिशब्दप्रयोगाधिकरणीभूतो यः ःस्तद्वृत्तिकालत्वव्याप्यधर्मत्वेनोपलक्षणभूतेन विवक्षितकृत्यनुवृत्त्यधिकरणीभूतक्षणदिनमासव-ोनामनुगमः संभवत्येव तादृशानुगतीकृतकाले एव लटः शक्तिः स एव च वर्तमानकाल च्यते तथा च शब्दप्रयोगाधिकरणकालवृत्तिकालत्वव्याप्यधर्मोपलक्षितधर्मावच्छिन्ने ( क्षणदि-ासवर्षादौ ) लटः शक्तिरस्तीत्यत्र स्वपदप्रवेशो नास्तीति न त्वत्प्रदर्शिताऽननुगमापत्तिरित्यर्थः । वं क्रियारम्भपूर्वकालस्य क्रियासमाप्त्युत्तरकालस्यापि च शब्दप्रयोगाधिकरणकालवृत्तिकाल-ाप्यधर्मोपलक्षितधर्मावच्छिन्नत्वात्तत्रापि 'पचति' 'अधीते' इत्यादिप्रयोगः स्यात्, न दिष्टमित्याशङ्क्याह- क्रियारम्भादिति, कृत्यादिरूपव्यापारे=पाकाद्यनुकूलकृतौ तादृशका-=शब्दप्रयोगाधिकरणकालवृत्तिकालत्वव्याप्यधर्मोपलक्षितधर्मा ( क्षणत्वादि ) वच्छिन्नकालस्य तीत्यादिविशेषणविशिष्टाधेयतासंबन्धेनान्वयः. कृतौ हि तादृशकाले वर्तमानत्वादाधेयत्वमस्त्येव, तीति- 'अधीते' इत्यादौ स्वं तादृशकालस्तद्वृत्तिप्रागभावाप्रतियोगित्वमध्ययनाद्यनुकू-तावस्त्येव तादृशकाले तादृशकृतेर्जातत्वेन कृतिप्रागभावस्याऽसत्त्वात् स्वं तादृशकालस्तद्-ध्वंसाऽप्रतियोगिभूता या प्रकृताध्ययनादिरूपा क्रिया तत्कर्तृनिष्ठत्वमप्यध्ययनाद्यनुकूलकृताव-- तादृशकाले क्रियाया वर्तमानत्वेन ध्वंसप्रतियोगित्वं नास्त्येव. तादृशाध्ययनादिकृता-यतापि वर्तते इति साधेयता सामानाधिकरण्यसंबन्धेन स्ववृत्तिप्रागभावाप्रतियोगित्वस्ववृत्ति-ाप्रतियोगिप्रकृतक्रियाकर्तृनिष्ठत्वाभ्यां विशिष्टा जातेत्येतादृशविशिष्टाधेयतासंबन्धेनोक्तका-

धिकरणकालस्तस्य दर्शितविशिष्टाधेयतासंबन्धस्तादृशकृतौ बाधितोऽप्रसिद्धो वेति न शब्दप्रयोगाधिकरणतादृशकालमादाय दर्शितप्रयोगापत्तिः। संबन्धे स्वपदार्थस्य विशिष्य निवेशेऽप्युपपत्तिश्चिन्त्या।

न च क्रियानुकूलकृतिशून्यान्तरालदशायां स्थूलकालमादाय 'पचति' 'अधीते' इत्यादिवत् तादृशकृत्यधिकरणक्षणेऽपि स्थूलकालावच्छिन्नाभावमादाय 'न पचति' 'नाधीते' इत्यादिप्रयोगः- तत्र नञो वर्तमानक्षणमात्रान्विततादृशक्रियानुकूलकृत्यभावबोधकतानियमात्, उक्तरीत्या विशिष्य शब्दप्रयोगाधिकरणक्षणादिरूपकालस्यापि लट्प्रत्ययेन बोधनसंभवात्।

---

लस्य कृतावन्वयः स्वीक्रियते तथा च विवक्षितक्रियाया आरम्भात् पूर्वकालस्य समाप्त्युत्तरकालस्य च विवक्षितकृतावुक्तविशिष्टाधेयतासंबन्धेनान्वयो न संभवति क्रियारम्भात् पूर्वकाले कृतेः प्रागभावाऽप्रतियोगित्वासंभवात् क्रियासमाप्त्युत्तरकाले च क्रियाध्वंसस्यैव जातत्वेन ध्वंसाप्रतियोगिप्रकृतक्रियाकर्तृनिष्ठत्वासंभवाच्चाऽध्ययनाद्यारम्भात् पूर्वमध्ययनादिसमाप्त्युत्तरं च न 'अधीते' इत्यादिप्रयोगापत्तिरित्यर्थः। स्थूलकालगतमैक्यमादाय भूतभविष्यत्कालयोरपि तत्तत्पाकादिक्रियानुकूलकृत्यधिकरणत्वं संभवत्येवेत्यभिप्रायेणोक्तम्- तत्तत्क्रियानुकूलकृत्यधिकरणकाल इति। बाधित इति- अध्ययने सति भूतभविष्यत्कालस्य संबन्धो बाधितः, यदि चाध्ययनमेवाऽसिद्धं तदाऽप्रसिद्ध इति विवेकः। संबन्धविशेषणे प्रथमदलमारम्भात् पूर्वं तादृशप्रयोगवारणाय द्वितीयदलं च समाप्त्युत्तरं तादृशप्रयोगवारणाय विज्ञेयम्। नन्वत्रापि संबन्धमध्ये स्वपदार्थनिवेशादननुगमापत्तिः स्यादित्याशङ्क्याह- संबन्धेति। चिन्त्येति-स्वपदवाच्यानां कालव्यक्तीनां संबन्धमध्ये प्रवेशादुपस्थित्यपेक्षा नास्ति येनाननुगमः स्यादित्यर्थः।

ननु स्थूलकाले कृतिरपि भवति कृत्यभावोऽपि भवति-स्थूलकालान्तर्गतकिंचित्क्षणादावेव कृतिसंभवादिति यथाऽध्ययनाद्यनुकूलकृतिशून्यायामन्तरालदशायां स्थूलकालमादाय=स्थूलकालवृत्तिकृतिमुद्दिश्य 'अधीते' इत्यादिप्रयोगो भवति तथा स्थूलकालवृत्तितादृशकृत्यभावमादाय तादृशकृत्यधिकरणक्षणे 'नाधीते' इत्यपि प्रयोगः स्यादित्याशङ्क्याह-न चेति। उत्तरमाह-तत्रेति, तत्र='नाधीते' इत्यत्र नञा वर्तमानक्षणमात्रान्वितो यस्तादृशक्रियानुकूलकृत्यभावः स बोध्यते वर्तमानक्षणे च तादृशक्रियानुकूलकृत्यभावो नास्तीति न स्थूलकालावच्छिन्नाभावमादाय तादृशकृत्यधिकरणक्षणे 'नाधीते' इत्यादिप्रयोगापत्तिरित्यर्थः। किं च भावान्वयबोधस्थले किंचित्क्षणावच्छेदेनाप्यध्ययनादिसंबन्धसत्त्वे 'मासमधीते' इत्यादिप्रयोगो भवति. अभावान्वयबोधस्थले त्वभावस्य विवक्षितकालस्य यावत्क्षणकूटेन संबन्धे सत्येव 'नाधीते' इत्यादिप्रयोगो भवति अन्यथाऽध्ययनस्येवाऽध्ययनाभावस्यापि मासवृत्तिकिंचित्क्षणावच्छेदेन संबन्धस्य सत्त्वात् 'मासमधीते' इतिवत् 'मासं नाधीते' इत्यपि प्रयोगः स्यादेव तथा चात्रापि स्थूलकालस्य यावत्क्षणकूटेनाध्ययनाभावसंबन्धस्यासत्त्वात् 'नाधीते' इत्यादिप्रयोगस्योक्त-

नञ्समभिव्याहारस्थलेपि प्रतियोगिन्येव कालान्वय इति तु न सत्--तत्तत्क्षणवृत्तिपाकादिकृतेरभावस्यान्यक्षणावच्छेदेन तदानींतनस्थूलकालावच्छेदेन तादृशकृतिमति सत्त्वेनोक्तातिप्रसङ्गस्य दुर्वारत्वात् ।

न च कालानवच्छिन्नाधारतासंबन्धेन नञर्थस्य पुरुषेऽन्वयान्नोक्तातिप्रसङ्ग इति वाच्यम्, तादृशस्थूलकाले यत्रात्मनि पाकादिकृतिस्तादृशकालान्तर्गततादृशकृत्यनधिकरणक्षणे 'न पचति' इत्यादिप्रयोगोपपत्तये तत्तत्क्षणावच्छिन्नपाकादिकृत्यभावबोधस्यैव तत्र तत्र स्वीकरणीयतया क्वचित् प्रतियोग्यप्रसिद्धेर्दुर्वारत्वात् ।

---

स्थले आपत्तिर्नास्तीत्यर्थः । ननु वर्तमानक्षणस्तु: शब्दप्रयोगाधिकरणक्षण एव तस्योपस्थित्यसंभवात् 'नाधीते' इत्यादौ नञा वर्तमानक्षणमात्रान्वितस्य तादृशक्रियानुकूलकृत्यभावस्य कथं बोधः स्यादित्याशङ्क्याह- उक्तरीत्येति । उक्तरीत्या=" शब्दप्रयोगाधिकरणवृत्तिकालत्वव्याप्यधर्मत्वेन ९९३ " इत्याद्युक्तरीत्या क्षणादिकाले लटः शक्तिरस्तीति तस्य विशिष्य लट्प्रत्ययेन बोधसंभवान्न काचिदनुपपत्तिरित्यर्थः ।

ननु 'नाधीते' इत्यादिनञ्समभिव्याहारस्थले त्वया कृत्यभावे वर्तमानकालस्यान्वय उक्तस्तन्न वक्तव्यम् अन्यथा नञसमभिव्याहारस्थले कृतौ नञ्समभिव्याहारस्थले कृत्यभावे कालान्वय इति वैषम्यं स्यादिति प्रतियोगिभूतकृत्यादावेव कालान्वयः कर्तव्यस्तथा च शब्दप्रयोगाधिकरणक्षणवृत्तिकृतेरभावो नञा बोधयिष्यते इत्याशङ्क्याह- नञिति । परिहारहेतुमाह- तत्तत्क्षणेति, एवं हि तदानींतनः=शब्दप्रयोगाधिकरणीभूतो यः स्थूलकालस्तदवच्छेदेन=तदवच्छिन्नः=तद्व्याप्यो योऽन्यक्षणः=कृत्यभावक्षणस्तदवच्छेदेन तादृशकृतिमत्यपि चैत्रादौ तत्तत्क्षणवृत्तिपाकाद्यनुकूलकृतेरभावस्य सत्त्वेनोक्तातिप्रसङ्गस्य='न पचति' इत्यादिप्रयोगापत्तेर्दुर्वारत्वं स्यात्- अन्यक्षणवृत्तिकृतेरन्यक्षणावच्छेदेनाभावे बाधकाभावादित्यर्थः । अभावे कालान्वये तु तत्क्षणावच्छेदेन कृतौ सत्यां कृत्यभावस्यासत्त्वात् 'न पचति' इत्यादिप्रयोगापत्तिर्नास्तीति भावः ।

ननु कृतिः पुरुषे भवतीति पुरुषस्य कृत्यधारत्वात् 'नाधीते' इत्यादौ कालानवच्छिन्नाधारतासंबन्धेन अर्थात् कालानवच्छिन्नाधारतासंबन्धावच्छिन्नप्रतियोगिताकस्य कृत्यभावस्य पुरुषेऽन्वयः कर्तव्यस्तथा च पुरुषेऽध्ययनकृतिसत्त्वक्षणे 'नाधीते' इतिप्रयोगापत्तिर्नास्तीत्याशङ्क्याह- न चेति । कालावच्छिन्नाधारतायाः संबन्धत्वे हि क्षणान्तरवृत्तिकृतेरभावस्य कृत्यवच्छिन्नक्षणेपि पुरुषेऽन्वयसंभवात् अध्ययनादिकृतिक्षणेपि 'नाधीते' इतिप्रयोगः स्यात् केवलाधारतायाः संबन्धत्वे त्वेतादृशापत्तिर्नास्ति-- पुरुषे कृतिसत्त्वे कृत्यभावबोधनासंभवादिति भावः । परिहारमाह- तादृशेति, तादृशस्थूलकाले=शब्दप्रयोगाधिकरणीभूतस्थूलकाले यस्मिन् पुरुषे पाकादिकृतिरस्ति तस्मिन् पुरुषे शब्दप्रयोगाधिकरणीभूतकालान्तर्गततादृशकृत्यनधिकरणक्षणे 'न पचति' इतिप्रयोगोपपत्तये त्वया तत्तत्क्षणावच्छिन्ना या पाकादिकृतिस्तदभावबोध एव स्वीकार्यः--

व्यापाराबोधकेन च लडादिप्रत्ययेन क्रियायामेव वर्तमानत्वान्वयो बोध्यते 'जानाति' इत्यादौ न तु लडर्थाश्रयत्वादौ–ज्ञानाद्यऽसत्त्वेपि तदाश्रयत्वादिसंबन्धे सति 'जानाति' इत्यादिप्रयोगापत्तेः । ज्ञानादिविशिष्टे आश्रयत्वादौ कालान्वयमुपगम्यातिप्रसङ्गवारणे ? विशेषणे ज्ञानादावपि तदन्वयस्यावश्यकत्वे तस्यैव स्वीकारौचित्यात् ।

'नश्यति' इत्यादौ क्रियायां कालान्वयस्वीकारे विनष्टादावपि 'नश्यति' इत्यादिप्रयोगः स्यादिति तत्रोत्पत्तेरपि लडाद्यर्थत्वमुपगम्य तत्रैव कालान्वयं

अभावप्रतियोगिन्येव त्वया कालान्वयस्वीकारात् तथा च क्वचित् प्रतियोग्यऽप्रसिद्धिः स्यात्= यत्क्षणावच्छिन्नाया कृतेरभावो बोधनीयस्तत्क्षणे कृतेरसत्त्वे तत्क्षणावच्छिन्नकृतेः प्रतियोगिभूताया अप्रसिद्धिः प्राप्ता, अप्रसिद्धप्रतियोगिकस्य चाभावस्य बोध एव न भवतीति तत्र 'नाधीते' इत्यादिवाक्यजन्यबोधाभावप्रसङ्गः स्यात् न चैतदिष्टमित्यर्थः । वस्तुतस्तु नञ्समभिव्याहारस्थले प्रतियोगिनि कालान्वयस्वीकारे 'नाधीते' इत्यनेन शब्दप्रयोगाधिकरणतत्क्षणावच्छिन्नायाः कृतेरभावो बोधनीयो न च तत्क्षणे कृतिः संभवति तदभावस्यैव सत्त्वादिति सर्वत्रैव प्रतियोग्यप्रसिद्धिः, तत्क्षणे कृतिसत्त्वे च तदभावासंभवात् तद्बोधनं न संभवतीति विज्ञेयम् । तस्मात् नञ्समभिव्याहारस्थलेऽभावे एव कालान्वयः स्वीकार्यस्तथा च 'नाधीते' इत्यादिशब्दप्रयोगाधिकरणक्षणे कृतिर्नास्ति तादृशकृत्यभावस्त्वस्त्येवेति क्षणान्तरवृत्त्यध्ययनकृतेः शब्दप्रयोगाधिकरणक्षणेऽभावबोधनं नञा नानुपपन्नमिति भावः ।

'पचति' इत्यादौ लडाद्यर्थकालस्य लडाद्यर्थकृतावेवान्वयेपि 'जानाति' इत्यादौ तु न लडाद्यर्थाश्रयत्वादौ लडाद्यर्थकालस्यान्वयो भवति किं तु धात्वर्थज्ञानादिरूपक्रियायामेवान्वयो भवतीत्याह– व्यापारेति । व्यापाराऽबोधकेनेति 'पचति' इत्यादिस्थले लडादेः कृतिरूपव्यापारबोधकत्वं यदुक्तं तत् 'जानाति' इत्यादौ न संभवति–ज्ञानाद्यनुकूलकृतेरसंभवादित्याशयेन व्यापाराबोधकत्वमुक्तमित्याशयः । यदि लडाद्यर्थकालस्य 'जानाति' इत्यादौ लडाद्यर्थाश्रयत्वेऽन्वयः स्यात्तदा ज्ञानाश्रयत्वं हि ज्ञानसमवाय एव समवायश्च नित्य एवेति ज्ञानासत्त्वेपि तदाश्रयत्वादिसंबन्धे सति= ज्ञानाश्रयत्वरूपसमवायसंबन्धस्य सत्त्वात् ज्ञानाभावकालेपि 'जानाति' इतिप्रयोग आपद्येत न चैतदिष्टमित्याह– ज्ञानाद्यसत्त्वेपीति । ज्ञाने कालान्वये तु ज्ञानाभावकाले 'जानाति' इतिप्रयोगापत्तिर्नास्तीत्यर्थः । ननु 'जानाति' इत्यत्र ज्ञानविशिष्टाश्रयत्वे कालान्वयं वक्ष्यामस्तथा च ज्ञानसमवायस्य नित्यत्वेपि ज्ञानस्यानित्यत्वेन ज्ञानाभावकाले ज्ञानविशिष्टाश्रयत्वमपि न संभवतीति न ज्ञानाभावकाले 'जानाति' इतिप्रयोगापत्तिरित्याशङ्क्याह– ज्ञानादिविशिष्ट इति । उत्तरमाह– विशेषण इति, ज्ञानविशिष्टाश्रयत्वे कालान्वये विशेषणीभूतज्ञानेपि कालान्वयः प्राप्त एवेति तस्य=ज्ञाने एव कालान्वयस्य स्वीकार उचित इत्यर्थः ।

नश्यतीति– 'नश्यति' इत्यत्र नाशक्रियायां कालान्वये नाशस्य ध्वंसरूपत्वेनाऽनन्तत्वाद् विनष्टदशायामपि 'नश्यति' इतिप्रयोगापत्तिः स्यादिति तत्र='नश्यति' इत्यादौ नाशोत्पत्तेरपि

दीधितिकृदुपजगाम । वस्तुतस्तु– नाशत्वमुत्पत्तिमदभावत्वं तथा च धातुप्रतिपाद्यतावच्छेदकोत्पत्तावेव कालान्वय इत्येव साधीयः । वर्तमानकालस्योत्पत्तिसंबन्धेन धात्वर्थेऽन्वय इत्यपि वदन्ति ।

लृट्प्रत्ययेन 'पक्ष्यति' इत्यादौ प्रत्ययार्थकृतौ. 'ज्ञास्यति' इत्यादौ क्रियायां भविष्यत्त्वं प्रत्याय्यते । यद्यपि भुव उत्पत्त्यर्थकतयाऽनागतकालोत्पत्तिकत्वं भविष्यच्छब्दार्थस्तथापि 'पक्ष्यति' इत्यादौ प्रत्ययार्थकृत्यादावनागतत्वमात्रस्य प्रतीतिरुपेयते–उत्पत्तिप्रतीतेर्निष्फलत्वात् । 'भविष्यति' 'उत्पत्स्यते' इत्यादौ च धातुनैव तादृशोत्पत्तिः प्रत्याय्यते । 'नङ्क्ष्यति' इत्यादौ च दर्शिता गतिः ।

---

लडाद्यर्थत्वं स्वीकार्यं तथा च लडाद्यर्थकालस्यात्र लडाद्यर्थभूतनाशोत्पत्तावेवान्वयः कर्तव्य उत्पत्तेश्चानित्यत्वेन विनष्टदशायामसत्त्वान्न विनष्टदशायाम् 'नश्यति' इतिप्रयोगापत्तिरित्यर्थः । स्वाभिप्रायमाह–वस्तुतस्त्विति, 'नश्यति' इत्यत्र धात्वर्थो नाशो नाशश्च ध्वंसरूपत्वादुत्पत्तिमान् (उत्पत्तिविशिष्टः) अभावपदार्थ एवेत्युत्पत्तेर्धातुप्रतिपाद्यतावच्छेदकत्वम्=धात्वर्थतावच्छेदकत्वं प्राप्तमिति तादृशोत्पत्तावेव कालान्वय इत्यर्थः । अत्र चोत्पत्तौ लडादेः शक्तिकल्पनापेक्षा नास्तीतीदमेव लाघवम्. अन्यत्सर्वं पूर्ववदेव । केचित्तु 'नश्यति' इत्यत्रापि कालस्य धात्वर्थनाशे एवोत्पत्तिसंबन्धेनान्वयः कर्तव्यो विनष्टदशायां च नाशस्याऽनन्तत्वेन सत्त्वेपि संबन्धभूतोत्पत्तेस्तत्राभावान्न विनष्टेपि 'नश्यति' इतिप्रयोगापत्तिरिति वदन्ति तदाह– वर्तमानकालस्येति ।

लृटः कालरूपार्थं निर्वक्तुमारभते–लृडित्यादिना । 'पक्ष्यति' इत्यत्राख्यातार्थकृतौ लृडर्थभविष्यत्त्वस्यान्वयो भवति, 'ज्ञास्यति' इत्यत्र तु भविष्यत्त्वस्य ज्ञानक्रियायामेवान्वयो न तु ज्ञानाश्रयत्वे–पूर्वोक्तदिशा ज्ञानासत्त्वेपि तदाश्रयत्वस्य वर्तमानत्वात् 'ज्ञास्यति' इतिप्रयोगानुपपत्तेरित्यर्थः । यद्यपीति–यद्यपि भविष्यत्त्वमित्यत्र भूधातोरुत्पत्त्यर्थकतया 'पक्ष्यति' इत्यादौ पाककृत्यादावनागतकालोत्पत्तिकत्वं यदस्ति तदेव भविष्यच्छब्दार्थोस्तीति पाककृत्यादावनागतकालोत्पत्तिकत्वप्रतीतिरेव लृटा प्राप्ता तथाप्युत्पत्तिप्रतीतेर्निष्फलत्वात् प्रत्ययार्थकृतावनागतत्वमात्रस्य लृटा प्रतीतिः स्वीक्रियते इत्यर्थः । 'भविष्यति' इत्यादावुत्पत्तेरेव धात्वर्थतया तादृशोत्पत्तावेवाऽनागतत्वस्यान्वयः कर्तव्य इत्याह–भविष्यतीति । दर्शितेति– 'नङ्क्ष्यति' इत्यत्रोत्पत्तेर्लृडर्थत्वं धात्वर्थतावच्छेदकत्वं वा ( ९९६ ) उक्तरीत्या स्वीकृत्य तादृशोत्पत्तावेव लृडर्थकालस्यान्वयः कर्तव्यः, अन्यथा=भविष्यत्कालस्य नाशे धात्वर्थेऽन्वयस्वीकारे विनष्टघटप्रतियोगिकवर्तमाननाशस्य ध्वंसरूपस्याऽनन्तत्वेन भाविकालेपि संभवात् तत्र भविष्यत्कालस्यान्वयसंभवाच्च तादृशविनष्टघटमादायापि 'नङ्क्ष्यति' इतिप्रयोगः स्यादेव न चैतदिष्टमिति नाशोत्पत्तौ लृडर्थकालस्यान्वयः कर्तव्यस्तथा च वर्तमानो यो घटस्तत्प्रतियोगिकनाशस्योत्पत्तेर्भावित्वात् तत्र भविष्यत्कालान्वयो युक्त इति भाविविनाशस्य प्रतियोगिभूतघटमादायैव 'नङ्क्ष्यति' इतिप्रयोगः संभवति, विनष्टघटप्रतियोगिकनाशोत्पत्तेश्च विनष्टत्वेन तत्र भविष्यत्कालान्वयाऽसंभवाद् विनष्टघटमादाय 'नङ्क्ष्यति'

तथा च वर्तमानप्रागभावप्रतियोगित्वं प्रतियोगितासंबन्धेनाऽन्वयी वर्तमानप्रागभावो वा लृट्प्रत्ययार्थः। प्रागभावानङ्गीकारे वर्तमानकालध्वंस एव तदर्थः, ध्वंसस्य कालोपाधित्वेन स्वसमानकालपदार्थाधारतयाऽऽधेयतासंबन्धेन. अनागतकृतेर्वर्तमानकालध्वंसोत्पत्तिमत्तया उत्पत्तिसंबन्धेन वा कृत्यादावन्वयः।

अथ पचमानेप्युदीच्यपाकानुकूलकृतिमादाय 'पक्ष्यति' इत्यादिप्रयोगापत्तिः, पाकानुकूलकृतित्वावच्छेदेन चाऽनागतत्वबोधस्वीकारो न संभवति-पूर्वपूर्वपाकानुकूलकृतौ तद्बाधात् पक्ष्यमाणेपि 'पक्ष्यति' इतिप्रयोगानुपपत्तेः।

---

इतिप्रयोगापत्तिर्नास्तीति बोध्यम्। एवमेव 'भविष्यति' इत्यत्रापि भविष्यत्कालस्योत्पत्तावेवान्वयो विज्ञेयो न तु घटे. अन्यथा वर्तमानघटमादायापि तस्य भाविकालसंबन्धसंभवेन 'भविष्यति' इतिप्रयोगः स्यात् न चैतदिष्टम्.अनुत्पन्नघटमुद्दिश्यैव 'भविष्यति' इतिप्रयोगस्येष्टत्वादिति सारः। कालभूतलृडर्थमाह- तथा चेति, 'पक्ष्यति' इत्यादौ वर्तमान=शब्दप्रयोगाधिकरणक्षणवृत्तिप्रागभावप्रतियोगित्वं पाककृत्यादौ. 'ज्ञास्यति' इत्यादौ च ज्ञानादावस्त्येव, किं वोक्तकृत्यादौ वर्तमानप्रागभावप्रतियोगिता वर्तते एवेति तादृशप्रतियोगितासंबन्धेन कृत्यादौ यो वर्तमानप्रागभावः स लृडर्थ इत्यर्थः। ननु :प्रागभावो हि स्वप्रतियोगिसमवायिकारणे एव भवति नान्यत्र नाशश्च ध्वंस एव ध्वंसस्य च न समवायिकारणं किमपि भवति यत्र ध्वंसरूपनाशस्य प्रागभावः संभवेदिति 'नङ्क्ष्यति' इत्यत्र कथं नाशस्य वर्तमानप्रागभावप्रतियोगित्वं स्यादित्याशङ्क्याह- प्रागभावानङ्गीकारेति, नाशस्येत्यादिः। नाशस्य प्रागभावानङ्गीकारे हि वर्तमानकालस्य ध्वंस एव लृडर्थः। किं वा मीमांसकैकदेशिमतमुद्दिश्याह-प्रागभावानङ्गीकारे इति। 'पक्ष्यति' इत्यादावनागतकृतौ कालोपाधिस्वरूपवर्तमानकालध्वंसाधेयता वर्तत एव-वर्तमानकालध्वंसस्य कालोपाधित्वेन स्वसमानकालिककृत्यादिपदार्थाधारत्वात् क्षणादिवदिति तादृशाधेयतासंबन्धेन वर्तमानकालध्वंसस्य तादृशकृत्यादावन्वयः, किं वा तादृशानागतकृतौ या वर्तमानकालध्वंसस्योत्पत्तिस्तत्संबन्धेन तादृशानागतकृत्यादौ वर्तमानकालध्वंसस्यान्वयो भविष्यति। भाविपदार्थानां बौद्धत्वेन सत्त्वं स्वीकृत्यैष विचारो विज्ञेयः।

शङ्कते- अथेति, पचमानपुरुषस्य पाकानुकूलकृतयोप्यवान्तरफूत्कारादिव्यापाराणां पूर्वापरीभावापन्नानां भेदादनेका भवन्ति तत्र 'पक्ष्यति' इत्यत्र भविष्यत्त्वस्य प्रागभावप्रतियोगित्वरूपस्योक्तस्य लृडर्थस्य कृतावन्वयस्वीकारेऽप्युदीच्यां पाकानुकूलकृतिम्=क्रियमाणपाकानुकूलामेवोदीच्यां कृतिमादाय पचमानेपि 'पक्ष्यति' इतिप्रयोगः स्यात्-उदीच्यतादृशकृतौ भविष्यत्त्वस्य सत्त्वादेवेत्यर्थः। ननु भविष्यत्त्वस्य कृतित्वावच्छेदेनान्वयः क्रियते इति क्रियमाणपाकानुकूलोदीच्यकृतौ भविष्यत्त्वसत्त्वेपि क्रियमाणपाकानुकूलयावद्कृतौ भविष्यत्त्वस्याऽसत्त्वान्न पचमाने 'पक्ष्यति' इतिप्रयोगापत्तिरित्याशङ्क्याह- पाकानुकूलकृतित्वेति, पूर्वपूर्वपाकानुकूलकृतीनां जातत्वेन तत्र तद्बाधात्=अनागतत्वान्वयबाधात्, करिष्यमाणपाकानुकूलकृतिष्वपि पूर्व-

तत्तत्पाकानुकूलकृतित्वावच्छेदेनापि तदन्वयाऽसंभवः— तत्तत्पाकत्वेन पदादनुपस्थितेः । नापि यत्किंचित्पाकानुकूलाद्यकृतित्वावच्छेदेन तदन्वयः— आद्यत्वोपस्थापकपदाभावात्. तत्तद्व्यक्तिमनन्तर्भाव्य दुर्वचत्वाच्चेति चेत् ?, न— प्रागभावस्य वर्तमानत्वम्=शब्दप्रयोगाधिकरणक्षणवृत्तित्वम्, वर्तमानप्रागभावस्य प्रत्ययार्थत्व तस्य स्वविशिष्टकालवृत्तिकृतिजन्यपाकाननुकूलत्वविशिष्टप्रतियोगितासंबन्धेन. वर्तमानकालध्वंसस्य तदर्थत्वे च स्वपूर्वकालीनकृतिजन्यपाकाननुकूलत्वविशिष्टाधेयत्वसंबन्धेन: कृत्यंशेऽन्वयोपगमे उदीच्यकृतौ वर्तमानप्रागभा-

---

पूर्वकृतिव्यक्तिषु तद्बाधात् पक्ष्यमाणेपि 'पक्ष्यति' इतिप्रयोगो न स्यादित्यर्थः । ननु 'पाकानुकूलकृतौ भविष्यत्वान्वयः' इत्यत्र पाकपदेन भविष्यत्तत्पाकव्यक्तिं ग्रहीष्यामस्तदनुकूलकृतौ च भविष्यत्त्वान्वयस्वीकारे नोक्तदोषप्रसङ्ग इत्याशङ्क्याह— तत्तत्पाकेति । 'पक्ष्यति' इत्यादाविति शेषः । उक्ते हेतुमाह— तत्तत्पाकत्वेनेति । ननु यत्किंचित्पाकानुकूला याऽऽद्या कृतिस्तत्र लडर्थभविष्यत्त्वस्यान्वयं कुर्मस्तथा च पचमानपुरुषकर्तृकपाकानुकूलायामुदीच्यकृतौ भविष्यत्त्वस्य सत्त्वेऽप्याद्यकृतौ भविष्यत्त्वं नास्ति— तस्या जातत्वादिति न पचमाने 'पक्ष्यति' इतिप्रयोगापत्तिः, पक्ष्यमाणकर्तृकभविष्यत्पाकानुकूलायामाद्यकृतौ तु भविष्यत्त्वमस्त्येवेति न पक्ष्यमाणे 'पक्ष्यति' इतिप्रयोगानुपपत्तिश्चेत्याशङ्क्याह— नापीति । 'पक्ष्यति' इत्यादावाद्यत्वोपस्थापकपदाभावेन आद्यकृतित्वावच्छेदेनान्वयो न संभवतीत्याह— आद्यत्वेति । किं चात्रपक्षे पाककृतिव्यक्तीनां तत्तद्व्यक्तित्वेन ग्रहणे प्राप्ते ह्यननुगमः स्यादित्याह— तत्तद्व्यक्तिमिति । परिहरति— नेति । उक्तलडर्थभूतवर्तमानप्रागभावप्रतियोगित्वघटकस्य प्रागभावस्य वर्तमानत्वमाह— प्रागभावस्येति । उक्तदोषापत्तिं निवारयति— वर्तमानेति, वर्तमानप्रागभावस्य=शब्दप्रयोगाधिकरणक्षणवृत्तिप्रागभावस्य, प्रत्ययार्थत्वे=लडर्थत्वे, तस्य=वर्तमानप्रागभावस्य स्वविशिष्टत्यादिसंबन्धेन कृतावन्वय इत्यन्वयः, स्वविशिष्टेति— स्वं वर्तमानप्रागभावस्तद्विशिष्टो यो वर्तमानकालस्तद्वृत्तिकृतिजन्यो यः पचमानकर्तृकः पाकस्तदननुकूलत्वसमानाधिकरणप्रतियोगितासंबन्धेन वर्तमानप्रागभावस्य लडर्थस्य लडर्थकृतावन्वय इष्टोस्ति तथा च पचमानकर्तृकर्तृकपाकानुकूलोदीच्यकृतौ वर्तमानप्रागभावप्रतियोगितायाः सत्त्वेप्युक्तस्वविशिष्टकालवृत्तिकृतिजन्यपाका( पचमानकर्तृकपाका ) ननुकूलत्वं नास्ति— तादृशपाकानुकूलत्वस्यैव सत्त्वादिति नोक्तोदीच्यकृतावुक्तसंबन्धेन वर्तमानप्रागभावस्यान्वयः संभवतीति न पचमाने उक्ता 'पक्ष्यति' इतिप्रयोगापत्तिः, भविष्यत्पाककृतौ तु पचमानकर्तृकपाकाननुकूलत्वं वर्तमानप्रागभावप्रतियोगित्वं चास्त्येवेत्येतादृशसंबन्धेन वर्तमानप्रागभावस्य भविष्यत्पाककृतावन्वयः संभवत्येवेति न पक्ष्यमाणे 'पक्ष्यति' इतिप्रयोगानुपपत्तिरित्यर्थः । वर्तमानकालध्वंसस्य तदर्थत्वे=लडर्थत्वे तत्संबन्धस्वरूपमाह— स्वपूर्वेति, अत्रापि वर्तमानकालध्वंसपरामर्शकम् "तस्य" इतिपदमनुवर्तनीयम् । अत्र स्वं वर्तमानकालध्वंसस्तत्पूर्वकालिका या कृतिस्तज्जन्यपाकाननुकूलत्वसमानाधिकरणाधेयतासंबन्धेन

बादेर्दर्शितविशिष्टसंबन्धाऽसत्त्वेनाऽतिप्रसङ्गविरहात् । ध्वंसपूर्वत्वं च तदनधिकरणत्वमेव ।

न चान्तरालिककृतिजन्यस्य पच्यर्थव्यापारस्य पूर्वव्यापारानुकूलकृत्यऽजन्यतयाऽऽन्तरालिककृतेः पूर्वकृतिजन्यपाकाननुकूलत्वमक्षतमेवेति तस्या अपि निरुक्तविशिष्टसंबन्धेन वर्तमानप्रागभावादिमत्त्वमक्षतमेवेति वाच्यम्, कृतिजन्यपाकेत्यत्र कृतिजन्यव्यापाराधीनफलानुकूलव्यापारस्य विवक्षितत्वात् ।

---

वर्तमानकालध्वंसस्य लडर्थस्य 'पक्ष्यति' इत्यत्र लडर्थकृतावन्वयः स्वीक्रियते तथा च वर्तमानकालध्वंसस्य कालरूपत्वेन तदाधेयता भविष्यत्पाककृतौ वर्तते एव वर्तमानकालध्वंसरूपभविष्यत्कालात् पूर्वकालिककृतिजन्यो यः पचमानकर्तृकपाकस्तदननुकूलत्वमपि वर्तते इत्येतादृशसंबन्धेन भविष्यत्पाककृतौ वर्तमानकालध्वंसान्वयसंभवान्न पक्ष्यमाणे 'पक्ष्यति' इतिप्रयोगानुपपत्तिः, पचमानकर्तृकपाकानुकूलोदीच्यकृतौ तु पचमानकर्तृकपाकाननुकूलत्वस्य संबन्धघटकस्याऽसत्त्वान्न तादृशकृतौ वर्तमानकालध्वंसान्वयः संभवति येन पचमानेपि 'पक्ष्यति' इतिप्रयोगापत्तिः स्यादित्यन्वयः । फलमाह- उदीच्यकृताविति । उदीच्यकृतौ=वर्तमानपाकोदीच्यकृतौ । द्वितीयसंबन्धस्वरूपे स्वपूर्वेति यदुक्तं तदर्थमाह- ध्वंसेति, स्वपूर्वकाल इत्यनेन वर्तमानकालध्वंसानधिकरणकालो ग्राह्य इत्यर्थः । स च कालो वर्तमानकाल एव तादृशकालीनकृतिजन्यपाकाननुकूलेत्यन्वयः ।

ननु पचमानकर्तृकपाकानुकूला ह्येकाऽऽद्या कृतिरपरोदीच्या कृतिरपरा च तन्मध्यकालवर्तिनी आन्तरालिककृतिरपि भवत्येव तत्रान्तरालिककृतिजन्यो व्यापारः पूर्वव्यापारानुकूलकृतिजन्यो न भवति पूर्वकृतिजन्यश्च व्यापार आन्तरालिककृतिजन्यो न भवतीत्यान्तरालिककृतौ पूर्वकृतिजन्यपाकाननुकूलत्वमस्त्येवेत्यान्तरालिककृतावुक्तसंबन्धेन लडर्थकालस्यान्वयसंभवात् पचमाने 'पक्ष्यति' इतिप्रयोगः स्यादेवेत्याशङ्क्याह- न चेति । परिहरति- कृतिजन्येति । विवक्षितत्वादिति- तथा च 'स्वविशिष्टकालवृत्तिकृतिजन्यव्यापाराधीनफलानुकूलव्यापाराननुकूलत्वसमानाधिकरणप्रतियोगितासंबन्धेन कृतौ वर्तमानप्रागभावस्य लडर्थस्यान्वयः' इति वक्तव्यं तथा च वर्तमानप्रागभावविशिष्टो यो वर्तमानकालस्तद्वृत्तिकृतिजन्यो यः पाकादिव्यापारस्तदधीनं यद् विक्लित्तिरूपं फलं तदनुकूलो यः स एव वर्तमानः पाकव्यापारस्तदननुकूलत्वं भविष्यत्पाककृतौ त्वस्तीति न पक्ष्यमाणे 'पक्ष्यति' इतिप्रयोगानुपपत्तिः, आन्तरालिकोक्तकृतौ तु पूर्वकृतिजन्यपाकाधीनफलानुकूलतादृशपाकानुकूलत्वमेवास्ति न तु तदननुकूलत्वमिति नान्तरालिककृतौ वर्तमानप्रागभावान्वयः संभवति येन पचमानेपि त्वदुक्तरीत्या 'पक्ष्यति' इतिप्रयोगापत्तिः स्यादित्यर्थः । पचमानकर्तृकव्यापाराणां फलाननुकूलत्वं नास्ति फलानुकूलव्यापाराननुकूलत्वं च पचमानवृत्तिकृतिषु नास्तीति भावः ।

'पक्ता' इत्यादौ लुटोऽनद्यतनभविष्यत्त्वमर्थः । अनद्यतनभविष्यत्त्वं च शब्दप्रयोगाधिकरणदिवसाऽवृत्तित्वे सति शब्दप्रयोगकालीनप्रागभावप्रतियोगित्वम्, शब्दप्रयोगाधिकरणदिवसध्वंसोत्पत्तिकत्वं वा ।

केचित्तु-भविष्यत्त्वमेव तस्यार्थः, क्रियायाः कृतेर्वा स्वरूपसदऽनद्यतनत्वमेव तत्साधुतानियामकम् । असाधुत्वादेव 'अद्य पक्ष्यति' इत्यादौ 'पक्ता' इति न प्रयोग इत्याहुः । तन्न- तथा सति भविष्यत्त्वादिकमपि नाख्यातार्थः स्यात्, स्वरूपसद्भविष्यत्त्वादिकमेव ऌडादिप्रत्ययस्य साधुतानियामकम्, असाधुत्वादेव 'पक्ष्यति' इत्यादौ 'पक्ता' इतिवत् 'पचति' इत्यादौ 'पक्ष्यति' इतिप्रयोगविरह इत्यस्यापि वक्तुं शक्यत्वात् ।

'पचति' 'पक्ष्यति' इत्यादेरविलक्षणबोधजनकत्वमनुभवविरुद्धमिति कालविशेषबोध आवश्यक इतिचेत् ?, तदा 'पक्ता' 'पक्ष्यति' इत्यादेरपि विलक्षणबोधजनकत्वस्याऽऽनुभविकतयाऽनद्यतनत्वान्वयबोधोपि दुर्वारः । यदि च 'पक्ष्यति' इत्यादिवाक्यजन्यबोधे सति भविष्यत्त्वादिसंशयानुदयाद् : भविष्यत्त्वादेः शाब्दधीविषयत्वमावश्यकमित्युच्यते ? तदाऽनद्यतनबोधेपीदृशीमेव युक्तिं गृहाण ।

एवम् 'न पक्ष्यति' इत्यादावभावेऽनागतकालावच्छिन्नत्वभानमावश्यकम्,

---

लुडर्थत्वेन विवक्षितं कालमाह- पक्तेति । अनद्यतनभविष्यत्वार्थमाह- शब्देति । पक्षान्तरमाह- शब्देति ।

कालभूतलुडर्थे मतान्तरमाह- केचिदिति । तस्य=लुटः । तत्साधुता=लुट्साधुता । लुडर्थकृतावनद्यतनत्वं स्वरूपसदस्तीति 'अद्य पक्ष्यति' इत्यस्य स्थाने 'पक्ता' इतिप्रयोगोऽसाधुरेवेत्याह- असाधुत्वादिति । 'पक्ष्यति' इत्यस्य सामान्यतो भविष्यदर्थकत्वेन तत्स्थाने 'पक्ता' इतिप्रयोगः संभवत्येवेत्यभिप्रायेणोक्तम् 'अद्य पक्ष्यति' इति । परिहरति- तन्नेति, प्रतिबन्द्युत्तरमाह- तथा सतीति । तथा सति=अनद्यतनत्वस्य लुडर्थत्वाभावे सति ।

: शङ्कते-पचतीति । कालविशेषबोध इति-'पचति' इत्यत्र वर्तमानकालबोधः, 'पक्ष्यति' इत्यत्र भविष्यत्कालबोधः । उत्तरमाह- तदेति । पुनराशङ्कते- यदीति । सति=जाते । उत्तरमाह- तदेति । ईदृशीम्='पक्ता' इतिवाक्यजन्यबोधे जातेऽनद्यतनत्वसंशयानुदयादनद्यतनत्वस्य शाब्दधीविषयत्वमावश्यकमिति तादृशानद्यतनत्वस्यान्यतो भानासंभवाल्लुडर्थत्वं सिद्धमेवेत्यर्थः ।

यथा 'पक्ष्यति' इत्यादौ कृतौ कालान्वयस्तथा 'न पक्ष्यति' इत्यादि नञ्समभिव्याहारस्थले कृत्यभावे एव कालान्वयः कर्तव्यो न तु कृतौ- पूर्वमेव "नञ्समभिव्याहारस्थलेपि ५९९" इत्यादिना दोषस्य प्रदर्शितत्वात्, किं च भविष्यत्कालिकचैत्रकृतेरसंभवेनाऽसद्भूत-

अन्यथा पक्ष्यत्यपि वर्तमानवृत्तिपाककृत्यभावमादाय 'न पक्ष्यति' इत्यादि-प्रयोगप्रसङ्गात्। न च पक्ष्यत्यप्यऽनागतयत्किंचित्कालावच्छेदेन वर्तमानम-भावमादाय 'न पक्ष्यति' इतिप्रयोगो दुर्वार एवेति वाच्यम्, अनागतकालाव-च्छिन्नत्वं हि तत्र वर्तमानक्षणध्वंसावच्छिन्नत्वम्, तादृशध्वंसनिष्ठावच्छेदकता चानवच्छिन्ना ग्राह्या, अनागतकृतिमति च पुंसि तदभाववृत्तौ वर्तमानक्षणध्वं-सरूपः कालः प्रतियोगिवृत्तावप्यवच्छेदक इति विरोधभञ्जनाय तादृशकृत्यन-वच्छेदकाऽवान्तरकाल एवावच्छेदक उपेय इति नोक्तातिप्रसङ्ग इति।

---

त्वात् तत्र कालान्वयाऽसंभवादित्यभिप्रायेणाह- एवमिति। विपक्षे बाधकमाह- अन्यथेति, अन्यथा=यद्युक्ताभावेऽनागतकालान्वयो न स्वीक्रियेत तदाऽनागतकालानवच्छिन्नमेव कृत्यभाव-मादाय 'न पक्ष्यति' इति प्रयोगो भविष्यति तथा च वर्तमानं वृत्तम्=भूतं च पाककृत्य-भावमादाय किं वा वर्तमानवृत्तिम्=वर्तमानकालवर्तिनं पाककृत्यभावमादायापि 'न पक्ष्यति' इति प्रयोगः स्यादेव- एतादृशस्यापि कृत्यभावस्याऽनागतकालानवच्छिन्नत्वादेव, यदा चाना-गतकालस्य कृत्यभावेऽन्वयः स्वीक्रियते तदा वर्तमानेत्याद्युक्ताभावमादाय 'न पक्ष्यति' इति प्रयोगापत्तिर्नास्ति- वर्तमानाभावे वर्तमानकालस्य भूताऽभावे च भूतकालस्यान्वयसत्त्वेन तत्रा-नागतकालान्वयस्याऽसंभवादित्यर्थः। अत्र च यद्यपि भविष्यत्कालिकचैत्रकृतेरसंभवेन तदभाव-स्याप्रसिद्धिरिति न तादृशकृत्यभावेपि भविष्यत्कालान्वयः संभवति तथापि चैत्रीयवर्तमानकृतेः प्रसिद्धत्वेन तादृशकृत्यभावो भविष्यत्काले प्रसिद्ध्यत्येवेति तत्रैव भविष्यत्कालान्वयो विज्ञेयः। अत्र "वर्तमानवृत्ति" इत्यस्य स्थाने "वर्त्तमानवृत्त" इत्यपि पाठः स चापि व्याख्यात एव। ननु यो भविष्यत्काले पाकं करिष्यत्यपि सोपि न सकलभविष्यत्काले पाकं करिष्यति किं तु यत्किंचिद्भविष्यत्काले एव तथा च तदन्ययत्किंचिद्भविष्यत्काले. वर्तमानम्=सन्तम्=यत्किं-चिद्भविष्यत्कालावच्छिन्नं कृत्यभावमादायाभावे उक्तकालान्वयस्वीकारेण पक्ष्यत्यपि 'न पक्ष्यति' इति प्रयोगः स्यादेवेत्याशङ्क्याह- न चेति। उत्तरमाह- अनागतेति, तत्र='न पक्ष्यति' इत्यत्र कृत्यभावे यदनागतकालावच्छिन्नत्वमुक्तं तद् वर्तमानक्षणध्वंसावच्छिन्नत्वरूपं ज्ञेयम्, एवं हि कृत्यभावस्यात्र वर्तमानक्षणध्वंसावच्छिन्नत्वे प्राप्ते तादृशध्वंस एव कृत्यभावस्यावच्छेदक इति प्राप्तं तादृशावच्छेदकीभूतध्वंसनिष्ठा चाऽवच्छेदकता कालानवच्छिन्नैव ग्राह्या तथा च 'न पक्ष्यति' इत्यत्र नञा सामान्यत एव वर्तमानक्षणध्वंसावच्छिन्नकृत्यभावो बोध्यते न त्वना-ऽगतयत्किंचित्कालावच्छिन्नवर्तमानक्षणध्वंसावच्छिन्नकृत्यभावो येनानागतयत्किंचित्कालाव-च्छिन्नकृत्यभावमादाय पक्ष्यत्यपि 'न पक्ष्यति' इतिप्रयोगः स्यादित्यर्थः। प्रदर्शित-दोषस्याभावं स्वयमप्युपपादयति- अनागतकृतीति, अनागतकृतिमति पुरुषे तदभाववृत्तौ= अनागतकृत्यभावसत्त्वे ( अनागतकृत्यभावे सति ) वर्तमानक्षणध्वंसरूपः कालस्तदभाववृत्ता-वच्छेदकः स्यात् प्रतियोगिवृत्तौ=अनागतकृतिवृत्तावप्यवच्छेदकः स्यात् अर्थात् यद्यनागतकृ-

उक्तयुक्त्याऽनागतत्वस्य यथा लृडाद्यर्थत्वं तथा 'अद्य पक्ष्यति न पक्ता' इत्यत्रानद्यतनकालावच्छिन्नत्वस्याभावेऽभाने श्वः पक्ष्यत्यप्यद्यतनाऽनागतकालावच्छिन्नपाककृत्यभावमादाय 'न पक्ता' इतिप्रयोगप्रसङ्गेन लुटोऽनद्यतनार्थत्वमावश्यकम् ।

अनागतानद्यतनकालावच्छिन्नत्वमप्युक्तरीत्यातिप्रसङ्गवारणाय प्रकृतशब्दप्रयोगाधिकरणदिनध्वंसनिष्ठानवच्छिन्नावच्छेदकताकत्वरूपं ग्राह्यम् । अवच्छेद्यावच्छेदकभावश्च संबन्धविधया भासते ध्वंस एव पदार्थ इत्यवधेयम् ।

---

तिमति पुंसि तदभावः=अनागतकृत्यभावः स्यात्तदा वर्तमानक्षणध्वंसरूपः कालोऽनागतकृतेस्तदभावस्य चावच्छेदकः स्यात् न चैतत्संभवति— एकस्यैव पदार्थस्य तत्तदभावोभयावच्छेदकत्वाऽसंभवादिति वर्तमानक्षणध्वंसरूपकालस्यानागतकृतितदभावोभयावच्छेदकत्वप्रातिरूपस्य विरोधस्य भञ्जनाय=परिहाराय तादृशकृत्यनवच्छेदकोऽवान्तरकाल एव तदभावावच्छेदक इत्युपेयम्—अर्थात् पक्ष्यमाणे पुरुषे याऽनागतकृतिस्तदवच्छेदकोऽन्योवान्तरकालस्तादृशकृत्यभावावच्छेदकश्चान्योऽवान्तरकाल इति स्वीकार्यं तथा चानागतकृत्यवच्छेदकावान्तरकाले पक्ष्यमाणे पुंसि 'न पक्ष्यति' इतिप्रयोगापत्तिरूपोतिप्रसङ्गो नास्ति— अनागतकृत्यवच्छेदकावान्तरकालापेक्षयाऽनागतकृत्यभावावच्छेदकावान्तरकालस्य भिन्नत्वात्, किं चानागतकृतितदभावयोरवच्छेदककालयोरेवं भेदे प्राप्ते उक्तावच्छेदकताविरोधोपि नास्तीत्यर्थः ।

प्रकृतमाह— उक्तयुक्त्येति यथाऽनागतत्वं लृडर्थस्तथाऽनद्यतनत्वं लुडर्थ इति स्वीकर्तव्यम्, अन्यथा 'अद्य पक्ष्यति न पक्ता' इत्यत्र पाकानुकूलकृत्यभावेऽनद्यतनत्वस्यान्वयस्तद्भानं च न स्यात् तथा च श्वः=आगामिदिने पक्ष्यत्यपि पुरुषेऽद्यतनाऽनागतकृत्यभावमादाय 'न पक्ता' इतिप्रयोगापत्तिः स्यादेव न चैतदिष्टं तस्मादनद्यतनत्वं लुडर्थोऽस्त्येव तथा च 'न पक्ता' इत्यत्र तनाऽनद्यतनानागतस्य कृत्यभावस्य बोधनादद्यतनानागतकृत्यभावमादाय श्वः पक्ष्यति पुंसि 'न पक्ता' इतिप्रयोगापत्तिर्नास्तीत्यर्थः ।

अनागतेति—'न पक्ता' इत्यत्र पाकानुकूलकृत्यभावेऽनागतानद्यतनकालावच्छिन्नत्वम्=वर्तमानदिनध्वंसावच्छिन्नत्वमस्तीति तादृशवर्तमानदिनध्वंसनिष्ठा याऽवच्छेदकता सा दर्शितदिशा कालानवच्छिन्ना ग्राह्या। अन्यथाऽनद्यतनानागतकाले पक्ष्यत्यपि पुरुषेऽनद्यतनानागतयत्किंचित्कालावच्छिन्नं कृत्यभावमादाय 'न पक्ता' इतिप्रयोगापत्तिरूपोतिप्रसङ्गः स्यादेवेत्यर्थः । 'न पक्ता' इत्यत्र कृत्यभावे यदनागतानद्यतनकालावच्छिन्नत्वं तत् प्रकृतशब्दः='न पक्ता' इतिशब्दस्तत्प्रयोगाधिकरणदिनस्य यो ध्वंसस्तन्निष्ठा याऽनवच्छिन्नावच्छेदकता तादृशानवच्छिन्नावच्छेदकताकत्वरूपं ग्राह्यमित्यन्वयः । 'पक्ता' इत्यत्रापि यत् पाकानुकूलकृतावुक्तवर्तमानदिनध्वंसरूपलुडर्थकालावच्छिन्नत्वं भासते तत्रोक्तध्वंस एव लुडाद्यर्थोऽस्ति तादृशध्वंसस्य योऽनद्यतनाऽनागतकालेनावच्छेद्यावच्छेदकभावः स संबन्धविधया भासते इत्याह—अवच्छेद्येति । ध्वंसः=लुट्लृडाद्यर्थत्वेनाभिमत उक्तविशिष्टध्वंस एव पदार्थः=लुट्लृडाद्यर्थः ।

अथ नञ्समभिव्याहारस्थलेपि कृतावेव कालान्वयोस्तु. अनागतकृतिश्च महाप्रलयस्याऽप्रामाणिकतया सर्वत्रैव प्रसिद्ध्यतीति न प्रतियोग्यप्रसिद्धिः, अभावान्वयश्चात्मनि कालानवच्छिन्नाश्रयतासंबन्धेनोपगम्यतामिति चेत् ?, न- यदुत्तरकाले चैत्रीयौदनपाकादिकमप्रसिद्धं तदानीम् ' चैत्र ओदनं न पक्ष्यति ' इतिप्रयोगानुपपत्तेः- अनागतचैत्रीयौदनकर्मकपाकानुकूलकृत्यऽप्रसिद्ध्या तदभावप्रत्यायनासंभवात् ।

न चाभावे कालान्वयोपगमेपि यत्तण्डुलव्यक्त्यादिकर्मकपाक एवाप्रसिद्धस्तद्व्यक्त्यादिपरस्य ' एतत्तण्डुलं न पक्ष्यति ' इत्यादिवाक्यस्याऽप्रमाणत्वापत्तिः- प्रतियोग्यप्रसिद्धेर्दुर्वारत्वादिति तत्र पाके तद्व्यक्तिकर्मकत्वाभाव एव नञा बोध्यते इत्युपगन्तव्यं तथा चोक्तस्थलेपि तत्तत्पाके चैत्रीयौदनकर्मकत्वाभावबोधोपगमेनोपपत्तिरिति वाच्यम्, पाके तत्कर्मकत्वाभावबोधोपगमे तादृशपाकानुकू-

---

" नञ्समभिव्याहारस्थले प्रतियोगिन्येव कालान्वयः " इत्यादि ( पृ. ९९९ ) यदाशङ्कितं तदेवाशङ्कते- अथेति । योत्र प्रतियोग्यप्रसिद्ध्या ( पृ. ९९९ ) दोषः प्रदर्शितस्तं पराचष्टे- अनागतेति, यदि महाप्रलयः स्यात्तदा तदधिकरणकृतेरप्रसिद्ध्या प्रतियोग्यप्रसिद्धिः स्यादपि न चैवमस्ति, महाप्रलयान्यकाले तु कस्या अपि कृतेः सत्त्वादत्यन्ताभावो न संभवतीत्यर्थः । यदुक्तम् " न च कालानवच्छिन्नाधारतासंबन्धेन ( पृ. ९९९ )" इति- तदेवाह- अभावान्वय इति । परिहरति- नेति । यदुत्तरकाले=यादृशोत्तरकाले ( यदा शब्दप्रयोगाधिकरणकालानन्तरम् ) चैत्रकर्तृकपाकोऽप्रसिद्धः=असंभवी तदानीम्=तादृशोत्तरकाले ' चैत्र ओदनं न पक्ष्यति ' इतिप्रयोगानुपपत्तिः स्यात् त्वया तत्र तादृशोत्तरकालवृत्तिकृतेरभावः प्रत्यायनीयः स च न संभवति- प्रतियोगिभूतायास्तादृशोत्तरकालवृत्तिकृतेरप्रसिद्धत्वादित्यर्थः, तस्मात् नञ्समभिव्याहारस्थले कृत्यभावे एव कालान्वयः कर्तव्य इति सर्वं प्रतिपादितम् ।

ननु 'न पक्ष्यति' इत्यादौ पाकानुकूलकृतेरभावेपि कालान्वयोपगमे यत्तण्डुलव्यक्तिकर्मकपाकोऽप्रसिद्धस्तद्व्यक्तिपरस्य=तत्तण्डुलव्यक्तिमुद्दिश्य प्रयुक्तस्य 'एतत्तण्डुलं न पक्ष्यति ' इतिवाक्यस्याऽप्रामाण्यं स्यादेव- प्रतियोग्यप्रसिद्धेः=तत्तण्डुलकर्मकपाकाप्रसिद्धौ तदनुकूलकृतेरप्यप्रसिद्धिः प्राप्ता कृत्यभावबोधनस्थले च कृतिरेव प्रतियोगिभूता भवति अप्रसिद्धप्रतियोगिकाभावबोधस्य चानभ्युपगमात्, न चोक्तस्थलेप्युक्तवाक्यस्याऽप्रामाण्यमिष्टमिति तत्प्रामाण्योपपत्त्यर्थं तत्र पाके तत्तण्डुलव्यक्तिकर्मकत्वाभाव एव नञा बोध्यते इतिस्वीकार्यं तथा चोक्तस्थलेपि=यदुत्तरकाले चैत्रीयौदनपाकादिकमप्रसिद्धं तदानीम् 'चैत्र ओदनं न पक्ष्यति' इत्यत्रापि तत्पाके चैत्रीयौदनकर्मकत्वाभावः=चैत्रकर्तृकत्वौदनकर्मकत्वाभाव एव नञा बोध्यते तच्च संभवत्येवेति नोक्तस्थले एतद्वाक्यप्रयोगानुपपत्तिरित्याशङ्क्याह- न चेति । अत्रापि दोषमाह- पाके इति, ' चैत्र ओदनं न पक्ष्यति ' इत्यत्र पाके चैत्रीयौदनकर्मकत्वाभावबोधस्वीकारे एतदभावान्वयिपाकस्याऽनागतस्य

लानागतकृतेः कर्तरि भानस्योपगन्तव्यतया तदुत्तरं कदाचिदपि येन न पक्ष्यते तादृशकर्तृसमभिव्याहृतदर्शितवाक्यस्य प्रामाण्योपपादनाऽसंभवात् । अगत्या तु यत्कर्मको यत्कर्तृकः पाकोऽप्रसिद्धस्तादृशकर्मकर्तृघटितार्थकनञ्पदवद्वाक्यस्याऽयोग्यतोपगम्यते ।

केचित्तु तत्रापि पाके तत्कर्मकत्वाभावस्य तादृशे च कर्तरि पाककृत्यभावस्य बोधमुपगम्य प्रामाण्यमुपपादयन्ति– तात्पर्यसत्त्वे एकेनापि नञाऽभावद्वयबोधनसंभवात् । न चैवं तण्डुलमात्रं पचति पक्ष्यति वा चैत्रेऽपि 'तण्डुलमयं न पचति न पक्ष्यति' इतिप्रयोगः स्यात्– तत्तण्डुलाऽकर्मकपाकानुकूलवर्तमानादिकृत्यऽभावाऽबाधादिति वाच्यम्, यतः सुबर्थप्रतियोगिकस्वार्थाभावान्वितक्रियाकर्तृत्वाभावबोधकत्वं नञः 'आकाशं न पचति घटः' इत्यादावपि न स्वीक्रियते–तादृ-

प्रसिद्धिः स्वीकार्या पाकप्रसिद्ध्या च तादृशपाकानुकूलानागतकृतेरपि प्रसिद्धिः प्राप्तैव तस्याश्च कृतेस्तादृशपाककर्तरि भानमुपगन्तव्यं तथा च तदुत्तरम्=वर्तमानकालानन्तरं येन पुंसा कदाचिदपि न पक्ष्यते तादृशकर्तृसमभिव्याहृतस्य=पाकव्यापाररहितकर्तृसमभिव्याहृतस्य 'चैत्र ओदनं न पक्ष्यति' इतिवाक्यस्य प्रामाण्यं न स्यात्– तत्र चैत्रीयपाकव्यापारस्याप्रसिद्धत्वेन तत्र चैत्रीयौदनकर्मकत्वाभावान्वयस्याऽसंभवादित्यर्थः । तस्माद् नञ्समभिव्याहारस्थले नञर्थाभावे एव प्रत्ययार्थकालस्यान्वयो युक्त इति तात्पर्यम् । ननु यत्कर्मको यत्कर्तृकश्च पाकोऽप्रसिद्ध एव तादृशकर्तृकर्मघटितस्य 'अयमेतत्तण्डुलं न पक्ष्यति' इतिवाक्यस्य त्वन्मते का गतिरित्याशङ्क्य तादृश्यवाक्ये बाधाभावरूपयोग्यताया अभावादगत्या प्रामाण्याभाव एवेत्याह– अगत्येति ।

मतान्तरमाह– केचिदिति,तत्र=यत्कर्मको यत्कर्तृकश्च पाकोऽप्रसिद्धस्तादृशकर्तृकर्मघटितार्थके नञ्पदवति 'अयमेतत्तण्डुलं न पक्ष्यति' इतिवाक्येऽपि पाके तत्कर्मकत्वाभावस्य तादृशकर्तरि च पाककृत्यभावस्यान्यत्र प्रसिद्धप्रतियोगिकस्य बोधमुपगम्य प्रामाण्यमुपपादयन्ति । नन्वेकस्य नञ्पदस्योक्ताभावद्वयबोधकत्वं कथं स्यादित्याशङ्क्याह– तात्पर्यसत्त्वे इति । शङ्कते– न चेति, तण्डुलं पचत्यपि चैत्रे 'तण्डुलमयं न पचति' इति प्रयोगः स्यात्–तदानीं चैत्रे पच्यमानतण्डुलाकर्मकपाकानुकूलकृत्यभावस्य बाधेऽपि पच्यमानतण्डुलाऽकर्मकपाकानुकूलकृत्यभावस्य वर्तमानस्याबाधात्. अर्थात् नञोऽभावद्वयबोधकत्वस्वीकारेणात्रापि पाके तादृशतण्डुलकर्मकत्वाभावस्य चैत्रे च तादृशपाककृत्यभावस्य बोधसंभवेन विशिष्टस्यापि तत्तण्डुलाकर्मकपाकानुकूलकृत्यभावबोधस्य संभवादिति । एवं पक्ष्यत्यपि 'न पक्ष्यति' इतिप्रयोगापत्तिदलस्य योजना विज्ञेया । आदिपदादस्मिन् पक्षेऽनागतकृत्यभावाबाधादिति वक्तव्यम् । परिहारमाह–यत इति, त्वया हि तत्तण्डुलाकर्मकेतिवचनेन सुबर्थप्रतियोगिकः=द्वितीयार्थतण्डुलकर्मकत्वप्रतियोगिको यः स्वार्थोऽभावस्तदन्विता या पाकक्रिया तत्कर्तृत्वाभावबोधकत्वं नञ उक्तं तत्तु 'आकाशं न पचति घटः' इत्यत्रापि पाककर्मताशून्याकाशस्य पाककर्तृत्वशून्यघटस्य च समभिव्याहारस्थलेऽपि न स्वीक्रि-

शबोधजनकताया अव्युत्पन्नत्वाद् येनोक्तातिप्रसङ्गः स्यात्, किं तु 'पाक आकाशाकर्मकः पाककृत्यभाववान् घटः' इत्यादिसमूहालम्बनबोध एव, उक्तस्थले च चैत्रे पाककर्तृत्वाभावबाधान्न प्रामाण्यप्रसङ्गः । अस्तु वा तत्राभावान्वितक्रियाकर्तृत्वाभावविषयकोऽसमूहालम्बनरूप एव बोधस्तथापि न दर्शितातिप्रसङ्गः—तादृशबोधेऽन्वयितावच्छेदकावच्छेदेन प्रथमाभावभाननियमात् पाकत्वावच्छेदेन च तण्डुलादिकर्मकत्वाभावान्वये योग्यताविरहात् । 'अन्ध आकाशं न पश्यति' इत्यादावपीदृशी गतिः ।

अथ यत्तण्डुलादिकर्मको यत्पुरुषकर्तृकः पाकोऽप्रसिद्धस्तत्पुरुषेऽन्यकर्मकपाक-

---

यते का कथा पुनः 'तण्डुलमयं न पचति' इत्यत्र तादृशबोधप्रसङ्गस्येत्यर्थः, तथा च न तण्डुलं पचत्यपि 'तण्डुलमयं न पचति' इतिप्रयोगापत्तिरित्याह— येनेति । ननु 'आकाशं न पचति घटः' इत्यत्र यद्युक्तरूपो न वाक्यार्थबोधस्तदा कीदृशो बोधो भवतीत्याशङ्कयाह— किं त्विति । एवं च 'तण्डुलमयं न पचति' इत्यादिस्थलेपि 'पाकस्तण्डुलाकर्मकश्चैत्रः पाककृत्यभाववान्' इत्याकारकसमूहालम्बनात्मकबोध एव स्वीकर्तव्यस्तत्तु न संभवति— पचति चैत्रे पाककृतेरेव सत्त्वेन पाककृत्यभावस्य बाधात् तथा चोक्तस्थले=पचति चैत्रे 'न पचति' इति वाक्यस्य न प्रामाण्यप्रसङ्गः, तथा च पचति चैत्रे न 'न पचति' इति प्रयोगापत्तिः—अप्रमाणत्वादित्याह—उक्तस्थले इति । नञ उक्तविशिष्टबोधजनकत्वमभ्युपगम्योक्तप्रयोगापत्तिं परिहरति— अस्तु वेति, तत्र=पचमानमपि चैत्रमुद्दिश्योक्ते 'न पचति' इतिवाक्येऽभावान्विता=तत्तण्डुलकर्मकत्वाभावान्विता या पाकक्रिया तदनुकूलकृत्यभावविषयक एव तत्तण्डुलाकर्मकेत्यादिनोक्तो विशिष्टोऽसमूहालम्बनरूपो नञा बोधो भवतु तथापि दर्शितः=पचत्यपि चैत्रे 'न पचति' इतिप्रयोगातिप्रसङ्गो नास्त्येवेत्यन्वयः । अतिप्रसङ्गाभावे हेतुमाह— तादृशबोधे इति, तादृशबोधे=उक्तेऽभावान्वितक्रियाकर्तृत्वाभावबोधे प्रथमाभावस्यान्वयितावच्छेदकावच्छेदेनान्वयो भवतीतिनियमादत्रान्वयितावच्छेदकं यत्पाकत्वं तदवच्छेदेनैव तण्डुलकर्मकत्वाभावस्यान्वयः स्यात्, न च पाकत्वावच्छेदेन तण्डुलकर्मकत्वाभावान्वयः संभवति योग्यताभावादिति नैतादृशविशिष्टबोधजनकवाक्यस्य प्रामाण्यं संभवति येन पचत्यपि 'न पचति' इतिप्रयोगापत्तिः स्यादित्यर्थः । 'अन्ध आकाशं न पश्यति' इत्यत्रापि 'दर्शनमाकाशाकर्मकं दर्शनकृत्यभाववानन्धः' इतिसमूहालम्बनात्मक एव बोधो भवति नोक्तविशिष्टबोध इत्याह— अन्ध इति । किं वा 'अन्ध आकाशं न पश्यति' इत्यत्र आकाशकर्मकत्वाभावविशिष्टं यद् दर्शनं तदनुकूलकृत्यऽभावविषयको विशिष्टबोधोपि संभवति—आकाशकर्मकत्वाभावस्याऽन्वयितावच्छेदकं यद् दर्शनत्वं तदवच्छेदेनान्वयसंभवात् दर्शनानुकूलकृत्यभावस्य चान्धेऽन्वयसंभवात् । वस्तुतस्त्वेतादृशवाक्यानामप्रामाण्यमेवेति पूर्वमेव द्वितीयाकारकग्रन्थे व्युत्पादितमित्यवधेयम् ।

शङ्कते— अथेति, अन्यपुरुषपच्यमानत्वादेः=अन्यपुरुषकर्तृकपाककर्मत्वस्य । भ्रमेति—तादृश-

**कर्तृत्वस्य तत्तण्डुलादौ चान्यपुरुषपच्यमानत्वादेर्भ्रमदशायाम् ' तण्डुलमयं न पक्ष्यति ' इत्यादिवाक्यस्य बोधकतायाअनुभवसिद्धत्वेनाऽपाकर्तुमशक्यत्वान्नोक्तप्रकारः साधीयान्-विरोधिनिश्चयसत्त्वेन तत्पुरुषे पाककर्तृत्वसामान्याभावस्य पाकत्वावच्छेदेन तण्डुलकर्मकत्वाभावस्य च प्रतीत्यऽसंभवादितिचेत् ?,**

**न- तत्र तादृशवाक्यस्यैकाभावावगाहिभ्रमजनकत्वोपगमात् । न च सर्वत्रैव तदुपगमौचित्येन प्रयासवैफल्यमिति वाच्यम्, विशेषदर्शिभिरप्रतातरकैरपि तथाविधवाक्यप्रयोगात् तस्य प्रसिद्धार्थकतासंपादनस्यावश्यकत्वात् । न च तत्तण्डु-**

---

तण्डुलकर्मकपाकस्याऽप्रसिद्धत्वात् तादृशतण्डुले यत्पच्यमानत्वज्ञानं तद्भ्रमात्मकमेव संभवति तत्पुरुषकर्तृकश्च पाकोऽप्रसिद्धस्तादृशपुरुषे पाककर्तृत्वज्ञानमपि भ्रमात्मकमेव स्यान्न तु प्रमात्मकमित्युक्तम्-भ्रमदशायामिति । एतादृशभ्रमदशायाम् ' तण्डुलमयं न पक्ष्यति ' इतिवाक्यस्य बोधजनकत्वान्नोक्तप्रकारः साधीयान्, उक्तप्रकारः=प्रथमाभावस्याऽन्वयितावच्छेदकावच्छेदेनान्वयो भवति. इति प्रकारो न साधीयानित्यन्वयः, उक्ते हेतुमाह-विरोधीति, विरोधिनिश्चयसत्त्वेन=तत्तण्डुले पाककर्मत्वनिश्चयसत्त्वेन तत्पुरुषे पाककर्तृत्वनिश्चयसत्त्वेन च तत्पुरुषे पाककर्तृत्वाभावस्य पाके तण्डुलकर्मकत्वाभावस्य च प्रतीतिर्न संभवति । उक्तप्रकारस्य च साधुत्वेऽत्रापि प्रथमाभावस्य=तण्डुलकर्मकत्वाभावस्य पाकत्वावच्छेदेनान्वयः स्यात् न च पाकत्वावच्छेदेन तण्डुलकर्मकत्वाभावान्वययोग्यतास्तीति योग्यताया अभावात् तादृशबोधजनकत्वं न स्यात् अस्ति च बोधजनकत्वमिति नोक्तप्रकारः साधीयानित्यर्थः ।

परिहरति-नेति, तत्र=उक्तभ्रमदशायाम्, तादृशवाक्यस्य=' *तण्डुलमयं न पक्ष्यति* ' इति वाक्यस्य तण्डुलकर्मकत्वाभावविशिष्टपाकानुकूलकृत्यभावबोधकत्वरूपमऽभावद्वयावगाहिभ्रमजनकत्वं नास्ति किं त्वेकाभावावगाहिभ्रमजनकत्वम्=तण्डुलकर्मकपाकानुकूलकृत्यभावबोधकत्वमेव स्वीक्रियते तच्च संभवत्येव तत्पुरुषे तण्डुलकर्मकपाककृत्यभावस्याऽबाधादिति पूर्वोक्तस्थले उक्ताभावद्वयावगाहनस्वीकारेपि किं वा प्रथमाभावस्यान्वयितावच्छेदकावच्छेदेनान्वयनियमेपि न दोष इत्यर्थः । ननु ' आकाशं न पचति घटः ' इत्यादावपि ' आकाशकर्मकपाककृत्यभावबोधकत्वरूपमेकाभावावगाहिज्ञानजनकत्वमेव युक्तं न त्वभावद्वयावगाहिज्ञानजनकत्वमित्याशङ्क्याह न चेति । परिहारमाह- विशेषेति, ये खलु पाके आकाशकर्मकत्वाभावं घटे च पाककर्तृत्वाभावं जानन्ति तेपि ' आकाशं न पचति घटः ' इति प्रयोगं कुर्वन्तीति तस्य=प्रयोगस्य प्रसिद्धार्थकतासंपादनायाऽभावद्वयावगाहिबोध उपगम्यते- आकाशकर्मकत्वं प्रतिपादनादौ प्रसिद्धमस्ति तदभावः पाकेन्वेति पाककर्तृकत्वं पुरुषादौ प्रसिद्धं तदभावो घटेऽन्वेतीत्यभावद्वयावगाहिबोधजनकत्वं संभवति न त्वेकाभावावगाहिबोधजनकत्वम्- आकाशकर्मकपाकाऽप्रसिद्धेरित्यर्थः । ननु पाके तत्तण्डुलकर्मकत्वं हि तत्तण्डुलनिष्ठविक्लित्तिजनकत्वमेव तथा च पाकस्य तत्तण्डुलकर्मकत्वं नास्तीति तत्तण्डुलनिष्ठविक्लित्तिजनकत्वस्याप्रसिद्धया

लादिकर्मकत्वम्=तन्निष्ठविक्लित्तिजनकत्वं तदपि चाऽप्रसिद्धमिति कथं पाके तदभावप्रत्यय इति वाच्यम्, विक्लित्यादावेव तत्तद्वृत्तित्वाभावबोधोपगमात् ।

'अपाक्षीत्' इत्यादौ लुङोऽतीतकालोऽर्थः, तस्याप्याख्यातसामान्यार्थकृत्यादावन्वयः, तस्य च संबन्ध आधेयत्वम् । अथ वा कालाऽविशेषणतयैवातीतत्वं लुङोर्थ आश्रयतासबन्धेन च तस्य कृत्यादावन्वयः— कालान्तर्भावस्य व्यर्थत्वात् । अतीतत्वम्=वर्तमानध्वंसप्रतियोगित्वम् । वस्तुतो वर्तमानध्वंस एव लुङाद्यर्थस्तस्य प्रतियोगितासंबन्धेन कृत्यादावन्वयः । मध्यदशायाम् 'अपाक्षीत्' इत्यादिप्रयोगवारणमुक्तरीत्या बोध्यम् ।

---

पाके तत्तण्डुलकर्मकत्वाभावबोधोपि कथं स्यात्— अप्रसिद्धप्रतियोगिकाभावस्याऽस्वीकारादित्याशङ्क्याह— न चेति । उत्तरमाह— विक्लित्यादाविति, तत्तद्वृत्तित्वाभावस्य=तत्तत्तण्डुलवृत्तित्वाभावस्य बोध उपगम्यते तथा च तण्डुलवृत्तित्वाभाववती या विक्लित्तिस्तादृशविक्लित्तिजनकपाकानुकूलकृत्यभाववान् इतिबोधः स्यात्, अन्यवृत्तिविक्लित्तौ च तण्डुलवृत्तित्वाभावः प्रसिद्ध एवेति न कोपि दोष इत्यर्थः ।

लुङर्थकालं निरूपयति— अपाक्षीदिति, तस्य=लुङर्थभूतस्यातीतकालस्य, तस्य=लुङर्थकालस्य । 'अपाक्षीत्' इत्युक्तकृतिर्हि तादृशकाले आसीदिति तादृशकालस्य कृतावाधेयतासंबन्धेनान्वयः । पक्षान्तरमाह— अथ वेति, लुङोऽतीतकालार्थत्वे ह्यऽतीतत्वं काले विशेषणमस्ति संप्रति कालेऽविशेषणीभूतमेवाऽतीतत्वम्=अतीतत्वमात्रमेव लुङर्थ इत्यर्थः,अतीतत्वं च कृतावेवेति तस्य=अतीतत्वस्याश्रयतासंबन्धेन कृतावन्वयः । कालान्तर्भावस्य=विशिष्टस्याऽतीतकालस्य लुङर्थत्वस्वीकारवैयर्थ्यात् । अतीतत्वपदार्थमाह— अतीतत्वमिति, वर्तमानो योऽतीतकृतिध्वंसस्तत्प्रतियोगित्वं यदतीतकृतावस्ति तदेवातीतत्वमित्यर्थः । स्वाभिप्रायमाह— वस्तुत इति, वर्तमानध्वंसः=वर्तमानो यः कृतिध्वंसः स एव लुङोर्थस्तस्य=वर्तमानध्वंसस्य, तादृशध्वंसप्रतियोगिता कृतावस्त्येवेति तेन संबन्धेन तस्य कृतावन्वय इत्यन्वयः । मध्यदशायामिति— वर्तमानपाकस्याप्याद्या कृतिर्नष्टेति तद्ध्वंसस्य पाकवर्तमानतादशायामपि सत्त्वात् 'अपाक्षीत्' इतिप्रयोगः स्यादेवेति तद्वारणं पूर्वोक्तरीत्या बोध्यम् । मध्यदशायाम्=पाकमध्यदशायाम् । उक्तरीत्या="वर्तमानप्रागभावस्य प्रत्ययार्थत्वे तस्य ६९९" इत्याद्युक्तरीत्या, तथा हि वर्तमानध्वंसस्य स्वविशिष्टकालवृत्तिकृतिजन्यपाकाननुकूलत्वविशिष्टप्रतियोगितासंबन्धेन कृतावन्वयः कर्तव्यः, अत्र स्वं वर्तमानध्वंसस्तद्विशिष्टो यो वर्तमानकालस्तद्वृत्तिकृतिजन्यो यः पचमानपुरुषकर्तृकः पाकस्तदननुकूलत्वसमानाधिकरणप्रतियोगितासंबन्धेन वर्तमानध्वंसस्य लुङर्थस्य कृतावन्वयः कर्तव्यस्तथा च पचमानकर्तृकर्तृकपाकानुकूलातीतकृतौ वर्तमानध्वंसप्रतियोगितायाः सत्त्वेप्युक्तस्वविशिष्टकालवृत्तिकृतिजन्यपाका ( पचमानकर्तृकपाका ) ननुकूलत्वं नास्ति— पचमानकर्तृकपाकानुकूलत्वस्यैव सत्त्वादिति न पचमानकर्तृकपाकानुकूलातीतकृतावुक्तसंबन्धेन वर्तमानध्वंस-

लङ्प्रत्ययस्याऽतीतत्ववदऽनद्यतनत्वमप्यर्थः— अद्य पचति 'अपचत्' इत्यऽप्रयोगात् । "अभून्नृपः" इत्यादावनद्यतनत्वसत्त्वेपि तदविवक्षया न लङ्प्रत्ययेन लुङ्बाधः । अतोप्यऽनद्यतनत्वबोधकत्वं लङ्प्रत्ययस्यावश्यकम्— स्वरूपसदनद्यतनत्वस्य लङ्साधुतानियामकत्वेऽनद्यतनत्वस्य वस्तुसतोऽविवक्षामात्रेणोक्तस्थले लङ्वारणानुपपत्तेः । इदमप्यऽनद्यतनत्वम्=प्रकृतशब्दप्रयोगाधिकरणदिनाऽवृत्तित्वम् । अथ वा स्वातन्त्र्येणाऽनद्यतनत्वं न लङर्थः किं तु तादृशदिनाद्यक्षणवृत्तिध्वंसप्रतियोगित्वरूपमऽनद्यतनातीतत्वं विशिष्टमेव ।

अतीतत्वमऽनद्यतनत्वं परोक्षत्वं च लिटोर्थः । "अध्यास्त सर्वर्तुसुखामयोध्याम्" इत्यादौ परोक्षत्वसत्त्वेपि परोक्षत्वाविवक्षया न लिट् । परोक्षत्वं च वक्तुः साक्षात्काराविषयत्वम् ।

---

स्यान्वयः संभवतीति न पचमाने पुरुषे मध्यदशायां वर्तमानपाकानुकूलातीतकृतिमादाय 'अपाक्षीत्' इतिप्रयोगापत्तिरित्यर्थः । वस्तुतस्तु— अन्त्यकृतिध्वंसस्य लुङर्थत्वं स्वीकार्यं तथा च वर्तमानपाकानुकूलान्त्यकृतेः पाकवर्तमानतादशायां ध्वंसो न जात इति न तदानीम् 'अपाक्षीत्' इतिप्रयोगापत्तिरीतिश्रीगुरवः ।

लङर्थभूतकालं निरूपयति— लङ्प्रत्ययस्येति । अतीतानद्यतनत्वं लङर्थ इत्यर्थः । उक्ते हेतुमाह— अद्येति, यदि लङर्थोऽनद्यतनत्वं न स्यात्तदाद्य पचत्यपि=वर्तमानदिने कृतो नष्टश्च यः पाकस्तत्कर्तर्यपि चैत्रे 'अपचत्' इतिप्रयोगः स्यात्, न चैवं भवति तस्मादऽनद्यतनत्वमपि लङर्थोऽस्त्येवेत्यर्थः । ननु यद्यऽनद्यतनातीतत्वं लङर्थस्तदा "अभून्नृपः" इत्यत्र नृपेऽनद्यतनातीतत्वस्य सत्त्वात् लङेव स्यान्न तु लुङित्याशङ्क्याह— अभूदिति, अनद्यतनत्वस्य विवक्षा नास्तीति लुङः प्रयोगेपि न दोष इत्यर्थः । अनद्यतनत्वस्य लङर्थत्वे उपपत्त्यन्तरमाह—अतोपीति, यदि लङोऽनद्यतनार्थकत्वं न स्यात् किं तु स्वरूपसदेवानद्यतनत्वं लङ्साधुतानियामकं स्यात्तदा स्वरूपसतः=वर्तमानस्याऽविवक्षाया असंभवात् तादृशाऽविवक्षामात्रेण "अभून्नृपः" इत्यत्र लङ्वारणं नोपपद्येत यदा चानद्यतनत्वं लङर्थ एव तदा तु तस्याऽविवक्षा संभवतीत्यनद्यतनत्वस्याऽविवक्षया "अभून्नृपः" इत्यत्र लङ्वारणं लुङः उपपादानं च संभवतीत्यर्थः । अनद्यतनत्वस्वरूपमाह— इदमिति । अपिशब्दाल्लुङर्थानद्यतनत्वपरामर्शः । पक्षान्तरमाह— अथ वेति, तादृशदिनम्=शब्दप्रयोगाधिकरणदिनं तस्य य आद्यक्षणस्तद्वृत्तिध्वंसप्रतियोगित्वमनद्यतनातीतत्वं तदेव लङर्थः, आद्यक्षणवृत्तिध्वंसग्रहणेन वर्तमानदिने कृते नष्टेपि पाके 'अपचत्' इति लङः प्रयोगापत्तिर्नास्तीत्यर्थः ।

लिडर्थभूतकालनिरूपणमारभते— अतीतत्वमिति । ननु यदि परोक्षत्वं लिडर्थस्तदा "अध्यास्त सर्वर्तुसुखामयोध्याम्" इत्यत्रायोध्यायाः परोक्षत्वेन लिट एव प्रयोगः स्यान्न तु "अध्यास्त" इतिलङ्प्रयोग इत्याशङ्क्याह— अध्यास्तेति, परोक्षत्वविवक्षाया अभावादेवात्र न लिडित्यर्थः । परोक्षत्वस्वरूपमाह— परोक्षत्वमिति ।

केचित्तु वक्तृभिन्नकर्तृकत्वमेव परोक्षत्वम्, अत एव लिटि उत्तमपुरुषाऽसंभवेनाऽपरोक्षतायामपि लिटः साधुत्वे "णलुत्तमो वा" इत्यादेर्ज्ञापकत्वमुपायकारोक्तं संगच्छते, अन्यथा निद्रादिदशायां स्वकर्तृकगमनादिक्रियायाः स्वपरोक्षत्वसंभवेन ज्ञापकत्वाऽसङ्गतेरित्याहुः।

'कलिङ्गे दृष्टोसि?, नाहं कलिङ्गान् जगाम' इत्यादावत्यन्तापह्नवस्थले सूत्रान्तरेण क्रियाया अपरोक्षत्वेपि लिड्विधानात् तादृशज्ञापकबलेन "व्यातेने किरणावलीम्" इत्यत्र लिटः साधुत्वोपपादनमुपायकृतामयुक्तमेवेति बोध्यम्। अत्यन्ताऽपह्नवश्चाऽबाधितपरोक्तविपरीतबोधनाय तदुपपादकाभावप्रतिपादनेच्छा कलिङ्गाधिकरणकदर्शनादेरुपपादकं कलिङ्गगमनादिकं तेन विना तदसंभवात्। अत्यन्तापह्नवः स्वरूपसन्नेव लिट्साधुतानियामकः।

---

मतान्तरमाह—केचिदिति। उक्ताध्यासनक्रियायामपि कविभिन्नराजकर्तृकत्वमस्त्येव। अत एव=परोक्षत्वस्य वक्तृभिन्नकर्तृकत्वरूपत्वादेव उत्तमपुरुषस्य च वक्तृकर्तृकत्वाल्लिटि उत्तमपुरुषप्रयोगो नैव संभवेत्तथा च "णलुत्तमो वा" इत्यनेन लिटि उत्तमपुरुषादेशविधानं व्यर्थमेव स्यात् न च सूत्रवैयर्थ्यं युक्तमित्यऽपरोक्षतायामपि लिटः साधुत्वं स्वीकार्यमित्यर्थः। विपक्षे बाधकमाह—अन्यथेति, यदि साक्षात्काराविषयत्वमेव परोक्षत्वं स्यात्तदा निद्रादिदशायां स्वकर्तृकपार्श्वपरिवर्तनादिक्रियायां स्वपरोक्षत्वसत्त्वेन तादृशस्वपरोक्षक्रियोद्देशेन लिटि उत्तमपुरुषप्रयोगसंभवात् "णलुत्तमो वा" इत्यादेशविधानं व्यर्थं न स्यादिति "णलुत्तमो वा" इत्यस्योपायकारेण यज्ज्ञापकत्वमुक्तं तन्न संगच्छेत तस्मात् परोक्षत्वं वक्तृभिन्नकर्तृकत्वमेव न तु साक्षात्काराविषयत्वमित्यर्थः। परोक्षत्वस्य वक्तृभिन्नकर्तृकत्वरूपत्वे हि निद्रादिदशायामपि स्वकर्तृकगमनादौ स्वभिन्नकर्तृकत्वरूपं परोक्षत्वं नास्तीति "णलुत्तमो वा" इति सूत्रं व्यर्थं सज् ज्ञापयति— अपरोक्षतायामपि लिड् भवतीति तथा च निद्रादिकालिकस्वीयगमनादौ परोक्षत्वाभावेपि लिड्घटितप्रयोगस्य साधुत्वमुपपद्यते इत्यर्थः प्रतिभाति।

कलिङ्गेति— चैत्रेण मैत्रं प्रत्युक्तम् 'कलिङ्गे दृष्टोसि' तत्र मैत्रेणोक्तम्— 'नाहं कलिङ्गान् जगाम कथमहं कलिङ्गे त्वया दृष्टः' इत्यर्थः। अत्र जगामेतिक्रियायाः परोक्षत्वाभावाल्लिटोऽसंभवेप्यऽत्यन्तापह्नवस्थले सूत्रान्तरेण= "अत्यन्तापह्नवे लिड् वक्तव्यः" इतिवार्तिकेनाऽपरोक्षत्वेपि लिड् भवति. अस्ति चात्राऽत्यन्तापह्नव इति नात्र लिटोऽनुपपत्तिरित्यर्थः। एतादृशज्ञापकबलेन "व्यातेने" इत्यत्र लिटः साधुत्वोपपादनमुपायकारोक्तमयुक्तमेव—"व्यातेने" इत्यत्रात्यन्तापह्नवस्याभावात्, क्रियाया अपरोक्षत्वेपि सूत्रान्तरेणोक्तेनाऽत्यन्तापह्नवस्थले एव लिड् विधानादित्यर्थः। अत्यन्तापह्नवस्वरूपमाह— अत्यन्तेति, अबाधितं यत्परोक्तं तद्विपरीतबोधनाय तदुपपादकस्य=अबाधितपरोक्तोपपादकस्य योऽभावस्तत्प्रतिपादनेच्छा तथा च कलिङ्गाधिकरणकदर्शनोपपादकं दृष्टस्य कलिङ्गगमनमेव तेन=कलिङ्गगमनेन विना तदसंभवात्=कलि-

लिङ्लोटोर्विधिरर्थः– परप्रवृत्त्यर्थं तत्प्रयोगात् । विधिः=प्रवर्तकज्ञानविषयो धर्मः, स च धर्मो न्यायनये कृतिसाध्यत्वं बलवदनिष्टाननुबन्धित्व (अजनकत्व) सहितमिष्टसाधनत्वं च, 'ओदनकामः पचेत्' "स्वर्गकामो यजेत" इत्यादावोदनस्वर्गादिरूपं यत्फलं तत्साधनत्वं पाकयागादिक्रियायां प्रतीयते । तादृशफलानां च तत्तद्रूपेण लिङादिशक्यतावच्छेदककोटिप्रवेशे शक्त्यानन्त्यं सर्वसाधारण्येन व्युत्पत्त्यऽनुदयेनाऽपूर्वफलसाधनत्वबोधानिर्वाहश्चेतीष्टत्वेन तेषामनुगमः । इष्टत्वम्=समभिव्याहृतपदोपस्थापितकामनाविषयत्वम्, अतः 'स्वर्गकामः पचेत' इत्यादौ शक्तिभ्रमशून्यस्य नौदनादिसाधनत्वधीः. न वा तत्तात्पर्येण तथाप्रयोगः प्रामाणिकानाम् ।

इष्टत्वज्ञानस्याऽप्रवर्तकत्वेपि शक्यफलानुगमार्थं तस्य शक्यता । वस्तुतस्त्व-

---

ज्ञाधिकरणकदर्शनासंभवात्. अत्र च कलिङ्गगमनाभाव उक्त एव– "नाहं कलिङ्गान् जगाम" इत्यत्रात्यन्तापह्नवस्य सत्त्वाल्लिटः साधुत्वमस्त्येवेत्यर्थः । अयं चात्यन्तापह्नवो न लिडर्थ इत्याह– अत्यन्तापह्नव इति ।

लिङ्लोटोरर्थनिरूपणमारभते– लिङ्लोटोरिति, प्रवर्तकत्वमेव विधित्वमस्तीति लिङ्लोटोः परप्रवृत्त्यर्थं प्रयोगाद्विध्यर्थकत्वमित्यर्थः । विधिस्वरूपमाह– विधिरिति । समन्वयमाह– ओदन इति । तादृशफलानाम्=स्वर्गादिफलानाम् । तत्तद्रूपेण=स्वर्गत्वादिरूपेण । लिङादिशक्यतावच्छेदककोटीति– लिङः शक्यं यदिष्टसाधनत्वं तद्विशेषणीभूतेष्टस्य शक्यतावच्छेदकत्वं प्राप्तम् इष्टं च स्वर्गादिरेव तत्र स्वर्गादीनां स्वर्गत्वादिरूपेण शक्यतावच्छेदकत्वे शक्त्यानन्त्यं स्यात् तथा च सर्वसाधारण्येन व्युत्पत्त्यनुदयेन=शक्तिग्रहो न स्यादित्यज्ञातफलसाधनत्वबोधानुपपत्तिः स्यादिति तेषाम्=स्वर्गादीनामिष्टत्वेनानुगमः– इष्टत्वेनेष्टसाधनत्वे लिङ्लोटोः शक्तिरित्यर्थः । इष्टत्वस्वरूपमाह– इष्टत्वमिति, समभिव्याहृतं यत् स्वर्गकामपदं तदुपस्थिता या स्वर्गकामना तद्विषयत्वं स्वर्गस्यास्तीतीष्टत्वं प्राप्तम् । अत इति– यतः समभिव्याहृतपदोपस्थापितकामनाविषयत्वमिष्टत्वं तादृशेष्टसाधनत्वमेव च समभिव्याहृतव्यापारे संभवत्यतः 'स्वर्गकामः पचेत' इत्यत्र शक्तिभ्रमशून्यस्य पाकव्यापारे स्वर्गसाधनत्वज्ञानमेव जायेत न त्वोदनसाधनत्वज्ञानं समभिव्याहृतस्वर्गकामपदेनेष्टत्वेन स्वर्गस्यैवोपस्थापितत्वात्, तत्तात्पर्येण=ओदनसाधनत्वतात्पर्येण तथा=' स्वर्गकामः पचेत ' इतिप्रयोगोपि न भवति किं तु स्वर्गसाधनत्वतात्पर्येणैव 'स्वर्गकामः पचेत' इतिप्रयोगः संभवति, ओदनसाधनत्वतात्पर्येण तु 'ओदनकामः पचेत' इत्येवप्रयोगो भवतीत्यर्थः ।

इष्टत्वेति– केवलमिष्टत्वज्ञानस्य प्रवर्तकत्वं न भवति. अन्यथा सुमेरुसमानयनेपि प्रवृत्तिः स्यादिष्टत्वादितीष्टत्वज्ञानस्याऽप्रवर्तकत्वेपि तस्य=इष्टत्वस्य शक्यभूतस्वर्गादिफलानामनुगमार्थं शक्यता स्वीक्रियते. अन्यथा शक्त्यानन्त्यं स्यादित्यर्थः । स्वाभिप्रायमाह– वस्तुतस्त्विति,

ऽशक्यस्यैव तस्य शक्यानुगमकता सर्वनामस्थले बुद्धिस्थत्ववत्. तेन रूपेण फलानां संकेतविषयतां विना शक्त्यैक्याऽसंभवात् । तस्य संकेतविषयत्वोपगमेपि यथा न तस्य वाच्यता तथा प्रपञ्चितमन्यत्र । अत्र चेष्टत्वस्य शाब्दबोधेऽभानाद् विशिष्येष्टतावच्छेदकस्वर्गत्वादिप्रकारेण शाब्दबोधोत्पत्त्या विधिवाक्यात् प्रवर्तकज्ञाननिर्वाहः ।

यत्तु- इष्टत्वेन फलभानेपि स्वर्गकामादिपदैकदेशोपस्थितस्वर्गत्वावच्छिन्नस्य विध्यर्थैकदेशे इष्टेऽभेदान्वयात् प्रवर्तकज्ञाननिर्वाह इति, तन्न सत्- वृत्तिशब्दैकदेशे इतरानन्वयनियमात्, स्वर्गत्वादिप्रकारेण कामनाधीनप्रवृत्तौ स्वर्गत्वादिविशेषितफलसाधनताज्ञानस्य हेतुतयाऽभेदेन स्वर्गादिविशेषितफलसाधनताज्ञान-

---

तस्य=इष्टत्वस्य । तेन=इष्टत्वेन रूपेण । तथा च यथा बुद्धिस्थत्वोपलक्षितधर्मावच्छिन्ने तत्पदस्य शक्तिस्तथात्र इष्टत्वोपलक्षितधर्मावच्छिन्नसाधनत्वे लिङः शक्तिरित्यर्थः । तस्य=उपलक्षणस्य । यथा 'बुद्धिस्थत्वोपलक्षितधर्मावच्छिन्नं तत्पदं बोधयतु' इत्येवं संकेतस्वीकारादुपलक्षणस्य बुद्धिस्थत्वस्य संकेतविषयत्वमस्ति यद्यपि तथापि न बाच्यत्वमित्यन्यत्र=शक्तिवादे प्रतिपादितं तथात्रापीष्टत्वस्योपलक्षणस्य 'इष्टत्वोपलक्षितधर्मावच्छिन्नसाधनत्वं लिङ् बोधयतु' इत्येवं संकेतविषयत्वेपि न वाच्यत्वमित्यर्थः । प्रवृत्तिर्हि विशेषरूपेण ज्ञाने सत्येव भवति न त्विष्टत्वमात्रज्ञानादन्यथा स्वर्गादीनामिष्टत्वात् पाकादीनां चेष्टसाधनत्वात् स्वर्गकामः पाके तृप्तिकामश्च यागेपि प्रवर्तेत न चैवमस्तीति शाब्दबोधे सामान्यरूपेणेष्टत्वभानं न भवति किं तु विशेषरूपेणेष्टतावच्छेदकं यत् स्वर्गत्वादिकं तत्प्रकारेणैव शाब्दबोधो भवति विशेषरूपेण च शाब्दबोधे जाते न प्रवृत्त्यनुपपत्तिरिति प्रवर्तकज्ञाननिर्वाहः=लिङादिजन्यशाब्दबोधस्य प्रवर्तकत्वनिर्वाहः संभवतीत्याह- अत्रेति । उक्तेन विधिवाक्यात् प्रवर्तकं ज्ञानं जायते इत्यस्य निर्वाहः संपन्न इति यावत् ।

ननु फलस्य स्वर्गादेरिष्टत्वेन सामान्यरूपेण भानेपि प्रवर्तकज्ञानानुपपत्तिर्नास्ति यतः स्वर्गकामपदार्थैकदेशो यः स्वर्गस्तस्य विध्यर्थो यदिष्टसाधनत्वं तदेकदेशेनेष्टपदार्थेनाऽभेदान्वयः संभवत्येव तत्र स्वर्गाभिन्नेष्टसाधनत्वज्ञानादपि यागादौ प्रवृत्तिः संभवत्येवेति मतमुपस्थापयति- यत्त्विति । परिहरति- तन्नेति, 'स्वर्गकामः' इतिकृदन्तवृत्तिशब्दस्तदेकदेशेन स्वर्गपदेनेष्टपदस्याऽभेदान्वयो न संभवति. अन्यथा 'ऋद्धस्य राजमातङ्गाः' इत्यत्राप्यभेदान्वयः स्यादित्यर्थः । "वृत्तिशब्दैकदेशे" इत्यत्र 'वृत्तिशब्दार्थैकदेशे' इतिपाठो युक्तस्तस्य च वृत्तिशब्दार्थो यः स्वर्गकामपदार्थस्तदेकदेशे स्वर्गे इतरस्य=इष्टस्याभेदान्वयो न युक्त इत्यर्थः स्यात् । किं च स्वर्गत्वप्रकारककामनाधीना या यागे प्रवृत्तिस्तस्यां स्वर्गत्वविशिष्टफलसाधनत्वज्ञानं हेतुरस्तीत्यऽभेदेन स्वर्गविशिष्टं यदिष्टरूपं फलं तत्साधनताज्ञानस्य स्वर्गत्वप्रकारककामनाधीनप्रवृत्तावुपयोगोपि नास्ति येन त्वदुक्तरीत्या स्वर्गे विध्यर्थैकदेशेष्टस्याभेदान्वयः कल्प्येतेत्याह- स्वर्गत्वादीति । नन्वऽभेदेन स्वर्गप्रकारकस्वर्गरूपेष्टसाधनताज्ञानम्=स्वर्गाभिन्नं यदिष्टं तत्साधनताज्ञानमपि

स्यानुपयोगित्वाच्च । ' अभेदेन स्वर्गादिप्रकारकस्वर्गादीष्टसाधनताज्ञानमपि स्वर्गत्वादिप्रकारकप्रवृत्तौ हेतुः, अत एव " स्वर्गकामो यजेत " इत्यादितः प्रवृत्तिः ' इति तु न युक्तम्—स्वर्गत्वप्रकारककामनाया अधिकारत्वानुपपत्तेः ।

अथेष्टत्वस्य शक्योपलक्षणत्वे तदंशाऽभाननिर्वाहेऽपि स्वर्गत्वादेरशक्यस्य भानं न संभवति—अशक्यस्य भानोपगमेऽतिप्रसङ्गादितिचेत् ?, स्वर्गत्वाद्यवच्छिन्ने समभिव्याहृतकामनाविषयत्वज्ञानसहकृतस्य तादृशकामनाविषयतावच्छिन्नशक्तिज्ञानस्य स्वर्गत्वादिप्रकारकशाब्दधीहेतुत्वोपगमेऽतिप्रसङ्गानवकाशात् । वस्तुतस्तादृशकामनाविषयतावच्छेदकत्वोपलक्षितस्वर्गत्वादिविशिष्टसाधनत्वे शक्तिस्वीकारात् सर्वसामञ्जस्यम् ।

---

स्वर्गत्वादिप्रकारककामनाधीनप्रवृत्तौ हेतुः संभवत्येव. अन्यथा " स्वर्गकामो यजेत " इत्यनेन यागे प्रवृत्तिरेव न स्यात् यागे स्वर्गाभिन्नेष्टसाधनत्वज्ञानासंभवादित्याशङ्क्याह— अभेदेनेति । परिहरति—नेति, एवं हि स्वर्गत्वप्रकारककामनाया यदिष्टमधिकारत्वं तन्न स्यात् किं त्वभेदेन स्वर्गप्रकारकस्वर्गरूपेष्टफलकामनाया एवाधिकारत्वं स्यात् न चैतदिष्टम्. " स्वर्गकामः " इतिपदेनाधिकारिविशेषणीभूतायाः स्वर्गत्वप्रकारककामनाया एवाधिकारत्वप्रतीतेरित्यर्थः ।

ननूपलक्षणस्य शाब्दबोधे भानं न भवतीत्युपलक्षणीभूतस्येष्टत्वरूपांशस्य लिङर्थस्य शाब्दबोधे भानाभावसंभवेऽपि स्वर्गत्वादेरशक्यस्य लिङा भानं न संभवति—लिङः स्वर्गत्वावच्छिन्नेष्टसाधनत्वे शक्त्यऽभावात्. अन्यथा पाकादाविष्टसाधनत्वज्ञानं न स्यात् पाकादौ स्वर्गत्वावच्छिन्नेष्टसाधनत्वाभावात्, लिङ इष्टसाधनत्वे शक्तिरस्ति न च तत्र स्वर्गस्य प्रवेशोऽस्ति येन स्वर्गत्वस्य शक्यत्वं तेन च भानं स्यात्, अशक्यस्यापि शाब्दबोधे भानस्वीकारेऽतिप्रसङ्गः=घटत्वादीनामपि भानं प्रसज्येतेत्याशङ्कते—अथेति । उत्तरमाह—स्वर्गत्वाद्यवच्छिन्नेति, " स्वर्गकामो यजेत " इत्यत्र स्वर्गस्य समभिव्याहृतकामनाविषयत्वमस्तीति स्वर्गत्वावच्छिन्ने यत्समभिव्याहृतकामनाविषयत्वज्ञानं तत्सहकृतं यत्स्वर्गे समभिव्याहृतकामनाविषयतावच्छिन्नशक्तिज्ञानं तेन स्वर्गत्वादिप्रकारक एव शाब्दबोधो जायते इति न स्वर्गत्वस्य भानानुपपत्तिर्न वान्यधर्मस्य भानापत्तिरित्यन्वयः, अत्र स्वर्गस्य कामनाविषयत्वमस्त्येव कामनाविषयत्वमेव चेष्टत्वं. समभिव्याहृतकामनाविषयतावच्छिन्नं चेष्टमिति लिङ्निष्ठा या शक्तिस्तज्ज्ञानं तादृशकामनाविषयतावच्छिन्नसाधनत्वविषयकमेवेति प्राप्तं तादृशशक्तिज्ञानेनात्र यागे स्वर्गत्वावच्छिन्नसाधनत्वस्यैव बोधो भवतीति न स्वर्गत्वस्य भानानुपपत्तिर्न वान्यधर्मभानापत्तिरिति भावः । निष्कर्षमाह—वस्तुत इति, समभिव्याहृतकामनाविषयत्वो ( इष्टत्वो ) पलक्षितं यत् स्वर्गत्वं तदवच्छिन्नसाधनत्वे लिङः शक्तिः स्वीकारात् सर्वसामञ्जस्यम्=स्वर्गत्वस्यापि शक्यकोटिप्रवेशेन न भानानुपपत्तिर्न वान्यधर्मभानापत्तिस्तस्य शक्यकोटिप्रवेशाभावात्, शक्यकोटिप्रवेशश्च समभिव्याहृतकामनाविषयतावच्छेदकधर्मस्यैव संभवति नान्यस्येत्यर्थः ।

न च स्वर्गत्वादिविशिष्टसाधनत्वस्य विधिप्रत्ययवाच्यत्वं न संभवति- स्वर्गत्वादेर्गङ्गास्नानादिजन्यस्वर्गादिसाधारण्येन यागादिजन्यतानवच्छेदकतया यागादौ स्वर्गत्वादिविशिष्टसाधनत्वबाधात्. न हि जन्यतानवच्छेदकधर्मो जन्यत्वनिरूपके विशेषणमितिवाच्यम्, स्वर्गत्वादेः शक्यविशेषणत्वेपि तदुपलक्षितवैजात्यावच्छिन्ननिरूपितजनकताया यागादावऽबाधितायाः स्वर्गादिजनकतात्वेन विधिप्रत्ययतो भानसंभवात् । घटत्वादिविशिष्टवाचकपदघटितात् ' घटं द्रव्यत्वेनैव जानाति ' इत्यादिवाक्याद् घटत्वाद्युपलक्षितघटादिविशेष्यकत्वभानवत् ।

न च तद्धर्मावच्छिन्ननिरूपिततत्साधनत्वज्ञानं विना तद्धर्मप्रकारकफलेच्छाधीनप्रवृत्त्यऽनिर्वाह इतिशङ्क्यम्, वह्नित्वादिप्रकारकेच्छातोपि तृणादिसमवधाने-

---

ननु " स्वर्गकामो यजेत " इत्यत्र स्वर्गसाधनत्वस्य लिङ्वाच्यत्वं न संभवति स्वर्गो हि गङ्गास्नानादिनापि भवत्येव न तु यागेनैव भवति येन यागजन्यतावच्छेदकत्वं स्वर्गत्वस्य स्यात्, तथा च यागे स्वर्गसाधनत्वस्य यागत्वे च स्वर्गसाधनतावच्छेदकत्वस्य बाधः प्राप्तः- अन्यूनानतिप्रसक्तधर्मस्यैवावच्छेदकत्वस्वीकारात्, यागादौ स्वर्गसाधनत्वस्य बाधितत्वाच्च न विधिप्रत्ययवाच्यत्वं संभवतीत्यन्वयः, उक्ते हेतुमाह- न हीति, अत्र जन्यतानवच्छेदकं यत्स्वर्गत्वं तस्य जन्यत्वनिरूपके=जनके साधने विशेषणत्वं न संभवति जन्यतानवच्छेदकधर्मावच्छिन्ननिरूपिता जनकता न भवति. अत्र च त्वया यागे स्वर्गसाधनत्वं वक्तव्यं तत्र च स्वर्गत्वस्यापि विशेषणत्वं प्राप्तमेवेत्याशङ्क्याह- न चेति । उत्तरमाह- स्वर्गत्वादेरिति, यद्यपि स्वर्गत्वं शक्यविशेषणं गङ्गास्नानादिजन्यस्वर्गसाधारणं च तथापि स्वर्गत्वोपलक्षितं यद्वैजात्यं यागजन्यस्वर्गनिष्ठं वैलक्षण्यं तादृशवैजात्यावच्छिन्नो यः स्वर्गस्तन्निरूपितजनकता तु यागे एव न गङ्गास्नानादाविति स्वर्गादिजनकतात्वेन रूपेण स्वर्गजनकत्वस्य=स्वर्गसाधनत्वस्य यागादौ विधिप्रत्ययेन भानं संभवत्येवेत्यर्थः । ननु स्वर्गत्वस्य विशेषणत्वे वैजात्योपलक्षणत्वं कथं स्यादित्याशङ्क्य दृष्टान्तमाह- घटत्वेति, ' घटं द्रव्यत्वेनैव जानाति ' इत्यत्र यद्यपि घटत्वं शक्यघटविशेषणमेव तथाप्यत्र घटत्वोपलक्षितद्रव्यत्वप्रकारकघटविशेष्यकं भानं भवतीत्येतादृशविशेष्यकत्वभाने यथा शक्यविशेषणस्यापि घटत्वस्य द्रव्यत्वोपलक्षणत्वं तथोक्तस्थले शक्यस्वर्गविशेषणस्यापि स्वर्गत्वस्योक्तवैजात्योपलक्षणत्वं संभवत्येवेत्यर्थः । स्वर्गत्वस्य स्वर्गविशेषणत्वेपि सामानाधिकरण्येन वैजात्योपलक्षणत्वे बाधकाभावाद् यद्विशेषणत्वं तदुपलक्षणत्वे एव विरोधादिति सारः ।

ननु तद्धर्मावच्छिन्ननिरूपितं यत् तत्साधनत्वं तज्ज्ञानं विना तद्धर्मप्रकारकफलेच्छाधीना प्रवृत्तिर्न संभवति यथा तन्तुषु पटत्वावच्छिन्ननिरूपितसाधनत्वज्ञाने सत्येव या पटत्वप्रकारकफलेच्छा तदधीना प्रवृत्तिर्भवति नान्यथा त्वया च स्वर्गत्वस्य वैजात्योपलक्षणत्वमुक्तमिति यागे स्वर्गत्वावच्छिन्ननिरूपितसाधनत्वज्ञानं न प्राप्तं तथा च स्वर्गत्वप्रकारकस्वर्गेच्छाधीनप्रवृत्तिर्यागे न स्यादित्याशङ्क्याह- न चेति । उत्तरमाह- वह्नित्वादीति, तृणादिकार्यतावच्छेदकं न वह्नित्वं वह्नित्वस्य करीषादिजन्यवह्नावपि सत्त्वात् किं तु तृणजन्यवह्नित्वमेव तत्र यथा वह्नित्वप्रकारके-

भ्रान्तप्रवृत्तेरानुभविकत्वात्, भूयःसुखार्थिनामपि श्रमं विना क्रियाविशेषे प्रवृत्तेश्च-तद्धर्मावच्छिन्नफलार्थिप्रवृत्तौ तद्धर्मप्रकारेण भासमानफलं प्रति साधनताज्ञानस्यैव प्रवर्तकत्वात्। स च धर्मः कार्यतावच्छेदकतया भासतां कार्यांशे उपलक्षणतयैव वेत्यन्यदेतत्। न हि वह्नित्वादिकं तृणादिजन्यतावच्छेदकम्- व्यभिचारिसाधारणत्वात्. न वा भूयस्त्वादिक कस्यचिज्जन्यतावच्छेदकम्- अर्थवशसंपन्नत्वात्।

एवं सति घटत्वावच्छिन्नफलार्थी तन्त्वादौ कथं न प्रवर्तते? तन्त्वादेरपि घटत्वाद्युपलक्षितजन्यत्वादिविशिष्टनिरूपितद्रव्यत्वावच्छिन्नसाधनतावत्त्वादितिचेत्?, फलानुपधाननिश्चयात्. तस्य स्वातन्त्र्येण प्रवृत्तिप्रतिबन्धकत्वात्। फलो-

---

च्छातस्तृणसंग्रहे प्रवृत्तिर्भवति तथा स्वर्गत्वं यद्यपि न यागजन्यतावच्छेदकं गङ्गास्नानादिजन्यस्वर्गसाधारणत्वात् किं तु तद्वैजात्यमेव तथापि स्वर्गत्वप्रकारकफलेच्छाधीना प्रवृत्तिर्यागादौ संभवत्येवेत्यन्वयः। भूय इति- क्रियाविशेषे=भोजनादौ हि तृप्तिसाधनत्वमेवास्ति न तु सामान्यतः सुखसाधनत्वमन्यथा तृप्त्यतिरिक्तसुखेच्छावतोपि भोजने प्रवृत्तिः स्यात् न चैवं भवत्यऽथापि सुखार्थिनो भोजनादौ प्रवृत्तिर्भवति तत्कस्य हेतोः? सुखत्वस्य तृप्तित्वादिव्यापकत्वादेव त्या। च तद्धर्मावच्छिन्नफलार्थिप्रवृत्तौ तद्धर्मप्रकारेण भासमानफलं प्रति साधनत्वज्ञानमेव प्रवर्तकमिति प्राप्तं तथा च स्वर्गत्वस्योक्तवैजात्योपलक्षणत्वेपि स्वर्गप्रकारत्वमस्त्येव तादृशस्वर्गत्वप्रकारेण भासमानस्वर्गं प्रति यागे साधनत्वज्ञानसंभवात् स्वर्गत्वावच्छिन्नफलार्थिप्रवृत्तिर्यागे नानुपपन्ना. उक्तरीत्या वह्नित्वादीतिदृष्टान्तेन सामान्यधर्मावच्छिन्नफलार्थिनोपि विशेषधर्मावच्छिन्ननिरूपितसाधनत्वज्ञानेन प्रवृत्त्युपपत्तेरित्यर्थः। यद्धर्मप्रकारेण भासमानफलं प्रति साधनत्वज्ञानं प्रवर्तकं भवति स धर्मः कार्यतावच्छेदकतया भासतां कार्यांशे उपलक्षणतया वेत्यत्र नाग्रहस्तत्र वह्नित्वादिकं कार्यतावच्छेदकतया भासते "स्वर्गकामो यजेत" इत्यत्र स्वर्गत्वमुपलक्षणतया भासते इत्याह- स चेति। वह्नित्वं हि करीषादिजन्यवह्नावपि वर्तते इति साधारणलक्षणव्यभिचारित्वान्न तृणादिजन्यतावच्छेदकमथापि वह्नित्वावच्छिन्नफलार्थिनस्तृणादौ प्रवृत्तिर्भवत्येव. न वा भूयःसुखजनकानां भूयस्त्वं जन्यतावच्छेदकं भवति भूयस्त्वस्याधिकसुखेऽर्थादेव प्राप्तत्वात् तावच्छेदकत्वाभावाचाऽथापि भूयःसुखार्थिनां क्रियाविशेषे प्रवृत्तिर्भवत्येव, एवं स्वर्गत्वस्य यागजन्यतानवच्छेदकत्वेपि स्वर्गत्वावच्छिन्नफलार्थिनो यागादौ प्रवृत्तिरुपपद्यत एवेत्यर्थः। यागजन्यतावच्छेदकं तु स्वर्गत्वोपलक्षितोक्तवैजात्यमेवेति विज्ञेयम्।

ननु यद्युपलक्षणीभूतस्वर्गत्वावच्छिन्ननिरूपितसाधनत्वज्ञानेनापि स्वर्गार्थिनो यागे प्रवृत्तिर्भवति तदा घटार्थिनो मृत्तिकायामिव तन्तुष्वपि प्रवृत्तिः स्यात्- तन्तुष्वपि घटत्वोपलक्षितं यजन्यत्वं तद्विशिष्टनिरूपिता=तदवच्छिन्ननिरूपिता या द्रव्यत्वावच्छिन्नसाधनता तस्याः सत्त्वादेव द्रव्यत्वमस्त्येव तत्र घटत्वस्योपलक्षणत्वमपि संभवत्येवेति तन्तुषु घटत्वोपलक्षितद्रव्यत्वावच्छिन्नसाधनत्वं प्राप्तमेवेत्याशङ्कते- एवं सतीति। उत्तरमाह- फलानुपधानेति, तन्तुभिर्घटो नोत्प-

पधायकसाधनत्वस्य वा विधिप्रत्ययार्थतया ' घटकामस्तन्तुमुपाददीत ' इत्यादिर्न प्रयोगः । न च तथापि स्वर्गत्वादेर्यागादिनिष्ठकारणताघटकव्यापकतानिरूपकतानवच्छेदकतया स्वर्गत्वावच्छिन्ननिरूपितव्यापकताघटितकारणताया बाधः. स्वर्गादिनिष्ठकार्यतावच्छेदकवैजात्यस्य च कारणताग्रहोत्तरकालकल्प्यत्वेन प्रागनुपस्थित्या तदवच्छिन्ननिरूपितव्यापकताबोधासंभव इति " स्वर्गकामः " इत्यादौ विध्यर्थबोधानुपपत्तिर्दुर्वारैवेति वाच्यम्, स्वरूपसंबन्धरूपाया एव कारणताया विध्यर्थत्वोपगमात् ।

---

घते इतिनिश्चयस्य सत्त्वादेव घटार्थी तन्तुषु न प्रवर्तते । तस्य=फलानुपधाननिश्चयस्य । न चैवं यागे स्वर्गत्वोपलक्षितफलाऽजनकत्वनिश्चयोस्ति येन प्रवृत्तिप्रतिबन्धः स्यादित्यर्थः । पक्षान्तरमाह- फलोपधायकेति, फलोपधायकं यदिष्टसाधनं तन्निष्ठं यदिष्टसाधनत्वं तल्लिङर्थस्तथा च तन्तुषु घटत्वावच्छिन्नफलोपधायकत्वं नास्तीति न ' घटकामस्तन्तुमुपाददीत' इतिप्रयोगापत्तिः, यागे तु स्वर्गत्वावच्छिन्नफलोपधायकत्वमस्तीति न " स्वर्गकामो यजेत " इतिप्रयोगानुपपत्तिरित्यर्थः । शङ्कते- न चेति, अयमर्थः- प्राक्क्षणवृत्त्यऽत्यन्ताभावाऽप्रतियोगित्वं हि कारणत्वं तदधिकरणनिष्ठाऽत्यन्ताभावाप्रतियोगित्वमेव च व्यापकत्वं कारणं विना च कार्याऽसंभवात् कारणे व्यापकत्वं प्राप्तं तच्च व्यापकत्वं कारणताघटकमेव तादृशकारणताघटकव्यापकताया निरूपकतावच्छेदकं च कार्यतावच्छेदकं भवति यथा तन्तुनिष्ठकारणताघटकव्यापकतायाः पटत्वं निरूपकतावच्छेदकं भवति पटस्यैव तादृशव्यापकतानिरूपकत्वात् न तु तन्तुनिष्ठकारणताघटकव्यापकताया द्रव्यत्वं निरूपकतावच्छेदकं भवति तथा च यागनिष्ठकारणताघटकव्यापकताया निरूपकतावच्छेदकम् उक्तं स्वर्गत्वोपलक्षितवैजात्यमेव संभवति न तु स्वर्गत्वं तस्य गङ्गास्नानादिजन्यस्वर्गसाधारणत्वादिति स्वर्गत्वं यागनिष्ठकारणताघटकव्यापकतानिरूपकताऽनवच्छेदकमेव तथा च यागेपि स्वर्गत्वावच्छिन्ननिरूपिता या व्यापकता तद्घटितकारणताया बाधः प्राप्तः, स्वर्गादिनिष्ठकार्यतावच्छेदकं यद्वैजात्यमुक्तं तत्तु यागनिष्ठकारणताग्रहोत्तरकाले एव कल्प्यमस्ति यागे स्वर्गकारणताग्रहे जाते यागजन्यस्वर्गनिष्ठवैजात्यस्य कल्पनीयत्वादिति. तादृशवैजात्यस्य प्राक्=कारणताग्रहपूर्वकालेऽनुपस्थित्या तदवच्छिन्ननिरूपितायाः=उक्तवैजात्यावच्छिन्ननिरूपिताया व्यापकताया यागे बोधो न संभवतीति " स्वर्गकामो यजेत " इत्यादौ विध्यर्थबोधानुपपत्तिर्दुर्वारैव- एतद्रीत्या यागे उक्तफलोपधायकसाधनत्वग्रहासंभवादित्यर्थः । उत्तरमाह- स्वरूपसंबन्धेति । स्वरूपसंबन्धरूपायाः=स्वरूपयोग्यतारूपायाः । स्वरूपयोग्यतारूपा कारणता तु स्वर्गत्वावच्छिन्ननिरूपिता यागेऽस्त्येवेति न विध्यर्थबोधानुपपत्तिः, किं वा स्वर्गादिनिष्ठकार्यतावच्छेदकवैजात्यस्य फलोपधायकतारूपकारणताया ग्रहोत्तरमपि कल्प्यत्वे स्वरूपयोग्यतारूपकारणतायास्तु पूर्वमपि कल्प्यत्वं संभवत्येवेति तादृशवैजात्यावच्छिन्ननिरूपितायाः स्वरूपसंबन्धरूपाया व्यापकताघटितकारणताया यागे बाधो नास्तीति न विध्यर्थबोधानुपपत्तिरित्यर्थः ।

**अन्यथासिद्धिनिरूपकताऽनवच्छेदकनियतोत्तरवर्तितावच्छेदकधर्मवत्स्वर्गकत्वमेव वा स्वर्गकारणत्वं नियतोत्तरवर्तितावच्छेदकश्च धर्मो विशिष्योत्तरकालकल्प्यो जातिविशेष एव नियतोत्तरवर्तितावच्छेदकत्वेन सामान्यरूपेण शाब्दबुद्धौ भासते, नियतोत्तरवर्तितावच्छेदकत्वं च कारणतावच्छेदकत्वाभिमतधर्मावच्छिन्नतद्व्यापारान्यतराभावाधिकरणताविशिष्टोत्पत्तिक्षणावच्छिन्नाधिकरणतानिरूपकतानवच्छेदकत्वम्. अधिकरणतावैशिष्ट्यं च स्वावच्छेदकक्षणाव्यवहितोत्तरक्षणावच्छिन्नस्वाश्रयनिष्ठत्वसंबन्धेन ।**

---

यागस्य स्वर्गव्यापकत्वं च यागजन्यादृष्टद्वारा विज्ञेयम्—यागस्य क्रियारूपत्वेन स्वर्गतः पूर्वमेव विनाशित्वादिति ।

पक्षान्तरमाह— अन्यथासिद्धीति, घटत्वादिकं गर्दभादिनिष्ठान्यथासिद्धिनिरूपकतावच्छेदकं भवति घटादेस्तादृशान्यथासिद्धिनिरूपकत्वादित्यऽन्यथासिद्धिनिरूपकतानवच्छेदको यो नियमेनोत्तरवर्तितावच्छेदकः=यागोत्तरवर्तितावच्छेदको धर्मो वैजात्यविशेषस्तद्वान् यः स्वर्गस्तादृशस्वर्गकत्वम् ( जनकतासंबन्धेन तादृशस्वर्गविशिष्टत्वमेव ) स्वर्गकारणत्वं तच्च यागेऽस्त्येवेति न विध्यर्थबोधानुपपत्तिरित्यर्थः । घटत्वादिकं गर्दभादिनिष्ठान्यथासिद्धिनिरूपकतावच्छेदकं भवतीति घटादिकं प्रति गर्दभादेरन्यथासिद्धत्वप्राप्त्या कारणत्वं न भवति प्रकृते च स्वर्गनिष्ठवैजात्यस्य यागनिष्ठान्यथासिद्धिनिरूपकतावच्छेदकत्वं नास्तीति तादृशवैजात्यविशिष्टस्वर्गं प्रति यागस्य कारणत्वं प्राप्तम्— अन्यथासिद्धिनिरूपकतानवच्छेदकनियतोत्तरवर्तितावच्छेदकधर्मावच्छिन्नं प्रति तदव्यवहितपूर्वकालवर्तिनः कारणत्वनियमादिति भावः । नियतोत्तरवर्तितावच्छेदकधर्मस्वरूपमाह— नियतोत्तरवर्तितावच्छेदकश्चेति, स च धर्मो विशेषरूपेण तु यद्यपि कारणताग्रहोत्तरकाले एव कल्प्यो जातिविशेषः=वैजात्यविशेषोऽस्ति तथापि कारणताग्रहपूर्वकालेपि नियतोत्तरवर्तितावच्छेदकत्वेन सामान्यरूपेण शाब्दबुद्धौ भासते इति तन्निरूपितकारणताघटकव्यापकताग्रहसंभवान्न विध्यर्थबोधानुपपत्तिरित्यर्थः । नियतोत्तरवर्तितावच्छेदकत्वस्वरूपमाह— नियतोत्तरवर्तितावच्छेदकत्वमिति । कारणतेति— कारणतावच्छेदकत्वेनाभिमतो यो धर्मो यागत्वं तदवच्छिन्नो यो यागस्तदऽभावाधिकरणतया वा तद् ( याग ) व्यापाराभावाधिकरणतया वा ( कालनिष्ठया ) विशिष्टा या उत्पत्तिक्षणावच्छिन्नाधिकरणता=स्वर्गभिन्नघटाद्युत्पत्तिक्षणावच्छिन्नाधिकरणता तादृशाधिकरणताया निरूपकता घटादौ भवति निरूपकतावच्छेदकत्वं च घटत्वादौ भवति निरूपकताया अनवच्छेदकत्वं च स्वर्गनिष्ठवैजात्येऽस्तीति तदेव नियतोत्तरवर्तितावच्छेदकत्वं विज्ञेयम्, घटोत्पत्तिक्षणे च यागस्तद्व्यापारयोः सत्त्वस्य नियमाभावेन यागस्य यागव्यापारस्य चाभावः संभवत्येवेति तादृशाभावाधिकरणतया विशिष्टा घटोत्पत्तिक्षणावच्छिन्नाधिकरणता विज्ञेया— उक्तोभयोरप्यधिकरणतयोरेककालवृत्तित्वेन समानाधिकरणत्वादित्यन्वयः । उक्तवैशिष्ट्यप्रयोजकसंबन्धमाह— अधिकरणतावैशिष्ट्यमिति । स्वावच्छेदकेति— स्वम्=यागतद्व्यापारान्यतरा-

वस्तुतः स्वर्गनिष्ठधर्मावच्छिन्ननिरूपितनियतपूर्ववर्तितावच्छेदकधर्मवत्त्वमेव स्वर्गकारणत्वम् । नियतपूर्ववर्तितावच्छेदकत्वं चाऽव्यवहितपूर्वकालावच्छिन्नवृत्तिकाभावघटितदैशिकव्यापकतायाः स्वाश्रयत्वस्वाश्रयनिष्ठव्यापारवत्त्वाऽन्यतरसंबन्धेनावच्छेदकत्वमेव । व्यापकत्वनिरूपकतावच्छेदकवैजात्यस्य विशिष्याऽनुपस्थितावपि स्वर्गधर्मत्वेन ज्ञान संभवत्येव । व्यापकताघटकाभावप्रतियोगि-

---

भावाधिकरणता तदवच्छेदको यः क्षणः= घटोत्पत्तिपूर्वक्षणस्तदव्यवहितोत्तरक्षणः= घटोत्पत्तिक्षणस्तदवच्छिन्नं यत् स्वं घटस्तदाश्रयीभूतो यो घटोत्पत्तिक्षणस्तन्निष्ठत्वं घटोत्पतिक्षणावच्छिन्नाधिकरणतायां प्राप्तमित्यत्र तेन संबन्धेन यागतद्व्यापारान्यतराभावाधिकरणताविशिष्टा घटाद्युत्पत्तिक्षणावच्छिन्नाधिकरणता विज्ञेया, उक्तं स्वावच्छेदकक्षणाव्यवहितोत्तरक्षणावच्छिन्नस्वाश्रयनिष्ठत्वं च संबन्धभूतं घटोत्पत्तिक्षणावच्छिन्नाधिकरणतायामस्त्येव ।] यागव्यापारश्च यागजन्याऽपूर्वरूपो विज्ञेय इत्यन्वयः ।

स्वमतमाह- वस्तुत इति, स्वर्गनिष्ठो यो वैजात्यविशेषो धर्मस्तदवच्छिन्नो यः स्वर्गविशेषस्तन्निरूपिता या नियतपूर्ववर्तिता तदवच्छेदको यो धर्मो यागत्वं तद्वत्त्वमेव स्वर्गकारणत्वमित्यन्वयः, यागे यागत्वमप्यस्ति स्वर्गापेक्षया नियतपूर्ववर्तिताप्यस्तीति यागत्वे नियतपूर्ववर्तितावच्छेदकत्वं विज्ञेयम् । नियतपूर्ववर्तितावच्छेदकत्वस्य स्वरूपमाह- नियतपूर्ववर्तितेति । अव्यवहितेति- व्यापकतायास्तद्वन्निष्ठात्यन्ताभावाप्रतियोगित्वरूपत्वादभावघटितत्वमस्तीति स्वर्गापेक्षयाऽव्यवहितपूर्वकालेनावच्छिन्ना वृत्तिर्यस्यैवंभूतो योऽव्यवहितपूर्वकालावच्छिन्नवृत्तिकोऽभावस्तद्घटिता या दैशिकव्यापकता तस्याः स्वाश्रयत्वसंबन्धेन वा स्वाश्रयनिष्ठव्यापारवत्त्वसंबन्धेन वा यदवच्छेदकत्वं तदेव नियतपूर्ववर्तितावच्छेदकत्वमित्यन्वयः । नियतपूर्ववर्तितावच्छेदकत्वं ह्युक्तव्यापकताया उक्तसंबन्धेनावच्छेदकत्वरूपमेव विज्ञेयमिति यावत् । स्वाश्रयत्वसंबन्धेनेत्यस्य स्वसामानाधिकरण्यसंबन्धेनेत्यर्थः स्वं यागत्वं तथा च यागत्वमुक्तव्यापकता च यागे एवास्तीति स्वसामानाधिकरण्यसंबन्धेन यागत्वं व्यापकताया अवच्छेदकं जातम् । किं वा स्वाश्रयनिष्ठव्यापारवत्त्वसंबन्धेनावच्छेदकत्वं ग्राह्यं तत्रापि स्वं यागत्वं तदाश्रयो यागो जनकत्वसंबन्धेन यागनिष्ठो योऽपूर्वादिरूपो व्यापारस्तद्वत्त्वं व्यापकतायां सामानाधिकरण्येनास्ति- यागे एव व्यापारस्य व्यापकतायाश्च सत्त्वादिति तादृशेन स्वाश्रयनिष्ठव्यापारवत्त्वसंबन्धेन यागत्वं व्यापकताया अवच्छेदकं जातमित्येतादृशं यद् व्यापकतावच्छेदकत्वं तदेव नियतपूर्ववर्तितावच्छेदकत्वमित्यर्थः प्रतिभाति । अत्र "स्वाश्रयनिरूपितव्यापारत्ववत्त्व" इतिपाठस्तु प्रामादिक एव प्रतीयते ।

व्यापकत्वेति- कारणनिष्ठव्यापकत्वनिरूपकता कार्ये एव भवतीति यागनिष्ठव्यापकत्वनिरूपकता स्वर्गे प्राप्ता तत्रैव स्वर्गे वैजात्यमप्यस्तीति व्यापकत्वनिरूपकतावच्छेदकत्वं वैजात्ये प्राप्तं तस्य च व्यापकतानिरूपकतावच्छेदकवैजात्यस्य विशेषरूपेणोपस्थित्यऽसंभवेपि स्वर्गधर्मत्वेन रूपेण ज्ञानम्=भानं संभवत्येव शाब्दबोधे । ननु स्वर्गधर्मस्य वैजात्यस्यात्र स्वरूपत एव प्रवेशो-

तायां स्वरूपतोऽवच्छेदककोटिप्रविष्टाया अपि जातेर्व्यापकताभाने स्वर्गधर्मत्वादिना भाने न बाधकम्– स्वर्गधर्मत्वादेरुपलक्षणतया भानात् । प्रतियोगितासंबन्धेन प्रतियोगिप्रकारकज्ञान एव प्रतियोगिकोटावुपलक्षणप्रकाराऽभाननियमात्, प्रकृते च कारणताशरीरघटकाभावस्य प्रतियोगिताप्रकारेण भाननियमात् । अत एव स्वरूपतो वह्नित्वाद्यवच्छिन्नप्रतियोगिताकाभावस्य वह्नित्वाद्यवच्छिन्नव्यापकतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नाभावत्वेन लक्षणप्रवेशस्य संभवदुक्तिकता ।

---

ऽस्तीति कथं स्वर्गधर्मत्वेन रूपेण भानं स्यादित्याशङ्क्य वैजात्यस्यात्र स्वर्गधर्मत्वेन रूपेण भानमुपपादयति– व्यापकताघटकेति, व्यापकताघटकाभावः=स्वर्गनिष्ठधर्मावच्छिन्नाव्यवहितपूर्ववृत्तियोंऽभावस्तत्प्रतियोगिता स्वर्गकारणीभूतयागादौ नास्तीत्याकारकप्रतीतिसाक्षिका या प्रतियोगितानिष्ठा प्रतियोगिता स्वरूपतस्तादृशप्रतियोगितावच्छेदककोटिप्रविष्टाया अपि जातेः=वैजात्यस्य स्वर्गधर्मत्वादिना भाने न किंचिद्बाधकम्, उक्ते हेतुमाह– स्वर्गधर्मत्वादेरिति, स्वर्गधर्मत्वादेरुपलक्षणतया=उक्तवैजात्योपलक्षणतया हि भानं स्वीक्रियते एतादृशस्थले चोपलक्षणीभूतधर्मस्यापि प्रकारतया भानं संभवत्येवेति स्वर्गधर्मत्वादिना रूपेण वैजात्यस्य भाने न किंचिद्बाधकमित्यर्थः । उपलक्षणीभूतस्वर्गधर्मत्वस्य कथमत्र वैजात्यप्रकारतयोक्तं भानं स्यादित्याशङ्क्याह– प्रतियोगितासंबन्धेनेति, अभावज्ञानं प्रतियोगितासंबन्धेन प्रतियोगिताप्रकारकश्चापि भवति तत्र 'प्रतियोगितासंबन्धेन घटवान् घटाभावः' इतिप्रतियोगितासंबन्धेनाभावज्ञानमस्ति 'निरूपकत्वसंबन्धेन प्रतियोगितावानऽभावः' इति च प्रतियोगिताप्रकारकाभावज्ञानमस्ति तत्र प्रतियोगितासंबन्धेन घटादिप्रतियोगिप्रकारकाभावविशेष्यकज्ञाने एव प्रतियोगिकोटौ यदुपलक्षणतया प्रविष्टं भवति तस्य प्रकाराभाननियमात्=प्रकारतया भानं न भवतीति नियमोस्ति, यथात्र द्रव्यत्वस्य, प्रतियोगिताप्रकारकाभावज्ञाने तु प्रतियोगिकोटावुपलक्षणतयापि प्रविष्टस्य प्रकारतया भानं संभवत्येव तथा च प्रकृतेपि कारणताशरीरघटकाभावस्य प्रतियोगिताप्रकारेणैव भाननियमात्=भानं भवतीति तादृशाभावज्ञाने प्रतियोगिकोटावुपलक्षणतयापि प्रविष्टस्य स्वर्गधर्मत्वस्य वैजात्यप्रकारतया भाने न किंचिद्बाधकमित्यर्थः ।

अत एवेति, अत एव=प्रतियोगितासंबन्धेन प्रतियोगिप्रकारकज्ञाने एव प्रतियोगिकोटावुपलक्षणप्रकाराभाननियमादेव=प्रतियोगिताप्रकारकाभावज्ञाने उपलक्षणीभूतधर्मस्यापि प्रकारतया भानस्वीकारादेवेति यावत् तथा च स्वरूपतः प्रविष्टं यद् वह्नित्वं तादृशवह्नित्वावच्छिन्नप्रतियोगिताकाभावस्य वह्नित्वावच्छिन्नव्यापकतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नाभावत्वेन लक्षणप्रवेशस्य संभवदुक्तिकता=लक्षणे प्रवेशः संभवतीत्यन्वयः, अयमर्थः– यदा हि प्रतियोगिताप्रकारकाभावज्ञाने उपलक्षणीभूतधर्मस्यापि प्रकारतया भानं स्वीक्रियते तदा वह्नित्वावच्छिन्नप्रतियोगिताकाभावो हि प्रतियोगिताप्रकारकाभाव एवेति तत्र वह्नित्वे वर्तमानं यदुपलक्षणीभूतं

इत्यमेव चेष्टतावच्छेदकधर्माणामुपलक्षणीभूतेनेष्टतावच्छेदकत्वेन व्यापकताघटकाभावप्रतियोगितावच्छेदककोटय्ऽप्रविष्टेनापीष्टतावच्छेदकधर्माणां सर्वसाधारणशक्तिग्रहे भानमुपपद्यते इति ।

एतेन- नियतोत्तरवर्तितावच्छेदकधर्मवत्स्वर्गकत्वस्य विध्यर्थतामते यागादिधर्मिकताद्दशकारणताग्रहस्य प्रवृत्तिहेतुता वाच्या तदपेक्षया च स्वर्गादिधर्मिक-

---

वह्नित्वावच्छिन्नव्यापकतावच्छेदकत्वं तस्य प्रकारतया भानसंभवादेव ताद्दशोपलक्षणीभूतं यद् वह्नित्वावच्छिन्नव्यापकतावच्छेदकत्वं तेनोपलक्षितो यो धर्मो वह्नित्वं तदवच्छिन्नाभावत्वेन=ताद्दश ( व्यापकतावच्छेदकत्वोपलक्षित ) वह्नित्वावच्छिन्नप्रतियोगिताकाभावत्वेन रूपेण वह्नित्वावच्छिन्नप्रतियोगिताकाभावस्य ( वह्नित्वावच्छिन्नप्रतियोगिताप्रकारकाभावस्य ) लक्षणे प्रवेशः संभवति, अत्र चाभावज्ञाने उपलक्षणीभूतस्य वह्नित्वावच्छिन्नव्यापकतावच्छेदकत्वस्य वह्नित्वप्रकारतया भानं भवत्येव- व्यापकताघटकाभावज्ञाने हि वह्नित्वं व्यापकता च वह्नौ वर्तते इति व्यापकता वह्नित्वावच्छिन्ना जाता ताद्दशं वह्नित्वावच्छिन्नव्यापकतावच्छेदकत्वं च वह्नित्वे प्राप्तं तच्च वह्नित्वावच्छिन्नव्यापकतावच्छेदकत्वं वह्नित्वस्योपलक्षणमेवेति तस्य वह्नित्वप्रकारतया भानं संभवत्येव, यदि च प्रतियोगिताप्रकारकाभावज्ञानेप्युंपलक्षणीभूतधर्मस्य प्रकारतया भानं न स्यात्तदात्राप्युक्तलक्षणे=व्याप्तिलक्षणे स्वरूपतो वह्नित्वावच्छिन्नप्रतियोगिताकाभावज्ञाने उपलक्षणस्य वह्नित्वावच्छिन्नव्यापकतावच्छेदकत्वस्य वह्नित्वप्रकारतया भानं न स्यादिति वह्नित्वावच्छिन्नप्रतियोगिताकाभावस्य वह्नित्वावच्छिन्नव्यापकतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नाभावत्वेन रूपेण लक्षणे प्रवेशो न स्यादेव न चैवमस्तीति प्रतियोगिताप्रकारकाभावज्ञाने उपलक्षणस्यापि प्रकारतया भानं भवत्येव तथा च स्वर्गनिष्ठवैजात्योपलक्षणस्यापि स्वर्गधर्मत्वस्य वैजात्यप्रकारतया भानं संभवतीति ताद्दशवैजात्यस्य स्वर्गधर्मत्वेन भाने न किंचिद्बाधकमिति । लक्षणप्रवेशेत्युक्तलक्षणं तु व्याप्तिवादे गवेषणीयम् । किं चात्र दैशिकव्यापकतोक्तास्तीति स्वर्गत्वेन यागजन्यापूर्वत्वेनापि च कार्यकारणभाव उपपादयितुं शक्यते-यद्यदात्मनि स्वर्गादिसुखमुत्पद्यते तत्तदात्मनि यागजन्यापूर्वस्यापि सत्त्वाद् दैशिकव्यापकतास्त्येव ।

उक्तमन्यत्रातिदिशति- इत्थमिति, यथोक्तस्थले स्वर्गनिष्ठवैजात्यस्य स्वर्गधर्मत्वादिना भानमुपपन्नं तथेष्टतावच्छेदकधर्माणाम्=स्वर्गत्वादीनामुपलक्षणीभूतं यदिष्टतावच्छेदकत्वं तस्य व्यापकताघटकाभावप्रतियोगितावच्छेदककोटौ यद्यपि प्रवेशो नास्ति- ताद्दशकोटाविष्टतावच्छेदकस्वर्गत्वादीनामेव प्रवेशात् तथापि तेनोपलक्षणीभूतेनेष्टतावच्छेदकत्वेन रूपेणेष्टतावच्छेदकधर्माण सर्वसाधारणशक्तिग्रहे भानमुपपद्यते एव यथा हि तत्पदेन घटत्वादीनामुपलक्षणीभूतेन बुद्धिविषयतावच्छेदकत्वोपलक्षितधर्मत्वेन भानं भवति तथेत्यर्थः ।

एतेनेति-यागाद्यपेक्षया नियतोत्तरवर्तितावच्छेदको यः स्वर्गत्वादिर्वा वैजात्यादिर्वा धर्मस्तद्वान् यः स्वर्गस्ताद्दशस्वर्गकत्वम्=स्वर्गजनकत्वम् ( जनकतासंबन्धेन स्वर्गविशिष्टत्वं हि स्वर्गक-

नियतोत्तरवर्तितावच्छेदकधर्मरूपयागादिसाध्यताज्ञानस्य प्रवृत्तिहेतुत्वे तादृशसाध्यताविशिष्टेष्टमात्रस्य विध्यर्थत्वे च लाघवम्, तादृशसाध्यताया निरुक्तसाधनतान्तर्गतत्वाद् इतीष्टसाधनत्वस्य विध्यर्थत्वं प्रवर्तकत्वं च व्याहन्येत । एवं यत्र कारणतावच्छेदकधर्मोऽप्यनुपस्थितः. अतिप्रसक्तेन न्यूनवृत्तिना वा धर्मेण कारणमुपलक्षितं तत्र शब्दात् कारणताग्रहानुपपत्तिश्चेति निरस्तम्– व्यापकताघटितकारणतायाः साध्यतामपेक्ष्याऽगरीयस्या एवोक्तरीत्या प्रवर्तकत्वादिसंभवात्, तादृ-

---

त्वम् ) एव विध्यर्थस्तत्र च यागादिधर्मिकतादृशकारणताग्रहस्य=यागनिष्ठस्वर्गादिकारणताग्रहस्यैव यागादौ प्रवृत्तिहेतुता वाच्या पूर्वोक्तेन स्वर्गनिष्ठधर्मावच्छिन्नेत्यादिना नियतोत्तरवर्तितावच्छेदकधर्मवत्स्वर्गकत्वस्यैव विध्यर्थत्वप्राप्त्या यागादिधर्मिकतादृशकारणताग्रहस्यैव प्रवृत्तिहेतुत्वप्राप्तेरितिभावः, तदपेक्षया च स्वर्गादिधर्मिका=स्वर्गादिनिष्ठा या नियतोत्तरवर्तितावच्छेदकधर्मरूपा यागादिसाध्यता ( स्वर्गे नियतोत्तरवर्तिताप्यस्ति यागादिसाध्यताप्यस्तीति यागादिसाध्यता नियतोत्तरवर्तितावच्छेदकधर्मरूपा विज्ञेया ) तादृशसाध्यताज्ञानस्य यागादौ प्रवृत्तिहेतुत्वे तादृशसाध्यताविशिष्टेष्टमात्रस्य=स्वर्गादिधर्मिकनियतोत्तरवर्तितावच्छेदकधर्मरूपयागादिसाध्यताविशिष्टेष्टमात्रस्य च विध्यर्थत्वे लाघवमस्तीत्यर्थः । उक्ते हेतुमाह– तादृशसाध्यताया इति, तादृशसाध्यता=स्वर्गादिधर्मिकनियतोत्तरवर्तितावच्छेदकधर्मरूपयागादिसाध्यता हि निरुक्तसाधनतायामन्तःप्रविष्टास्ति– साधनतायाः ( कारणतायाः ) साध्यतानिरूपितत्वादिति निरुक्तसाधनतायाः प्रवृत्तिहेतुत्वे तदन्तःप्रविष्टसाध्यताया अपि प्रवृत्तिहेतुत्वं स्यादेवेति गौरवापत्तिः, तस्मादुक्तसाध्यतायाः ( साध्यताज्ञानस्य ) एव प्रवृत्तिहेतुत्वं युक्तम्. एवं हीष्टसाधनत्वस्य=व्यापकताघटितकारणताया उक्तं विध्यर्थत्वं प्रवर्तकत्वं च व्याहन्येत=व्याहतमेव न स्वीकार्यमिति यावत् । एवमिति– किं च व्यापकताघटितकारणतायाः प्रवर्तकत्वे विध्यर्थत्वे च यत्र कारणतावच्छेदकधर्मस्य यागत्वादेरुपस्थितिर्न स्यात् किं त्वतिप्रसक्तेनेष्टजनकत्वादिना धर्मेण कारणमुपलक्षितं स्यात् किं वा न्यूनवृत्तिना तद्व्यक्तित्वादिधर्मेण कारणमुपलक्षितं स्यात् तत्र शब्दात् तादृशकारणे कारणताग्रहोऽपि न संभवति– कारणताग्रहे कारणतावच्छेदकधर्मोपस्थितेः कारणत्वादिति नोक्तव्यापकताघटितकारणतायाः प्रवर्तकत्वं युक्तं किं तूक्तसाध्यताया एव प्रवर्तकत्वं युक्तमिति यत्केनाप्युक्तं तदप्येतेन=उक्तेन निरस्तं वेदितव्यमित्यन्वयः । अयमर्थः– स्वर्गकारणत्वं हि स्वर्गनिष्ठधर्मावच्छिन्ननिरूपितनियतपूर्ववर्तितावच्छेदकधर्मवत्त्वमेव एतादृशधर्मवत्त्वरूपस्वर्गकारणत्वग्रहश्चोपपादित एव, किं च यथोक्ततादृशसाध्यताया निरुक्तसाधनतान्तर्गतत्वान्निरुक्तसाधनतायाः=व्यापकताघटितकारणतायाः प्रवर्तकत्वे तदन्तःप्रविष्टसाध्यताया अपि प्रवर्तकत्वापत्त्या गौरवं प्रदर्शितं तथा साध्यतापि साधनतानिरूपितैव भवतीति साधनताया उक्तसाध्यतायामन्तःप्रवेशात् साध्यतायाः प्रवर्तकत्वे तदन्तःप्रविष्टसाधनताया अपि प्रवर्तकत्वं स्यादेवेति त्वन्मतेऽप्येतत्प्रदर्शितगौरवं तुल्यमेवेत्यर्थः । स्वयमपि निरस्तत्वे हेतुमाह– व्यापकताघटितेति, कारणतायाः साध्यतायाश्च समश-

ष्टसाधनताशरीरे व्यापकतावच्छेदकत्वेनैव कारणतावच्छेदकप्रवेशात् तद्ग्रहे विशिष्य तदुपस्थित्यनुपयोगाच्चेति ।

केचित्तु विजातीयस्वर्गनिरूपितसमवाय एव स्वर्गादिनिष्ठयागादिजन्यतावच्छेदकसंबन्धस्तथा च वैजात्यस्य संबन्धघटकतयैव व्यापकताशरीरे निवेशान्नोपस्थित्यपेक्षा न वा कारणताविघटकव्यभिचारावकाश इत्याहुः, तदसत्- विजातीयस्वर्गनिरूपितसमवायत्वेन संबन्धतायां मानाभावात् । तादृशसंबन्धघटितव्यापकताया विधिप्रत्ययार्थत्वे तस्य स्वर्गादिनिष्ठवैजात्यभेदेन शक्तिबाहुल्यप्रस- -

---

रीरत्वेन साध्यतापेक्षया कारणतायां गुरुत्वं नास्तीति व्यापकताघटितकारणताया उक्तरीत्या प्रवर्तकत्वं संभवत्येव, किं च तादृशसाधनताशरीरे=व्यापकताघटितकारणतायां कारणतावच्छेदकधर्मस्य व्यापकतावच्छेदकत्वेनैव रूपेण प्रवेशोस्तीति तद्ग्रहे=यागादिनिष्ठकारणताग्रहे विशिष्य=विशेषरूपेण=कारणतावच्छेदकत्वेन रूपेण तदुपस्थित्यनुपयोगात्=कारणातावच्छेदकधर्मोपस्थित्यपेक्षाभावात्. कारणतावच्छेदकस्य कारणतायां कारणतावच्छेदकत्वेन रूपेण प्रवेश एव नास्ति येन कारणतावच्छेदकत्वेन रूपेण कारणतावच्छेदकधर्मोपस्थितेरपेक्षा स्यात् किं तु कारणतावच्छेदकस्य व्यापकतावच्छेदकत्वेन रूपेण प्रवेशोस्ति व्यापकतावच्छेदकत्वेन रूपेण तूपस्थितिः संभवत्येवेत्युक्तव्यापकताघटितकारणताया उक्तरीत्या प्रवर्तकत्वे न काचिदनुपपत्तिरस्तीत्यर्थः ।

परिहाराय मतान्तरमुपस्थापयति- केचिदिति, यागेन विजातीयः स्वर्ग उत्पद्यते स्वर्गश्च सुखविशेष एव सुखस्य चात्मनि समवाय एव संबन्धः स चात्मनिष्ठः सुखसमवायः स्वर्गभिन्नसुखनिरूपित एवेत्युक्तम्-" विजातीयस्वर्गनिरूपितसमवायः ". इति विजातीयस्वर्गनिरूपितसमवाय एव स्वर्गनिष्ठाया यागादिजन्यताया अवच्छेदकः संबन्ध इति वैजात्यस्य संबन्धघटकतयैव व्यापकताशरीरे निवेशोस्तीति वैजात्योपस्थितेरपेक्षा नास्ति तथा च "स्वर्गादिनिष्ठकार्यतावच्छेदकवैजात्यस्य च कारणताग्रहोत्तरकालकल्प्यत्वेन प्रागनुपस्थित्या तदवच्छिन्ननिरूपितव्यापकताबोधासंभवः ६१६ " इत्यनेन यो दोष उक्तः स नास्ति किं चैवं कारणताविघटकस्य व्यभिचारस्याप्यवकाशो नास्ति- स्वर्गविशेषं प्रत्येव यागादिविशेषस्य कारणत्वप्राप्तेः, विजातीयस्वर्गनिरूपितसमवायस्य यागविशेषजन्यस्वर्गविशेषनिष्ठयागादिजन्यतावच्छेदकसंबन्धत्वादित्यर्थः । व्यापकताशरीरे इति- विजातीयस्वर्गनिरूपितसमवायसंबन्धावच्छिन्नस्वर्गत्वावच्छिन्नकार्यतानिरूपितं व्यापकत्वघटितकारणत्वं यागेस्तीति वैजात्यस्य संबन्धघटकतयैव व्यापकताशरीरे निवेशोस्तीत्यर्थः । परिहरति- तदसदिति, विजातीयस्वर्गनिरूपितसमवायत्वस्य गुरुधर्मत्वाद् विजातीयस्वर्गनिरूपितसमवायस्य संबन्धत्वं न संभवतीत्यर्थः । दोषान्तरमाह-तादृशेति, तद्वन्निष्ठात्यन्ताभावाप्रतियोगित्वरूपं व्यापकत्वमेव कारणत्वम्, इष्टसाधनत्वमेव च विधिप्रत्ययार्थ इति व्यापकत्वस्यैव विध्यर्थत्वं प्राप्तं तत्र तादृशसंबन्धघटितव्यापकतायाः=विजातीयस्वर्गनिरू-

ज्ञात् । तादृशकार्यसंबन्धघटितेष्टकारणतायाश्च प्रमाणान्तरेणाऽप्रत्यायितत्वात् तत्र शक्तिग्रहानुपपत्त्या शाब्दबुद्धौ तद्भानाऽनुपपत्तेश्च ।

न चेष्टतावच्छेदकत्वोपलक्षितस्वर्गत्वावच्छिन्ने कारणताघटकाधिकरणादिपदार्थे च खण्डशः शक्तिरुपेया. आकाङ्क्षावशाच्चाधिकरणरूपविध्यर्थे विजातीयस्वर्गनिरूपितसमवायस्य संबन्धतया भानात् तादृशकार्यसंबन्धघटितकारणतायाः शाब्दबोधे भानमुपगन्तव्यं न तु तादृशसंबन्धान्तर्भावेन शक्तिरिति न का चिदनुपपत्तिरिति वाच्यम्, एवं सत्यपि संसर्गतात्पर्यज्ञानानुरोधेन तादृशसंसर्गोपस्थित्यपेक्षाया दुर्वारत्वात् ।

---

पितसमवायघटितव्यापकतायाः विधिप्रत्ययार्थत्वे हि तस्य=विधिप्रत्ययार्थस्य विजातीयस्वर्गनिरूपितव्यापकत्वस्य स्वर्गादिनिष्ठवैजात्यानन्त्येनाऽऽनन्त्याद् विधिप्रत्ययशक्त्यानन्त्यं स्यादित्यर्थः । दोषान्तरमाह— तादृशकार्येति, तादृशेन कार्यसंबन्धेन=विजातीयस्वर्गनिरूपितसमवायेन घटिता येष्टकारणता तस्याः प्रमाणान्तरेणाऽज्ञातत्वात् तत्र=तादृशकारणतायां विधिप्रत्ययस्य शक्तिग्रहानुपपत्त्या शाब्दबोधे तत्—तस्या उक्तकारणताया भानानुपपत्तिश्च—शाब्दबोधशक्तिज्ञानयोः समानविषयकत्वनियमात्, प्रमाणान्तरेण ज्ञाते एव पदार्थे शक्तिग्रहसंभवादित्यर्थः ।

ननु विजातीयस्वर्गनिरूपितसमवायस्य शक्तिग्रहे प्रवेशो नास्ति येन तादृशवैजात्यानन्त्येन शक्त्यानन्त्यं स्यात् किं तु विजातीयस्वर्गनिरूपितसमवायस्याऽधिकरणरूपविध्यर्थे= आत्मनि संबन्धत्वेन रूपेणाकाङ्क्षाबलेन भानं स्वीकुर्मस्तथा च न शक्त्यानन्त्यं शक्तिस्तु विधिप्रत्ययस्येष्टतावच्छेदकत्वोपलक्षितस्वर्गत्वावच्छिन्ने कारणताघटकाधिकरणादिपदार्थे च खण्डशोस्ति तथा च तादृशकार्यसंबन्धघटितकारणतायाः=आकाङ्क्षाबलभासमानविजातीयस्वर्गनिरूपितसमवायघटितकारणतायाः शाब्दबोधे भाने न काचिदनुपपत्तिः— शुद्धेष्टकारणताया अनुमानादिप्रमाणवेद्यत्वेन तस्यां शक्तिग्रहानुपपत्त्यभावादित्याशङ्क्याह— न चेति, अत्र तद्वन्निष्ठात्यन्ताभावाप्रतियोगित्वं यत् कारणत्वं तत्र तद्वदित्यधिकरणस्य प्रवेशेन शक्यत्वादुक्तम्— " कारणताघटकाधिकरणपदार्थे " इति, स्वर्गादिरूपं सुखं ह्यात्मन्युत्पद्यते इति तदधिकरणमात्मैव तस्मिंश्च विध्यर्थभूते आत्मरूपाधिकरणपदार्थे विजातीयस्वर्गस्य समवाय एव संबन्धः स चाकाङ्क्षाबलेन भासते न तु शक्त्या । उत्तरमाह— एवमिति, एवमपि ' विजातीयस्वर्गनिरूपितसमवायेन स्वर्गत्वावच्छिन्नविशिष्टमधिकरणं विधिप्रत्ययो बोधयतु ' इत्याकारकसंसर्गविषयकतात्पर्यज्ञाने विजातीयस्वर्गनिरूपितसमवायोपस्थित्यपेक्षा स्यादेव, उपस्थितिश्च शक्तिग्रहं विना न भवतीति वैजात्यानन्त्येन शक्यानन्त्यं स्यादेवेत्यर्थः ।

ननु वाक्ये यत् तत्संसर्गेण विशेषणविशिष्टविशेष्यपरत्व ( बोधकत्व ) ज्ञानं तदेव संसर्गभाननियामकं भवतीति स्वीकार्यं तथा च "स्वर्गकामो यजेत" इतिवाक्यं विजातीयस्वर्गनिरूपितसमवायेन स्वर्गत्वावच्छिन्नाभिन्नविशेषणविशिष्ट यदात्माऽभिन्नाधिकरणरूपं विशेष्यं तत्परं

न च तत्संसर्गेण विशेषणविशिष्टविशेष्यपरत्वज्ञानमेव संसर्गभाननियामकं तत्रापि च संसर्गः संसर्ग एव न तु विशेषणमिति न ज्ञानापेक्षेति वाच्यम्, विशेषणविशिष्टविशेष्यस्य वाक्यार्थत्वेन पूर्वमनिश्चिततया तत्परत्वग्रहस्य शाब्दबोधात् पूर्वमसंभवात्, तत्तत्संबन्धविषयतानिरूपितविशेषणादिविषयताशालिबोधपरत्वज्ञानस्यैव हेतुतया तत्र संबन्धस्य विशेषणतया तदुपस्थितेरावश्यकत्वात् । एवं विजातीयस्वर्गनिरूपितसमवायसंबन्धेन स्वर्गत्वावच्छेदेन जन्यतोपगमे "स्वर्गत्वस्याश्वमेधजन्यत्वसामानाधिकरण्यमात्रमेव हि शब्देनापि प्रतीयते न तु स्वर्गत्वस्य जन्यतावच्छेदकत्वमऽसामर्थ्यादऽसंभवाच्च" इत्यादिमिश्रग्रन्थविरोधः ।

यत्तु वैजात्यमेव कार्यतावच्छेदकं तच्च संबन्धविधयैव कारणताघटकं कार्य-

तद्बोधकमिति ज्ञानमेव विजातीयस्वर्गनिरूपितसमवायभाननियामक ( भासक ) मस्ति तत्र=एतादृशज्ञानेपि चोक्तसंसर्गः संसर्ग एव न तु विशेषणं येन तदुपस्थित्यपेक्षा स्यादित्याशङ्क्याह— न चेति । परिहारमाह—विशेषणेति, विशेषणविशिष्टविशेष्यं हि वाक्यार्थबोधविषयो भवतीति तस्य वाक्यार्थबोधात् पूर्वमनिश्चिततया वाक्यस्य विशेषणविशिष्टविशेष्यपरत्वज्ञानमेव वाक्यार्थबोधात् पूर्वं न संभवति येन तस्य संसर्गभाननियामकत्वं स्यादित्यर्थः॥ विवक्षितबोधपरत्वज्ञानस्य संसर्गभाननियामकत्वेपि संसर्गोपस्थित्यपेक्षामाह— तत्तत्संबन्धेति, विवक्षितसंबन्धविषयतानिरूपिता या स्वर्गादिरूपविशेषणविषयता तादृशविषयताशाली यो बोधस्तादृशबोधपरत्वस्य वाक्ये यज्ज्ञानं तदेव संबन्धभाननियामकम्. एतादृशबोधपरत्वज्ञाने च संबन्धविषयताया विशेषणविषयतानिरूपकत्वेन भानात् संबन्धविषयतायां च संबन्धो विशेषणमेवेति संबन्धस्य विशेषणतया भानात्तदुपस्थित्यपेक्षा प्राप्तैव, त्वदुक्तस्य विशेषणविशिष्टविशेष्यपरत्वज्ञानस्य तु संसर्गभाननियामकत्वं न संभवति तस्योक्तरीत्या वाक्यार्थबोधात् पूर्वमसंभवादित्यर्थः । "विजातीयस्वर्गनिरूपितसमवाय एव स्वर्गादिनिष्ठयागादिजन्यतावच्छेदकसंबन्धः" इत्युक्ते मुरारिग्रन्थविरोधमपि प्रदर्शयति— एवमिति । मुरारिग्रन्थमाह—स्वर्गत्वस्येति, यत्र स्वर्गेऽश्वमेधादियागजन्यत्वं तत्र स्वर्गत्वमप्यस्त्येवेति स्वर्गत्वे यागादिजन्यतासामानाधिकरण्यमात्रमस्ति न तु यागादिजन्यतावच्छेदकत्वम्— असामर्थ्यात्= स्वर्गत्वे विधिप्रत्ययशक्तेरस्वीकारात् वैजात्ये वा विजातीयस्वर्गत्वे एव वा विधिप्रत्ययशक्तिस्वीकारात्, असंभवाच्च=स्वर्गत्वं हि गङ्गास्नानादिजन्यस्वर्गसाधारणतयाऽतिप्रसक्तमेव न चातिप्रसक्तधर्मस्यावच्छेदकत्वं संभवतीति मिश्रेणोक्तं तत्र यदा स्वर्गत्वं यागादिजन्यतावच्छेदकमेव नास्ति तदा विजातीयस्वर्गनिरूपितसमवायस्य कथं स्वर्गत्वादिनिष्ठयागादिजन्यतावच्छेदकसंबन्धत्वं स्यादित्यर्थः ।

परिहाराय मतान्तरमुपस्थापयति— यत्त्विति, उक्तवैजात्यमेव यागादिनिरूपितायाः स्वर्गादिनिष्ठायाः कार्यताया अवच्छेदकं तच्च वैजात्यं संबन्धविधयैव कारणताघटकमिति न तदुपस्थित्यपेक्षा न वा तत्र विधिप्रत्ययशक्तिग्रहस्याप्यऽपेक्षा येन तादृशवैजात्यानन्त्येन शक्त्यानन्त्यं स्यात्, तच्च वैजात्यं तत्तद्यागादिजन्यतत्तत्स्वर्गादिव्यक्तिमात्रविश्रान्तमिति नाप्यतिप्रसक्तं येन तस्य कार्यतावच्छेदकत्वं न स्यादित्यर्थः, वैजात्यस्य संबन्धविधया कारणताघटकत्वं प्रदर्शयति—

तावच्छेदकधर्मविशिष्टनिरूपितकार्यतावच्छेदकसंबन्धेन कार्यवन्निष्ठाभावाऽप्रतियोगित्वस्य कारणताशरीरे निवेश्यत्वादिति, तदप्यसत्- कार्यस्य कार्यतावच्छेदकरूपेणैव निवेशनीयतया तदुपस्थित्यपेक्षाध्रौव्यात् । न च संबन्धसंकोचे प्रमेयत्वेनैव कार्यप्रवेशः संभवतीति वाच्यम्, विजातीयस्वर्गवन्निष्ठाभावप्रतियोगितात्वस्याऽगुरोरवच्छेदकत्वसंभवे विजातीयस्वर्गीयसमायसंबन्धेन प्रमेयवन्निष्ठाभावप्रतियोगितात्वरूपगुरुधर्मावच्छिन्नाभावाऽप्रसिद्धेः ।

एतेन स्वर्गत्वमेव यागजन्यतावच्छेदकम्- अवच्छेदकताघटकसमवायसंबन्धसंकोचेन न व्यभिचार इत्यपि निरस्तम्- तादृशसंबन्धविशेषेणेष्टतावच्छेदक-

---

कार्यतावच्छेदकधर्मेति, कार्यतावच्छेदकधर्मो वैजात्यं तद्विशिष्टो यः स्वर्गस्तन्निरूपितः=तत्प्रतियोगिको यः कार्यतावच्छेदकसंबन्धः समवायस्तेन संबन्धेन स्वर्गादिरूपकार्यवान् यः आत्मा तन्निष्ठाऽभावाप्रतियोगित्वमेवात्र कारणत्वं तथा च वैजात्यस्यात्र संबन्धस्वरूपे प्रवेशोस्तीति न तदुपस्थित्यपेक्षेत्यर्थः । परिहरति- तदप्यसदिति, कार्यवन्निष्ठात्यन्ताभावाप्रतियोगित्वं यत् कारणतास्वरूपमुक्तं तत्र तत्तत्कार्यव्यक्तिनिवेशे शक्त्यानन्त्यं स्यादिति कार्यस्य कार्यतावच्छेदकरूपेण=कार्यत्वेनैव रूपेण निवेशः कर्तव्यः कार्यतावच्छेदकरूपं च वैजात्यमेव तथा च कार्यस्य स्वर्गादेर्वैजात्यरूपेण कारणताशरीरे निवेशे कृते तादृशवैजात्योपस्थितेरपेक्षा प्राप्तैव. उपस्थित्यर्थं च वैजात्ये विधिप्रत्ययशक्तिग्रहापेक्षा प्राप्ता वैजात्यं च तत्तत्कार्यव्यक्तिभेदेन नानैवेति शक्त्यानन्त्यं स्यादेवेत्यर्थः । ननु न कार्यस्य कार्यतावच्छेदकरूपेणोक्तकारणताशरीरे निवेशः कर्तव्यो येनोक्तरीत्या वैजात्यभेदेन शक्त्यानन्त्यं स्यात् किं तु कार्यस्य कारणताशरीरे प्रमेयत्वेनैव रूपेण निवेशः कर्तव्यः संबन्धस्य कार्यतावच्छेदकधर्मविशिष्टेत्यादिना संकोचः कृत एव तत्र प्रमेयत्वस्य स्वरूपसंबन्धेनातिप्रसक्तत्वेप्युक्तकार्यतावच्छेदकेत्यादिसंबन्धेनातिप्रसक्तत्वं नास्ति- एतादृशसंबन्धेन प्रमेयत्ववतः स्वर्गसुखस्य यागजन्यापूर्वविशिष्टात्ममात्रविश्रान्तत्वादित्याशङ्क्याह- न चेति । परिहारमाह- विजातीयेति, कारणत्वं हि तद्वन्निष्ठाभावप्रतियोगिताऽभावरूपमेव- एतादृशाभावप्रतियोगिनी च तद्वन्निष्ठाभावप्रतियोगितैव तदवच्छेदकत्वं च तद्वन्निष्ठाभावप्रतियोगितात्वस्य प्राप्तं तत्र विजातीयस्वर्गवन्निष्ठाभावप्रतियोगितात्वस्यागुरोः कारणताघटकप्रतियोगितावच्छेदकत्वे संभवति सति विजातीयस्वर्गनिरूपितसमवायेन प्रमेयवन्निष्ठाभावप्रतियोगितात्वावच्छिन्नप्रतियोगिताकाभावस्य कारणत्वेन रूपेण स्वीकारो न संभवति- उक्तप्रतियोगितावच्छेदकधर्मस्य उक्तसमवायप्रवेशेन गुरुत्वादिति न कार्यस्य प्रमेयत्वेन रूपेण कारणताशरीरे निवेशः संभवति किं तु कार्यतावच्छेदकरूपेणैव तत्र च शक्त्यानन्त्यदोषः प्रदर्शित एवेत्यर्थः। उक्तपरिहारमन्यत्रातिदिशति- एतेनेति । अवच्छेदकतेति- स्वर्गत्वस्य समवायेन यागजन्यतावच्छेदकत्वमस्तीत्यवच्छेदकताघटकः समवाय एव; स्वर्गत्वस्य संबन्धस्तस्य च समवायस्य संकोचः कर्तव्यः अर्थाद् विजातीयस्वर्गीयसमवायस्य संबन्धत्वं वक्तव्यं तादृशसमवायेन च

विशिष्टस्य प्रमाणान्तराऽवेद्यतया तत्र शक्तिनिश्चयासंभवात्. न हि समभिव्याहृतफलबोधकपदोपस्थाप्यतावच्छेदकत्वरूपोपलक्षणधर्मेण यथा स्वर्गत्वादीनां शक्तिग्रहे भानं तथोपलक्षणीभूततादृशपदोपस्थाप्यतावच्छेदकसंबन्धत्वेन विजातीयस्वर्गनिष्ठसमवायादेरपि तत्र भानसंभवः- स्वर्गपदाच्छुद्धसमवायेनैव स्वर्गत्वविशिष्टस्योपस्थितेः। विशिष्टसमवायेन स्वर्गत्वविशिष्टस्य स्वर्गपदार्थत्वोपगमे लक्षणाप्रसङ्गात्. शुद्धसमवायेन स्वर्गत्वविशिष्टविषयककामनावतोऽनधिकारप्रसङ्गात्।

मीमांसकास्तु "अहरहः संध्यामुपासीत" इत्यादौ नित्यतया निष्फले सन्ध्योपासनादाविष्टसाधनत्वस्यायोग्यत्वेनाऽन्वयासंभवान्नेष्टसाधनत्वं लिङर्थः।

अथ सन्ध्यावन्दनादेरप्यर्थवादोपस्थापितब्रह्मलोकावाप्त्यादिफलसाधनत्वमव्याहतम्, यत्र नित्येऽर्थवादादपि न फलोपस्थितिस्तत्रापि फलाभावनिश्चायकप्रमाणाभावाद् योग्यतासंशयसंभवेन फलसाधनत्वप्रत्ययो लिङ्गादितः संभ-

---

स्वर्गत्वं यागजन्ये एव स्वर्गे संभवति न तु गङ्गास्नानादिजन्यस्वर्गेपीति न व्यभिचार इत्यर्थः। निरासहेतुमाह- तादृशेति, विजातीयस्वर्गीयसमवायसंबन्धेनेष्टतावच्छेदकरूपस्वर्गत्वविशिष्टस्य तादृशविजातीयस्वर्गस्य प्रमाणान्तरावेद्यतया तत्र स्वर्गपदशक्तिनिश्चयाऽसंभवात् तदर्थं यागे प्रवृत्तिर्न स्यात् प्रमाणान्तरवेद्ये एव शक्तिनिश्चयसंभवादित्यर्थः। न हीति- "स्वर्गकामो यजेत" इत्यत्र समभिव्याहृतफलबोधकं यत्स्वर्गपदं तदुपस्थाप्यतावच्छेदकत्वरूपोपलक्षणधर्मेण=उपस्थाप्यतावच्छेदकत्वेन रूपेण यथा स्वर्गत्वादीनां स्वर्गादिपदशक्तिग्रहे भानं भवति तथा तत्र=शक्तिग्रहे उपलक्षणीभूतसमभिव्याहृतपदोपस्थाप्यतावच्छेदकसंबन्धत्वेन विजातीयस्वर्गनिष्ठसमवायस्य भानं न भवतीति न तादृशसमवायेन स्वर्गत्वविशिष्टे स्वर्गपदशक्तिग्रहः संभवतीत्यर्थः। उक्ते हेतुमाह- स्वर्गपदादिति। उक्ते दोषान्तरमाह- विशिष्टेति, यदि विशिष्टसमवायेनोक्तेन स्वर्गत्वविशिष्टे स्वर्गपदस्य शक्तिः स्यात्तदा शुद्धसमवायेन स्वर्गत्वविशिष्टे स्वर्गपदस्य लक्षणैव प्रसज्येत न चैतदिष्टमित्यर्थः। दोषान्तरमप्याह- शुद्धेति, यदि विशिष्टसमवायेनैव स्वर्गत्वविशिष्टस्य स्वर्गपदवाच्यत्वं स्यात्तदोक्तविशिष्टसमवायेनैव स्वर्गत्वविशिष्टविषयककामनावतो यागेऽधिकारः स्यान्न तु शुद्धसमवायेन स्वर्गत्वविशिष्टविषयककामनावतोपि न चैतदिष्टमिति न संबन्धभूतसमवायसंकोचपक्ष उक्तो युक्त इत्यर्थः।

मीमांसकमतमुपदर्शयति- मीमांसका इत्यादिना, सफलस्यैवेष्टसाधनत्वं संभवति न तु निष्फलस्यापीति नित्यकर्मविधायकवाक्यघटकलिङ इष्टसाधनत्वार्थकत्वासंभवान्नेष्टसाधनत्वं लिङर्थः किं तु प्रवर्तकत्वमेव तच्च सर्वत्रैव लिङोर्थः संभवतीत्यर्थः।

शङ्कते- अथेति। अर्थवादश्चात्र "सन्ध्यामुपासते ये च" इत्यादिर्ज्ञेयः। यत्र नित्ये=स्नानादावर्थवादेनापि फलं न प्रतिपाद्यते तत्र फलाभावनिश्चायकप्रमाणाभावाद् योग्यतासंशयसंभवात्=फलयोग्यतासंशयेनापि लिङादितस्तादृशनित्ये फलसाधनत्वज्ञानं संभवत्येवेति लिङ

वत्येव । न च तद्बोधो नोपयोगी– निष्फलतया ज्ञाते चैत्यवन्दनादौ प्रवृत्तिवारणायेष्टसाधनताज्ञानस्य प्रवृत्तिहेतुतावश्यकत्वेन नित्यविधेः प्रवृत्तिनिर्वाहाय तस्य फलसाधनताबोधकताया आवश्यकत्वादितिचेत् ?,

न– " सन्ध्यामुपासते ये च सततं संशितव्रताः " इतिश्रुतौ " सततम् " इतिश्रुतेः कदाचिद् यस्य सन्ध्यावन्दनादिबाधस्तेन स्वीयसन्ध्यावन्दने ब्रह्मलोकावाप्तिफलानुपधानस्य निश्चिततयाऽहरहः सन्ध्यावन्दने ब्रह्मलोकावाप्तिसाधनताबोधनेपि तस्य सन्ध्यावन्दने प्रवृत्त्यऽनिर्वाहात् । यत्र च नित्ये विशिष्य फलबोधकोऽर्थवादादिर्नास्ति तत्र विधिप्रत्ययेनेष्टत्वेन फलसाधनताबोधस्य जननेपीच्छाविषयतावच्छेदकस्वर्गत्वादिरूपविशेषधर्मप्रकारेण फलविषयकतत्साधनताबोधस्याऽनिर्वाहेण प्रवृत्त्यनिर्वाहात् । इष्टसाधनताज्ञानाऽघटितकारणस्तोमा-

---

इष्टसाधनत्वार्थकत्वं युक्तमेवेत्यर्थः । ननु फलयोग्यतासंशयेन जायमानस्तादृशनित्ये लिङादितः फलसाधनत्वबोधो निरुपयोग एव स्याद् निश्चयात्मकबोधस्यैवोपयोगित्वादित्याशङ्कयाह– न चेति । परिहारहेतुमाह– निष्फलतयेति, नित्यविधेरिति पञ्चम्यन्तम् । यदि लिङः फलसाधनत्वम्= इष्टसाधनत्वमर्थो न स्यात्तदा निष्फलतया ज्ञातेपि चैत्यवन्दनादौ प्रवृत्तिः स्यादेव न चैतदिष्टम्, यदा च फलसाधनत्वं लिङर्थस्तदा निष्फलतया ज्ञाते चैत्यवन्दनादौ प्रवृत्त्यापत्तिर्नास्तीति प्रवृत्तिं प्रतीष्टसाधनताज्ञानस्यैव कारणत्वं स्वीकार्यं तथा च नित्यविधितः प्रवृत्त्युपपत्त्यर्थं तस्य=नित्यविधेरपीष्टसाधनताबोधकत्वं स्वीकार्यमेव तथा च यत्र नित्ये आर्थवादिकमपि फलं नास्ति तत्र फलसाधनतायोग्यतासंशयादपि प्रवृत्तिर्लिङादितश्च फलसाधनत्वबोधः संभवत्येवेत्यर्थः ।

अथेत्यादिना शङ्कितं परिहरति– नेति । बाधः=भङ्गः । ब्रह्मलोकावाप्तिफलानुपधानस्य= ब्रह्मलोकप्राप्तिरूपफलाजनकत्वस्य । प्रवृत्त्यऽनिर्वाहादिति– नैरन्तर्येणोपासितसंध्यावन्दनस्य ब्रह्मलोकप्राप्तिरूपफलजनकत्वेपि नैरन्तर्यरहितसंध्यावन्दनस्य तु " सततम् " इतिवचनानुरोधेन ब्रह्मलोकावाप्तिफलजनकत्वं न संभवतीतीष्टसाधनत्वमपि न स्यादिति तस्य तत्र प्रवृत्तिरपि न स्यात् तस्मान्नेष्टसाधनत्वं लिङर्थ इति न नैरन्तर्यरहितसन्ध्यावन्दनादौ प्रवृत्त्यऽनिर्वाह इत्यर्थः । यत्रेति– यत्र च नित्ये=स्नानादौ फलस्य विशेषरूपेण बोधकोर्थवादो नास्ति तत्र यद्यपि विधिप्रत्ययेनेष्टत्वेन सामान्यरूपेण फलसाधनताबोधः संभवत्येव तथापि प्रवृत्तिर्हि विशेषरूपेणैव फलसाधनताज्ञाने जाते भवति न तु सामान्यत इष्टसाधनताज्ञानमात्रेणापि सर्वस्यैव कंचित् प्रतीष्टत्वसंभवादिति तत्रेच्छाविषयतावच्छेदको यः स्वर्गत्वादिरूपविशेषधर्मस्तत्प्रकारेण फलविषयकतत्साधनताबोधो न संभवति– विशेषरूपेण फलबोधकप्रमाणाभावादिति तत्र प्रवृत्तिर्न स्यादेवेति नेष्टसाधनत्वं लिङर्थ इत्यर्थः । इष्टसाधनतेति– इष्टसाधनताज्ञानवर्जितकारणसमूहरूपायाः सन्ध्यावन्दनाभावे नरकं भवतीत्याकारकं यत् सन्ध्यावन्दनाद्यभावगोचरो नरकादिसाधनताज्ञानं तादृशज्ञानाधी-

त्मिकायाः सन्ध्यावन्दनाद्यभावगोचरनरकादिसाधनताज्ञानाधीनतद्गोचरद्वेषघटितसामग्र्या एव सन्ध्यावन्दनादौ प्रवर्तकताया उपगन्तव्यतया नित्यस्थले इष्टसाधनताबोधस्यानुपयोगिताया दुर्वारत्वात् ।

न च "विश्वजिता यजेत" इत्यत्र विशिष्टफलाश्रवणेपि यथा स्वर्गकामपदस्याध्याहारेण तत्समभिव्याहाराद् विशेषरूपावच्छिन्नस्वर्गसाधनताबोधस्तथा नित्यस्थलेपि विशेषधर्मप्रकारकस्वर्गसाधनताबोधसंभवादुक्तप्रवृत्तिसामग्र्यन्तरकल्पनमयुक्तमिति वाच्यम्, बहुवित्तव्ययाऽऽयाससाध्यविश्वजिद्यागे तत्तद्ग्रामपश्वादिफलोद्देशेन प्रवृत्त्यनुपपत्तेस्तद्विधेः स्वर्गफलतात्पर्यनिश्चयात्, सन्ध्यावन्दनादौ चाल्पायाससाध्ये ग्रामादिफलोद्देशेनापि प्रवृत्त्युपपत्तेस्तद्विधेः स्वर्गपरत्वनिश्चयाऽयोगात्, स्वर्गादिफलकामनारहितैर्मुमुक्षुभिरपि सन्ध्यावन्दनाद्याचरणाद् उक्तप्रवृत्तिसामग्रीकल्पनस्यावश्यकत्वाच्च तादृशसामग्रीं विना प्रायश्चित्तादाविष्टाऽसाधने प्रवृत्त्यऽनिर्वाहाच्च ।

न च तत्रापि पापध्वंसरूपेष्टसाधनताज्ञानात् प्रवृत्तिर्निर्वहति, सुखदुःखाभावेतरगोचरेच्छायामिष्टसाधनताज्ञानस्य नियमतोऽपेक्षायां निष्फलपापध्वंसस्येष्ट-

---

नरकादिगोचरो यो द्वेषस्तद्घटिताया एव सामग्र्याः सन्ध्यावन्दनादौ प्रवर्तकत्वं स्वीकार्यं तथा च तादृशसामग्र्यैव नित्ये प्रवृत्तिसंभवे नित्ये इष्टसाधनताबोधो निष्फल एवेति नेष्टसाधनत्वं लिङर्थ इत्यर्थः । नरकादौ द्वेषे सत्येव नरककारणीभूतस्य सन्ध्यावन्दनाद्यभावस्य परिवर्जनाय सन्ध्यावन्दनादौ प्रवृत्तिरिति प्रवर्तकसामग्र्या नरकादिद्वेषघटितत्वमुक्तम् ।

शङ्कते- न चेति । तत्समभिव्याहारात्=अध्याहृतस्वर्गकामपदसमभिव्याहारात् । विशेषरूपावच्छिन्नस्वर्गसाधनताबोधः=विशेषरूपावच्छिन्नो यः स्वर्गस्तत्साधनताबोधः । नित्यस्थलेपि यत्रार्थवादिकमपि फलं नास्ति तत्र स्वर्गकामपदाध्याहारात् स्वर्गत्वादिविशेषधर्मप्रकारकस्वर्गादिसाधनताबोधस्य नानुपपत्तिरिति तत्रापीष्टसाधनताज्ञानात् प्रवृत्तिः संभवत्येवेति नरकादिगोचरद्वेषघटितसामग्र्याः प्रवृत्त्यर्थकल्पनं न युक्तमित्यर्थः । उत्तरमाह- बहुवित्तेति, विश्वजिद्यागे स्वर्गरूपफलावाप्तिं विना प्रवृत्तिर्न संभवतीति तद्विधेः=विश्वजिद्विधितः स्वर्गफले तात्पर्यनिश्चयः संभवति न चैवं नित्यकर्मण्यस्तीति न तत्र फलत्वेन स्वर्गकल्पना संभवति, स्वर्गकामनारहिता अपि सन्ध्यावन्दनं कुर्वन्तीति न तत्र फलत्वेन स्वर्गकल्पना संभवतीति नित्ये प्रवृत्त्यर्थमुक्तद्वेषघटितसामग्र्याः कल्पनमावश्यकमेव, प्रायश्चित्तादौ च प्रवृत्त्यर्थमभ्युक्तसामग्रीकल्पनमावश्यकमेवेत्यर्थः ।

ननु तत्रापि=प्रायश्चित्तेपि पापध्वंसरूपेष्टसाधनत्वमस्त्येवेति तज्ज्ञानेन कथं न प्रवृत्तिः स्यादित्याशङ्क्याह- न चेति । परिहारहेतुमाह- सुखेति, सुखदुःखाभावाभ्यामितरस्येच्छायां नियमेनेष्टसाधनताज्ञानापेक्षा भवति निष्फलस्य पापध्वंसस्य चेष्टत्वं न संभवतीति तादृशपापध्वंस-

स्वासंभवात् । नरकसाधनगोचरद्वेषस्य तद्ध्वंसगोचरेच्छाजनकत्वोपगमेऽस्मत्स-मीहितायामिष्टसाधनत्वज्ञानाऽघटितप्रवृत्तिसामग्र्यामविवादात्, कृतिसाध्यताज्ञा-नसहितेच्छासामान्यसामग्रीतश्चिकीर्षोत्पत्तेर्निष्फलेऽपि सन्ध्यावन्दनादौ निर्वाहेण प्रवृत्त्युपपत्तेः ।

न च नरकानुत्पाद एव प्रायश्चित्तस्य सन्ध्यावन्दनादेश्च फलमितीष्टसाधन-ताज्ञानघटितैव प्रवृत्तिसामग्री. नरकद्वेषवतां च तदनुत्पादे नियमत एवेच्छेति तेषां नित्यसन्ध्यावन्दनाद्यनुष्ठानमुपपद्यते. अन्यैश्च तन्नानुष्ठीयते इतिवाच्यम्, नरकानुत्पादस्य तत्प्रागभावात्मकस्य प्रतियोगिविकल्पग्रासेन फलत्वाऽसंभवात्, अत्यन्ताभावस्य प्रतियोगिविरोधितया कदाचित् पापान्तरेण यस्य नरकदुःखं जनितं जनिष्यते वा तदात्मन्यऽसत्त्वाद् नित्यत्वेन चोभयोः फलत्वासंभवात् ।

---

कारणीभूतप्रायश्चित्ते इष्टसाधनताज्ञानाऽसंभवात् प्रवृत्तिर्न स्यादेव न च पापध्वंसस्य सुखरूपत्वं वा दुःखाभावरूपत्वं वास्तीति नेष्टसाधनत्वं लिङर्थ इति प्रायश्चित्ते प्रवृत्त्युपपत्त्यर्थमुक्तद्वेषघटि-तसामग्रीकल्पनमावश्यकमेवेत्यर्थः । नरकेति– नरकसाधनीभूतपापस्य द्वेषेण तद्ध्वंस=पापध्वं-सगोचरेच्छा जायते तादृशेच्छया च पापध्वंसजनकप्रायश्चित्ते प्रवृत्तिर्भवतीति स्वीकारे त्विष्टसाध-नताज्ञानरहिताया नरकादिद्वेषघटितसामग्र्या उक्तायाः प्रवर्तकत्वं प्राप्तमेवेत्यर्थः । कृतिसाध्य-ताज्ञाने जाते इच्छायां च जातायां सन्ध्यावन्दनादौ चिकीर्षा संभवति तादृशचिकीर्षानन्तरं च निष्फलेऽपि संन्ध्यावन्दनादौ प्रवृत्तिः संभवतीति नेष्टसाधनत्वं लिङर्थ इत्यभिप्रायेणाह–कृतिसाध्य-तेति । निर्वाहेण=चिकीर्षोत्पत्तेर्निर्वाहेणेत्यन्वयः ।

शङ्कते– न चेति । नरकानुत्पादः=नरकप्रागभाव एव तत्र ( प्रायश्चित्तादौ ) फलमिति तादृशफलसाधनताज्ञानात् सन्ध्यावन्दनादौ प्रवृत्तिः संभवत्येवेति नोक्तद्वेषघटितसामग्र्यन्तरक-ल्पनं युक्तमित्यर्थः । तदनुत्पादे=नरकानुत्पादे । तेषाम्=नरकद्वेषवताम् । अन्यैः=नरकद्वेष-रहितैः । तत्=सन्ध्यावन्दनादिकम् । परिहारमाह– नरकानुत्पादस्येति । प्रतियोगीति–सन्ध्या-वन्दनादिना सामान्यतो नरकप्रागभावस्तु न संभवत्यन्यथा सन्ध्योपासकस्य परस्त्रीगमनादि-नापि नरको न स्यात्. नरकविशेषप्रागभावस्य स्वीकारे कस्य नरकस्य प्रागभाव इति प्रति-योग्यवधारणासंभवाद् नरकप्रागभावस्यापि फलत्वं न संभवतीत्यर्थः । नरकात्यन्ताभावस्यापि फलत्वं न संभवतीत्याह– अत्यन्ताभावस्येति, नित्यस्य स्वयमेव सत्त्वान्न फलत्वं-संभवतीत्युक्तम्– नित्यत्वेनेति । यदात्मनि नरकदुःखं जनितं जनिष्यते वा तदात्मनि नरकात्यन्ताभावस्य प्रतियोगिविरोधित्वेनाऽसंभवादेव न फलत्वं संभवति, यदात्मनि च नरकदुःखं न जनितं न वा जनिष्यते तदात्मन्यपि नरकात्यन्ताभावस्य फलत्वं न संभवति सिद्धत्वादि-त्यर्थः । उभयोः=नरकस्य प्रागभावाऽत्यन्ताभावयोः । नित्यत्वेन=स्वयमेव सिद्धत्वेन । साध्य-स्यैव फलत्वसंभवादिति । नरकं हि दुःखरूपमात्मसमवेतं भवतीति तदत्यन्ताभावेनाऽप्यात्मन्येव

योगक्षेमसाधारणसाधनतायाश्च गुरुशरीरत्वेन प्रवृत्त्यनुपयोगित्वात् ।

यदपि " मण्डलीं कुर्यात् " इत्यादिवाक्यप्रामाण्यवारणायेष्टसाधनत्वस्य विध्यर्थत्वमावश्यकमिति, तदपि न— मण्डलीकरणादिजन्यतद्ध्वंसादिरूपफलेपि कदाचित् कस्यचिदिष्टताभ्रमेणेच्छोत्पत्त्या मण्डलीकरणादावपीष्टसाधनत्वाऽबाधेनेष्टसाधनत्वविध्यर्थतामतेपि तद्वाक्यप्रामाण्यस्यावश्यकतयेष्टापत्तेः । 'स्वर्गकामो मण्डलीं कुर्यात्' इतिवाक्यजन्यबोधे च स्वर्गकामनाया मण्डलीकरणादिनिष्ठकर्तव्यत्वप्रयोजकत्वभानेन तदर्थबाधेन तद्वाक्याऽप्रामाण्योपपत्तेः ।

न चेष्टसाधनत्वस्य विधिप्रत्ययार्थत्वानुपगमे " स्वर्गकामो यजेत " इत्यादिवाक्याद् यागादौ प्रवृत्त्यनुपपत्तिः— तत्राभावगोचरद्वेषघटितसामग्र्यसंभवात्, यागाद्यभावस्य नरकादिरूपद्विष्टसाधनत्वाभावात्, इष्टसाधनत्वबोधकमानाभावेन

---

भवितव्यमित्युक्तम्— तदात्मनीति । योगेति— अप्राप्तस्य प्राप्तिर्योगः, प्राप्तस्य परिरक्षणं क्षेम तत्र यागादौ स्वर्गादियोगसाधनता सन्ध्यावन्दनादौ च नरकानुत्पादस्य क्षेमरूपपरिरक्षणसाधनतेत्युभयसाधारणेष्टसाधनत्वस्य विध्यर्थत्वं प्रवृत्त्युपयोगित्वं च न संभवति— गुरुशरीरत्वादिति प्रवर्तकत्वमेव लिङर्थो न त्विष्टसाधनत्वमित्यर्थः ।

शङ्कते— यदपीति । " मण्डलीं कुर्यात् " इति बौद्धानां वाक्यं ते हि नरकनिवृत्त्यर्थं मिलित्वा मण्डलाकारेण च स्थित्वा— कामम्युपासनां कुर्वन्तीति तेषां मतम् । तत्र यदीष्टसाधनत्वं विध्यर्थो न स्यात्तदा " मण्डलीं कुर्यात् " इतिवाक्यस्यापि प्रवर्तकत्वस्याऽव्याहतत्वात् प्रामाण्यं स्यादेव न च प्रामाण्यमिष्टमितीष्टसाधनत्वं विध्यर्थस्तथा च मण्डलीकरणादाविष्टसाधनत्वस्य बाधादस्य वाक्यस्य प्रामाण्यापत्तिर्नास्तीत्यर्थः । परिहरति—तदपि नेति, मण्डलीकरणजन्यं यत् पापादिध्वंसरूपं फलं तत्रापि कस्यचिद् यदीष्टताभ्रमेणेच्छा स्यात्तदा तज्जनकमण्डलीकरणादाविष्टसाधनत्वमबाधितं स्यादेवेतीष्टसाधनत्वस्य विध्यर्थत्वस्वीकारपक्षेपि " मण्डलीम् " इतिवाक्यप्रामाण्यस्यावश्यकतया तत्प्रामाण्यापत्ताविष्टापत्तिरेवास्तीति न तद्वाक्यप्रामाण्यवारणायेष्टसाधनत्वस्य विध्यर्थत्वस्वीकारावश्यकतेत्यर्थः । स्वर्गकामेति— यदि 'स्वर्गकामो मण्डलीं कुर्यात्' इत्युच्येत तदैतादृशवाक्यजन्ये 'मण्डलीकरणेन स्वर्गं संपादयेत्' इतिबोधे मण्डलीकरणनिष्ठा या कर्तव्यता तादृशकर्तव्यताप्रयोजकत्वं स्वर्गकामनायां भासते तदर्थबाधेन= स्वर्गकामनायां च मण्डलीकरणादिनिष्ठकर्तव्यत्वप्रयोजकत्वं वास्तविकं नास्त्येवेति बाधितार्थबोधकत्वात् 'स्वर्गकामो मण्डलीं कुर्यात्' इतिवाक्यस्य त्वऽप्रामाण्यं सुघटमेवेति नेष्टसाधनत्वं विध्यर्थ इत्यर्थः ।

शङ्कते— न चेति, इष्टसाधनत्वज्ञानं विना प्रवृत्तेरसंभवादितिभावः, ननु यागे उक्तया तदभावगोचरनरकादिसाधनताज्ञानाधीनतद्गोचरद्वेषघटितसामग्र्यैव प्रवृत्तिर्भविष्यतीत्याशङ्क्याह—तत्रेति, तत्र=यागादिस्थले । सामग्र्यभावे हेतुमाह—यागाद्यभावस्येति, यागाऽकरणेन नरको न भवतीति

तज्ज्ञानघटितसामग्र्या अपि भवन्मते दुर्घटत्वादिति वाच्यम्, इष्टसाधनत्वस्य विध्यर्थताविरहेपि 'स्वर्गाऽसाधनं न स्वर्गकामनाधीनकृतिसाध्यम्' इतीतरबाधबलात् स्वर्गकामकृतिसाध्यतान्वयितावच्छेदकतया स्वर्गसाधनत्वस्योक्तविधिजन्यबोधे भानाद् यागादाविष्टसाधनताज्ञानादेव प्रवृत्तिनिर्वाहात् । इत्थं च सन्ध्यावन्दनादौ तत्कालावच्छिन्नशौचादिकमेवाऽधिकारो न तु फलकामनापि, अतः फलकामनाशून्यस्यापि शौचादिमतः सन्ध्यावन्दनाकरणं प्रत्यवायजनकम् । फलकामनायास्तत्राधिकारत्वे तच्छून्यस्याऽनधिकारितया तदकरणं न प्रत्यवायमावहेत् ।

न च मुमुक्षापवादेन स्वर्गादिरूपफलकामनायाः कदाचिदसंभवेपि नरकाभावरूपफले नियमत एवेच्छा संभवतीति न शौचादिमतः सन्ध्यावन्दनाद्यऽकरणस्य प्रत्यवायजनकत्वानुपपत्तिरिति वाच्यम्, नरकाद्यनुपस्थित्यैव तदभावाऽज्ञानेन तदिच्छाविरहोपपत्तेरित्याहुः ।

---

स्पष्टमेव, ननु यागादौ मानान्तरजन्येष्टसाधनत्वज्ञानेन प्रवृत्तिर्भविष्यतीत्याशङ्क्याह— इष्टसाधनत्वबोधकेति । तज्ज्ञानघटितसामग्र्याः=प्रमाणान्तरजन्येष्टसाधनत्वज्ञानघटितसामग्र्या अप्यसंभवेनोक्तरीत्या यागादौ प्रवृत्त्यनुपपत्तिः प्राप्तेति प्रवृत्त्युपपत्त्यर्थमिष्टसाधनत्वस्य विध्यर्थत्वं स्वीकार्यमिति पूर्वपक्षार्थः । इष्टसाधनत्वस्य विध्यर्थताविरहेपि यागादाविष्टसाधनत्वज्ञानं संभवत्येवेत्यभिप्रायेणोत्तरमाह— इष्टसाधनत्वस्येति, स्वर्गकामनाजन्यकृतिसाध्यं स्वर्गसाधनमेव संभवति न तु स्वर्गाऽसाधनमपीतीतरस्य=स्वर्गासाधनस्य बाधबलात्=स्वर्गकामकृतिसाध्यत्वबाधाद् उक्तविधिजन्यबोधे=" स्वर्गकामो यजेत " इति विधिवाक्यजन्यबोधे स्वर्गकामकृतिसाध्यो यो यागस्तन्निष्ठा या स्वर्गकामकृतिसाध्यता तादृशसाध्यतान्वयितावच्छेदकतया स्वर्गसाधनत्वस्य भानं भवति— स्वर्गसाधनस्यैव स्वर्गकामकृतिसाध्यत्वेन स्वर्गसाधनत्वस्य स्वर्गकामकृतिसाध्यतावच्छेदकत्वात् तथा चेष्टभूतस्वर्गसाधने यागादावर्थादेवेष्टसाधनत्वज्ञानं जायते तेन च तत्र प्रवृत्तिर्निर्वहतीति नेष्टसाधनत्वस्य वि° °त्वस्वीकारापेक्षेत्यर्थः । मीमांसकः स्वसिद्धान्तान्तरमाह— इत्थमिति । इत्थम्=इष्टसाधनत्वस्य विध्यर्थत्वास्वीकारेण । फलकामनाया अनधिकारत्वस्य फलमाह—अत इति, यदि फलकामनाप्यधिकारः स्यात्तदा फलकामनाशून्यस्य तदकरणम्=सन्ध्यावन्दनाऽकरणं प्रत्यवायजनकं न स्यादित्याह—फलकामनाया इति ।

फलकामनाया अपि सन्ध्यावन्दनाद्यधिकारत्वे दोषापत्तिरुक्ता नास्तीत्यभिप्रायेणाशङ्कते—न चेति, मुमुक्षोः स्वर्गादिफलकामना न भवतीति मुमुक्षापवादेन=मुमुक्षाबाधेन स्वर्गादिरूपफलकामनाया असंभवेपि मुमुक्षोरपि नरकाभावरूपफले तु नियमेनेच्छा संभवत्येवेति नरकाभावरूपफलकामनायाः सन्ध्यावन्दनाद्यधिकारत्वं स्वीकार्यं तथा च शौचादिमतो नरकाभावरूपफलकामनावत्त्वात् सन्ध्यावन्दनाऽकरणं प्रत्यवायजनकं स्यादेवेत्यर्थः । उत्तरमाह— नरकाद्यनुपस्थित्यैवेति, " अहरहः सन्ध्यामुपासीत " इत्येवं विधिवाक्यं न चात्र नरकाद्युपस्थापकं पदमस्तीति नरकोपस्थित्यभावान्न नरकाभावज्ञानम् ( नरकाभावसाधनता ज्ञानं वा ) संभवतीति

तदसत्- ध्वंसादेरत्यन्ताभावविरोधिताया निष्प्रामाणिकतया नरकात्यन्ताभावस्यैव प्रायश्चित्तसन्ध्यावन्दनादिफलत्वसंभवादिष्टसाधनताज्ञानाऽघटितप्रवृत्तिसामग्र्या असिद्धेः। कारणान्तरकल्पनापेक्षया गुरुशरीरक्षेमसाधारणसाधनताज्ञानस्यैव सर्वत्र प्रवृत्तिहेतुतेति। 'दण्डाद् घटः' इत्यादिप्रतीतिबलात् स्वरूपसंबन्धविशेषरूपस्य क्षेमसाधारणसाधनत्वस्योपगमे तच्छरीरगौरवस्याभावाच्चेति। नित्यस्थले शौचादिफलकामनयोरुभयोरधिकारत्वेपि प्रत्येकमेव तयोरधिकारता न तु मिलितयोरिति फलकामनाशून्यस्यापि शौचादिमतोऽधिकारितया तस्यापि नित्याकरणं प्रत्यवायजनकम्।

अथ वा सन्ध्यावन्दनाकरणेन प्रत्यवायजननेऽधिकारैकदेशशौचादिमत्त्वमेव सहकारि न तु फलकामनापि तदसत्त्वेपि प्रत्यवायोत्पत्तेः सर्वसिद्धत्वात्। एतेन

---

तदिच्छापि=नरकाभावरूपफलेच्छापि न संभवतीति न नरकाभावफलकामनाया अधिकारत्वं संभवति किं तु शौचादिकस्यैवेति मीमांसका आहुरित्यर्थः।

प्रदर्शितमीमांसकमतं परिहरति- तदसदिति, यत्र तद्ध्वंसो भवति तत्र तदत्यन्ताभावोपि संभवत्येवेति नरकात्यन्ताभाव एव प्रायश्चित्तसन्ध्यावन्दनादीनां नित्यानां फलं तादृशफलस्येष्टत्वादिष्टसाधनत्वं सन्ध्यावन्दनादौ प्राप्तमेवेतीष्टसाधनताज्ञानेनैव प्रवृत्तिः संभवतीति नेष्टसाधनताज्ञानरहिता प्रवृत्तिसामग्री संभवतीति न मीमांसकमतं युक्तं तथा चेष्टसाधनत्वं विध्यर्थो भवत्येवेत्यर्थः। कारणान्तरेति- कारणान्तरस्य=मीमांसकोक्तद्वेषघटितसामग्र्याः कल्पनापेक्षया गुरुशरीरस्यापि क्षेमसाधारणस्य साधनताज्ञानस्य प्रवृत्तिहेतुत्वं युक्तमेव कारणान्तरकल्पने परमगौरवादित्यन्वयः, गुरुत्वं च पूर्वं प्रतिपादितमेव, किं च फलोपधायकत्वस्वरूपे एव क्षेमसाधारणसाधनत्वे गौरवमस्ति न तु स्वरूपयोग्यतारूपेपीत्याह-दण्डादिति, 'दण्डाद् घटः' इत्यत्र दण्डत्वावच्छेदेन घटसाधनत्वं प्रतीयते न च दण्डत्वावच्छेदेन फलोपधायकत्वरूपं साधनत्वमस्ति- अरण्यस्थदण्डे व्यभिचारादिति दण्डत्वावच्छेदेन स्वरूपसंबन्धविशेषरूपम्=स्वरूपयोग्यतारूपमेव साधनत्वं स्वीकार्यम्- अरण्यस्थदण्डादावपि स्वरूपयोग्यतारूपसाधनत्वस्य सत्त्वादित्यर्थः। तच्छरीरगौरवस्य=स्वरूपसंबन्धस्वरूपसाधनत्वशरीरे गौरवस्याभावाच्चेत्यर्थः। नित्यस्थले इति, प्रत्येकमिति- शौचे पृथगधिकारत्वं फलकामनायां च पृथगधिकारत्वं तथा च फलकामनाशून्यस्यापि शौचयुक्तस्याधिकारितया नित्याकरणं तस्यापि प्रत्यवायं जनयत्येवेत्यर्थः। यदि शौचफलकामनयोरुभयोरेकमेवाधिकारत्वं व्यासक्तं स्यात्तदा फलकामनारूपाधिकाराभावे फलकामनारहितस्य शौचयुक्तस्याप्यधिकारित्वाभावप्रसक्त्या तस्य नित्याकरणं प्रत्यवायजनकं न स्यादिति शौचफलकामनयोः प्रत्येकमेवाधिकारता स्वीकृतेति भावः।

पक्षान्तरमाह- अथ वेति, अत्र पक्षेपि शौचफलकामनयोरुभयोः प्रत्येकमेवाधिकारत्वं तथाप्यधिकारैकदेशभूतं शौचादिमत्त्वं यत् तदेव प्रत्यवायजनने सहकारि न तु फलकामनापि- तदसत्त्वेपि=फलकामनाया असत्त्वेपि प्रत्यवायोत्पत्तेः सर्वसिद्धत्वात् तथा च फलकामनाया

संवलिताधिकारानुपगमे शौचादिशून्यफलकामनावतो दैवान्नित्याकरणं प्रत्यवायं जनयेदिति निरस्तम् । अत एव नित्यकाम्यजयन्तीव्रतादौ फलकामनाया अधिकारत्वस्य सर्वसिद्धतया शौचादिमतः फलकामनारहितस्य तदकरणं प्रत्यवायं जनयति ।

अपरे तु 'चैत्यं न वन्देत' इतिवाक्यप्रामाण्यानुरोधेनेष्टसाधनत्वस्य विध्यर्थत्वमावश्यकम्, कृतिसाध्यत्वादिमति चैत्यवन्दनादौ कृतिसाध्यत्वाद्यभावस्य नञा बोधने तद्वाक्यस्याप्रामाण्यापत्तेः । कृतिसाध्यतायाश्च विधित्वं निर्युक्तिकम्— तदनङ्गीकारेपि कृतेराख्यातसामान्यार्थतया विधिप्रत्ययस्यापि तदर्थकतया 'पचेत' इत्यादौ कृतेः पाकानुकूलत्वभानस्यावश्यकतयाऽर्थात् पाका-

---

अभावेपि प्रत्यवायोत्पत्तिसहकारिणः शौचादिमत्त्वस्य सत्त्वेन प्रत्यवायोत्पत्तेर्नानुपपत्तिरित्यन्वयः । एतेनेति— यत् केनाप्युक्तं संवलिताधिकारानुपगमे=शौचफलकामनोभयव्यासक्ताधिकाराऽस्वीकारे शौचादिशून्यस्य फलकामनावतोप्यधिकारित्वात् तस्यापि नित्याकरणं प्रत्यवायजनकं स्यात् न चैतदिष्टमित्युभयसंवलितः ( व्यासक्तः ) अधिकारः स्वीकार्यस्तया च शौचाभावेनाधिकारित्वाभावान्न शौचशून्यस्य नित्याकरणं प्रत्यवायजनकमिति तन्निरस्तं यतः संवलिताधिकारानुपगमेपि शौचादिशून्यस्य फलकामनावतोपि नित्याकरणं न प्रत्यवायजनकं भवति— प्रत्यवायोत्पत्तिसहकारिणः शौचादिमत्त्वस्यैवाभावादित्यर्थः। एतेन=शौचादिमत्त्वस्य प्रत्यवायोत्पत्तिसहकारित्वस्वीकारेणेत्यर्थः । अत एव=शौचादिमत्त्वस्य प्रत्यवायोत्पत्तिसहकारित्वादेव, तदकरणम्=नित्यकाम्यजयन्तीव्रताद्यकरणम् । जयंतीव्रतस्य नित्यत्वात् फलकामनायाः असत्त्वेपि प्रत्यवायोत्पत्तिसहकारिणः शौचस्य सत्त्वेन प्रत्यवायोत्पत्तिरुपपद्यत इत्यर्थः ।

मतान्तरं प्रदर्शयति— अपरे त्विति, 'चैत्यं न वन्देत' इतिवाक्यस्य प्रामाण्यमिष्टं तत्रेष्टसाधनत्वस्य विध्यर्थत्वे 'चैत्यवन्दनमिष्टसाधनत्वाभाववत्' इत्येवं बोधजनकत्वेन प्रामाण्यमुपपद्यते यदि चेष्टसाधनत्वं न विध्यर्थः किं तु कृतिसाध्यत्वमेव तदा चैत्यवन्दने कृतिसाध्यत्वस्य सत्त्वेपि नञा कृतिसाध्यत्वाभावबोधने बाधितस्य कृतिसाध्यत्वाभावस्य बोधनेन 'चैत्यं न वन्देत' इतिवाक्यस्याऽप्रामाण्यमेवाऽऽपद्येतेत्यर्थः । कृतिसाध्यताया विधित्वम्=विध्यर्थत्वमुपपद्यतेपि नेत्याह— कृतिसाध्यतायाश्चेति । निर्युक्तिकत्वमुपपादयति— तदनङ्गीकारेपीति, कृतिसाध्यताया विध्यर्थत्वानङ्गीकारेप्याख्यातमात्रस्य कृतौ शक्तिः स्वीकृतेति विधिप्रत्ययस्यापि कृत्यर्थकत्वम्=कृतौ शक्तिः प्राप्तैव तथा 'पचेत' इत्यादौ प्रत्ययार्थकृतौ पाकानुकूलत्वं भासत एवेति स्वीकार्यम्—कृतेः क्रियाविशेषानुकूलत्वस्वरूपत्वादिति कृतौ पाकानुकूलत्वे प्राप्ते पाकेऽर्थादेव कृतिसाध्यत्वं प्राप्नोत्येव न चार्थलभ्यस्य शक्यत्वं युक्तमिति न कृतिसाध्यताया विध्यर्थत्वं सयुक्तिकमित्यर्थः । नन्विष्टसाधनत्वस्य विध्यर्थत्वे विधिप्रत्ययेन पाकादाविष्टसाधनत्वं बोधनीयं तादृशेष्टसाधनताज्ञानेन च पाकादौ प्रवृत्तिः स्यादिति विधिवाक्यजन्यशाब्दबोधस्य साक्षात् प्रवर्तकत्वं

दावपि कृतिसाध्यताभानात् । कृतिसाध्यताया विधित्वेपि तत्तत्कालतत्तत्पुरुषविशेषविशेषितकृतिसाध्यताविषयकस्य प्रवर्तकज्ञानस्य शाब्दबोधोत्तरमेव स्वीकरणीयतया विधिवाक्यजशाब्दबोधतः साक्षात् प्रवृत्त्यऽनिर्वाहात् ।

अस्तु वा साध्यतासंबन्धेनैवाख्यातसामान्यार्थकृतेः क्रियायां विधिप्रत्ययजन्यबोधे भानम्, प्रवर्तिका चिकीर्षापि साध्यतासंबन्धेन कृतिप्रकारिका क्रियेच्छैव । न च लडादिस्थले आख्यातार्थकृतेः क्रियाविशेष्यतयैव भानमितिव्युत्पत्तेः क्लृप्तत्वात् 'पचेत' इत्यादौ न तस्याः क्रियाविशेषणतया भानसंभव इतिवाच्यम्, व्युत्पत्तिवैचित्र्येण तदुपपत्तेः, शक्त्यऽभेदेपि व्युत्पत्तिभेदे बाधकाभावात्, अत एव प्राचीनैराख्यातार्थस्यैव कृतेः कर्मप्रत्ययस्थले क्रियाविशेषणतया

---

न स्यादित्याशङ्क्याह— कृतिसाध्यताया इति, कस्य चिदेव कस्मिंश्चिदेव काले किंचित् कृतिसाध्यं भवति न तु सर्वस्य सर्वदा सर्वमिति कृतिसाध्यताया विध्यर्थत्वस्वीकारेपि तत्तत्कालतत्तत्पुरुषविशेषितकृतिसाध्यताविषयकं यत्प्रवर्तकं ज्ञानं तद् विधिवाक्यजन्यशाब्दबोधोत्तरमेव संभवतीति विधिवाक्यजन्यशाब्दबोधानन्तरं जायमानेन कृतिसाध्यताविषयकेनोक्तविशेषज्ञानेन प्रवृत्तिः स्यादिति विधिवाक्यजशाब्दबोधस्य त्वन्मतेपि साक्षात् प्रवर्तकत्वं नैव संभवतीत्यर्थः ।

ननु विधिवाक्यजन्यबोधेपि कृतिसाध्यत्वं भासते एव न तु विधिवाक्यजशाब्दबोधोत्तरमेवेति नियम इत्याह— अस्तु वेति, क्रियायां साध्यत्वमस्तीति तादृशसाध्यत्वसंबन्धेनाख्यातार्थकृतिविशिष्टायाः क्रियाया विधिवाक्यजशाब्दबोधे भवतु भानं किं च प्रवर्तिका या चिकीर्षा सापि साध्यतासंबन्धेन कृतिप्रकारिका क्रियेच्छैव भवतु=क्रियायां साध्यतास्ति तादृशसाध्यतासंबन्धेन कृतिविशिष्टा या क्रिया तादृशक्रियेच्छैव प्रवर्तिका भवत्विति न ज्ञानान्तरमुक्तं विधिप्रत्ययजन्यशाब्दबोधत्तरं जायमानं प्रवर्तकं कल्पनीयम्. एवमपि कचित् पाकादाविव सर्वत्रैव यागपाकादौ लौकिकप्रमाणादेव कृतिसाध्यताबोधो निर्वहतीति न कृतिसाध्यत्वं विध्यर्थ इत्यग्रिमेणान्वयः । मध्ये शङ्कते— न चेति, 'पचति' इत्यादौ 'पाकानुकूलकृतिमान्' इत्याकारकबोधोदयात् कृतेः क्रियाविशेष्यत्वेन भानं भवतीति 'पचेत' इत्यादौ कथं तस्याः=कृतेः साध्यतासंबन्धेन क्रियायां विशेषणत्वं त्वदुक्तं सङ्गच्छेतेत्यर्थः । उत्तरमाह— व्युत्पत्तीति, व्युत्पत्तिवैचित्र्येण=बोधवैचित्र्यप्रभावेन 'पचेत' इत्यादौ कृतेः क्रियाविशेषणत्वमप्युपपद्यते एवेत्यर्थः । शक्त्यभेदेपीति— यद्यपि 'पचति' 'पचेत' इत्युभयत्रैवाख्यातस्याख्यातत्वेन रूपेण कृतौ शक्तिरस्तीति शक्तिभेदः='पचति' इत्यत्राख्यातस्य कृतावन्यरूपा शक्तिः 'पचेत' इत्यत्र चाख्यातस्य कृतौ भिन्नरूपा शक्तिरिति शक्तिभेदो नास्ति तथापि बोधभेदे बाधकं किमपि नास्तीति लडादिस्थले कृतेः क्रियाविशेष्यतया भानं भवति लिङादिस्थले च क्रियाविशेषणतया भानं भवतीत्यर्थः । अत एव=शक्त्यभेदेपि व्युत्पत्तिभेदे बाधकाभावादेव कर्मप्रत्ययस्थलेपि कृतेः क्रियाविशेषणतया भानं भवति—पाकानुकूलकृतिजन्यपाकजन्यविक्लित्त्याश्रय इत्यादिरित्याह—

भानमुपेयते । एवं च क्वचित् पाकादाविव सर्वत्रैव यागपाकादौ लौकिकप्रमाणादेव कृतिसाध्यताबोधो निर्वहतीति वदन्ति ।

"न कलञ्जं भक्षयेत्" इत्यादिनिषेधविधेः प्रामाण्यानुरोधतो बलवदनिष्टाननुबन्धित्वस्य विध्यर्थप्रवेशः– निषिद्धेपि कलञ्जभक्षणादौ तृप्त्यादिरूपेष्टसाधनत्वसत्त्वेन तदभावस्य नञा बोधने प्रामाण्यानुपपत्तेः, बलवदनिष्टाऽननुबन्धित्वस्य विधित्वे तस्यैवाभावो बलवदनिष्टनरकानुबन्धिनि तत्तत्कर्मण्यऽबाधितो बोध्यते इति तत्प्रामाण्योपपत्तिः ।

बलवदनिष्टाननुबन्धित्वस्येष्टसाधनताविशेषणतया वाच्यत्वे विशिष्टाभावस्यैव शाब्दबोधे भानम्, सोपि विशेषणाभावायत्तोऽबाधितः कलञ्जभक्षणादौ. विशिष्टाभावबोधानन्तरमेव तल्लिङ्गकानुमानगम्यो बलवदनिष्टानुबन्धित्वरूपस्तदन-

---

भत एवेति । प्राचीनैरिति– प्राचीनमते कर्मप्रत्ययस्थलेपि कृतिराख्यातार्थ एव तादृशाख्यातार्थभूतकृतेः क्रियाविशेषणत्वमिति दृष्टान्तः, नवीनमते तु कर्मप्रत्ययस्थले कृतिस्तृतीयार्थो भवति न त्वाख्यातार्थ इति तृतीयायाः कृतौ शक्तिर्भिन्नैवेति शक्तिभेदे प्राप्ते लडादिस्थले आख्यातार्थकृतेः क्रियाविशेष्यत्वेपि कर्मप्रत्ययस्थले तृतीयार्थकृतेः क्रियाविशेषणत्वे न किंचिद्वैषम्यापत्तिरिति भावः इदं च तृतीयाकारकारम्भे द्रष्टव्यम् । उपसंहरति– एवमिति, यथा क्वचित् पाकादौ लौकिकप्रमाणात्=प्रत्यक्षानुमानादितः कृतिसाध्यताबोधो भवति– चैत्रस्य समर्थत्वे तत्समवेतकृतिसाध्यत्वस्य पाकादौ बोधोदयात् तथा सर्वत्रैव यागपाकादौ लौकिकप्रत्यक्षादिप्रमाणेन कृतिसाध्यताबोधो निर्वहत्येवेति न कृतिसाध्यत्वं विध्यर्थ इत्यपरे वदन्तीत्यन्वयः ।

नेति । विपक्षे बाधकमाह– निषिद्धेपीति, यदि बलवदनिष्टाननुबन्धित्वम्=बलवदनिष्टाजनकत्वं विध्यर्थो न स्यात्तदा कलञ्जभक्षणेपि तृप्त्यादिरूपेष्टसाधनत्वमस्त्येवेति तदभावस्य=तादृशेष्टसाधनत्वाभावस्य नञा बोधने बाधितार्थप्रतिपादकत्वादुक्तवाक्यस्य प्रामाण्यं नोपपद्येत, इष्टं च प्रामाण्यमित्यर्थः । स्वपक्षे साधकमाह– बलवदिति, बलवदनिष्टाननुबन्धित्वस्य विधित्वे=विध्यर्थत्वे तु तस्य=बलवदनिष्टाननुबन्धित्वस्यैवाभावो नञा बलवदनिष्टरूपनरकादिजनके कलञ्जभक्षणादिकर्मणि बोध्यते तादृशकर्मणि बलवदनिष्टाननुबन्धित्वाभावस्याबाधित एवेत्यऽबाधितार्थबोधकत्वात् तत्=तस्योक्तवाक्यस्य प्रामाण्यमुपपद्यते, एवमन्यत्रापि निषेधवाक्यानां प्रामाण्योपपत्तिरित्यर्थः ।

मतान्तरमुपदर्शयति– बलवदनिष्टाननुबन्धित्वस्येति, यदि बलवदनिष्टाननुबन्धित्वस्येष्टसाधनताविशेषणतया विधिप्रत्ययवाच्यत्वं नाम बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वस्य विधिप्रत्ययवाच्यता तदा "न कलञ्जं भक्षयेत्" इत्यादौ विशिष्टाभावस्यैव बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वाभावस्यैव शाब्दबोधे भानं संभवति– कलञ्जभक्षणं बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वाभाववदित्यर्थः । सोपीति– कलञ्जभक्षणादौ तृप्त्यादिरूपेष्टसाधनत्वमस्त्ये

नुबन्धित्वाभावः । प्रवर्तकमिव निवर्तकमपि ज्ञानं श्रुतिवाक्यात् परम्परयैव न तु साक्षात् ।

एतन्मते च न तादृशाभावस्य शाब्दबोधे भानम्— पदार्थैकदेशतयेतरविशेषणतयोपस्थितत्वेन नञर्थविशेषणतयाऽनिष्टाननुबन्धित्वाऽन्वयासंभवात् । वस्तुतो विशिष्टशक्तौ विशेष्यविशेषणभावे विनिगमनाविरहात् पृथगेव बलवदनिष्टाननुबन्धिताया वाच्यत्वम् ।

न च बलवदनिष्टाननुबन्धित्वस्येष्टसाधनत्वविशेष्यत्वे विधिवाक्यतः क्रिया-

वेत्युक्तविशिष्टाभावो न विशेष्याभावप्रयुक्तः किं तु विशेषणाभावायत्तः=विशेषणाभावप्रयुक्तोऽबाधित एव— कलञ्जभक्षणादौ नरकादिरूपबलवदनिष्टानुबन्धित्वाभावस्य सत्त्वादेवेति विशिष्टाभावबोधानन्तरम् ' यत्र विशिष्टाभावो भवति तत्र विशेषणाभावो भवत्येव ' इतिरीत्या तल्लिङ्गकानुमानगम्यः=विशिष्टाभावलिङ्गकानुमानगम्यस्तदननुबन्धित्वाभावः= बलवदनिष्टाननुबन्धित्वाभावोऽस्ति स च बलवदनिष्टानुबन्धित्वरूपः=बलवदनिष्टजनकत्वरूप इत्यन्वयः । कलञ्जभक्षणे विशेष्यस्य तृप्त्यादिरूपेष्टसाधनत्वस्य सत्त्वाद्विशिष्टाभावस्य सत्त्वं विशेषणाभावाधीनमेवास्ति न तु विशेष्याभावाधीनं वोभयाभावाधीनं वा. विशिष्टस्य च विध्यर्थत्वेन नञा विशिष्टाभावस्यैव प्रतीतिर्भवतीति विशेषणाभावस्य=बलवदनिष्टाननुबन्धित्वाभावस्य प्रतीतिस्तु विशिष्टाभावाधीनास्तीति विवेकः । प्रवर्तकमिति— यथा " यजेत " इत्यादौ श्रुतिवाक्यादिष्टसाधनत्वज्ञानं तेन च चिकीर्षारूपं प्रवर्तकं ज्ञानं जायते न तु साक्षाच्छ्रुतिवाक्यात् तथा "न भक्षयेत्" इत्यादावपि श्रुतिवाक्यात्तु बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वाभावज्ञानं जायते तेन च द्विष्टसाधनत्वादिज्ञानरूपं निवर्तकं ज्ञानं जायते न तु साक्षाच्छ्रुतिवाक्यादित्यर्थः ।

प्रदर्शितमतं विविनक्ति— एतदिति, एतन्मते=बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वस्य विध्यर्थत्वमते तादृशाभावस्य=बलवदनिष्टाननुबन्धित्वाभावस्य शाब्दबोधे भानं न भवतीत्यर्थः । भानाभावे हेतुमाह— पदार्थैकेति, विशिष्टस्य विध्यर्थत्वेन बलवदनिष्टाननुबन्धित्वं हीष्टसाधनत्वविशेषणतयोपस्थितं भवत्यत एव पदार्थैकदेशोपि भवति तथा चेष्टसाधनत्वे विशेषणतां प्राप्तस्य बलवदनिष्टाननुबन्धित्वस्य स्वप्रतियोगिकत्वसंबन्धेन नञर्थाभावे विशेषणत्वं न संभवति नापि नञर्थाभावस्य बलवदनिष्टाननुबन्धित्वविशेषणत्वं संभवति बलवदनिष्टाननुबन्धित्वस्य पदार्थैकदेशत्वात् " पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेन " इतिव्युत्पत्तिविरोधादिति नोक्तमते बलवदनिष्टाननुबन्धित्वाभावस्य शाब्दबोधे भानं संभवति किं तु बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वाभावस्यैव भानं संभवतीत्यर्थः । स्वाभिप्रायमाह—वस्तुत इति ।

ननु बलवदनिष्टाननुबन्धित्वेष्टसाधनत्वयोर्विशेषणविशेष्यभावेऽस्ति विनिगमकमित्यभिप्रायेणाशङ्कते— न चेति, यदि बलवदनिष्टाननुबन्धित्वस्येष्टसाधनत्वविशेष्यत्वं स्यादिष्टसाधनत्वस्य च बलवदनिष्टाननुबन्धित्वे विशेषणत्वं स्यात्तदैकत्र विशेषणस्यान्यत्र विशेषणत्वस्य व्युत्पत्तिविरुद्ध-

विशेष्यकेष्टसाधनताज्ञानासंभवात् क्रियागोचरचिकीर्षाद्यर्थं विधिवाक्यजशाब्द-बोधोत्तरमिष्टसाधनत्वप्रकारकक्रियाविशेष्यकज्ञानान्तरं कल्पनीयमिति तदकल्पनप्रयुक्तलाघवमेव बलवदनिष्टाननुबन्धित्वस्य विशेषणत्वे विनिगमकमिति वाच्यम्, क्रियायां बलवदनिष्टाऽसाधनत्वज्ञानस्यापि तद्गोचरेच्छाहेतुतया बलवद्-निष्टाऽसाधनत्वस्येष्टसाधनत्वविशेषणत्वमते क्रियाविशेष्यकतत्प्रकारकज्ञानान्तरस्य कल्पनीयतया मतद्वये कल्पनासाम्यात् ।

यदि च बलवदनिष्टसाधनत्वज्ञानमेव द्वेषसामग्रीत्वेनेच्छाप्रतिबन्धकं न तु तद्-

---

त्वेनेष्टसाधनत्वस्य क्रियायां विशेषणत्वेन विधिवाक्यजबोधे भानं न स्यात्– विधिवाक्यजबोधे इष्टसाधनत्वस्य बलवदनिष्टाननुबन्धित्वविशेषणत्वेन भानस्य प्राप्तत्वात् प्रवृत्तिश्च तत्क्रियाविशेष्यकेष्टसाधनत्वप्रकारकज्ञानादेव संभवतीति क्रियाविषयकचिकीर्षाद्यर्थं विधिवाक्यजशाब्दबोधोत्तरमिष्टसाधनत्वप्रकारकक्रियाविशेष्यकं ज्ञानं कल्पनीयम्=प्रमाणान्तरेणोत्पादनीयमित्येतादृशकल्पनाप्रयुक्तं गौरवमस्ति, यदा च बलवदनिष्टाननुबन्धित्वस्येष्टसाधनत्वे विशेषणत्वमिष्टसाधनत्वस्य च बलवदनिष्टाननुबन्धित्वे विशेष्यत्वं तदैकत्र विशेष्यस्यान्यत्र विशेषणत्वे व्युत्पत्तिविरोधाभावाद् विधिवाक्यजबोधे बलवदनिष्टाननुबन्धित्वे विशेष्यस्यापीष्टसाधनत्वस्य विधिवाक्यजबोधे क्रियायां विशेषणत्वेन भानं संभवतीति विधिवाक्यादेव क्रियाविशेष्यकेष्टसाधनत्वप्रकारकज्ञानसंभवात्तादृशज्ञानं विधिवाक्यजशाब्दबोधानन्तरं न कल्पनीयमिति तदऽकल्पनप्रयुक्तं लाघवमस्तीति तदेव लाघवं बलवदनिष्टाननुबन्धित्वस्येष्टसाधनत्वविशेषणत्वे विनिगमकमस्तीत्यर्थः । उत्तरमाह– क्रियायामिति, तद्गोचरेच्छा=क्रियाविषयकेच्छा । न क्रियाविषयकेच्छायामिष्टसाधनत्वमात्रज्ञानस्य कारणत्वमस्ति. अन्यथा विषयुक्तान्नभोजनेच्छापि स्यात् किं तु बलवदनिष्टसाधनत्वज्ञानस्यापि कारणत्वमस्त्येव बलवदनिष्टाऽसाधनत्वस्य बलवदनिष्टाननुबन्धित्वरूपस्य चेष्टसाधनत्वे विशेषणत्वेन विधिवाक्यजबोधे भानस्वीकारात् क्रियायां विशेषणत्वेन भानं न संभवतीति क्रियाविशेष्यकस्य तत्प्रकारकस्य=बलवदनिष्टासाधनत्वप्रकारकस्य ज्ञानान्तरस्य क्रियागोचरचिकीर्षाद्यर्थं विधिवाक्यजशाब्दबोधानन्तरं कल्पनापत्तिरस्त्येवेति मतद्वये= इष्टसाधनत्वस्य बलवदनिष्टाननुबन्धित्वविशेषणत्वमते यथेष्टसाधनत्वप्रकारकक्रियाविशेष्यकज्ञानान्तरं दर्शितदिशा कल्पनीयं तथेष्टसाधनत्वस्य बलवदनिष्टाननुबन्धित्वविशेष्यत्वमते बलवदनिष्टाननुबन्धित्वप्रकारकक्रियाविशेष्यकज्ञानान्तरं चिकीर्षाद्यर्थं कल्पनीयमिति मतद्वयेपि कल्पनासाम्येन बलवदनिष्टाननुबन्धित्वेष्टसाधनत्वयोर्विशेष्यविशेषणभावे विनिगमनाविरहात्तयोर्विधिप्रत्ययस्य पृथक् पृथगेव शक्तिरित्यर्थः ।

यदीति–यदि च बलवदनिष्टसाधनत्वज्ञानं द्वेषसामग्रीस्वरूपत्वेनेच्छाप्रतिबन्धकमस्ति न तु बलवदनिष्टाननुबन्धित्वज्ञानमिच्छाहेतुरित्युच्यते तदेष्टसाधनत्वप्रकारकक्रियाविशेष्यकज्ञानस्यैव चिकीर्षाकारणत्वं प्राप्तमितीष्टसाधनत्वस्य बलवदनिष्टाननुबन्धित्वविशेषणत्वे इष्टसाधनत्वप्रकारकक्रियाविशेष्यकज्ञानान्तरं दर्शितदिशा कल्पनीयं स्यात्, इष्टसाधनत्वस्य बलवदनिष्टाननुबन्धित्वविशेष्यत्वे

साधनत्वज्ञानमिच्छाहेतुः ? तदोक्तस्य विशेष्यविशेषणभावे विनिगमकस्य संभवे-ऽपि विशिष्टस्य वाच्यत्वे श्येने विध्यर्थबाधेन तद्विधायकश्रुतेरप्रामाण्यप्रसङ्ग इति शक्तिभेदस्य श्येने केवलेष्टसाधनताबोधस्य चोपगम आवश्यकः ।

मणिकृतापि तत्र बलवदनिष्टाऽसाधनत्वस्याऽभानं लिखितम् । तदभानं विशिष्टशक्तिपक्षे न संभवति-विशिष्टशक्तेर्विशेषणविनिर्मोकेण विशेष्यांशाऽभासकत्वात्, तत्तद्धर्मप्रकारेण पदार्थविषयकशाब्दबोधे तत्तद्धर्मांशे शक्यतावच्छेदकत्व-

---

तादृशज्ञानकल्पनापत्तिर्दर्शितदिशा नास्त्येव बलवदनिष्टाननुबन्धित्वप्रकारकक्रियाविशेष्यकज्ञानस्य तु चिकीर्षाकारणत्वमेव नास्ति येनात्र बलवदनिष्टाननुबन्धित्वस्येष्टसाधनत्वे विशेषणत्वेन क्रियायां विशेषणत्वासंभवात् बलवदनिष्टाननुबन्धित्वप्रकारकक्रियाविशेष्यकज्ञानान्तरं चिकीर्षार्थं कल्पनीयं स्यादिति बलवदनिष्टाननुबन्धित्वेष्टसाधनत्वयोर्विशेषणविशेष्यभावे उक्तं ज्ञानान्तरकल्पनाभावप्रयुक्तलाघवरूपं विनिगमकं यद्यपि संभवति तथापि विशिष्टस्य=बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वस्य वाच्यत्वे=विध्यर्थत्वे श्येने बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वं नास्ति- श्येनस्य हिंसाफलकत्वान्नरकजनकत्वेन श्येने बलवदनिष्टाननुबन्धित्वस्याभावादिति बाधितार्थबोधकत्वेन "श्येनेनाभिचरन् यजेत" इतिश्येनविधायकश्रुतेरप्रामाण्यं स्याद् न चैतदिष्टमिति शक्तिभेदः=बलवदनिष्टाननुबन्धित्वे इष्टसाधनत्वे च विधिप्रत्ययस्य पृथक् पृथगेव शक्तिः स्वीकार्या, श्येने च विधिवाक्येन केवलमिष्टसाधनत्वं बोध्यते इति स्वीकर्तव्यम्, पृथक्शक्तिस्वीकारेण केवलेष्टसाधनत्वबोधस्य बलवदनिष्टाननुबन्धित्वपरित्यागस्य ( अबोधनस्य ) च संभवात्, अस्ति च श्येनेपि शत्रुमृत्युरूपेष्टसाधनत्वमिति तद्बोधनान्नोक्तश्येनश्रुतेरप्रामाण्यापत्तिरित्यर्थः ।

स्वोक्ते मणिकारसंमतिमाह- मणिकृतेति । तत्र=श्येने । तदभानम्=बलवदनिष्टासाधनत्वाऽभानम् । न संभवतीत्यत्र हेतुमाह-विशिष्टशक्तेरिति, विशिष्टे शक्तिग्रहे विशेषणविशिष्टस्यैव भानं भवति न तु विशेषणरहितस्येति यदि विधिप्रत्ययस्य बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वे शक्तिः स्यात्तदा श्येने बलवदनिष्टाननुबन्धित्वस्यापि भानं स्यादेव न च तद्भानमिष्टमिति न विशिष्टे शक्तिरित्यर्थः । हेत्वन्तरमाह- तद्धर्मेति, यथा घटत्वप्रकारकघटविषयकशाब्दबोधे घटत्वे या शक्यतावच्छेदकत्वपर्याप्तिरस्ति तदवगाहिज्ञानस्य हेतुत्वमस्ति तथा प्रकृते विशिष्टशक्तिपक्षे बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वस्य शक्यत्वे शक्यतावच्छेदकत्वपर्याप्तिर्हि बलवदनिष्टाननुबन्धित्वत्वेष्टसाधनत्वत्वयोरुभयोरेव स्यान्न तु केवलेष्टसाधनत्वत्वेइति केवलेष्टसाधनत्वत्वप्रकारकेष्टसाधनत्वविषयकबोधो न संभवति, खण्डशक्तिस्वीकारपक्षे तु केवलेष्टसाधनत्वत्वेपि शक्यतावच्छेदकत्वपर्याप्तिरस्त्येवेति केवलेष्टसाधनत्वत्वप्रकारकेष्टसाधनत्वविशेष्यकबोधः संभवति, किं चोक्तविशिष्टशक्तिपक्षे श्येनपदशक्यतावच्छेदकत्वपर्याप्तिरुभयोरेव बलवदनिष्टाननुबन्धित्वेष्टसाधनत्वयोः स्यादित्युभयप्रकारकश्येनविशेष्यकबोधः संभवति न तु केवलेष्टसाधनत्वप्रकारकोपि तत्र शक्यतावच्छेदकत्वपर्याप्तेरभावाद् भवति च केवलेष्टसाधनत्वप्रकारकोपि बोध इति खण्ड-

पर्याप्त्यवगाहिज्ञानस्य हेतुत्वात्, अन्यथा विशिष्टस्वर्गादिवाचकस्वर्गादिपदाद् विना लक्षणां केवलसुखत्वादिप्रकारकशाब्दबोधापत्तेः ।

यदि च केवलसुखत्वादिना स्वर्गादिरूपसुखबोधो लक्षणामन्तरेण स्वर्गादिपदादिष्यते एव. नेष्यते परं सुखान्तरबोधः– तत्र शक्तिविरहादिति शक्यतावच्छेदकतापर्याप्त्यवगाहित्वमनुपयोगीत्युच्यते ? तदापि बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वस्य शक्यतायां श्येननिष्ठवैरिवधसाधनत्वस्य बलवदनिष्टसाधनत्वनियतत्वेन तदसाधनत्वविशिष्टत्वेन विधिप्रत्ययाऽवाच्यतया सुतरां तत्र विध्यर्थत्वाऽनिर्वाह एव ।

यत्तु श्येनस्याऽदृष्टाद्वारकत्वघटितहिंसालक्षणानाक्रान्ततया बलवद्दुःखाऽजनकत्व-

---

शक्तिः स्वीकार्या तथा च केवलेष्टसाधनत्वेपि शक्यतावच्छेदकत्वपर्याप्तेः सत्त्वात् केवलेष्टसाधनत्वप्रकारकोपि बोधः संभवतीत्यर्थः । विपक्षे बाधकमाह– अन्यथेति, यदि तद्धर्मप्रकारेण तत्पदार्थबोधं प्रति तद्धर्मांशे शक्यतावच्छेदकत्वपर्याप्त्यऽनवगाहिज्ञानस्यापि कारणत्वं स्यात्तदा दुःखासंभिन्नसुखत्वविशिष्टस्वर्गवाचकस्वर्गपदाल्लक्षणां विनापि शक्त्यैव दुःखासंभिन्नत्वांशं परित्यज्य केवलसुखत्वप्रकारकबोधः स्यात् न चैवं भवति तत्कस्य हेतोः ? प्रकारीभूतधर्मांशे शक्यतावच्छेदकत्वपर्याप्त्यवगाहिज्ञानस्य तद्धर्मप्रकारकशाब्दबोधं प्रति कारणत्वादिति तथा च प्रकृते विशिष्टशक्तिपक्षे बलवदनिष्टाननुबन्धित्वांशाऽभानं न संभवतीति तदुपपत्त्यर्थं खण्डशक्तिरेव स्वीकार्या न तु विशिष्टशक्तिरित्यर्थः ।

ननु स्वर्गपदात् केवलसुखत्वप्रकारकस्वर्गाभिन्नसुखविशेष्यकबोधः शक्त्या स्वीक्रियते एव न तु सुखान्तरस्य=अदिव्यभौमसुखस्य बोधः, तत्र=अदिव्ये दुःखमिश्रसुखे स्वर्गपदस्य शक्त्यभावादिति शक्तिज्ञानस्य शक्यतावच्छेदकधर्मे शक्यतावच्छेदकत्वपर्याप्त्यवगाहित्वापेक्षा नास्त्येव तदपेक्षा हि स्वर्गपदेन केवलसुखत्वप्रकारकबोधापत्तिपरिहारायैव स्वीकृता संप्रति च स्वर्गपदात् केवलसुखत्वप्रकारकबोधोपि स्वीकृत एवेति न शक्यतावच्छेदकत्वपर्याप्त्यवगाहित्वापेक्षेत्याशङ्क्याह– यदीति । उत्तरमाह– तदापीति, बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वस्य विधिप्रत्ययवाच्यत्वे यत्र यत्र वधसाधनत्वं तत्र तत्र बलवदनिष्टसाधनत्वमस्त्येवेति श्येननिष्ठवैरिवधसाधनत्वस्यापि बलवदनिष्टसाधनत्वरूपत्वं प्राप्तमिति "श्येनेनाभिचरन् यजेत" इत्यत्रत्यविधिप्रत्ययस्य बलवदनिष्टसाधनत्वविशिष्टेष्टसाधनत्वमेव वाच्यं स्यान्न तु तदसाधनत्वविशिष्टत्वेन=बलवदनिष्टासाधनत्वविशिष्टेष्टसाधनत्वम्. विधिप्रत्ययस्य च त्वया बलवदनिष्टाऽसाधनत्वविशिष्टेष्टसाधनत्वे एव शक्तिः स्वीकृतेति तत्र=श्येने विध्यर्थत्वं न स्यादेवेति न विशिष्टशक्तिपक्षः साधीयानित्यर्थः ।

मतान्तरमुपस्थापयति– यत्त्विति, खड्गाभिघातादिरूपहिंसाया एव बलवन्नरकरूपदुःखजनकत्वमस्ति– अदृष्टाऽद्वारकहिंसारूपत्वात्. न तु श्येनस्यापि तस्याऽदृष्टद्वारकहिंसारूपत्वेनाऽदृष्टाऽद्वारकहिंसात्वानाक्रान्तत्वात् तथा च श्येने इष्टसाधनत्ववद् बलवदनिष्टाननुबन्धित्वमपि प्राप्तमि

मिति मतान्तरम्, तदसत्- तथा हि श्येने सात्त्विकप्रवृत्तिवारणाय बलवद्दुःखाप्रयोजकत्वज्ञानस्यैव प्रवृत्तिहेतुताया उपगन्तव्यतया तस्यैव विध्यर्थताया आवश्यत्वेन श्येने तद्बाधाच्छ्रुतेरप्रामाण्यप्रसङ्गतादवस्थ्यात्, श्येनस्य हिंसात्वविरहेप्यऽभिचारतया नरकजनकत्वस्य दुर्वारत्वाच्च ।

यत्तु " अभिचरन् " इत्यस्य वैरिवधगोचरप्रबलकामनाविशिष्टार्थतया तादृशकामनाविशिष्टस्यैव पुरुषस्य बलवद्द्वेषविषयाजनकत्वरूपबलवदनिष्टाननुबन्धित्वघटकद्वेषानुदयात् तादृशकामनाविशिष्टवृत्तिबलवद्द्वेषविषयाजनकत्वं श्रुतिवाक्यात् प्रत्येतव्यं तच्च श्येनेऽबाधितमेव- वैरिवधे उत्कटरागवतस्तज्जन्य-

---

ति बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वस्य विध्यर्थस्य सत्त्वान्न श्येने विध्यर्थत्वबाध इति न विशिष्टशक्तिस्वीकारे कोपि दोष इति बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वे विधिप्रत्ययस्य शक्तिर्युक्तेत्यर्थः । परिहरति- तदसदिति, श्येने सात्त्विकप्रवृत्तिवारणाय बलवद्दुःखाजनकत्वज्ञानस्यैव प्रवृत्तिहेतुत्वं स्वीकार्यं बलवद्दुःखाजनकत्वज्ञानस्य प्रवृत्तिहेतुत्वे च तस्यैव=बलवद्दुःखाजनकत्वस्यैव विध्यर्थत्वं वक्तव्यं श्येने च बलवद्दुःखजनकत्वस्य सत्त्वेन तद्बाधात्=बलवद्दुःखाजनकत्वं नास्तीति बाधितार्थप्रतिपादकत्वेन श्येनश्रुतेरप्रामाण्यापत्तिः स्यादेवेत्यर्थः । अत्र च " तदसत् " इत्यस्यानन्तरम् " तथा सति " इत्यपि पाठ उपलभ्यते स च लेखकप्रमादज एव प्रतिभाति । ननु श्येने बलवद्दुःखाजनकत्वं मयोक्तमेवेति कथं तत्र विध्यर्थभूतस्य बलवद्दुःखाजनकत्वस्य बाधः स्यादित्याशङ्क्याह- श्येनस्येति, श्येनस्य स्वरूपेण हिंसारूपत्वाभावेप्यभिचारतया=हिंसासाधनत्वेन नरकजनकत्वमस्त्येवेति श्येने बलवद्दुःखाजनकत्वस्य विध्यर्थत्वेन स्वीकृतस्य बाधोस्त्येवेति तद्वाक्यस्याप्रामाण्यं स्यादेवेत्यर्थः ।

मतान्तरमुपस्थापयति- यत्त्विति, एवं हि ' वैरिवधविषयकप्रबलकामनाविशिष्टः श्येनं कुर्यात् ' इतिवाक्यार्थः संपन्नस्तत्र तादृशकामनाविशिष्टस्य=वैरिवधगोचरप्रबलाकामनाविशिष्टस्यैव पुरुषस्य बलवद्द्वेषविषयो यो नरकादिस्तदजनकत्वरूपं यद्बलवदनिष्टाननुबन्धित्वं तत्र बलवदनिष्टं बलवद्द्वेषविषय एव भवतीति तद्घटको यो द्वेषः स नोदेति= न जायते- तस्य पुरुषस्य वैरिवधे उत्कटरागवत्त्वेन वैरिवधजन्यनरकादावुपेक्षासंभवेन द्वेषासंभवात् तथा च वैरिवधगोचरप्रबलकामनाविशिष्टपुरुषवृत्तिर्यो बलवद्द्वेषस्तद्विषयो यो नरकादिस्तदजनकत्वं श्येनस्य श्येनवाक्यात् प्रत्येतव्यमन्यथा=श्येनस्य तादृशकामनाविशिष्टपुरुषवृत्तिद्वेषविषयजनकत्वे वैरिवधगोचरप्रबलकामनावतोपि श्येने प्रवृत्तिर्न स्यादेव तच्च=तादृशकामनाविशिष्टवृत्तिबलवद्द्वेषविषयाजनकत्वं श्येने बाधितं नास्तीति श्येनेपीष्टसाधनत्ववद् बलवद्द्वेषविषयाजनकत्वरूपं बलवदनिष्टाननुबन्धित्वमपि प्राप्तमेवेति नोक्तविशिष्टशक्तिस्वीकारे कोपि दोष इत्यर्थः । उक्तं बलवद्द्वेषविषयाजनकत्वाऽबाधितत्वमुपपादयति- वैरिवधे इति, यस्य वैरिवधे उत्कटरागो भवति तस्य तज्जन्यनरके=वैरिवधजन्यनरके बलवद्द्वेषोपि न जायते इति तादृशनरकस्य=वैरिवधजन्यनरकस्य

नरके बलवद्द्वेषानुत्पत्त्या तादृशनरकस्य वैरिवधोत्कटकामनाविशिष्टवृत्तिद्वेषाऽविषयत्वात्, न ह्येकदैकत्राऽवर्तमानयोरेकतरमऽपराविशिष्टवृत्तीति मिश्राणां मूलाभिप्रायवर्णनम्, तदपि न– बलवद्द्वेषविषयदुःखजनकत्वप्रतियोगिकाभावस्याऽतिप्रसक्ततया बलवद्द्वेषविषयदुःखजनकतत्वावच्छिन्नाभावस्य वाच्यतास्वीकारेणान्यपुरुषस्य पुरुषविशेषीयबलवद्द्वेषविषयदुःखजनकत्वाभावस्य प्रत्ययाऽसंभवात् तादृशदुःखजनकत्वेऽभावे च खण्डशक्तिस्वीकारे विशिष्टशक्तिस्वीकारपरित्यागात् ।

एवं यत्रोत्कटरागो यदा तत्रैव नोत्कटद्वेषस्तदा. तज्जन्ये फले उत्कटरागदशायां च तज्जन्यदुःखरूपफलान्तरे उत्कटद्वेषे न किं चिद्बाधकमिति वैरिवधे उत्कटरागदशायां श्येनजन्यनरके बलवद्द्वेषो दुरपवाद एव । अस्तु वा फलविषयोत्कटरा-

वैरिवधविषयकोत्कटकामनाविशिष्टपुरुषवृत्तिद्वेषविषयत्वं नैव भवतीत्यर्थः । न हीति– घटत्वपटत्वे एकदैकत्र न भवत इति यथा तयोर्मध्ये एकतरं घटत्वं पटत्वविशिष्टपटवृत्ति न भवति पटत्वं च घटत्वविशिष्टघटवृत्ति न भवति तथा प्रकृतेपि प्रकृतौ रागद्वेषावेकदैकत्र न संभवत इति वैरिवधविषयकोत्कटरागवति वैरिवधजन्यनरकादिद्वेषो न संभवतीति श्येने बलवद्द्वेषविषयाजकनत्वं प्राप्तमेवेत्यर्थः ।मूलाभिप्रायवर्णनम्=श्रुतिवाक्याभिप्रायवर्णनम् । पराचष्टे– तदपि नेति, बलवद्द्वेषविषयदुःखाजनकत्वं हि बलवद्द्वेषविषयदुःखजनकत्वाभाव एव स चातिप्रसक्त एव– बलवद्द्वेषविषयकिंचिद्दुःखजनकेपि बलवद्द्वेषविषयकिंचिदपरदुःखाजनकत्वस्य सत्त्वादित्यतिप्रसक्ततया तस्य वाच्यत्वं न संभवति तस्माद् बलवद्द्वेषविषयदुःखजनकत्वत्वावच्छिन्नाभावस्य=बलवद्द्वेषविषययावद्दुःखाजनकत्वस्य विधिप्रत्ययवाच्यत्वं स्वीकार्यं तस्यातिप्रसक्तत्वाभावात् तत्र चान्यपुरुषस्यान्यपुरुषीयबलवद्द्वेषविषयदुःखजनकत्वाभावज्ञानं न संभवतीति नान्यपुरुषीयबलवद्द्वेषविषयदुःखाजनकत्वेप्येका विधिप्रत्ययशक्तिः संभवति तस्मात् तादृशदुःखजनकत्वेऽभावे च खण्डशक्तिरेव स्वीकार्या तथा च विशिष्टशक्तिपक्षपरित्यागो गले पतित एवेति बलवदनिष्टाननुबन्धित्वेष्टसाधनत्वयोरपि खण्डशक्तिरेव स्वीकार्या न विशिष्टशक्तिरित्यर्थः । परकीयदुःखजनकत्वं तु कण्टकवेधादावनुमानग्राह्यमस्तीति तज्ज्ञानसंभवात्तत्र शक्तिरपि संभवत्येव. एवमभावेपि, वस्तुतस्त्वेवमुक्तदुःखजनकत्वाभावज्ञानमपि संभवत्येवेति तदसंभववचनं विवेचनीयम् ।

यदुक्तं वैरिवधोत्कटरागे सति वैरिवधजन्यनरके द्वेषो न भवतीति तन्निराचष्टे– एवमिति । एवम्= किं च । यत्र यदोत्कटरागो भवति तत्रैव तदोत्कटद्वेषो न भवतीति नियमोस्ति तथा च श्येने उत्कटरागदशायामुत्कटद्वेषो यद्यपि न संभवति तथापि तज्जन्ये=श्येनजन्ये वैरिवधरूपफले उत्कटरागदशायामपि श्येनजन्यनरकादिदुःखरूपफले उत्कटद्वेषे बाधकं नास्त्येवेति श्येनजन्यनरके बलवद्द्वेषापवादो नैव संभवति तथा च श्येनस्य बलवद्द्वेषविषयदुःखजनकत्वं प्राप्तमेवेति विशिष्टशक्तिपक्षे विध्यर्थत्वं न स्यादित्यर्थः । पक्षान्तरमाह– अस्तु वेति, फले उत्कटरागे सति तदुपायेपि उत्कटरागो भवतीति वैरिवधरूपफलविषयकोत्कटरागघटिता या

गघटिता उपायगोचरोत्कटरागसामग्री तत्रैव तज्जन्यतया ज्ञाते फलान्तरेष्युत्कट-द्वेषविरोधिनी तथापि नरकवैरिवधयोरेकतरं प्रति श्येनस्य हेतुत्वाग्रहदशायां तयोर्बलवद्द्वेषरागयोर्युगपत् संभव एव।

यत्तु दीक्षाङ्गपशुघातस्य नरकाऽसाधनतया " मा हिंस्यात् " इत्यत्राऽवैधहिंसैव विवक्षितेति श्येनस्य नरकाऽसाधनत्वोपपादनम्, तदपि न- तावताप्यभिचारविधया तथात्वस्य दुर्वारत्वात्।

अथ खण्डशक्तिमवलम्ब्याऽनिष्टाऽसाधनत्वविनिर्मोकेण क्वचिद् विधिवाक्यजन्यबोधोपगमे " श्वेतं छागमालभेत " इत्यादावपि तत्परित्यागसंभवात् अविरोधेन " मा हिंस्यात् " इत्यत्र श्रुत्यर्थसंकोचो न स्यादिति सांख्यमतमेव

---

श्येनविषयकोत्कटरागसामग्री सा तत्रैव=वैरिवधे इव तज्जन्यतया=श्येनजन्यतया ज्ञाते फलान्तरे=नरकादिरूपफलेष्युत्कटद्वेषविरोधिनी भवतु तथा च यद्यपि वैरिवधे उत्कटरागदशायां त्वदुक्तरीत्या श्येनजन्यनरके उत्कटद्वेषो न संभवति तथापि यदा नरकवैरिवधयोर्मध्ये वैरिवधमात्रं प्रति श्येनस्य हेतुत्वं गृहीतं तदा " मा हिंस्यात् " इतिश्रुतिबलात्तु श्येनजन्यवैरिवधस्य नरकहेतुत्वं स्यादेवेति तादृशनरके द्वेषो वैरिवधे च रागोपि युगपदेव संभवति न ह्येकतरं प्रति हेतुत्वग्रहदशायामपरं श्येनजन्यत्वेन गृहीतं भवति येन तत्र रागो वा द्वेषो वा न स्यात्. एवं श्येनस्य यदा नरकमात्रहेतुत्वं गृहीतं तदा वैरिवधस्य कारणान्तरफलत्वमेव गृहीतं स्यात् तथा च श्येनफले नरके द्वेषे सति कारणान्तरजन्यवैरिवधरूपफले रागेपि न किंचिद्बाधकमिति नरकवैरिवधयोर्युगपदपि द्वेषरागौ संभवत एवेत्यर्थः।

यत्त्विति- दीक्षाङ्गपशोर्घातस्य यन्न नरकसाधनत्वं तद्धि वैधत्वात्=वेदविहितत्वादेव वक्तव्यं तथा च " मा हिंस्यात् " इत्यनेनाऽवैधहिंसाया एव नरकसाधनत्वं प्रतिपाद्यते श्येनजन्यहिंसापि वेदविहितैवेति श्येनस्यापि न नरकसाधनत्वं तथा च श्येने बलवदनिष्टाननुबन्धित्वेष्टसाधनत्वयोरुभयोरपि सत्त्वात्तादृशविशिष्टे एव विधिप्रत्ययस्य शक्तिरित्यर्थः। परिहरति- तदपि नेति, श्येनेतिकर्तव्यताप्रविष्टहिंसाया नरकाऽसाधनत्वेपि श्येनफलीभूतशत्रुहिंसाया नरकसाधनत्वमस्त्येवेति श्येनस्याभिचारकर्मत्वात् तथात्वम्=नरकसाधनत्वं दुर्वारमेव तथा च न श्येने बलवदनिष्टाननुबन्धित्वं संभवति येनोक्तविशिष्टशक्तिपक्षो युक्तः स्यादित्यर्थः।

ननु बलवदनिष्टाननुबन्धित्वेष्टसाधनत्वयोः खण्डशक्तिस्वीकारेण यदि क्वचित्=श्येनादावुक्तरीत्याऽनिष्टासाधनत्वांशं परित्यज्य केवलेष्टसाधनत्वमात्रस्य विधिवाक्येन बोधो भवतीति स्वीक्रियते तदा " वायव्यं श्वेतमालभेत भूतिकामः " इत्यादावप्यऽनिष्टासाधनत्वांशपरित्यागः संभवेत् तथा च वायव्यादिपश्वालम्भनस्य स्वर्गजनकत्वेनेष्टसाधनत्वेपि हिंसारूपत्वेन नरकसाधनत्वमपि स्यादेव- अनिष्टाऽसाधनत्वस्य विधिवाक्येनाऽबोधनात् तथा च " मा हिंस्यात् " इत्यनेन विरोधो न स्यात्- अनेनापि हिंसाया अनिष्टसाधनत्वस्यैव प्रतिपादनात् तथा च " मा

साधीय इतिचेत् ?, स्यादेव अविरोधेपि "ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डि न्याय" इत्यत्रेव सामान्यविधेर्विशेषेतरपरत्वं व्युत्पत्तिसिद्धमिति "मा हिंस्यात्" इत्यत्र संकोचः ।

अथ वा कथंचिद् बाधकापनयसंभवे नौत्सर्गिकार्थपरित्याग इति हिंसानिषेधसंकोचेनैवोपपत्तौ न "श्वेतं छागमालभेत" इत्यादौ विधिप्रत्ययस्य बलवदनिष्टाऽसाधनत्वार्थपरित्याग इत्यप्याहुः ।

---

हिंस्यात्" इत्यत्र 'यागाङ्गहिंसातिरिक्तहिंसाया अनिष्टसाधनत्वमस्ति' इत्येवं श्रुत्यर्थसंकोचो न स्यादिति सांख्यमतमेव श्रेष्ठं स्यात्— सांख्यैर्यागाङ्गहिंसाया स्वर्गादिसाधनत्वेपि यागपूरकत्वेपि वा नरकसाधनत्वस्य प्रतिपादनादित्याशङ्कते— अथेति । सिद्धान्ते हि यागस्येष्टसाधनत्वमेवास्तीति यागाङ्गहिंसाया अपीष्टसाधनत्वमनिष्टासाधनत्वं च प्राप्तम् "मा हिंस्यात्" इत्यनेन च हिंसाया अनिष्टसाधनत्वं प्रतिपादितमिति विरोधे प्राप्ते "मा हिंस्यात्" इत्यत्र 'यागाङ्गहिंसातिरिक्तहिंसाया एवानिष्टसाधनत्वम्' इत्येवं श्रुत्यर्थसंकोचो भवतीति विज्ञेयम् । उत्तरमाह— स्यादेवेति, अविरोधेपि "मा हिंस्यात्" इत्यत्र संकोचः स्यादेवेत्यन्वयः, न खलु विरोधे एवोक्तश्रुत्यर्थसंकोचो भवति किं त्वविरोधेपि श्रुत्यर्थसंकोचो भवत्येवेतिभावस्तथा हि— यथा— "ब्राह्मणेभ्यः" इत्यत्र "ब्राह्मणेभ्यो दधि दीयताम्" इतिसामान्यविधेर्विशेषो यः कौण्डिन्यस्तदितरब्राह्मणपरत्वमस्तीति कौण्डिन्येतरब्राह्मणेभ्यो दधि दातव्यमिति लभ्यते तथैव प्रकृतेपि "मा हिंस्यात्" इतिसामान्यविधेर्विशेषभूतयागाङ्गहिंसातिरिक्तहिंसापरत्वेन यागाङ्गहिंसातिरिक्तहिंसाया एवानिष्टसाधनत्वं लभ्यते इति "वायव्यं श्वेतम्" "मा हिंस्यात्" इत्यनयोरविरोधेप्युक्तश्रुत्यर्थसंकोचः संभवत्येवेति नाऽविरोधे श्रुत्यर्थसंकोचनिवृत्तिर्येन सांख्यमतं श्रेष्ठं स्यादित्यर्थः, तथा च श्रुत्यर्थसंकोचे जाते यागाङ्गहिंसायामऽनिष्टाऽसाधनत्वं प्राप्तमेव तथा चोक्तखण्डशक्तिपक्षेपि "छागमालभेत" इत्यत्रानिष्टासाधनत्वांशपरित्यागस्य नाऽपेक्षा श्येने तु गत्यऽभावाद्विवशमनिष्टासाधनत्वांशपरित्यागः क्रियते इत्यर्थः ।

पक्षान्तरमाह— अथ वेति, कथंचित्=केनापि प्रकारेण बाधकापनयसंभवे=बाधककृतविरोधपरिहारसंभवे सत्यौत्सर्गिकार्थस्य परित्यागो न भवतीतिनियमोस्ति तथा च "मा हिंस्यात्" इत्याकारकहिंसाबाधककृतविरोधस्य कथंचित्=यागाङ्गहिंसातिरिक्तहिंसाऽनिष्टसाधनमित्येवं श्रुत्यर्थसंकोचेन परिहारः संभवत्येवेत्यौत्सर्गिकस्य=सामान्यतः प्राप्तस्य विधिप्रत्ययार्थभूतस्य बलवदनिष्टासाधनत्वस्य वायव्यादिपश्वालम्भने परित्यागो न भवतीत्यर्थः । श्येनस्थलेपि श्येनाङ्गहिंसाया अनिष्टासाधनत्वमस्त्येव किं तु श्येनफलीभूतहिंसाया नरकजनकत्वेन तदुपायभूतश्येनस्य नरकजनकत्वं प्राप्तमिति तत्राऽनिष्टाऽसाधनत्वस्य बाधात् परित्याग आश्रीयते । विधिप्रत्ययस्येति— विधिप्रत्ययस्य यो बलवदनिष्टासाधनत्वरूपोर्थस्तत्परित्यागो नेत्यन्वयः ।

अथ यागपाकादिजन्यश्रमादावपि कदाचित् कस्यचिद् बलवद्द्वेषोदयात् 'यजेत' 'पचेत' इत्यादावऽप्रामाण्यप्रसङ्गो दुर्वारः।

यत्तु बलवदनिष्टाऽसाधनत्वं न लौकिकविध्यर्थः किं तु "न कलञ्जम्" इत्यादिश्रुतेः प्रामाण्योपपत्तये वैदिकलिङ एव तदर्थकता, तत्रापि बलवदनिष्टं नरकमेव ताद्रूप्येणार्थः, अत इष्टोत्पत्तिनान्तरीयकश्रमादेः कदाचिद् द्वेषविषयतया न यागादौ विध्यर्थबाध इति, तदपि न- "शाकं न भुञ्जीत" इत्यादिवैद्यकवाक्यस्य बलवदनिष्टाजनकत्वनिषेधपरत्वं विना प्रामाण्यानुपपत्तेः।

तत्रापि रोगाऽजनकत्वं विध्यर्थस्तदभावो नञा बोध्यते इतिचेत् ?, "रिक्तायां न गच्छेत्" "पुष्ये नोद्वहेत्" इत्यादिज्योतिःशास्त्रवचनस्य "नैकः

---

शङ्कते- अथेति। अप्रामाण्यप्रसङ्ग इति- श्रमादिरूपबलवदनिष्टजनकत्वे प्राप्ते विधिप्रत्ययेन बाधितस्य बलवदनिष्टाजनकत्वस्य प्रतिपादनादप्रामाण्यं स्यादेवेत्यर्थः।

यत्त्विति- 'पचेत' इत्यादौ विधिप्रत्ययेन बलवदनिष्टासाधनत्वं न प्रतिपाद्यते येन पाकस्य श्रमादिबलवदनिष्टजनकत्वेन बाधितार्थप्रतिपादकत्वादप्रामाण्यं प्रसज्येत, किं तु वैदिकविधिप्रत्ययस्यैव बलवदनिष्टाजनकत्वमर्थोऽस्ति तत्रापि बलवदनिष्टपदस्य नरकमेव ताद्रूप्येण=बलवदनिष्टत्वेन रूपेणार्थोऽस्ति, अतः=अनिष्टपदेन नरकस्यैव विवक्षितत्वाच्छ्रमादिजनकस्यापियागादेर्नरकसाधनत्वं तु नास्त्येवेति न यागादौ विध्यर्थस्य नरकाजनकत्वस्य बाधः, श्रमादिरूपानिष्टाजनकत्वं तु विध्यर्थ एव नास्ति येन द्वेषविषयीभूतश्रमादिजनकत्वेन विध्यर्थबाधः स्यात्, एवं च "न कलञ्जं भक्षयेत्" इतिश्रुतेरपि प्रामाण्यमुपपद्यते- नरकासाधनत्वस्य विध्यर्थस्य नञाऽभावबोधनसंभवात्- कलञ्जभक्षणे नरकसाधनत्वप्रतिपादनात्, यदि च वैदिकलिङोपि बलवदनिष्टा ( नरका ) साधनत्वमर्थो न स्यात् किं त्विष्टसाधनत्वमात्रमर्थः स्यात्तदा कलञ्जभक्षणेपि तृप्तिरूपेष्टसाधनत्वस्यैव सत्त्वेन तदभावस्य बाधितस्य नञा प्रतिपादनात् "न कलञ्जम्" इत्यादिनिषेधवाक्यानां प्रामाण्यं नोपपद्येतेति पूर्वपक्षार्थः। परिहरति- तदपि नेति, यदि बलवदनिष्टासाधनत्वं लौकिकविध्यर्थो न स्यात्तदा "शाकं न भुञ्जीत" इतिलौकिकवाक्यस्य प्रामाण्यं नोपपद्येत- शाकभोजनेपि तृप्तिरूपेष्टसाधनत्वस्य सत्त्वात् तदभावस्य बाधितस्य नञा प्रतिपादने स्पष्टमेवाऽप्रामाण्यमापद्येत, यदा च लौकिकविधेरपि बलवदनिष्टासाधनत्वमर्थस्तदा शाकभोजनस्य रोगादिरूपबलवदनिष्टजनकत्वेन विध्यर्थभूतस्य बलवदनिष्टाजनकत्वस्याऽभावो नञा प्रतिपादनीयः स चाऽबाधित एव शाकभोजने इत्यबाधितार्थप्रतिपादकत्वात् प्रामाण्यमुपपद्यते इत्यर्थः।

ननु "शाकं न भुञ्जीत" इत्यत्र न बलवदनिष्टाजनकत्वं विध्यर्थः किं तु रोगाजनकत्वमेव तस्य च रोगाजनकत्वस्याभावो नञा बोध्यते स चाबाधित एव शाकभोजने इति न प्रामाण्यानुपपत्तिरित्याशङ्कते-तत्रापीति। उत्तरमाह- रिक्तायामिति। न गच्छेत्=यात्रां न

पर्वतमारोहेत्" इत्यादिवाक्यस्य च का गतिः ? । तत्रापि विशिष्य तत्तदनिष्टासाधनत्वस्य विधिप्रत्ययार्थत्वे शक्त्यानन्त्यप्रसङ्गो व्युत्पत्त्यनुपपत्तिश्च ।

अत्र वदन्ति—द्वेषविषयतावच्छेदकत्वोपलक्षितनरकत्वाद्याश्रयसाधनतात्वावच्छिन्नप्रतियोगिताकाभावकूटे तादृशाभावत्वेनाऽनुगते एकैव विधिप्रत्ययस्य शक्तिः । उपलक्षणीभूतद्वेषविषयतावच्छेदकत्वं परित्यज्य नरकाद्यऽसाधनत्वं प्रतीयते । कुत्रचिन्नरकासाधनत्वं कुत्रचिद्रोगासाधनत्वं प्रतीयते इत्यत्र तात्पर्यमेव नियामकम् । प्रतियोगितायाः प्रकारतया भानात् प्रतियोगितावच्छेदकावच्छेदकनरकत्वादौ द्वेषविषयतावच्छेदकत्वस्योपलक्षणतया शक्तिग्रहे भानमविरुद्धम् ।

---

कुर्यात् । " रिक्तायाम् " इत्यादिलौकिकविधिवाक्यानां का गतिरित्याक्षेपः । तत्रापीति— यदि " रिक्तायाम् " इत्यादिस्थलेऽपि विशेषरूपेणैव तत्तदनिष्टासाधनत्वं विध्यर्थो न तु सामान्यरूपेणाऽनिष्टासाधनत्वं तदाऽनन्तेषु तत्तदनिष्टाऽसाधनत्वेषु विधिप्रत्ययस्य शक्त्यानन्त्यं स्यात् तेन च व्युत्पत्तेः=शाब्दबोधस्यानुपपत्तिः स्यात्— अगृहीतशक्तिकपदार्थभानासंभवादित्यर्थः ।

सिद्धान्तमाह— अत्रेति, द्वेषविषयतावच्छेदकत्वेनोपलक्षितं यन्नरकत्वादि तदाश्रयो यो नरकादिस्तत्साधनतात्वावच्छिन्नप्रतियोगिताकाऽभावकूटे ( अनिष्टसाधनत्वाभावकूटे ) तादृशाभावत्वेनानुगमविषये विधिप्रत्ययस्यैकैव शक्तिरित्यन्वयः, द्वेषविषयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्ननिरूपितसाधनतात्वावच्छिन्नाभावे विधिप्रत्ययस्य शक्तिरिति यावत् । उपलक्षणीभूतेति— यथा तत्पदस्थले तत्पदेनोपलक्षणीभूतबुद्धिविषयतावच्छेदकत्वं परित्यज्य घटादिकं प्रतीयते तथात्राप्युपलक्षणीभूतं यद् द्वेषविषयतावच्छेदकत्वं तत् परित्यज्य नरकाद्यऽसाधनत्वं विधिप्रत्ययेन प्रतीयते इत्यर्थः । कुत्रेति— विशेषरूपस्य नरकाद्यसाधनत्वस्य या प्रतीतिर्भवति सा तात्पर्यज्ञानाधीनैव भवतीत्यर्थः । यथा शाकभोजनेन नरकासंभवात् तत्र रोगाजनकत्वं विध्यर्थस्तदभावो नञा बोध्यते, कलञ्जभक्षणे रोगाद्यऽसंभवात् तत्र नरकासाधनत्वं विध्यर्थस्तदभावो नञा बोध्यते इत्येवं विज्ञेयम् । प्रतियोगिताया इति— ' द्वेषविषयतावच्छेदकत्वोपलक्षितनरकत्वाद्याश्रयसाधनतात्वावच्छिन्नप्रतियोगिताकाभावे शक्तिः ' इत्युक्ते प्रतियोगिता ह्यभावे प्रकारतया भासते इति तादृशप्रतियोगितायाः अवच्छेदकं यद् द्वेषविषयतावच्छेदकत्वोपलक्षितनरकत्वाद्याश्रयसाधनतात्वं तद्घटकं यद् नरकत्वादि तत्रोपलक्षणीभूतं यद् द्वेषविषयतावच्छेदकत्वं तस्य शक्तिग्रहे उपलक्षणतया भानं संभवत्येवेति तादृशोपलक्षणेनोपलक्षितं यन्नरकत्वादि तदाश्रयसाधनतात्वावच्छिन्नाभावे शक्तिग्रहेऽपि न काचिदनुपपत्तिरित्यर्थः । प्रतियोगितायाः अभावे स्वनिरूपकत्वसंबन्धेन प्रकारता ज्ञेया । यत्र प्रतियोगितायाः संसर्गतया भानं भवति तत्र प्रतियोगिकोटिप्रविष्टोपलक्षणीभूतधर्मस्य शक्तिग्रहादौ भानं न भवतीति नियमोऽस्ति, न चात्र प्रतियोगितायाः संसर्गतया भानं भवति किं तु प्रकारतयैवेति नोपलक्षणीभूतस्य द्वेषविषयतावच्छेदकत्वस्य भानं विरुद्धम्, अयं च विषयः पूर्वमपि " प्रतियोगितासंबन्धेन प्रतियोगिप्रकारकज्ञाने एव प्रतियोगिकोटावुपलक्षणप्रकाराऽभाननियमात् ६१९ " इत्यादिना प्रतिपादितः ।

न च प्रमेयत्वादेरप्युपलक्षणतया भानमविरुद्धमिति प्रमेयत्वादेरुपलक्षणतया नरकत्वाद्यनुगमकत्वं कथं न स्वीक्रियते विनिगमकाभावादिति वाच्यम्, सुखाद्यसाधनत्वस्य विध्यर्थताविरहेण प्रमेयत्वादेः सुखत्वादिसाधारण्यं नोक्तरूपस्येत्यस्यैव विनिगमकत्वात् । न च तात्पर्याभावात् सुखाद्यसाधनत्वाबोधकत्वोपपत्तौ विध्यर्थत्वेपि क्षतिविरह इति वाच्यम्, तस्य विध्यर्थत्वे तत्तात्पर्येणाधुनिकानाम् 'न भुञ्जीत' इत्यादिप्रयोगापत्तेः ॥

इति तर्कशास्त्रधुरन्धरमहामहोपाध्यायश्रीमद्गदाधरभट्टाचार्यविरचितः

व्युत्पत्तिवादः समाप्तः ।

ननु यत्रोपलक्षणीभूतं द्वेषविषयतावच्छेदकत्वं तत्र प्रमेयत्वमपि भवत्येवेति प्रमेयत्वस्यैव किं न नरकत्वाद्युपलक्षणत्वं स्यादित्याशङ्क्याह- न चेति । परिहारमाह- सुखादीति, प्रमेयत्वं हि सुखत्वादिसाधारणमस्ति प्रमेयत्वस्योपलक्षणत्वे च प्रमेयत्वोपलक्षितधर्मावच्छिन्नासाधनत्वं विध्यर्थः स्यात् प्रमेयत्वोपलक्षितधर्मस्तु सुखत्वादिरपि भवतीति सुखाद्यसाधनत्वस्यापि विध्यर्थत्वं स्यात् न च सुखाद्यसाधनत्वस्य विध्यर्थत्वमिष्टम्, उक्तरूपस्य=द्वेषविषयतावच्छेदकत्वरूपोपलक्षणस्य तु न सुखत्वादिसाधारण्यम्- सुखे द्वेषविषयताया असंभवादिति न सुखासाधनत्वस्य विध्यर्थत्वप्रसक्तिरित्यस्यैव द्वेषविषयतावच्छेदकत्वनिष्ठोपलक्षणत्वे विनिगमकत्वं विज्ञेयमित्यर्थः । ननु शाब्दबोधे तात्पर्यज्ञानमपि कारणमस्तीति तात्पर्याभावादेव सुखासाधनत्वाऽबोधकत्वं विधेः संभवतीति सुखासाधनत्वस्य विध्यर्थत्वेपि क्षतिर्नास्तीत्याशङ्क्याह- न चेति । परिहारमाह- तस्येति, तस्य=सुखासाधनत्वस्य विध्यर्थत्वे तत्तात्पर्येण=सुखासाधनत्वस्य विध्यर्थत्वतात्पर्येण किंवा सुखसाधनत्वतात्पर्येण 'न भुञ्जीत' इतिप्रयोगः स्यादत्र च सुखासाधनत्वं विध्यर्थस्तदभाव एव नञा प्रतिपादनीयः सुखासाधनत्वाभावश्च सुखसाधनत्वरूप एव तथा च 'भोजनं सुखसाधनम्' इतितात्पर्येण 'न भुञ्जीत' इति प्रयोग आपद्येत न चैतदिष्टं न वा 'न भुञ्जीत' इत्यनेन 'भोजनं सुखसाधनम्' इत्यर्थः प्रत्येतुं शक्यते इति न सुखासाधनत्वं विध्यर्थस्तथा च न प्रमेयत्वमुपलक्षणं किं तु द्वेषविषयतावच्छेदकत्वमेवेत्यर्थः ॥

लृङश्च भूतभविष्यत्कालयोः शक्तिर्ज्ञेया यथा- 'सुवृष्टिश्चेदभविष्यत् तदा सुभिक्षमभविष्यत्' 'एधश्चेदप्राप्स्यत् ओदनमप्यऽपक्ष्यत्' इत्यादि । तदुक्तम्- "लिङ्निमित्ते लृङ् क्रियातिपत्तौ" "भूते च" इति, लिङ्निमित्तम्=हेतुहेतुमद्भावः । अतिपत्तिः=अनिष्पत्तिः । शब्दशक्तिप्रकाशिकायामप्युक्तम्-

"क्रियातिपाते कालस्य भाविनः प्राक्तनस्य च ।
वैशिष्ट्यबोधिका या तिङ् लृट् च लृङ् च क्रमादिमे ॥

या तिङ् क्रियायाः=धात्वर्थस्यातिपाते=विगमे ( अनिष्पत्तौ ) भाविकालावच्छेद्यत्वस्य बोधिका तादृशी लृट्, या त्वऽतीतकालावच्छेद्यत्वस्य ( बोधिका ) तादृशी लृङ्, 'तण्डुलं चेत् प्राप्स्यत्योदनमपि पक्ष्यति चैत्रः' इत्यादौ स्यतिप्रभृतयश्चैत्रादेर्भाविकालावच्छेदेन तण्डुलप्राप्त्याद्यभाववत्त्वमनुभावयन्ति (चैत्रो न तण्डुलं प्राप्स्यति नौदनं पक्ष्यतीत्यर्थः ) तथा

' एधश्चेदप्राप्स्यत् ओदनमप्यऽपक्ष्यत् ' इत्यादावतीतकालावच्छेद्यमिन्धनप्राप्त्यभाववत्त्वम् ( चैत्रेऽनुभावयन्ति स्यतिप्रभृतयः ) तथा च भाव्यऽतीतकालावित्र क्रियाप्रतियोगिकोऽभावोपि तयोः ( लृट्लृङोः ) अर्थः ( एतेन पाकाद्यभावबोधकत्वं लृट्लृङोः प्राप्तमिति विज्ञेयम् ) । वस्तुतो भाव्यादिकालावच्छेदेन तण्डुलप्राप्त्यभावप्रयुक्त ओदनपाकाद्यभाव एवोक्तस्थले लृङादिना चैत्रादावनुभाव्यः क्रियाविरहप्रयुक्तस्य ( तण्डुलप्राप्त्यभावप्रयुक्तस्य ) क्रियान्तरविरहस्य ( पाकाद्यभावस्य ) एव क्रियातिपातत्वात् ( क्रियातिपातपदार्थत्वात् ) । " इति । अत्रत्यविषमपदानि तु ( ) एतच्चिह्नान्तर्गतशब्दैर्व्याख्यातानीति विज्ञेयम् ।

सन्प्रत्ययार्थस्तु पूर्वमेव ( ३१० ) " सनो धात्वर्थविषयकेच्छावाचित्वात् " इत्यादिना निरूपितः । णिच्प्रत्ययार्थश्च ( २९६ ) ( २९९ ) " णिजर्थो हेतुकर्तृत्वम् " " अनुकूलव्यापार एव णिजर्थः " इत्यादिना निरूपितः । शप्प्रत्ययार्थश्च ( २६३ ) " लकारसामान्यवृत्त्या यत्र कर्तृत्वं प्रतीयते तत्रैव " कर्तरि शप् " इत्यस्य शब्विधायकता " इत्यादिना निरूपित इति तत्र तत्रैव द्रष्टव्यम् । अवशिष्टप्रत्ययानामर्थास्तु शब्दशक्तिप्रकाशिकायां द्रष्टव्याः ॥

॥ इति धातुप्रत्ययाः ॥

श्रीमद्गुरुमुखाज्ज्ञातपदार्थानां हि संग्रहः ।
स्वकीयज्ञानरक्षार्थै कृतोयं युक्तयुन्नतः ॥
श्रीशास्त्रदीपिकाटीकां प्रकाशाख्यां प्रकाश्य च ।
बालानामुपकाराय द्वावाऽऽदर्शौ प्रकाशितौ ॥
एष व्युत्पत्तिवादस्य शक्तिवादस्य चापरः ।
प्रकाशं संमुखीकृत्य दर्शनीयौ कदाचन ॥
अनेकग्रन्थनिर्माणश्रमसंदोहधर्षितम् ।
शरीरं शीर्णतां प्राप्तमेतद् व्यसनदुष्फलम् ॥
वन्दे श्रीमद्धयग्रीवं मन्देभ्यः करुणानिधिम् ।
विद्यागुरुं तथा वन्दे श्रीगङ्गाधरशास्त्रिणम् ॥
यः साङ्ख्ये कपिलः पतञ्जलिरलं शाब्दे कवित्वे परं
श्रीहर्षोऽद्वयदर्शने शिवतनुस्तर्केषु यो गौतमः ।
मीमांसामतजैमिनिर्ध्रुवमुपाध्यायो महद्भ्यो महान्
स्याऽऽई ई पदभृद् गुरुर्विजयते शास्त्री स गङ्गाधरः ॥

॥ इति पञ्चनदीय ( पंजाबी ) पण्डितसुदर्शनाचार्यशास्त्रिप्रणीता
व्युत्पत्तिवादस्याऽऽदर्शाख्या व्याख्या
समाप्ता ॥

॥ श्रीः ॥

# शुद्धिपत्रम्



| पृ० | पं० | अशुद्धम्. | शुद्धम्. | पृ० | पं० | अशुद्धम्. | शुद्धम्. |
|---|---|---|---|---|---|---|---|
| १ | (अन्त्या) | ज्ञान | ज्ञात | ९३ | २७ | साग्र्याः | सामग्र्याः |
| २ | २८ | संसग | संसर्ग | ९९ | २ | क्यन | क्येन |
| ७ | ३ | त्यथ | त्यर्थ | १०१ | २४ | लक्षा | लक्षण |
| ७ | २६ | त्यथ | त्यर्थ | १०३ | १९ | चत्र | चैत्र |
| ७ | २९ | ज्ञयः | ज्ञेयः | १०३ | २० | रूपाथा | रूपार्था |
| १९ | २३ | काङ्क्षा | काङ्क्षा | १०३ | २१ | दश | देश |
| १७ | १० | रूपद | रूपपद | १०३ | २५ | दान्वन | दान्वय |
| १८ | २५ | वाथ | वार्थ | १०३ | २९ | पदाथ | पदार्थ |
| २५ | १८ | स्यव | स्यैव | १०४ | १७ | चत्र | चैत्र |
| २५ | ३० | क्तव | अत्र | १०४ | १७ | पपदं | पदं |
| २६ | २१ | वावयस्य | वाक्यस्य | ११० | २ | हेतु | हेतु |
| ३३ | १९ | प्रत्याया | प्रत्यया | ११४ | ८ | निवाहो | निर्वाहो |
| ३८ | (केचित् | यान्त्रिकबिन्दवोऽशुद्धाः) | | ११४ | २३ | ज्ञन | ज्ञान |
| ४२ | १० | द्रव्य | द्रव्यं | ११४ | ३० | ज्ञनेन | ज्ञानेन |
| ४३ | २५ | वेक्षापेशा | वेशापेक्षा | ११६ | २ | उरी | उररी |
| ४९ | १९ | ष्पाण | ष्याणां | ११९ | १६ | ताथ | तार्थ |
| ४९ | १२ | दक | दकं | १२५ | ९ | सभ | संभ |
| ४९ | २४ | च्छदक | च्छेदक | १२५ | १६ | परि | पारि |
| ६० | १३ | च्छदक | च्छेदक | १२६ | ५ | ऽऽन्वय | ऽन्वय |
| ६१ | २९ | सयोग | संयोग | १३५ | (अन्त्ये) | संख्य | संख्यावि |
| ६२ | १ | णत्व | णत्वं | १३७ | २९ | व्यापत्वं | व्याप्यत्वं |
| ६८ | ८ | ङसथ | ङसर्थ | १३९ | २० | ज्ञत | ज्ञात्वे |
| ७४ | १ | तयाः | तया | १४५ | ३ | कवा | कैवा |
| ७५ | २७ | चक | चैक | १५३ | (अन्त्ये) | पित | पिता |
| ८२ | ६ | बोधोत्पात्त | बोधोत्पत्ति | १५४ | २७ | ताय | ताया |
| ८५ | २९ | ति | वेति | १५५ | ७ | तापद | तांपद |
| ८७ | ३ | यर्स्य | र्येस्य | १५७ | १२ | युक्ता | युक्त्या |
| ९२ | १२ | गभूत | र्गभूत | १६० | १४ | स्त | स्तः |

| पृ० | पं० | अशुद्धम् | शुद्धम् | पृ० | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|---|---|---|
| १६० | १९ | बन्धैन | बन्धेन | २०० | २८ | ततीया | तृतीया |
| १६० | १७ | ए | एव | २०० | ३१ | मदो | भेदो |
| १६० | २२ | वृत्तित्व | वृत्तित्वा | २०९ | १ | स | सं |
| १६० | २९ | त्यथः | त्यर्थः | २०९ | ९ | त्वाथ | त्वार्थ |
| १६० | २९ | त्र | अत्र | २११ | २६ | त्यर्थ | व्यर्थ |
| १६१ | (अन्त्या )ससर्ग | | संसर्ग | २१२ | ४ | संभव | संभवे |
| १६४ | ३ | ( द्वितीयरेखा नापेक्षिता ) | | २१५ | १७ | व्यापर | व्यापार |
| १६६ | २ | बन्धन | बन्धेन | २१६ | १९ | क्यह | क्याह |
| १६६ | १९ | यमि | प्यमि | २१७ | ७ | बाधो | बोधो |
| १६७ | ४ | सहित | सहिते | २१७ | ९ | धेयात्व | धेयत्व |
| १६७ | २९ | टत्व | घटत्व | २१८ | ३० | स्थिया | स्थित्या |
| १६९ | १ | घटा | घटा | २२९ | १ | भूम | भूमे |
| १७२ | ३ | नस्ये | नस्य | २२९ | ३० | सयोग | संयोग |
| १७२ | २७ | पृथक | पृथक् | २२९ | १ | सर्गा | सर्गो |
| १७४ | १९।२० | ब्रह्मणा | ब्राह्मणा | २३१ | २४ | विधय | विधेय |
| १७६ | २९ | ब्रह्मण | ब्राह्मण | २३६ | ३ | कत्व | कत्वं |
| १७७ | २३ | नान्त | नान्ता | २३८ | १ | स्पदो | स्पन्दो |
| १७७ | २४ | त्राणि | त्रीणि | २३८ | ९ | ताह | तर्हि |
| १७७ | ३१ | रथकंब | रर्थकेव | २३९ | २२ | वाच्छिन्न | वच्छिन्न |
| १८४ | १९ | चैत्रत्य | चैत्रस्य | २३९ | २९ | द्वितीय | द्वितीया |
| १८६ | ३० | चत्र | चैत्र | २४२ | ३० | आधय | आधेय |
| १८७ | १ | पचत | पचते | २४२ | ३० | वच्छद | वच्छेद |
| १८७ | ४ | पचेत | पचते | २४७ | ( हेडिङ् ) | त्पर्थः | त्यर्थः |
| १८९ | १९ | ण्डुलो | तण्डुलो | २५२ | २६ | शस | शसं |
| १८९ | २० | येव | स्यैव | २५५ | २० | साहा | सहा |
| १८९ | २२ | यायेना | न्यायेना | २५५ | २९ | न्तावा | न्ताव |
| १९२ | १७ | चव | चैव | २५६ | १७ | कतृ | कर्तृ |
| १९६ | ३१ | कर्त | कर्तृ | २५७ | १९ | प्रप्तं | प्राप्तं |
| १९७ | ८ | येण | यैण | २५७ | २९ | मैत्रं | मैत्रे |
| १९९ | ७ | त्येन | त्ययेन | २६० | १ | निर्वाह्य | निर्वाह्यं |
| २०० | १७ | स्वाभि | स्यामि | २६२ | ९ | ण्यतो | ण्यन्तो |

| पृ० | पं० | अशुद्धम्. | शुद्धम्. |
|---|---|---|---|
| २७२ | २३ | श्वत्र | श्वैत्र |
| २७२ | २४ | याथत्वे | यार्थत्वे |
| २७३ | १ | त्वादा | त्वादौ |
| २७९ | १० | ह्ययते | ह्रियते |
| २८० | ९ | आकाश | आकाशं |
| २८२ | १० | मान्ना | मानान्ना |
| २८३ | १७ | दाशत | दर्शित |
| २८३ | १७।१८ | चत्री | चैत्री |
| २८६ | ५ | पदाथ | पदार्थ |
| २९९ | ९ | रजन | रजत |
| २९९ | १५ | विभक्ति, | विभक्ति- |
| २९९ | १६ | भवति— | भवति, |
| ३०१ | २८ | ष्टाया | शिष्टाया |
| ३०२ | १ | सतिः | सति |
| ३१० | २७ | मेति | मेवेति |
| ३१० | २८ | अथ | अर्थ |
| ३१२ | १ | वेता | वैता |
| ३१४ | २९ | शषि | शेषि |
| ३१७ | २० | गृहाहि | गृहादि |
| ३२१ | ८ | कीष्यते | कीर्ष्यते |
| ३२३ | ५ | कतृ | कर्तृ |
| ३२७ | ५ | ण्यन्त्य | ण्यन्त |
| ३२८ | १३ | दिवक्षा | विवक्षा |
| ३३१ | ८ | कम | कर्म |
| ३३१ | १० | बाध्यम्। | बोध्यम्। |
| ३३१ | १६ | पदाथ | पदार्थे |
| ३३१ | २८ | तदथ | तदर्थ |
| ३३२ | २ | ज्ञान | ज्ञानं |
| ३३३ | १२ | षष्ठयन्तऋद्ध | षष्ठयन्तर्द्ध |
| ३३४ | २५ | तदथ | तदर्थ |
| ३४० | १५ | काय | कार्य |

| पृ० | पं० | अशुद्धम्. | शुद्धम्. |
|---|---|---|---|
| ३४३ | ११ | ताथ | तार्थ |
| ३४४ | ५ | कम | कर्म |
| ३४७ | २५ | त्वाथ | त्वार्थं |
| ३४८ | १ | त्वथे | त्वर्थे |
| ३४८ | ९ | कम | कर्म |
| ३४८ | २७ | सयो | संयो |
| ३४९ | ८ | त्वथ | त्वर्थे |
| ३४९ | ९ | त्याद | त्यादि |
| ३४९ | १५ | अन्ताभूत | अन्तर्भूता |
| ३४९ | २४ | कम | कर्म |
| ३४९ | ३० | कम | कर्म |
| ३४९ | ३० | नथक | नर्थकं |
| ३५० | ९ | व्याप्त | व्याप्ते |
| ३५१ | ११ | वाक्य | वाक्यं |
| ३५१ | १४ | सयो | संयो |
| ३५२ | ८ | ाद्वती | द्विती |
| ३५२ | १७ | भिादन | भिर्दिनै |
| ३५२ | २२ | काश्या | काश्य |
| ३५५ | २५ | भविष्यत् ) | ( भविष्यत् ) |
| ३५९ | २० | चत्री | चैत्री |
| ३६९ | १६ | कत्व | कत्वं |
| ३७५ | (हेडिङ्) | यव | याव |
| ३८० | २४ | सबन्ध | संबन्धे |
| ३८३ | ६ | इत्थ | इत्थं |
| ३८३ | १५ | स्याथः | स्यार्थः |
| ३८७ | २१ | मित्यर्यः | मित्यर्थः |
| ३९१ | ३० | त्वति | त्विति |
| ३९२ | ४ | वक्लित्या | विक्लित्त्या |
| ३९२ | १५ | सम | साम |
| ३९४ | ३० | शष | शेष |
| ३९७ | २८ | मैत्र | मैत्रः |

| पृ० | पं० | अशुद्धम्. | शुद्धम्. |
|---|---|---|---|
| ४०० | २१ | अचेत | अचेतन |
| ४०४ | २७ | चतने | चेतने |
| ४०५ | २।३ | वेण | बेन |
| ४१६ | १७ | व्यापा | व्यापार |
| ४१६ | २९ | प्रामाण्य | प्रामाण्यं |
| ४२१ | ५ | पढं | पदं |
| ४२३ | १२ | विषधेय | विधेय |
| ४२५ | ९ | ज्ञानल | ज्ञानला |
| ४२६ | २८ | घशे | घंशे |
| ४३१ | १ | विधय | विधेय |
| ४३३ | १२ | कतृ | कर्तृ |
| ४३३ | २७ | हतु | हेतु |
| ४३५ | १९ | प्रसोष्ट | प्रासोष्ट |
| ४४१ | ५ | वाच्छन्न- | वच्छिन्न |
| ४४३ | (हेडिङ्) | भाष | भाषा |
| ४४३ | ४ | संज्ञा | संज्ञ्या |
| ४४३ | १७ | बद्धो | बद्धं |
| ४४३ | १८ | सद | तद |
| ४४३ | २६ | विच्छेद | वच्छेद |
| ४४४ | ८ | बाहुल्यन | बाहुल्येन |
| ४४४ | २० | विश | विशे |
| ४४६ | १६ | मुख | मुख्यं |
| ४४६ | १७ | कर्मत्वयं | कर्मत्व |
| ४४६ | २० | तय | तया |
| ४४८ | २३ | सव | संब |
| ४५१ | २९ | त्पत्त्यां | त्पत्त्या |
| ४५२ | १२ | निष्टं | निष्ठ |
| ४५२ | १८ | वच्छद | वच्छेद |
| ४५२ | २५ | जल | जलं |
| ४५५ | ११ | एव | एवं |
| ४५५ | २४ | मिति२ | मति२ |
| ४६३ | १ | चतुर्थ्थः | चतुर्थ्यर्थः |
| ४६४ | ४ | सप्र | संप्र |
| ४६६ | ११ | योग | योगं |
| ४६६ | ११ | पादा | पदा |
| ४६६ | २२ | चतुर्थ | चतुर्थी. |
| ४६८ | १९ | द्येश्य | देश्य |
| ४७० | २२।२४ | त्यथः | त्यर्थः |
| ४७१ | २६ | त्योग्य | योग्य |
| ४७१ | २७ | कन्नादि | कान्नादि |
| ४७२ | १४ | चेत्रः | चैत्रः |
| ४७२ | २६ | पित्र्यु | पित्रु |
| ४७४ | १० | मवम् | मैवम् |
| ४७५ | ३० | भदे | भेदे |
| ४८१ | १५ | त्याय | त्याग्य |
| ४८५ | २८ | प्राप्त | प्राप्ते |
| ४८८ | १ | पतात | पतति |
| ४९१ | २० | णाम | णाय |
| ४९६ | ४ | वय | वेय |
| ४९८ | ३ | ह्रियते | ह्रियते |
| ५०० | १८ | क्षया | पेक्षया |
| ५०२ | (हेडिङ्) | अन्वे | अन्ये |
| ५०३ | ७ | गणस्य | गुणस्य |
| ५०४ | २० | धात | धातू |
| ५०५ | १८ | दस्था | पस्था |
| ५०७ | ६ | भिद्य | भिद्यते |
| ५१३ | २३ | मत्वर्थी | मत्वर्थीय |
| ५१८ | १ | क्षात्रय | क्षत्रिय |
| ५२० | १ | जला | जलो |
| ५२० | ११ | पादा | पदा |
| ५२४ | (हेडिङ्) | सप्तम | सप्तमी |
| ५२६ | १२ | ऽधेय | ऽऽधेय |

| पृ० | पं० | अशुद्धम्. | शुद्धम्. |
|---|---|---|---|
| १२७ | १२ | ादवृत्ति | दिवृत्ति |
| १२७ | १७ | यत्वं | व्यत्वं |
| १२८ | २३ | च्छेद | च्छेदे |
| १२९ | ३ | त्वन | त्वेन |
| १२९ | ३ | आप | अपि |
| १२९ | २२ | चम | चर्म |
| १३२ | २८ | वावये | वाक्ये |
| १३७ | २० | खट्टा | खट्वा |
| १३८ | ३ | गाग्यः | गार्ग्यः |
| १३८ | २२ | रूपः | रोपः |
| १४० | ९ | चत् | चेत् |
| १४० | १९ | भ्यव | भ्यैव |
| १४१ | ९ | पुष्प | पुष्य |
| १४८ | २८ | सख्या | संख्या |
| १४९ | ६ | बोध | बोधि |
| १९२ | ९ | शपू | शप् |
| १९४ | १३ | चेत्रेण | चैत्रेण |
| १९९ | २७ | रीत्य | रीत्यै |
| १९७ | २२ | प्रथो | प्रयो |
| १९९ | २ | तती | तृती |
| १९९ | २९ | कतृ | कर्तृ |
| १६० | १७ | वाच्यते | वाच्यत्वे |
| १६८ | २२ | दान्वय | दावन्वय |
| १६८ | २९ | भवता | भवती |
| १६९ | ११ | वश्यं | वश्यं |
| १६९ | १९ | षया | षयो |
| १६९ | १९ | षण | षणं |
| १६९ | ३१ | शङकया | शङ्कया |
| १७० | ८ | ज्ञान | ज्ञाने |
| १७४ | ८ | कार | लकार |
| १७९ | १२ | तथ | तथा |
| १७६ | २१ | यात्तदा | स्यात्तदा |
| १८१ | ९ | मल्ला | मल्लो |
| १८१ | ९ | ताथ | तार्थ |
| १८७ | १ | —'स्पन्दते' | 'स्पन्दते'— |
| १८८ | २७ | व्यापर | व्यापार |
| १९३ | २० | ताऽनु | ताऽननु |
| १९९ | २२ | कृत्य | कृत्या |
| १९९ | ९ | र्थत्व | र्थत्वे |
| १९९ | २९ | पाका | र्तमानपाका |
| १९९ | २६ | र्तमानप्राग | प्राग |
| ६०७ | ६ | प्रतात | प्रता |
| ६०९ | १९ | द्यतत | द्यत |
| ६१० | २० | स्रजू | स्रज् |
| ६१९ | ९ | दिक | दिकं |
| ६१८ | ९ | ज्ञान | ज्ञानं |
| ६१८ | ७ | त्पति | त्पत्ति |
| ६१८ | २९ | जाप्ये | जात्ये |
| ६१९ | १ | ष्टाया | ष्टायां |
| ६२० | २७ | धर्माण | धर्माणा |
| ६२१ | ३१ | तुमाह | हेतुमाह |
| ६२४ | ९ | परत्व | परत्व |
| ६२९ | ९ | समाय | समवाय |
| ६२९ | ६ | द्रेष | द्वेष |
| ६३० | ११ | क्षेम | क्षेमं |
| ६३१ | २२ | विध्यर्थ | विध्यर्थ |
| ६४० | २१ | प्रबला | प्रबल |

एतद्दिशा स्वयं शोध्यमशुद्धं यत्र दृश्यते ।
अवश्यं शिष्यतेऽशुद्धिःसूक्ष्मदृष्ट्यापि दर्शने ।
यन्त्राघाताच्च जायन्ते बहुत्राशुद्धयोऽवशम् ॥

अथ

टीकाकारकृता

# शिवाष्टपदी



भज विषमविलोचनवेशम् ।

चन्द्रकिरणसमशुभ्रसुदर्शनशैलनितम्बनिवेशम् । ध्रु० ॥

निटिलविलोचनलोचनतः कृतभस्मशरीररतीशम् ।

हिमनिधिसानुसमाधिसमश्रितचक्रधरं धरणीशम् ॥ १ ॥

यामवतीपतिपूर्वकलापरिकलितविशालललाटम् ।

हैमवतीपरिरम्भपवित्रितचित्रितवत्सकपाटम् ॥ २ ॥

व्यालवलयकमनीयकरम्बितभूषितहस्तसरोजम् ।

शैलसुतावदनेन्दुविलोचनचञ्चलहृदयमनोजम् ॥ ३ ॥

विष्णुपदीपरिभोगपरिष्कृततुङ्गकपर्दकतल्पम् ।

गानकलाकुतुकेन नवीकृतताण्डवकल्पमनल्पम् ॥ ४ ॥

भक्तजननमरणादिमहास्रवमोचनकौशलवेषम् ।

त्रिभुवनमण्डलमण्डनपण्डितवन्दितपादविशेषम् ॥ ५ ॥

विष्णुमतीयतृतीयविचक्षणवल्लभवादनिदानम् ।

चाटुकथाचातुर्यनिकृन्तितगिरिजामानसमानम् ॥ ६ ॥

संहृतसागरमथनविनिस्सृतदारुणदारदशोकम् ।

मन्मथविशिखभुजङ्गविषाहतिसंहतिसमवितलोकम् ॥ ७ ॥

गीतमिदं हरहर्षकरं किल सुखयतु पुररिपुदासम् ।

अष्टपदीनिपुणाय पिनाकी वितरतु निजपदवासम् ॥ ८ ॥

म. म. सी. आई. ई. श्रीगङ्गाधरशास्त्रिणामन्तेवासी

चञ्चनदीयः

**सुदर्शनाचार्यशास्त्री**

काशी.

॥ श्रीः ॥

अथ

# श्रीकृष्णपञ्चकम्

कादम्बहंसपरिसेवितवारिधारा

फुल्लारविन्दशतशोभितमध्यभागा ।

कादम्बनिम्बबकुलादिलसत्तटाढ्या

वृन्दावने वहति या यमुना स्रवन्ती ॥ १ ॥

तस्यास्तटे परममञ्जुलरम्यशोभे

सङ्ख्याविहीनसुभगाकृतिगोसुयूथे ।

कामप्रियापरिभवार्हसुदिव्यरूप-

वृन्दीभवद्व्रजजनीव्रजरङ्गभूते ॥ २ ॥

बर्हावतंसललितः करकङ्कणाढ्यो

मुक्तावलीशतविभूषितवक्रकण्ठः ।

अर्धेन्दुतुल्यनिटिलः कलिकाभनासो

मुग्धारविन्दविलसत्सुविलोलनेत्रः ॥ ३ ॥

श्रीमन्मृणालसहिताब्जमनोहरेण

हस्तेन बिम्बफलसुन्दरदन्तपत्रे ।

वेणुं निधाय मधुरध्वनिधामरागा-

नालापयन् हृदयमोहनमन्त्रभूतान् ॥ ४ ॥

सूच्याद्यनेकपदपाटवकोविदेन्दु-

र्दिव्यप्रसूनतुलसीकृतदामवत्सः ।

श्रीराधिकावदनपङ्कजलुब्धचित्तो

नृत्यत्यहो प्रियकिशोरतनुर्मुरारिः ॥ ५ ॥

काशीनिवासी

पं० सुदर्शनाचार्यशास्त्री

॥ श्रीः ॥

पञ्चनदीयपण्डितसुदर्शनाचार्यशास्त्रिप्रणीतानां

# मुद्रितपुस्तकानां

# सूची

१ शास्त्रदीपिकाप्रकाशः

२ व्युत्पत्तिवादादर्शः

३ शक्तिवादादर्शः

४ विशिष्टाद्वैताधिकरणमाला

५ सावलोकदशरूपकप्रभा

६ अद्वैतचन्द्रिका

७ संस्कृतभाषा

८ श्रीरङ्गदेशिकशतकम् ।

९ श्रीसूतियतीन्द्रवन्दना

१० अनर्घनलचरित्र ( नाटक )

११ भगवद्गीताभाषाभाष्य

१२ भगवद्गीतासतसई

१३ श्रीआल्वारचरितामृत

१४ अष्टादशरहस्यभाषा

१५ स्त्रीचर्या

१६ नीतिरत्नमाला

१७ श्रीवैष्णवव्रतनिर्णय

१८ नागरीदर्पण ( हिंदीभाषाव्याकरण )

१९ भाषाशब्दसंग्रह ( हिंदीकोश )

शंखचक्रतिलकबन्धचित्रपट

पुस्तकप्राप्तिस्थानम्

| | |
|---|---|
| वेंकटेश्वरप्रेस<br>वंबई. | विद्याविलासप्रेस<br>काशी. |

